वाच्यत्वं तु पदार्थस्यैव, न तु वाक्यार्थस्य। तस्य त्वभिहितान्वयवादे लक्ष्यत्वम्, अन्विताभिधानवादेऽपि संसर्गविशेषविशिष्टस्य लक्ष्यत्वमेव, अन्वयसामान्ये हि शक्तिरिति न्यायसुधाऽपि। न हि तत्त्वमस्यादिवाक्येषु तत्त्वम्पदयोरवाचकत्वमेकान्ततोऽद्वैतमते; विशिष्टवाचकस्य विशेषणांशाविवक्षामात्रेण स्वरूपमात्रस्य शाब्द बोधे भानमादायैव लक्ष्यत्वव्यपदेशात्। यस्य लक्ष्यत्वम्, तस्य पदान्तरवाच्यत्वनियमे तु—अन्विताभिधानसिद्धान्तानुयायिन्यां सुधायामन्वयसामान्यशक्तानां पदानामन्वयविशेषबोधकत्वं कथम्? यदि लक्षणया, तर्हि सोऽन्वयविशेषः कस्य पदस्य वाच्यः? यद्यन्वयविशेषपदस्य, तर्हि प्रकृतेऽपि ब्रह्मणः सङ्केतविशेषेण ब्रह्मशब्दो वाचकः—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसाम्, आत्मसंवेद्यं तद् ज्ञानं ब्रह्मशब्दितम्॥"

इति स्मृतेरित्यवगत्य सन्तुष्यतु न्यायसुधा। व्यक्तिविशेषस्याकृत्यधिकरणन्यायेनावाच्यस्याप्यन्विताभिधानवादेऽपि लक्ष्यत्वं प्रत्यक्षा कृत्या॥

श्रीमदानन्दानुभवस्तु—स्वीयपदार्थतत्त्वनिर्णये न्यायरत्नदीपावल्यां च—"न च पदान्तरगोचरस्यैव लक्ष्यत्वमिति नियमः; इक्षुक्षीररसादीनां पदान्तरावाच्यानामपि लक्ष्यत्वदर्शनात्। अत एव सौषुप्तानन्दाभिलाप उपपद्यते"—इत्यादि विवेचयति। इक्षुक्षीररसादीनामपि 'रसविशेष'शब्दवाच्यत्वमिति श्रीमदानन्दानुभवस्यैवोत्तरति न्यायसुधा। तत्र रसविशेषशब्दो वाक्यमेव, न पदम्, पदत्वेऽपि लक्षणयैवार्थविशेषं ज्ञापयति, इति तु न्यायरत्नदीपावल्यादावेव निरूपितम्॥

एतेन—'यूपं तक्षति' इत्यादौ यूपादिशब्दोऽपि—व्याख्यातः। तत्र यदि पदान्तरसमभिव्याहारमात्रेण शक्तिग्रहः, तर्हि प्रकृतेऽपि समानम्। इयमपि विचारधारा न्यायचन्द्रिकयां सर्वस्यार्थस्य व्यञ्जनेन परीक्षिता॥

न्यायचन्द्रिका ह्यद्वैतसिद्धान्तपरं प्राचीनं निबन्धं तत्तन्निबन्धकारनिर्देशपूर्वकम्, विना सुरेश्वरवार्तिकम्, सङ्क्षेपशारीरकम्, इष्टसिद्धिं वा नान्यमनु-

करोति । श्रीहर्ष इव तु स्वतन्त्रमेव तत्तद्विचारधारां प्रवाहयति । इयं हि तत्र तत्र कुमारिलभट्टानिव, प्रभाकरगुरुतत्पक्षपातिनः शालिकनाथादीनपि स्वसिद्धान्तप्रस्थान-विशेषप्रवर्तकान् तदा तदाऽनुसन्धत्ते, स्वयमपि नवीनमेव प्रस्थानं प्रवर्तयति—भ्रमज्ञानप्रत्ययत्वाभाव-कालप्रत्यक्षत्ववादान्विताभिधानवादसिद्धान्ततावाद-शशशृङ्गाद्याकाराविद्यावृत्तिस्वीकार-दृग्विषयत्वरूपदृश्यत्वनिरुक्ति-सत्त्वासत्त्वपरस्परविरहरूपत्व-दुष्टत्वपदान्तरागोचराप्रमेयलक्ष्यत्वयोग-स्मृत्यप्रमात्ववादादीनां नवनवानां पथां प्रदर्शनेन । तत्र स्मृत्यप्रमात्ववादो जयतीर्थपक्ष तत्र कृत्वाचिन्तयापि स्वीकृत्य ॥

सर्वं चेदं ब्रह्मसूत्रमात्रसमालोचनेन तत्तत्सम्प्रदायविशेषसिद्धं तत्तद्भाष्येषु कथञ्चन सूचितम्, तथापि सम्यक् तत्तत्साम्प्रदायिकसिद्धान्ततत्त्वानि न्यायशब्दाभिधेय-ब्रह्ममीमांसाधिकरणावगतान्येव, न तु स्वतन्त्राणि, कैश्चन कल्पितानि वा, इति विवेचनार्थमेव न्यायसुधान्यायचन्द्रिकादिनाम्ना तत्तत्सम्प्रदायाचार्यैस्तत्तादृशा निबन्धाः निबबन्धिरे । सिद्धान्तलेशसङ्ग्रहोऽपि—

"अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा
सरिदिव महीभेदं सम्प्राप्य शौरिपदोद्गता ।
जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता
जननहरिणी सूक्तिर्ब्रह्माद्वयैकपरायणा ॥"

इत्यादिना सर्वेषां प्रक्रियाभेदानां भगवत्पादभाष्यारूढत्वं विशदयन् ब्रह्मसूत्रव्युत्पाद्य-न्यायमूलकत्वं सर्वेषां प्रक्रियाभेदानां ज्ञापयति । अमुमेव नयमवष्टभ्यानन्दपूर्णमुनिरपि न्यायचन्द्रिकाख्यं निबन्धं प्रणिनाय ॥

तत्रायं मतान्तरनिरसनपूर्वकमद्वैतसिद्धान्तस्थापनं लक्ष्यं मन्वानः समन्वयाख्यादीन् चतुरः परिच्छेदान् निबबन्ध । तामिमां न्यायचन्द्रिकेति निबन्धनामनि न्यायपदप्रयोगात्, प्रतिविषयं वैशेषिकादिमतरीत्या पूर्वपक्षमुखेन सिद्धान्तप्रवर्तना-च्चोपक्रममात्रमवलम्ब्य वैशेषिकाणां निबन्धं केचनामन्यन्तेति श्री म ङ्गे श रा म कृ ष्ण-

ति ला ङ् महोदयो म हा वि द्या वि ड म्ब न भूमिकायां भणति । वस्तुगत्या त्वयमद्वैतसिद्धान्तस्थापनपरो महानतिगभीरो निबन्ध इत्यामूलचूडं पर्यालोचनैकावसेयम् ॥

अयं हि निबन्धो जयतीर्थीयन्यायसुधाऽऽपादितानां बहूनामद्वैतसिद्धान्ताक्षेपाणां विना तन्नामग्रहं परिहारं तत्र तत्र ज्ञापयति, इति तत्र तत्र न्यायसुधावाक्यानामेव यथायथमनुवादेन, तन्निरसनेन चावसीयते । व्यक्तीकरिष्यते चेदमुपरिष्टात् । न्यायचन्द्रिकाप्रस्तुताः सर्वेऽपि विषयाः प्रायेण न्यायसुधायामप्यालोचिता आवापोद्वापाभ्याम् । तत्र तत्र केचनान्विताभिधानवादप्रामाण्यसाक्षिवेद्यत्वादयोऽद्वैतमतस्याप्यनुगुणा इति चित्सुखीव न्यायचन्द्रिकापि सङ्गृह्णाति । निरस्यति च क्वचन तदनुवादेन कानिचनाविद्याऽनिर्वचनीयत्वादौ दूषणानि ॥

न्यायसुधा हि स्वतः प्रसक्तं प्रसञ्जितं वा कंचनाद्वैतसम्प्रदायप्रक्रियाजातं निरस्यन्त्येव द्वैतसिद्धान्तं साधयति, प्रसङ्गेन तु न्यायमीमांसादिदर्शनान्तरप्रक्रियाविशेषाणामपि विमर्शनेन । तामेव नीतिमनुसन्धाय न्यायचन्द्रिकापि दर्शनान्तरप्रक्रियाविशेषं विमृशति । व्यक्तीकरिष्यते चेदमुपरिष्टात् ॥

तत्राद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्ववादो न्यायसुधायां सत्यस्यापि ज्ञाननिवर्त्यत्वाद्युपपादनेन विस्तरेण निरस्तः, यस्यैव समर्थनं चित्सुख्यां सविस्तरम् । तत्र न्यायामृतेन न्यायसुधापक्षसमर्थनम्, तस्य तु निरसनमद्वैतसिद्ध्या, पुनर्न्यायसुधासमर्थनं तरङ्गिण्या, तन्निरसनेनाद्वैततत्त्वसमर्थनं लघुचन्द्रिकादिनेति वस्तुस्थितिः, इति द्वैतवादे वादप्रस्थानस्य प्रथमा भूमिका न्यायसुधा नाम, अद्वैतवादे वादप्रस्थानस्य प्रथमा भूमिका तु चित्सुखी, न्यायचन्द्रिका च । तत्र चित्सुख्यपेक्षया साक्षाद् न्यायसुधास्थानं न्यायचन्द्रिकैवार्हति ; साक्षात् तदीयवाक्यानुवादपूर्वकमद्वैतवादप्रस्थानस्य प्रवर्तनात् । सर्वथा तु चित्सुख्यादिकमवष्टभ्य न्यायामृतादिनिबन्धग्रन्था इव न्यायचन्द्रिकाप्रस्थानमाश्रित्याद्वैतप्रस्थानेऽद्वैतसिद्ध्यादयो निबन्धा इति वस्तुस्थितिः ॥

श्रीमदानन्दपूर्णादर्वाचीनाः सिद्धिकारादयोऽपि न्यायचन्द्रिकादर्शनसौभाग्यं नालभन्त, यतो दृश्यत्वनिरुक्त्यादौ बहुतरं क्लेशमनुभवन्ति । ते हि वृत्ति-

व्याप्यत्वं दृश्यत्वमिति पक्षं स्वीकृत्य तुच्छे ब्रह्मणि च व्यभिचारवारणार्थं प्रयतमानाः शब्दाजन्यवृत्तिविषयत्वं दृश्यत्वं निरुच्य कृतार्था इवात्मानमलभन्त। परं तु तस्य धर्मा-धर्मादौ भागासिद्धिं न्यायभास्करापादितां समाधातुं बहवो बहुधा क्लिश्यन्ति। न्यायचन्द्रिका तु दृक्तादात्म्यं दृश्यत्वं निरुच्य सर्वथा निर्दुष्टं दृश्यत्वं निर्वहति। व्यक्तीकरिष्यते चेदमुपरिष्टात्। सर्वथा तु न्यायचन्द्रिकाया अतिगभीरार्थबहुलायाः सादरमध्ययनमद्वैतसिद्धान्तस्याक्रम्यमाणस्य समीचीनं रक्षणस्थानम्। सूक्ष्मदृष्ट्या समालोचने न्यायसुधायामद्वैतसिद्धान्तस्योपर्युपक्षिप्ताः सर्व एवाक्षेपा नावकाशिष्यन्त इति तु वस्तुस्थितिः॥

तत्राज्ञानवादमधिकृत्य न्यायसुधादूषणानि सर्वाणि न्यायचन्द्रिका सम्यगेव निरस्यति। एवमेव प्रपञ्चमिथ्यात्वमधिकृत्य। भ्रमस्थलेऽसत्ख्यातिवादं द्वैतसिद्धन्ता-भिमतमभिनवान्यथाख्यात्यपरपर्यायमपि न्यायचन्द्रिका सम्यगेव प्रत्याचष्टे। बाध्यत्व-मेव मिथ्यात्व स्वाभिमतं विवेचयन्ती न्यायचन्द्रिका—अधिष्ठानसाक्षात्कारनाश्यत्वमेव ज्ञाननिवर्त्यत्वाख्यं मिथ्यात्वमिति निर्वचनेन न्यायसुधायां ज्ञाननिवर्त्यत्वे सत्यस्यापि ज्ञानेन निवृत्त्या तस्य मिथ्यात्वाप्रयोजकत्वशङ्कां निगदव्याख्यानेन—परिहरति॥

साधकत्वं हि न मिथ्याभूतस्य; न वा सत्यस्य; सत्त्वासत्त्वौदासीन्येनैव सर्वत्र साधकत्वात्। उक्तं च तथा—

"पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा॥"

इति। न चैतावताऽसतोऽपि साधकत्वम्; पूर्वकालसम्बन्धाभावादसतः। एतेन साक्षिचैतन्यसाधकतापि व्याख्याता। को वा वदति—साक्षिचैतन्यं न सत्यमिति? तस्य साधकत्वं तु न सत्यत्वेन, अयमेव न्यायो ब्रह्मकारणतायामपि, -इति कथं प्रत्यक्षेण सत्त्वग्रहणम्, तेन मिथ्यात्वश्रुतिबाधो वा? इति प्रपञ्चमिथ्यात्वं श्रुतिसिद्धं दुरपह्नवम्। ब्रह्मसत्यत्वं तु तस्य प्रपञ्चवदबाध्यत्वेन, न तु सत्त्वेन बोधनेन। सत्य-ज्ञानादिवाक्यमप्यसत्यव्यावृत्तिमात्रबोधकम्। निर्विशेषमपि प्रमाणसिद्धम्, इति न

तुच्छम्, न वा मिथ्या, इति साक्षिप्रत्यक्षेणाज्ञानस्य भावरूपस्य भानं न व्याहतम् ॥

मिथ्यात्वं सदसद्विलक्षणत्वमपि। न च तत्र सत्त्वासत्त्वयोः परस्परविरहरूपत्वम्, येनान्यतरसत्त्वेऽन्यतराभावः स्यात्। शुक्तिरूप्यादौ बाध्ये प्रतीयमाने चोभयाभावस्य दर्शनाद् ब्रह्मासद्विलक्षणं साधकम्। सद्विलक्षणमसदसाधकम्। सदसद्विलक्षणं तु साधकम्, इति सत्त्वासत्त्वयोर्न परस्परविरहरूपत्वम्। न्यायचन्द्रिका हि सत्त्वासत्त्वयोः परस्परविरहरूपत्वाभावमन्यथोपपादयति। व्यक्तं चैतदुत्तरत्र। सदसद्वैलक्षण्ये प्रमाणं तु "नासदासीत्" इत्यादिश्रुतयः ॥

तत्राविद्यावत् तद्विषयविवर्तस्य विश्वस्य न भावात्मकत्वम्, अभावात्मकत्वं वा; अतो भावाभाववैलक्षण्यम्। विश्वसत्त्वप्रतीतिस्तु सत्यब्रह्मतादात्म्यमात्रेण, अर्थक्रियाकारित्वसत्तासामान्यादिरूपेण सत्त्वेन वा। तत्रासतोऽभावत्वाद् ब्रह्मणो भावत्वाच्च न तयोः सदसद्वैलक्षण्यम्। अन्यान्यपि सदसद्विलक्षणत्वरूपाणि न्यायसुधापरीक्षितानि न्यायचन्द्रिकापि स्वतन्त्रं विकल्प्य परीक्ष्य च पराचष्टे। ख्यातिपञ्चकपरीक्षा तूभयत्र स्वस्वसिद्धान्तस्थापनपूर्विका समाना ॥

ब्रह्म नाभिन्ननिमित्तोपादानम्, किं तु निमित्तकारणमात्रमिति द्वैतिनां पक्षस्तु श्रुतिसूत्राद्यननुभत इति निगदव्याख्यातमिति न्यायचन्द्रिका ज्ञापयति। एवमेवाहमर्थात्मत्वकर्तृत्वव्यापित्वसिद्धान्तेऽपि द्वैताभिमते, मिथ्यात्वबोधकत्वं श्रुत्यादीनामित्यादावपि। परस्पराध्यासे नाधिष्ठानस्य स्वरूपतोऽध्यास इत्यादिकं त्वद्वैतसिद्धान्तस्य मूलतत्त्वं न्यायसुधाऽन्यथाऽनूद्य निरस्यति। सर्वथा त्वादित आन्तं न्यायचन्द्रिकायाः पर्यालोचन इदं निश्चीयते—द्वैतसिद्धान्तनिरासेनाद्वैतसिद्धान्तस्थापनार्थमेव सेति। यद्यपि श्रीजयतीर्थेन न्यायसुधायां तत्र तत्र ब्रह्मोपादानत्वादौ, निदिध्यासनस्य दर्शनसमानज्ञानत्वादौ च विशिष्टाद्वैतसिद्धान्तनिरासोऽपि दृश्यते; तथापि न्यायसुधा तत्र नागृह्णातीव। सर्वज्ञानयथार्थ्यवादमपि विशिष्टाद्वैताभिमतं न्यायसुधा न निरस्यति। द्वैताद्वैतवादस्थानयोग्या विचारपरम्परा न्यायचन्द्रिकायां विस्तरेण दृश्यत इति तु तत्त्वम् ॥

तत्र चित्सुखीन्यायसुधान्यायचन्द्रिकाणां तत्तत्सम्प्रदायानुसारेण पूर्वोत्तरपक्षरूपेण विचारिता विषयास्तु प्रायेण समाना दृश्यन्ते। क्रममात्रं भिद्यत इति त्वन्यदेतत् ॥

तत्र चित्सुख्यां प्रथमो विषयः—संवित्स्वप्रकाशत्वम्, न्यायचन्द्रिकायां तु द्वितीयपरिच्छेदे—

"रूप्यं न्यरूपमिह विभ्रमभातरूपं
विश्वं विचित्रमपि तादृशमेव युक्तम्।
स्वात्मावभासवपुषं पुरुषं ततोऽपि
भावस्वभावतिमिरं परमाण्वभावम् ॥"

इति तद्विचारितेषु विषयेषु तृतीयो विषयः। न्यायसुधायां तु (१०२)पृष्ठे जन्मादिसूत्रे स्वप्रकाशत्वमात्मन ऊरीकृतम्, परं तु तस्य शास्त्रप्रतिपाद्यत्वमपि वर्तते, इति स्वप्रकाशत्वं न ज्ञेयत्वविरोधीति ज्ञाप्यते। अद्वैतमतेऽपि—"सिद्धं तु निवर्तकत्वात्" इति वचनानुसारमविद्यानिवृत्तिमात्रपरत्वं शास्त्रस्य, तावतैव शास्त्रप्रतिपाद्यत्वोपचारमात्रमिति स्वीकाराद् न विरोधः ॥

चित्सुख्यां द्वितीयो विषयस्तु तमोनिरूपणम्। इदं च भावरूपाज्ञानानुमाने दृष्टान्तस्य समर्थनार्थम्। तत्राज्ञानस्य भावरूपत्वम्, साक्षात्, परम्परया चाऽऽवरणशक्तिश्च न्यायसुधाकारैरपि स्वीकृता, इत्यज्ञानप्रागभावत्वादिवादस्य परमतरीत्यैव न्यायसुधाकारैरपि कुत्रच न निरसनाद् न विवादास्पदं किमपि न्यायसुधान्यायचन्द्रिकयोः। न्यायामृतं तु परमतमवलम्ब्यैवाज्ञानाभावतापक्षं समर्थयति। इदं तु तस्य स्वप्रयोजनाभावात् लीलामात्रम्, स्वप्रौढिमप्रदर्शनमात्रं वा। वदति च स्पष्टं परमतमवलम्ब्यैवाज्ञानाभावत्वपक्षोत्थापनमिति स्वयं न्यायसुधा। सर्वथा तु—न्यायचन्द्रिका न्यायमीमांसासिद्धान्तस्यापि तत्र तत्र निरासपराऽज्ञानस्य न्यायमुक्तावलीकाराद्यभिमतज्ञानाभावरूपत्वं त्रिविधस्याप्यभावस्याज्ञानत्वासम्भवेन सविस्तरं निरस्यति ॥

भणति च—" ज्ञानाभावोऽज्ञानमिति कौमारिलैः कथ्यते, तार्किकैर्वा । न तावदाद्यश्चतुरः । ज्ञानमात्मनः परिणाम इति हि तत्स्थितिः । तदपेशलम् ; आत्मनो नित्यनिरवयवसर्वगतस्य परिणामानुपपत्तेः , अपरिणामस्याज्ञानत्वे सर्वदाऽज्ञत्वप्रसङ्गात् । प्राभाकरदर्शनेऽपि दर्शनाभावस्य दृष्टत्वात् तस्य नित्यत्वात् सदैव द्रष्टृत्वं स्यात् । तार्किकमतेऽपि ज्ञानाभावानां सुलभत्वात् सदैवाज्ञत्वप्रसङ्गः ; भाविनामाभावानामनेकत्वात् "—इत्यादि । अनेन च नित्यधर्मभूतज्ञानप्रागभावाज्ञानतापक्षोऽपि निरस्तप्रायः ॥

तृतीयो विषयश्चित्सुख्याः—मिथ्यात्वविचारः, यो न्यायचन्द्रिकायां पूर्वोद्धृतद्वितीयपरिच्छेदार्थसङ्कलनपरश्लोके द्वितीयतया निर्दिश्यते । न्यायसुधाऽपीमं विषयम्—मिथ्यात्वस्य सदसद्विलक्षणत्वज्ञाननिवर्त्यत्वादिरूपस्य निरसनेन सम्यगुपपादयति । परं तु चित्सुखाचार्याभिमतं स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वरूपमिथ्यात्वं नानुवदति, अपवदति वा । तत्र चित्सुखाचार्योऽपि—

" सर्वेषामपि भावानां स्वाश्रयत्वेन सम्मते ।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता ॥ "

इति प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमेव मिथ्यात्वं स्पष्टं समर्थयति ।

" अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः ।
अंशित्वादितरांशीव दिगेवैषा गुणादिषु ॥ "

इत्यपि हि तस्यैवोपबृंहणम् । तथापि—प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं मिथ्यात्वं पूर्वपक्षावसरेऽष्टमपक्षमनूद्य निरसनावसरे—" नाष्टमः ; प्रमाणेन यदुपाधौ यः प्रतिपन्नः, तत्र तस्य निषेधासम्भवादिति निरस्तमपि, तमेव पक्षम्—

" सर्वेषामपि भावानां स्वाश्रयत्वेन सम्मते "

इति सम्मतपक्षनिक्षेपेण समर्थयति । इदमेवाभिप्रेत्य परिभाषादौ—

" स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमि"तीर्यते ॥

स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वं मिथ्यात्वमित्यन्तिमं दशमं वा पक्षं यद्यपि चित्सुखी संयोगादिवदव्याप्यवृत्तितामादायार्थान्तरापत्त्या केवलं दूषयति, न त्वष्टमपक्षमिव भूषयति ; तथाप्यद्वैतसिद्धौ—

" आद्यं स्यात् पञ्चपाद्युक्तं ततो विवरणोदिते ।
चित्सुखीयं चतुर्थं स्यादन्त्यमानन्दबोधजम् ॥ "

इति तस्यापि सिद्धान्तपक्षत्वेन चित्सुख्यभिमतत्वोल्लेखस्तु सिद्धिकारैः संयोगाद्यव्याप्यवृत्तिताया निरासात्, तत्पक्षेऽपि तत्तद्देशकालावच्छेदेन तदभावस्यैव चित्सुखाचार्यपक्षत्वोक्तिरिति मन्तव्यम् ॥

न्यायचन्द्रिका तु—" किमिदं मिथ्यात्वं नाम ? भ्रान्तिवियत्वं वा, प्रमाविषयत्वाभावो वा, अनिर्वाच्यत्वं वा, सर्वनिष्ठात्यन्ताभावप्रतियोगित्वं वा, कालानाश्रितत्वं वेत्यादिषु मिथ्यात्वेषु पूर्वपक्षोक्तेषु, निरस्तेषु च सदसद्विलक्षणत्वमात्रं सत्यमनुमानप्रयोगावसरे न्यायसुधोक्तदूषणपरिहारपूर्वकं समर्थयति, तथापि स्वाभिमतं स्वतन्त्रं ज्ञाननिवर्त्यत्वापरपर्यायं बाध्यत्वमेव मुख्यं मिथ्यात्वमभिप्रैति । इदमेव तु मिथ्यात्वम् – ' अद्वैतसिद्धौ ततो विवरणोदिते ' इत्यत्र विवरणोदितमिति कथ्यते । न्यायसुधापि हि सदसद्विलक्षणत्वम्, बाध्यत्वं च मिथ्यात्वमेव विशिष्य सविस्तरं प्रत्याचष्टे । भावरूपानिर्वचनीयाज्ञानवादे चित्सुखीन्यायसुधान्यायचन्द्रिकाणां विचारप्रणाली पूर्वमेव प्रस्तुता ; अन्यत्रापि प्रायेणैवमेव ॥

ततः कार्यार्थानामेव वाक्यानां प्रामाण्यमिति शङ्कापुरःसरमन्विताभिधानवादाभिहितान्वयवादाखण्डार्थानां विचारा निबद्धाः, येऽपि प्रायेणैकरूपाः । सर्वेऽपि ह्यन्विताभिधानमेव साधु मन्यन्ते, प्राभाकराभिमतमपि । न्यायचन्द्रिकाव्याख्या तु—" व्यवहारे भाट्टनय इति न मानवं वचनम्" इति नाद्वैतसिद्धान्तस्य स एव मूलमिति सुधीरं घोषयति । एवं घोषयन्ती तमेव नयमवलम्ब्याप्याखण्डार्थवादं सुष्ठु

समर्थयति । अनेन ज्ञायते—अद्वैतसिद्धान्ते नायमाग्रहः—कस्यचन दर्शनस्यैव प्रक्रियाऽवलम्बनीया, नान्यस्येति । यथा यथाऽद्वैतसमर्थनं श्रुत्यर्थोपबृंहणं च भवति, तथा तथा या काऽपि प्रक्रिया सादरमूरीक्रियते । इयमेव हि नीतिः शबरस्वामिनापि वनवादेऽवयवातिरिक्तसमुदायस्वीकारास्वीकारपक्ष औदासीन्यप्रदर्शनेन समादृता ॥

अन्वितपदं तात्पर्यविषयपरमिति तु न्यायचन्द्रिकाभिप्रैति । स च संसर्गो वा भवतु, स्वरूपमात्रं वेति त्वन्यदेतत् । ब्रह्मानन्दसरस्वत्यप्यन्विताभिधानवादस्याप्यद्वैताविरोधमुपपादितुं न्यायरत्नावल्यादावमुमेव पन्थानमनुकुरुते । तत्र तत्त्वमसिवाक्यस्याखण्डार्थत्वं न्यायसुधा (पृ १०१) जन्मादिसूत्रे निरस्यति; न्यायन्द्रिका तु प्रथमपरिच्छेदप्रतिपाद्येषु—

"प्रामाण्यस्य स्वतस्त्वं तदनु निजसतीं शक्तिमापाद्य वेदे
कर्तॄ राहित्यमुक्तं पदनिचयगता शक्तिरन्यानुषक्ते।
शक्तिः कार्यानपेक्षे पदनिचयगता वर्णमात्रात्मशब्दः
प्रत्यक्षादिश्च शास्त्रं प्रगलितविषये वाक्यवृत्तिस्तथोक्ता ॥"

इति द्वितीयपरिच्छेदोपक्रमश्लोकनिर्दिष्टेष्वष्टसु विषयेषु तृतीयतुरीयपञ्चमषष्ठसप्तमाष्टमा विषयाः । तत्र प्रथमं स्वतःप्रामाण्यं न्यायसुधाचित्सुखावपि सम्यगेव विवेचयतः । सर्वे हीमे न्यायसुधायां जिज्ञासाधिकरणे प्रथमे, चित्सुख्यां प्रथमे परिच्छेदे, न्यायचन्द्रिकायामपि प्रथमे परिच्छेदे । तत्र चित्सुख्या वेदान्तसिद्धान्तानां परस्परविरोधो यद्यपि विश्वमिथ्यात्वादौ वर्तते; तथापि तत्र स्वमतसमर्थनमेव न लक्ष्यम्, किं तु वेदान्तसिद्धान्तविरोधिन्यायदर्शनादिनिरसनं लक्ष्यम्। तत्र मिथ्यात्वोपपादनं प्रधानम्, सत्यत्वनिरसनमानुषङ्गिकम् ॥

न्यायसुधा तु—वेदान्तसिद्धान्तान्तरनिरसनमपि स्वमतलक्ष्यं मनुते, इति स्वसिद्धान्तसमर्थनापेक्षया परसिद्धान्तनिरसनं तस्याः प्रधानं लक्ष्यम् । अतस्तत्र तस्या विशेषतः प्रयत्नः । न्यायचन्द्रिकापि चित्सुखीव यद्यपि वेदान्तसिद्धान्तान्तरनिरसनं स्वकर्तव्यं मन्यते; तथापि खण्डनखण्डखाद्य एव मतान्तरनिरासस्य स्वतन्त्रं करणात्

वेदान्तसिद्धान्तान्तराक्षेपपरिहारमात्रस्यैव कर्तव्यतापरिशेषात् तन्मात्रं द्वितीय-परिच्छेदेन करोति । न्यायसुधापि न्यायचन्द्रिकेव खण्डनकाराणां कृत्यं चित्सुखीव न वेदान्तनिबन्धे साम्प्रतं पश्यति । अस्मिन् विषये चित्सुख्या न्यायचन्द्रिकायाश्च दृष्टिभेदस्तूभयोरपि निबन्धयोरपरोक्षः ॥

अपूर्वो विषयस्तु न्यायचन्द्रिकाया गीताभाष्यादिषु भगवत्पादानूदितस्य ज्ञानकर्मसमुच्चयवादस्य भास्कराचार्यगीताभाष्यत उद्धृत्य यथायथमुपन्यासः, तस्य यथाभाष्यं सङ्ग्रहेण निरासः । न्यायचन्द्रिका ह्यत्र भगवत्पादानां गीताभाष्यसर्वोप-क्रमतृतीयाध्यायोपक्रमादौ गीताभाष्यान्ते च विशकलिततया प्रतिपादितानां दुरूहाणा-मतिगभीराणां शृङ्गग्राहिकयोपस्थापनेन सर्वेषामध्येतॄणामुत्तमर्णा । सर्वथा तु — न्यायामृताद्वैतसिद्धिलघुचन्द्रिकादिवादप्रस्थानपरम्पराया मूलस्थानं चित्सुखी, न्याय-चन्द्रिका च ॥

तत्र न्यायचन्द्रिकापि चित्सुख्यनन्तरमेव प्राप्तात्मलाभापि न्यायसुधाक्षेपाणां बहुधा निरसनेन कृतकृत्या । अन्यथा व्यासराजतीर्थैः—तत्त्वप्रकाशिकाव्याख्या-भावबोधभूमिकोक्तरीत्या (१४५०–१५३९) षोडशक्रैस्तवशतककालिको न्याय-चन्द्रिकोक्तान् मिथ्यात्वदृश्यत्वानुमानाक्षेपपरिहारान् कुतो वा नोदलिखत् ? यद्यपि चित्सुख्युपन्यस्तं वृत्तिव्याप्यत्वं वा, फलव्याप्यत्वं वा, साधारणं वेति दृश्यत्वकल्प-त्रयमतिरिच्य कदाचित् कथंचित् चिद्विषयत्वं वेति तुरीयोऽपि कल्पोऽनूदितो न्यायामृते । स च न्यायचन्द्रिकासिद्धान्तितं दृक्तादात्म्यमिव प्रतिभाति । परं तु तदन्यथागृहीतं न्यायामृतेन सम्यग् न्यायचन्द्रिकया शिक्षितेनापि । न्यायचन्द्रिका हि वृत्त्यघटितं दृक्सत्तातिरिक्तसत्ताकत्वाभावं दृश्यध्यस्तत्वं वा दृश्यत्वं सिद्धान्ततया गृह्णाति । न्यायामृततरङ्गिणीभ्यामन्यथैव तद्ग्रहणेन स कल्पो निरस्यते । तत्र न्यायामृतखण्डनावसरेऽद्वैतसिद्धिर्यद्यपि सम्यक् शिक्षयति — चिद्विषयत्वं चित्तादात्म्यमात्रम्, तच्चातीतेन्द्रियादिसाधारणम्—इति, तरङ्गिणी तु बधिरवत् न्यायामृतार्थमेवानुवदति । तत्राद्वैतसिद्धौ तुच्छे व्यभिचारः परिहरणीय इति यदुक्तम्, तदाशयस्तु— चित्तादात्म्यमात्रस्य तुच्छब्रह्मव्यावृत्तत्वाद् न तत्र व्यभिचारप्रसक्तिरपीति । तेन च

शब्दाजन्यवृत्तिविषयत्वं दृश्यत्वमिति विवक्षायां धर्माधर्मादौ भागासिद्धिरपि न्याय-भास्करोक्ता सुपरिहरा। सर्वथा तु कथञ्चन न्यायामृतकाराणां न्यायचन्द्रिका दृष्टिपथं गता स्यात्, अद्वैतसिद्धितरङ्गिणीलघुचन्द्रिकान्यायामृतसौगन्ध्यन्यायभास्कर-काराणां तु न दृष्टिपथं गता। न्यायामृतसौगन्ध्यविमर्शकारस्य तु साम्प्रतं तत्परीक्षणसौभाग्यं प्राप्तम्, विश्वस्यते प्रियपाठका अप्येतत्परीक्षणेन कृतकृत्य मात्मानं मंस्यन्ते—इति। सत्यप्येवं कुतस्तदुपमर्दनार्थं न प्रायततेति तु चिन्तनीयम्॥

श्रीमधुसूदनसरस्वत्यपि स्वीयाद्वैतसिद्धौ विद्यासागरं परामृशन्नपि न्याय-चन्द्रिकोक्तप्रकारेण दृश्यत्वानुमानदूषणपरिहारं न सूचयत्यपि। अतो ज्ञायते न्यायचन्द्रिकापरिहारा दृश्यत्वानुमानादावप्रकम्प्या एव न्यायामृतकारेणाप्यमन्यन्त, तत एव तां नाम्नापि नोदलिखदपीति॥

मधुसूदनसरस्वतीसमयं म ङ्ग श महोदयः स्वीयमहाविडम्बनभूमिकायां सप्तदशशतक(म)मभिप्रैति। तथाऽन्येऽपि केचन। स तु (१५६०) तमवत्सरतो नाधिको भवितुमर्हति। तत्र कारणं तु तदीयसिद्धान्तबिन्दुनिबन्धस्याऽऽदर्शः प्रति-लिपीकृतः—नवाग्निबाणेन्दुमिते शकाब्दे (१५३९), अथवा (१६१७ A. D.)-तमे वत्सरे। अधिकं तु R. कृष्णस्वामिशास्त्रिणाम्, G. N. कविराजस्य च मधुसूदनसमयमधिकृत्य निबद्धयोर्निबन्धयोः क्रमेण (Madras Oriental Research Vol. II, part 2, pp. 97–104 and Sarasvati Bhavan Studies, Vol. III) द्रष्टव्यम्। किं च (१५४५ A. D.) वत्सरकालिकस्य वृत्तरत्नाकरकारस्य मधुसूदनसरस्वतीनृसिंहाश्रमयोर्वाद आसीदिति ज्ञायते। ततश्च तत्कालिक एव स इति निर्णीतं तत्त्वम्। तदेवं न्यायामृत-खण्डनपराद्वैतसिद्धिकारेण मधुसूदनसरस्वत्यापि न्यायचन्द्रिका न दृष्टा वा, तस्या अखण्डितत्वाद् न्यायामृतकारेण, वितथं तदुल्लेखनमित्यभिप्रेत्यौदासीन्यं वाऽवालम्बि। आस्तामियं कथा यथा तथा वा। द्वैताद्वैतसिद्धान्तविप्रतिपन्ना विषयाः सर्वेऽपि न्यायसुधायाम्—चित्सुखी न्यायचन्द्रिकाभ्यां चर्चिता एव॥

तत्रेक्षत्यधिकरणे शब्दान्तरावाच्यस्य न लक्ष्यत्वमिति वादो न्यायसुधया, सत्यम्, सविस्तरमुपपादितः—पदार्थतत्त्वनिर्णयन्यायरत्नादीपावल्युल्लिखितपरिहारस्यापि समालोचनेन, न्यायचन्द्रिका तु तस्यापि समाधानेनावाच्यलक्ष्यत्ववादं समर्थयति। इदमेवात्र विशेषतोऽनुसन्धेयम्—न्यायचन्द्रिकाऽद्वैतसिद्धान्तदूषणपरिहारमात्रार्थमायतते, न त्वद्वैतसिद्धान्तविरुद्धद्वैतसिद्धान्तस्य ब्रह्मनिमित्तकारणत्वमात्रादेर्निरासनाय। इदमेवात्र निदानं प्रतिभाति—तदनुबद्धाः प्रपञ्चसत्यत्वभेदपरामर्थत्वादयो व्यावहारिका नाद्वैतसिद्धान्तस्यापि विरुद्धाः। पारमार्थिकत्वं प्रपञ्चस्य, भेदपञ्चकस्य च तदीयमुक्तिदशायामनुवृत्त्येति यदि तदाशयः, तर्हि तु नाद्वैतेन तस्य कोऽपि विरोधः; निर्विशेषवादस्य समर्थनेनानुषङ्गसिद्धास्तु भाविबाधोपपत्त्या प्रपञ्चमिथ्यात्ववादादयः, इति तत्रैव विशेषत आयतनमानन्दपूर्णमुनीन्द्रस्य॥

तत्र यद्यपि ब्रह्मण उपादानत्वं न्यायसुधा निरस्यति, तथापि तन्निरासो ब्रह्मणो जीवस्य वाऽज्ञानाश्रयत्वनिरासेनैव। तथा तन्निरस्यन्ती तु न्यायचन्द्रिका प्रपञ्चमिथ्यात्वोपपादनेन ब्रह्माश्रितभावरूपाज्ञानवादस्योभयसम्मतत्वेन तदनुपादानत्वमपि निरस्तं मन्यते। तत्र भावरूपाज्ञानस्य ब्रह्माश्रयत्व-जीवाश्रयत्व-ब्रह्मावरकत्वनिवर्तकानुपपत्ति-निवृत्त्यनुपपत्त्यादिवादास्तु श्रीभाष्योपज्ञा न चित्सुखाचार्येण, न्यायचन्द्रिकाकारेण वा समालोचिताः। तत्राद्वैतमतेऽपि भावरूपाज्ञानसाहाय्येन ब्रह्मण एव जीवावरकत्वं मन्यताम्; ईश्वरशक्तिरेव वाऽऽआवरणशक्तिरिति। तावतापि ब्रह्माश्रयत्वमभ्युपगतप्रायम्॥

यत्तु—तावता ब्राह्मणो भ्रान्तत्वाद्यापादनम्, तदिदमुपाधेः प्रतिबिम्बपक्षपातित्वस्य, उपहितपक्षपातित्वस्यैव वा नियमाद् ब्रह्मविवर्तोपादानतावादः फलतोऽनिरस्त एव। अत एव न्यायचन्द्रिका न तत्र विचारणीयं किंचित् पश्यति। अज्ञानस्य ब्रह्माश्रयत्वजीवाश्रयत्वब्रह्मविषयत्वानुपपत्तिनिवर्तकानुपपत्तयस्तु श्रीभाष्योपज्ञा न्यायामृतेन ब्रह्मकारणतामात्रवादिनोज्जीवयितुमुपक्रान्ताः सिद्धिकारादिभिः समूलघातं घातिताः। स्वरूपज्ञानातिरिक्तम् नित्यधर्मभूतज्ञानातिरिक्तं च वृत्तिज्ञानमभ्युपगच्छतो न्यायामृतादेर्दृष्ट्या तु नोक्ताः शङ्का उन्मिषन्त्यपि। न्यायसुधान्यायचन्द्रिकयोर्ब्रह्मणो

भावरूपाविद्याश्रयत्वे न विप्रतिपत्तिः। तत्तु शुद्धं वा, मायोपहितं वेति त्वन्यदेतत्। वस्तुतस्तूभयत्रापि कारणत्वं सगुणस्यैवाविद्योपहितस्य, तदाश्रयस्य वेति न विप्रतिपन्नम्। सर्वथा तु बाध्यत्वं मिथ्यात्वम्, अविद्यास्तमयो मोक्ष इति च व्यवस्थापनाद् निवर्तक-निवृत्त्यनुपपत्ती अपि प्रत्याख्याते एव न्यायचन्द्रिकया ॥

तत्र चित्सुखी-न्यायचन्द्रिकयोः प्रथमपरिच्छेदे समन्वयपरिच्छेदाख्ये प्रधानतया विचारिता विषयाः —

| न्यायचन्द्रिकायाम् | चित्सुख्याम् |
|---|---|
| (१) स्वतः प्रामाण्यवादः | (१) आत्मस्वप्रकाशतावादः |
| (२) शक्तिवादः | (२) तमोवादः |
| (३) वेदापौरुषेयत्वम् | (३) अध्ययनस्य स्वविधिप्रयुक्तत्ववादः |
| (४) वर्णनित्यत्ववादः | (४) प्रपञ्चमिथ्यात्वम् |
| (५) अन्विताभिधानवादः | (५) अद्वैत आगमप्रामाण्यम् |
| (६) पदानां कार्यपरत्वनियमः | (६) भावरूपाज्ञानानिर्वचनीयत्ववादः |
| (७) स्फोटवादः | (७) भ्रमेऽऽख्यात्यन्यथाख्यात्यनिर्वचनीयादिख्यातिवादः |
| (८) अखण्डार्थत्वं च ॥ | (८) वेदान्तानां कार्यपरत्वनिरासेन सिद्धार्थत्वम् |
| | (९) अखण्डार्थवादः |
| | (१०) स्वतः प्रामाण्यवादः |
| | (११) शक्तिवादः |
| | (१२) अन्विताभिधानवादः |
| | (१३) अखण्डार्थत्ववादः |
| | (१४) वेदापौरुषेयत्ववादश्च ॥ |

तत्र (१) अज्ञानवादाङ्गभूतस्तमोवादः, यं द्वितीयपरिच्छेदे न्यायचन्द्रिका समर्थयति, (२) प्रपञ्चमिथ्यात्ववादः, (३) भावरूपाज्ञानानिर्वचनीयतावादः, (४) भ्रमेऽख्यात्यादिः, (५) आत्मस्वप्रकाशत्ववादश्च न्यायचन्द्रिकायामपि वर्तन्ते, परं तु द्वितीये परिच्छेदे। तत्राध्ययनस्य स्वविधिप्रयुक्तत्ववादस्तु नातीवाद्वैतसिद्धान्त उपयुज्यते। आगमप्रामाण्यं त्वन्विताभिधानवादवेदापौरुषेयत्ववादाभ्यां गतार्थम्। वर्णनित्यत्ववादोऽप्यपौरुषेयत्ववादाङ्गतयैवेति तेनैव गतार्थम्। तथापि न्यायसुधायामिव न्यायचन्द्रिकायां पृथग् वर्णात्मशब्दनित्यत्ववादोऽपि समर्थितः, इति न्यायचन्द्रिका तां नीतिमनुसृत्य तमपि वादमवतारयति, स्फोटवादं च। वेदान्तानां प्रपञ्चमिथ्यात्वे प्रामाण्यनिरूपणेनैवाद्वैत आगमप्रामाण्यमपि सिद्धप्रायम्। शाब्दापरोक्षवादस्तु न न्यायचन्द्रिकासम्मतः, चित्सुख्या तु स तृतीये परिच्छेदे विचार्यत, इति वस्तुस्थितिः। सर्वज्ञानयाथार्थ्यादिवादोऽपि न्यायचन्द्रिकाया द्वितीये परिच्छेदे परीक्षितः, सम्यगेवापोदितश्च, परं तु स प्राभाकरानुमतः, न तु श्रीभाष्यानुमतः॥

तत्र चित्सुखी द्वितीयपरिच्छेदेन न्यायादिदर्शनदुर्वचत्वमुपपादयति। न्यायचन्द्रिका तु प्रपञ्चमिथ्यात्वादिसमर्थनेनाद्वैतसिद्धान्तमुपबृंहयतीति पूर्वमेवोक्तम्। तत्र चित्सुखीवत् परमाणुवादनिरसनं तु ब्रह्मकारणतावादसमर्थनोपयोगितया; एवमेव तमस्तेजोऽभावतानिरासो भावरूपाज्ञानवादसमर्थनार्थम्। तृतीयतुरीयपरिच्छेदयोस्तु न विशेषो निबन्धद्वयेऽपि विशिष्टमनुसन्धानमर्हति॥

तत्र तृतीयपरिच्छेदार्थं पूर्वमिव तुरीयपरिच्छेदे पूर्ववृत्तानुवादपरेण न्यायचन्द्रिका न सङ्गृह्णाति; तथापि तृतीयपरिच्छेदोपक्रम एव मङ्गलश्लोकात्मकेन सङ्ग्रहश्लोकेन प्रतिपादयिष्यमाणमर्थं सा सङ्गृह्णाति। स यथा—

"मानान्तराविरोधेन त्रय्यन्तपदसङ्गतिः।
प्रमाणमिति तत् सिद्धं मय्येव परमेश्वरे॥"

इति। अनेन तु तत्त्वमस्यादिवाक्यजन्यप्रत्यगभिन्नब्रह्मसाक्षात्कार एव मोक्षसाधनम्। तत्र दर्शनान्तराणां तद्विरुद्धानां न प्रामाण्यम्, येन तद्विरोधः स्यात्; तत्र श्रुति-

स्मृत्योः सर्वापेक्षया प्रबलत्वात् , तथापि श्रुतिस्मृत्यनुसारेण ज्ञानकर्मसमुच्चयवादः कथं नोत्तिष्ठति ? यः सूत्रगीताप्रस्थानप्रवर्तकभास्कराचार्यस्य, तत्सम्प्रदायमूलाचार्यवृत्तिकारस्य च सम्मत इति ज्ञानकर्मसमुच्चयवादसमालोचनमेकमेव प्रधानम् । तत्र—

| न्यायचन्द्रिकायाम् | चित्सुख्यां तु |
|---|---|
| (१) नैयायिकाभिमतमुक्तिसाधननिरासः | (१) शाब्दापरोक्षवादः |
| (२) ज्ञानकर्मसमुच्चवादनिरासश्च | (२) मनःसाक्षात्कारसाधनत्वनिरासः |
| | (३) ज्ञानाद् मोक्षः |
| | (४) ज्ञानकर्मसमुच्चयनिरासश्च |

तत्र ज्ञानकर्मसमुच्चयवादनिरासेन ज्ञानादेव मोक्ष इति वादः फलति , इत्युभयत्रापि विषयैक्यम् । तत्र विषयविशेषस्य व्याससमासयोः परं विशेषः । तत्र ज्ञानकर्मसमुच्चयवादनिरासो न्यायचन्द्रिकायां विशिष्य विशदीकृतः । अस्मिन्नंशे भास्करमतनिरसनेन तदभिमतब्रह्मपरिणामितावादोऽपि निरस्तो ज्ञेय इति न्यायचन्द्रिका सूचयति, इति न्यायसुधायाः प्रकृत्यधिकरणे परिणामवादनिरासप्रकारान् सर्वानपि न्यायचन्द्रिका हृदयेनानुजानाति । शाब्दापरोक्षादिविषय उक्तमेव सर्वम् । वक्ष्यते चोपरिष्टात् । एतेन—तुरीयपरिच्छेदार्थोऽपि व्याख्यातः । तत्र हि—

| तत्र न्यायचन्द्रिकाविषयाः | चित्सुखीविषयाः |
|---|---|
| (१) चार्वाकाभिमतमोक्षवादनिरासः | (१) विषयाकारोपप्लुतविज्ञानसन्तानोपरममोक्षवादनिरासः |
| (२) तत्तद्विषयाकारविज्ञानसन्तानोपरममोक्षवादनिरासः | (२) दुःखाभावमुक्तिसमर्थनम् |
| (३) शून्यतावादिमोक्षवादनिरासः | (३) आत्यन्तिकदुःखनिवृत्तिमोक्षवादनिरासः |

| | |
|---|---|
| (४) कणादाक्षचरणसम्मतबुद्धिसुखदुःखाद्यात्मविशेषगुणोच्छेदमोक्षवादनिरासः | (४) साङ्ख्याभिमतमुक्तिखण्डनम् |
| (५) प्राभाकराभिमतात्यन्तदेहोच्छेदमोक्षवादनिरासः | (५) अविद्यास्तमयमोक्षसमर्थनम् |
| (६) प्रकृतिपुरुषविवेकनिबन्धनविषयभोगराहित्यमोक्षवादस्य साङ्ख्याभिमतस्य निरासः | (६) एकजीववादे नानाजीववादे च दूषणोद्धारः |
| (७) अविद्यास्तमयमोक्षवादसमर्थनम् | (७) ज्ञातत्वेनोपलक्षितस्यात्मनो मोहनिवृत्तित्वसाधनम् |
| (८) आत्मन आनन्दरूपत्वसमर्थनम् | (८) जीवन्मुक्त्युपपादनं चेति ॥ |
| (९) पञ्चमप्रकाराविद्यानिवृत्तिसमर्थनमिति ॥ | |

तत्र च न्यायचन्द्रिकैकजीववादानेकजीववादयोर्विशेषं नाल विवेचयति । अत्र प्रसङ्गे—"तथा हि वाचस्पतिमिश्रा अवोचन्—तच्च प्राप्तमप्यनाद्यविद्यावशाद् अप्राप्तमिवेति प्रेप्सितं भवति" इति वाचस्पतिमतमेवात्र सङ्गृह्णानोऽनेकाविद्यावादम्, जीवाश्रिताविद्यावादं चात्र परमसिद्धान्तमभिप्रैति । तत्र च नैकजीववादः, न वैकमूलाविद्यावादः, इति नैकमुक्तौ सर्वमुक्त्यापत्तिशङ्कासमाधानादिकमपेक्ष्यते, इति न्यायचन्द्रिकायां चित्सुखीविचारिता एकानेकजीववादादिवादा नोपयुज्यन्ते । एवम्—"अविद्यानिवृत्तिर्न सती; अद्वैतविरोधात्, नासती; ज्ञानजन्यत्वात्, न सदसती; विरोधात्, नापि सदसद्विलक्षणाऽनिर्वचनीया वा; अनिर्वचनीयनिवृत्तेरनिर्वचनीयत्वानुपपत्तेः, प्रतियोगिविलक्षणत्वाद् ध्वंसस्येति चेत्, न; पञ्चमप्रकाराविद्यानिवृत्तिरितीष्टसिद्धौ प्रतिपादितत्वात्" इति निरूपयन्ती न्यायचन्द्रिका जीवन्मुक्तिपक्षमिष्टसिद्ध्यनभिमतमत्र चित्सुखीव न सङ्गृह्णाति । अत एव न्यायचन्द्रिकायां न जीवन्मुक्त्युपपादनम् ॥

तदेवं चित्सुखी-न्यायचन्द्रिकयोः प्रायेण विषयसाम्यं दृश्यते । विषयविवेचनपद्धतिरपि प्रायेण पूर्वोत्तरयोः पक्षयोस्तत्र तत्र पद्यरूपेण सङ्ग्रहणम्, तस्यैव तन्त्र-

वार्तिकवद् गद्यद्वारा विशदनं चेति समानैव दृश्यते । तद् यथा—चित्सुख्यां स्वतःप्रामाण्यसिद्धान्तोपक्रमे सङ्ग्रहश्लोकः—

" आहुर्विज्ञानसामग्रीजन्यत्वे सत्यजन्यता ।
तदन्यतः प्रमायास्तु स्वतस्त्वमिति तद्विदः ॥"

इति । इयमेव नीतिर्न्यायचन्द्रिकायामपि । यथा—

" बोधकारणसामग्रीमात्राज्जन्म यतो मितेः ।
आचक्ष्महे लक्ष्म ततो लक्षणासम्भवः कुतः ॥"

इति । तथा शक्तिवादे चित्सुख्याः सङ्ग्रहश्लोको यथा—

" पराऽस्य शक्तिर्विविधा सर्गाद्या भावशक्तयः ।
इति श्रुतिस्मृतिमिता शक्तिः केन निवार्यते ॥"

इति । न्यायचन्द्रिकायां तु तत्रैव तौ—

" भावत्वाधिष्ठिताः सर्वाः प्रत्येकं व्यक्तयो मताः ।
द्रव्यादिषट्कविच्छेदमेलकेन विवर्जिताः ॥
अर्थापत्त्यनुमानाभ्यां श्रुतिभिश्च मिता सती ।
शक्तिर्वाग्जालमात्रेण कथं निह्नूयते परैः ॥"

इति । एवं यथा वेदापौरुषेयत्वे सङ्ग्रहश्लोकश्चित्सुख्याम्—

" श्रुतीनामीश्वराद् जन्म केवलं श्रुतिषु स्मृतम् ।
मानान्तरोपलब्धेऽर्थे रचना तु न मीयते ॥"

इति । न्यायचन्द्रिका सङ्ग्रहश्लोकस्त्वत्र—

" वर्णानामविनाशित्वे प्रत्यभिज्ञादिनान्विते ।
स्वातन्त्र्यं वेदवचसां नित्यत्वं केन वार्यते ॥

तदेवं वर्णनित्यत्वसंसिद्ध्या नित्यसिद्धितः ।
दुःसम्पादमिदं वेदपारतन्त्र्यमिति स्थितम् ॥ ”

इति । एवमभिहितान्वयवादे चित्सुखीसङ्ग्रहश्लोकः—

“ विनाऽभिधेयस्मरणमन्वयानुपपत्तितः ।
तत्तत्पदार्थस्मृतयस्तेषामन्वयबोधिकाः ॥ ”

इति । न्यायचन्द्रिकायां तु—

“ अन्विते गौरवाद् युक्तेरन्वयस्यान्यतो गतेः ।
पदार्थैरेव तत्सिद्धेर्नान्विते शक्तिमत् पदम् ॥ ”

इति । एवं वाक्यस्य न कार्यमात्रपरत्वम् , किन्तु सिद्धार्थबोधकत्वमपीत्यत्र चित्सुखी—

“ कार्यस्यावगतेर्हेतुर्यादृशं हितसाधनम् ।
प्रवृत्तेस्तादृशं हेतुर्व्यभिचारस्ततः कुतः ॥ ”

इति । न्यायचन्द्रिका तु—

“ तस्मादन्यान्वितस्वार्थमतप्रत्यायनक्षमाः ।
शब्दा इत्यवसातव्यं विना कार्यार्थसंहितम् ॥ ”

इति । एवमखण्डार्थत्वे चित्सुखीसङ्ग्रहश्लोकः—

“ संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।
उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ॥ ”

इति । न्यायचन्द्रिकासङ्ग्रहश्लोकस्त्वत्र—

“ अत्र ब्रूमो भवेद् लोके वेदे चाखण्डनिष्ठता ।
वाक्यस्य लक्षणार्थस्य नान्यथा तत् प्रसिध्यति ॥ ”

इति । भ्रमज्ञानसाधने चित्सुखीयसङ्ग्रहश्लोकः—

"स्वीकारे विभ्रमाणां स्यात् स्वीयसिद्धान्तबाधना ।
अनभ्युपगमे तेषामाश्रयासिद्धिरुद्धता ॥"

इति । न्यायचन्द्रिकासङ्ग्रहश्लोकस्तु—

"मिथ्याऽवबोधतो मिथ्या व्यवहारः प्रसिध्यति ।
अपर्यायप्रयोगश्च न भेदावगमं विना ॥"

इति । ज्ञेयानिर्वचनीयत्वे चित्सुखीयसङ्ग्रहश्लोकः—

"एकालम्बनसंसर्गनिषेधे सदसत्त्वयोः ।
धर्मत्वाद् रूपरसवत् सिद्धानिर्वचनीयता ॥"

इति । न्यायचन्द्रिकायां तु स यथा—

"अत्र ब्रूमो न सद् नासद् सदसच्च न यद्भवेत् ।
वदामस्तदनिर्वाच्यं निर्वाच्ये भ्रान्त्यसम्भवात् ॥"

इति । एवमेव मिथ्यात्वे चित्सुख्याम्—

"सर्वेषामपि भावानां स्वाश्रयत्वेन सम्मते ।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता ॥"

इति । न्यायचन्द्रिकायां तु—

"मिथ्यात्वं नाम बाध्यत्वं सङ्गिरन्ते विपश्चितः ।
बाधाभावोपलक्ष्यं यत् तत् सत्यमिति हि स्थितिः ॥"

इति । तत्र मिथ्यात्वानुमानप्रयोगः सहेतुकश्चित्सुख्याम्—

"अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः ।
अंशित्वादितरांशीव दिगेवैषा गुणादिषु ॥"

इति । न्यायचन्द्रिकायां तु—

" तस्माद् विश्वस्य मिथ्यात्वमनात्मत्वादिहेतुभिः ।
भेदसम्बन्धसम्बन्धाद् भेदवच्च प्रसिध्यति ॥ "

इति । भेदखण्डने चित्सुख्यां सङ्ग्रहश्लोकौ—

" सापेक्षत्वात् सावधेश्च तत्त्वेऽद्वैतप्रसङ्गतः ।
एकाभावादसन्देहाद् न रूपं वस्तुनो भिदा ॥
युगपद् ग्रहणायोगादनवस्थाप्रसङ्गतः ।
परस्पराश्रयत्वाच्च धर्मभेदेऽपि नाक्षधीः ॥ "

इति । न्यायचन्द्रिकायां तु तौ —

" प्रतीतो वा न वा भेदो न चेत् कीदृग् विधीयताम् ।
प्रतीतश्चेदबाध्यस्य कुतः सत्त्वमपोह्यताम् ॥
अप्रसिद्धनिषेधस्य प्रमितत्वे पराहतिः ।
व्याघातोऽप्रमितत्वेऽपि तन्निषेधपराहतिः ॥ "

इति । अत्र स्वयम्प्रकाशत्वे चित्सुखीसङ्ग्रहश्लोकाः—

" अपरोक्षव्यवहृतेर्योग्यस्याधीपदस्य नः ।
सम्भवे स्वप्रकाशस्य लक्षणासम्भवः कुतः ॥
आत्मनः स्वप्रकाशत्वं को निवारयितुं क्षमः ।
चिद्रूपत्वादकर्मत्वात् " स्वयं ज्योतिरि "ति श्रुतेः ॥
सामान्यतोऽनुमानेन प्रसिद्धेऽपि विशेषणे ।
कथं कथय पक्षोऽयमप्रसिद्धविशेषणः ॥ "

इति । न्यायचन्द्रिकायां तु—

" एकस्य कर्मकर्तृत्वं यद्यप्यन्यत्र नेष्यते ।
तथाप्यत्रैव दृष्टत्वाद् न विरोधपदं भवेत् ॥ "

"योऽपि ग्राहकरूपेण सिद्धिं सर्वासु वृत्तिषु ।
ब्रुवाणः कर्मभावेन नेमं प्रत्यक्षमिच्छति ॥
कर्मत्वं किमभिप्रेतं तस्य यद् नात्मनीष्यते ।
पराश्रयक्रियाजन्यफलभाजनतेति चेत् ॥
अस्माभिरपि नैवेष्टं कर्मत्वमिदमात्मनि ।
तस्य स्वाधारविज्ञप्तिर्व्यवहार्यत्वदर्शनात् ॥
यत्र ज्ञाने तु यद् भाति तत् तत्कर्मेति लक्षणात् ।
आत्मापि ज्ञानकर्मेति मीयते न्यायवेदिभिः ॥
यस्त्वात्मनः प्रमेयत्वादनात्मत्वं प्रसञ्जयेत् ।
घटस्याप्यघटात्मत्वं स कस्माद् न प्रसञ्जयेत् ॥
तत्राध्यक्षविरोधश्चेत् समानः प्रकृतेऽपि सः ।
प्रत्यक्षगोचरीभावो यस्मादात्मनि वर्णितः ॥
तस्माद् जात्युत्तरत्वेनैवैवम्प्रायाणि सूरिभिः ।
प्रयोज्यानि सभामध्यमध्यासीनैः कथञ्चन ॥
तस्मादात्मनि सम्भूतमहमित्यात्मगोचरम् ।
प्रत्यक्षमभ्युपेतव्यं युक्तिमार्गानुगामिना ॥"

इति ॥

अत्रात्मनः स्वप्रकाशत्वं मेयत्वं चाद्वैतमते न व्याहतम्; ज्ञानस्वरूपत्वेन स्वप्रकाशत्वात्, प्रमाणजन्यवृत्तिविषयत्वेन प्रमेयत्वात्, नैयायिकमते तु न ज्ञानस्वरूपत्वम्, अतः प्रमेयत्वमात्रम् । अत एवात्मनोऽज्ञानत्वम्, प्रमेयत्वं चाद्वैतमते । तत्र द्वैतमते साक्षिभास्यत्वं प्रत्यगात्मनः स्वीक्रियते । तस्य च नाज्ञानेन विरोधः; ईश्वरेच्छाया एव तन्मत आवरकत्वेन तस्य साक्षिणाऽविरोधात् । तद्विरोध्यपि तत्रेश्वरेच्छाविशेष एव । अयमेव न्यायः प्रायेणाद्वैतमतेऽपि—यत्रापि साक्षिणा नाज्ञानस्य विरोधः; अत एव तत्र—सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यम्, इत्यज्ञानस्य, अज्ञातस्य वा भासकम्, न तु निवर्तकं साक्षिस्वरूपं ज्ञानमिति राद्धान्तः । तत्र घटस्य प्रमेयत्वमन्यत्—प्रमाणजन्यवृत्त्यभिव्यक्तचैतन्यभास्यत्वरूपम्,

तत्तु घटस्यानात्मत्वप्रयोजकम् । आत्मस्वरूपचैतन्यस्य प्रमेयत्वं तु तदाकारवृत्तिमात्रविषयत्वेन वृत्तिव्याप्यत्वापरपर्यायेण, इति घटवद् नात्मनस्तावन्मात्रेणानात्मत्वप्रसङ्गः। घटादिवदात्मनोऽपि वृत्त्यभिव्यक्तचैतन्यभास्यत्वे तु घटवदनात्मत्वप्रसङ्गो दुष्परिहरः; स्वरूपचैतन्यस्याज्ञानाविरोधिनस्तदावृतस्य च तदाकारप्रमाणजन्यवृत्तिमात्रेणावरणनिवृत्त्याऽखण्डस्वरूपेण चिन्मात्ररूपेण भानम्, घटादीनां त्वज्ञानकार्याणामज्ञानाविषयत्वात् साक्षात् तदाकारवृत्तिमात्रेण न भानम्; किं तु तेषामज्ञातचैतन्यविवर्तानाम्, तत्रारोपितानां वाऽज्ञातचैतन्यावच्छेदकत्वमात्रतया तदवच्छिन्नचैतन्यगतावरणविषयताविशेषनिवृत्त्यैव भानम्। न चैवं चैतन्यं चैतन्यविवर्तो घटादिरिव। तथा च घटादिवदेव चैतन्यस्यापि न तदवच्छेदकत्वम्, न वा तदवच्छिन्नचैतन्यभानेनैव भानम्, इति फलव्याप्यत्वस्वीकारे घटादिवदनात्मप्रसङ्गो दुरपोहः। वृत्तिव्याप्यत्वेनात्मनः कर्मत्वं तु तदाकारत्वमात्रेण; तत्र वृत्त्याश्रयस्य तदुपहितस्य वाऽऽत्मनोऽखण्डाकारवृत्तिप्रयुक्तानावृतचिन्मात्रस्य च कल्पितभेदस्यौपाधिकभेदप्रयुक्तस्यौपाधिकस्य स्वीकारात् परसमवेतत्वोपलक्षितक्रियाजन्यफलशालित्वेन मुख्यमपि कर्मत्वं न विरुद्ध्यते, गौणं तु कर्मत्वं नैयायिकादिमत इव न कथमपि व्याहतम् ॥

तत्र द्वैतसिद्धान्ताभितः साक्षी स्वप्रकाशः स्वस्येवान्तःकरणतद्धर्मादेरपि भासकः, इति साक्षिभास्यत्वम्, घटादिगतं वृत्तिविषयत्वं वा नानात्मत्वव्याप्तम्, एवमेव श्रीभाष्यसिद्धान्तेऽपि धर्मभूतज्ञानविषयत्वमात्मानात्मसाधारणम्। अद्वैतमते तु नैवम्; अन्यथा तत्रापि साक्षिभास्यत्वेनात्मनः स्वप्रकाशस्य कथं नान्तःकरणादेरिव, घटादेरिव वा नानात्मत्वम्? तत्र यदि प्रमेयत्वं नानात्मत्वप्रजोजकम्; तस्यात्मानात्मसाधारण्यात्, तर्हि कथमद्वैतमते प्रमेयत्वमात्मानात्मत्वसाधकं नात्मसाधारणम्? भिन्नरूपत्वादात्मानात्मगतप्रमेयत्वस्य, इति कथमननुभाव्यत्व आत्मनो घटादिवदनात्मत्वप्रसङ्गः? अनुभाव्यत्वस्य स्वरूपविपर्ययसाधकत्वे तु घटस्याप्यनुभाव्यस्याघटत्वप्रसङ्गः ॥

यदपि न्यायचन्द्रिकायां परमाणुवादनिरसनम्, तत् पूर्वोक्तरीत्या न चित्सुख्यां प्रथमपरिच्छेदे दृश्यते; न्यायचन्द्रिकायां तु विस्तृतं द्वितीयपरिच्छेद आरम्भवादनिरासप्रसङ्गे तन्निरसनम्। तत्र चित्सुखी बहुभिः सङ्ग्रहश्लोकैः—अजसंयोगासिद्धिः,

समवायवत् संयोगस्याप्येकत्वकल्पनापत्तिः, विभागासिद्धिः, जात्यसिद्धिः, द्वित्वासिद्धिः, जातौ प्रमाणाभावः, जाति-द्रव्ययोः सम्बन्धासम्भवः, परमाणुबहुत्वेन महत्त्वारम्भसम्भवे द्व्यणुकस्य त्र्यणुकारम्भकत्वायोगः—इति परमाणुस्वरूपतत्कारणत्वादीनामयोगं विस्तारेण निर्णीयोपसंहारति—

" परिमाणस्य सिद्धत्वे तदारम्भविचारणा ।
नाद्यापि सिद्धस्तद्भावोऽभावाद् लक्ष्म-मानयोः ॥ "

इति । न्यायचन्द्रिका तु पूर्वोक्तान् भावान् सर्वान् विना सङ्ग्रहश्लोकान् सङ्गृह्य चित्सुख्या उपसंहारसङ्ग्रहश्लोकार्थमात्रं श्लोकेनैकेन सङ्गृह्णाति । यथा—परमाणुवादे चित्सुख्युक्तदूषणानुवादपूर्वकम् ।

" अत्रोच्यते प्रमाणेन परमाणुर्न सिद्ध्यति ।
संस्पर्शादिमत्तया तस्य सांशत्वं चानुमीयते ॥ "

इति ॥

शाब्दापरोक्षवादस्तु द्वितीयपरिच्छेदोपक्रम एव वृत्तानुवादसङ्ग्रहे—"प्रत्यक्षादिश्च शाब्दः" इत्यनुवादमहिम्ना न्यायचन्द्रिकाकाराणामपि सम्मत इति ज्ञायते, परं तु नात्र न्यायचन्द्रिका तद्विचारं प्रस्तौति । यदि तु "प्रत्यक्षादिश्च शब्दः" इति पाठेन प्रत्यक्षानुमानातिरेकेण शब्दप्रामाण्यसाधन एव न्यायचन्द्रिकायास्तात्पर्यम्, तर्हि न्यायचन्द्रिकायाः—

" अन्यदेवेन्द्रियग्राह्यमन्यः शब्दस्य गोचरः ।
शब्दाद् प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते ॥ "

इत्युक्तरीत्या शाब्दापरोक्षवादे न तात्पर्यम् । अत एव तत्र तत्र वाचस्पतिमिश्र एवोपष्टभ्यते चन्द्रिकया । तथा च प्रायेण विवरणप्रस्थानानुगामिनी चित्सुखी, न्यायचन्द्रिका तु भामतीप्रस्थानावलम्बिनी । अत एवानेकजीवाश्रितानेकाविद्यावादो न्यायचन्द्रिकायाः । स्थितप्रज्ञस्तु साधकः, न तु सिद्ध इति वदन्ती भामती जीवन्मुक्तविषय इष्टसिद्धिमेवाद्रियत इति त्वन्यदेतत् ॥

सर्वेषु दर्शनेषु वैदिकेषु, आगमिकेष्वपि भावरूपाविद्यावादः सम्मतः । तद्यथा—साङ्ख्याः प्रधानं जगत्कारणं जगदाकारेण परिणामशक्तिमत्, कार्यात्मना

विक्षेपशक्तिमद्वा प्रकृतिस्वरूपं स्वीकुर्वन्ति। अत एव 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतिः। जगत्कारणं प्रकृतिं हि श्रीकण्ठादयः, भास्करः, श्रीरामानुजीया वाऽभिन्ननिमित्तोपादानकारणतावादिनः, केवलनिमित्तकारणतावादिनः पातञ्जलाः, शैवाश्चोरीकुर्वन्ति, एवमद्वैतिनोऽपि। विप्रतिपत्तिस्तु प्रकृतेर्मायात्वे, अनिर्वचनीयत्वरूपे, तस्या आवरणशक्तौ च। तत्र प्रकृतौ श्रुतिषु "तम आसीत्। तमसा गूढमग्रे प्रकेतम्" इति तमःशब्दप्रयोगात् तमस इवावरणशक्तिरपि स्वीकर्तव्या। तत एव हि तत्र गौणस्तमःशब्दप्रयोगः, इति दृष्टान्तविधया तमःप्रकरणं न्यायचन्द्रिकायाम्। तत्र तमस आवरण उत्कटानुत्कटादितारतम्यानुभवस्तस्य तेजोऽभावरूपत्वे नोपपद्यते ; अतस्तत् पदार्थान्तरम् ॥

तच्च तमोनिरूपणं चित्सुख्यां प्रथमे परिच्छेदे, न्यायचन्द्रिकायां तु द्वितीये परिच्छेदे। तत्र चित्सुखीसङ्ग्रहश्लोकः—

"तमालश्यामलज्ञाने निर्बाधे जाग्रति स्फुटे।
द्रव्यान्तरं तमः कस्मादकस्मादपलप्यते ॥"

इति। न्यायचन्द्रिकायां तु सः—

"अम्भःसम्भारगम्भीरप्रावृडम्भोदसन्निभम्।
भासमानं न भाऽभावो भवितुं क्षमते तमः ॥"

इति। तत्र न्यायचन्द्रिकासङ्ग्रहश्लोकाः सर्वेऽपि यथायथं तत्तत्पृष्ठसङ्ख्यानिर्देशपूर्वं तत्तद्विषयसङ्ग्रहस्तत्तत्पृष्ठसङ्ख्यानिर्देशपूर्वकं भूमिकानन्तरमेव योज्यते— Analysis of the Subject नाम्ना ॥

तत्र चित्सुखी—न्यायचन्द्रिकयोः प्रतिप्रकरणमन्ते भाविप्रकरणसूचनक्रमो विशिष्टमनुसन्धानमर्हति—यद्यपि प्रकरणक्रम उभयोरपि नैकरूपः। प्रतिप्रकरणमद्वैतसिद्धान्तपर्यवसानप्रयोजनं तु न्यायचन्द्रिकायां विशदम् ॥

तत्र न्यायचन्द्रिका प्रमाणलक्षणतत्षोढाविभागादिकं चित्सुख्यामनिर्णीतं निर्णयति। तत्प्रयोजनं तु—"अनुप्रमाणं त्रिविधम्—प्रत्यक्षमनुमानमागम इति। अर्थापत्त्युपमे अनुमानविशेषः। सा न प्रमाकरणं प्रमाणम्; ज्ञानव्यतिरिक्तप्रमायां

मानाभावात् । न चाज्ञातपरिच्छित्तिरेव प्रमेत्यत्र प्रमाणमस्ति ; याथार्थ्यमेव प्रामाण्यमित्यङ्गीकारात् । न चानुभूतिरेव प्रमाणम् ; स्मृत्यादावव्याप्तेः ,

" स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् ।
प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिः ॥ "

' न च सम्यगनुभवसाधनं प्रमाणम् ' इत्यादिना प्रमाणलक्षणसिद्धान्तनिरसनात् । व्यक्तं चात्रोपमानार्थापत्त्यभावानां प्रमाणत्वम् , स्मृतेरप्रमाणत्वम् , किं बहुना ? अविद्यापरिणामभ्रमात्मकवृत्तेरज्ञानत्वम् , व्यवहारप्रयोजकत्वं च व्यवस्थाप्यते । भ्रमस्याविद्यावृत्तेरज्ञानत्वोक्तिस्तु व्यवहारदशायामेव बाधमभिप्रेत्य , इति तत्र न्यायसुधया न न्यायचन्द्रिका तुष्यतु दुर्जनन्यायेन विप्रतिपद्यते । अयमेव न्यायः स्मृतावपीति वेदान्तपरिभाषाऽभिप्रैति । न्यायचन्द्रिका तु स्मृतेरप्यविद्यावृत्तित्वम्, भ्रमत्वं चैकान्तेन स्वीकरोति । "स्मृतिरूपः परत्र पूर्वदृष्टावभासः " इत्यत्र स्मृतिरूपपदमप्येतदाशयमेवेति तु न्यायचन्द्रिकाहृदयम् । अत एव पूर्वपूर्वाध्यासस्य भाष्येऽविद्यात्वोपदेशः । " स्मृतिः प्रत्यक्षम् "इति वाक्यं तु परोक्षापरोक्षभेदेनागमप्रामाण्यमेवाभिप्रैति ; तत्र स्मृतेर्मन्वादिप्रणीतग्रन्थाख्यत्वेन स्मृतिज्ञानत्वाभावात् । तत्र सनिग्रहस्थानस्यानुमानस्य प्रपञ्चमिथ्यात्वसाधनोपयोगित्वमद्वैतमते , द्वैतमते तु तत्सत्यत्वनिर्णयोपयोगित्वम् । बलाबलविचारे तु विजयकाष्ठाऽद्वैतसिद्धान्त एव । सर्वं चेदं न्यायचन्द्रिका सविस्तरमुपपादयति—याथार्थ्यस्य दुर्वचत्वेन यथार्थज्ञानप्रामाण्यनिराकरणपूर्वकं खण्डनोक्तदिशा ॥

अत्र सुखावबोधार्थं ज्ञानयाथार्थ्यविषये, संविन्मात्रोपाध्यविद्याविषये च द्वैताद्वैतग्रन्थाशयः सङ्गृह्य प्रकाश्यते । स यथा—

॥ प्रमाणलक्षण-तद्विभागौ ॥

(१) यथार्थं प्रमाणम् । तच्च ज्ञेयमनतिक्रम्य वर्तमानम्—अनन्यथाविषयविषयज्ञानम् । अन्यथाज्ञानं तु भ्रमः । तच्च साक्षात् परम्परया वाऽन्यथाज्ञेयविषयाका-

(१) यथार्थज्ञानं प्रमाणम् । तच्चाबाधितार्थविषयकं ज्ञानम् । भ्रान्तिदशायामप्यबाधितार्थविषयकत्वं समानम् । तस्य भ्रमत्वं तु भाविबाधमभिप्रेत्य । तथाच ब्रह्म-

रित्वम्। प्रमावान् प्रमाता, प्रमाविषयः प्रमेयम्। तत्र संशयोऽप्येकस्यां कोटावन्यथाज्ञेयविषयीकाराद् न प्रमाणम् ॥

तत्र यथार्थज्ञानमेव नास्तीति प्रभाकरः। तन्मते यथार्थपदवैयर्थ्यम्। ज्ञानपदस्थले निश्चयस्य निर्देशात् संशयव्युदासः। तस्याख्यातिनाम्ना व्यपदेशः। नेदं मतं युक्तम्; अनुभवसिद्धत्वाद् विपर्ययस्य। तत्र देशान्तरस्थस्य रजतस्य संसर्गमात्राध्यासेनान्यथाख्यातिरिति वैशेषिकाः। तत्र तत्कालिकमुत्पन्नं सदेवेति तु भास्करः,यस्य सत्ख्यातिरिति नाम। श्रीभाष्यसिद्धान्ताभिमतसत्ख्यातिस्तु विलक्षणा भास्करीयसत्ख्यातिवादतः। ज्ञानस्यैव तदाकारे बाह्यत्वमात्राभ्यासाद् आत्मख्यातिवादिनः सौगताः। सदसत्ख्यातिवादिनस्त्वार्हताः, साङ्ख्याः, भाट्टाश्च। सदसद्विलक्षणानिर्वचनीयख्यातिवादिनोऽद्वैतिनः। असत्ख्यातिवादिनस्त्वानन्दतीर्थीयाः। तत्र शुक्तिकायां रजतमसदेव भातीत्यनुभवान्यथानुपपत्तिः प्रमाणम्। तत्र प्रधानस्याबाध्यस्य विशेष्यस्येन्द्रियसन्निकृष्टत्वेऽसतो भाननियमाद् न शशशृङ्गादीनामपि भ्रमे भानम् ॥

तत्र यथार्थज्ञानत्वं तत्त्वविषयत्वम्। तत्त्वं त्वनारोपितम्; तच्च प्रतीयमानत्वविशेषितम्। तेन च कूर्मरोमादि न तत्त्वम्। साक्षात्कारपूर्वक्षणावच्छिन्नभाविबाधाविषयत्वेन भ्रमत्वम्, भाविब्रह्मसाक्षात्कारनिबन्धनबाधविषयत्वेन घटादिज्ञानस्य भ्रमत्वम्, तत्पूर्वक्षणावच्छिन्नभाविबाधाविषयत्वेन प्रमात्वमिति विभागः। वस्तुसिद्धिस्तु यथार्थज्ञानेनैव। स्मृतिस्तु सिद्धार्थविषयकज्ञानत्वाद् न वस्तुसाधकत्वेन प्रमा, किन्त्वबाधितार्थविषयकत्वेनैव। तत्रापि बाधितार्थविषयकमपि स्मरणं भवति, परं तु तत्रानुवादमात्रम्। न तस्या यथार्थत्वनियमः। स्वकारणसंस्कारकारणानुभवानुसारित्वं यथार्थत्वम्, अबाधितार्थत्वं वा, न तु स्वतः। तत्र प्रभाकरनैयायिकसौगतभास्करादिमतवैलक्षण्यमुभयत्र समानम्। विशेषस्त्वनिर्वचनीयख्यातिरद्वैतमते, द्वैतमते त्वसत्ख्यातिः। तत्रासद् यदि बाध्यम्, तर्हि तद् भ्रमस्थले तदोत्पन्नं वा, उत सर्वदा वर्तते वा। आद्ये तदुत्पादकसामग्र्यभावः। द्वितीये तु सर्वदा भ्रमप्रसङ्गः। काचकामालादिदोषा अधिष्ठानस्य,प्रधानस्य वाऽऽवरका एव,न तु विषयोत्पादकाः। भासमानस्य रजतस्यासतः शशशृङ्गादिभ्यो विशेषो वर्तते वा, न वा। आद्ये कीदृशं तदसत्स्वरूपम्। यदि प्रधानेऽधिष्ठाने वा बाध्यमानत्वमात्रम्, तर्हि शशशृङ्गादेरिव सत्त्वेन प्रतीतिविषयत्वं कुतः? तत्र शुक्ति-

शुक्तिरजतादिकं त्वारोपितत्वाद् न तत्त्वम्। कूर्मरोमादिकं तु प्रधानाभावेनानारोपितम्, परं तु शुक्तिरूप्यादिकमिव सत्त्वेन न प्रतीयते। तथाचासतोऽपि प्रतीतिविषयत्वेऽपि सत्त्वेन न प्रतीतिरिति न दोषः ॥

तच्च प्रमाणं प्रत्यक्षानुमानागमभेदेन त्रिविधमेव। उपमानार्थापत्त्यभावज्ञानानां यथायथमनुमानप्रत्यक्षयोरेवान्तर्भावः। तत्प्रत्यक्षं केवलं प्रमाणम्। अनुमानं त्वनुप्रमाणम्, आगमप्रमाणं च। स्मृतिरपि मानसप्रत्यक्षत्वात् केवलप्रमाणम्। द्विविधं ज्ञानं मनो जनयति - तत्तदिन्द्रियाधिष्ठितत्वेन तत्तदिन्द्रियविषयाविषयम्, स्वातन्त्र्येण स्मरणं च। संस्कारस्तु सहकारिमात्रम्। स च प्रत्यभिज्ञायां बाह्येन्द्रियसहकारी, स्मृतौ तु मनःसहकारीति विशेषः। संस्कारद्वाराऽतीतादिविषयेऽपि मनस्सन्निकर्षो योगिप्रत्यक्षादाविवाबाधितः। मनसोऽपीन्द्रियत्वाद् नात्रातिरिक्तप्रमाणकल्पनादोषः। स्मृतिरपि यथार्थज्ञानमेव। अत एव "स्मृतिः प्रत्यक्षमैतिह्यम्" इत्यत्र स्मृतेरपि प्रमाणकोटौ निर्देशः। तत्र स्मृतेरपि प्रमाणत्वात् तस्यामानसप्रत्यक्षत्वेन कथञ्चन प्रत्यक्षादावन्तर्भावः, अथवाऽतिरिक्तप्रमाणत्वम्। उपमानार्थापत्त्यादिप्रमाणान्तरनिरासमात्रे तु प्रमाणत्रैविध्यविभागस्य तात्पर्यम् ॥

रूप्यादीनां सत्त्वं यद्यधिष्ठानतादात्म्येन, तर्हि न सत्त्वम्, न चासत्त्वमित्यनिर्वचनीयत्वे पर्यवसानम्, अन्यथा तु सदसत्ख्यात्याऽऽर्हतमतप्रवेशः। अत एव सत्त्वेन प्रतीतिविषयत्वे सत्यनारोपितत्वमिति—व्याख्यातम्। तत्र विशेषणं न शुक्तिरूप्यादिव्यावर्तनार्थम्। तस्यारोपितत्वेनैव हि तत्त्वताया वारणम्। कूर्मरूपादिकं त्वनारोपितमिति कृत्वा खलु तद्विशेषणम्। तत्र च शुक्तिरूप्यादीनां सत्त्वेन प्रतीत्यस्वीकारे विशेषणवैयर्थ्यम्, तत्स्वीकारे च सदसदात्मकत्वम्। अथान्यत्र सत एव रजतस्यात्रासत्त्वमात्रं विवक्ष्यते, तर्हि नैयायिकानामिवान्यथाख्यातित्वेन नासत्ख्यातिः। यद्यभिनवान्यथाख्यातिरेवासत्ख्यातिः, तर्हि नाममात्रविवादः ॥

अतो नियतो रजतादेः स्वरूपस्याप्यध्यासः। स्वरूपस्याप्यारोपे त्वनिर्वचनीयख्यातिरेव। सर्वमिदं न्यायचन्द्रिका—अर्थपरिच्छित्तिः प्रमा, असत्ख्यातिश्च न युक्तेति बिवेचनेन विशदयति। वेदान्तपरिभाषा तु स्मृत्यप्रमात्वपक्षे, तत्प्रमात्वपक्षे चानास्थां दर्शयति। "स्मृतिः प्रत्यक्षमैतिह्यम्" इति तु स्मृतिशब्देन, ऐतिह्यशब्देनैव वाऽऽगमभेदमेवाभिप्रैति; मन्वादिस्मृतिप्रामाण्यपरत्वात् तस्य। मन्वादि-

इन्द्रियार्थसन्निकर्षः प्रत्यक्षप्रमाणम् । अत्रार्थशब्देन तत्तत्प्रत्यक्षयोग्यार्थस्य ग्रहणाद् नाकाशस्य प्रत्यक्षत्वम्; तस्य केनापीन्द्रियेणासन्निकर्षात् । तत्र प्रमालक्षणमज्ञातस्यार्थस्य यथार्थज्ञानत्वम्, न त्वज्ञातार्थपरिच्छित्तिः, येन स्मृतेः प्रमात्वव्युदासः स्यात् । स्मृतिरपि प्रमैव ; तस्या अप्रमात्वे प्रमाणाभावात्, प्रत्युत "स्मृतिः प्रत्यक्षमैतिह्यम्" इति स्मृतेरपि प्रमात्वं ज्ञापयति ॥

तत्रेन्द्रियाणि षट् प्रसिद्धानि, स्वरूपज्ञानम्=आत्मा=साक्षी च सप्त । आत्मस्वरूपमपीन्द्रियम्; अन्यथा साक्षिवेद्यानां सुखादीनां न प्रत्यक्षत्वं स्यात्; इन्द्रियार्थसन्निकर्षजन्यत्वप्रयुक्तत्वात्प्रत्यक्षत्वस्य । तत्र भ्रमप्रत्यक्षे प्रधानेन्द्रियसन्निकर्षमात्रेणासतोऽपि रजतस्य प्रत्यक्षत्वम्; प्रधानेऽसद्रजततादात्म्यारोपात् । तत्र स्वरूपज्ञानस्य प्रमातृसाक्षिणो विषयाः— आत्मस्वरूपम्, तद्धर्माः, अविद्या, मनः, तद्वृत्तयः, बाह्येन्द्रियज्ञानसुखाद्याः, कालः, अव्याकृताकाशश्च ॥

तत्रानुमाननिरूपणप्रसङ्गेन हेत्वाभासानां निग्रहस्थानानां च निरूपणमद्वैतमते प्रपञ्चमिथ्यात्वानुमानदुष्टत्वव्यवस्थापनेन सप्रयोजनम् । तद्यथा—विवादपदम्, मिथ्या, वाक्यानि स्मृतवेदवाक्यमूलकानि, न तु तदर्थस्मरणमूललौकिकानुभवमूलकानि । न च प्रयोजनं स्मृतिप्रामाण्यस्वीकारस्य; तन्मूलप्रामाण्येनैवेष्टसिद्धेः ॥

तत्र मीमांसकाभिमतानि षडेव प्रमाणानि, न तु त्रीण्येव । यद्युपमानार्थापत्त्यनुपलब्धीनां प्रत्यक्षानुमानयोरन्तर्भावः, तर्हि शब्दस्यापि तथात्वापत्त्या प्रमाणत्रयकथा कथामात्रं स्यात् । यदि व्याप्तिग्रहादि विना शब्दार्थप्रतिपत्त्या तस्य पृथक् प्रामाण्यम्, तर्हि तदर्थापत्त्यादिष्वपि समानम् । व्यतिरेकानुमानं तु साक्षाद् हेतुसाध्ययोर्व्याप्तिग्रहामूलत्वाद् न प्रमाणम् । यदि तत् प्रमाणम्, तर्ह्यर्थापत्तिरपि मा भवतु प्रमाणम् । निरूपितं चैतद्वेदान्तपरिभाषाव्याख्यायां रामकृष्णदीक्षितैः । यथा चोपमानुपलब्ध्योरपि नानुमाप्रत्यक्षयोरन्तर्भावः, तथा विवेचितं तत्तत्प्रकरणार्थसंकलनेन न्यायचन्द्रिकायां विशदम् । अनुमानस्य शब्दस्य चानुप्रमाणस्यापि प्रामाण्ये केवलप्रमाणेनैव निर्वाहात्, विभागवैयर्थ्यम्, तदयोगश्च । स्वतन्त्रप्रमाणत्वाभावे तु तस्याप्रमाणत्वाद् न प्रमाणविभागगोचरता । अत एव न्यायचन्द्रिका समानयोगक्षेमं प्रामाण्यम्, विषयभेदं चादाय प्रमाणं षोढा विभजते ॥

दृश्यत्वादिति मिथ्यात्वानुमानम् । तत्र प्रत्यक्षागमादिभिर्जगतः सत्यत्वात् विवादपदम्, सत्यम्, अर्थक्रियाकारित्वात्, इत्यनुमानेन प्रथमानुमानस्य बाधः, साध्यसमो वा । एवं स्वरूपासिद्धिरपि पक्षे दृश्यत्वस्य, मिथ्यात्वस्य च । तत्र हेतूक्तदृश्यत्वस्यापि मिथ्यात्वात्, पक्षेऽसम्भवात् । मिथ्यात्वमप्यनिर्वचनीयत्वेऽद्वैतमतेऽसत्ख्यातेरनङ्गीकारादप्रसिद्धमेव । आत्मनोऽपि दृश्यत्वात् तत्रानेकान्तोऽपि । जगत्, सत्यम्, प्रमाणसिद्धत्वात्; ब्रह्मवदिति सत्प्रतिपक्षश्च, अमानसिद्धत्वेन सोपाधिकत्वं च । न हि प्रत्यक्षस्य वर्तमानमात्रग्राहित्वम्; अनुमानस्यापि तत् प्रामाण्यग्राहिसाक्षिणः प्रत्यक्षत्वेन वर्तमानार्थग्राहित्वापत्तेः । साक्षिवेद्यत्वेन प्रामाण्ये जगत्सत्यत्वमपि साक्षिवेद्यमेव, इति तन्मिथ्यात्वस्य साक्षिणा बाधः ॥

स्मृतिलक्षणं तु मानसप्रत्यक्षं ज्ञानमिति परे मन्यन्ते, परं त्वनुमितार्थस्मरणेऽव्याप्तमिदं लक्षणम् । बाह्येन्द्रियानपेक्षं मनसोऽव्यापारात्, संस्कारसहकृतमनस इन्द्रियस्यैव तत्र कारणत्वमित्यपि दुर्वचम् ॥

तत्रात्मनः साक्षित्वे न विप्रतिपत्तिः, परं तु न स्वरूपज्ञानं मुख्यात्मस्वरूपं साक्षी, किन्त्वन्तःकरणोपहितमेव । न चैतस्येन्द्रियत्वे किमपि प्रमाणम्; सर्वदर्शनविरुद्धत्वात् तदिन्द्रियतावादस्य । तत्रेन्द्रियसन्निकर्षजन्यत्वस्यप्रत्यक्षत्वप्रयोजकत्वे कथं भ्रमस्थले रजतस्य प्रत्यक्षतानिर्वाहः ? न हि रजतस्यासत इन्द्रियेणास्ति कोऽपि सन्निकर्षः । अद्वैतमते तु शुक्त्यवच्छिन्नचैतन्याभिन्नसाक्षिचैतन्यतादात्म्यात् साक्षिभास्यत्वं सुखादिवदविरुद्धम् । असतस्तु नेन्द्रियेण, न वाऽऽत्मना सन्निकर्षः, इति न प्रत्यक्षत्वनिर्वाहः । प्रधानेन्द्रियसन्निकर्षेणैव तदाश्रितस्यापि प्रत्यक्षत्वे घटेन्द्रियासन्निकर्षेऽपि भूतलमात्रसन्निकर्षे घटप्रत्यक्षत्वमापद्येत । अतोऽपि हेतोरसत्ख्यातिरनुपपन्ना । इदं च सर्वं न्यायचन्द्रिकाविशदयत्यन्यथाख्यातिनिराकरणाद्यवसरे ॥

तत्र स्वरूपज्ञानस्य प्रमातुः साक्षिपदवाच्यस्य—आत्मस्वरूपम्, तद्धर्माः,

अविद्या, मनः, तद्वृत्तयः, बाह्येन्द्रिय-ज्ञान-सुखाद्याः, कालः, अव्याकृताकाशश्च विषया इति परसिद्धान्तः। तत्रात्मस्वरूपं स्वप्रकाशम्, न साक्षिणो विषयः, वृत्ति-ज्ञानस्य तु विषयः। परं तु तदप्यखण्डा-कारवृत्तिज्ञानमेवेति तु विवेकः। अन्यत्र तु प्रायेण न विप्रतिपत्तिः। कालस्यापि वृत्तिज्ञानविषयत्वमेव, इति तु न्याय-चन्द्रिका धारावाहिकप्रमात्वोपपादनव्या-जेन विवेचयति। तत्र वृत्तिरन्तःकरण-परिणाम एव ज्ञानम्, न त्वविद्यावृत्तिः, इति भ्रमस्याविद्यावृत्त्यात्मकस्य, तादृश्याः स्मृतेश्च न ज्ञानत्वमपीति न्यायचन्द्रिका वदति। तत्रानुमानप्रमाणनिरूपणस्यासा-धारणं प्रयोजनं प्रपञ्चमिथ्यात्वानुमानम्। न चात्र कोऽपि हेत्वाभासः। तत्रानुमान-प्रयोगस्तु—विवादपदम्, मिथ्या, दृश्य-त्वात्; यदेवम्, तदेवम्; यथा शुक्ति-रूप्यमिति। तत्र दृश्यत्वमनवधारितानिर्व-चनीयत्वादिविशेषणं दृश्यत्वमात्रं हेतुः, न त्वनिर्वचनीयत्वविशेषितम्, इति न हेत्वसिद्धिः। तन्मिथ्यात्वस्याप्यनेनैव साधनम्; तस्यापि घटादिसाधारण दृश्यत्वात्। ब्रह्मभिन्नत्वेन तु मिथ्यात्वम्, इति न तन्मिथ्यात्वासिद्धिरनेनानुमानेन।

दृश्यत्वं ह्यत्र दृक्तादात्म्यवत्त्वमेव

विवक्षितम्,न तु वृत्तिव्याप्यत्वम्, साक्षिवेद्यत्वं वा, इति नात्मस्वरूपे दृग्रूपे दृश्यत्वं वर्तते, इति न व्यभिचारः। असत्ख्यातेरयुक्तत्वस्थापनादगत्याऽनिर्वचनीयख्यातेरेव स्वीकरणीयत्वाच्च शुक्तिरूप्यदृष्टान्तोऽप्यव्याहतः। जगत्, न मिथ्या, अर्थक्रियाकारित्वादिति कालात्ययापदेशस्त्वर्थक्रियाकारित्वस्याबाध्यत्वाप्रयोजकत्वाद्, व्यावहारिकप्रतिभासिकान्यतरसत्त्वस्यैवार्थक्रियाकारित्वाविरोधाच्च नावसरति। प्रमाणसिद्धत्वं व्यावहारिकसत्त्वेनापि निर्वहति, इति न तदपि त्रिकालाबध्यत्वरूपसत्यत्वप्रयोजकम्। अत एव नामानसिद्धत्वेन सोपाधिकत्वम्। 'सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यम्, एवं प्रामाण्यमपि। साक्षिभास्यं च बाधितमपि, नाबाधितम्, इति साक्षिभास्यत्वं प्रपञ्चस्य न मिथ्यात्वविरोधि। प्रत्यक्षस्य हि वर्तमानमात्रग्राहिणो न भाविबाधविरोधित्वम्, इति श्रुतिबाधितं प्रत्यक्षं न प्रपञ्चसत्यत्वग्राहि, इति जगत्सत्यत्वानुमानेन न प्रत्यक्षस्य बाधः। अयमेव न्यायोऽनुमानेऽपि। सर्वं चेदं न्यायचन्द्रिका ज्ञापयति॥

## ॥ उपाधिखण्डन-मण्डने ॥

अद्वैतमते परमात्मातिरिक्तं किमपि नास्तीति तस्यैवाज्ञानं वक्तव्यम्। न च तत् तस्य सर्वज्ञस्य सम्भवति। यद्यपि परमात्मा, नाज्ञानाश्रयः, सर्वज्ञत्वादित्यनुमाने न दृष्टान्तः कश्चनास्ति; तथापि यो यत्र ज्ञानवान्, स तत्र नाज्ञानवानिति सामान्यव्याप्त्य न दृष्टान्तासिद्धिः। सर्वज्ञत्वं च परमात्मनः स्वरूपज्ञानेन, असङ्गत्वं च तत्कृतफललेपाभावमात्रम्, न तु तत्सम्बन्धाभावः। उक्तं च "यथाऽकाशस्थितो वायुः" इति॥

एतेन—जीवाज्ञानाश्रयत्वमपि—व्याख्यातम्। तत्र जीवो यदि न कल्पितः, तर्हि जीवोऽप्यकल्पितः, परमात्माऽपीति द्वैतसत्यतापत्तिः। यदि जीवोऽज्ञानोपाधिकोऽज्ञानकल्पितः, तर्हि तस्याज्ञानस्य स्वाभाविकत्वे तद्दोषतादवस्थ्यम्। कल्पितत्वेऽनवस्थादिः, अन्योन्याश्रयश्च—उपाधिश्चाज्ञाने सति स्यात्, अज्ञानं चोपाधौ सति—इति। एतेन—अविद्याया भेदकल्पकत्वमपि—व्याख्यातम्। सा हि यदि चिन्मात्रसम्बन्धिनी भेदकल्पिका, तर्ह्यज्ञानस्याकल्पितस्य भेदकल्पकत्वे भेदसत्यत्वापत्तिः। कल्पितत्वे सैवानवस्था।

अज्ञानं चिन्मात्रस्योपाधिः, न तु तद्विशिष्टस्येश्वरस्य; अज्ञानोपाधिनिमित्तत्वादीश्वरभावस्य, इति सर्वज्ञत्वाज्ञानयोर्न सामानाधिकरण्यम्; भिन्नाश्रयत्वात्। एतेन—अज्ञानस्य जीवाश्रयत्वमपि—व्याख्यातम्। अज्ञानस्य जीवोपाधित्वं हि जीवे बिम्बेश्वराभिन्नेऽपि स्वधर्माधायकत्वमात्रम्—यथा लोहितस्य पुष्पस्य स्फटिकोपाधित्वम्। तच्च सन्निधानमात्रेण, यथा दर्पणं प्रतिबिम्बस्य। तथाच प्रतिबिम्बोपाधेः प्रतिबिम्बत्वप्रयोजकत्वम्, प्रतिबिम्बे स्वगतमालिन्याद्याधायकत्वं च यथा, एवमज्ञानं जीवत्वनिमित्तम्, तत्र स्वधर्माधायकं च। अतो नात्रान्योन्याश्रयः, अनवस्था वा। अनादित्वाद् जीवाज्ञानयोर्नोत्पत्तावन्योन्याश्रयः। साक्षिभास्यत्वाच्चोभयोरपि न ज्ञप्तावप्यन्योन्याश्रयः। उपहितस्यानादेः प्रवृत्तिरपि नाज्ञानाधीना। तत्र चैतन्यांशस्य प्रवृत्त्यभावाद् न तत्राज्ञानस्योपकारकत्वम्। उपाधिविशिष्टस्य प्रवृत्त्यादिकं तु तत्तत्सहकारिकारणापेक्षम्, नाज्ञानाधीनम्, इति प्रवृत्तावपि नान्योन्याश्रयः। अयमेव न्यायोऽज्ञानप्रयुक्तत्वे भेदस्यापि। अज्ञानं हि चिन्मात्रस्यौपाधिकाद् जीवाद् भेदं

जीवाज्ञानयोरनादित्वं त्वज्ञानजीवयोः परस्परोपकार्योपकारकभावाभावे न युक्तम् । उत्पत्तिज्ञप्त्योरिव प्रवृत्तेरपि प्रतिबन्धेनाज्ञानस्य जीवाश्रयत्वेऽन्योन्याश्रयो दूषणमेव । औपाधिकत्वे च जीवस्योपाध्यपगमे विनाश आपद्यते । स्वरूपमात्रावशेषे ब्रह्मण्येव बन्ध-मोक्षौ स्याताम् । न चोपाधेर्भेदकारकत्वम्, किं तु सिद्धभेदज्ञापकत्वम् । घटाकाशादिस्थलेऽप्येवमेव ॥ प्रयोजयति ; एकस्योपहितत्वात्, अन्यस्यातादृशत्वात् । जीवानां तु तद्भेद एव भेदं प्रयोजयति, इति नाज्ञानस्य भेदकत्वायोगः । व्यक्तं चेदमपि सर्वं न्यायचन्द्रिकायाम् ॥

तत्र शब्दानां व्यक्तौ शक्तिग्रहः, उताऽऽकृताविति विचारस्तु न्यायचन्द्रिकाया अत्यन्तमेवाधमर्णयति सर्वं वैदिककुलम् । एवं स्फोटवादनिरासो मण्डनमिश्राणां स्फोटसिद्धिनिरसनपूर्वकम् । अयं च न्यायसुधा-न्यायचन्द्रिकयोरेकरूप एव दृश्यते । किं बहुना ? द्वैताद्वैतसम्प्रदायविप्रतिपन्नाः सर्वेऽपि वादप्रस्थानविषया न्यायसुधयेव न्यायचन्द्रिकयापि सम्यगुपन्यस्ताः सप्रतिपक्षोपक्षेपनिरासपूर्वकम् ॥

तदेवं श्रीमध्वसम्प्रदायसिद्धविषयाणामेव बहुशो न्यायचन्द्रिकायामावापोद्वापाभ्यां विमर्शनात् श्रीमध्वसम्प्रदायवृद्धिक्रमसमय एव न्यायचन्द्रिकाया अपि समयः ॥

तत्र च श्रीमध्वाचार्याणां (११९९–१२७८ A.D.) इति वा, (१२३८–१३२४ A. D.) इति वा समय इति पक्षभेदेन तत्तत्समयनिवासिनः—द्वैतसम्प्रदायप्रवर्तकाः, तदनुयायिनश्च बहव एव निबन्धकाराः । न्यायचन्द्रिकायां न्यायसुधाया अप्यर्थतोऽनुवादात् तत्र द्वितीयः कल्पो न कल्पते ॥

(१) तत्र भगवत्पादानां समयः—( B. C. ४४७ ) इति केचन । चन्ये तु—( ७८८ A. D. ) इति । परे त्वन्यथाऽन्यथा ॥

(२) तदन्तेवासिनः सुरेश्वर-पद्मपाद-हस्तामलकानन्दगिरयोऽपि तत्सम-कालिकाः, येषां मण्डनसुरेश्वर-पद्मपादाचार्यैर्भाष्य-वादप्रस्थानमूलतत्त्वानि तदीयेषु निबन्धेषु ब्रह्मसिद्धि-नैष्कर्म्यसिद्धि-वार्तिकादिषु सम्यगेवाम्रेडितानि । तत्र ब्रह्मसिद्धौ प्रायेण द्वैताद्वैतवादप्रस्थानभित्तिस्थानभावरूपानिर्वचनीय-जीवाश्रय ब्रह्मविषय-ब्रह्मज्ञान-निवर्त्याज्ञानस्वरूपम्, जीवन्मुक्तिः, उपवर्षादिसम्मतज्ञानकर्मसमुच्चयवादनिरासेन ज्ञानमात्रमोक्षसाधनतादिप्रक्रियाः सम्यगाम्रेडिताः—सुरेश्वराचार्याणां नैष्कर्म्यसिद्धि-वार्तिकादाविव पिष्टपेषणनयेन । सन्मात्रे ज्ञानप्रामाण्यम्, विकल्पांशेऽप्रामाण्यम्, जीवास्तदाश्रयाविद्याश्च नानेत्यादिप्रक्रियाविशेषाणां मूलस्थानं ब्रह्मसिद्धिः । सिद्धान्तलेशसङ्ग्रहे प्रथमो विषयस्तत्त्वशुद्धिकाराणामिति लिख्यते । परमार्थतस्तु ब्रह्मसिद्ध्युपज्ञस्यैवास्य विस्तारमात्रं तत्त्वशुद्धिकाराणाम् । सर्वेऽपि प्रक्रियाभेदा भाष्यारूढाः, अद्वैतपर्यवसायिनश्च ॥

तत्र सुरेश्वरवार्तिके "आत्मा वा अरे द्रष्टव्यः" इत्यत्र विधिभेदाः—दर्शनमेव मोक्षसाधनमित्यादिनिरूपणेन, केषाञ्चन ततोऽपि प्राचीनानां भक्तियोगमोक्ष-साधनतावादः, दर्शनसमानाकारध्रुवानुस्मृतिदर्शनतावादः, अन्ये च द्वैताद्वैतसम्प्रदाय-विप्रतिपत्तिविषयाः प्रसङ्गमपि नालभन्त ॥

पद्मपादाचार्याणां ब्रह्मसूत्रभाष्यव्याख्या तु शाखोपशाखन्यायेन पञ्चपादिका-विवरण-तत्त्वदीपनर्जुविवरण-विवरणभावप्रकाशिका-विवरणोज्जीविनी-भावोद्योतनिका-टीकारत्न-पदयोजिनी-प्रकाश—तात्पर्योद्योतिन्याख्यव्याख्याऽनुव्याख्यादिक्रमेण सुदूरं वर्धमाना भगवत्पादानां पद्मपादाचार्येषु वात्सल्यातिशयं गमयति । हस्तामलक-तोटकाचार्ययोस्तु यद्यपि न भाष्यप्रस्थानमुखेन निबन्धा वर्तन्ते ; तथापि प्रकरण-निबन्धेषु प्रधानं स्थानं तदीया अपि निबन्धा लभन्ते । आनन्दगिरयस्तु भगवत्पादा-न्तेवासिनः कं वा निबन्धं निबबन्धुरिति न जानीमः । भगवत्पादभाष्यादिव्याख्याता त्वानन्दगिरिरानन्दज्ञानाभिधो जनार्दनापरनामा (१२६०—१३२० A. D.) समयवर्ती तत्त्वालोक-तर्कसङ्ग्रहादिबहुतरस्वतन्त्रपदार्थतत्त्वनिर्णयादिव्याख्यादिकर्ता त्वन्य एव । विश्वसिमः—अयमानन्दगिरिर्न्यायचन्द्रिकाकर्तुरानन्दपूर्णमुनीन्द्रस्य समकालिकः —इति ॥

तदनन्तरस्तु वाचस्पतिमिश्रः, योऽपि सर्वतन्त्रस्वतन्त्रो न्याय-मीमांसा-योग-व्याकरण-साङ्ख्य-वेदान्तदर्शनसिद्धान्तसर्वस्वप्रकाशकबहुतरस्वतन्त्रनिबन्धटीकादि-कर्ताऽद्वैतवेदान्तस्य भित्तिस्थानीयः, यस्यापि भामती पञ्चपादिकेव शाखोपशाखविधया व्याख्याऽनुव्याख्यादिक्रमेण द्वैताद्वैतविवादावसरे जयतीर्थव्यासराजादिभिः पक्षप्रति-पक्षपरिग्रहेण समालोच्यते। तद्व्याख्या तु—ऋजुप्रकाशिका - कल्पतरु - भामती तिलक-भामतीभावदीपिकादयः, साम्प्रतमेव करूरुनिवासिपण्डितप्रवरभिषग्वरश्रीराम-शर्मपितृपादकृतव्याख्यारत्नं च प्रसिद्धमेव। कल्पतरुस्तु—परिमलाभोगाख्य-व्याख्याभ्यां सगन्धितो भामतीतत्त्वं सम्यगेव विशदयति। शाखोपशाखन्यायेन प्रवर्धमाना भामती स्वसिद्धान्तस्य मूलं प्रायेण ब्रह्मसिद्धिमाश्रयन्ती पञ्चपादिकाप्रस्थानात् प्रस्थानान्तरम्। तेन मण्डन-पद्मपादयोर्न सामरस्यमासीदिति भाति। व्यक्तं चैतत् शारीरकमीमांसाभाष्यवार्तिकोपक्रमेऽत्रैव योजयिष्यमाणे। तत्र कल्पतरु-कारोऽमलानन्दस्त्वानन्दगिरितोऽव्यवहितपूर्व (१२४८ - १२६० A. D.) समयवर्ती न्यायचन्द्रिकाकारादानन्दपूर्णमुनितः प्राचीनः, इति कल्पतरुकारापेक्षयाऽर्वाचीनः, परिमलकारापेक्षया प्राचीनश्चानन्दपूर्णमुनीन्द्रः। वाचस्पतिमिश्रसमयस्तु (८४२ A.D) नवमं शतकम्। अतो ज्ञायते—ब्रह्मसिद्धेः प्रथमं वृद्धिक्रमः प्रावर्तत, न तु पञ्चपादि-कायाः। इदमत्र सन्तोषस्थानम्—यत् श्रीवाचस्पतिमिश्रवंशक्रमस्य शाखायां कर्णपुरे (Canpur) पण्डितप्रवरविद्यासागरहरिगोविन्दमिश्राः शाखोपशाखक्रमेण साम्प्रत-मपि वर्धन्ते॥

ततः सर्वज्ञात्ममुनिः संक्षेपशारीरककर्ता, यस्य समयः (९७८ A. D.)। स हि ग्रन्थान्ते पद्मनाभस्तुतिकरणाद् ज्ञायते—केरलदेशीयो वञ्चीपुराख्यत्रिवाङ्कूर-परिसरवर्तीति। तदीयास्तु ग्रन्थाः—

(१) पञ्चप्रक्रिया (२) पञ्चप्रकरणम्
(३) प्रमाणलक्षणम् (४) संक्षेपशारीरकं च॥

अयं हि मण्डनमतपक्षपात्यपि पञ्चपादिकापक्षमपि सङ्गृह्णाति। तत्र देवाचार्यः कश्चन निर्दिष्टः, तस्यैव गुरुरपरः सुरेश्वरादिति केचन। सुरेश्वर एवेति तु परे।

सर्वथा तु सुरेश्वरपक्षपाती सर्वज्ञात्ममुनिः । तथापि मण्डनमतमपि तत्र तत्रायं निरस्यतीति मण्डनमिश्रः सुरेश्वरापेक्षयाऽन्य इति केचन । पञ्चपादिकापक्षानुवादमात्रं तदिति तु परे । सुरेश्वर-मण्डनयोरैक्ये, भेदे च मतभेदा बहवो वर्तन्ते । ब्रह्मसिद्धिभूमिकायां मद्रपुरराजकीयग्रन्थागारप्रकाशितायां Prof-श्रीमान् पि. पि. सुब्रह्मण्यशास्त्री मण्डन-सुरेश्वरवाक्यानां बहूनां प्रायेणैक्यं प्रदर्श्य मण्डन-सुरेश्वरैक्यपक्षं सर्वं माधवीयशङ्करविजयप्रस्तुतमेव समर्थयति । तत्तु विचारान्तरमत्र ॥

तदनन्तरस्तु विमुक्तात्मा, प्रमाणवृत्तिनिर्णयेष्टसिद्ध्योः कर्ता, सर्वज्ञात्मसमकालिकः; परं तु वयसा न्यूनः । व्यक्तं चैतदिष्टसिद्धिभूमिकायाम् । इष्टसिद्धिर्हि बहुषु विषयेषु ब्रह्मसिद्धितो विसंवदन्ती जीवन्मुक्तिवादादिषु, तृतीयं प्रस्थानम्—पञ्चमप्रकाराविद्यानिवृत्तिवादं प्रस्थापयति; स्थितप्रज्ञः साधकः, न तु सिद्ध इति—च । पञ्चमप्रकाराविद्यानिवृत्तिरानन्दबोधाचार्याणां मत इति सिद्धान्तलेशसङ्ग्रहः सङ्गृह्णाति । परमार्थस्तु विमुक्तात्ममुनिरेवास्य मूलस्थानम् । इष्टसिद्धिव्याख्याताऽऽनन्दबोधाचार्यः स्वीये न्यायमकरन्दे केवलं तं विस्तरेणोपपादयति, यथा—आनन्दानुभवो न्यायरत्नदीपावल्यादौ । तदीयं स्वतन्त्रं विचारं तु दृष्ट्वा सिद्धान्तलेशसङ्ग्रहे तदीयत्वोल्लेखः । स हि अज्ञानाभावरूपत्वासम्भवं ब्रह्मसिद्ध्यपेक्षयाऽप्यतिगम्भीरतयोपपादयति, जीवाश्रयाज्ञानवादम्, तदनेकतावादं च ब्रह्मसिद्ध्यभिमतं निरस्यति । अस्मिन्नंशे पञ्चपादिकासिद्धान्तमेवानुसरति । विश्वस्यते—पञ्चपादिकापक्षस्य तत एव वृद्धिक्रमोपक्रमः—इति । तस्य समयस्तु ( १००० A. D. ) । संक्षेपशारीरके तुरीयाध्याये चतुर्दशे श्लोके सर्वज्ञात्ममुनिर्मुक्तिकोविदं कञ्चन परामृशति । स तु मुक्तात्मेष्टसिद्धिकार इति मधुसूदनसरस्वती, नृसिंहाश्रमी च लिखति । इष्टसिद्धौ पञ्चमप्रकाराविद्यानिवृत्तिप्रस्थानं तदीयमभिप्रेत्येदमिति तदाशयः । संक्षेपशारीरकात् पूर्वं विमुक्तात्मनः पञ्चमप्रकाराविद्यानिवृत्तिकल्पः केवलं विचारावस्थायामासीत्, तदेवादाय संक्षेपशारीरके तत्कल्पोल्लेख इति तु केचन । सर्वथा तु तयोः समकालिकत्वे न विप्रतिपत्तिः ॥

विमुक्तात्मसमकालिको ज्ञानघनस्तु तत्त्वशुद्धिकर्ता विमुक्तात्मखण्डितब्रह्मसिद्धेरुज्जीवनेन ब्रह्मसिद्धपक्षं समर्थयति। एतत्कालपर्यन्तं पञ्चपादिकासिद्धान्तस्यैव यथावत् समर्थनपरः कोऽपि निबन्धो नावततार। विमुक्तात्मपक्षस्तु तद्व्याख्यातृभिरानन्दबोधाचार्यैः, आनन्दानुभवयतिभिश्च समर्थितः, तत्पक्षमवलम्ब्य न्यायमकरन्द-पदार्थतत्त्वनिर्णय-न्यायरत्नदीपावलीद्वारापि प्रकाशं गतः। पञ्चपादिकानुल्लिखिताः, मण्डनानुल्लिखिताश्च बहवो विषया विमुक्तात्ममुनिभिरुल्लिखिता आनन्दबोधाचार्यैरेव प्रसिद्धिमगमन्, इति कृत्वैव पञ्चमप्रकाराविद्यानिवृत्तिवादस्यानन्दबोधाचार्यसिद्धान्तत्वेन सिद्धान्तलेश उपक्षेपः। एवमेव सन्मात्रप्रामाण्यवादादिपक्षस्य ज्ञानघनेनैव विशदीकरणात् तत्त्वशुद्धिकारमतत्वेन सिद्धान्तलेशसङ्ग्रहे तस्य सङ्कलनम्। ज्ञानघनस्त्वयं शृङ्गगिरिपीठाधीश आसीत्। तच्छिष्य एको ज्ञानोत्तमः। यस्य ज्ञानघनस्येव (९२५-९५०A. D.) समयः। सोऽपि वाचस्पतिसमनन्तर एव। स ब्रह्मसिद्धिसिद्धान्तस्यैवावलम्बी। सर्वथा तु विमुक्तात्मपर्यन्तम्, ज्ञानघनपर्यन्तं वा पञ्चपादिकाप्रस्थानं विशेषतो न वृद्धिमगमत्॥

पञ्चपादिका तु—(१७०० A. D.) समयवर्तिना धर्मराजाध्वरीन्द्रेण, षोडशशतकवर्तिना नृसिंहाश्रमेण, तदाद्यकालवर्तिना तद्गुरुणा श्रीकृष्णतीर्थेन, तत्पूर्ववर्तिविज्ञानात्मप्रभृतिभिरपि व्याख्याता प्रकाशात्मनेव॥

प्रकाशात्मा हि पञ्चपादिकाविवरणस्य कर्ता (१३२५-A.D.)समयवर्तिनाऽखण्डानन्दमुनिना पञ्चपादिकाविवरणस्य तत्त्वदीपनाख्यव्याख्याकरणात् ततः प्राचीनः, शतदूषण्यां तदीयानुमानस्य निरासात् ततः प्राचीनः। किं बहुना? श्रीभाष्येऽपि तदीयाविद्यानुमानस्य निरासात् ततोऽपि प्राक्तनः, इति प्रतीयते—एकादशशतकान्तभागमलमकरोदिति। ततश्च तत एव पञ्चपादिकासिद्धान्तप्रचारस्य मण्डनानुसारिभिरधः कृतस्य वृद्धिक्रमः। इदमत्रानुसन्धेयम्—अखण्डानन्दमुन्यपेक्षयापि प्राचीनेन चित्सुखाचार्येणापि (१२०० A. D.) समयवर्तिना पञ्चपादिकाविवरणस्यापि व्याख्याकरणात्, ततः प्रभृत्येव शाखोपशाखक्रमेण वर्धनाच्च पञ्चपादिका-

प्रस्थानस्य प्रकाशात्मयतिमारभ्यैव प्रचाराधिक्यम्, तेन च विवरणप्रस्थानमिति नामापि जगति पदमलभत ॥

विमुक्तात्मप्रस्थानं तु तृतीयमुभयप्रस्थानानुगतमंशभेदमात्रे, प्रस्थानद्वयतोऽपि भिन्नपथं चित्सुखाचार्यसमयमारभ्य प्रचारमगमत्। यस्यानन्दबोधाचार्य एव प्रधानोऽवलम्बी। आनन्दबोधाचार्यो हि न केवलं वार्तिकम्, कुत्रचन विमुक्तात्मानमपि परास्यतीत्यन्यदेतत् ॥

चित्सुखाचार्यो हि पञ्चपादिकाविवरणप्रस्थानमिव भामतीप्रस्थानमपि हृदयेन समाद्रियते—उभयोरपि प्रस्थानभेदेऽपि लक्ष्यैक्याद् न विरोध इत्याशयेन। स हि विवरणमिव ब्रह्मसिद्धिमपि व्याचष्टे, इति महामहोपाध्याय श्री कुप्पुस्वामिशास्त्रिपादसङ्गृहीतमद्रपुरराजकीयग्रन्थभाण्डारगतामुद्रितादर्शसूचीतोऽवगम्यते। न केवलमिदम्, किं त्वानन्दबोधाचार्यकृतन्यायमकरन्दस्य, प्रमाणमालायाश्च व्याख्याकरणादिष्टसिद्धिप्रस्थानमपि नास्यालक्ष्यम्। विश्वस्यते—चित्सुखाचार्यकालमारभ्यैव सर्वेषु प्रस्थानेषु समा समादरबुद्धिः, तावत्पर्यन्तं तु प्रस्थानत्रये कस्यचनैकत्र, अपरत्र वा पक्षपात आसीत्। अयमेवावसरः—श्रीमध्वाचार्याणामवतारस्य (११९९-१२७८ A. D.) ॥

श्रीरामानुजसमयेऽपि ब्रह्मसिद्धिसिद्धान्तस्यापि तत्त्वशुद्धिद्वारा प्रकाशं गतस्य विकल्पाप्रामाण्यवादस्य समालोचनमासीत्, यस्याद्वैतनिबन्धेषु कुत्रापि तदनन्तरं न परीक्षणम्। कारणं त्वत्र प्रतीयते—श्रीभाष्याक्षेपाणां महासिद्धान्ततयाऽद्वैतमत उपक्षिप्तानां सुगोपनमेव बहुकालमासीत्। चित्सुखाचार्यकाले तद्व्याख्यातुः प्रत्यक्स्वरूपभगवतः काले, तदनन्तरमपि श्रीरामकृष्णपण्डितकालपर्यन्तं तत्परीक्षणमेव नासीत् ॥

रामकृष्णपण्डित एव चतुर्दशशतकस्याद्यभागवर्ती विशिष्टाद्वैतभञ्जनाख्येन निबन्धनेन विशिष्टाद्वैतसिद्धान्ताभिमततदीयासाधारणप्रक्रियाणां शरीरशरीरिभावनित्यसङ्कोचविकासशालिधर्मभूतज्ञानादिविषयाणां विमर्शनेन श्रीभाष्यमहासिद्धान्तमजरयत्। ततस्तु तद्विषया वादप्रतिवादा विशिष्टा महाचार्याप्पय्यदीक्षितेन्द्र-

कालमारभ्य महान्तं प्रचारमलभन्त, क्रमेण चाद्य यावत् शाखोपशाखविधया वर्धन्तेतराम् । रामकृष्णः शतदूषण्यादिकमपि तत्र सङ्ग्रहेणानुसन्धत्ते । शतदूषण्या विस्तृतो विचारः शतभूषणीसमयमारभ्य क्रमेण वर्धत इव । ब्रह्मानन्दसरस्वत्याः (१८०० A. D.) शतकवर्तिनो द्वैताद्वैतविवादावसरगतविचारधारायां विशिष्टाद्वैतसिद्धान्तस्यापि साधारणान् कांश्चनाधिकृत्य न्यायभास्करो नाम निबन्धो बबन्धेऽनन्ताल्वारमहोदयेन (१९०० A. D.) समयवर्तिना, यस्य विमर्शनं मन्नारगुडिराजुशास्त्रिपादैरुपक्रान्तम् । श्रीन्यायभास्करकारेण विशिष्टाद्वैतासाधारणप्रक्रिया अपि काश्चनैकशास्त्रवादादीनधिकृत्य वादावली नाम निबन्धमाला गुम्भिता, प्रकाशिता च । तिरुविशनल्लूररामसुब्रह्मण्यशास्त्रिपादैर्विंशस्य शतकस्याऽऽद्यभागमलङ्कृतवद्भिः, द्वितीयभागमलङ्कृतवद्भिः श्रीहरिहरशास्त्रिपादैः, गुरुचरणश्रीपञ्चापगेशशास्त्रिपादैश्च कृतम्, प्रकाशितं प्रकाश्यमानं चापरमपि न्यायभास्करनिरसनं साम्प्रतं विजयतेतराम् । आस्तामियमानुषङ्गिकी कथा ॥

सर्वं चेदम्, अधिकं चाद्वैतनिबन्धकाराणां तेषां तेषां तत्तद्भिरचितग्रन्थनामनिर्देशपूर्वकं श्रीमता श्रीवेङ्कटेश्वरविश्वविद्यालयगवेषणविभागपुस्तकालयाध्यक्षेण श्री एन्. सुब्रह्मण्यशास्त्रिणा(M. A.) सङ्गृहीतेऽद्वैतनिबन्धकारपरिचयप्रदायके निबन्धेऽत्र योजिते विशदम् ॥

श्रीमध्वाचार्यसमयमारभ्य द्वैताद्वैतविवादा विना परस्परविद्वेषं विषयमात्रसमालोचनदृष्ट्या विचारपरम्परायां साम्प्रतमपि वर्धन्ते । तत्रानन्दबोधाचार्यसमयवर्तिना, तदनन्तरचित्सुखाचार्यसमकालिकेन वाऽऽनन्दानुभवेन न्यायरत्नदीपावलीपदार्थनिर्णयौ स्वतन्त्रौ निबन्धौ, इष्टसिद्धिव्याख्या च काचनावतारिषत ॥

तत्र "अवाच्यस्यामेयस्य च न लक्ष्यत्वम्" इति वादः कश्चन प्रस्तुत्य प्रत्याख्यातः । स तु श्रीमध्वाचार्याणामीक्षत्यधिकरणव्याख्यानुव्याख्यानयोनिरिव । तत्रापि हि ब्रह्मणोऽवाच्यत्वनिषेधेन वाच्यत्वं समर्थ्यते, यस्य विस्तरोऽनुव्याख्यानव्याख्यान्यायसुधादौ दरीदृश्यते । ततश्चानुमीयते—आनन्दानुभवो न्यायरत्नदीपावलीकारश्चित्सुखाचार्यतः पूर्वं श्रीमध्वाचार्यावतारानन्तरं द्वादशशतकान्तमल-

मकरोदिति, इति श्रीमध्वाचार्यसिद्धान्तवादप्रस्थानविवादप्रतिवादयोः प्रथमं स्थानमद्वैतप्रतिनिधिषु श्रीमदानन्दानुभवा अलभन्त । इमे हीष्टसिद्धिपक्षपातिन इष्टसिद्धेरपि व्याख्यातारः, इति तावत्पर्यन्तमिष्टसिद्धेर्वृद्धिक्रमः ॥

वादप्रस्थानविषयमधिकृत्य स्वतन्त्रप्रकरणग्रन्थस्य , परमतनिराकरणपूर्वकस्वमतस्थापनपरनिबन्धस्य वा विरचनेऽधिकारस्तन्मूलनिबन्धस्य व्याख्यानन्तरमेव प्राचीनकाले । तत्र द्वैतमतनिरसनपूर्वकाद्वैतस्थापनपरेषु निबन्धेषु प्रथमं स्थानं चित्सुखाचार्यस्यैव ; यतस्तदानीमेव निरसनीयं द्वैतभाष्यं श्रीमध्वाचार्याणामवततार । तदीयो ग्रन्थोऽत एव तत्र प्रमाणम् । स हि खण्डनखण्डखाद्यस्य, ब्रह्मसूत्रशाङ्करभाष्यस्य, पञ्चपादिकाविवरणस्य, ब्रह्मसिद्ध्यादेश्च व्याख्यानन्तरमेव चित्सुखीनिबन्धस्य स्वतन्त्रस्य विरचने प्रायतत । द्वितीयं स्थानं तु—विद्यासागरानन्दपूर्णमुनेः । सोऽपि हि सूक्ष्मदृष्ट्या जयतीर्थीयन्यायसुधानिरसनलक्ष्यामिमां न्यायचन्द्रिकाम्—खण्डनखण्डखाद्यस्य, पञ्चपादिकाविवरणस्य, बृहदारण्यकभाष्यवार्तिकस्य, ब्रह्मसिद्धेश्च व्याख्यानानन्तरमेव निबबन्ध ॥

तत्रानन्दानुभवकृतन्यायरत्नदीपावलीं चित्सुखी निरस्यतीति नयनप्रसादिनी तद्व्याख्या वदति । अतो ज्ञायते—चित्सुखाचार्यस्य नेष्टसिद्धिप्रस्थानमनुमतम्—इति । इदमेवात्र चित्रम्—यदवाच्यस्य, अमेयस्य च न लक्ष्यत्वमिति न्यायरत्नदीपावलीसिद्धान्तसमर्थनं स्वकर्तव्यमपि चित्सुखी नोदलखदपि । अतो ज्ञायते—आनन्दानुभवचित्सुखाचार्ययोर्वैयक्तिकविद्वेषोऽप्यासीदिति । विश्वस्यते—न्यायरत्नदीपावली—

"सारमुद्धरते योऽस्माद् ग्रन्थात् स्तैन्यपरोऽधमः ।
तस्य पापमतेर्भूयात् प्रतिजन्माशुभं बहु ॥"

इति जन्मनि जन्मनि स्वनिबन्धतो विषयसङ्ग्रहणेनाशुभप्राप्तिं चित्सुखाचार्यं लक्ष्यीकृत्यैव तस्करस्येव घोषयति ॥

तत्र हि भामतीमवलम्ब्येक्षुक्षीररसादीनामिव, सौषुप्तानन्दस्येव चावाच्यस्यामेयस्यापि लक्ष्यत्वं व्यवस्थाप्यते । जयतीर्थस्तु—स्वभाष्यकारमतसमर्थनमेव स्वकर्तव्यं

मन्वानो न्यायसुधायां कथञ्चन कथञ्चन स्वीयेक्षत्यधिकरणसिद्धान्तम्, प्रतिभाति, न्यायरत्नदीपावलीं मनसि कृत्वैव समर्थयति। न्यायचन्द्रिका तु—तत्रानन्दानुभवपक्षं समर्थयति—न्यायसुधाया निरसनेनेत्युत्तरत्र व्यक्तीभविष्यति। न्याय-मीमांसादिसर्व-दर्शनसिद्धान्तनिरसनेन चित्सुख्यपेक्षयापि विशदम्, सविस्तरं च न्यायचन्द्रिकाऽद्वैत-मतमुपबृंहयति। न्यायसुधा-न्यायचन्द्रिकयोः खण्डनीय-मण्डनीयदृष्ट्या तेषां तेषां विषयाणां तत्तन्निबन्धयोर्विचारसरणिरनुपदमेव प्रदर्शयिष्यते। निगमान्तदेशिकोऽपि ततोऽर्वाचीन एव। अत एव तदीयशतदूषणीपरीक्षार्थं न्यायचन्द्रिकाया नावसरः॥

वाचस्पतिसमानो विद्यासागरः सर्वतन्त्रस्वतन्त्रो न्यायचन्द्रिकायां बहून्येव न्याय-वैशेषिक-मीमांसादिप्रधानमल्लान् निबन्धकारान् स्वनिबन्धे सङ्गृह्य तन्मत-निरसनेन स्वीयं सिद्धान्तं स्थापयति। प्रतिप्रकरणं तदुल्लिखिताः खण्डनीयाः, मण्डनी-याश्च निबन्धाः, तत्तन्निबन्धकाराश्च विशकलितैरक्षरैरत्राङ्किताः, येन तेषां बोधो-ऽनायासः स्यात्। ते च पृथक् (क) परिशिष्टेनात्र योजितेन सुबोधा भविष्यन्ति॥

## * ॥ आनन्दपूर्णमुनेर्देशकालादिः ॥

परमहंसपरिव्राजकाचार्यश्रीमदानन्दपूर्णमुनीन्द्रविद्यासागरः, परमहंसपरिव्राजका-चार्यपूज्यपादश्रीमदभयानन्दसरस्वतीशिष्यः, पूज्यसुरेश्वराचार्यप्रवर्तितानन्दसरस्वती-सम्प्रदायपरम्परायां संन्यासदीक्षादीक्षित इति वस्तुस्थितिः, इति तदीयं नाम पूर्णान-न्दसरस्वती, नानन्दपूर्णः। आनन्दपूर्णेति प्रसिद्धिस्तु—

"आत्मनाम गुरोर्नाम नामातिकृपणस्य च
श्रेयस्कामो न गृह्णीयाद् ज्येष्ठापत्यकलत्रयोः॥"

इति नियममाश्रित्य तदन्तेवासिनाम्, तद्भक्तानां वा तथा व्यपदेशेन। विद्या-गुरुस्त्वस्य श्वेतगिरिनामेति—

---

* विद्यासागरसमयनिर्धारणावसरे श्रीमङ्गेशमहोदयस्य महाविद्याविडम्बनभूमिका परीक्षिताऽत्र॥

" अबोधपङ्काविलबोधसागरे
यदीयवाचः कतकायमानाः ।
वन्दे मुनीन्द्रान् मुनिबृन्दवन्द्यान्
श्रीमद्गुरून् श्वेतगिरीन् वरिष्ठान् ॥ "

इति खण्डनटीकायां (चौखाम्बा) द्वितीयपृष्ठे आनन्दपूर्णमुनीन्द्रकृतमङ्गलश्लोकेनावगम्यते । तत्रैव (१३४४) तमे पृष्ठे—

" श्रीमच्छ्वेतगिरिं वन्दे शिष्यधीपद्मभास्करम् ।
यत्पादस्मरणं लोके भवरोगस्य भेषजम् ॥ "

इति श्लोकोऽप्ययमुमर्थमुपष्टम्भयति । तत्रैव (१०२७) पृष्ठादौ, " श्रीमत्परमहंसपरिव्राजकाचार्यवर्याभयानन्दपूज्यपादशिष्यस्य भगवदानन्दपूर्णस्य कृतौ खण्डनफक्किकाविभजने निग्रहनिरुक्तिर्नाम तृतीयः परिच्छेदः " इत्यादौ, (India office) पञ्चपादिकादर्शे च—" इति श्रीमत्परमहंसपरिव्राजकाचार्याभयानन्दपूज्यपादशिष्यस्याऽऽनन्दपूर्णमुनीन्द्रस्य विद्यासागरापरनामधेयस्य कृतौ पञ्चपादिकाटीका समाप्ता " इत्यादिदर्शनात् भगवदभयानन्दसरस्वती संन्यासदीक्षागुरुः, श्रीश्वेतगिरिस्त्वस्य विद्यागुरुरिति प्रतीयते ॥

तत्र खण्डनफक्किकाविभजने स्वविद्यागुरोः श्वेतगिरेरेव नमस्कारेण तन्निबन्धोपक्रमात्, तृतीयपरिच्छेदान्ते भगवदभयानन्दपूज्यपादगुरोरुल्लेखाच्च प्रतिभाति— खण्डनटीकोपक्रमावसरे संन्यासदीक्षा न विद्यासागरेण गृहीतेति । अस्य विद्यासागर इति प्रसिद्धिस्तदीयपूर्वाश्रमनाम्नैव । गौडदेशे विद्यासागरसमाख्याः बहवः साम्प्रतमपि दृश्यन्ते, इति श्रीमदानन्दपूर्णमुनीन्द्रो गौडब्राह्मण इति भाति । गौडोऽप्ययं गोकर्णपरिसरवर्ती विशेषतो वादीन्द्र इव महादेवभक्त आसीदिति—

" परापरस्वरूपेण परं यत् तत् प्रकाशितम् ।
श्रीमन्महाबलं देवं वन्दे गोकर्णमण्डनम् ॥ "

इति न्यायचन्द्रिकोपसंहारमङ्गलश्लोकेनावसीयते । अयं हि शिवभक्तोऽप्यद्वैतदृष्टचैव

शिवभक्तः, न तु शैवदृष्ट्येति—परापरस्वरूपेणेति, तत्रापि परंशिवमितिपदाभ्यां ज्ञाप्यते ॥

तत्र विष्णुपुराणे विष्णोरपि कौस्तुभाद्याभरणानां भगवत्तत्त्वरूपत्वं यदाम्नातम्, तदेव मनसिकृत्यानन्दपूर्णो द्वितीयमौपक्रमिकं मङ्गलश्लोकं लिखति—

" स्वप्रामाण्यविभूषणा श्रुतिवधूः प्रान्वेषमाणापि यम्
दृष्ट्वा लक्षणतो न वक्तुमशकत् सर्वप्रमाणातिगम् ।
शुद्धानन्दचिदद्वयात्मवपुषं द्वैतेन्द्रजालास्पदम्
वन्दे चन्द्रविभूषणं गिरिसुतादत्तार्धदेहं हरम् " ॥ २ ॥

इति । संन्यासाश्रमानन्तरमपि विद्यासागरनाम्ना तदुल्लेखस्तु लोक आनन्दपूर्णमुनीन्द्रस्य संन्यासाश्रमात् पूर्वमेव सर्वविद्यापारङ्गतत्वेन यथार्थविद्यासागरत्वं प्रकाशयितुम् । श्रीमदानन्दपूर्णमुनीन्द्रस्य सर्वतन्त्रस्वतन्त्रत्वम्, विद्यासागरनाम्नो यथार्थत्वं च तदीयन्यायचन्द्रिकाव्याख्यायां तत्परम्परायामेव संन्यासदीक्षादीक्षितस्य श्रीमदानन्दपूर्णमुनीन्द्रपञ्चमपरम्परागतस्य तत्तुरीयपरम्परागतगोविन्दानन्दसरस्वतीपादान्तेवासिश्री स्व रू पा न न्द स र स्व त्याः कृतावन्ते विशदम् । तदुपबृंहकाश्च श्लोका अत्रैव संस्करणे व्याख्यान्ते सर्वेषां प्रत्यक्षा एव । ते यथा—

" येनाखण्डि सुखण्डनस्य बहुशष्टीकाच्छलेनान्यदृक्
श्रीमद्भारतसागरप्रमथनेनाहारि चार्थामृतम् ॥
येन व्याकरणाटवी स्फुटतरं सम्प्रापिता लीलया ।
विद्याब्धिं प्रणतोऽस्मि पण्डितसभाचूडामणिं श्रेयसे ॥

यद्वक्त्रचन्द्रसम्भूतवाक्पीयूषविशुद्धधीः ।
ब्रह्म संप्रतिपद्ये तं हि विमलारण्यभास्करम् ॥

आऽऽशान्तादुदयाचलात् समुदिता न्यायेन्दुसच्चन्द्रिका
लोकालोककुमुद्वती बुधजनश्रीकैरवप्रेयसी ।
प्रास्तावि प्रसभं मुनीश्वरकृता श्रीशङ्कराद्याश्रिता
तत्त्वार्थप्रतिपादने पटुतरा बुद्धेर्विशुद्ध्यै मया ॥ " इति ।

आनन्दपूर्णयतीन्द्रस्य तत्र तत्र पुस्तकालयेषूपलभ्यमानाः, प्रकाशिताः, अप्रकाशिताः, अनुपलभ्यमाना वा निबन्धा नाम्ना प्रियपाठकानामुपह्रियन्ते —

| | | |
|---|---|---|
| (१) | महाविद्याविडम्बनटीका | (प्रकाशिता) |
| (२) | खण्डनखण्डखाद्यटीका—खण्डनफक्किकाविभजनम् | ( ,, ) |
| (३) | भावशुद्धिः—ब्रह्मसिद्धिव्याख्या | [1](अप्रकाशिता) |
| (४) | पञ्चपादिकाटीका—टीकारत्नम् | ( ,, ) |
| (५) | समन्वयविवृत्तिः—विवरणटीका | ( ,, ) |
| (६) | बृहदारण्यकवार्तिकटीका—न्यायकल्पलतिका | ( ,, ) |
| (७) | काशिकावृत्तिव्याख्या—प्रक्रियामञ्जरी | ( ,, ) |
| (८) | न्यायसारव्याख्या—व्याख्यारत्नम् | ( ,, ) |
| (९) | मोक्षधर्मव्याख्या | ( ,, ) |
| (१०) | न्यायचन्द्रिका | (साम्प्रतं प्रकाश्यमाना) |

तत्र षष्ठी न्यायकल्पलतिका श्रीनन्दिल्लगोपेन तदीयप्रबोधचन्द्रोदयटीकायां (pp. २०४ निर्णयसागर् Edition) "एवमाद्यवशिष्टं बृहदारण्यकभाष्ये मधुकाण्डे विद्यासागरीतो द्रष्टव्यम्" इत्युल्लेखात्— असीत् अस्ति वेत्यनुमीयते महाविद्याविडम्बनभूमिकायाम्। वस्तुतस्तु—सेयं न्यायकल्पलतिकानाम्ना मद्रपुरराजकीयपुस्तकागारे वर्तते—अचिरप्रकाश्यग्रन्थमध्येऽन्यतमतया परिगणिता च ॥

न्यायचन्द्रिकेयं वैशेषिकदर्शनमधिकृत्य प्रवृत्तेति श्रीमङ्गेशमहोदयो महाविद्याविडम्बनभूमिकायां लिखति — "महामहोपाध्यायश्रीकुप्पुस्वामिशास्त्रिपादाः

---

1. इयमचिरेण मद्रपुरराजकीयसंस्कृतपुस्तकभाण्डागारेण चित्सुखीयटीकया सह प्रकाशयिष्यते ॥

साम्प्रतमेकं न्यायचन्द्रिकादर्शपुस्तकं वैशेषिकदर्शनमधिकृत्य प्रवृत्तमलभन्तेति श्रीमङ्गेश-महोदयस्यायं लेखः। परं तु (१९२७A. D.) तमे वत्सरे मद्रपुरराजकीयग्रन्थालयगत-ग्रन्थविवरणसूचिकायां शास्त्रिपादाः — "न्यायमीमांसादर्शननिरसनेनाद्वैतसिद्धान्त-स्थापनपरेयं न्यायचन्द्रिका" इति स्वयं प्रकाशयन्ति *। अतो विश्वस्यते— न्यायचन्द्रिकाग्रन्थप्राप्तिसमनन्तरमेव वैशेषिकसिद्धान्तानुसारेण प्रवृत्तं विस्तृतं पूर्व-पक्षमात्रं विलोक्य कैश्चन शास्त्रिपादानां विश्वासपात्रैः सहकारिभिर्न्यायचन्द्रिकेयं वैशेषिकसिद्धान्तानुसारिणीति सूचितं स्यात्—इति ॥

न्यायचन्द्रिकेयं वैशेषिक-मीमांसासिद्धान्तान् स्वतः प्रामाण्यवादे, शक्तिवादे, वेदापौरुषेयत्वे, अन्विताभिधानवादे, वाक्यानां सिद्धार्थप्रामाण्ये, शब्दवर्णात्मत्वे, अखण्डार्थवादे च पूर्वपक्षरूपेण विस्तरेणोपक्षिप्य प्रत्यंशं तत्तत्पूर्वपक्षनिरसनेनाद्वैत-सिद्धान्ततत्त्वं प्रथमेन परिच्छेदेन विशदयति। अत्रानुसन्धेयो द्वितीयपरिच्छेदोपक्रम-गतपूर्ववृत्तानुवादपरश्लोकोऽयमेव—

"प्रामाण्यस्य स्वतस्त्वं तदनु निजसतीं शक्तिमापाद्य वेदे
कर्तृराहित्यमुक्तं पदनिचयगता शक्तिरन्यानुषक्ते।
शक्तिः कार्यानपेक्षे पदनिकरगता वर्णमालात्मशब्दः
प्रत्यक्षादिश्च शब्दः प्रगलितवितथे वाक्यवृत्तिस्तथोक्ता"

इति ॥

तत्र स्वतः प्रामाण्यवादे प्रायेण पूर्वपक्षानुवादम्, तन्निरसनं चाधिकृत्य न्यायचन्द्रिकेयं चित्सुखीमनुकरोति—

* R. 2931—Nyāya Candrikā by Ānandapūrṇamunīndra alias Vidyāsāgara. A treatus written in support of the view of the *Advaita-Vedānta* that Brahman alone is real and the phenomenal world is unreal. The Nyāya and Mīmāmsā systems of philosophy are criticised herein.

**न्यायचन्द्रिका**

किमिदं प्रमायाः स्वतस्त्वं नाम — किं स्वजन्यत्वम्? प्रमाजन्यत्वं वा? ज्ञान-जन्यत्वं वा? प्रमाकारणजन्यत्वम्? ज्ञान कारणजन्यत्वं वा? प्रमाकारणव्यति-रिक्ताजन्यत्वं वा? ज्ञानकारणातिरिक्ता-जन्यत्वं वा? प्रमाकारणजन्यत्वे सति तद्व्यतिरिक्ताजन्यत्वं वा? नाद्यः; आत्माश्रयप्रसङ्गात्—इत्यादि ॥

**चित्सुखी**

किमिदं प्रमायाः स्वतस्त्वम्—न तावत् स्वत एव जन्या; स्वस्य स्वहेतुकत्वविरो-धात्। नापि प्रमाणादेव जन्या; ज्ञानस्य गुणत्वेन स्वप्रामाण्यं प्रति समवायिकारण-त्वासम्भवात्। नापि ज्ञानसामग्रीतो जन्या; प्रामाण्यस्य जातित्वे, उपाधित्वे च जन्माभा-वात्, अप्रमाया अपि स्वतस्त्वप्रसङ्गात्, तस्या अपि ज्ञानसामग्रीजन्यत्वात्' —इत्यादि ॥

श्रीजयतीर्थपादकृतन्यायसुधाऽपि स्वतः प्रामाण्यवादे पूर्वपक्षप्रकारान् प्रायेणै-तानेवावलम्बते। सिद्धान्तोपपादनप्रकारोऽपि न्यायचन्द्रिका-चित्सुखी-न्यायसुधाना-मेकरूप एवात्र ॥

तत्र ज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतः प्रामाण्यमिति सिद्धान्तेऽनवस्थापरि-हारक्रमो न्यायचन्द्रिकायां चित्सुख्यां च स्वग्राहकपदेन साक्षिणा ग्रहणादनु सन्धीयते। न्यायसुधाकारा अपि "किंचानुमितिप्रामाण्यं येन ज्ञानेन विषयी-क्रियते, तस्यापि प्रामाण्यमन्येनेति कथं नानवस्थेति परतः प्रामाण्यवादमाक्षिप्य लिखन्ति—"ननु स्वतः प्रामाण्येऽपि कथं नानवस्था? इत्थम्:—साक्षी खलु वृत्ति-ज्ञानग्राहकः। स च तत्प्रामाण्यं गृह्णाति— इति तेषां स्वतः प्रामाण्यम्। स च स्वप्रामाण्यमपि गृह्णाति"—इति। अयमपरो विशेषः—"यत् स्वतः प्रामाण्य-वादम्—

"निसर्गसिद्धसामर्थ्यं प्रमाणं स्वार्थसाधनम्।
स्वोत्पत्तौ स्वप्रतीतौ वा नान्यापेक्षमिति स्थितम्॥"

इत्युपसंहरन्ती न्यायचन्द्रिका तदनन्तरप्रकरणं शक्तिविवरणमवतारयति। चित्सुख्यपि—"तस्मादवधीर्यैव गुणगणम्, अनपेक्ष्यैव दोषाभावम्, स्वशक्त्यैव स्वार्थमावेदयन्ति वेदान्ता इति सिद्धम्" इत्युपसंहारेणानन्तरप्रस्तावयोग्यं शक्तिप्रकरणमनुसन्धत्ते। अत्रानुसन्धेयानि चित्सुखी-न्यायचन्द्रिकयोर्वाक्यानीमानि—

| न्यायचन्द्रिका | चित्सुखी |
| --- | --- |
| अथास्तु नाम स्वतस्त्वं प्रमितेः, तथापि न नैसर्गिकं सामर्थ्यं पदार्थान्तरमेव सम्भावनीयम्॥ | ननु स्वरूपसहकारिसमवधानातिरिक्तां शक्तिमेव न जानीमः; तत्र प्रमाणाभावात्—इति॥ |

एवमेवानन्तरेष्वपि प्रकरणेषु पूर्वपूर्वप्रकरणोपसंहार उत्तरोत्तरप्रकरणावतारणमेकरूपेण पश्यामः। तद्यथा—

| | |
| --- | --- |
| न्यायचन्द्रिकायां शक्तिवादोपसहारे "अर्थापत्तिसहायसम्पदधिक-<br>श्रुत्या स्वतः सिद्धया।<br>तर्कप्रोक्तबलानुमानविलस-<br>त्प्रामाण्यसल्लीलया।"<br>इति शक्तिवादमुपसंहृत्य — अथ वेदस्य स्वतः सिद्धत्वम्, अनादित्वम्, बुद्धिपूर्वरचनाराहित्यं वा, इति वेदापौरुषेयत्ववादः प्रस्तूयते॥ | चित्सुखी तु—"यद्यपि शक्तिवादानन्तरमन्विताभिधानवादं प्रस्तौति, न तु वेदापौरुषेयत्वम्, तथाप्यन्विताभिधानवादोपसंहारे—तस्मात् पौरुषेयवाक्येभ्य इवापौरुषेयेभ्यो वेदान्तवाक्येभ्यो लक्षणया यथोक्तलक्षणं ब्रह्म सिद्ध्यतीति सिद्धम्" इति भाविवेदापौरुषेयत्ववादमवतारयति, प्रस्तौति चानन्तरं प्रकरणम्—कथमपौरुषेयत्वं वेदान्तानाम्—इति॥ |

तत्र न्यायचन्द्रिका—

"तदेवं वर्णनित्यत्वसंसिद्धया नित्यसिद्धितः।
दुःसम्पादमिदं भेदपारतन्त्र्यमिति स्थितम्॥"

इति शब्दनित्यत्वं प्रतिपाद्यान्विताभिधानवादप्रकरणं वेदापौरुषेयत्ववादानन्तरमवतारयति । सर्वथा तु क्रमभेदमात्रमुभयोः । तत्र—

न्यायचन्द्रिका

अभिहितान्वयवादं सविस्तरं निरस्य, अन्विताभिधानवादमेव सिद्धान्तयति । अनेन ज्ञायते—चित्सुखाचार्याणांहृदयङ्गतो भावो न्यायचन्द्रिकाकारैर्विशदीक्रियते । जयतीर्थन्यायसुधापि सविस्तरमभिहितान्वयवादनिरसनपूर्वकमन्विताभिधानवादमेव —सिद्धान्तयति । तत्र न्यायसुधा सामान्यतः पदानामन्वयाभिधायकत्वं पदान्तरसंनिकर्षाकाङ्क्षादिवशाद् वाक्यविशेषे संसर्गविशेषबोध इति व्यवस्थापयति । न्यायचन्द्रिकाकारा अपि, विश्वसिमः, अन्विताभिधानवादसिद्धान्ततायामपि तात्पर्यानुसारेण वाक्यानामनुभावकत्वसम्भवात् तात्पर्यानुसारेणाखण्डार्थत्वमन्विताभिधानवादेऽपि निर्वोढुं पार्यत इति—मन्यन्ते ॥

चित्सुखी तु

प्रथमतोऽन्विताभिधानवादमभिहितान्वयवादनिरसनपूर्वकमुपपाद्य अत्राभिहितान्वयवादिनः प्रत्यवतिष्ठन्ते—

" विनाऽभिधेयस्मरणमन्वयानुपपत्तितः ।
तत्तत्पदार्थस्मृतयस्तेषामन्वयबोधिकाः ॥"

इत्यादिनाऽभिहितान्वयवादं प्रत्यवस्थापयन्ती तेनैव वादेन तत्प्रकरणमुपसहरति । तत्र " प्रत्यवतिष्ठन्ते " इत्येवमुपक्रमाद् अभिहितान्वयवादोऽनन्तरनिर्दिष्टोऽपि पाठक्रमादर्थक्रमो बलीयानिति न्यायेन चित्सुखाचार्या अप्यन्विताभिधानवादमेव सिद्धान्तमभिप्रयन्तीति प्रतीयते । "कार्ये बादरिरस्य गत्युपपत्तेः" इत्यादौ ब्रह्ममीमांसायामपि—" परं जैमिनिर्मुख्यत्वात्" इत्यनन्तरनिर्दिष्टोऽपि पक्षः पूर्वपक्ष इति—" कार्यं बादरिरस्य गत्युपपत्तेः" इति पूर्वनिर्दिष्टमपि सिद्धान्त इति च मन्यते । अयमेव न्यायोऽत्राप्यनुसन्धेयः ॥

एवं चित्सुखाचार्याणाम्, आनन्दपूर्णमुनीन्द्राणां चान्विताभिधानवादमात्रपक्षपातेऽपि तत्त्वमस्यादिवाक्यानामखण्डार्थत्वाव्याघात ऐकमत्यं प्रतीयते। न्यायरत्नदीपावल्यामानन्दपूर्णमुनीन्द्रसप्तमपरम्परागतो ब्रह्मानन्दसरस्वत्यप्यन्विताभिधानघटकमन्वितपदं तात्पर्यविषयपरतया व्याख्याय तत्त्वमस्यादिवाक्याखण्डार्थत्वं समर्थयति, इति न्यायचन्द्रिकया चित्सुखीव्यवस्थैवात्र समाद्रियते ॥

विशेषस्तु—प्रतिप्रकरणं सङ्ग्रहरूपेण प्रवृत्तायाश्चित्सुख्याः तद्व्याख्यानमिषेण विस्तृतं विवरणमेव न्यायचन्द्रिकाया लक्ष्यम्। विचार्यमाणानां विषयाणां क्रमविशेषमात्रपरिवर्त्तनमकिञ्चित्करम् ॥

अत्र प्रपञ्चमिथ्यात्वविषये चित्सुखी-न्यायचन्द्रिकयोर्विचारधारा विशिष्टं समालोचनमर्हति। तत्राद्वैतसिद्धौ—

"आद्यं स्यात् पञ्चपाद्युक्तं ततो विवरणोदिते।
चित्सुखीयं चतुर्थं स्यादन्त्यमानन्दबोधजम्"

इति वचनात् चित्सुखाचार्यैः स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वं मिथ्यात्वमभिप्रैतीत्यवगम्यते। परं तु—

"सर्वेषामपि भावानां स्वाश्रयत्वेन सम्मते।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता ॥"

इति चित्सुखीकारिकया प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमिति द्वितीयमिथ्यात्वमेव चित्सुखीयम्, न तु तुरीयं मिथ्यात्वम्। न्यायचन्द्रिका तु—

"मिथ्यात्वं नाम बाध्यत्वं संगिरन्ते विपश्चितः।
बाधाभावोपलक्ष्यं यद् तत् सत्यमिति हि स्थितिः ॥"

इति मिथ्यात्वविषये न चित्सुखीयं पक्षमनुमन्यते—यद्यपि पूर्वपक्षावसरे प्रायशश्चित्सुखीमेवानुवर्तते । तत्र यद्यपि चित्सुखी मिथ्यात्वस्य दशधा विकल्पावसरे पूर्वपक्षे ज्ञाननिवर्त्यत्वम् बाध्यत्वं च पृथग् मिथ्यात्वप्रकारं विकल्प्य निरस्यति, तथा प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं स्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानत्वं च ; तथापि साक्षात् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं प्रथममिथ्यात्वमेव समर्थयति, न तु ज्ञाननिवर्त्यत्वम्, बाध्यत्वं वा ॥

न्यायचन्द्रिका तु—ज्ञाननिवर्त्यत्वम् बाध्यत्वं चैकमेव मन्यते । न च पूर्वपक्षावसरे तदपि विकल्पैकतरकोटौ सङ्गृह्णाति, निरस्यति वा, किं तु सिद्धान्तकाल एव बाध्यत्वमिथ्यात्वपक्षमुपन्यस्यति । दृश्यत्वरूपहेतुनिरुक्तावपि चित्सुखी-न्यायचन्द्रिकयोः प्रकारभेदोऽत्रानुसन्धानमर्हति—

| न्यायचन्द्रिका | चित्सुखी |
|---|---|
| ननु दृश्यत्वं नाम फलव्याप्यत्वम्, वृत्तिव्याप्यत्वं वा, साधारणं वा ? नाद्यः ; अतीन्द्रियेषु तदभावेन भागासिद्धत्वात् । न द्वितीयः ; ब्रह्मणोऽपि वेदान्तिभिर्वृत्तिव्याप्यत्वाभ्युपगमादनैकान्तिकत्वात् । न तृतीयः ; ब्रह्मण्यनैकान्तिकत्वादेव । | दृश्यत्वं नाम फलव्याप्यत्वं वा, वृत्तिव्याप्यत्वं वा, साधारणं वा ? नाद्यः ; अतीन्द्रियेषु भागासिद्धेः । न द्वितीयः ; ब्रह्मणोऽपि वेदान्तिभिर्वृत्तिव्याप्यत्वाभ्युपगमादनैकान्तिकत्वात् । न तृतीयः ; ब्रह्मण्यनैकान्तिकत्वादेव ॥ |

अत्र दृश्यत्वहेतुदूषणानुवाद उभयत्र समानः । तत्समर्थनं तु न चित्सुख्यामुपलभ्यते । तत्रानुमानप्रयोगस्तु—

“ अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः ।
अंशित्वादितरांशीव दिगेवैषा गुणादिषु ॥ ”

इति कारिकाव्याख्यानमिषेण—विमतः पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, अवयवित्वात् ; पटान्तरवत्, इत्यवयवित्वहेतुक एव प्रयुज्यते, न तु दृश्यत्वहेतुकः ।

तद्दूषणपरिहारेण दृश्यत्वहेतुसमर्थनमद्वैतसिद्ध्यादौ फलव्याप्यत्वातिरिक्तसर्वपक्ष-स्वीकरणेन समर्थ्यते ॥

न्यायामृतं तु चित्सुख्या दृश्यत्वनिरुक्तिसमर्थने समादरमदृष्ट्वाऽवसरमुपलभ्य दृश्यत्वनिरुक्तिं विस्तरेण दूषयति । तत्र न्यायामृतकारैर्दृश्यत्वं कदाचित् कथञ्चिद् दृग्विषयत्वं वेति तुरीयं कल्पमुपस्थाप्य तस्यापि निरसनार्थं दृग्पदस्य स्वाकारवृत्ति-फलितज्ञानपरत्वं गृहीत्वा वृत्तिव्याप्यत्वपक्षाद विशेषं दृग्विषयत्वस्य प्रतिपाद्यते ॥

न्यायचन्द्रिका तु—पूर्वोक्तकल्पत्रयनिरसनं पूर्वपक्षिणां न केवलं दूषयति, किं त्वप्रकम्प्यं दृश्यत्वनिरुक्तिप्रकारमपि विवेचयति । तत्रेयं न्यायचन्द्रिका दृश्यत्वं फलव्याप्यत्वं वृत्तिव्याप्यत्वं साधारणं वेति कल्पत्रयायोगपूर्वपक्षानन्तरं प्रवृत्ता—

"अयुक्तमेतत्; वृत्तिज्ञानमनभ्युपगच्छतामित्थं विकल्पानुत्थानात्, तद-भ्युपगमे तेषामपसिद्धान्तनिग्रहात् । शिष्यश्चोदयतीति चेत्, स इत्थं शिक्षणीयः—दृश्यत्वपदार्थ एव त्वया नावगतः । दृश्यत्वं हि दृगवच्छिन्नत्वम् । दृक्=आत्मा । सर्वं वस्त्वज्ञाततया ज्ञाततया वा साक्षिवेद्यम् । अतो न दृश्यत्वस्यानात्मनि क्वचिद-प्यसिद्धिः आत्मनश्च स्वसंवेदनतायाः प्रतिपादनीयत्वाद् नानैकान्तिकतापि—इति । अत्र दृगवच्छिन्नत्वमित्यनेन बहुव्रीहिसमासेन दृगवच्छेदकत्वम्, दृक्तादात्म्यं वा दृश्यत्वमदुष्टो हेतुरिति न्यायचन्द्रिका रूयापयति । अद्वैतसिद्धिः, लघुचन्द्रिका च दृश्यत्वमेवंरूपमेव निर्वक्ति । विश्वसिमः—न्यायामृतं न्यायचन्द्रिकोक्तदृश्यत्व-परिष्करणमन्यथय्य दूषयति ॥

सर्वथा तु चित्सुखाचार्याणामपि न्यायचन्द्रिकानिरुक्तं दृश्यत्वमभिमतमेव । अत एव "दृग्दृश्ययोः सम्बन्धानुपपत्तिश्च सत्यत्वानुमानस्य बाधिका" इति प्रक्रम्य —तदेवं विषयविषयिभावानिरूपणाद् आत्मन्यनध्यस्ततया चासिद्धे प्रपञ्चस्य सत्यत्वे दृश्यत्वानुपपत्तिर्बाधिकेति न्यायचन्द्रिकानिरुक्तं दृश्यत्वमर्थापत्त्युपयोगितया चित्सुखी निर्दिशति । अनेन ज्ञायते—दृश्यत्वानुमानं व्यतिरेकानुमानविधया प्रमाणम् ।

तत्र चार्थापत्तिप्रमाणान्तरत्वे व्यतिरेक्यनुमानस्याप्रमाणत्वात् प्रपञ्चमिथ्यात्वानुमाने दृश्यत्वनिर्विचनमनवसरं मत्वा चित्सुखाचार्यस्तत्रोदास्तेति जानीमः। न्यायसुधादिष्वपि दृश्यत्वहेतुकानुमानमत एव न दूषितम् ॥

सदसद्विलक्षणत्वरूपं मिथ्यात्वं चित्सुख्यां मिथ्यात्वविकल्पेषु पञ्चमकल्पतयोपक्षिप्तं न सिद्धान्ते समर्थितम्। स हि पञ्चपादिकाभिमतः कल्प इति "आद्यं स्यात् पञ्चपाद्युक्तम्" इत्यनेनावगम्यते। तस्य कल्पस्य निरसनम्, समर्थनं च जयतीर्थीयन्यायसुधान्यायचन्द्रिकयोर्दरीदृश्यते—

न्यायचन्द्रिका

आह—केयमनिर्वचनीयता नाम, किं वक्तुमशक्यता? सदसद्रूपाभ्यां निर्वक्तुमशक्यता वा? सत्त्वेनासत्त्वेन सदसत्त्वेन च निश्चित्य वक्तुमशक्यता वा? सदसदन्यता वेत्यादिरूपेण षोढा विकल्पानन्तरम्—नापि तुरीयः; सदसदन्यता यदि भावाभावान्यत्वम्, तदाऽतिव्याप्तिः। सत्यरूप्यस्य घटादिभावप्रध्वंसाभावाद्यन्यत्वाभ्युपगमात्। यदि सकलभावान्यत्वं विवक्षितम्, तदाऽसम्भवः; सकलभावाभावाप्रसिद्धौ तदन्यत्वस्यासम्भवात्। अथ सदसदन्यता सत्ताश्रयानाश्रयादन्यता, तथापि पूर्ववदतिव्याप्तिरिति पूर्वपक्षमुपक्षिप्य तन्निरासार्थं प्रवृत्ता—नापि सदसदन्यता किं भावाभावान्यता इत्यादि विकल्पावकाशः। षडेव भावाः, चतु-

न्यायसुधा

किमत्र सदसच्छब्दौ भावाभाववादिनौ? किं वा विद्यमानाविद्यमानवाचिनौ? आद्ये दूषणम्—सतो भावात्मकस्य विश्वस्यासतोऽभावात् वैलक्षण्यमपि भावाभाववादिनो मम मते स्वयं सदस्त्येव। एवमसतोऽभावात्मकस्य सतो वैलक्षण्यमपि भेदवादिनः स्वयं सदेव। अतस्तेन साधितेन ममानिष्टं कथं भवेत्? भावाभाववैलक्षण्यं नाम सत्त्वासत्त्वानधिकरणत्वं विवक्षितमिति चेत्; तथापि सतो भावस्यापि विश्वस्यासतोऽभावाद्वैलक्षण्यमभावत्वानधिकरणत्वमपि स्वयं सदेव। असतोऽभावस्य विश्वस्य सतो भावाद्वैलक्षण्यं भावत्वानधिकरणत्वमपि मम स्वयं सदेव; भाषाभावभेदवादित्वात्—इति ॥

विधा एवाभावाः, इति भवता ये व्यवस्थाप्यन्ते, तद्वैलक्षण्यस्य लक्षणत्वात् । न च सकलभावान्यत्वमभावलक्षणम्; अस्याभावत्वे स्वात्मनि वृत्तौ विरोधात्, अवृत्तावव्याप्तेः; भावत्वे "परस्परविरोधे हि प्रकारान्तरस्थितिः" इति नियमविरोधः । एवं सकलभावान्यत्वमपि भावलक्षणं विकल्प्य निरसनीयम् ॥

न च — भावत्वाभावत्वात्यन्ताभाववत्त्वासम्भवः; सत्त्वासत्त्वात्यन्ताभावयोः परस्परविरहनियमादिति—वाच्यम्, सत्त्वे तावद् न सत्त्वम्; स्ववृत्तिविरोधात्, न चासत्त्वम्; सर्वशून्यतापातात् । एवमसत्त्वे नासत्त्वम्; स्वस्मिन् स्ववृत्तिविरोधात्, न सत्त्वम्; विरोधादेव, इति सदसतोरेकतरनिषेधस्येतरविधित्वनियमासिद्धिः—इति ॥

अत्र न्यायसुधोपक्षिप्तसत्त्वासत्त्वपरस्परविरहरूपत्वमादाय सदसद्वैलक्षण्यनिरसनं न्यायचन्द्रिकया यथा समाधीयते, न तथाऽन्यत्र ॥

अद्वैतसिद्धिस्तु — यथाश्रुतं सत्त्वासत्त्वपरस्परविरहरूपत्वमव्याहतं मत्वा सत्त्वासत्त्वयो रूपान्तरमभिप्रैति — क्वचिदप्युपाधौ प्रतीत्यनर्हत्वमसत्त्वम्, अबाध्यत्वं सत्त्वमित्यादिरूपेण । अतो ज्ञायते—मधुसूदनसरस्वत्या न न्यायचन्द्रिकेयं दृष्टिपथमगादिति । यद्यपि—"एवं च विमतम्, ज्ञानव्यतिरेकेणासत्, ज्ञानव्यतिरेकेणानुपलभ्यमानत्वात्, स्वप्नादिवदिति विद्यासागरोक्तमपि साधु" इत्यद्वैतसिद्धौ

(३२५ तमे पृष्ठे निर्णयसागरमुद्रणालये मुद्रापितायाम्) विद्यासागरीयं वाक्यं मधुसूदनसरस्वती परामृशति; तथापि नेदं वाक्यं न्यायचन्द्रिकायां विद्यासागरकृतौ दृश्यते। सर्वथा तु न्यायचन्द्रिकेयमादितो वेदान्तपरिभाषाकारान्, श्रीमदप्पय्यदीक्षितेन्द्रान् वाऽन्तरेण केषामपि न दृष्टिगोचराऽभवत्। तत्र श्रीमदप्पय्यदीक्षितेन्द्रा धारावाहिकप्रमायां द्वितीयादिज्ञानस्य कालविषयकत्वेनानधिगतविषयकत्वं न्यायचन्द्रिकादृष्ट्या सिद्धान्तलेशसङ्ग्रहे सङ्गृह्णाति॥

तत्रेयं न्यायचन्द्रिका—अनधिगतार्थत्वस्य प्रमात्वप्रयोजकत्वे विपर्ययेऽपि तत् स्यादिति यदतिव्याप्तिचोदनम्, तद् लक्षणाज्ञानविलसितम्; अर्थशब्दस्यानाभासवचनत्वात्, विपर्ययस्यार्थाभासविषयत्वात्। यदपि धारावाहकबुद्धावव्यापकत्वमुक्तम्, तदसत्; यतस्तत्रोत्तरकालकलोपलक्षितरूपमनवगतमेव गम्यते। उपलक्षणग्रहणमन्तरेणोपलक्ष्यग्रहणं न विरुध्यते। अन्यथा तवापि 'अयं घटो वर्तते' इति धीर्न स्यात्—इति॥

अस्मिन् प्रसङ्गे न्यायचन्द्रिका न्यायमञ्जरीकाराणां बहुविधानाक्षेपान् प्रतिक्षिपतीत्यन्यदेतत्। महाचार्योऽपि श्रीमदप्पय्यदीक्षितसमकालिको धारावाहिकज्ञाने कालकलाप्रत्यक्षत्ववादं तदीये निबन्धे निरस्यति। यद्यपि महाचार्यः श्रीमदप्पय्यदीक्षितेन्द्रापेक्षया वयसाऽतीव न्यूनः, यतः श्रीदीक्षितेन्द्राणां न्यायरक्षामणिं यथावदनूद्य तदीये पाराशर्यविजये दूषयति। श्रीमदप्पय्यदीक्षितेन्द्रसमयस्तु 'अडयप्पलशासनानुसारेण (१५२०–१५९२ A.D.) समय इति ज्ञायते। अतः श्रीन्यायचन्द्रिकाकारोऽन्ततो दीक्षितेन्द्रापेक्षया प्राचीनः। श्रीमधुसूदनसरस्वत्यपि पूर्वोक्तरीत्या विद्यासागरीयमनुमानं परामृशति। सोऽपि श्रीदीक्षितेन्द्रसमकालिकोऽपि ततो न्यून एव वयसा महाचार्य इव। अतो मङ्गेशरामकृष्णमहोदयो महाविद्याविडम्बने मधुसूदनसरस्वत्यपेक्षया प्राचीनत्वमेव न्यायचन्द्रिकाकारस्य वदति। वयं तु पश्यामः—दीक्षितेन्द्रापेक्षयापि न्यायचन्द्रिकाकारस्य प्राचीनत्वमनुसन्धेयमिति॥

श्रीदीक्षितेन्द्रापेक्षयापि प्राचीनः श्रीनन्दिल्लगोपः (१५२० A.D.) तदीयप्रबोधचन्द्रोदयव्याख्यायां न्यायचन्द्रिकाकारीयां बृहदारण्यकवार्तिकटीकां निर्दिशति। ततो ज्ञायते — (१५२० A. D.) वत्सरेभ्यः पूर्वं न्यायचन्द्रिकाकारस्य समयः—इति ॥

वाराणसीराजकीयपुस्तकालये न्यायचन्द्रिकाकारस्य समन्वयसूत्रविवृतिप्रतिलिपिकरणेन रक्षितादर्शे तदीयप्रतिलिपीकरणदिनं (१४०५ A. D.) इति ज्ञायते। (See F. E. Hall's Bibliography p. 96 and 204)। अतः श्रीमदानन्दपूर्णमुनीन्द्रः (1232–१४०० A. D.) समये कदाचनातः पूर्वमासीदिति श्रीमङ्गेशमहोदयो महाविद्याविडम्बने लिखति ॥

तत्र पूर्वोक्तरीत्या चित्सुखाचार्यं प्रायेण न्यायचन्द्रिकाकारः—तत्तद्विषयोपस्थापनावसरेऽनुकरोति— तदनुक्तानामपि विषयाणां तत्र तत्र स्फुटीकरणेन। तेन च तदनन्तरो न्यायचन्द्रिकाकारः। चित्सुखाचार्यसमयस्तु (१२०० A. D.)। तद्व्याख्याता प्रत्यक्स्वरूपभगवान् न्यायरत्नदीपावल्यादीन् सङ्गृह्णानोऽपि न्यायचन्द्रिकां न परामृशति। तत्समयस्तु पञ्चदशशतकपर्यन्तवर्तिनां केषाञ्चिदपि ग्रन्थकाराणां नामानिर्देशात्— विश्वस्यते चतुर्दशं शतकमेव (१३१४ A. D.)। सति चैवं श्रीमङ्गेशमहोदयनिर्धारितं समय (१२५२–१४०० A. D.) मेव न्यायचन्द्रिकाकारोऽलमकरोत् ॥

तत्र चित्सुखी—एतेन ज्ञानकर्मणोः समुच्चयोऽपि निराकृतो वेदितव्यः; विरोधादेव, इति विरोधेन ज्ञान-कर्मसमुच्चयवादं निराकरोति। तत्र समुच्चयोऽयं समप्राधान्येन वा षड्यागवत्, गुण-प्राधान्येन वा प्रयाजदर्शपूर्णमासवदिति विकल्प्य, तत्र ज्ञान-कर्मणोः साध्यसाधनभावावगमाद् न समप्रधानभावेन समुच्चयपक्ष इति नयनप्रसादिनी व्याचष्टे। तत्र ज्ञान-कर्मसमुच्चयवादोऽयं कस्य? कथं वा तत्र विरोध इत्येवमादि न्यायचन्द्रिकैव निश्चिनोति ॥

तत्र भगवत्पादैर्गीताभाष्ये ज्ञान-कर्मसमुच्चयवादो यो निरस्तः, स भास्कराचार्यस्येति भास्कराचार्यस्य गीताभाष्यानुसारेण न्यायचन्द्रिका विशदयति। भगवद्गीताया ज्ञान-कर्मसमुच्चवादसम्बन्धिपूर्वपक्षांशाः सर्वेऽपि भगवत्पादानूदितविधया भास्करीयगीताभाष्यसमालोचनपूर्वकं न्यायचन्द्रिकया तृतीयपरिच्छेदे सम्यगेव विविच्यन्ते, निरस्यन्ते च भगवत्पादावलम्बितेन पथा ॥

अनेन ज्ञायते—तत्र तत्र भगवत्पादभाष्ये निरस्तो भेदाभेदवादः, भामत्यादिषु भास्करीयत्वेन सङ्गृहीतो भगवत्पादभाष्यात् पूर्वमासीत्—इति। अधिकं तु भूमिकाया द्वितीयभागेऽन्ते द्रष्टव्यम्। इदं तु निरपह्नवं तत्त्वम्—यद् ज्ञान-कर्मसमुच्चयपक्षस्य यथावत् परिज्ञानं न न्यायचन्द्रिकामन्तरेण केनापि निबन्धेन भवतीति। अतो विश्वस्यते—चित्सुखाचार्येण सूत्ररूपेणोपन्यस्तस्य विषयस्य विस्तृतं विवरणमेव न्यायचन्द्रिकाया लक्ष्यम्—इति ॥

चतुर्थपरिच्छेदे—विषयाकारोपप्लुतविज्ञानसन्तानोपरमो मोक्ष इति विज्ञानवादिनां मोक्षनिरसनेन मोक्षस्वरूपं चित्सुखाचार्योऽवतारयति—"कः पुनरयं मोक्ष" इत्यादिना। न्यायचन्द्रिका तु—"अथ भोः क एष मोक्षो नाम? शरीरमोक्ष एव मोक्ष इति बार्हस्पत्याः; अलोकाकाशे सततोर्ध्वगमनमित्यार्हताः; संसारिसन्तानोपरमः, चरमविशुद्धज्ञानोदयोवेति सौगताः" इत्यादिना चार्वाकार्हत-सौगत-माध्यमिक-वैशेषिक-नैयायिक - प्राभाकर-कपिल - सम्मततत्तन्मोक्षस्वरूपविवेचनपूर्वकम् "अविद्यास्तमयो मोक्ष इति प्रामाण्यगामिनः।" इत्यद्वैताभिमतं मोक्षस्वरूपं न्यायचन्द्रिका सङ्गृह्णाति। तत्र चार्वाकादिसर्वदर्शनसम्मतमोक्षस्वरूपपरिज्ञानम्, तन्निरसनप्रकारश्च सुललितं न विना न्यायचन्द्रिकामन्येन ज्ञातुं सुशकः ॥

ज्ञान-कर्मसमुच्चयविषये भगवत्पादानां भाष्यमेव यथाभास्करसिद्धान्तं न्यायचन्द्रिका यथावदनुकरोति—

न्यायचन्द्रिका—

ननु ज्ञान-कर्मसमुच्चये भगवद्वचनमत्र प्रमाणम्—"नियतं कुरु कर्म त्वम्" "कर्मण्येवाधिकारस्ते" "मामनुस्मर युध्य च" इति। तत्र तत्र श्रुतमग्निहोत्रादि-स्मार्तं सन्ध्याराधन-युद्धादि—यस्याश्रमिणो यथा यथा विहितं कर्म, तत् तस्य ज्ञानेन समुच्चीयते। स्मार्तमपि श्रौतमेव; श्रुतिमूलत्वात्। पुरुषस्मरणसम्बन्धात् स्मार्तमिति गीयते, इति भास्करानुसारि-ज्ञान—कर्मसमुच्चयपक्षोपपादनम्। "अत्र विद्याकर्मसमुच्चयो निःश्रेयसकर इति भास्करीयाः," इति निर्देशाद् न केवलं भास्कराचार्यः, किं तु तत्सम्प्रदायप्रवर्तक उपवर्षाचार्योऽपि विवक्ष्यते। सति चैवं भगवत्पादभाष्यगतकेचित्पदेन वृत्तिकारोऽपि विवक्ष्यत इत्यानन्दगिरिव्याख्या न विरुध्यते॥

भगवत्पादानां गीताभाष्यम्—

अत्र केचिदाहुः — अग्निहोत्रादि-श्रौत-स्मार्तसहिताद् ज्ञानात् कैवल्य-प्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थः। ज्ञापकं चाहुरस्यार्थस्य—"अथ चेत् त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि" "कमण्येवाधिकारस्ते" "कुरु कर्मैव तस्मात्त्वम्" इत्यादि ज्ञान-कर्मसमुच्चय-स्योपपादनम्। ज्ञान-कर्मसमुच्चयपक्षो भास्करानुयायिनामिति न्यायचन्द्रिकायाम्, "विद्या-कर्मसमुच्चयो निःश्रेयसकरः" इति भास्करीयाः। यदाह "गीताभाष्ये भास्करः" इति न्यायचन्द्रिकावचनेनावगम्यते। अतो भाष्ये केचित्पदेन भास्कराचार्योऽपि विवक्ष्यते॥

उपवर्षाचार्यो भास्करसम्प्रदायप्रवर्तक इति ब्रह्ममीमांसाभास्करभाष्ये, "गकारैकारविसर्जनीया वर्णाः इति शास्त्रसम्प्रदायप्रवर्तकोपवर्षाचार्यः" इति वचनेनावगम्यते। सति चैवं निगमान्तदेशिकतत्त्वटीकानुसारेण यद्युपवर्षाचार्य एव बोधायनः,—महामहोपाध्यायपूज्यश्रीकुप्पुस्वामिशास्त्रिणामाशयेनापि, तर्हि भगवद्रामानुजभाष्यसम्प्रदायप्रवर्तको नायं भवितुमर्हति; ज्ञान-कर्मसमुच्चय-ब्रह्ममात्रपरिणामित्व-जीवात्मव्यापकत्वादीनां भगवद्रामानुजसिद्धान्तविरुद्धानां बहूनां भगवदुपवर्षाचार्यभास्करादिसिद्धान्तविरुद्धत्वात्॥

ज्ञान-कर्मसमुच्चयपक्षनिरासावसरगतानि वाक्यान्यपि न्यायचन्द्रिकाभगवत्पादभाष्ययोरेकरूपाणि दृश्यन्ते । तानि यथा—

**न्यायचन्द्रिका**

ज्ञानकर्मनिष्ठयोर्विभागवचनेन भिन्नविषयकत्वावगमात्—

"एषा तेऽभिहिता साङ्ख्ये
बुद्धिर्योगे त्विमां शृणु ।"
"ज्ञानयोगेन साङ्ख्यानां
कर्मयोगेन योगिनाम् ॥"

इति । "ज्यायसी चेत्" इत्यादिना चार्जुनस्य प्रश्नानुपपत्तिः—यदि पुनरेकपुरुषविषयता ज्ञान-कर्मणोः, सन्देहाभावात् प्रश्नोऽनुपपन्नः, भिन्नपुरुषविषयत्वे तु ज्ञान-कर्मणोः प्रश्न उपपद्यते ॥

"ज्यायसी चेत्" इति च विवेकानवधारणादुपपद्यतेऽर्जुनस्य प्रश्नः । कथमनवधारणम् ? यदि — "धर्म्याद्धि युद्धात् श्रेयोऽन्यत् क्षत्रियस्य न विद्यते ।" इति क्वचित् कर्मप्राधान्याभिधानात्, "एषा ब्राह्मी स्थितिः पार्थ" इति च ज्ञानप्राधान्योपसंहारात्, तत्र चाविवेकनिराकरणायोत्तरमुपपद्येत—पुरस्तात् द्वितीयाध्याये मया समुच्चय एवोक्तः, प्रकारमात्रं तु भिद्यते—क्वचिद् ज्ञानप्राधान्यम्, क्वचित् कर्मप्राधान्यमिति ॥

**भगवत्पादगीताभाष्यम्**

तथा च भगवता विभक्ते द्वे बुद्धी निर्दिष्टे—

"एषा तेऽभिहिता साङ्ख्ये
बुद्धिर्योगे त्विमां शृणु ।"
"ज्ञानयोगेन साङ्ख्यानां
कर्मयोगेन योगिनाम् ।"

इति । एवं साङ्ख्यबुद्धिं योगबुद्धिं चाश्रित्य द्वे निष्ठे विभक्ते । ज्ञान-कर्मणोर्युगपदेकपुरुषाश्रयत्वासम्भवं पश्यतो न चार्जुनस्य प्रश्न उपपन्नो भवति— "ज्यायसी चेत् कर्मणस्ते" इत्यादिः ॥

एकपुरुषानुष्ठेयत्वासम्भवं बुद्धि-कर्मणोर्भगवता यदि पूर्वमनुक्तम् । कथमर्जुनोऽश्रुतं बुद्धेश्च कर्मणो ज्यायस्त्वं भगवत्यारोपयेत् —मृषैव "ज्यायसी चेत् कर्मणस्ते बुद्धिः" इति ॥

अथार्जुनस्य भगवदुक्तवचनार्थविवेकानवधारणनिमित्तः प्रश्नः कल्प्येत, तथापि भगवता प्रश्नानुरूपं प्रतिवचनं देयम्—मया बुद्धि-कर्मणोः समुच्चय उक्तः, किमर्थमित्थं त्वं भ्रान्तोऽसीति ।

अत्र श्रीमङ्गेशमहोदयः—“अथ यदनन्तरं विजातीयप्रमित्सा, तद्भावस्तथात्वम्, तन्न; तत्साजात्यानवगतौ तद्विजातीयत्वानवगतेः, अरिसंसद्यनुमानादिविषयायां प्रत्यक्षयितुमनिष्टेश्च” इति (खण्डन ५८६ चौखाम्बा) खण्डनवाक्ये शङ्करमिश्रेण (१५२९ A.D.) कालिकेन—“अनुमानविषये इत्येव पाठो योग्य इति विवरणं क्रियते। आनन्दपूर्णस्तु—अनुमानविषयायामित्यपि साधु समर्थयति। अतो ज्ञायते—शङ्करमिश्रानन्तर एवानन्दपूर्णमुनीन्द्रसमय इति—अभिप्रैति। परं तु—आनन्दपूर्णमुनीन्द्रविवरणं शङ्करमिश्रविवरणस्यैव निराकरणमित्यत्र न किमपि प्रमाणम्, यत आनन्दपूर्णमुनीन्द्रस्य काले तद्विषये पण्डितगोष्ठ्यां काञ्चन चर्चां तादृशीं मनसि निधायापि तत्पाठनसमर्थनं सम्भाव्यते। सर्वथा तु पूर्वोक्तैः कारणकलापैरानन्दपूर्णसमयः त्रयोदशशतकान्त एव। तत्त्वातत्त्वनिर्णये तु चरितविमर्शकप्रवराः प्रमाणम्॥

अस्मिन् प्रसङ्गेऽभिनवद्रविडाचार्यबालकृष्णानन्दसरस्वतीनां सुरेश्वराचार्यप्रवर्तितानन्दसरस्वतीसम्प्रदायानुसारिणां शारीरकमीमांसाभाष्यगतौपक्रमिकाः श्लोकाः सव्याख्या गौडपादाचार्यादि-वटुवरमहादेवान्तानां तत्तद्गुरुशिष्यपरम्पराणां क्रमम्, तत्तत्संन्यासविद्यागुरूणां नाम च प्रकाशयन्तोऽत्रानुसन्धानमर्हन्ति, येन—

“नारायणं पद्मभुवं वसिष्ठम्
शक्तिं च तत्पुत्रपराशरं च।
व्यासं शुकं गौडपदं महान्तम्
गोविन्दयोगीन्द्रमथास्य शिष्यम्॥

श्रीशङ्कराचार्यमथास्य पद्म-
पादं च हस्तामलकं च शिष्यम्।
तं तोटकं वार्तिककारमन्या-
नस्मद्गुरून् सन्ततमानतोऽस्मि॥”

इति साम्प्रदायिकः श्लोकोऽपि प्रायेणानुसन्धेय आनन्दपूर्णमुनीन्द्रपरम्परागतानाम्। ते तथा—

समन्तात् संवीतं सकलमुनिवृन्दैरपि सदा
समस्ताम्नायार्थप्रवचनसमुन्निद्रहृदयम् ।
सचिन्मुद्रं व्यासं सजलजलदश्यामलतनुं
समासीनं वीरासनकलनया नौमि सततम् ॥

अथ वेदान्तशास्त्रसूत्रप्रवर्तकं व्यासं नमस्यति—समन्तादिति ॥ परितः सर्वर्षिभिर्वेष्टितम्, सकलवेदार्थकथनजागरूकमनसम्, ज्ञानमुद्रासहितम्, मेघश्यामलम्, वीरासने समुपविष्टं व्यासं सदा नौमि—इति ॥

परिव्राजामाद्याः परमगुरवः शङ्करयतेः
प्रणेतारः प्रौढं गहनतरमाण्डूक्यविवृतेः ।
परानन्दाभोगे पटुतरहृदो गौडचरणाः
पुरस्ताद् नः स्फूर्तिं विदधतु चिदानन्दमधुराम् ॥

अथ श्रीशङ्कराचार्यपरमगुरून् ब्रह्मविद्याप्रवर्तकाननुसन्धत्ते—परिव्राजामिति । परिव्राजामाद्याः—

"नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं यतीन्द्रं गोविन्दयोगीन्द्रमपि स्मरामि ॥[1]"

इति सम्प्रदायवित्कारिकारीत्या ब्रह्मविद्यायां श्रीशुकशिष्याः परिव्राजामाद्या एतद्युगे प्रथमयतयः शङ्कराचार्यपरमगुरवः गहनतरमाण्डूक्यविवृतेः अतिगहनाया माण्डूक्योपनिषद् विवृतेः—श्रुतिविवरण-वैतथ्य-प्रकरणाद्वैतप्रकरणालातशान्तिप्रकरणचतुष्टयरूपायाः—प्रौढं यथा भवति, तथा कर्तारः परानन्दाभोगे पटुतरहृदः परानन्दानुभवे समर्थमनसः गौडचरणाः कुरुक्षेत्रदेशगतहिरावती नदीतीरभवगौडजातिश्रेष्ठाः, देशविशेषभवजातिनाम्नैव प्रसिद्धाः, द्वापरयुगमारभ्यैव समाधिनिष्ठत्वेनाधुनिकैर्जनैरपरिज्ञातविशेषाभिधानाः, सामान्यनाम्नैव लोकविख्याताः,

चिदानन्दमधुराम् अखण्डसच्चिदानन्दरूपाम् स्फूर्तिम् प्रतिभाम् विदधतु कुर्वन्तु—इत्यन्वयः ॥

समाधावम्भोधौ सकलकलिकः शारदविधुः
समाधानादीनां निरवधिमणीनां वरनिधिः ।
यतीनां गो वि न्दो हृदयजलजानां दिनमणि-
श्चिरं चेतोऽम्भोजे सुभगचरितो मे विजयताम् ॥

अथ भाष्यकर्तुर्गुरुं सम्प्रदायशुद्ध्यै परिचिन्तयति—समाधाविति ॥ समाधिसमुद्रे सकलकलः शारदचन्द्रः समाधानशमादिगुणमणीनां निरवधि-खनिः, यतिहृदयकमलरविः, शोभनचरितः श्री गो वि न्द भ ग व त्पा दा-चा र्यो हृदयजलजे विजयताम्—इत्यर्थः ॥

त्रिवर्गेणाक्रान्ते जननमरणादिव्रणभुवा
जनेऽस्मिन् सर्वस्मिंस्तिमिरपरिणाहैकशरणे ।
निषेक्तुं निध्यातोऽमृतमगपतिः श ङ्क र इति
स्वनाम व्याख्यातुं जयति कुहनाभिक्षुरनिशम् ॥

अथ व्या स सू त्र भाष्यकर्तारं भगवत्पादमनुसन्धत्ते—त्रिवर्गेणेति ॥ जन्ममरणादिदुःखस्फोटखनिभूतेन धर्मार्थकामलक्षणत्रिवर्गेण समावृते, तिमिरपरिणाहैकशरणे अविद्यासमृद्धिस्थानभूते, परिदृश्यमानजने अमृतम् मुक्तिसुधां निषेक्तुं समर्थः, श्रीगिरीशः श ङ्क र इति स्वनाम व्याख्यातुम् प्रकाशयितुम्—सुखकरो लोकानामिति प्रकटयितुं व्याजयतिः सन् सततं जयति—इत्यर्थः ॥

पुराणं पुण्यानामवधिरवसन्नं समरसं
दुरूहे पाथोधावपनयमहानक्रगहने ।

मनोमन्थानेन प्रतिनयसमावृत्ततनुना
जगत्यामद्वैतं जयति भगवत्पादनिचितम् ॥

अथ भगवत्पादप्रकाशितमखण्डं पुरुषार्थमनुस्मरति—पुराणमिति ॥ चिरन्तनम्, पुण्यानामवधिः निरतिशयानन्दत्वेन; सर्वानन्दानामत्रान्तर्भावात् सकलपुण्यप्राप्यसुखसीमा, यद्वा सकलपुण्यनिर्मलजनप्राप्यत्वाद् ="तमेतम्"[1] इत्यादिश्रुतेः पुण्यावधिः, असन्नचायनकत्वादनाक्रमणीये दुस्तर्कसमुद्रे समरसं सैन्धवखण्डवत्, अवसन्नम् लीनम् मनोमन्थानेन प्रतिनयसमावृत्ततनुना सिद्धान्तन्यायरज्जुपरिवृत्तशरीरमनोरूपमन्थनदण्डेन, भगवत्पादनिचितम् श्री श ङ्क र यतीन्द्रसङ्गृहीतम्, अद्वैतम् अखण्डचित्स्वरूपम्—जगत्यां जयति—इत्यन्वयः ॥

स्फुटाटोपं टीका व्यरचि गुरुवाचां न र ह रेः
कृपापात्रीभूतैर्विशदवचसाऽऽपञ्चचरणम् । *
नयैः सद्भिर्यैस्ते क म ल च र णा चा र्य मणयो
नयन्त्वेनोहानिं विनयमपि चेतो मम सदा ॥

अथ श्री श ङ्क र भ ग व त्पा द शिष्यं सर्वश्रेष्ठं प द्म पा दा चा र्य म् औत्तरद्रविडाचार्य प्रार्थयते—स्फुटेति ॥ न र ह रेः कृपापात्रीभूतैः प द्म पा दाचा र्यैः गुरुवाचाम् गुरोः श्री श ङ्क रा चा र्य स्य वाचाम्—शा री र क भा ष्यगिराम् आपञ्चचरणम् पञ्चचरणपर्यन्तम् टीका टीकेति प्रसिद्धा विवृतिः स्फुटाटोपं यथा भवति तथा=सु रे शा चा र्ये ण कनिष्ठेन मुख्यशा री र क भा ष्य टीका मयि व्याख्यातरि जागरूके सति कथं विधेया, मयैव विधेया टीका, इत्याक्षेपेऽप्याचार्याणामभ्यनुज्ञामाटोपसहितम्, परनिराकरणायाटोपापेक्षणात्, प्राप्य सद्भिर्नयैर्व्यरचि विरचिताऽभूत् ।

---

* पञ्चपादिकाशब्दार्थः नान्यथा व्याख्यानमर्हति, अन्यथा व्याख्यानं तु स्वव्याख्याचातुर्यप्रदर्शनमात्रमचिरप्रकाश्यमानपञ्चपादिकाविवरणभूमिकाकाराणाम् ।

ते क म ल च र णा चा र्य मणयः प द्म पा दा र्य गुरवः एनोहानिम् ब्रह्मविद्याप्रतिबन्धकपापहानिम् महत्सु ब्रह्मविद्याप्रवर्तकं विनयमपि मम चेतः प्रापयन्तु—इत्यन्वयः ॥

सु रे शा र्या वर्याः सुरगुरुसमाना धिषणया
स्वतन्त्राः स्वं तन्त्रं श त प थ शिरस्तित्तिरिगिराम् ।
मुहुर्भाष्ये भाष्ये विमलवचनैर्वार्तिकवरं
स्फुरन्तु स्वच्छन्दं सपदि कृतवन्तः सुकृतिनः ॥

अथातिकनिष्ठत्वेऽपि ब्रह्मविद्यारूपवार्तिकप्रवतकत्वनातिश्रैष्ठचात् सु रे श्व रा चा र्या नादावेवाभ्यर्थयते—सु रे शा र्या इति ॥ सु रे शार्याः वि श्व रू पा चा र्या इति प्रथमं प्रसिद्धाः । तदनन्तरं का श्यां दिक्पाला-वाहनेन सुरनाथस्यान्यैरदृष्टत्वाद् विश्वरूपैरेव दृष्टत्वाद् गुरुभिः सु रे श्व-रा चा र्या इति दत्तनामानः धिषणया बुद्धचा सुरगुरुसमानाः स्वत-न्त्रवार्तिककृत्त्वेनोक्तानुक्तदुरुक्तचिन्तनकर्तृत्वेन भाष्यकारा इव स्वतन्त्राः पृथक् प्रस्थानस्य=व्याख्याभेदस्य प्रवर्तकाः सुकृतिनः पूर्वं पूर्वकाण्ड-प्रवर्तकाः कु मा रि ल भ ट्टाचार्य जामातरः शो ण भ द्रा तीरवासिनः पञ्चगौडान्तर्गताः शतपथशिरस्तित्तिरिगिरां भाष्ये श्री श ङ्क र भ ग व त्पा द प्रणीते मुहुर्भाष्ये मुहुरपि विचारार्हे वार्तिकवरं स्वं तन्त्रम् शास्त्रम् उक्तानुक्तदुरुक्तचिन्तनपरत्वेन भाष्यवदेव शास्त्रम्—शासकम् सपदि सत्वरम्—प द्म पा दा चा र्या विघ्नं शारीरकभाष्य इव मा कुर्वन्त्विति शीघ्रमेव कृतवन्तः निर्मितवन्तः स्फुरन्तु प्रतिभान्तु—इति समन्वयः ॥

सदद्वैतानन्दे समरसतरे साधु चरतः
सदा द्वैताद् दूरे सकलमुनिमौलीन् समदृशः ।
समाराध्य स्वैरं सरससरसं तो ट क गु रू न्
समाधिप्रत्यूहान् हृदिह सहसा त्रोटयतु नः ॥

अथ सर्वकनिष्ठ सु रे श्व र परिग्रहात् कनिष्ठक्रमेण ह स्ता म ल क-कनिष्ठान् सु रे श्व र ज्येष्ठान् समाधिनिष्ठान् श्रीगुरुप्रसादेन तो ट क वृत्ता-लम्बेनाद्वैतोपदेष्टॄननुसन्धत्ते—सदिति ॥ समरसतरे जीवेशसामरस्यलक्षणैक्ये सदद्वैतानन्दे सति कालत्रयाबाध्ये अद्वैते द्वैतविनिर्मुक्ते आनन्दे अखण्डे, सदा द्वैताद् दूरे द्वैतस्पर्शविनिर्मुक्ते चरतः सञ्चरतः=तत्रैव निष्ठावतः, समदृष्टिभाजः शत्रुमित्रविभागादिरहितान्, सकलध्यान-तत्परश्रेष्ठान् तो ट क गु रू न् गुरोरनुग्रहतः शिष्यान्तरविश्वासाय तो ट क-वृत्तेनाद्वैतोपदेष्टृत्वेन गुरुणा तो ट का चा र्य इति विहितनाम्नः, सरस-सरसम् अतिसरसम्, स्वैरम् स्वेच्छया, आराध्य, इह वार्तिकप्रणयने हृद् मदीयम् प्रत्यूहान् विघ्नान् सहसा हठेन त्रोटयतु नाशयतु—इत्यन्वयः ॥

हृदम्भोजे हस्तामलकसममद्वैतममलं
हृतद्वन्द्वं यस्य स्फुरति लसदानन्दमधुरम् ।
तमाचार्यं ह स्ता म ल क मखिलैर्मस्करिगणै-
र्निषेव्यं संसेवे निजगुणगणाराधितगुरुम् ॥

अथ तो ट क ज्येष्ठान् ह स्ता म ल कानभिसन्धत्ते—हृदम्भोज इति ॥ यस्य ह स्ता म ल का चार्य स्य । हृदम्भोजे लसदानन्दमधुरम् हृतद्वन्द्वम् परिहृतशीतोष्णादिद्वन्द्वम्, अत एव अद्वैतम् अखण्डसच्चिद्रूपम्, हस्तामलकसमं स्फुरति, तमाचार्यम् मस्करिगणैर्भिक्षुनिकरैः सेव्यमानम् निजगुणगणेनाराधित श्री भ ग व त्पा द म् ह स्ता म ल कं संसेवे—इत्यन्वयः ॥

परिव्राट्सत्तोढो मणिरनुपमाम्नायशिखराऽऽ-
करोद्गीर्णः कीर्णः सुदृढतरशाणे नयमये ।

मनोमञ्जूषायां रहसि गुरुणा यस्य निहित-
स्ततः शीर्णं भूयात् तिमिरमिह ह स्ता म ल क तः ॥

अथ पुनरपि ह स्ता म ल कं प्रार्थयते—परिव्राडिति ॥ परिव्राट्सूत्रोढः परिव्राजो यतय एव सूत्रम्, तेनोढः प्रोतः मणिः, अनुपमाम्नायशिखराकरोद्गीर्णः, अनुपमः=अतिकमनीयः, य आम्नायान्त एवाऽऽकरः खनिः, तस्माद् उद्गीर्णः निर्गतः नयमये भि क्षु सू त्र लक्षणे शाणोपले दृढतरे कीर्णः घृष्टः=परिहृतकलङ्कः गुरुणा श ङ्क र देशिकेन यस्य ह स्ता म लक स्य मनोमञ्जूषायाम् हृदयपेटिकायाम् रहसि गुप्ततया निहितः, ततः ह स्ता म ल का त् इह वार्तिकविरचने विद्यमानं तमः अज्ञानम्=लीनं भूयात्—इत्यन्वयः ॥

सदा पू र्णा न न्दा न् सकलयमिनां मानसलस-
त्सरोजे सद्धंसानपि च सदसत्क्षीरपयसोः ।
परानाचार्यार्यान् परचिदमृताम्भोनिधिरस-
स्फुरच्चर्याधुर्यान् स्पृशतु धिषणा ध्यानसरणौ ॥

अथ श्री श ङ्क र भगवत्पादशिष्यप्रवर्तितदशविध*सम्प्रदायेषु श्री सु रे श्व रा चा र्य प्रवर्तितानन्दसरस्वतीसम्प्रदायप्रवर्तकान् स्वकुलगुरून्

---

* (1) तीर्थः, (2) आश्रमः, (3) वनम्, (4) अरण्यं; (5) गिरिः, (6) पर्वतः, (7) सागरः, (8) पुरी, (9) भारती, (10) सरस्वतीति दश योगपट्टानि संन्यासिनाम् । तत्र शृङ्गगिरिसंप्रदाये—तीर्थारण्य-भारतीनामानि विद्यातीर्थः, विद्यारण्यः, श्रीचन्द्रशेखरभारतीपर्यन्तानां भगवत्पाददक्षिणाम्नाय श्रीशृङ्गेरी मठाधिपतीनाम्, तदन्तेवासिनाम्, तदनुज्ञया गृहीतसंन्यासाश्रमाणां च । पश्चिमाम्नाय द्वारकापीठाधीशानां तदन्तेवासिनां तदनुज्ञया संन्यासदीक्षादीक्षितानां त्वाश्रमयोगपट्टम्, तदा तदा तीर्थनाम च । प्राच्याम्नायपुरीपीठाधीशा अपि प्रायेण तीर्थनामानः, गिरिनाम तूदीच्यज्योतिर्मठाधीशानां तदनुज्ञया प्राप्तसंन्यासाश्रमाणामपि तीर्थपदमेव प्राधान्येन । सरस्वतीयोगपट्टन्त्विन्द्रपदघटितमिन्द्रप्रार्थनया

पूर्णानन्दाननुस्मरति—सदेति ॥ सकलयतिहृदयकमले सद्धंसान् परमहंसान् सदसदर्थलक्षणक्षीरपयोविषयेऽपि हंसान्=विभाजकान्=प्रपञ्चात् पृथक्कृत्याखण्डविवेचकान् परान् उत्कृष्टान् अत एवाचार्याणामप्याचार्यान् परचिदमृतसमुद्रस्य यो रसः, तेन स्फुरन्ती या चर्या, तत्र धुर्यान् तद्भारसहिष्णून् पूर्णानन्दान् कुलगुरून् ध्यानमार्गे मे धिषणा स्पृशतु स्मरतु सदा । इत्यन्वयः ॥

निषेवे निध्यातान् निखिलनिगमान्तप्रवचने
निरीहान् निर्व्याजं निजजनसमुद्धारणचणान् ।
निरूढज्ञानाढ्यान् नियमितविनेयांश्च पुरुषो-
त्तमानन्दान् वन्द्यान् विविधबुधवृन्दैरनुदिनम् ॥

अथ पूर्णानन्दशिष्यान् पुरुषोत्तमानन्दान् नमस्करोति—निषेव इति ॥ सकलवेदान्तार्थनिरूपणे समर्थान् निरीहान्, निर्व्याजम् निर्निमित्तम् स्वीयजनानां संसारादुद्धारेण प्रसिद्धान् निरूढज्ञानाढ्यान् परिपक्वात्मसाक्षात्कारभाजो मर्यादायां स्थापितस्वशिष्यान्

---

भगवत्पादानाम्, साक्षाद्भगवत्पादाधिष्ठितकामकोटिपीठाधीशानाम्, ततः प्राप्तसंन्यासदीक्षापरम्परागतानां च । सुरेश्वराचार्यस्य तु वृद्धतरशिष्यस्य भगवत्पादानामिव सरस्वतीनामैवानन्दसरस्वतीति । सुरेश्वराचार्येण तु शृङ्गगिरिकामकोट्याख्य दक्षिणाम्नायोर्ध्वाम्नाय पीठयोरुभयोरपि प्रवर्तकेनाप्यानन्दसरस्वतीनाम्ना संन्यासदीक्षासम्प्रदाय एव प्रवर्तितः, इन्द्रसरस्वतीसम्प्रदायस्तु कामकोटिपीठस्येव तच्छाखामठस्योपनिषद्ब्रह्मेन्द्रमठस्याप्यधीशानाम्, तदन्तेवासिनां च परम्परया वर्धते । तथाप्यानन्दसरस्वतीसम्प्रदायस्य सुरेश्वरप्रवर्तितस्यापि वृद्धिक्रम आनन्दपूर्णमुनीन्द्रमारभ्यैवेति भावः । शिखायज्ञोपवीतरहितानां परिव्राजकाचार्याणां तीर्थनाम श्रीद्वैतसम्प्रदायेऽपि प्रसिद्धमेव । एवं व्यवस्थायामानन्दगिरिशङ्करविजयो माधवीयशङ्करविजयव्याख्या च धनपतिसूरिकृता मानम् ॥

सकलपण्डितैरपि अनुदिनं बन्द्यान् पु रु षो त्त मा न न्दा न् निषेवे —इत्यन्वयः ॥

स्फुटं शैषे शैले सुरतरुसुमं नन्दनवनात्
स्फुरद्गन्धोन्नद्धं दिशि दिशि समानीय रभसात् ।
पदाम्भोजे पूजा व्यरचि विधिवद् यैर्मुररिपोः
पदद्वन्द्वं चित्ते मम लसतु तेषां मुहुरपि ॥

अथ पुनरपि पु रु षो त्त मा न न्दा न् गुणविशेषैरनुस्मरति — स्फुटमिति ॥ शैषे शैले शेषसम्बन्धिपर्वते योगमाहात्म्याद् नन्दनवनात् इन्द्रोपवनात् दिशि दिशि सर्वदिक्षु स्फुरद्गन्धोन्नद्धम् परिमलसम्बद्धम् सुरतरुसुमम् पारिजातकुसुमम् रभसात् वेगेन=अतित्वरितम् समानीय मुररिपोः पदाम्भोजे पूजा विधिवद् यैर्व्यरचि विरचिताऽभूत् , तेषां पु रु षो त्त मा- न न्दा नां पदद्वन्द्वं मम चित्ते मुहुरपि लसतात्—इत्यन्वयः ॥

पुरः का ञ्ची नाम्न्या विमलमणिदीपायितवपुः
पुरा भोजम्भोजं परमपरमान्नं प्रणिहितम् ।
परस्याश्चिच्छक्तेरतुलदयया तुन्दिलतरः
पुरस्ताद् मे नित्यं स्फुरतु शि व रा मो यतिपतिः ॥

अथ पु रु षो त्त मा न न्द विधेयान् शि व रा मा न न्दाननु- स्मरति—पुर इति ॥ का ञ्ची पुर्यां मणिदीपायितस्फुरद्रूपः परस्या- श्चिच्छक्तेः का ञ्ची नगर्यधिष्ठात्र्या दयया तुन्दिलतरः विशिष्टतुन्दवान् पुष्ट इति यावत् ; प्रणिहितम् निकटे स्थापितं चिच्छक्त्या परमम् उत्कृष्टम् परमान्नम् पुरा पूर्वम् भोजम्भोजम् भुक्त्वा भुक्त्वा तुन्दिलः दयया परमान्नेनापि तुन्दिलः शि व रा मो यतिराजो मे पुरस्ताद् नित्यं स्फुरतु—इत्यन्वयः ॥

हृदब्जे गो पा लो निवसतु यतीनामचरमो
निराघाटानन्दः सदयहृदयः सन्ततमपि ।

दयादीर्घापाङ्गैर्दलितमलमायो यमवतां
सतां सिद्धं सिद्धाञ्जनमिव विहीनाञ्जनचितिः ॥

अथ शि व रा मा न न्द विधेयं गो पा ला न न्द मनुचिन्तयति —हृदब्ज इति ॥ हृदयकमले यतीनाम् आद्यो निष्प्रतिबन्धज्ञानवान् सानुकम्पचित्तः सर्वदाऽपि सदयदवीयोऽपाङ्गैर्यमवतां विनेयानां दलितमलमायः विदारिताविद्यामायः सिद्धं सिद्धाञ्जनमिव विनेयानां सदर्थप्रदर्शकत्वात् सिद्धम्, सिद्धपुरुषाणामञ्जनमिव स्थितः विहीनाञ्जनचितिः निर्मलचितिस्वरूपः सततम् अपि गो पा ला नन्दः स्फुरतु—इति गोलार्थः ॥

स्व यं पूर्वान् सर्वानवितुमखिलाम्नायशिरसां
रसं दोहंदोहं सरसवचनैः साधु ददतः ।
वयं वारंवारं तदधिगमिताद्वैतसरलाः
प्र का शा न न्दा र्या न् हृदयकमलान्तर्विचिनुमः ॥

अथ गो पा ला न न्द शिष्यान् स्व यं प्र का शा न न्दा ननुस्मरति—स्वयमिति ॥ सर्वान् जनान् अवितुं सर्ववेदान्तानां रसं दुग्ध्वा दुग्ध्वा सरसवचनैः अनुनयोपेतवचनैः साधु सम्यग् अपरोक्षसाक्षात्कारो यथा भवति, तथा ददतः स्व यं पूर्वान् प्र का शा न न्दा र्या न् स्व य म्प्र का शा न न्द गुरून् तदधिगमिताद्वैतसरलाः तैः स्व यं प्र का शा न न्द परमगुरुभिर्ज्ञापिताद्वैतेनाखण्डेन सरलाः संसारानाविष्टतया ऋजवः वयं हृदयकमलान्तर्विचिनुमः ध्यायाम—इति गोलार्थः ॥

दयाया वृद्धायाः सदृशपरिणत्या सरसया
दृशा पूतः पोतो विगलितमहामोहविभवः ।
चिदानन्दद्योतच्छमरससुधासागरवरान्
श्रये चेतोरङ्गे श्रमहरगिरः श्री ध र गु रू न् ॥

अथ स्वोपदेशगुरुमनुस्मरति—दयाया इति ॥ वृद्धायाः समृद्धाया

दयायाः सदृशपरिणत्या समानपरिणामवत्या सरसया आर्द्रया येषां दृशा पोत डिम्भो बाल एव पूतः सन् विगलितमहामोहविभवः परिहृताविद्यातद्विलासः अहमभवम्, तान् चिदानन्दद्योतच्छमरससुधासागरवरान् अखण्डचिदानन्द-विलसच्छमरसामृतसागरस्वरूपान्, श्रमहरा गीर्येषां तान् श्री ध र गु रू न् चेतोरङ्गे हृदयरूपनटनस्थाने श्रये तत्र गुरुमूर्तिर्नृत्यतात्—इति भावः ॥

मदोन्मत्तद्वैतद्विरददृढकुम्भस्थलवर -
प्रभेदप्रद्योतन्नयनखरविस्फूर्जितवरान् ।
समन्तादुन्मुक्ताविरलवरमुक्तान् मृगपतीन्
सदा ब्र ह्मा न न्दा न् सरलचरितान् साधु कलये ॥

अथ विद्यागुरून् गौ ड ब्र ह्मा न न्दा ननुसरति—मदेति ॥ कुतर्क-लक्षणमदेनोन्मत्तो यो द्वैतगजः, तस्य दृढं यत् कुम्भस्थलवरम्, तस्य कुम्भस्थलवरस्य प्रभेदेन प्रद्योतन्तो नया एव नखराः, तेषां यत् स्फूर्जितम् मस्तकपाटनशब्दः, तेन श्रेष्ठान् समन्तात् परितः उन्मुक्ताविरलवरमुक्तान् उन्मुक्ताः गृहात् निर्गताः, अविरलाः बहवः, वराः श्रेष्ठाः, मुक्ताः जीव-न्मुक्ता एव कुम्भपाटनावसर उन्मुक्ताः नखास्फालनवेगेनोर्ध्वं मुक्ताः, अविरलाः अधिकाः, वराः श्रेष्ठाः, मुक्ताः मुक्ताफलानि यैस्ते तादृशाः, तान् ब्र ह्मा न न्दा न् मृगपतीन् सिंहान् सरलचरितान् साधु यथा तथा कलये अनुचिन्तयामि—इत्यन्वयः ॥

उ पे न्द्रा निस्तन्द्रा मुहुरपि दयासान्द्रहृदया
यतीन्द्राणां चेतःसरसिजवने चण्डघृणयः ।
कलामन्दाश्चन्द्राः सकलकलिकासागरवरे-
ष्वमन्दानन्दानामधिवसतयो भान्तु हृदये ॥

अथ कनीयसोऽपि सब्रह्मचारिण उ पे न्द्रा न नुसरति ; महाग्रन्थारम्भे सुहृदामनुसरणस्योचितत्वात्—उ पे न्द्रा इति ॥ आलस्यरहिता वाक्यार्थ-

विचारे दयापूर्णा यतीनां हृदयकमलवनरवयः सकलविद्यासागरेषु कलाभिः पूर्णचन्द्रा आनन्दसमुद्राधिवसतयो मद्धृदये भान्तु—इति गोलार्थः ॥

यतीन्द्राणामिन्द्रा मम क म ल ना भे न्द्र यतिराड्-
विनेया विद्यानां विविधतरकेलीगृहभुवः ।
सदा दे वा वा सू त्तरकलितरूपा ननु पुरो
भवन्त्वग्रचन्यायाकलनकुशलाः सर्वसुहृदः ॥

अथातिबाल्य एव शास्त्रारम्भकारयितॄन् गुरूननुस्मरति—यतीन्द्राणामिति ॥ प द्म ना भे न्द्र यतिशिष्याः यतीन्द्राणाम् अपि इन्द्रा नियन्तारः विद्यानां विविधविलासभुवः अग्रचन्यायाकलनकुशलाः आद्यं यद् न्यायाकलनम्, तत्र समर्थाः प्रथमं न्यायारम्भकर्तार इति यावत् । वा सू त्तरकलितरूपा देवाः वा सु दे वाः मम पुरो भवन्तु—इति भावः ॥

स्वयं पूर्वाः सर्वैरपि यतिभिरासेवितपदाः
प्र का शाः सन्त्वग्रे प्रथितयशसस्तीर्थमणयः ।
यदीयाभिर्गीर्भिः समभिलषितार्थाभिरभितः
पदं चित्ते दत्तं प्रथममखिलज्यौतिषनयैः ॥

अथास्मिन् शास्त्रे सर्वविद्यानामपि संनिवेशात् तत्र तत्र तत्तद्विद्यास्फूर्तये तत्तद्विद्यागुरवो नमस्करणीया भवन्तीति ज्योतिःशास्त्रारम्भकर्तॄननुचिन्तयति—स्व य मिति ॥ सर्वयतिसमाश्रितचरणाः स्व यं पूर्वाः प्र का शा स्तीर्थमणयः स्व यं प्र का श तीर्थवर्याः प्रथितकीर्तयो ममाग्रे विषयविशोधनकाले स्फुरन्तु यदीयाभिर्गीर्भिः सन्दिग्धस्थले समभिलषितो वाञ्छितोऽर्थो यासु ताभिः अखिलज्यौतिषनयैः सकलज्योतिःशास्त्रसम्बन्धिनयैः प्रथमम् आदौ मम चित्ते पदम् स्थानं कृतम्, ते पुरो भवन्तु—इत्यन्वयः ॥

यदीयापाङ्गानामहमभवमत्युद्भटदया-
रसार्द्राणां पात्रं प्रथममखिलध्वान्तमहसाम् ।

समुन्मीलद्विद्यापरिकरसमुन्मेषणकृतां
बलाद् बा ला स्ते स्युः स्वयमिह पुरः कृ ष्ण शिरसः ॥

अथ विद्यासु प्रेरकान् सकलभेदमतनिराकर्तॄनुपदेशगुरुसतीर्थ्यानलङ्कारवासुदेवशिष्यान् संस्मरति—यदीयेति ॥ प्रथमम् आदौ अखिलध्वान्तानाम् अन्धकाराणाम्, महसाम् तेजोरूपाणाम्—तमोनिवर्तकानाम् अत्युद्भटदयारसैरार्द्राणां यदीयापाङ्गानाम् समुन्मीलन्ती या विद्या, मम तस्याः परिकरः समारम्भः, तदुन्मेषणकृताम् बलाद् एव विद्योदयसामग्रीसम्पादकानां श्री बा ल कृ ष्ण स र स्वत्यपाङ्गानाम् अहं पात्रमभवम्। ते कृ ष्ण शिरसो बा ला बा ल कृ ष्णा न न्द स र स्व ती नामानः इह वार्तिकसमारम्भे स्वयम् एव पुरः स्युः भवन्तु—इत्यर्थः ॥

विराजन्तां विद्यासरणिषु विचित्रासु विशदं
चिरं चित्ते चिन्तामणय इव ति प्प न्न म खि नः।
पुराऽऽवाले बाले मयि तरलकेलावकलयन्
कलाङ्कुरान् कूरामृतरसभरैर्येऽद्भुतदयाः ॥

अथ गृहस्थानपि स्वस्य विद्याप्रवर्तकाननुस्मरति चतुर्भिः श्लोकैः—विराजन्तामिति ॥ येऽधिककृपासरलास्ति प्प न्न दी क्षि ताः चपले बाले मय्यावाले सर्वविद्याङ्कुरान् अन्नामृतरूपरसभरैः कृतवन्तः, ते विद्यासरणिषु विचित्रासु चिन्तामणय इव चित्ते चिरं विराजन्ताम् ॥

पुरस्तादास्तां मे सततमपि सौ न्द र्य शि ख री
दयादृष्ट्या दत्ता दमितहृदयोल्लासितमसा।
पुरा ज्योतिर्विद्या पुलकितनया फुल्लहृदया
द्विजाग्रण्या येन द्युमणिसमभासा मतिमता ॥

पुरस्तादिति ॥ पुरो मे भूयात् सु न्द र गि रि नामा, येन दया-दृशा निराकृतमनस्तमसा द्विजवरेण ज्योतिर्विद्या पुष्कला दत्ता ॥

यतीनामाज्ञाभिर्यमनियमचर्यापरवशः
शिशोः काव्यालापाञ् शिशिरतरवाचा व्यरचयत् ।
पुरा पुण्याग्रण्ये सततमपि योऽ ग्नी श्व र पु रे
स भूयोऽग्रे भूयाच्चटुलचरितो वे ङ्क ट क विः ॥

यतीनामिति ॥ वे ङ्क ट क विः अग्रे भूयात्, पूर्वं यश्चोलदेशस्थाग्नीश्वरक्षेत्रे काव्यकुशलं मामतनोत् ॥

वचांसि व्याकुर्वन् व र रु चि गिरां यो विवरणं
विशालं व्यातेने विविधनयविन्यासविमलम् ।
विजानंस्तज्जीर्णं पुनरपि नवीनं कलयितुं
स ना गे शः श्रीमाञ्जयति जगतामादिमगुरुः ॥

वचांसीति ॥ यो म हा भा ष्यं स्वीयमेव नवीनं कर्तुमुद्युक्तो जगतां मूलभूतः ना गे श्व रो जयति—इति भावः ॥

क्व वा भाष्याम्भोधिर्नयनिचयगम्भीरहृदयो
विपक्षैशकीर्णस्तरलतरभङ्गैर्भृशमपि ।
कृपैवैका नौका सपदि भगवत्पादविहिता
परं पारं गन्तुं जयति मतिपङ्गोर्मम सदा ॥

अथ भाष्या*म्भोधेरतिगहनस्य वार्तिकलक्षणं सन्तरणं मतिपङ्गोः कथं घटत इत्याशङ्क्य श्री श ङ्क र देशिककृपामयी नौकैव तत्सन्तारणे

---

* व्याकरणमहाभाष्यापेक्षयापि प्रसन्नगम्भीरं भगवत्पादीयं भाष्यम् । स्वव्याकरणाचार्यं श्रीनागेशस्यापि तत्र प्रमाद एव ; यः मञ्जूषायां भगवत्पादसिद्धान्तमन्यथयितुं यतते इत्याशयः । व्यक्तं चेदमनुपदं टिप्पण्यां भविष्यति ॥

मुख्यं साधनमित्याह—कृपैवेति ॥ नयनिचयगम्भीरहृदयः न्यायनिकरपूर्णहृदयः विपक्षैः परवादिकृतपूर्वपक्षैः तरलतरभङ्गैः अतिचपलतरङ्गैः भृशमाकीर्णः क्व वा भवति, मया मनसाऽपि स्मर्तुमशक्यः; मतिपङ्गुत्वात् । तथा च तदुपर्युक्तानुक्तदुरुक्तचिन्तनरूपे वार्तिके मम नैवाधिकार इति भावः । तथापि भगवत्पादविहिता कृपैवैका नौका मतिपङ्गोर्मम भाष्याब्धिपारं परं गन्तुं सपदि जयति । तथा च श्रीभगवत्पाददयानौकया भाष्याब्धेर्वार्तिकलक्षणं सन्तरणं भवेदेव—इत्याशयः ॥

अपनयतिमिरावृतायां हृदयगुहायां सदद्वयार्थाप्त्यै ।
श्री म च्छ ङ्क र यतिवरवाणी मणिदीपिकायिता जयति ॥

अथाखण्डार्थस्फूर्तिर्भाष्यकृद्वचसैव स्वस्य जायेतेति दर्शयति—अपनयेति ॥ हृदयगुहायाम् बुद्धिगुहायाम् अपनयतिमिरावृतायाम् सदद्वयलक्षणार्थप्राप्त्यै श्रीभगवत्पादवाण्येव मणिदीपिकायिता प्रकाशते—इत्यर्थः ॥

पुरैव प्रज्ञार्यैर्विशदविवृतं नीतिनिपुणैः
श्रुतिं सूत्रं भाष्यं मुहुरपि समालोच्य सकलम् ।
यति र्बा लो नव्यद्रविडमुनि रा म्ना य न ग रा-
धि भूः कृ ष्णा न न्दः स्वमतिपरिशुद्धिं वितनुते ॥

अथैतद्वार्तिककरणं न भाष्यविवृतये, न वाऽतीव परेषामुपकाराय, किन्तु स्वस्यैव भाष्यार्थपरिस्फूर्त्यर्थमित्याह—पुरैवेति ॥ नीतिनिपुणैः प्रज्ञार्यैः पुरैव पूर्वमेव विशदं यथा भवति, तथा विवृतम् । अनेन न गूढभाष्य-

विवरणं लोकोपकाराय वार्तिकेन भवेत्, प्राचीनटीकाभिरेव विशदीकरणादिति सूचितम् । प्राचीनैर्विवृतं श्रुतिं सूत्रं भाष्यं सर्वमपि समालोच्य मुहुरपि विचार्य नव्यद्रविडमुनिः अभिनवद्रविडाचार्यः आ म्ना य न ग रा धि भूः श्रु ति न ग रे श नामा बा लः कृ ष्णा न न्दः बा ल कृ ष्णा न न्दः वार्तिकेन करिष्यमाणेन स्वमतिपरिशुद्धिं स्वमतेस्तत्तच्छ्रुतितात्पर्यनिर्णयेन स्वबुद्धिदार्ढ्यम् वितनुते विस्तारयति—इत्यर्थः ॥

म हा दे वः श्रीमान् समधिगततत्त्वो वटुवरो
महान् कै ला से शः सकलयतिसंसेवनपरः ।
विशेषं जानीतां विशदवचनैर्भाष्यवचसा-
मितीयं सञ्जाता जगति कृतिरग्र्या विजयताम् ॥

अथ स्वमतिपरिशुद्धिवत् स्वीयविनेयबुद्धिदार्ढ्यमपि वार्तिकस्यास्य फलमित्याह—म हा दे व इति ॥ वटुवरः ब्रह्मचारी म हा दे वः श्रीमान् ज्ञानलक्ष्मीयुतः, अत एव समधिगततत्त्वः ज्ञातपरमार्थः तत्र सन्देहनिवृत्तये सर्वयतिसेवनपरः महान् तत्त्वाभिज्ञत्वात् स म हा दे वः कै ला से शः भाष्यवचसां विशेषम् तात्पर्यभेदं जानीतामिति हेतोः सञ्जाता कृतिः वार्तिकलक्षणा अग्र्या श्रेष्ठा विजयताम्—इत्यर्थः ॥

अथैतद्वार्तिकानुसारी विद्यावंशवृक्षः, संन्यासदीक्षादीक्षितवंशवृक्षः, तत्तत्परम्पराक्रमसूचकः प्रियपाठकानां सुखावबोधायानन्दपूर्णमुनिवरमारभ्य नवशाखात्मकः सङ्गृह्यते । तत्र प्रसङ्गात् तत्तत्कृतीनां नामान्यपि सङ्गृह्यन्ते ॥

## ॥ अयमत्र वंशवृक्ष आनन्दपूर्णमुनीन्द्रस्य ॥



२. तत्रानन्दपूर्णमुनीन्द्रकृतयो यथा — (१) विद्यासागरी (खण्डन टीका) (२) महाविद्याविडम्बनव्याख्या (३) ब्रह्मसिद्धिव्याख्या भावशुद्धिः (४) मोक्षधर्मव्याख्या (५) पञ्चपादिकाटीका (६) पञ्चपादिकाविवरणटीका (७) न्यायचन्द्रिका (८) न्यायसार-टीका (९) काशिकावृत्तिटीका (१०) समन्वयसूत्रविवृतिः (११) बृहदारण्यकवार्तिकटीका न्यायकल्पलतिका च ॥

३. पुरुषोत्तमानन्दः — अयं न कस्यचिदपि ग्रन्थस्य कर्ता, सिद्धान्तबिन्दुटीका-द्वैतसिद्धिव्याख्याव्याकर्ता तु पुरुषोत्तमानन्दसरस्वती मधुसूदनसरस्वतीशिष्यः, न पुरुषोत्तमानन्द-सरस्वत्यानन्दपूर्णसरस्वतीशिष्यः ॥

४. शिवरामानन्दः, अयम् — महापुरुषधौरेयाः शिवरामाख्यवर्णिनः ।
एतद्ग्रन्थस्य कर्तारः केवलं लेखका वयम् ॥

इति लघुचन्द्रिकायां ब्रह्मानन्दसरस्वती वदति ॥

६. गोविन्दानन्दः—शारीरकभाष्यव्याख्यायाः—रत्नप्रभायाः, विवरणोपन्यासस्य च कर्ता, यदीयशिष्यपरम्परायामद्वैतचिन्तैकपरा बहवो ग्रन्थकर्तार आसन् ॥

७. रामानन्दः — (१) अयं न कस्यापि ग्रन्थस्य कर्ता, रामभद्रानन्द-सरस्वतीशिष्यस्तु कश्चन रामानन्दः तत्त्वमसिमहावाक्यार्थनिरूपणम्, पञ्चीकरणतात्पर्यचन्द्रिका, लघुवार्तिकप्रकाशिका, वाक्यसुधाटीका, वेदान्तसिद्धान्तचन्द्रिकेत्यादीनां कर्ता त्वन्य एव, न तु गोविन्दानन्दशिष्यः ॥

(२) रघुनाथानन्दसरस्वत्यपि कस्यापि निबन्धस्य कर्तेति न ज्ञायते ॥

(३) नारायणानन्दसरस्वती, यस्य सब्रह्मचारी रामानन्दः, रघुनाथोऽपि सब्रह्मचारी, शारीरकवार्तिककर्ता (१५९२ A.D.) ब्रह्मानन्दसरस्वत्या गुरुरपि । तत्र रघुनाथस्वरूपानन्दौ द्रविडाचार्यवार्तिके न सङ्गृहीतौ ; तथापि न्यायचन्द्रिकायां स्वरूपानन्दस्यापि गोविन्दा-नन्दशिष्यत्वेनोल्लेखात् तच्छिष्यकोटौ सोऽप्यासीदिति ज्ञायते । एवमेव श्रीधरानन्दोऽपि ॥

श्री नारायणानन्दसरस्वतीसमयस्तु—

"चत्वार्यब्दसहस्राणि तथा रसशतानि च ।
नवतिस्त्रीण्यथाब्दानि व्यतीतानि यदा कलेः ॥

मुनिर्नारायणस्तर्हि श्रीमच्छारीरवार्तिकम् ।
सम्पूर्णं कृतवान् रामनवम्यां शुक्रवासरे ॥"

इति तदीयवार्तिकान्तगतश्लोकेनावधार्यते ॥

(६) षष्ठो वासुदेवानन्दस्तु यद्यपि न ग्रन्थस्य कस्यापि कर्ता ; तथापि तच्छिष्यो रामचन्द्रानन्दसरस्वती तत्त्वंपदार्थलक्ष्यैकशतक-त्रिपाद्विभूत्यादिप्रकरण-वाक्यसुधादिबहुविध-

निबन्धकर्ता आसीत् । अयं तच्छिष्य इति तदीयग्रन्थतो ज्ञायते । वार्तिके तु तन्नामाप्यनुल्लिखितं तच्छिष्यकोटौ ॥

८. कृष्णानन्दसरस्वती—तत्र प्रथमः (१) कृष्णानन्दसरस्वती रत्नप्रभाव्याख्याता, (२) द्वितीयस्तु न कस्यापि ग्रन्थस्य कर्ता । तृतीयः सिद्धान्तसिद्धाञ्जन-वेदान्तवादार्थ-ब्रह्मतत्त्वसुबोधिनीकर्ता ॥

ब्रह्मानन्दसरस्वती तु—लघुचन्द्रिका, गुरुचन्द्रिका, न्यायरत्नावली, वेदान्तसूत्र-मुक्तावली, माण्डूक्योपनिषद्रहस्यम्, मीमांसाचन्द्रिका, इत्येतेषां कर्ता ॥

९. उपेन्द्रसरस्वती — तत्र प्रथमो न कस्यापि ग्रन्थस्य कर्ता । बालकृष्णानन्द-सरस्वती तु शारीरकमीमांसाभाष्यवार्तिकस्य, दशोपनिषद्व्याख्यायाः, जैमिनिसूत्रवृत्तेश्च कर्ता ।

१० भास्करदीक्षितस्तु सिद्धान्तसिद्धाञ्जनव्याख्याया रत्नतूलिकायाः कर्ता । रामानन्दयतिस्तु भास्करदीक्षितसब्रह्मचारी । स हि वासुदेवानन्दशिष्यनाम्ना तत्त्वबोधस्य कर्ता । तदेवमानन्दसरस्वतीपरम्परैकोनविंशशतकसमयपर्यन्तमनुवर्तमाना । तत्र शारीरकमीमांसाभाष्य-वार्तिककारस्य बालकृष्णानन्दस्य महाभाष्यगुरुर्नागोजिभट्टः ॥

नागोजिभट्टः—स्वीयमञ्जूषायां भ्रमेऽसतो भानम् । तत्र भासमानस्यासतोऽपि बौद्धं सत्त्वं तु "बुद्धिसिद्धं तु तदसत्" इति वचनानुसारेण, इति सदसद्वादं स्वीकुर्वाणः फलतो द्वैतिनामसत्ख्यातिमेवानुकुरुते—यत्र भ्रमे सदिति भानमसत एव । परं तु सत्त्वमसतोऽधिष्ठान-सत्त्वानुरोधेनेति ततोऽस्य विशेषः । तदुक्तम्—"भ्रमे यावद्विशेषदर्शनं सत्त्वेन प्रतीतिस्तु तत्राधिष्ठानगतसत्त्वारोपात् । अत एव "सदसत्ख्यातिर्बाधाबाधाभ्याम्"—इति साङ्ख्यसूत्र उक्तम्"—इति । अनेनैव न्यायेन सदसद्रूपत्वं सर्वस्य प्रपञ्चस्य । यद्यप्यत्र निष्प्रपञ्चब्रह्मताया-मद्वैतमतेनाविशेषः ; स्वाप्निकप्रपञ्चवद् मायामात्रत्वाविशेषात्, तथापि तत्र स्फोटब्रह्मवादो विशेषः ॥

तत्र मायामात्रत्वं स्वाप्निकानां भास्करादिमत इव केवलं वासनामात्रत्वेन । अत एव सत्यवद् नार्थक्रियाकारित्वम् । अत एव—"न तत्र रथा न रथयोगाः" इति श्रुतिः । अयमेव न्यायः शुक्तिरजतादिस्थले, जागरप्रपञ्चसृष्टौ वा, इति "वाचाऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति । तदुक्तम्—"यथा च तक्षोभयथा" इति सूत्रे भाष्ये—"स्वाप्नो विकारो वासनामयः, न तु पारमार्थिकः" इति । जागरिकोऽपि प्रपञ्चो दीर्घस्वप्न एव, इति सदसद्विलक्षणताख्यानिर्वचनीयता प्रपञ्चस्य बाधिता ; सत्त्वासत्त्वयोः परस्परविरहरूपत्वेनैका-भावेऽपरविरहादुभयवैलक्षण्यं बाधितम् । अनिर्वचनीयख्यातौ तु घटादिज्ञानस्य न भ्रमत्वम् ; तद्वति तत्प्रकारकज्ञानत्वेन प्रमात्वात् । विपर्ययज्ञानं तु मिथ्याज्ञानेनैव पूर्वपूर्वेण, न तु मूलाज्ञानं नाम किमपि प्रामाणिकं सुवचम् । तथा च योगसूत्रम्—"विपर्ययो मिथ्याज्ञानमतद्रूपनिष्ठम्—"

इति। अन्यथाज्ञानमेव मिथ्याज्ञानं व्यासस्यापि सम्मतम्। सदसत्ख्यातिरियं फलतोऽन्यथा-ख्यातिरेव। प्रकारस्यान्यत्र सत्त्वेन ह्यन्यथाख्यातिवादः॥

तत्र 'रजतं पश्यामि' इत्यादौ रजतस्य चाक्षुषत्वानुभवोऽपि भ्रम एव; तत्र तस्य चक्षुरसंनिकर्षेऽपि प्रत्यक्षवदवभासात्, इति ब्रह्ममात्रसत्यतैव परमार्थः। मायापदार्थोऽपि—

"ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यात्मनामाया यथाऽऽभासो यथा तमः॥"

इति भागवतमप्यसदर्थप्रकाशनमेवाविद्यां भणति॥

"नासद्रूपा न सद्रूपा माया नैवोभयात्मिका।
अनिर्वाच्या ततो ज्ञेया मिथ्याभूता सनातनी॥"

इति तु व्यवहारकाले सत्त्वेन प्रतीतेर्नकेवलमसद्रूपा, न वा सद्रूपा, नापि सदसद्रूपा, किन्तु तद्विलक्षणा॥

अत एव "वास्तवोभयरूपाऽपि" इति बृहन्नारदीयं वचनम्। इदं चैकरूपेण युगपत् सत्त्व-मसत्त्वं च वारयति, इति न वासनाऽतिरिक्ताऽऽवरणविक्षेपशक्तिमत्यविद्या नाम काचिदस्ति। अध्यासस्यानिर्वचनीयत्वं वादिविप्रतिपत्त्या तद्दुर्वचत्वमात्रेण। सा च स्थूलरूपाऽविद्या, वासनामयी तु प्रकृतिः। न चान्या मूलाविद्या नाम तदतिरिक्ता तृतीया समस्ति; विनाऽपि तदुपादानतां ब्रह्मविवर्तोपादानतामात्रेण सर्वनिर्वाहात्। अत एव "मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य" इति मिथ्याज्ञानमात्रस्य निमित्तत्वमात्रभाषणम्। न चैतदतिरिक्त-मूलाविद्यायां प्रमाणम्, तदङ्गीकारेण प्रयोजनं वा। अन्यथाज्ञानमेवाविद्येति पक्षं यद्यपि—

"भ्रमसंस्कारतोऽप्यन्या माण्डूक्यमृदुदाहृतेः।
अविद्याऽनादिभावाऽन्या मता वाचस्पतेरिह॥"

इति देवताधिकरणे कल्पतरुर्निषेधति; तथापि तदतिरिक्तस्थले भ्रम-तत्संस्कारयोरेवाविद्यात्वम्—इहेतिपदेन स सूचयति। माण्डूक्योदाहरणमपि भ्रमतत्संस्कारयोरकैककार्यकारणतापरम्। अत एव "मोहो मृत्युः" इति पद्ये "मोहः = मिथ्याज्ञानम् = अतदात्मन्यात्माध्यासः" इति सनत्सु-जातीयभाष्यम् "देहादिष्वनात्मस्वात्माध्यासोऽविद्या" इति द्युभ्वाद्यधिकरणभाष्यम्, अध्यास-भाष्ये—अध्यस्य, सत्यानृते मिथुनीकृत्येत्यध्यासमूलकस्याहमाद्यध्यासस्योपपादनम्, पूर्वपूर्व-भ्रमेणोत्तरोत्तरभ्रमस्योपपादनम्, "तमेतमेवं लक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते" इति साक्षादध्यासस्यैवाविद्यात्वोपसंहरणम्, "अनित्याशुचिदुःखानात्मसु नित्य-शुचि-सुखत्वाख्या-ऽविद्य" इति योगसूत्रं चोपपद्यते। न चानाद्यविद्यायामजन्यायां प्रमाणमस्ति।

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा॥"

इति सम्प्रदायविदुक्तावजत्वोक्तिस्तु — "अजामेकां लोहित - शुक्ल - कृष्णवर्णाम्" इति श्रुतिवद् रूपकविधया तेजोऽबन्नात्मककार्याविद्यापरत्वेऽप्युपपद्यते ॥

अनादित्वं तु तस्याः प्रवाहतः। "अक्षरात् परतः परः" इत्यत्राविद्यायामक्षरत्वश्रुतिवद्धाऽज-त्वश्रुतिरपि गौणी। न च कार्याध्यासानामेवाविद्यात्वेऽनवस्थाप्रसङ्गः ; स्थूलसूक्ष्मभावमादाय तदुपपत्तेः, अन्यथा मूलाविद्ययैव निर्वाहात् किं ब्रह्मणोपादानकारणेन ? किं वा ब्रह्मातिरिक्तयाऽवि-द्यया ? "असम्भवस्तु सतोऽनुपपत्तेः" इति सूत्रे साधिता। मूलप्रकृतिस्तु ब्रह्मैव। ब्रह्माण्डपुराणे प्रकृतेर्ब्रह्मणि लयप्रतिपादनमप्येतदाशयमेव। "यतो वा इमानि भूतानि जायन्ते" इति त्वनादिवासनावशाद् ब्रह्मविवर्तं जगत् प्रतिपादयति। सर्वथा तु न मूलाविद्यायां मिथ्याज्ञान-तत्संस्कारातिरिक्तायामस्ति किमपि प्रमाणमिति—भणति ॥

अयं हि भास्करवद् अक्षरपरिणामवादी। तत्र भास्करमते ब्रह्माक्षरम्, नागोजिभट्टमते स्फोटात्मकः शब्द इति विवेकः ॥

अमुं नागेशाशयम्, भास्करानुसारिणम्, न केवलं भावरूपानाद्यज्ञानवादप्रकरणे न्याय-चन्द्रिका, किन्तु विवरणभामतीप्रस्थानयोस्तदनुयायिनः सर्वेऽपि निरस्यन्ति तदीयेषु निबन्धेषु। न्यायचन्द्रिका हि भावरूपामावरणशक्तिमतीं मूलाविद्यां जीवाश्रयामूरीकृत्यैव प्रपञ्चमिथ्यात्ववादम्, अनिर्वचनीयख्यातिम्, अन्यच्च तत्प्रसङ्गागतमुपपादयति—विपर्ययान्यथाज्ञान-तत्संस्काराणा-मविद्यात्वनिरसनेनाज्ञानप्रकरणे विशदमेव। वार्तिकादिषु, किं बहुना ? श्रीनागोजि-भट्टानूदितेऽध्यासभाष्ये "मिथ्याऽज्ञाननिमित्तः" इति मूलाज्ञाननिमित्तत्वमध्यासस्य भाष्यते। अन्यथा "अध्यस्याध्यासः" इत्यनेनैव प्रवाहतो मिथ्याज्ञाननिमित्तत्वनिर्वाहे वितथं तत्पदमत्र ॥

"मिथ्याज्ञाननिमित्त" इति भाष्यम्—नागोजिभट्टस्य सकाशात् महाभाष्यस्याध्येता प्रकृतो बालकृष्णानन्दसरस्वती वेदान्तसिद्धान्ते तत्सिद्धान्तमत्र विषये प्रत्याचष्टे—स्ववेदान्ताचार्य-परमेष्ठ्याद्याचार्याणामनन्दपूर्णादिब्रह्मानन्दान्तानां सरणिरेव शरणीकर्तव्येति। तदिदं श्रीनागोजि-भट्टान्तेवासिनो ब्रह्मनन्दसरस्वतीशिष्यस्याभिनवद्रविडाचार्यबालकृष्णानन्दसरस्वत्याः शारीरक-मीमांसाभाष्यवार्तिकगतम् "मिथ्याऽज्ञाननिमित्त" इति भाष्यविवरणपरं तदीयं वार्तिकं सविवरणम्। तद्यथा—

"मूलमलबोधकमुपेयमथ मिथ्याऽज्ञानपदमत्र पुनरुक्तिपरिहृत्यै।
भ्रान्तिरुदिता भवकरी किल विशिष्याऽध्यस्यपदतो न तु मूलमलमुक्तम् ॥"

इति। अत्रेदमस्य तदीयमेव विवरणम्। तद्यथा—भाष्यगतं मिथ्याज्ञानपदं न भ्रमपरम्; 'अध्यस्य' इत्यनेनैव भ्रमसङ्ग्रहेण मिथ्याज्ञानपदेनापि तद्ग्रहणे पुनरुक्त्यापत्तेः। अतो मिथ्या-ऽज्ञानपदं मूलाविद्यापरतया व्याचष्ट इत्यवतार्य प्रवृत्तम्—तथा हि—मिथ्याऽज्ञाननिमित्त इति

भाष्ये श्रूयमाणं मिथ्याऽज्ञानपद मूलमलपरम्; अन्यथा तदावरणाभावे स्वप्रकाशत्वादात्मनस्तत्संनिधौ सर्वस्यापि शरीरस्य पृथक् पृथगेव भानावश्यम्भावेनानुभूयमानैक्यभ्रमानुपपत्तेः। अतो मूलाविद्याऽवश्यमभ्युपेतव्या नैवोक्ता पदान्तरेण। अतः पुनरुक्तिपरिहाराय मिथ्याऽज्ञानपदमिदं मूलाविद्यापरमेष्टव्यम्—इति। इदं हि विवरणं यद्यप्यविद्याया आवरणशक्तिमात्रस्वीकारिभामतीमतमात्रमभिप्रेत्य; तथाप्यावरणविक्षेपशक्तिद्वयवदज्ञानवादिविवरणप्रस्थानस्याप्युपलक्षणम्॥

मिथ्याज्ञानेऽध्यासेऽपि—"पण्डिता अविद्येति मन्यन्ते" इत्यविद्यापदप्रयोगस्तु मूलाविद्याकार्यत्वात् तस्य भाक्त एव। तथा च मिथ्याज्ञानातिरिक्तमूलाविद्यायां प्रमाणानि सुरेश्वरवार्तिकानि—

अतोऽनभ्युपगच्छद्भिर्मुक्तौ कर्त्रादिरात्मनः।
अविद्याकल्पितो ज्ञेयो न त्वसौ परमार्थतः॥ १४८॥

ब्रह्माविद्यावदिष्टं चेन्ननु दोषो महानयम्।
निरवद्ये ह्यविद्याया आनर्थक्यं प्रसज्यते॥ १७५॥

नाविद्यस्येत्यविद्यायामेवाविद्या प्रकल्प्यते।
ब्रह्मदृष्ट्या त्वविद्येयं न कथञ्चन युज्यते॥ १७६॥

यतोऽनुभवतोऽविद्या ब्रह्मास्मीत्यनुभूतिवत्।
अतो मानोत्थविज्ञानध्वस्ता साऽभ्युगम्यताम्॥ १७७॥

सर्वानर्थाभिसम्बन्धे ह्यविद्यैवास्य कारणम्।
वासनानामपि युतौ सैव यस्मादपेक्ष्यते॥ ४६४॥

अविद्यातिमिरोच्छित्तौ ज्ञानाविष्कृतमण्वपि।
कार्यकारणवद् वस्तु नानपास्तं तमोऽन्यथा॥ ११३४॥

अतोऽशेषमहानर्थहेत्वात्माऽज्ञानहानिकृत्।
प्रत्यग्याथात्म्यविज्ञानभास्करोदयहेतवे॥

आरभ्येयं प्रयत्नेन वेदान्तोपनिषत् परा॥ ११३५॥

इति॥

अत्र हि वासनातिरिक्ता मूलाविद्यैव वासनासम्बन्धेऽपि हेतुरिति, ब्रह्माश्रितत्वेऽविद्यैक्यस्य, जीवाश्रितत्वेऽपि तत्तज्जीवदृष्ट्या तदैक्यस्य च प्रतिपादनात्, मिथ्याज्ञानानां च जीवभेदेन प्रतिक्षणं भेदात्, तन्निमित्तैकभ्रमविषयकल्पनानुपपत्तेः, मिथ्याज्ञानस्य ब्रह्मानाश्रितत्वेन ब्रह्ममात्राविषयकत्वेन च ब्रह्मज्ञाननिवर्त्यत्वासम्भवाच्च मूलाविद्याऽवश्यमूरीकर्तव्येति सूच्यते। अत एव—"अनिर्वाच्याविद्याद्वितयसचिवस्य" इत्यविद्याद्वितयसाचिव्यं ब्रह्मणः प्रतिपादितमुपपद्यते। अत एव—

अत्रानन्दपूर्णमुनीन्द्राणां कालनिर्णये, तद्गुरुपरम्पराव्यवस्थायाम्, तस्यानन्दसरस्वतीसम्प्रदायस्थस्य पूर्णानन्दसरस्वतीति नामैव योग्यमिति निर्णये च श्रीमङ्गेशमहोदयानां महाविद्याविडम्बनभूमिका, कलकत्ताविश्वविद्यालयप्रकाशितशारीरकमीमांसाभाष्यवार्तिकं चात्यन्तमेवोपाकरोत् ॥

तत्र न्यायचन्द्रिकाव्याख्याऽपि सर्वतन्त्रस्वतन्त्रपरमहंसपरिव्राजकस्वरूपानन्दसरस्वतीपादानां न्यायचन्द्रिकाभावसङ्कलने नितरां प्रियपाठकानामुपयुज्यते । तत्र श्रीस्वरूपानन्दपादा अपि श्रीपरमहंसपरिव्राजकपूज्यश्रीगोविन्दानन्दानामन्तेवासिनः, इति व्याख्यान्ते तथा निर्देशादवगम्यते । श्रीस्वरूपानन्दसरस्वतीपादा हि श्रीपूर्णानन्दमुनीन्द्राणां परम्परायां संन्यासदीक्षया दीक्षिताः, रत्नप्रभाकर्तॄणां श्रीरामानन्दतीर्थानाम्, श्रीनारायणानन्दसरस्वतीनां च सब्रह्मचारिणः । श्रीरामानन्दसरस्वती-

---

"भ्रमतत्स्कारतोऽप्यन्या माण्डूक्यमृदुदाहृतेः ।
अविद्याऽनादिभावाऽन्या मता वाचस्पतेरिह ॥"

इति कल्पतरूपपद्यते । न चात्रेहपदं देवताधिकरणमात्रपरम्; शास्त्रपरत्वात् तस्य । तेन च नेयमविद्याऽऽवरणशक्तिमती साङ्ख्यादिभिरूरीक्रियते, इति साङ्ख्यसिद्धान्त एव वेदान्ततात्पर्यमिति प्रधानमल्लनिबर्हणन्यायेन प्रतिपिपादयिषितम्; अन्यथा देवताधिकरणमात्रे तत्स्वीकरणस्य किं वा प्रयोजनम्? अन्यान्यपि भाष्यादिवाक्यानि यथासम्भवं कार्यकारणभावापन्नाविद्यापरतया योजनीयानि । का वा बाधा मिथ्याज्ञानातिरिक्तमूलविद्यास्वीकारे? प्रयोजनं तु सर्वकार्यमिथ्यात्वनिर्णयः—इति ॥

अत्राद्वैतसम्प्रादयप्रवर्तकेषु प्रथमं भगवत्पादानां परमगुरवो गौडपादाचार्याः, ततो गोविन्दभगवत्पादाः, तदन्तेवासिनस्तु चत्वारः, तदनन्तरन्त्वभयानन्दपर्यन्ता गुरुशिष्यपरम्परा तु नात्रोपयुज्यते, न वा ज्ञायते क्रमशः, इति केवलमनन्दपूर्णमुनीन्द्रपरम्परामात्रं शारीरकमीमांसाभाष्यानुसारेण सङ्गृहीतम् ॥

तत्र दशपरम्पराणां प्रतिपरम्परं ब्रह्मानन्दनागोजिभट्टान्तस्य मार्कि ३० वर्षपर्यन्तमन्तरसमयसङ्कलने (१३०० A. D.) समय आनन्दपूर्णस्येति निर्धार्यते । एवं सति हि न्यायामृतकार प्राक्तनत्वम्, चित्सुखसमनन्तरत्वम्, जयतीर्थसमकालिकत्वम्, अन्यानि च पूर्वोक्तानि कारणानि निर्वोढुं पार्यन्ते । इतः परं तु चरितविमर्शकाः, पण्डितप्रवराश्च प्रमाणम् ॥

12

श्रीनारायणानन्दसरस्वत्यादयश्चाद्वैतसिद्धान्तस्थापनकैङ्कर्यमेव स्वकुलधनं मन्वाना आसन्, इति तेषां गुरुचरणश्रीगोविन्दानन्दसरस्वतीतीर्थानां प्रातः सरणीयानां समयमारभ्य द्वैताद्वैतसिद्धान्तचर्चा, अद्वैतसिद्धान्तस्थापनैकदीक्षा चानन्दपूर्णमुनीन्द्र-परम्परायामासीत्, स एव समयः श्रीमधुसूदनसरस्वतीपादानामपि ॥

तत्र सुरेश्वराचार्यप्रवर्तित आनन्दसरस्वतीसम्प्रदाय इति शारीरकमीमांसा-भाष्यवार्तिकमनुवदति, इति ततः प्रतीयते, यत्—तेऽपि—तीर्थाश्रम-वनारण्य-गिरि पर्वत सागर पुरी भारती सरस्वत्याख्यदशसंन्यासयोगपट्टेषु सरस्वतीयोगपट्टेनैवा-लमक्रियन्तेति ॥

आस्तामियं सरस्वतीसम्प्रदायप्रसङ्गानुप्रसङ्गिनी कथा। न केवलमानन्दपूर्ण-मुनीन्द्रान्, किन्तु श्रीसुरेश्वराचार्यपादानारभ्याद्वैतसिद्धान्तस्थापनकैङ्कर्यं स्वकुलधनं मन्वानाः सर्वेऽपि भगवत्पादीयाः सुरेश्वरपथानुगामिनो न विस्मरणमर्हन्ति ॥

तत्र पूर्णानन्दमुनीन्द्राः खण्डनफक्किकाविभजनेन न्याय-वैशेषिकमतनिरसन-प्रक्रियामात्रेणासन्तुष्टाः, सुरेश्वरवार्तिकसमन्वयविवृत्यादिनाऽद्वैतचिन्तनम्, अन्या-भिरिवापराभिः स्वकृतिभिर्न्यायचन्द्रिकयाऽपि यथावदेवाकुर्वत, विशिष्य च न्याय-सुधादितात्कालिकद्वैतनिबन्धानामपि समालोचनेन ॥

तत्रानन्दपूर्णमुनीन्द्राणां साक्षाद् वेदान्तविचारैकदृष्ट्या प्रवृत्तेषु ग्रन्थेषु बहुषु स्वतन्त्रा श्रीमधुसूदनसरस्वत्यादिभिरप्यनालोचिता, अतिगभीरदुरूहाद्वैततत्त्व-सन्दर्भगुम्भिता न्यायचन्द्रिकैवेदानीं मद्रप्रान्तीयराजकीयपुस्तकालयसमितिद्वारा प्रथममवतार्यते। अस्मिन् प्रसङ्गेऽप्रकाशितग्रन्थप्रकाशनदीक्षया दीक्षितः, मद्रपुर-राजकीयसंस्कृतादर्शागाराध्यक्षः **वाणीकोशरक्षामणिः श्रीचन्द्रशेखरदी-क्षितः** पूज्यपाद श्रीमहामहोपाध्याय **श्रीकुप्पुस्वामिशास्त्रि** चरणपरम्प-रागतस्तदीयं कृत्यमेव त इवानुतिष्ठतीति तस्य सर्वं संस्कृतवाङ्मयकुलमधमर्णम् ॥

न्यायचन्द्रिकायां पूर्वोत्तरपक्षसङ्ग्रहप्रसङ्गे परामृष्टाः प्राचीना निबन्धाः, तन्निबन्धकाराश्चाधो निर्दिश्यमानाः षट्त्रिंशत्। ते यथा—

| | | |
|---|---|---|
| 29 | विवरणाचार्यः | 428 - 4 ; 431 - 4 ; |
| 30 | गीताचार्यः | 460 - 13 ; 560 - 13 ; 533 - 19 ; 521 - 4 ; 521 - 17 ; 522 - 13 ; 533 - 5 ; 551 - 2 ; 551 - 17 ; |
| 31 | प्रशस्तपादः | 518 - 6 ; |
| 32 | भास्करः | 518 - 6 ; |
| 33 | मनुः | 528 - 10 ; |
| 34 | वाचस्पतिमिश्रः | 566 - 3 ; |
| 35 | चिदानन्दः | 561 - 13 ; |
| 36 | आत्रेयः | 545 - 6. |

एषु भूषण न्यायमुक्तावली महाव्रतकृति कणादसूत्र वासुदेवकृति न्यायमञ्जरी-लीलावती कुसुमाञ्जलि व्योमवती तत्त्वाविर्भाव कन्दली वादीन्द्रकृति मानमनोहर-प्रशस्तपादभाष्याणि वैशेषिकमतानुसारिणो निबन्धाः पूर्वपक्षप्रसङ्गेन निर्दिष्टाः ॥

भवनाथ-शालिकनाथौ प्राभाकरमतानुसारिणावंशतः पूर्वपक्षप्रसङ्गेऽशतः सिद्धान्त-प्रसङ्गे चोपक्षिप्ताः । एवं मण्डनमिश्रोऽपि । कुमारिलस्तु प्रायेण सिद्धान्तोपक्षेपप्रसङ्ग एव परामृष्टः, अन्विताभिधानवादसिद्धान्तप्रसङ्गे तु पूर्वपक्षितया । न्याय-चन्द्रिकाव्याख्या हि "व्यवहारे भाट्टनयः" इति न मानवं वचनमिति प्रसङ्गेऽत्र वदति । जैमिनि-शबरौ तु सिद्धान्तोपक्षेपप्रसङ्ग एवानुसन्धीयेते । मनु-पराशरादि-स्मृतयः, भगवत्पाद भर्तृहरि सुरेश्वर संक्षेपशारीरकेष्टसिद्धि - विवरणाचार्य - भगवद्गीता वाचस्पति चिदानन्दास्तु सिद्धान्तमुपबृंहयितुं परामृष्टा इति विभागः ॥

तत्र कुमारिलवार्तिके, काणादसूत्राणि, न्यायमञ्जरी, लीलावती, जैमिनिसूत्रम्, न्यायकुसुमाञ्जलिः, विष्णुपुराणादिस्मृतयः, व्योमवती, भवनाथ-शालिकनाथकृतयः काश्चन, स्फोटसिद्धिः, भर्तृहरिकृतिः, काश्चन वादीन्द्रकृतयः, कन्दली, सुरेश्वरवार्तिकम्, संक्षेपशारीरकम्, इष्टसिद्धिः, विवरणम्, भामती, भगवद्गीता, प्रशस्तपादभष्यं च मुद्रापितानि । अन्ये निबन्धास्तु न मुद्रापिताः । अतो वैरूप्यं मा भूत्, इति केवलं

मुद्रापितनिबन्धमात्राणामुपलब्धिस्थानं नात्र प्रादर्शि—प्रियपाठका मुद्रितपुस्तकानि स्वयं समालोच्य परीक्षिष्यन्ते—इति । अतः तत्तद्ग्रन्थादिनामनिर्देशमात्रेण ग्रन्थान्तरगतानि वाक्यानि तत्तत्पृष्ठसङ्ख्यामात्रेणात्र सङ्गृह्यान्ते योज्यन्ते ॥

न्यायचन्द्रिका-तद्व्याख्ययोर्न्यायचन्द्रिकायाः (क) (ख) चिह्नाङ्कितमादर्शद्वय-मात्रमुपलब्धम् । व्याख्यायास्त्वादर्शान्तरं नोपलब्धम् । तत्रादर्शद्वये (ख) चिह्नं विना पाठभेदमात्रं टिप्पण्यामधो निर्दिष्टम् । तत्रापि (ख) चिह्नितपाठस्य सौष्ठवे (क) चिह्नितः पाठभेदः (क) चिह्नपूर्वकं टिप्पण्यां निक्षिप्तम् । आदर्शद्वयेऽपि न्यायचन्द्रिकायास्त्रुटयो बहुश उपलभ्यन्ते, एवं व्याख्यायामपि । तत्र यथासम्भवं ( ) कुण्डलित चिह्नमध्ये वर्णविशेषाः, पदविशेषा वा वाक्यसमन्वयमुद्दिश्य प्रियपाठकानां विमर्शनार्थं योजिताः । एतद्ग्रन्थप्रकाशने मद्रास ओरियण्टल् संस्कृतकोशागार पण्डितप्रवर न्याय-व्याकरण-शिरोमणिना विश्वनाथशर्मणा, वैद्यनाथशर्मणा च तदा तदा मुद्रणावसरे संशोध-नीयांशसूचनादिना बहूपकृतम्, इति तेषां वयमधमर्णाः । पण्डितप्रवर वा णी को श-र क्षा म णिः प्रकृतग्रन्थकोशागाराध्यक्षः श्री चन्द्रशेखरदीक्षित ( M. A. ) तु तदा तदा स्वयमप्येतन्निबन्धप्रकाशन उचितपरामर्शादिप्रदानेन सबहुमानमपेक्षित-सर्वविधसाहाय्यप्रदानेन चोपकर्ताऽस्माकमुत्तमर्णः ॥

एतद्ग्रन्थमुद्रापणे सुशिक्षिताक्षरयोजकाध्यक्ष कुट्टन् नायरभिधानेन रत्नं मुद्रणालयाध्यक्षेण च यथासौकर्यं ग्रन्थप्रकाशनार्थं सौकर्यविशेषप्रदाने महती श्रद्धा स्वीकृता, इति तावपि विशिष्टं धन्यवादमर्हतः ॥

अन्ततस्तु मद्रप्रान्त राजकीय विद्याविभागाध्यक्षः ( Director of Public Instruction ) विद्यामन्त्रिविभागकार्याधिकारिणश्चातिप्राचीनबहु-मूल्यसंस्कृत - भाषान्तरनिबन्धानां जीर्यमाणप्रायाणां गभीरतरार्थगुम्भितानां यावद-पेक्षितधनव्ययेनोद्धरणार्थं कृतदीक्षाः, संस्कृतभाषायाः, किं बहुना ? भारतवर्षस्यै-वोत्तमर्णा आचन्द्रतारकं एतादृशनिबन्धानां प्रकाशव्यवस्थापनेन भगवत उमारमणस्य रमारमणस्य चानुग्रहपात्राणि भूयासुरित्याशास्यते ॥

इति सुधीजनविधेयः

**अनन्तकृष्णशास्त्री**

१३–१२–'५८ महामहोपाध्याय-शास्त्ररत्नाकर-शतभूषण्यादिबिरुदाङ्कितः ।



# भूमिका द्वितीयभागः

## ॥ न्यायचन्द्रिकासमालोचिततत्तत्प्रकरण-
## पूर्वोत्तरपक्षसारसङ्कलनम्, तद्विमर्शश्च ॥

## ॥ (१) समन्वयपरिच्छेदः ॥

स्वतः प्रामाण्यवादः (1) (पृ-३-६१)

### ॥ परतः प्रामाण्यम् ॥

ज्ञानकारणातिरिक्तजन्यं प्रामाण्यम्। तत्र ज्ञानकारणातिरिक्तं करणदोषाभावः, करणगतो गुणो वा। न चानवस्थादोषः; स्वतः प्रामाण्यपक्षेऽप्यनभ्यासदशायामप्रामाण्यशङ्कायाः प्रमाणान्तरपरिहार्यत्वेन तस्याः समानत्वात्। दोषाभावस्य सन्निधिमात्रेण सहकारित्वमात्रम्, न तु कारणत्वमिति त्वप्रामाण्येऽपि दोषस्य दोषाभावविघटकतया सन्निधिमात्रमित्यापत्त्याऽप्रामाण्यस्यापि स्वतस्त्वापत्त्या न युक्तम्॥

बोधात्मकत्वेन स्वतः प्रामाण्यमप्यत एव व्याख्यातम्; अप्रमासाधारण्यात्। याथार्थ्यरूपं प्रामाण्यं भ्रमज्ञानेऽप्यविशिष्टं तन्निर्णयस्य बाधाभावनिर्णयाधीनत्वादन्योन्याश्रयापत्त्या नोपपद्यते। एतेन—प्रमितित्वे सति ज्ञानकारणातिरिक्ताजन्यत्वमीश्वरप्रमाया इव स्वतः प्रामाण्यमिति—प्रत्युक्तम्; प्रमितित्वस्य प्रवृत्तिप्रयोजकत्वमात्रस्य भ्रमसाधारण्यात्, प्रमायां दोषाभावस्य प्रतिबन्धकाभावविधयेवाप्रमायां दोषाभावाभावतया दोषस्य कारणत्वात्। ज्ञानकारणातिरिक्तत्वानतिरिक्तत्वनिर्णयाशक्यतोभयत्र समाना॥

प्रामाण्यपरतस्त्वेऽनुमानप्रयोगा बहवो निबन्धतोऽनुसन्धेयाः । एतेन—अभ्यासदशापन्नं ज्ञानम् , अप्रमा, सन्दिग्धप्रामाण्यवद् वा, ज्ञानजनकत्वात् ; अनभ्यासदशापन्नज्ञानवदित्यपि मन्तव्यम् ; अन्यथा प्रामाण्यसंशय एव नोपपद्यते ॥

अत्रोदयन-कन्दलीकाराक्षपाद-वादीन्द्र-वासुदेव-भूषणकार-जयन्तभट्ट-न्यायमुक्तावलीकार-महाव्रता वैशेषिकसिद्धान्तानुसारिणः, बौद्धाश्च पूर्वपक्षिणः ॥

—:*:—

## ॥ स्वतः प्रामाण्यम् ॥

प्रमितित्वे सति ज्ञानकारणातिरिक्ताजन्यत्वं स्वतः प्रामाण्यम् । तच्च न भ्रमसाधारणम् ; बोधात्मकत्वस्य प्रमात्वात् । भ्रमस्तु न ज्ञानम् ; अविद्यावृत्तिरूपस्य तस्याधिष्ठानज्ञानतादात्म्यमात्रेण ज्ञानत्वोपचारात् , इति न प्रमितित्वनिर्णयो बाधाभावाद्यवसेयः ; येनान्योन्याश्रयः स्यात् । एतेन—भ्रमयाथार्थ्यम् , तत्प्रवृत्तिप्रयोजकत्वं च —व्याख्यातम् ; तस्य यथार्थाधिष्ठानतज्ज्ञानतादात्म्यारोपनिमित्तस्य स्वतोऽयाथार्थ्यात् , प्रवृत्तिप्रयोजकत्वाभावाच्च । अप्रमात्वाध्यवसायस्तु बाधज्ञानाधीनदोषवत्तानिश्चयमात्रेण । अनभ्यासदशायां सांशयिकत्वं तु न स्वतःप्रामाण्यविरोधि ; प्रामाण्यसंशयमात्रत्वेन तत्राप्रामाण्यानिर्णयात् , तस्य दोषज्ञानाधीनत्वात् । न च तत्र बाधाभावनिश्चयाधीनत्वात् प्रामाण्यनिर्णयस्य दोषाभावाधीनत्वाद् वा परतः प्रामाण्यम् ; दोषाभावस्य तत्र सन्निधानमात्रत्वेन प्रमाहेतुत्वाभावात् । साक्षिवेद्यं हि प्रामाण्यं साक्षात् साक्षिसम्बन्धमात्रं ज्ञानस्य, ज्ञातस्य, अज्ञानस्य, अज्ञातस्य वाऽपेक्षते । न च दोषाभावस्तत्र हेतुः । अप्रमायां तु बाधेन, दोषनिश्चयेन चाज्ञानपरिणामस्य ज्ञानस्य, विषयस्य वा नाधिष्ठानज्ञानादितादात्म्यं विना साक्षिसम्बन्धः, इति साक्षात् साक्षिसम्बन्धविघटकतया दोषस्य ज्ञानतदप्रामाण्योभयहेतुत्वम् । गुणजन्यत्वे, दोषाभावजन्यत्वे वा प्रामाण्यस्यानवस्थाऽपि । ज्ञानजनकसामग्र्यां ज्ञानजननशक्तिप्रतिबन्धकत्वेन न दोषः प्रतिबन्धकः, किन्त्वप्रमात्मकाविद्यावृत्तिजननशक्त्याधायकतया, इति युक्तं दोषोऽप्रामाण्यहेतुरिति । दोषाभावेन तु न ज्ञानजनकसामग्र्यां शक्तिविशेष आधीयते, न वा गुणेनाधिकेन तत्र किमपि प्रयोजनं प्रमाया उत्पत्तौ, ज्ञप्तौ वा । वेदापौरुषेयत्वसिद्धान्ते तु न वेदसंवेदने वक्तृगुणाधीनप्रामाण्यसम्भावनापि । न चाभ्यासदशापन्नज्ञानप्रामाण्यनिश्चयस्तन्निश्चयान्तरदृष्टान्ताधीनः , येनानभ्यासदशापन्नज्ञानवदभ्यासदशापन्नं ज्ञानमप्यप्रमा, संशयो वा स्यात् ॥

अनुमानप्रयोगा एतदनुगुणाः, विपरीतानुमानदूषणप्रकाराश्च निबन्धे विस्तृताः । अत्र भाट्ट-प्राभाकर-वेदान्तसिद्धान्तानुसारिणः सिद्धान्तिनः । तत्र भाट्टवाक्यानि बहुशोऽनुसन्धीयन्ते ॥

—:*:—

मीमांसकानां मते स्वतःप्रामाण्यवादे, प्रामाण्यपरतस्त्वेऽनवस्थापत्तौ घट्टकुटीप्रभातनयेन प्रथम एव तत्स्वीकारो युक्त इति युक्तिः । जयतीर्थ-न्यायसुधाचित्सुखीप्रभृतिद्वैताद्वैतसिद्धान्ताशयस्तु तत्तज्ज्ञानग्राहकसाक्षिभास्यत्वं प्रामाण्यस्य, इति नात्रानवस्थादूषणसम्भावनाऽपि । साक्षिस्वरूपं त्वहमर्थः सप्तममिन्द्रियमिति जयतीर्थानुयायिनः । यत्राहमर्थ एव ज्ञानस्वरूप आत्मा, अद्वैतसिद्धान्ते त्वहङ्कारोपहितम्, तदुपलक्षितं वा साक्षिस्वरूपमिति विवेकः ॥

—: * :—

शक्तिवादः—(पृ-९२-११५)

## ॥ (२) शक्त्यतिरिक्तपदार्थत्वाभावः ॥

भावाभावातिरिक्तं न पदार्थान्तरम् । तत्र द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाः भावरूपाः, चतुर्विधोऽभावरूपोऽभावपदार्थः । सोऽपि न भावातिरिक्त इति तु प्रस्थानान्तरम् । षडेव पदार्थाः, सप्तैव वेति तु वस्तुस्थितिः । तत्र वह्न्यादेर्दाहादिजनकत्वं न तत्रातिरिक्तशक्तिनिबन्धनम् । कदाचन वह्निना दाहः, कदाचन न दाह इति तु प्रतिबन्धकाभावरूपसहकारिसत्त्वासत्त्वाधीनः, इति विनैव स्वतन्त्रशक्तिस्वीकारं सर्वकार्यनिर्वाहाद् न शक्तिरतिरिक्तपदार्थः । प्रतिबन्धका-भावोऽपि कार्यसहकारीति तु व्यवस्था । तच्च प्रतिबन्धककार्यवैचित्र्यानुसारेण दृष्टम्, अदृष्टं वोन्नेयम् । अतो न तत्रार्थापत्तिः, अनुमानं वा प्रमाणम् । ईश्वरेच्छा वा सर्वत्र कार्यनिर्वाहिका भवतु, न तदतिरिक्ता शक्तिरिति तु माहेश्वरं मतम् । गौर्यादौ शक्तिपदप्रयोगस्त्वौपचारिक एतन्मते; अन्यथा शक्तेरपि शक्त्यन्तरस्वीकारेऽनवस्था । वह्निना दाहादाहव्यवस्था तु प्रतिबन्धकाभावकारणत्वेनैव निर्वहति ॥

तत्र प्रतिबन्धकाभावस्य प्रागभावादिरूपत्वेनानियतहेतुकत्वापत्तिस्तु स्वतन्त्र-शक्तिवादेऽपि समाना ॥

अत्र प्रभाकरोऽप्यदृष्टविशेषेणैव कार्यनिर्वाहाद् न शक्तिकल्पनं साम्प्रत-मिति मन्यते ॥

"अशक्तं शक्तिमच्छक्त्या शक्तिः शक्तिमती तथा ।
अशक्तेति कथं योगमन्योन्यं हेत्वसम्भवात् ॥"

इति वार्तिकमपि शक्तिवादखण्डनानुगुणमत्रानुसन्धेयम् । "व्रीहीनवहन्ति" इत्यादौ संस्कारेण द्रव्यादावपि शक्तिसाधनमपि तत्र प्रमाणम् ॥

अत्र वल्लभ-वादीन्द्र-भूषण-प्रभाकरमतानुयायिनो विशेषतः पूर्वपक्षिणः, सामान्यतस्तु सर्वेऽपि वैशेषिकाः ॥

—:*:—

## ॥ शक्त्यतिरिक्तपदार्थत्वम् ॥

शक्तिः, न द्रव्यम् , गुणवृत्तित्वात् , सामान्य-विशेष-समवायेष्वपि सत्त्वाद् न गुणः, कर्म वा, सामान्यादिकं वा, किन्तु स्वतन्त्रपदार्थान्तरम् । तत्रादृष्टेन न शक्तिकार्यनिर्वाहः । तच्चादृष्टं मन्त्रादिनाऽऽत्मनि समवैतीति कल्पने न प्रमाणम्, महापातकादिजनितदाहानुकूलप्रबलेऽदृष्टे सति क्षुद्रप्रतिकूलादृष्टोदयविरोधात् वितथं तत्कल्पनम् । न चात्मसमवेतादृष्टेन काष्ठादौ दाहतदभावसम्भवः । तच्चादृष्टं यदि काष्ठादिसमवेतम् , तर्हि नामान्तरेण शक्तिवादः, आत्मसमवेतत्वे तु तेन काष्ठादौ दाहतदभावासिद्धिः । ईश्वरेच्छा तु दाहसामग्र्यामसाधारण्यां नान्तर्भवति ; तस्याः कार्यसामान्यकारणत्वेन विशेषकारणत्वाभावात् , नित्यत्वात्तु तस्या उद्भवाभिभवादिकल्पनाऽयोगः, इत्यतिरिक्तशक्तिस्वीकार एवोचितः । तत्र यथा सहकारिकारणं न सहकारिकारणान्तरमपेक्षते, अनवस्थापातात् , एवं शक्तेरपि न शक्त्यन्तरापेक्षेति समानम् ॥

तत्र शक्तिर्भावकारणजन्या कार्यम् । सा तु प्रतिबन्धकेन नश्यति, विपरीतव्यवहारयोग्यतां वाऽऽदधाति ॥

यथा—असत्त्वापादनम् , अभानापादनम् , अनानन्दतापादनं च शक्तित्रयमविद्यायाः ।

शक्तिसाधकानुमानप्रयोगाः, तद्विपरीतप्रमाणनिरासप्रकाराश्च निबन्धतोऽनुसन्धेयाः । न केवलमर्थापत्त्यनुमाने, किन्तु "पराऽस्य शक्तिर्विविधैव श्रूयते" इत्यादिश्रुतिरपि तत्र प्रमाणम् ।

"अशक्तं शक्तिमच्छक्त्या शक्तिः शक्तिमती तथा"

इति वार्तिकं तु शक्तिशक्तिमतोर्वास्तवसंसर्गनिषेधाभिप्रायम् । व्रीह्यादिष्वतिशयपदवाच्यापूर्वस्यैवोत्पत्तिः प्रमाणबलात् , न तु तत्र शक्तिस्वीकारोऽपि ॥

अत्र भाट्टमतम् , वेदान्तसिद्धान्तश्च सिद्धान्तपक्षः । अयमपि वादो द्वैताद्वैतसिद्धान्तसाधारणः । पक्षद्वयेऽप्यत एवान्विताभिहितान्वयवादयोरुत्थितिः । व्यवहारे भाट्टनय इति सत्यविरोधे, नान्यथा ॥

—:*:—

वैशेषिक-नैयायिकदर्शनयोरारम्भवादस्वीकारात् प्रतिबन्धकाभावेनैव सर्वत्र कार्यकारणभावो निर्वहति । मीमांसक-साङ्ख्य-पातञ्जल-द्वैत-विशिष्टाद्वैत-शुद्धाद्वैत-केवलाद्वैतेषु सत्कार्यवादस्य, सद्विवर्तवादस्य वा स्वीकारात् प्रकृतेः, मायायाः, ब्रह्मणो वा विक्षेपावरणादिशक्तिस्वीकारं विना न स्वीय-सिद्धान्तस्थितिः, अतः शक्तिवाद आवश्यकः । अद्वैतमते त्वावरणविक्षेप-शक्तिद्वयं मायायाः स्वीक्रियते, येन सच्चिदानन्दस्य ब्रह्मणः सदाद्यात्मना प्रतीत्यादिकम् ॥

—: * :—

वेदापौरुषेयत्ववादः—(पृ-११६-१८१)

## ॥ (३) वेदपौरुषेयत्ववादः ॥

वेदः, पौरुषेयः, वाक्यत्वात्; कालिदासादिवाक्यवदित्यादिप्रयोगा वेदपौरुषेयत्वे प्रमाणानि । बुद्धिपूर्वा वाक्यकृतिर्वेद इति का णा द सूत्रमत एव । जगत्कर्तृत्वमतिरिच्य शास्त्रयोनित्वं पृथक् सूत्रितम् सर्वज्ञस्येश्वरस्य न केवलं कर्तृत्वं साधारणम्, किन्तु वक्तृत्वमप्यसाधारणमिति गमयति; अन्यथा तद्वैयर्थ्यात् । हिताहितोपदेष्टृत्वं तज्ज्ञानवत्त्वं वा करणपाटवं विना नोपपद्यते । कुलालावयवि-सिद्ध्यर्थं तदवयवपरम्परायां कारणभूतायामधिष्ठाननियमदर्शनेनेश्वरस्यापि स्थानकरण-पाटवादिकमवश्यं स्वीकर्तव्यम् । पौरुषेयत्वेऽपि तस्य वक्तुराप्ततमत्वात्, अविप्रलम्भ-कत्वाच्च तद्वाक्यं वेदो नाप्रमाणम् ॥

सर्वज्ञस्येश्वरस्य सर्वशक्तस्य न प्राचीनवेदक्रमापेक्षा नियता । पूर्वापरविरोध-परिहारेण वेदवाक्यानां विरचनं तदर्थानुसन्धानं विनोपपद्यते । प्रवाहनित्यत्वं तु घटपटादेरपि समानम् । शब्दानित्यत्वेन, पौरुषेयसमयमपेक्ष्यैव वेदवाक्यानामपि बोधकत्वेन, शब्दार्थसम्बन्धानित्यत्वेन, वर्णनित्यत्वेऽपि तत्क्रमविशेषविशिष्टवाक्याना-मनित्यत्वेन, वेदः, अपौरुषेयः, अस्मर्यमाणकर्तृकत्वात्; इत्यनुमानस्य वेदकाल-दवीयस्त्वेन, तत्प्रणेतुः पुरुषस्य सकलपुरुषविलक्षणत्वेन, नियतशरीरपरिग्रहाभावा-

दिना कर्तुरस्मरणनिर्वाहात् एकपुरुषकर्तृकस्मरणाभावस्याप्रयोजकत्वेन, सकलपुरुष-कर्तृकस्मरणाभावस्य दुरधिगमत्वेन हेत्वसिद्ध्याऽसाधकत्वेन च न वेदापौरुषेयत्वम् ॥

अत्र पूर्वपक्षिणः—काणाद-भूषणकार-भासर्वज्ञ-न्यायमुक्तावल्युदयन-जयन्तभट्ट-वासुदेवमिश्र-व्योमशिवाः ॥

—: * :—

## ॥ वेदापौरुषेयत्वम् ॥

वेदः, अपौरुषेयः, अस्मर्यमाणकर्तृकत्वादित्यनुमानं वाक्यत्वहेतुकानुमानस्य प्रकरण-समम् । अनुभूतं स्मरणपथमेव नारोहति कस्यापीति न युक्तम्, अननुभूते त्वस्मरणमुपपद्यते । कालदवीयस्त्वं नास्मरणप्रयोजकम्; आकाशादिकर्तुरपीश्वरस्यासिद्ध्यापत्तेः । वेदवाक्यानि तु न तत्स्मारकाणि, आगमा वा; अप्रामाण्यापत्तेः । अत एव स्मृतिः—"अनादिनिधना वागुत्सृष्टा स्वयम्भुवा" इति । यं प्रति साध्यतेऽपौरुषेयत्वम्, येन च, तयोरेकतरस्यापि सम्प्रदायेन तत्कर्तुः कालिदासादेरिवास्मरणाद् नानुमानविरोधः ॥

सृष्टिश्रुतिस्तु हिरण्यगर्भादिद्वाराऽभिव्यक्तस्योपदेशपरम्परया प्रवर्तनमात्रेण । सर्वज्ञेन सर्वशक्तेन कल्पान्तरीयवेदस्यापि परस्पराविरुद्धतया स्मृतस्यैवोपदेशोपपत्तौ वेदान्तरकल्पनायां प्रयोजनाभावः; यथापूर्वं सृष्टेरन्यथाऽनुपपत्तेः । घट-पटौ कारणात्मनाऽवस्थानेन, प्रवाहनित्यत्वेन, तत्तद्रूपेणाभिव्यक्तौ, इति कर्तृस्मरणं नियतमेव । न घटपटादिकमत्यन्तं वेदापौरुषेयत्वे प्रतिकूलं निदर्शनम् । कर्तुरिच्छा न लिङर्थः, किन्तु धात्वर्थस्येष्टसाधनत्वमेव, इति न विध्यनुपपत्त्यापि पौरुषेयत्वम् । पूर्वपूर्वक्रमानपेक्षोच्चारणविषयक्रमकत्वमेव पौरुषेयत्वं निषिध्यते, न तु तद्विपरीतम्, इति न शास्त्रयोनित्वादिविरोधः, न वा तदवगते सर्वज्ञस्य तस्य तद्वक्तृत्वं विरुध्यते । अन्तर्यामिण-स्तस्य हिरण्यगर्भेऽपि तच्छरीरेणैव वक्तृत्वम्, मायाशरीरकत्वेन वा ॥

अत्र सिद्धान्तः—मीमांसक-वेदान्तिमतेन, मनु-पराशरादिस्मृत्या च ॥

—: * :—

वेदापौरुषेयत्वं वेदप्रधानसर्ववैदिकदर्शनसम्मतम् । तत्सशरीरपारमार्थिकतायां परं विप्रतिपत्तिः । तत्र मायाशरीरकत्वेन मायाया अनित्यत्वात्, अपरमार्थत्वाद्वा-ऽद्वैतनिर्वाहः । यावत्तत्त्वसाक्षात्कारं सर्वमतसाधारण्यमेवाद्वैतसिद्धान्तस्यापीति न किञ्चिदपि छिन्नमद्वैतवादस्यापि वैदिकत्वे । शब्दनित्यत्वानित्यत्वविचारो-ऽत्रानुषङ्गिको मीगांसकमतेनानुसंहितः । वर्णनित्यत्वसाधनं मीमांसकानां

स्वरूपतो नान्यथाभावो वाक्यसामान्यस्य, क्रममात्रानित्यत्वेऽपीत्यभिप्रेत्य। वेदवाक्ये तु तत्रापि क्रमैकरूप्यमिति स्थापनमेव लक्ष्यं मीमांसकानाम्। स्फोटवादोऽप्यनेनैव न्यायेन निरासमर्हति ; द्वैत-विशिष्टाद्वैताद्वैतसिद्धान्तेषु तस्याप्यनङ्गीकारात्। जयतीर्थन्यायसुधापि वेदापौरुषेयत्वप्रकरण एव शब्द-नित्यत्वसाधनमनुक्रमते। तत्त्वप्रदीपिकाऽप्यत्र न्यायसुधामेवानुकुरुते ॥

—: * :—

वाक्यप्रामाण्यम्—( पृ-१८२-२१६ )

## ॥ (४) अभिहितान्वयवादः ॥

अन्विते गौरवाच्छक्तेरन्वयस्यान्यतो गतेः।
पदार्थैरेव तत्सिद्धेर्नान्विते शक्तिमत् पदम् ॥

अन्विताभिधानवादे हि पर्यायशब्दानां पदार्थ इव वाक्यार्थेऽपि शक्तिकल्पना-पत्तिः। यद्यप्यभिहितान्वयवादे श्लिष्टपदार्थेषु पृथगनेकशक्तिकल्पना ; तथापि श्लिष्टपद-स्यान्विताभिधानेऽपि विलक्षणार्थभेदेन शक्तिकल्पना समाना। अन्विताभिधानवादेऽ-प्यन्वितशक्तस्य पदस्यान्वयेऽपि विशेषणे शक्तिः स्वीकरणीयैव ; अन्यथा तच्छाब्दत्वा-योगादिति दोषसाम्यमनेकशक्तिकल्पनायाम्। व्युत्पन्नपदस्य प्रमुषितसंस्कारस्य पदार्थस्मृतिविधुरस्य वाक्यार्थप्रत्ययादर्शनाद् न पदार्थेऽपि शक्तिं विना निर्वाहः। यत्किञ्चित्सन्निधिमात्रं न प्रयोजकम्, किन्तु शाब्दः सन्निधिरेव प्रयोजकः, इति पदैः पदार्थबोधनमावश्यकम्। अस्तु वा न दोषसाम्यम्, एकतरत्र गौरवं वा, तथापि सन्निधानात् पदार्थानामेव वाक्यार्थानुभावकत्वं युक्तम् ॥

ननु विप्रकृष्टानां पदानां पदैः पदार्थाभिधानं पाके ज्वालेव काष्ठानां व्यापारमात्रम्, इति फलायोगाव्यवच्छिन्नं कारणं करणमिति न्यायात् पदार्थानामेव वाक्यार्थानुभावकत्वम्। शाब्दत्वप्रसिद्धिस्तु तत्प्रयोज्यत्वेनौपचारिकी। ततश्चाभि-हितान्वयवाद एव युक्तः। अयं पूर्वपक्षो न्यायचन्द्रिकामतेन। चित्सुख्या अपि मुख्यं

तात्पर्यमत्रैवेति भूमिकायां व्यक्तम्। अयं तु पक्षो भाट्टोपज्ञमिति व्यक्तमन्यत्र। एतन्मते पदार्था एव प्रमाणम्, न तु पदानि, इति न सप्तमप्रमाणकल्पनापत्तिः। व्यक्तं चैतद् मन्त्राधिकरणभाट्टदीपिकायाम्, "भावार्थाः कर्मशब्दाः" इत्यधिकरणे भाष्यवार्तिकादौ च। अत्र पूर्वपक्षी कुमारिलभट्टः॥

—:*:—

## ॥ अन्विताभिधानवादः ॥

अन्विताभिधानवादे पर्यायपदानामन्वये यद्यपि पृथक् शक्तिकल्पना; तथाप्यभिहितान्वयवादे श्लिष्टपदार्थेषु बहुषु बहुशक्तिकल्पनादोषसाम्यम्। अन्विताभिधाने तु तत्तत्पदार्थान्वित एव शक्तिस्वीकाराद् न गौरवम्। पदान्येवाहत्य पदार्थस्मृतीरनपेक्ष्यान्वितं वा क्यार्थं बोधयन्ति, इति नात्र पदार्थ-तदन्वययोः शक्तिकल्पनागौरवमभिहितान्वयवाद इव। पदैरिव प्रमाणान्तरैरपि पदार्थप्रत्ययसम्भवाद् न पदानां पदार्थेऽपि शक्तिकल्पनं युक्तम्; सन्निधिमात्रेणापि वाक्यार्थप्रतीतिसम्भवात्॥

योग्येतरसंसृष्टार्थबोधनं ह्यन्विताभिधानं नाम। तत्र च संसर्गस्यापि पदार्थत्वाभावे शब्दप्रमाणं वाक्यार्थेऽप्रमाणं स्यात्। वाक्यार्थस्य शाब्दत्वप्रसिद्धिरपि व्याहन्येत। किं बहुना? प्रमाणान्तरोपस्थितार्थसंसर्गस्यापि शाब्दत्व एव प्रत्यक्षानुमानोपमानानि प्रमाणानीति वादो विजयेत। पदार्थप्रामाण्यवादस्तु पदप्रामाण्यवादेऽनुमानमेव स्यात्। शब्दप्रयोज्यत्वेन शाब्दत्वं प्रत्यक्षमूलकानुमानोपमानादीनामपि प्रत्यक्षत्वापत्त्या न युक्तम्। स्मारितपदार्थानां प्रत्यक्षानन्तर्भावे सत्यप्रामाण्यापत्तिः। शब्दप्रामाण्यवादः, पदार्थप्रामाण्यवादश्चेत्यनर्थान्तरम्। न च पदार्थानां संसर्गगमकत्वम्; असम्बन्धात्। लाघवं त्वत्र विशिष्टैकशक्तिकल्पनेन पूर्वमुपपादितम्। न चात्र सिद्धान्ते श्रूयमाणस्य, स्मर्यमाणस्य वा पदस्य तत्तत्पदार्थस्मरणजननशक्तिः, एकस्मृतिगोचराणां तेषामेव पदानामन्वितार्थाभिधानशक्तिः, सकलपदगोचरस्य स्मरणस्य पदेष्वन्विताभिधानशक्त्याधानशक्तिरिति शक्तित्रयकल्पनशङ्का समुन्मिषति; पदस्य] ·· पदार्थस्मारकत्वाभावात्, पदार्थमात्रेऽनुवादेन विशिष्टैकशक्त्यैव निर्वाहस्योक्तत्वात्॥

"पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः॥"

इति त्वनुमानमात्रम्, न तु शाब्दम्; अन्यथा प्रमाणान्तरप्रतिपन्नेष्वपि संसर्गप्रत्ययः शाब्दः स्यात्। लक्षणा तु पदवृत्तिः, नार्थेष्ववकाशते—इति॥

“सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति नः स्थितम्” इत्यपि—प्रत्युक्तम्; पदानां तात्पर्यानुपपत्तिरेव लक्षणाबीजम्, नान्वयानुपपत्तिः, प्रमाणान्तरविरोधो वा; विषं भुङ्क्ष्वेत्यादौ पदानामन्वयानुपपत्तेरभावात्। अतोऽन्विताभिधानवाद एव युक्तः॥

व्यवहारे भाट्टनय इति तु न मानवं वचनम्। न च तदनङ्गीकारे विकल्पितार्थासिद्धिर्यत्र कुत्रापि॥

समन्वयसूत्रभाष्यमपि—‘न च तद्गतानां पदानां निश्चिते समन्वयेऽधिगम्यमाने’ इत्यन्विताभिधानवादमनुगृह्णाति॥

अत्र सिद्धान्ती प्राभाकरमतानुयायिनी, न्यायसुधानुकारिणीच न्यायचन्द्रिका॥

—:*:—

अत्र चित्सुखी—“न च तद्गतानां पदार्थानां निश्चिते समन्वयेऽधिगम्यमाने” इति विवरणाभिमतं पाठमादायाभिहितान्वयवादमुपक्षिपति, अन्विताभिधानवादस्तु भामत्यभिमतपाठानुयायी। भामतीपक्षपाती विद्यासागर इति निबन्धमध्ये तत्र तत्र व्यक्तम्। “अपरे प्रत्यवतिष्ठन्ते” इति द्वितीयपक्षतयाऽभिहितान्वयवादोपक्षेपात् चित्सुखाचार्या नात्रातीव निर्भराः। जयतीर्थन्यायसुधेव न्यायचन्द्रिकाप्यभिहितान्वयवादनिरसनेनान्विताभिधानवादमेव समर्थयति। उभयत्रापि तात्पर्यविषयस्यैव वाक्यार्थत्वात् सिद्धार्थेऽपि प्रामाण्यस्वीकारात् तत्त्वमस्यादिवाक्याखण्डार्थत्वं न व्याहन्यते। जयतीर्थन्यायसुधाप्यन्वयसामान्यस्यैव पदार्थत्वेऽप्यशक्यस्यापि समन्वयविशेषस्य तत्तद्वाक्याद् अनुभव इति स्वीकरोति। फलतस्तु नात्राभिहितान्वयवादान्विताभिधानवादयोर्विशेषः। न्यायरत्नावल्यां ब्रह्मानन्दसरस्वत्यप्यन्वितपदेन तात्पर्यविषयस्यैव विवक्षणादखण्डार्थत्वाविरोधं समर्थयति॥

—:*:—

सिद्धार्थप्रामाण्यवादः—(पृ-२१७-२३१)

## ॥ (५) कार्यार्थ एव वेदार्थः ॥

कार्यान्वितार्थबोधकत्वमेव वेदवाक्यानाम्—शब्दभावनाभाव्यार्थभावनायाः सेतिकर्तव्यताककार्यस्य वा बोधकानां लिङादिघटितानाम्। सिद्धार्थबोधकानि तु

वाक्यान्युक्तविधामतिक्रान्तानि न प्रमाणम् । "आम्नायस्य क्रियार्थत्वात्" इत्यादि-जैमिनिसूत्रमप्यत्र प्रमाणम् । स्वात्मनि प्रवर्तकभावेनानुभूतं कार्यमेव प्रयोज्यमिह प्रवृत्तिहेतुभावेनानुमाय तदन्विते़ऽर्थे शब्दसामर्थ्यं गृह्णातीति निष्कर्षः ॥

"अज्ञातसङ्गतित्वेन शास्त्रत्वेनार्थवत्तया ।
मननादिप्रतीत्या च कार्यार्थाद् ब्रह्मनिश्चयः ॥"

इति तु भामती । अत्र पूर्वपक्षी प्राभाकरः ॥

—: * :—

## ॥ सिद्धार्थोऽपि वाक्यार्थः ॥

सिद्धेऽपि वस्तुनि वाक्यानां सप्रयोजनानां कार्यार्थानामिव प्रामाण्यम् । "पुत्रस्ते जातः" 'कन्या ते गर्भिणी' इत्यादिसिद्धार्थेऽपि कार्यानन्विते लिङादिपदाघटिते वाक्यप्रामाण्यात् । क्रियार्थत्वं वाक्यस्य क्रियाप्रयोजनकत्वेन, न तदभिधेयकत्वेन । अत एव निवृत्तिमात्रपराणाम्, धात्वर्थानिष्टसाधनतामात्रबोधकानां वा प्रामाण्यम् ॥

"सिद्धेर्गुणविशेषेण पचतीत्यपि संविदः ।
क्रियापदार्थस्यान्यस्य नानुमानं प्रकल्प्यते ॥"

अतः कार्यसंसृष्टस्यैवार्थस्य बोधनं न प्रामाणिकम्, किन्तु योग्येतरसंसृष्टस्यैवार्थस्य तत् प्रामाणिकम् । तच्च तात्पर्यानुसारेण ॥

सिद्धान्ती तु भाट्टानुसारिणी न्यायचन्द्रिका ॥

—: * :—

अयमपि वादो न्यायसुधा-तत्त्वप्रदीपिकयोरपि यथान्यायचन्द्रिकमेव विचारितः । सिद्धार्थेऽपि प्रामाण्यसमर्थनं भाट्टानां प्राभाकरैकदेशिनाम्, नैयायिकादीनाम्, अन्येषामुपासनापरतयैव वाक्यप्रामाण्यवादिनां न सप्रयोजनम्, अद्वैतमत एव तत्समर्थनं सप्रयोजनम् । तात्पर्यानुसारेणेतर-संसृष्ट इवाखण्डेऽप्यर्थे प्रामाण्यं दुर्वारम् । सति चैवमुपासनाशेषतयैव, उपासनाविषयतयैव वा ब्रह्मणो वाक्यार्थेऽन्वय इति वादे सिद्धार्थप्रामाण्य-व्यवस्थापनं वितथम्, अद्वैतवाद एव तु तत् सफलमिति मन्तव्यम् ॥

॥ स्फोटवादादिनिरासः ॥ (पृ. २३२ – ३२४)

## ॥ (६) स्फोटवादनिरासागमप्रामाण्यवादादयः ॥

अनन्तराः स्फोटवाद-शब्दप्रामाण्योपमानार्थापत्त्यनुपलब्धिप्रामाण्यवादाः तस्य, तस्य स्वतन्त्रप्रामाण्याक्षेपपरिहारसुखेन तत्तद्वाद्यभिमतरीत्या विशदीकृताः ॥

तत्र प्रत्यक्षानुमान-शब्दा एव प्रमाणमिति द्वैत-विशिष्टाद्वैतसिद्धान्तौ । कणादप्रभाकरमते तु प्रत्यक्षानुमानोपमानानि प्रमाणानि, न तु शब्दः प्रमाणमिति । तत्र लौकिक-वैदिकसाधारण्येन वेदस्यापि लौकिकवाक्यानामिव पौरुषेयत्वादनुमानेऽन्तर्भाव इति वैशेषिकसिद्धान्तः, प्राभाकरसिद्धान्तस्तु लौकिकशब्दविलक्षणत्वादपौरुषेयस्य वेदस्य स्वतः प्रामाण्यम्, शब्दाप्रामाण्यवादस्तु लौकिकशब्दमात्राश्रय इति ॥

न्यायदर्शनसिद्धान्तस्तु शब्दोऽपि तुरीयं प्रमाणम् । तत्रार्थापत्तिर्व्यतिरेकानुमानेऽन्तर्भवतीति तदीयं हृदयम् । प्राभाकरास्तु -- व्यतिरेक्यनुमानमस्वीकुर्वाणा अर्थापत्तिमपि प्रमाणयन्ति, विप्रतिपद्यन्ते त्वनुपलब्धिप्रमाणतायाम्, यन्मतेऽभावस्याधिकरणात्मकत्वेन षट्पदार्थीवाद इव, न स्वतन्त्रपदार्थत्वम् । तत एव नाभावप्रमाणता स्वतन्त्रा ॥

भाट्टकेवलाद्वैतिनस्तु—स्वतन्त्रमभावं पदार्थमूरीकुर्वाणा व्यतिरेकव्याप्तितन्निबन्धनानुमानविशेषं चानङ्गीकुर्वाणाः प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्याख्यानि षट् प्रमाणानि नियमयन्ति । अत्र पूर्वोत्तरपक्षाणां सारा निबन्ध एव विशदाः ॥

—: * :—

## ॥ तत्र स्फोटवादस्य वर्णातिरिक्तस्फोटे प्रमाणाभावेन निरासः ॥

गौरित्येकं पदमिति प्रत्यक्षं तु वन-सेनादिवदेकार्थकारित्वनिबन्धनमौपचारिकम् । निरवयववर्णातिरिक्तपद-वाक्य-महावाक्यादिस्फोटकल्पना निष्प्रयोजना, यद्यर्थप्रतीतिमात्रं पदानां

लक्ष्यम्। स्फोट एव ब्रह्मेति वादस्तु तस्यैव चेतनत्वस्यापि स्वीकारे केवलाद्वैतवाद एवेति तु जयन्तभट्टः। वेदस्यापि स्फोटात्मकस्यैव प्रामाण्ये, अर्थबोधकत्वे च प्रतिपाद्य-प्रतिपादकयोरैक्यापत्तिः, वेदप्रामाण्यानिर्वाहः, ब्रह्मौपनिषदत्वविरोधश्च ॥

स्फोटवादोऽयं वैयाकरणानाम्। स तु वैशेषिक-न्याय-मीमांसा-वेदान्तदर्शनानां सर्वेषां विरुद्धः। तदवलम्बनार्थमत्र मण्डनमिश्राणां स्फोटसिद्धिरेव शरणीकृता। तत्र पूर्वपक्षः स्फोटसिद्ध्याद्यनुसारेण, सिद्धान्तस्तु प्राधान्येन वार्तिकाद्यनुसारेण। तेन प्राधान्येनाद्वैतवादस्य विरोधस्तु तदतिरिक्तब्रह्मवादास्वीकारनिबन्धनः। सदात्मनोऽपि स्फोटस्याचिदनानन्दात्मनोऽज्ञानविषयत्वाभावाद् नात्र विवर्तवादोपपत्तिः, इति साक्षाद्विरोधोऽद्वैतवादेन स्फोटस्यातिविशदः। अत एव तदभिमतशब्दार्थतादात्म्याद्ययोगः ॥

—: * :—

अन्येष्वपि वादेषु यथासम्भवं केवलाद्वैतवादेऽसाधारणं प्रयोजनमन्यत्र। विशेषेण स्फोटपक्षपाती नागोजिभट्टस्तु भास्करमतानुयाय्यपि, इति मिथ्याज्ञानातिरिक्तां मूलाविद्यां निरस्यति। तच्च नोपपन्नमिति भूमिकायाम्, अत्राप्युत्तरत्रान्ते विशदीकरिष्यते ॥

—: * :—

॥ प्रमालक्षणम् ॥ (पृ. ३२५-३३२)

## ॥ (७) नैयायिकानां प्रमालक्षणम् ॥

यथार्थानुभवः प्रमा। याथार्थ्यं त्वबाधितत्वम्। इदं रजतमित्यादिभ्रमे नास्यातिव्याप्तिः; तत्र रजतत्वसंसर्गस्य बाधात्। अविसंवादित्वं वा याथार्थ्यम्। इदं रजतमिति ज्ञानं तु विसंवादि। अतो न प्रमा। अनुभवत्वं तु जातिविशेषः। अधिगतार्थपरिच्छित्तिस्तु न प्रमा; अधिगतपदवैयर्थ्यात्। न ह्यधिगतेऽर्थेऽधिगतिर्भवति। अतः सा न प्रमा; धारावाहिकज्ञानाव्याप्तेः। भ्रमोऽपि ह्यनधिगतार्थविषय इति तत्रातिव्याप्तिश्च। अबाधितत्वविशेषणेन तद्वारणं तु भ्रमस्यापि तत्कालेऽबाधितार्थत्वाद् न सम्भवति ॥

—: * :—

## ॥ वेदान्तिनां भाट्टानां च प्रमाणलक्षणम् ॥

अनधिगतार्थगन्तृत्वं प्रमात्वम्। स्मृतिस्त्वधिगतार्थत्वाद् न प्रमा। भ्रमोऽपि तत्काले-ऽबाधितार्थविषयत्वेऽपि न व्यवहारदशायामबाधितार्थविषयः, इति न तत्रातिव्याप्तिः। स्मृतिर्न प्रमा। यावत्तत्तत्प्रतीति, अबाधितार्थविषयकत्वं सर्वत्रानुगतम्। धारावाहिकज्ञानमप्यत एव व्याख्यातम्; कालस्यानधिगतस्य तत्र भानेनाविरोधात्। एतज्जनकत्वेन परोक्षापरोक्षसाधा-रणेन सर्वेषां ज्ञानानां बोधात्मकत्वेन स्वतः प्रामाण्यमेव। प्रातिभासिकस्याप्यसत्त्वापादकाज्ञानविषय-त्वाद् भ्रमोऽनधिगतविषयः ॥

—: * :—

अत्र न्यायसुधा-न्यायचन्द्रिकयोः सिद्धान्तभेदा विस्तरेण भूमिकायां ३५-३८ पृष्ठेषु निर्दिष्टाः ॥

—: * :—

॥ अखण्डार्थत्ववादः ॥ (पृ. ३३२–३९८)

## ॥ (८) अखण्डार्थत्वनिरासः ॥

तत्त्वमस्यादिवाक्यं नाखण्डार्थे प्रमाणम्; अखण्डस्याधिगतस्याननधिगमेन तत्प्रमात्वायोगात्। अतस्तत् सखण्डार्थमेव; वाक्यसामान्यस्य प्रमाणस्य संसृष्टार्थ-विषयकत्वनियमात्। स्वरूपसंविन्मात्रं ह्यधिगतार्थबोधनमात्रम्, अतो न तत्प्रा-माण्यापत्तिरखण्डार्थतायाम् ॥

स्वरूपसंविन्मात्रं हि प्रमाणान्तराप्रमेयम्, शब्दान्तरावाच्यं च न शक्त्या लक्षणया वा पदबोध्यम्, तत्समुदायात्मकवाक्यबोध्यं वा भवति। पदानां हि व्यक्तिरेवार्थः, जातिविशिष्टव्यक्तिर्वा, न तु जातिमात्रम्, येन गामानयेत्यादौ व्यक्तेरिवावाच्यत्वेऽपि लक्षणया स्वरूपभानं स्यात् ॥

सर्वथाऽभिहितान्वयवादे, अन्विताभिधानवादे वा संसृष्टार्थपरत्वमेव वचसाम्। तथा चोक्तम्—"वाक्यात्मनोऽनेकपदार्थात्मनि वाक्यार्थे धीजननात्"—इति ॥

"स एष नेति नेती"ति तु अस्ति नास्तीति व्याहतार्थत्वात् कचित् कस्यचिन्निषेधः, न त्वेकस्य सर्वत्रात्यन्तिको निषेधः। तथा च प्रयोगः—सत्यज्ञानादिवाक्यम्, संसृष्टार्थपरम्, वाक्यत्वात्; गामानयेतिवाक्यवत्—इति। अन्यथा त्वेकेनैव पदेन गतार्थत्वात् पदान्तरवैयर्थ्यम्; क्रियाकारकादिसंसर्गोपलक्षितार्थस्याखण्डस्यैकत्वात्, एकप्रातिपदिकार्थमात्रबोधनस्य पदान्तरनिरपेक्षत्वात्॥

प्रकृष्टप्रकाशश्चन्द्र इत्यत्रापि संज्ञासंज्ञिसम्बन्धपरत्वात्, लक्षणवाक्यत्वेऽप्यप्रकाश-खद्योताद्यप्रकृष्टप्रकाशव्यावृत्तिविशिष्टस्य, तदुपलक्षितत्वविशिष्टस्य वाऽर्थस्य बोधनाद् नाखण्डार्थत्वम्। "विज्ञानमानन्दमि"ति सामानाधिकरण्यं तु विशेष्य-विशेषणभावेन। अत एव "आनन्दं ब्रह्मणो विद्वानि"ति ब्रह्मानन्दयोर्भेदेन निर्देशः। तथा च नाखण्डार्थत्वं सत्यज्ञानादिवाक्यानाम्, तत्त्वमस्यादिवाक्यानां च॥

अत्र पूर्वपक्षिणः—भवनाथः, तत्त्वाविर्भावकारः, मानमनोहरश्च। तत्राद्यो नयविवेककारः प्रसिद्धः। अन्यौ तु न ज्ञायेते। व्यक्तिशब्दार्थतापक्षेऽवान्तरविषये पक्षपातिनस्तु मीमांसकवेदान्तिपक्षविरोधिनः—सामान्यतो नैयायिकाः, विशेषतस्तु व्योमशिवाचार्यः, जयन्तभट्टः, अपोहशब्दार्थवादिनः सौगताश्च॥

—: * :—

## ॥ अखण्डार्थत्वसमर्थनम् ॥

स्वरूपमात्रसंवेदनस्याज्ञातसंविन्मात्रबोधकत्वेनानधिगतार्थगन्तृत्वरूपं प्रामाण्यं सूपपादम्।

"आश्रयत्वविषयत्वभागिनी
निर्विभागचितिरेव केवला"

इति चिन्मात्रस्याज्ञानविषयत्वोपगमेन प्रमाणप्रवृत्तितः प्रागज्ञातार्थबोधकत्वेन तत्त्वमस्यादि-वाक्यानां प्रामाण्यानपायात्। भ्रमस्य तु न ज्ञानत्वम्, न नाऽनधिगतार्थत्वम्; प्रातिभासिकस्य तूलाविद्यापरिणामस्यासत्त्वापादकाविद्याविषयत्वाबाधेन तद्विषयस्यानधिगतत्वाबाधात्॥

स्वरूपमात्रस्याशक्यत्वेऽपि लक्षणया बोधो न विरुध्यते। असंसृष्टपदार्थस्वरूपमात्रबोधकानि पदान्यखण्डेऽर्थे प्रमाणानीति तु निष्कर्षः। पदार्थो हि जातिरेव, न तु व्यक्तिरित्याकृत्यधिकरणे व्यक्तम्, इति व्यक्तेरिव पदान्तरावाच्यत्वेऽपि लक्षणा न विरुध्यते। व्यक्तिप्रतीतिपुरस्कारेणैव

जातिप्रत्ययाद् जातिप्रत्ययान्यथानुपपत्त्या व्यक्तिप्रतीतिः, इति तस्या अर्थापत्त्यापि लभ्याया लक्षणयैव शब्देन बोधनमित्यवश्यं स्वीकर्तव्यम् । व्यक्तिशब्दार्थतावादे त्वनेकशक्तिकल्पनापत्तिः। जातिशक्तिवादे तु न सा । अतः—

"आनन्त्याद् व्यभिचाराच्च न शक्या व्यक्तयो मताः ।
आकृतिस्तु भवेच्छक्त्या लाघवाव्यभिचारतः ॥"

इति जातिशक्तिवादेऽप्येतादृशे स्थले व्यक्तिबोधो लक्षणयैवेति वक्तव्यम् । सर्वथा त्ववाच्यस्यापि लक्ष्यत्वसम्भवात् सत्यज्ञानादिपदानां निर्विशेषैकरसचिन्मात्रलक्षकत्वं न विरुध्यते ॥

वाक्यानां संसृष्टार्थपरत्वं तु तात्पर्यानुसारित्वात् वाक्यप्रामाण्यस्य, अन्यथाऽनभिमतसंसर्गस्यापि बोधापत्त्या चासंसृष्टस्वरूपमात्रतात्पर्यनिर्णये बाधादुत्सर्गमात्रम्, न तु स नियमः ; अन्यथा चन्द्रस्वरूपमात्रप्रश्नोत्तरे प्रकृष्टप्रकाशश्चन्द्र इति वाक्येऽपृष्टोत्तरत्वमापद्येत, येन चन्द्रशब्दवाच्यः कश्चन, स च प्रकाशवान्, अप्रकाशव्यावृत्त इति ज्ञातम्, प्रकाशवतां खद्योतादीनां समवधाने चन्द्र एतेषु प्रकाशवत्सु को वेति न ज्ञातम्, तस्यैव कश्चन्द्र एतेष्विति प्रश्नोत्तरम्— प्रकृष्टप्रकाशश्चन्द्र इति । न चात्र संज्ञासंज्ञिसम्बन्धविषयः प्रश्नः, उत्तरं वा ; स्वरूपमात्रप्रश्नोत्तरत्वात् । खद्योतादिभिन्नश्चन्द्र इत्यपि ज्ञातत्वाद् नात्र तद्व्यावृत्तिरपि विषयः, किन्तु प्रकृष्टप्रकाशपदेन तत्स्वरूपविशेषः प्रतिपिपादयिषितः । अन्यत् सर्वं तु तत्रोपाधिः, उपलक्षणं वा ; ज्ञातत्वाद्, न प्रश्नस्य, उत्तरस्य वा विषयः ॥

अयमेव न्यायः सत्यज्ञानादिवाक्येऽपि । तत्र यद्यपि सत्यादिपदैरसत्यादिव्यावृत्तिः प्रतीयते ; तथाप्याऽऽर्थिकी सा, न शाब्दी ; एकस्य वाक्यस्यैकार्थ एव मुख्यतात्पर्यात् ॥

अयमेव न्यायः सर्वेषु लक्षणवाक्येषु । तत्र यद्यपि सत्यपदं प्रातिभासिकव्यावहारिकपारमार्थिकसाधारणम् ; तथापि सत्यादिवाक्ये विशेषणानां परस्परसम्बन्धविरोधाद् उपलक्षणविधयाऽन्वये स्वरूपमात्रे पर्यवसानं न विरुध्यते । न हि विशेषणमिवोपलक्षणमन्तर्गमेन धीजनकम् ; अविद्यमानत्वे सति कार्यानन्वयित्वे सति व्यावर्तकत्वस्यैवोपलक्षणत्वात् ॥

एवमेव—तत्त्वमस्यादिवाक्येष्वपि किञ्चिज्ज्ञत्वादिविशिष्टपराणां तदुपलक्षितसंविन्मात्रपरत्वमनुसन्धेयम् ॥

"सोऽयं देवदत्तः" इति वाक्यं चात्र निदर्शनम् । तत्र यद्यपि देवदत्तपदार्थोऽन्यत्र प्रसिद्धः, ब्रह्म तु न पदार्थतया प्रसिद्धम् ; तथापि प्रसिद्धिमात्रेण लक्ष्यतानिर्वाहाद् न पदवाच्यतया प्रसिद्धिरपि नियता ॥

सुषुप्त्यसंप्रज्ञातसमाधिभ्यामपि निर्विशेषप्रसिद्धिः सुसम्पादा । "एष नेति नेति" इति वाक्यवशात् सर्वविशेषपर्युदासादपि निर्विशेषस्य प्रसिद्धिः ॥

न चात्र—अस्ति नास्तीति व्याघातः । अत्र घटो नास्तीत्यादिवाक्यानामपि सतो घटस्य नास्तित्वबोधस्य व्याघातापत्त्या निषेधवाक्यमात्रमप्रमाणं स्यात् । न चात्र निरधिष्ठानत्वेना-

त्यन्तिकनिषेधः ; अधिष्ठानपरिशेषेण तत्र प्रतिपन्नसर्वेतरनिषेधमात्रस्यैव वाक्यार्थत्वात् , तत्र भ्रान्तिप्रसक्तया जगतो निषेधप्रतियोगित्वाच्च । न च जगतोऽत्यन्तासत्त्वम् ॥

पदान्तरवैयर्थ्यं त्वनुपहितासङ्कीर्णसत्यादिस्वरूपमात्रबोधनार्थत्वाद् न सम्भवति । पदमात्रं नानुभावकम् , किन्तु पदसमुदायात्मकं वाक्यमेव । तत्राधिष्ठानारोप्ययोर्भेदोऽपि वर्तते, परं तु स कल्पितो मिथ्येति नाद्वैतहानिः ॥

अयमेव न्यायः—“ आनन्दं ब्रह्मणो विद्वान् ” इत्यत्रापि ; अविद्याकल्पितभेदनिवृत्तिपरत्वात् शास्त्रस्य । अत एव “ आनन्दो ब्रह्मेति व्यजानात् ” इत्यानन्दात्मनोपदेशो ब्रह्मणः । ततश्च “आनन्दं ब्रह्मणो विद्वानिति षष्ठी राहोः शिर इति वद् योजनमर्हति । बहु पराक्रान्तमत्र न्यायरत्नावल्यां ब्रह्मानन्दसरस्वत्या विद्यासागरपरम्परादीक्षितेन ॥

अत्र संक्षेपशारीरकेष्टसिद्धयादिनिर्णयप्रकारा आलोचिताः । अत्र प्रसङ्गेन द्वैतसम्प्रदायसिद्धान्तस्य पदान्तरवाच्यस्यैव लक्ष्यत्वम्, ब्रह्म तु पदान्तरावाच्यं न लक्ष्यतामर्हतीतीक्षत्यधिकरणस्थस्य निरासोऽपि दृश्यते ॥

—·*:—

इयं हि द्वैतिनां शङ्का आनन्दानुभवयतिनैव चित्सुखादपि प्राचीनेन तदीयन्यायरत्नदीपावल्याम् , पदार्थतत्त्वनिर्णये च निराकृता—‘न हीक्षुक्षीरगुडादीनां रसः सरस्वत्याऽप्याख्यातुमलम्’ इत्यादिन्यायावलम्बनेन । न्यायसुधा तु तत्रापि रसविशेषशब्दवाच्यत्वं वर्तत इति समाधत्ते । न हि रसविशेषशब्दोऽपि रसविशेषे कं वा विशेषमत्राभिधत्त इति वक्तुं शक्यम् । न्यायचन्द्रिका तु प्रसिद्धिमात्रं पर्याप्तं यया कयापि विधया । सा तु ब्रह्मणोऽपि वर्तत इति समाधत्ते ॥

मधुसूदनसरस्वती तु—सुषुप्त्यसम्प्रज्ञातसमाध्योः शोधितत्वम्पदार्थप्रसिद्धिमुपपादयति सिद्धान्तबिन्दौ । विश्वस्यते—न्यायसुधानिरसनं लक्षीकृत्यैव पदान्तरवाच्यत्वं विनाऽपि प्रसिद्धिमात्रमत्र निर्वाहयति न्यायचन्द्रिका । अनेन च ब्रह्मणि शब्दवृत्त्यनुपपत्तिरपि निरस्तप्राया । न्यायचन्द्रिका तु विशिष्टवाचकत्वमात्रेणापि विशेष्यांशस्य प्रसिद्धिमात्रेण लक्षणापक्षम्—

“ आकाशादौ सत्यता तावदेका
प्रत्यङ्मात्रे सत्यता तावदन्या ।

तत्सम्पर्कात् सत्यता तत्र चान्या
व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र ॥

बुद्धेर्वृत्तौ ज्ञानता तावदेका
प्रत्यग्बोधे ज्ञानता काचिदन्या ।
तत्सम्पर्कात् ज्ञानता तत्र चान्या
व्युत्पन्नोऽयं ज्ञानशब्दस्तु तत्र ॥ ''

" ब्रह्मण्यानन्दशब्दोऽयं प्रवृत्तः सुखवाचकः ।
संवेद्ये च सुखे लोक आनन्दाख्या प्रयुज्यते ।
वेद्यत्वेन यतो ब्रह्म प्राधान्येन व्यवस्थितम् ।
तस्माद् विशेष्यं तद् ज्ञेयं ततोऽन्यद् यद्विशेषणम् ॥ ''

" प्रतिपद्य यथार्थं हि विरोधात् तद्विरोधिनः ।
पश्चादभावं जानाति वध्यघातकवत् पदात् ''
इत्यादिसंक्षेपशरीरकसुरेश्वरवार्तिकाद्यवलम्बनेन समर्थयति ॥

इति न्यायचन्द्रिकायां समन्वयपरिच्छेदे तत्तत्प्रकरण-
पूर्वोत्तरपक्षसारसङ्कलनम् ॥

—:*:—

## ॥ न्यायचन्द्रिकायामविरोधपरिच्छेदे तत्तत्प्रकरणपूर्वोत्तरपक्षसारसङ्कलनम् ॥

॥ प्रसङ्गादख्यात्यादिनिरासेनानिर्वचनीयख्यातिसमर्थनं (पृ. ३६८–४११) ॥

### ॥ (१) प्रत्यक्षेणागमबाधः ॥

प्राचीन-निरवकाश-प्रतिष्ठितप्रामाण्यप्रत्यक्षविरोधादद्वैतवादो निरालम्बः । भेद-प्रमाणं प्रत्यक्षादिप्रतिष्ठितमद्वैतं बाधते । भेदस्येवाभेदस्यापि परापेक्षत्वाद् न

निरपेक्षमुभयमपि। मृदादिघटतच्चूर्णपर्यन्तकार्यपरम्परा सर्वदा तत्तद्रूपेण प्रत्यक्षा कथं बाधमर्हति? "एकमेवाद्वितीयम्" इति श्रुतिस्त्वर्थवादो न प्रत्यक्षबाधने क्षमते; यथा—"आदित्यो यूपः" इति श्रुतिरादित्ययूपभेदप्रत्यक्षबाधने। भेदो नाविद्याकल्पितः, इति कथं तद्रसत्यता? अविद्यायाः स्वयं सद्रूपत्वात्। सद्रूपत्वं हि तस्यास्तदुच्छेद्यत्वान्यथानुपपत्त्या। उच्छेद्यत्वं हि वृक्षादीनामिव सतामेव नासतः। अतो यद्युच्छेदोऽविद्यायाः, तर्हि सा काममनित्या भवतु, नासत्या कथमपि। तथाच प्रभाकरः—

"असत्त्वे च निषिद्धे, स्यात् सत्यमेव बलाद् भवेत्।
सदसद्व्यतिरिक्तो हि राशिरत्यन्तदुर्लभः॥"

इति। अत्र प्राभाकरादिमतेन पूर्वपक्षः॥

---

## ॥ प्रत्यक्षेणागमबाधोद्धारः ॥

प्रत्यक्षागमयोर्भिन्नविषयत्वेन प्रथमेनान्त्यस्य न बाधः। न प्रत्यक्षं संभावितदोषं निर्दोषां श्रुतिं बाधितुमीष्टे। तस्य प्रतिष्ठितं प्रामाण्यं तु यावद्बाधं शुक्तिरजतप्रत्यक्षवद् मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वेन। अभेदो ह्यैक्यं न भेदाधीननिरूपणम्। भेदस्तु प्रतियोगिनिरूपणसापेक्षः। अतः सापेक्षभेदप्रत्यक्षं निरपेक्षाभेदागमाद् दुर्बलम्। अविद्याकल्पितत्वाच्च भेदस्य न शुक्तिरूप्यादिज्ञानस्येव प्रामाण्यम्, इति कथं तस्य प्रामाण्यं प्रतिष्ठितं नाम? यद्यविद्योच्छेद्याऽनित्या, तर्हि फलतो न सती। वृक्षादीनां ह्युच्छेद्यानां सद्रूपत्वं तदुपादानकारणात्मनाऽवस्थानेन। न चाविद्याऽपि सोपादाना; अनवस्थापत्तेः, इति न सती, न वाऽसती; उच्छेद्यत्वात्, सर्वोपादानत्वाच्च, इति शुक्तिरूप्यादिज्ञानमिव भेदज्ञानमप्रमाणं न श्रुतिबाधनक्षमम्। अत्र सिद्धान्तोऽद्वैतवादेन॥

---:*:---

प्रत्यक्षं यदि परोक्षात् प्रबलम्, तर्हि वेदान्तजन्याखण्डाकारवृत्तेरपि प्रत्यक्षायाः परोक्षसगुणोपासनादिवाक्यापेक्षया प्राबल्यम्, इति कर्मोपासनाकाण्डार्थानां मिथ्यात्वं सिद्धमेव। लौकिकप्रत्यक्षागमाधीनप्रत्यक्षयोः प्रत्यक्षत्वाविशेषे किं कस्य बाधकमिति शङ्कायां निर्दोषत्वेन निश्चितागमिकप्रत्यक्षस्यैव प्राबल्यम्—यथा भ्रम-प्रमयोः प्रत्यक्षत्वाविशेषे निर्दुष्टं प्रमाप्रत्यक्षमेव

बाधकम् । प्रपञ्चाभावोऽपि जीवन्मुक्तानां निर्गताज्ञानानां प्रत्यक्ष एव । सत्यपि प्रपञ्चाभावस्य प्रत्यक्षत्वे तदनुवृत्तिस्तु प्रारब्धकर्माधीना तत्प्रत्यक्षस्य पटुतराभ्यासाभावनिबन्धना । देहात्मत्वप्रत्यक्षं तु सुषुप्तसम्प्रज्ञातसमाधि-सिद्धतदतिरिक्तात्मप्रत्यक्षेण निर्दुष्टेन श्रुत्यनुगृहीतेन बाध्यते । न च मिथ्यात्वश्रुत्युपष्टब्धप्रपञ्चमिथ्यात्वानुभवो निर्विचिकित्सपरोक्षज्ञानमप्यपरोक्ष-जातीयः श्रुतिविरुद्धेनाप्रामाण्यशङ्कास्कन्दितेन तत्सत्यत्वप्रत्यक्षेण बाधन-मर्हति । उच्छेद्यत्वं हि वृक्षादीनामसत्त्वं व्यावर्तयति, न तु सत्त्वमपि साधयति । उच्छेद्यत्वं हि कारणात्मना सत्त्वं कार्याणां साधयति । कारणस्योच्छेद्यत्वं तु तस्य कारणान्तरात्मताऽयोगाद् बाध्यत्वे पर्यवस्यत् तस्य सदसद्विलक्षणत्वं गमयति, इति निरुपादानकत्वादविद्यायाः कारणात्मना सत्त्वस्यासम्भवात् स्वरूपतो बाध एव पर्यवस्यति । यथा च सत्त्वमपि प्रपञ्चस्य प्रत्यक्षीक्रियमाणं सत्तादात्म्यम्, सत्तासामान्यम्, अर्थक्रियाकारिता वा, तथा सत्कार्यवादनिरासेन सद्विवर्तवादस्थापनावसरे "परिणामस्तु स्यात् दध्यादिवत्, नासतः; निष्पाद्यत्वात्, नापि सतः; प्रवृत्त्यानर्थक्यात्" इत्यत्रान्ते "संव्यवहारमात्रत्वात्" इति ब्रह्मनन्दिवाक्यानां तात्पर्यविवेकेन संक्षेपशारीरके तृतीयाध्याये, कल्पतरौ च व्यक्तीकृतम् । अधिकं पुरस्तात् ॥

—: * :—

## ॥ (२) अख्यातिवादः ॥

शुक्तिरजतज्ञानमपि नाप्रमा । तद्धि पुरोवर्तिनि प्रवृत्त्यनुपपत्त्या रजतं गोचर-यतीति न युक्तम् । अगृहीतभेदग्रहण-स्मरणात्मकं ज्ञानद्वयमेव तत्र । प्रवृत्तिस्तु तत्र स्वरूपतः, विषयतश्च भेदाग्रहमात्रेण । भेदग्रहे तु तत्र निवृत्तिरिति युज्यते, इति वृथा तत्र भ्रमत्वकल्पना, इत्यख्यातिवादः । इयान् विशेषः—यत् सत्यरजतस्थले भेदाभावाद् भेदाग्रहः, अत्र तु दोषाद् भेदाग्रहमात्रम्, न तु भेदाभावोऽपि ॥

तत्र भेदाग्रहोऽपीष्टभेदाग्रहत्वेनैव प्रवृत्तिकारणम्, तथाऽनिष्टभेदग्रहान्निवृत्ति-रिति स्वीकाराद् न सत्यरजते भेदाग्रहाद् निवृत्तिवद् युगपत् प्रवृत्ति-निवृत्तिप्रसङ्गादि ।

शुक्तिरजतजात्योर्निरन्तरभानात् ,अन्तरितभानाच्च प्रवृत्ति-निवृत्ती, न तु भेदाग्रहमात्रेण। अतो न दोषः। रूपप्रयुक्तकार्यार्थी रूपावच्छिन्ने रूपिणि प्रवर्तते, रजतत्वविशिष्ट-भानात् सत्यरजतादौ, इति मिथ्यारजतेऽपि प्रवृत्तिः सम्भवति। विशिष्टत्वं च नात्र विषयधर्मः, किन्तु प्रतिपत्तिधर्मो विशेषण-विशेष्यभावनिबन्धनो निरन्तरभानयो-रेकविषयस्यापरविषयेणापि सम्भवति ॥

—: * :—

## ॥ अन्यथाख्यातिवादः ॥

यदि भेदाभाव-भेदाग्रहमात्रेण सत्यासत्यभ्रमविवेकः, तर्हि भेदग्रह उभयत्र निवृत्तिकारण-मित्यायातम्। तथा च यत्र सद्रजते नेदं रजतमिति भ्रमः, तत्र भेदाभावे भेदज्ञानमन्यथा ज्ञानं स्यात् ; अविद्यया तत्र भेदस्याग्रहात्। सति चैवं भेदाग्रहस्य प्रवृत्तिकारणत्वम् , निवृत्ति-कारणत्वं चेति प्रवृत्ति-निवृत्ती युगपत् स्याताम्। अभेदाग्रहस्य निवृत्तिकारणत्वे तु मिथ्यारजता-दावपि भेदाग्रहवदभेदाग्रहस्यापि विद्यमानत्वात् प्रवृत्तिसमयेऽपि निवृत्तिप्रसङ्गः। सत्यरजते भ्रान्तस्येष्टभेदग्रहस्य विद्यमानत्वाद् नेष्टभेदाग्रह-तद्ग्रहयोः प्रवृत्ति-निवृत्तिकारणत्वेनापि निर्वाहः। न च भाननैरन्तर्येणात्र निर्वाहः। नैरन्तर्यं हि नात्र विषयनैरन्तर्येण ; बाधात्, किन्तु प्रतिपत्तिनैरन्तर्येण। तत्र च गवाश्वौ शुक्तिरजते इति सजातीयरूपान्तरज्ञानाद् निवृत्तिः स्यात्। न हि भाननैरन्तर्यमात्रेण विशेषण-विशेष्यभाव एकत्रैव ज्ञाने सम्भवति, येन प्रवृत्ति-निवृत्तिनिर्वाहः स्यात्। निरूप्यनिरूपकभावो हि निरूप्ये निरूपकतावच्छेदकसम्बन्धं विना नोपपद्यते, इत्या-पणादौ विद्यमानस्य रजतस्य संसर्गमात्राध्यासेनैव भ्रमनिर्वाह इत्यन्यथाख्यातिवादः ॥

—: * :—

अन्यथाख्यातिवादेऽन्यत्र विद्यमानस्यान्यनिरूपकत्वं संसर्गाध्यासमात्रेण न सम्भवति ; तत्राविद्यमानस्य संसर्गनिरूपकताया अप्यसम्भवात्। अन्यथाऽ-सत्ख्यातिप्रसङ्गः। तत्र यद्यसतो न संसर्गाध्यासः ; असम्बन्धात्, तर्हि-असम्बन्धाविशेषाद् न देशान्तरस्थरजतस्यापि संसर्गाध्यासमात्रेण निर्वाहः, इत्यसत्ख्यातिरिव नान्यथाख्यातिरपि युक्ता, इत्यनिर्वचनीयरजतोत्पत्तिवाद एव युक्तः। तदुपादानं च प्रमातृचैतन्याभिन्नशुक्त्यवच्छिन्नचैतन्याश्रिता तूलाविद्या सादृश्यज्ञानसध्रीचीनेत्यादि व्यक्तमत्रान्यत्र च। अत एव नेदं

रजतमिति बाधोपपत्तिः । ख्यात्यन्तरेषु न तस्य स्वरसोपपत्तिर्विना क्लिष्ट-कल्पनामिति निगदव्याख्यातम् । अधिकं निबन्धतोऽवगन्तव्यम् ॥

---

अख्यातिवादो हि सत्ख्यातिवादेऽपि, सदसत्ख्यातिवादेऽपि, अगृहीत-भेदग्रहण-स्मरणात्मकज्ञानद्वयवादेऽपि । सत्त्वं हि व्रीहिप्रतिनिधिन्यायेन रजतस्य शुक्तौ तत्सदृशरजतावयवानामपि सत्त्वेनेति श्रीभाष्यसिद्धान्तस्तु न न्यायचन्द्रिकया समालोच्यते । अतो ज्ञायते — श्रीभाष्यसिद्धान्तस्य तत्समये द्वैतसम्प्रदायस्येव न सम्यक् प्रचार आसीत्—इति । न्यायसुधायां श्रीभाष्यसिद्धान्तानां केषाञ्चन प्रसङ्गतो निरसनाच्च—

"परैस्तु कलहे प्राप्ते वयं पञ्चोत्तरं शतम् ।"

इति न्यायेनाद्वैतमतनिरसने द्वैतिनोऽपि मित्राणीति कृत्वा तन्मध्य एव प्रचार आसीत् । तत्रापि न सर्वात्मना ; न्यायसुधायां श्रीभाष्यासाधारणप्रक्रियायाः परिणामिनित्यधर्मभूतज्ञानवादादेस्तदनभिमतायास्तत्रानालोचनात् । ब्रह्मनिमित्त-कारणत्वेऽपि नियम्यत्वमात्रेण शरीर-शरीरिभावस्तु द्वैतिनामपि सम्मत इति न्यायामृतादितोऽवगम्यते । अतो न्यायचन्द्रिका नात्र तदीयं कमपि सिद्धान्तं परीक्षते ॥

—: * :—

॥ अनिर्वाच्यत्वनिरुक्तिः ॥ — (पृ॰ ४१२ – ४३४)

## ॥ (३) अनिर्वाच्यत्वदुर्वचत्वम् ॥

न वक्तुमशक्यताऽनिर्वाच्यता ; अनिर्वचनीयादिशब्दैरेव निरुक्तेः । न सद-सद्रूपाभ्यां निर्वक्तुमशक्यता ; भ्रान्तिकाले सत्त्वेन, बाधकालेऽसत्त्वेन च निर्वक्तुं शक्यत्वात् । न सत्त्वेनासत्त्वेन सदसद्रूपेण च निश्चित्य निर्वक्तुमशक्यता ; सत्त्वादि-रूपेण निश्चये बाधकानुपलम्भात् । न वा सदसदन्यता । सदसदन्यता यदि भावा-भावान्यता, तदाऽतिव्याप्तिः ; सत्यरजतस्य घटादिप्रागभाव-प्रध्वंसाभावान्यतायाः

स्वीकारात् । नापि सदसद्व्यावृत्तधर्मवत्ता ; यत्किञ्चिद्व्यावृत्तधर्मवत्त्वेऽतिव्याप्तेः, सकलव्यावृत्तधर्मवत्त्वस्य चासम्भवात् । नापि सत्त्वासत्त्वात्यन्ताभाववत्ता; सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन व्याघातात् । शुक्तिरूप्यं तु नैतादृशम् ; तत्र तत्सत्त्वे प्रमाणाभावात्, भ्रान्तेरेव साधकत्वे व्याघातात् । भ्रान्तपुरुषैकवेद्यं हि तद् रजतम् , न पुरुषान्तरवेद्यम् । प्रतिनियतपुरुषैकवेद्यं सर्वं तत्तत्स्वतन्त्रसिद्धान्तमात्रसिद्धं न प्रामाणिकम् । सदपि भ्रान्तिविषयो भवितुमर्हति, इति न ख्यातिबाधानुपपत्तिरुक्तरजते प्रमाणम् । अथवेदं रजतमिति यथार्थमेव ; सर्वस्य ज्ञानस्य याथार्थ्यात् । अत एवाख्यातिवादः । बाधानुपपत्तिरपि यदि रजतस्य सद्रूपत्वं ब्रह्मरूपत्वमनुपपन्नमिति मत्वा, तर्हि रजतस्य ब्रह्मभिन्नत्वं साधितं भवति । तत्र च सिद्धसाधनम् । यदि भावरूपत्वम् , तर्हि, अभावत्वं साधितं भवति । तच्च बाधितम् । सत्त्वाश्रयत्वं यदि सद्रूपत्वम् , तर्हि रजतं न सदिति पर्यवस्यति । तदपि बाधितम् । अतो न रूप्याद्यनिर्वचनीयत्वं निर्वक्तुं शक्यम् ॥

—: * :—

## ॥ अनिर्वाच्यत्वसुवचत्वम् ॥

सत्त्वेन, असत्त्वेन, सदसत्त्वेन वा निर्वक्तुमशक्यत्वमनिर्वचनीयत्वम् । तद्धि सद्विलक्षणत्वासद्विलक्षणत्वावच्छिन्नं सदसद्विलक्षणत्वम्—सद्विलक्षणत्वे सत्यसद्विलक्षणत्वपर्यवसितम् । न च सदसद्रूपता ; व्याघातात् ॥

तत्र च भ्रमबाधानुपपत्तिः प्रमाणम् । बाध्यमानं हि रजतं भ्रान्तौ भासमानरूपेण न सत् । सदन्तरात्मना सत्त्वमपि बाधितमेव । नापि सदसदात्मत्वं प्रत्यक्षत्वेन प्रतीयमानस्य बाध्यस्य च रजतस्य युक्तिमत् । सदसदन्यत्वं वाऽनिर्वाच्यत्वम् ॥

तच्च भावाभावान्यत्वम् , भवदभिमतषड्भाव-चतुर्विधाभावविलक्षणत्वरूपं सदसदन्यत्वमिति तु निष्कर्षः । शुक्तिरूप्यादिकं यद्यभावः, तर्हि सकलभावान्यत्वं तत्र बाधितम् ; स्वस्मिन् स्ववृत्तिविरोधात् । एवमेव भावत्वेऽपि, इति सकलभावाभावविलक्षणं शुक्तिरूप्यादि ; सत्त्वात्यन्ताभाववति सत्त्वेऽसत्त्वस्य,असत्त्वात्यन्ताभाववत्यसत्त्वे सत्त्वस्य च भावेन तयोः परस्परविरहरूपत्वायोगात् ॥

न हि सत्ताजातिरिदं सत्त्वम् , येन सत्त्वे न सत्त्वाभावः स्यात् , तदभाववति समवायविशेषादावसत्त्वाभावात् । न चासत्त्वमसत् ; सत्यसति वाऽसत्त्वस्य धर्मस्याभावात् , असत्त्वाभाववति सामान्यादावेव सत्त्वाभावाच्च । तत्र यदि सत्त्वमबाध्यत्वम् , तर्हि सत्त्वस्याबाध्यत्वा-

भावाद् न सत्त्वे सत्त्वाभावः, न वा बाध्यत्वाभाववति ब्रह्मण्यसत्त्वम् । अयमेव न्यायोऽसत्त्वाभावेऽपि । यत्र यत्र अबाध्यत्वाभावाभावः, तत्र तत्र सत्त्वमित्यपि व्याहतम् । न ह्यसत्त्वे बाध्यत्वे बाध्यत्वाभावः ; तस्यापि बाध्यत्वात् । न च तत्र तदभावः सत्त्वम् , शुक्तिरूप्यादौ तूभयमपि ; प्रतीतिदशायामसत्त्वाभावस्य, बाधदशायां सत्त्वाभावस्य चानुभवात् । एकसत्तावादे तु प्रतीतिदशायामप्युभयाभावः ; सत्तादात्म्यस्यैव स्वीकारेण तत्सत्त्वस्य तत्रास्वीकारात् ॥

'इदं रजतम्'इत्यत्र भासमानं रजतं तुच्छव्यावृत्तम् ; अपरोक्षतया, सद्रूपेण च भासमानत्वात् । न चासदेव रजतं तत्र सदिति भासते ; व्याघातात् । अत एव सद्व्यावृत्तमपि ; अधिष्ठानज्ञाननिवर्त्यत्वात् । न चासतोऽधिष्ठानमस्ति ; सदसतोर्निरूप्यनिरूपकभावाभावादित्यसत्ख्यातिनिराकरणे न्यायचन्द्रिका विशदयति । तत्तत्प्रमातृचैतन्यरूपसाक्षिभास्यत्वात् , द्वैतविवेकोक्तरीत्या तत्तज्जीवसृष्टत्वाद्वा न पुरुषान्तरवेद्यतापत्तिः । न हि घटादिकमप्येकपुरुषवेद्यतादशायां तदसंसृष्टसर्वपुरुषवेद्यम् । पुरुषान्तरवेद्यतायोग्यता तु सर्वस्येश्वरसृष्टत्वादुपपद्यते । न चायं न्यायोऽत्र । यथार्थख्यातिः, अख्यातिर्वा निरस्तैव ॥

—:*:—

अस्मिन् वादे प्रायेण शब्दतोऽनुवादेन न्यायसुधैव निरस्यते ; सदसदन्यताविकल्पादयः सर्वेऽपि तत्र दृश्यन्ते । सत्त्वासत्त्वयोः परस्परविरहरूपत्वासम्भवसमर्थनं न्यायचन्द्रिकायाः स्वतन्त्रमपूर्वं च प्रस्थानम् , यद् न्यायामृताद्वैतसिद्धितरङ्गिण्यादयोऽपि नानुसन्दधते ॥

—:*:—

॥ अविद्याभावरूपत्वोपपादनम् ॥ — (पृ. ४३४–४३९)

## ॥ (४) ज्ञानाभावाविद्यात्वम् ॥

अविद्या यदि भावरूपा, तर्हि मिथ्याज्ञान-संशय-स्वप्नानध्यवसायातिरेके तत्र न प्रमाणम् । ततश्च भ्रान्तिज्ञानविषयाणामावरणविक्षेपशक्तिमन्मूलाज्ञानकार्यत्वाभावाद् न मिथ्यात्वम् । मिथ्याज्ञानादिकं प्रवाहतो मिथ्याज्ञानान्तरं प्रति निमित्तकारणम् , इति प्रवाहतोऽनादित्वात् सर्वत्र भ्रमनिर्वाहः । अत एवाध्यासभाष्यम्— "मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य" इति । न हि कार्यसामान्यमुपादानापेक्षमिति नियमः ; ध्वंसे व्यभिचारात । उपादानापेक्षायामपि ब्रह्मैवास्तु सर्वस्य

जगत उपादानम्, किमन्तर्गडुना भावरूपयाऽनाद्यविद्यया ? अतो मिथ्याज्ञानमेव ज्ञानविरोधित्वादज्ञानं नाम । न च सदुपादानत्वे सत्यत्वापत्तिः । न हि घटादिकं सदुपादानकं सत्यम्; अद्वैतहानेः । ज्ञानाभावो वाऽज्ञानम् । स च तत्प्रागभावः; ज्ञाननाश्यत्वात् । तच्च ज्ञानं भाट्टमतरीत्याऽऽत्मपरिणामो भवतु, तार्किकरीत्या क्षणिकात्मपरिणामधर्मज्ञानं वा । सर्वथा ज्ञानाभावेनैव निर्वाहाद् नाज्ञानं भावरूपमस्ति ॥

—:*:—

## ॥ अविद्याभावरूपत्वम्, तदनादित्वं च ॥

मिथ्याज्ञान-संशयादिकं नाज्ञानपदार्थः । तस्य मिथ्याज्ञानान्तरकारणत्वेन विषयाकारणत्वेनाज्ञानविषयस्यान्यकारणकत्वं वक्तव्यम् । न च तत्र ब्रह्ममात्रं कारणम् । तस्य निमित्तकारणमात्रत्वं विनोपादानान्तरं न युक्तम् । तस्यैवोपादानत्वं तु न परिणामित्वेन; अनित्यत्वापत्तेः । विक्षेपशक्तिमत्प्रकृतिमात्रोपादानत्वे तु ब्रह्मोपादानत्वश्रुतिविरोधः । उभयोपादानत्वं त्वावरणविक्षेपशक्तिद्वयवदज्ञानं विना, आवरणशक्तिमात्रवदज्ञानं विना वा नोपपद्यते । मिथ्याज्ञाननिमित्त इति भाष्यं तु—मिथ्याभूताज्ञाननिमित्तपरम् । शुक्तिरूप्यादि तदुपादानतूलाज्ञानं विना नोपपद्यते । अत एव बाधानुभवस्तस्य ॥

ध्वंसो नाम कारणावस्थैव । सा चानादिः, इति न तत्रोपादानापेक्षा । स्थूलावस्थैव हि कार्यं नाम । तच्च नोपादानं विना सम्भवति । ब्रह्मोपादानत्वं तु नोपपद्यत इत्यनुपदमेवोपपादितम् ॥

सत्कार्यवादो हि घटादीनां मृत्, मृदोऽज्ञानम्, इति परम्परयाऽज्ञानकार्यं मिथ्या चेति दिशा, इति ब्रह्मव्यतिरेकेण सर्वाभावाद् नाद्वैतहानिः । ज्ञानप्रागभावस्तु नोपादानतामर्हति; मीमांसकाभिमतात्मपरिणामत्वासम्भवाद् अनित्यं ज्ञानमेव दुर्वचम् । येषां तु मते ज्ञानं नित्यं धर्मभूतमपि स्वरूपज्ञानमिव, तत्र तत्प्रागभावः सुतरां दुर्वचः । मिथ्याज्ञानस्याप्यज्ञानत्वव्यपदेशस्तु तत्र तत्र तस्य मूलाज्ञानकार्यत्वेन, नाशावस्थायां तद्भावापत्त्या च, न तु तदतिरिक्तमूलाज्ञानाभावे तात्पर्यम्; अन्यथा पुरुषभेदेनानन्ताज्ञानकल्पनापत्तिः । सकृद् घटादिनिश्चये तेनैव मिथ्याज्ञाननिवृत्त्या न पुनर्घटादिसंशयाद्युपपत्तिः । मिथ्याज्ञानातिरिक्तमूलज्ञानसाधकानि, तन्निरासपराणि च बहूनि दृश्यन्ते—नामरूपव्याकरणाविद्यानिमित्तत्वपराणि । तद्यथा—अध्यस्याध्यास इत्यनेनैव मिथ्याज्ञाननिमित्तत्वे सिद्धे "मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य" इत्यत्र मिथ्याज्ञाननिमित्त इति वितथम् ॥

—:*:—

मिथ्याज्ञानातिरिक्तमूलाविद्यानिरासो भट्टभास्करभाष्ये (Page 19) दृश्यते। यत्र ब्रह्मणः परिणामिकारणत्वमात्रम्, न विवर्तोपादानत्वम्। नागोजिभट्टादयोऽपि तदनुयानेनैव मिथ्याज्ञानातिरिक्तां मूलाविद्यां निरस्यन्ति। अधिकं चात्र वक्तव्यमुत्तरत्र, भूमिकायां च व्यक्तम्। द्वैतसिद्धान्तेऽपि भावरूपैवाविद्या स्वीक्रियते, नाभावरूपा। व्यक्तं चैतद् न्यायसुधायाम्, भूमिकायां च ॥

—: * :—

॥ ब्रह्मव्यतिरिक्तमिथ्यात्वनिरूपणम् (पृ. ४४०–४५०) ॥

## ॥ (६) मिथ्यात्वदुर्वचत्वम् ॥

विवादपदम्, मिथ्या, अनात्मत्वात्, जडत्वात्, दृश्यत्वाद्वेत्यद्वैतिनः। तत्र मिथ्यात्वम्—न भ्रान्तिविषयत्वम्; ब्रह्मणि व्यभिचारात्, वादिनं प्रति साध्याप्रसिद्धेश्च। अत एव न बाधविषयत्वम्; घटादीनां बाधानङ्गीकारात्। घटादिज्ञानस्यापि प्रमात्वेन प्रमाविषयत्वाभावोऽपि न मिथ्यात्वम्। अनित्यत्वं तु पञ्चमप्रकाराविद्यानिवृत्तेरपि पक्षत्वे तत्रांशतो बाधितम्; तस्याः—न सती, नासती, न सदसती, न सदसद्विलक्षणा, नानिर्वाच्येत्यनिर्वाच्यताया अपि निषेधात्। पक्षानन्तर्भावे तु तत्र व्यभिचारः। अभावत्वं तु न मिथ्यात्वम्; भावे बाधात्, अभावपक्षत्वे सिद्धसाधनम्। अत एव नाभावप्रतियोगित्वमपि मिथ्यात्वम्। सत्ताराहित्यं तु सामान्यविशेषादौ सिद्धम्, द्रव्यादौ तु बाधितम्। अकारणत्वं त्वन्त्यमुक्तिव्यतिरिक्ते बाधितम्, अन्त्यमुक्तौ तु सिद्धम्। अप्रमाविषयत्वं तु भ्रान्तिविषयत्वेनैकार्थत्वात् तन्निरासेनैव गतार्थम्। सर्वनिष्ठात्यन्ताभावप्रतियोगित्वं तु सर्वस्य कालविशेषमाश्रित्य सिद्धम्। त्रैकालिकात्यन्ताभावप्रतियोगित्वं कालत्रयव्यतिरिक्ताश्रयासिद्ध्याऽर्थान्तरग्रस्तम्। अत एव न कालानाश्रितत्वं तत्; काले बाधाच्च। अलौकिकत्वं पूर्वोक्तरूपादन्यद् न सुवचम्। ज्ञानानतिरिक्तत्वं त्वप्रसिद्धम्, योगाचारमतप्रवेशापत्तिश्च। सर्वथा तु मिथ्यात्वं दुर्वचम् ॥

एतेन—अनात्मत्वादिहेतुव्रातोऽपि—व्याख्यातः; तस्यापि पक्षत्वे तत्रासिद्ध्यादिदोषग्रासात्। दृश्यत्वं तु न फलव्याप्यत्वम्; अतीन्द्रिये भागासिद्धेः, न वा वृत्तिव्याप्यत्वम्; ब्रह्मणि व्यभिचारात्। अत एव न तदुभयसाधारणम्; ब्रह्मणि व्यभिचारात्। अतो मिथ्यात्वानुमानमिदं न सम्भवति ॥

सत्त्वं हि स्वरूपमात्रम्, ज्ञानयोग्यत्वम्, तत्सम्बन्धः, सत्ताश्रयत्वम्, भावत्वम्, अर्थक्रियाकारित्वं वा प्रपञ्चस्य मिथ्यात्वे नोपपद्यते। तदिदं सिद्धम्—विवादपदम्, अबाध्यम्, अत्यन्ताभावरहितत्वात्; आत्मवत्, कारणवान् प्रपञ्चः, न बाध्यः, कारणवत्त्वात्; अविद्यानिवृत्तिवत्, विवादपदम्, अनिर्वचनीयं न भवति, व्यवहारपदत्वात्; आत्मवत्, अप्रामाणिकनिषेधस्य प्रामाणिकत्वस्वीकारात्—इति ॥

अत एव "मृत्तिकेत्येव सत्यम्" इति मृत्तिकासत्यत्वाम्नानम्। तेन हि ब्रह्मव्यतिरिक्तमृत्तिकासत्यत्वं प्रतिपद्यते, इति ब्रह्मव्यतिरिक्तसर्वमिथ्यात्व उक्तश्रुतिविरोधो दुर्निवारः ॥

—: * :—

## ॥ मिथ्यात्वसुवचत्वम् ॥

ज्ञाननिवर्त्यत्वं मिथ्यात्वम्। तच्चाधिष्ठानज्ञाननिवर्त्यत्वं शुक्तिरूप्यादौ प्रसिद्धम्। न च तत्र पररूपेण बाध्यत्व-सदसत्ख्यात्यादिविकल्पादिः सम्भवति; स्वरूपपररूपयोर्भिन्नाभिन्नादिविकल्प-तद्दूषणादिग्रासात्। ज्ञाननिवर्त्यत्वस्यापि दृश्यत्वेन रूपेण पक्षत्वे न बाधः, न वाऽनवस्था; अन्यथा प्रपञ्चसत्यत्वस्य सत्यत्व-मिथ्यात्वविकल्पदूषणसाम्येन जात्युत्तरत्वापत्तिः। पक्षबहिर्भावेऽपि ज्ञाननिवर्त्यत्वस्य मिथ्यात्वहेत्वोरुभयोरपि तत्र सत्त्वेन सपक्षत्वम्, पक्षसमत्वं वा, इति नानुमानं दुष्यति। मिथ्यात्वमिथ्यात्वेऽपि न प्रपञ्चसत्यत्वमिति व्यक्तमन्यत्र। ज्ञाननिवर्त्यत्वे ज्ञाननिवर्त्यत्वमिव ज्ञाननिवर्त्यत्वाभावोऽपि नास्ति। भ्रान्तिगोचरत्वं तु साधनव्यापकमिति नोपाधिः ॥

अयमेव न्यायः—अनात्मत्वादिहेतुपक्षतायामपि। संवेदनम्, परवेद्यम्, वस्तुत्वात्, भेदे भेदवत्, सत्यत्वप्रतिज्ञायां सत्यत्वे सत्यत्ववच्च तत्र तत्सत्त्वेऽपि दोषाभावात् ॥

दृश्यत्वं तु न वृत्तिव्याप्यत्वम्, फलव्याप्यत्वम्, तदुभयसाधारणं वा, किन्तु दृक्-तादात्म्यम्। तच्चातीन्द्रियसाधारणम्, ब्रह्मण्यविद्यमानं च, इति न भागासिद्धिः, न वा ब्रह्मणि व्यभिचारः ॥

सन् घट इत्यादौ प्रतीयमानं सत्त्वम्—तत्तत्स्वरूपाणां भिन्नानामनुगतप्रतीत्ययोगात्, सर्वस्वरूपाणामपि तथात्वात्, योग्यतायां योग्यतान्तराभावात्, सत्ताजात्याश्रयत्वार्थक्रिया-कारित्वाद्यभावत्वादेर्मिथ्यात्वाविरोधित्वात्, अन्यस्य शशशृङ्गादिव्यावृत्तस्य सत्त्वरूपत्वायोगाच्च न स्वरूपमात्रत्व-मानयोग्यत्व-तत्सम्बन्ध-सत्ताश्रयत्वार्थक्रियाकारित्वादिरूपम्, इति न प्रत्यक्षादि-बाधितं मिथ्यात्वानुमानम्। विवादाध्यासितम्, अबाध्यम्, अत्यन्ताभावरहितत्वात्; आत्म-वदित्यनुमानेऽत्यन्ताभावरहितत्वं यदि शून्यविलक्षणत्वम्, तर्हि शुक्तिरूप्यतादात्म्यादौ व्यभि-चारः। यदि त्वत्यन्ताभावाप्रतियोगित्वमात्रम्, तर्हि हेत्वसिद्धिः; सर्वस्यापि स्वनिष्ठात्यन्ताभाव-प्रतियोगित्वात्। कारणवान् प्रपञ्चः, न बाध्यः, कारणवत्त्वात्; अविद्यानिवृत्तिवदित्यनुमाने कारणवानिति विशेषणवैयर्थ्यम्; अविद्यानिवृत्तेरप्यविद्योपादानकत्वाद्, ज्ञानेन निवृत्त्या मिथ्यात्वेन दृष्टान्ते साध्यवैकल्यम्। पञ्चमप्रकाराविद्यानिवृत्तिरपि न बाध्याः; अन्यथा पञ्चम-प्राकारताया बाधात्, इति साध्यवैकल्यं दुरपह्नवम्। विवादपदम्, न बाध्यम्, व्यवहारविष-त्वात्, आत्मवदित्यत्र सुखाद्यधिकरणविशिष्टात्मविवक्षायां साध्यवैकल्यम्, संविन्मात्रविवक्षायां हेत्वसिद्धिः, ब्रह्मव्यतिरिक्तसर्वपक्षतायां शुक्तिरूप्येंऽशतो बाधः, तदितरस्य पक्षत्वे तत्र व्यभि-चारः, "तरति शोकमात्मवित्" "विद्वान्नामरूपाद्विमुक्तः" इति श्रुतिविरोधस्तु सर्वत्र दुष्परि-हरः। "मृत्तिकेत्येव सत्यम्" इति तु —

"आभूतसम्प्लवस्थानममृतत्वं हि कथ्यते।"

इति न्यायेनाब्रह्मसाक्षात्कारमबाध्यत्वेन व्यावहारिकसत्यत्वपरा, न मृदाद्यविद्यान्तपारमार्थिक-सत्यतायां प्रमाणम् ॥

—: * :—

न्यायसुधा—सदसद्विलक्षणत्वमिथ्यात्वं निरस्यति—सत्त्वासत्त्वयोः परस्पर-विरहरूपत्वस्वीकारेण। न्यायचन्द्रिका तयोः परस्परत्र व्यभिचारेण तदसम्भवं समर्थयति। चित्सुख्यभिमतं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं स्वसम्मतमपि नोल्लिखति, किन्तु ज्ञाननिवर्त्यत्वं मिथ्यात्वमेव सिद्धान्तयति। दृश्यत्वहेतुर्न वृत्तिव्याप्यत्वम्, फलव्याप्यत्वं वेति विकल्पो वृत्तिज्ञान-मनभ्युपगच्छतां मते नोत्तिष्ठतीति न्यायचन्द्रिका वदति। इदं च वैशेषि-

कानेवाश्रित्य । न्यायसुधा तु स्वरूपज्ञानातिरिक्तवृत्तिरूपं ज्ञानमन्तःकरणधर्मभूतं स्वीकुरुते । अत एवाद्वैतसिद्धिर्न्यायामृतनिरसनावसरे वृत्तिव्याप्यत्वपक्षमपि समर्थयति । असद्ब्रह्मणोर्व्यभिचारवारणार्थं शब्दाजन्यसोपाख्यवृत्तिविषयत्वं दृश्यत्वमिति च तन्निर्वक्ति । सत्यप्येवं धर्माधर्मादौ भागासिद्धिरिति तु न्यायभास्करादयः । तत्परिहारक्रमस्तु शतभूषण्याम् ॥

न्यायचन्द्रिका तु दृक्तादात्म्यमेव दृश्यत्वमिति तन्निर्वचनेनास्याः शङ्काया उत्थितिमपि वारयति। अमुमेवार्थं कदाचित् कथञ्चित् चिद्विषयत्वपदेनाद्वैतसिद्धिरनुवदति । तत्र कदाचित् कथञ्चिदिति निष्प्रयोजनम् , स्वरूपकथनमात्रं वा । अतो न दोषः ॥

तत्र मिथ्यात्वे साध्ये मिथ्यात्वानुमानम् , दृश्यत्वानात्मत्वादौ दृश्यत्वानात्मत्वादिसमर्थनं च न्यायचन्द्रिकायां वस्तुत्वे वस्तुत्वादीव व्यक्तीकृतम्—मिथ्यात्वविरोधिसत्त्वं न गृह्णातीति निरूपणप्रसङ्गे । यद्यपि—मृद्घटयोः परिणामि-परिणामयोः समसत्ताकत्वाद् न तद्व्यतिरेकेणाभावः ; तथापि कार्यस्योपादानकारणात्मत्वात् , मृदादीनामप्यविद्यात्मनैव घटादिकारणत्वात् , अविद्याया बाधेन घटादीनामपि बाधाच्च मुख्योपादानब्रह्मव्यतिरेकेणाभावोऽत्र विवक्षितः, इति न "मृत्तिकेत्येव सत्यम्" इति श्रुतिः प्रपञ्चमिथ्यात्वे विरुध्यते । घटादीनामिवाविद्याया अप्यनादिरध्यासो ब्रह्मणीति सिद्धान्ताद् घटादीनामिवाविद्याया अप्यधिष्ठानव्यतिरेकेणाभावपर्यन्तं श्रुतेस्तात्पर्यमिति तु निष्कर्षः ॥

—: * :—

॥ भेददुर्निरूपत्वम् ॥ (पृ. ४५२–४६२)

## ॥ (५) भेदसुनिरूपत्वम् ॥

अद्वैतश्रुतिर्भेदप्रत्यक्षबाध्या , इति घटपटादिभेदस्य प्रत्यक्षसिद्धत्वेन तयोरभेदस्याद्वैतश्रुत्या बाधः । प्रसिद्धस्य हि प्रतियोगिनः प्रतिषेधो नाम ; अप्रसक्तप्रति-

षेधानुपपत्तेः । स चानवभासमानो नास्ति, इति न निषेधोपपत्तिः । प्रतिभासमानश्च नाप्रमाणेन बाध्यः, न वा प्रमाणेन ; अप्रमाणस्य बाधकत्वायोगात्, प्रत्यक्षादीनां शब्दपर्यन्तानां प्रमातृ-प्रमेय-प्रमितिभेदपुरस्सराणामद्वैतश्रुतिबाध्यत्वे न प्रतियोगि-साधकत्वम् ; अबाध्यत्वे नाद्वैतसिद्धिः । तत्र भेदप्रत्यक्षं न भेदविरहमभेदं गृह्णाति । पक्ष-सपक्षादिभेदावसाय्यनुमानम्, परस्परविलक्षणक्रिया-कारकादिपदार्थस्वरूपावगाह्यागमः, भेदप्रतीतिसापेक्षार्थापत्त्यादि वा भेदावगाहि न भेदबाधनक्षमम् । एकत्वश्रुतिस्तु प्रतिदेहमेकैकस्वामिपरा । "एष नेति नेति" इति शरीरात्मत्वनिषेधाभिप्राया । विज्ञानादिश्रुतयस्त्वात्मनो विज्ञानादिशक्तिप्रतिपादनपराः । एकविज्ञानेन सर्वविज्ञानश्रुतिरात्मज्ञानेन चरितार्थत्वनिरूपणाशयेति सर्वमुपपन्नम् ॥

—: * :—

## ॥ भेददुर्निरूपत्वम् ॥

नाद्वैतश्रुतिर्भेदप्रत्यक्षादिबाध्या, प्रत्युत प्रत्यक्षादिसिद्धस्यैव श्रुत्या बाधः । न हि प्रतिभासमानं सर्वं सत्, इति सत्ख्यातिवादो न युक्तः । प्रतिभासमानताया एव सत्तारूपत्वे हि रज्जु-भुजङ्गादीनामविसंवादिप्रवृत्तिगोचरत्वापत्तिः । न च प्रत्यक्षेण मिथ्यात्वाभावो ग्रहीतुं शक्यते ; तस्य कालत्रयानवगाहित्वेन कालत्रयघटितमिथ्यात्वाभावरूपसत्त्वग्रहणासामर्थ्यात् । न च भेदग्राहकं प्रत्यक्षम् । भेदो हीतरेतराभावः, तदभावश्च घटादिस्वरूपम्, इति घटादिस्वरूपावगाहि प्रत्यक्षं घटभेदाभावमपि गृह्णाति, इति घटादिस्वरूपावगाहिप्रत्यक्षमेव तद्भेदमपि बाधते ॥

अत एव घटः सन्निति प्रत्यक्षम् । सद्रूपेण हि घटपटादीनामभेदः, न तु घटपटादिविशेषरूपेण ; "कार्यात्मना तु नानात्वमभेदः कारणात्मना" इति सिद्धान्तात्, इति पटादिस्वरूपमपि 'सन् घटः' इति प्रतीत्या सदात्मनाऽभिन्नमेव भासते । ततश्च घटादिप्रत्यक्षमेव घटपटादिभेदबाधकम् । सन्मात्रे ज्ञानस्य प्रामाण्यम्, विकल्पांशे तु घटादौ भ्रमत्वम्, इति विकल्पाप्रामाण्यवाद एव पर्यवसानम् । तत्रानुमानमपि—विगीतः, मिथ्या, भेदत्वात् ; चन्द्रभेदवदित्यति भेदबाधकम् । तत्र यथा स्वरूपेण प्रतिपन्ने धर्मिणि साध्यसन्देहेन पर्वतो वह्निमानित्यनुमानम्, एवमत्रापि स्वरूपेण प्रतिपत्तिमात्रेण भेदस्य पक्षत्वम्, मिथ्यात्वादिकं च न विरुध्यते । अयमेव न्यायोऽद्वैतश्रुतीनां क्रिया-कारकादिभेदावसायसापेक्षाणां विषयेऽपि ॥

न च प्रत्यक्षेणाद्वैतश्रुतिबाधः सम्भवति ; बाध्य-बाधकभेदाग्रहेण, तयोरभेदेन च बाध्य-बाधकभावायोगात् । न च स्वरूपभेदातिरिक्ते वैधर्म्यादौ किमपि प्रमाणम् । एतेन—प्रति-

देहमात्मैकत्वनिरूपणपराऽऽत्मैकत्वश्रुतिरिति—व्याख्याता ; आत्मभेदप्रत्यक्षस्य भेदान्तरप्रत्यक्षवत् कल्पितविषयकत्वेन निर्वाहेणात्माभेदश्रुतिबाधकत्वायोगात् । अविद्याकल्पितनाम-रूपविभागमवलम्ब्य कर्मकाण्डोपासनाकाण्डादिसर्वप्रमाणनिर्वाहोऽप्यत एव ॥

—: * :—

खण्डनखण्डखाद्यमनुसृत्य भेदाभेदश्रुतिबाध्यबाधकभावोऽत्र निर्धार्यते । तत्र हि घटपटादीनाम्, किं बहुना ? सर्वेषां सर्वाभेद इति सर्वाभेदश्रुत्या भेदप्रत्यक्षं बाध्यत इति निरधारि । तत्र घटपटाद्यभेदबोधकश्रुतयः काः ? घटपटादीनामभेदे घटकार्यं पटेन, घटेन पटकार्यम्, सर्वं कार्यं सर्वैरित्यापत्त्या लोकव्यवहार एव लुप्येत । एवं घट-ब्रह्मणोरप्यभेदे घटातिरिक्तब्रह्माभावश्चापद्यते । सर्वस्य सर्वाभेदे सर्वसत्यत्वम्, सर्वमिथ्यात्वं वेत्यपि दुर्वचमिति शङ्कायां न्यायचन्द्रिकायां पूर्वोक्तविधया सदात्मना सर्वेषामभेद, सद्व्यतिरेकेण तदितराभावः, तत्तद्विशेषरूपेण तु यावद्बाधं व्यवहारोपयोगित्वमिति व्यवस्थाप्यते । खण्डननिबन्धात्तु नायमर्थो विशदीभवति, न वा तट्टीकायामपि न्यायचन्द्रिकाकारेणाप्ययमर्थः सूचितोऽपि, अन्यैर्वा व्याख्यातृभिः ॥

—: * :—

॥ आत्मस्वप्रकाशत्वम् ॥ (पृ. ४६३–४७८)

## ॥ (७) आत्मपरप्रकाश्यत्वम् ॥

स्वस्य स्वप्रतियोगित्वव्याघातात् प्रमेयत्वेऽप्यात्मनो नानात्मत्वापत्तिः ; इति प्रमेयत्वेऽप्यात्मनो ना, अनात्मत्वप्रसङ्गः, अन्यथा घटस्याप्यघटत्वप्रसङ्गः । अन्यथा स्वतस्सिद्धत्व आत्मनः स्वमतसाधनाय, परमतप्रतिषेधाय च वाक्यप्रयोगानर्थक्यापातात्, संविदतिरिक्तज्ञानान्तराप्रसिद्धेः । घटदिवत् न स्वतः सिद्ध आत्मा ; अनुभाव्यस्याननुभूतित्वेन सत्यप्यविनाभावेऽननुभूतित्वप्रसङ्ग आभास एव ; अन्यथा घटस्याघटत्वप्रसङ्गात् ॥

—: * :—

## ॥ आत्मस्वप्रकाशत्वम् ॥

संविदाश्रयतया तत्कर्मतया वाऽऽत्मनः प्रमेयत्वे घटादिवदनात्मत्वप्रसङ्ग इतीष्टसिद्धिः। घटस्याघटत्वं बाधितम्; तस्य संविदधीनसिद्धिकस्य तथा प्रमेयताया बाधात्। आत्मनस्तु स्वतः सिद्धत्वे स्वकाले स्वाभावाग्रहाद् न तत्प्रागभावादिग्रहसम्भवः। प्रमाणान्तरागोचरत्वे तु स्यादेव प्रमाणान्तरेण तदभावग्रहः, इत्यनुभाव्यत्वेऽननुभूतित्वापादनं स्यादेव। न चैवं घटस्याघटत्वापादनम्; व्याप्यारोपेण व्यापकारोपस्य तत्राभावात्। स्वमतसाधनाय परमतप्रतिषेधाय च वाक्यप्रयोगस्तु संविदभिव्यञ्जकान्तःकरणवृत्तिजननार्थत्वाद् न विरुध्यते। संविदतिरिक्तान्तःकरणवृत्तिस्तु "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति श्रुतौ धीपदेन वृत्तिरूपज्ञानाभिधानात् श्रुतिसिद्धा। इदमेवाभिप्रेत्य वेदान्तपरिभाषोक्तां श्रुतिं व्याचक्षाणा—"धीशब्देन वृत्तिरूपज्ञानाभिधानात्" इति भणति॥

"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च नेङ्गते तत्र परमात्मानमश्नुते॥"

इति श्रुतिरप्यत्र मानम्। नित्यसर्वगते संवेदने विषयाणां क्रमवदवभासार्थमपि वृत्तिस्वीकारः। उक्तं च—"आवरणाभिभवार्था, चिदुपरागार्था, अभेदाभिव्यक्त्यर्था वा वृत्तिः" इति। सत्यप्यविनाभावेऽनुभाव्यत्वेनाननुभूतिप्रसङ्गो यद्याभासः, तदाऽवह्निमत्त्वेन धूमवत्त्वं न स्यादित्यापादनमप्याभासः स्यात्॥

—:*:—

यत्तु—श्रीभाष्येऽनुभाव्यत्वेनाननुभूतित्वापादनेऽननुभाव्यत्वे गगनकुसुमादिवदसत्त्वप्रसङ्ग—इत्यापादनम्, तदिदं तदीये धर्मभूतज्ञानेऽननुभाव्येऽसत्त्वाभावादप्रयोजकम्। अज्ञानसामान्याविषयत्वमेवासत्त्वप्रयोजकम्, न त्वननुभाव्यत्वम्। न च संविद्रूपमज्ञानाविषयः, येन तत्साधारणं तत् स्यात्। न्यायचन्द्रिका हि वैशेषिकादिदर्शनं प्राधान्येन, न्यायसुधां च निरस्यति, न तु श्रीभाष्यसिद्धान्तम्। विश्वस्यते—अत एव श्री भाष्यसिद्धान्तः, तत्समकालिकनिगमान्तदेशिककृतिः, शतदूषण्यादिकं च न मात्रयाऽपि पर्यालोच्यते न्यायचन्द्रिकया, इति श्रीभाष्यसिद्धान्तस्य प्रचारस्तदानीं न द्वैतसिद्धान्तस्येव; ततश्चेदं प्रतीयते—शतदूषण्यादिनिबन्धो न्यायचन्द्रिकासमये नात्मानमलभत, प्राप्तात्मलाभोऽपि वा न पण्डितगोष्ठ्यां प्रचारमलभत—इति॥

## ॥ (८) तमोनिरूपणम् ॥ (पृ. ४७९—४९१)

तमसो भावरूपत्वसमर्थनमद्वैतमतेऽविद्यानुमाने प्रदीपदृष्टान्तेन भावरूपाज्ञानसाधनं लक्ष्यीकृत्य । तत्रालोकप्रागभावस्य तमस्त्वे प्रथमोत्पन्नप्रदीपप्रभया तत्प्रागभावे नष्टे तत्प्रागभाव उत्कर्षापकर्षतारतम्यासम्भवाद् द्वितीयादिप्रमायां धारावाहिन्यां प्रकाशतारतम्यप्रतीत्यनुपपत्तिः, भावरूपाज्ञानवादे तु तद्विषयतायां तारतम्यसम्भवात् सोपपद्यते ॥

तत्र न्यायचन्द्रिकायाम्---तमः, नालोकप्रागभावः, जन्यत्वात्, नात्यन्ताभावः, अन्योन्याभावो वा; तत एव । नापि ध्वंसः; विनाशित्वात्, किन्तु रूपित्वाद् द्रव्यं प्रभेव । मार्जारोलूकचक्षुष इव, आलोकानापेक्षचक्षुषा रूपसाक्षात्कारो न व्याहन्यते । आलोकप्रागभावस्य तमस्त्वे तद्ध्वंसे तमोव्यवहारो न स्यात्, तद्ध्वंसस्य तमस्त्वे तत्प्रागभावे स न स्यादित्याद्यपि तदभावरूपत्वे समापद्यते । अनेनैव न्यायेनात्र छायाया अपि द्रव्यत्वसाधनम् । अधिकं निबन्धादवगन्तव्यम् ॥

—:*:—

## ॥ (९) परमाणुवादनिरासः ॥ (पृ. ४९२—५१६)

परमाणुखण्डनप्रकारोऽपि विस्तरेण निबन्धादेवावगन्तव्यः । परमाणुकारणवाद एकविज्ञानेन सर्वविज्ञानानुपपत्तिः, श्रुतिविरोधश्च प्रधानं दूषणम् । आत्माणुत्वं तु श्रौतं तत्सूक्ष्मत्वाभिप्रायम्, इति "स एष अणिमा" इत्यादिवाक्यं न परमाणुकारणवादे प्रमाणम् । अत्र परमाणुकारणवादोपष्टम्भकतया श्रुतियोजनं प्रधानकारणवादेनात्मपदयोजनादिनयेन, तन्निरासप्रकारोऽपीक्षत्यधिकरणनयेनेति मन्तव्यम् ॥

—:*:—

## ॥ न्यायचन्द्रिकायां साधनपरिच्छेदे पूर्वोत्तरपक्षसारसङ्कलनम् ॥

॥ ज्ञान-कर्मसमुच्चयनिरासप्रकरणमेकमेवात्र प्रधानम् ॥ (पृ. ५१७–५३४)

### ॥ (१) भास्कराभिमतज्ञान-कर्मसमुच्चयवादः ॥

"नियतं कुरु कर्म त्वम्' "कर्मण्येवाधिकारस्ते" 'मामनुस्मर युध्य च" इति गीतायां श्रुतम्। तच्चाग्निहोत्रादिश्रौत-स्मार्तकर्मणां ज्ञानेन मोक्षे साधनीये समुच्चयं ज्ञापयति। "एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु" इति द्वयोरपि बुद्ध्योरेकपुरुषविषयत्वोक्त्या कदा कस्या अनुष्ठानमिति विवेकानवधारणेनार्जुनस्य प्रश्न उपपद्यते ज्ञान-कर्मसमुच्चयेऽपि; "धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते" इति क्वचित् कर्मप्राधान्येऽवगते, कदाचित् कर्मप्राधान्यम्, कदाचित् ज्ञानप्राधान्यमिति प्रकारभेदमात्रमाश्रित्य। "लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ" "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्" इत्युपदेशोऽत एवोपपद्यते; अन्यथा "द्विविधा" इति धाप्रत्ययानुपपत्तिः। "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" इत्यपि "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु" इति वचनैकवाक्यतया कर्मापरित्यागेन ज्ञानविधिरेव। तथा च ज्ञान-कर्मणोरन्यतरप्राधान्याप्राधान्यविवक्षायामेव गीतायास्तात्पर्यम् ॥

—: * :—

### ॥ भगवत्पादानां ज्ञानमात्रसाधनत्ववादः ॥

अविद्वांसमर्जुन व्याजीकृत्योपदिष्टत्वात् कर्मयोगस्य, विदुषि तदसम्भवाद् न गीतायास्तत्समुच्चये तात्पर्यम्;

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते।
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ॥"

इत्यविदुषः पृथक्कृत्य विदुषः कर्मनिषेधात्, "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्" इति वचनाच्च ॥

"ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत् किं कर्मणि घोरे मां नियोजयसि केशव ॥ "

इत्यर्जुनप्रश्नानुपपत्तिरपि ज्ञान-कर्मसमुच्चये । अत एव "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज " इति सर्वकर्मत्यागोपदेश उपपद्यते । "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु" इति तु बाह्यकर्मत्यागपरं सत् कर्मसमुच्चयं ज्ञानस्य वारयति । न ह्यर्जुनमेकं प्रत्येव गीतोपदेशः; "ब्राह्मण-क्षत्रियविशां शूद्राणां च परं तप " इति सर्वान् प्रत्येव तद्व्याजीकृत्य गीतोपदेशात् नोभयोरेकपुरुषाश्रयतानियमः, येन कर्मयोग–ज्ञानयोगयोः प्रकारभेदमात्रमुपदिष्टं स्यात् । कर्तृत्व-ज्ञानशून्यता ज्ञानयोगे, तद्वत्ता तु कर्मयोगे, इति तयोः समुच्चयो व्याहतः । अतो भिन्नफलकत्वमेव ज्ञान-कर्मणोः, इति " ज्यायसी चेत् " इत्यर्जुनप्रश्नोऽपि । न च ज्ञानप्राधान्यम्, कर्माप्राधान्यम्, कर्मप्राधान्यं ज्ञानाप्राधान्यमिति विरुद्धयोस्तयोः प्रकारभेदोऽपि । न च ज्ञानाप्राधान्यपक्षः सम्भवति, इति कर्माप्राधान्येन, तस्य पुरुषसंस्कारद्वारा सन्निपत्योपकारकत्वेन चोपयोगाद् न ज्ञानवत् साक्षाद् मोक्षसाधनत्वम् ; येन समुच्चयस्तयोः स्यात् । अत एव—

" ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ॥ "
" बहिः सूत्रं त्यजेद्विद्वान् योगमुत्तममाश्रितः ॥ "

इत्यादिवचनम् । ज्ञान-कर्मसमुच्चयवादे तु कर्माङ्गयज्ञोपवीतत्यागादिविधिर्नोपपद्येत ॥

—:*:—

अत्र भूमिकायाम्—न्यायचन्द्रिकानूदितज्ञान-कर्मसमुच्चयवादोपष्टम्भकवाक्यान्येव भगवत्पादानां गीताभाष्येऽपि दृश्यन्ते, इति भगवत्पादापेक्षया प्राचीनत्वं भास्कराचार्यस्येति प्रतिपादितम् ॥

परं तु भास्कराचार्यस्य ब्रह्मसूत्रभाष्ये—"तत्राथशब्दो नाधिकारार्थः; ब्रह्मजिज्ञासाया अनधिकार्यत्वात्, मङ्गलस्य च वाक्यार्थे समन्वयाभावात्, पूर्वप्रकृतापेक्षायाश्चानन्तर्याव्यतिरेकाद् आनन्तर्यार्थ इह गृह्यते । तत्र पूर्ववृत्तं वक्तव्यम् , तदुच्यते ; पूर्वं कर्मविचारो वृत्तः, अनन्तरं ब्रह्मजिज्ञासा आरभ्यते ॥

अत्राहुः—नायं वृत्तवर्तिष्यमाणसम्बन्ध उपपद्यते ; धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः । न चात्र क्रमस्य प्रतिपादकं प्रमाण-

मस्ति; यथा—"हृदयस्याग्रेऽवद्यति । अथ जिह्वाया अथ वक्षसः"—इति । न चात्राङ्गाङ्गिभावः प्रयाजादिवत् । फल-जिज्ञास्यभेदाच्च—इति । अभ्युदयफलं धर्मज्ञानम्, निःश्रेयसफलं ब्रह्मज्ञानम्, साध्यश्च धर्मो जिज्ञास्यः, सिद्धरूपं ब्रह्मात्र । चोदनाप्रवृत्तिभेदाच्च—इत्यादीन्यावापोद्वापाभ्यामर्थतः, शब्दतश्च भगवत्पादभाष्यवाक्यान्येव पूर्वपक्षतया जिज्ञासाधिकरणे गृह्यन्ते । पुच्छ-ब्रह्मवादो भगवत्पादव्यवस्थापितो भास्करेणानन्दमयाधिकरणे यथावदनूद्य निरस्यते—"स्वमत्युत्प्रेक्षितहेत्वाभासविजृम्भिकेयं गमनिका, न श्रुत्यनुमता, सूत्रानुगता वा" इत्यादिना । "गुहां प्रविष्टौ" इति सूत्रे जीव-ब्रह्मभेदं सिद्धान्तयित्वा—"केचित्तु श्रुत्यर्थम्, आचार्योक्तिं च पृष्ठतः कृत्वा मायामात्रं स्वबुद्ध्या कल्पयित्वाऽन्यदेव दर्शनं रचयन्ति" इति भगवत्पादमतं तदुपज्ञं न प्रमाणमिति भास्करेण दूष्यते । एवं मायावादखण्डनं तदनन्यत्वाधिकरणे भास्करेण क्रियते । "असम्भवस्तु सतोऽनुपपत्तेः" इति सूत्रे ब्रह्मोत्पत्तिनिषेधपरतया भग-वत्पादीयं विवरणं तत्रानित्यत्वशङ्काया अनुदयाद् निरस्यते । "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इत्यत्र—"ये पुनर्जागरितावस्थाऽपि मायामात्रमिति घोषयन्ति, * ते सूत्रकाराभिप्रायं नाशयन्तः श्रोत्रियजनं व्यामोहयन्ति" इत्यपि भगवत्पादसिद्धान्तस्यैव निरासः । एवमन्यत्रापि बहुषु स्थलेषु ॥

अनेन च ज्ञायते—भगवत्पादानन्तर एव भास्करः—इति, परं तु भगवत्पादैः शब्दतोऽर्थतश्च भास्करीयाण्यपि वाक्यान्यनूद्य निरस्यन्ते । तद्यथा—आनन्दमयाधि-

---

* अत्र घोषयन्तीति प्रयोगात् भास्करभगवत्पादयोर्वादप्रतिवादकालिकोऽयं विचार इति गम्यते । "मायामात्रं तु" इति सूत्रे हि न कुत्रापि जागरिकमिथ्यात्वं भाष्ये वर्तते । भाष्यानु-यायिनस्तु तत्र तत्र शुक्तिरूप्यदृष्टान्तमिव स्वाप्नदृष्टान्तमपि मिथ्यात्वानुमाने स्म विवक्षन्ति । भास्करमतेऽप्यत्र मायापदस्य प्रज्ञापरत्वात् सौगतानामिव ज्ञानव्यतिरेकेण विषयाभाव एव स्वीक्रियते, परं तु तद्दृष्टान्तेन जागरिकमिथ्यात्वं न भवतीति—"वैधर्म्याच्चे"ति सूत्रानुसारिणी व्यवस्था । भगवत्पादभाष्यं तूभयबाधितत्वेऽपि वैषम्यमन्यथा भाषते । लक्ष्यं तु तस्य भास्करमत-निरसनमेव । न च भगवत्पादीये विवरणे सूत्रस्वारस्यमिति मत्वा तु मायामात्रसूत्रे भास्करेण भाष्यनिरासः । न च कुत्रापि भाष्ये स्वाप्नजागरयोर्वैषम्यमिव साम्यमपि प्रतिपादितम्, इति छिद्रान्वेषिणो भास्करस्येदमाक्रमणम् । अधिकमन्यत्र ॥

करणे प्रथमं भास्करमतानुसारेण तद्व्याख्याय, तन्मतनिरसनपूर्वकं स्वीयं मतं समर्थ्यते । न च कुत्रापि भाष्ये खण्डनीयमतानुसारेणापि सूत्रयोजनं दृश्यते—यदि तत् प्रसिद्धम् । अतो ज्ञायते—परस्परं स्वस्वमतस्थापनेन, मतान्तरनिरसनेन च भगवत्पादभाष्यभास्करभाष्ययोः प्रवृत्तत्त्वात् , तयोस्समकालिकत्वम्—तयोर्वादप्रतिवादाभ्यां स्वस्वमतस्थापनं च तत्तत्काले समासीत्—इति ॥

सति चैवं माधवीयशङ्करविजये भास्करभगवत्पादयोरपि वादप्रतिवादसङ्कलनं सुष्ठु लगति । साधनपरिच्छेदे ज्ञान-कर्मसमुच्चयवादनिरासावसरे भास्करमतनिरसनं भगवत्पादीयं लक्ष्यमिति विशदयन्ती न्यायचन्द्रिकेममर्थं ज्ञापयति । अत उपवर्षाचार्यसम्प्रदायानुसारी भास्कराचार्यो वयसाऽधिकः, भगवत्पादास्तु वयसा न्यूनाः, इत्यभिप्रेत्यैव पूर्वं भूमिकायां भास्करापेक्षया भगवत्पादनामर्वाचीनत्वमुक्तम् ॥

यदि भास्करपदमत्र तत्पूर्वाचार्योपवर्षपरम् , एवं चोपवर्षमतनिरसनमेवात्र लक्ष्यम् , तर्हि कथं भास्करस्यापि भगवत्पादपूर्वाचार्यमतनिरसनं न लक्ष्यम् ? तत उभयोरपि समकालिकत्ववाद एव साधीयान् । न हि भगवत्पादानामद्वैतदर्शनमपि तदुपज्ञम् , किं त्वनादिसम्प्रदायागतम् ॥

"नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥
श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् ।"

इति नित्यानुसंहितदिशाऽनादिसम्प्रदायसिद्धत्वादद्वैतवादस्य ॥

विन्ध्येश्वरीप्रसादस्तु—भास्कराचार्यशारीरकमीमांसाभाष्यभूमिकायाम्—उदयनेन न्यायकुसुमाञ्जलौ ३३२ पृष्ठे ५ पङ्क्तौ "ब्रह्मपरिणतेरिति भास्करगोत्रे युज्यते" इत्युक्त्या, १४ पृष्ठे—"भास्करस्त्रिदण्डिमतभाष्यकारः" इति वर्धमानोपाध्यायस्य कुसुमाञ्जलिप्रकाशोक्त्या चोदयनसमकालिकत्वं भास्करस्य द्रढयति । इदं चोदयनात् पूर्वकालिकत्वेऽपि न विरुद्धम् , भगवत्पादसमकालिकत्वेऽपि वा । सर्वथा तु—आनन्दमयाधिकरणे भास्करभाष्यं भगवत्पादैः, भगवत्पादभाष्यं च भास्करेण

यद् निरस्यते, तदिदमुभयोरपि शङ्करविजयनिर्दिष्टवादप्रतिवादसन्दर्भं प्रमाणयति, इति वादप्रतिवादावसरगतं भावमादाय भगवत्पादानां भास्करमतनिरासः, तदनु तद्भाष्यखण्डनेन ब्रह्ममीमांसाभाष्यरचनं भास्करस्येति कल्प एव साधीयान् ॥

अयमेव न्यायः—"तत्र नाधिकारार्थः" इत्यादिना जिज्ञासाधिकरणे, "केचित्तु श्रुत्यर्थम्, आचार्योक्तिं च पृष्ठतः कृत्वा मायामात्रं स्वबुध्या कल्पयित्वाऽन्यदेव दर्शनं रचयन्ति" इत्यादिना गुहां प्रविष्टाविति सूत्रे, अन्यत्र च तत्र तत्र भास्करस्य भगवत्पादमतनिरसनप्रकारोऽपि ॥

तत्र "ननु धर्मावबोधानन्तर्यं विशेषः" इति तु भगवत्पादानां वादप्रतिवादकालिकभास्करीयकर्मविचारानन्तर्यानुवादः, तन्मतनिरसनम्, तदनुवादेन भाष्यान्तररचनं च भास्करस्येत्युभयोः परस्परमतनिरसनं स्वस्वभाष्य उपपद्यते। विश्वस्यते—भगवत्पादानां स्वस्वरूपप्राप्त्यनन्तरमेव भास्करभाष्यस्य प्रकाशनमासीत्। तत एव भामत्यादौ भगवत्पादभाष्यविवरणावसरे तत्र तत्र भास्करीयभेदाभेदमतनिरसनपरतया भाष्ययोजनमुपपद्यते; अन्यथा का वा सङ्गतिर्भगवत्पादभाष्यविवरणस्य, भास्करमतनिरसनस्य च भामतीविवरणादौ। तत्र भामत्याम्—परिणामिनित्यं कूटस्थनित्यमिति विभागो भाष्येऽनुपपन्नः; स्वमते परिणामिनित्यत्वानङ्गीकारादित्याशङ्कावारणार्थम्—"परे हि द्वयीं नित्यतामाहुः—कूटस्थनित्यताम्, परिणामिनित्यतां च। तत्र नित्यमित्युक्ते मा भूदस्य परिणामिनित्यतेति—"तत्र किञ्चित् परिणामिनित्यमि"ति भाष्यमवतारितम्, विवृतं च तत्र—भेदाभेदवाद एवायं विभाग इत्यादिरूपेण ॥

तत्र भेदाभेदवादः पूर्वपक्षतया भास्करीय एव। यतस्तदुपसंहारावसरे भास्करीयः सङ्ग्रहश्लोक एव तदुपष्टम्भकतयोदाहृतः—

"कार्यात्मना तु नानात्वमभेदः कारणात्मना।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥*

---

* निर्णयसागरसंस्करणे कल्पतर्वादिसंवलिते ११७–११८ पृष्ठे भास्करभाष्ये ९ पृष्ठे।

इति । खण्डितश्चायम्—“अत्रोच्यते” इत्यादिना । अयं भेदाभेदवाद एव भामत्यामनेकान्तवाद इति मत्वा तदनन्यत्वाधिकरणे—सम्प्रत्यनेकान्तवादमुत्थापयति —“नन्वनेकात्मकं ब्रह्म—यथा वृक्षोऽनेकशाखः, एवमनेकशक्तियुक्तं ब्रह्म। अत एकत्वम्, नानात्वं चोभयमपि सत्यमेवे”ति भाष्यमवतार्यते, निरस्यतया चानेकान्तवादोऽयमवतार्यते—“तमिममनेकान्तवादं दूषयति—नैवं स्यादि” ति भाष्यम् ॥

अनेकान्तवादोऽयं भास्करभाष्ये २४४ तमे पृष्ठे “असाधारणत्वाच्चापहतपाप्मत्वादिगुणगणानां व्यतिरिक्ताव्यतिरिक्तस्वभावत्वादविरोधं भगवान् बादरायणः परिनिश्चिकाय । न च गुणिगुणयोरेकत्वानेकत्वविरोधः—यथा अग्निरेकः, सप्तजिह्वः, प्रकाशवान्, ऊर्ध्वज्वलनः, उष्ण इति नानात्वम्; यथा चोद्यन् दिनकर एकः, किरणजालमवनिमण्डले प्रथयन् अनेको भवति” इति दृश्यते ॥

अनेकान्तवादो नाम अनियतत्ववादः—नात्यन्तिको भेदः, न वाऽऽत्यन्तिकोऽभेदः—इति । आर्हतानेकान्तवादादस्य विशेषस्तु षड्दर्शनसमुच्चयादौ स्याद्वादस्वीकाराद् भेदाभेदयोरप्यनियतत्वेन—अनेकान्तेऽप्यनेकान्तस्वीकरणेन । अत एव—स्यादस्ति च नास्ति चेति कथञ्चिदर्थकस्य स्यात्पदस्य प्रयोगः । सर्वं चेदं न्यायचन्द्रिकासमुद्धृतज्ञान-कर्मसमुच्चयनिरूपणपरभास्करवचसां गीताभाष्यसङ्गृहीतखण्ड्यमानभास्करवचसां च तद्विचारपरम्परायाश्चैकरूप्यदर्शनेनावगम्यते । इतः परं तु कालनिर्णयैकदीक्षाश्चरित्रविमर्शकप्रवराः प्रमाणम् । अस्माकं तु विचारसरणिरान्तरं साक्ष्यमनुसृत्य, न तु बाह्यं साक्ष्यम् ॥

—:*:—

## ॥ न्यायचन्द्रिकायां फलपरिच्छेदपूर्वोत्तरपक्षसारसङ्कलनम् ॥

॥ मोक्षस्वरूपं ॥ (पृ॰ ५३५–५६३)

॥ (१) चार्वाकादिमोक्षस्वरूपम् ॥

देहात्मवादे मोक्षस्तु देहमोक्षः, तद्धर्माभावो वा । अस्तु वा देहातिरिक्त आत्मा, न वा, देहमोक्षो न मोक्ष इति च तथाप्यलौकिकाकाशे सततोर्ध्वगमनमेव मोक्षो नामेत्यार्हताः ॥

यदि नार्हतमतं विकल्पसहम्; तर्हि संसारिविज्ञानसन्तानोच्छेदो मोक्ष इति सौगतमतमाद्रियताम्, शून्यतापत्तिर्वा। दुःख जन्म प्रवृत्ति दोष मिथ्याज्ञानानां सर्वेषामात्यन्तिकविनाशो वा मुक्तिः। सा च समूलानां कार्यकारणभावापन्नानां निवृत्तिः। मूलं चाऽऽत्मतत्त्वाज्ञानम्। दुःखाभावमात्रेण मुक्तिव्यवहारः, न तु तत्र सुखस्य भानम्; दुःखाभावमात्रे सुखत्वोपचारात् प्रवृत्तिः॥

प्रकृति-पुरुषयोरविवेकविनाशो वा कापिलाभिमता मुक्तिः स्वीक्रियताम्। तत एव हि बन्धो नाम। आत्मा त्वसङ्गज्ञानस्वरूपः शुद्धस्वरूपेण भासमानो मुक्तो नाम। स चानन्दस्वरूप एवेत्यद्वैतसिद्धान्ताविशेषः, जीवात्मस्वरूपमात्रमादाय जीवेश्वरैक्यं तत्र॥

—: * :—

## ॥ भगवत्पादीयमोक्षस्वरूपम् ॥

न च देहमोक्षो मोक्षो नाम। देहात्मवादे बन्धमोक्षभागी न कोऽपि; देहस्य दृश्यत्वादपि नात्मत्वम्, इति देहमोक्षो न मोक्षः॥

आर्हतानां सततोर्ध्वगमनमोक्षता तु न युक्ता; देहवत आत्मन ऊर्ध्वगमनं देहस्यानित्यत्वाद् न सम्भवति। देहरहितस्योर्ध्वगमनं बाधितम्। अदेहस्य देहपरिमाणेन परिमाणासम्भवे व्यापकत्वेनोर्ध्वगमनासम्भवात्॥

संसारिविज्ञानसन्तानोच्छेदोऽपि न मोक्षः; फलिनोऽभावात्। न च प्राक्तनविज्ञानसन्तानोच्छेदः, ततो विशुद्धविज्ञानोदयो वा सम्भवति; तद्धेतोर्दुर्वचत्वात्। शून्यतापत्तिस्तु आत्मोच्छेदरूपा न पुरुषार्थः। शून्यता हि यदि मुक्तौ प्रकाशते, तर्हि न शून्यता। यदि न प्रकाशते, तर्हि कथं नाशून्यता?

दुःख जन्म प्रवृत्ति दोष मिथ्याज्ञानानां निवृत्तिरपि न मुक्तिः। तत्र समूलानां दुःखानां निवृत्तौ मूलं यदि परमात्मा, तर्हि बाधः; यद्यात्मतत्त्वज्ञानम्, तर्ह्यविद्यानिवृत्त्युपलक्षितात्मस्वरूपमात्रं मुक्तिरिति फलति। तत्र चात्मा यदि प्रकाशते, तर्हि भगवत्पादीया मुक्तिः। यदि न भाति, तर्हि मुक्तेर्न मोहावस्थातो विशेषः। न च दुःखाभाव एव मुक्तिः; अवेद्यस्य तस्यापुरुषार्थत्वात्॥

प्रकृति-पुरुषविवेकस्ताभ्यामभिन्नश्चेत्, न तस्य निवृत्तिः; प्रकृतिपुरुषयोरिव तस्यापि नित्यत्वात्, अन्यथाऽऽत्मोच्छेदप्रसङ्गात्। यदि स ताभ्यां भिन्नः, तर्हि तस्य सत्त्वे न निवृत्तिः,

असत्त्वे न बन्धः। अतोऽविद्यास्तमय एव मोक्षः। अत्र हि प्रकृति-पुरुषयोरविवेकस्य भेदः, प्रकृतिमात्रस्य नाशः, नात्मनः। अविवेकस्य, अज्ञानस्य वा व्यावहारिकं सत्त्वम्, नात्मोच्छेदः; आवरणनिवृत्तिमात्रेण स्वप्रकाशसंविन्मात्रतेति स्वीकारात् सर्वदोषनिरासः। अविद्यानिवृत्ति-र्मिथ्या वा भवतु, सत्या वा, मिथ्यासत्यविलक्षणा पञ्चमप्रकारा वेष्टसिद्धिदृष्टया ॥

—:*:—

अत्र वैशेषिकाः—ससम्बोधो मोक्षो नोपपद्यते। दुःखनिवृत्तिमात्रं मोक्षः। आनन्दादिशब्दा दुःखनिवृत्तिमात्रावलम्बिनः। यदि सुखे रागेण प्रवर्तेत, ततो बन्ध एव स्यात्; रागस्य बन्धहेतुत्वात्। शरीरेन्द्रिय-मनसां निवृत्तौ विज्ञानहेत्वभावाद् मुक्तो निःसंज्ञ इति—वदन्ति ॥

तत्र रागो नैकान्ततो बन्धहेतुः, तस्य बन्धहेतुत्व-तदभावौ शास्त्रैकाव-सेयौ। अत एव स्वदारगमनं धर्माय, परदारगमनमधर्माय, इति मोक्षाति-रिक्तविषयो रागो बन्धहेतुः। मुमुक्षा तु न तथा। तथा चोक्तम्—

"देवप्रसादकाम्या च चित्तशुद्धेश्च कामना।
मोक्षस्य कामना चेति कामनेयं न कामना ॥"

इति। दुःखाभावस्यानन्दत्वे तस्यातिशयासम्भवाद् आनन्दमीमांसायां मानुषाद्यानन्दानां शतगुणोत्कर्षाम्नानं विरुध्यते ॥

ब्रह्मसूत्राणि हि तुरीयस्य तुरीयपादे—"द्वादशाहवदुभयविधं बादरायणः" इत्यनेन स्वेच्छया शरीरोपादानानुपादाने उभे अपि सिद्धान्तयन्ति— "अभावं बादरिराह ह्येवम्" "भावं जैमिनिर्विकल्पामननात्" इति पक्षद्वयानुवादपूर्वकम् ॥

इदं तु मुख्यमुक्त्यभिप्रायमिति बहवः, अद्वैतिनस्तु गौणमुक्त्यभिप्राय-मिति। तन्मते हि नित्यमशरीरत्वम्; अकर्मनिमित्तत्वात्। मुक्तावपि सशरीरत्वं सदिव्यशरीरत्वमुपासनानिमित्तं न स्वाभाविकम् ॥

न्यायचन्द्रिकायाम्—"अशरीरं वाव सन्तं" इत्यागमो (Page 545) मोक्षे प्रमाणमित्यात्रेयादयः—इति वर्णितम्, तदिदं वैशेषिकमतानुसारी

कश्चनात्रेय इति मत्वेति शास्त्ररत्नाकरपोलकं रामशास्त्रिणो वदन्ति । तत्रैव हि मोक्षेऽशरीरत्वमात्रम्, न तु भास्करादिमतेषु कुत्रापि मुक्तौ भेदवादिषु । अद्वैतमते त्वस्ति मोक्षेऽशरीरत्वम्, परं तु न निस्सम्बोधं पाषाणकल्पम् । तत्तु स्वाभाविकं जीवतोऽपि; अकर्मनिमित्तत्वात् सशरीरत्वस्येति व्यक्तं समन्वयाधिकरणे भाष्ये । न्यायचन्द्रिकायामपि—"इति साधर्म्य-वैधर्म्य-निरूपणक्षीणायुषां किमागमोपन्यासलालसतया" इत्यत्रैवोपसंहारोऽप्यात्रेयस्यास्य वैशेषिकपक्षपातिन एव ग्रहणं व्यञ्जयति ॥

तत्र द्रविडात्रेयदर्शने श्रीरामशास्त्रिणः—वाक्यकारो ब्रह्मनन्दी आत्रेयापरनामधेयोऽद्वैतपक्षपात्येव, न दर्शनान्तरपक्षपातीति संक्षेपशारीरक-कल्पतर्ववलम्बनेन विशदयन्ति ॥

तथाहि प्रकृत्यधिकरणे कल्पतरुः—"भास्करस्त्विह बभ्राम—योनिरि" ति सूत्रनिर्देशात्, छान्दोग्यवाक्यकारेण ब्रह्मनन्दिना "परिणामस्तु स्याद्" इत्यभिधानाच्च परिणामवादो वृद्धसम्मतः—इति । नासतः; अनिष्पाद्यत्वात् । नापि सतः; प्रवृत्त्यानर्थक्यात्, सत्त्वाविशेषात् । अभिव्यक्त्यर्थमिति चेत्, न; तस्या अपि सत्त्वात्, प्रवृत्तिनित्यत्वाच्च । सदाऽभिव्यक्तिप्रसङ्ग इति चेत्, न; संव्यहारमात्रत्वात्" इति ब्रह्मनन्दिवाक्यानि सदसत्ख्यातिनिरासपूर्वकमनिर्वचनीयख्यातिसमर्थनपरतया व्याचष्टे । संक्षेपशारीरकमपि तृतीयाध्याये—

"आत्रेयवाक्यमपि संव्यवहारमात्रम्
कार्यं समस्तमिति नः कथयाम्बभूव ।
सत्कार्यवादविषये न हि दोषराशि-
र्मायामये भवितुमुत्सहते विरोधात् ॥ २१७ ॥"

इत्यादिना पूर्वोक्तानि ब्रह्मनन्दिवाक्यानि सद्विवर्तवादसमर्थनपरतया "वाचारम्भणं विकारो नामधेय"मिति श्रुत्यर्थोपष्टम्भकतया च व्याचष्ट इति च श्रीद्रविडात्रेयदर्शने ते लिखन्ति ॥

तत्र "भास्करस्तु बभ्रामेति कल्पतरुर्वदति। कुमारिलकालपर्यन्तं ब्रह्मपरिणामवाद एव वेदान्तसिद्धान्त आसीत्। सोऽप्युपवर्षाचार्यस्य, ब्रह्मनन्दिनो वा ज्ञानकर्मसमुच्चयवादिन एव। अत एव—

"दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन।"

इति श्लोकवार्तिकम्। इदं हि वृत्तिकारमतोपसंहार एव दृश्यते। मध्ये चोपवर्षमतानुसारेण ज्ञानात्मपरिणामतावादमुपक्षिप्य, परिणामिनोऽप्यात्मनो न स्वरूपहानिरित्यौपनिषदं मतमित्युक्तम्। तेन—चानुमीयते—उपवर्षाचार्याणाम्, ब्रह्मनन्दिनश्च, छान्दोग्ये वृत्तिः, वाक्यं च पूर्वमासीत्, तदनुसृत्यैव भगवत्पादानां भास्करेण वादः, तदनन्तरं ब्रह्मसूत्रभाष्यं परस्परमतनिरसनेन परस्परम्—इति। सति चैवं तदानीन्तनानामुपवर्षविषये श्रद्धाधिक्यमासीदिति मत्वा उपवर्षसमानसिद्धान्तब्रह्मनन्दिवाक्यानि पूर्वोद्धृतानि स्वमतानुगुणतया सर्वज्ञात्ममुनि–कल्पतरुकारादयो व्याचक्षतेति प्रतिभाति॥

संप्रदायमुखेन तत्संप्रदायमेव प्रचारयन् भास्करस्तु–सुधीरं प्रक्षिप्तानीमानि वाक्यानीति भाषते, अथवा तान्यपि वाक्यानि वाचारम्भणवाक्यवत् परिणामिकारणपरतया वा योजयितुं शक्यं मन्यन्ते, इति वाक्यकारवृत्तिकारयोरद्वैत एव तात्पर्यमिति संक्षेपशारीरककल्पतरुसिद्धान्तो निर्मूल इति तु भास्करानुयायिनः। सर्वथा तु वाक्यकारवृत्तिकारौ सर्वादरपात्रे समास्ताम्। यावत्सम्भवं स्वस्वमतानुसारेण तदीयोऽपि सिद्धान्तः स्वमतानुगुणं द्वैताद्वैतविशिष्टाद्वैताद्वैतवादिभिरमन्यतेति तु दुरपन्हवं तत्त्वम्। सति चैवम् यत्–"जीवस्य वस्तुभूतस्य देहाद्यनात्मसु विपरीतज्ञानम्, ब्रह्मस्वरूपाप्रतिपत्तिश्चोभयमविद्या तत्त्वमस्यादिवाक्यजन्यज्ञानेन निवर्तते" इति (Page 19) भास्करभाष्ये तन्मूलाचार्यतदभिमतवाक्यकारब्रह्मनन्दि-वृत्तिकारोपवर्षादिकृतिषु च मिथ्याज्ञानातिरिक्तमूलाविद्यानिरासो दृश्यते, इति तत्र ब्रह्मपरिणामवाद एव, न मायावादः, विवर्तवादो वा, इति तन्निरसनेन ब्रह्मविवर्तोपादानतावादमेव—

आत्रेयवाक्यमपि संव्यवहारमात्रम्
कार्यं समस्तमिति नः कथयाम्बभूव ।
सत्कार्यवादविषयो न हि दोषराशि-
र्मायामये भवितुमुत्सहते विरोधात् ॥

इति व्यवस्थापयन्तः, "परिणामस्तु स्यात् । नासतः; अनुत्पद्यमानत्वात् । नापि सतः; प्रवृत्त्यानर्थक्यात्, सत्त्वाविशेषात् । अभिव्यक्त्यर्थमिति चेत्, न; तस्या अपि सत्त्वात्, प्रवृत्तिनित्यत्वाच्च । सदाऽभिव्यक्तिप्रसङ्ग इति चेत्, न; संव्यवहारमात्रत्वात्" इति वदतो ब्रह्मनन्दिनोऽप्यनिर्वचनीयख्यातावेव तात्पर्यमिति विवेचयन्तश्च कल्पतरुकाराः, किं बहुना, भूयोभिर्वचनजालै-र्मिथ्याज्ञानातिरिक्तमूलाविद्यां सिद्धान्तयन्तः सुरेश्वराचार्याः, अन्ये च न्याय-चन्द्रिकाकारादयोऽद्वैतमतेऽपि मूलाविद्यानिरासे तात्पर्यकल्पनायां तृणीकृताः स्युः, किं बहुना ? अद्वैतदर्शनं भगवत्पादानां भास्कराद्युक्तरीत्या व्यामोह-नार्थमिति च स्यात्, इति श्रीनागोजिभट्टस्य, तदनुयायिनः कस्यचन च मूला-विद्यानिरासो यद्यद्वैतमतनिरासनार्थो भास्करादेरिव, तर्हि कथान्तरमिदम् । भगवत्पादवाक्यानामपि तदनुगुणं योजनेन ब्रह्मपरिणामवाद-ज्ञानकर्मसमुच्च-यादिनिरासेन चापथेन भगवत्पादसिद्धान्तयोजनेन तद्विरुद्धाद्वैतदर्शनप्रवर्तनं तु दुस्सहं साहसम् ॥

ब्रह्मनन्दिनो वाक्यकारस्यात्रेयस्य वा दर्शनम्, तथा वृत्तिकारस्योपवर्षस्य वा दर्शनमद्वैतदर्शनमेवेत्यद्वैतिनः—द्वैताद्वैतविशिष्टाद्वैतसाधारणानां केषाञ्चन, तथाऽद्वैतिनामिव प्रतीयमानानां केषाञ्चन वाक्यानां तदनुगुणं योजनेन संक्षेपशारीरककल्पतर्वादयः, तदनुयायिनश्च । एवं बहूनां स्वस्वसिद्धान्तानु-सारिणामेव वाक्यानां दर्शनेन स्वस्वमतस्यैवोपबृंहकाणि ब्रह्मनन्दिवाक्या-नीति तु भास्करभाष्य - श्रीभाष्ये, तदनुयायिनश्च ॥

अनेनावगम्यते—सर्वे भाष्यकाराः, तदनुयायिनश्चात्रेयस्य बादरायणस्य, उपनिषदां स्थानं वाऽभिप्रयन्ति, इति वैयासिकदर्शनमिवानादिसम्प्रदाय-

सिद्धमात्रेयं दर्शनम् । तच्च तत्तत्सम्प्रदायपक्षपातिनां यथासम्प्रदायं श्रद्धास्पदम्—परिणामवादो वा, विवर्तवादो वा, यः कोऽपि वा तदीयो भवतु ॥

तथापि तदनुयायितामात्मनो मन्वाना अद्वैतिनः—अद्वैतदर्शनमेवात्रेय-दर्शनम्, तथाऽन्ये द्वैताद्वैतादिदर्शनमेव तदीयं दर्शनं मत्वा तत्तत्सिद्धान्त-भाष्यमिव तदीयं दर्शनमौपनिषदं दर्शनम्, वैयासिकं वा मन्यन्ते । सर्वथा तु निगूढमिदं तत्त्वं स्फीतालोकवर्तिनं घटमिव संक्षेपशारीरककल्पतर्वाद्युपष्टम्भेन बहिरभिव्यञ्जयन्तः, 'वाक्यकारवृत्तिकाराभ्यां सम्प्रदायतः परिणामवादः समाश्रितः' इति भास्करभाष्यमपि स्वीये द्रविडात्रेयदर्शने संगृह्यात्रेयदर्शनं भास्करीयादीनामिवापीति सूक्ष्मदृष्ट्या सूचयन्तश्च गभीरतरतत्त्वगवेषणैकनिष्ठाः तत्तद्ग्रान्थिकनिगूढतत्त्वाविष्करणैकजीवनाश्च शास्त्ररत्नाकरपोलकं राम-शास्त्रिणो दार्शनिकतत्त्वविचाररसिकानां परःशतं धन्यवादानर्हन्ति । सर्वमिदमभिप्रेत्यैव प्रधानतमाद्वैतनिबन्धानाम्, तदाचार्याणां च संकलनात्मके तिरुपतिदेवस्थानप्रकाशिते परमहंसपरिव्राजकाचार्येष्टसिद्धीन्द्रसरस्वती-पूज्यपादानां श्रीकाञ्चीस्थोपनिषद्ब्रह्मेन्द्रमठाध्यक्षाणां शिष्यप्रवरपरमहंसपरि-व्राजकाचार्य श्रीमदनन्तानन्देन्द्रसरस्वतीस्वामिभिर्ब्रह्मनन्दिनः स्वीये निबन्धे ज्ञानोत्तमकृतीष्टसिद्धिव्याख्या संक्षेपशरीरकमधुसूदनीयव्याख्या भामती—तद्व्याख्याकल्पतर्वाद्यवलम्बेन भगवत्पादापेक्षयापि प्रथमं स्थानमद्वैतदर्शन-प्रवर्तकेषु दत्तम्, यथा भास्करादिभिः स्वीयदर्शनप्रवर्तकेषु तस्य प्रथमं स्थानम् । तत्र भास्कररामानुजादय इवात्रेयवाक्यानि स्वमूलभूतानि चेत्, कुतो न भगवत्पादाः स्वयं स्वीयस्य सिद्धान्तस्य तत्सम्प्रदायतः समागमं स्मरन्ति-यदि तदीयमेव दर्शन स्वस्यापि ? कुतो वा शान्तिपाठक्रमे गौडपादादिवद् आत्रेय-स्याप्याचार्यस्य दर्शनान्तर इव नानुसन्धानम् ? अतोऽनुमीयते—अंशतः क्वचन तदीयदर्शनतोऽस्ति वैषम्यं भगवत्पादीयस्य दर्शनस्य, भास्करादीनां तु तदनु-सन्धानात् सर्वात्मना साम्यं स्वदर्शनस्य वाक्यकारवृत्तिकारदर्शनाभ्याम्—इति च, इति ज्ञान-कर्मसमुच्चयादयः, निर्गुणोपासनमोक्षसाधनवादोऽन्यो

वा भास्कराद्यभिमतोऽद्वैतसिद्धान्तविरुद्धो यद्यात्रेयदर्शनसम्मतः स्यात्, तर्हि भगवत्पादीयं दर्शनमेकान्ततो नात्रेयदर्शनम् ॥

ततश्च आत्रेयस्य छान्दोग्यवाक्यानि, वृत्तिकाराणां तद्वृत्तिर्वा यावद् नोपलभ्यते, तावत् शान्तिपाठक्रमादौ भगवत्पादीयानाम्, भगवत्पादादेर्वा स्वभाष्येसाक्षात् स्वमूलाचार्यत्वेनाननुसन्धानात् कथमेकान्ततोऽद्वैतदर्शनमेवात्रेयदर्शनम्? कथं च संक्षेपशरीरकेष्टसिद्धिविवरणकल्पतर्वाद्यवलम्बमात्रेण तत्र श्रद्धातिशयो भवितुमर्हतीति तु शङ्का स्वयमत्रोत्तिष्ठति। समाहितिस्त्वत्र सत्यस्य तत्त्वं निहितं गुहायामिति शम् ॥

इति सुधीजनविधेयः

२७-१-५९

**अनन्तकृष्णशास्त्री**

—: * :—

ॐ

# ॥ द्वैताद्वैतवादप्रस्थानविकासक्रमः ॥

| | कर्तृनाम | ग्रन्थनाम | कालः |
|---|---|---|---|
| द्वैतम् | श्रीमध्वाचार्याः | प्रस्थानत्रयभाष्यं | (1199-1272) अथवा |
| | | दशप्रकरणी च, | (1238-1318) |
| अद्वैतम् | *चित्सुखाचार्याः | तत्त्वप्रदीपिका (चित्सुखीप्रभृतयः) | (1260–1300) |
| द्वैतम् | जयतीर्थाः | वादावलिः (चित्सुखीखण्डनरूपा) प्रमाणपद्धतिः, न्यायसुधा, श्रीमध्वाचार्यग्रन्थव्याख्याश्च (अधिकं भावबोधोपोद्घाततोऽवधेयम्) | (1318-1400) |
| अद्वैतम् | *आनन्दपूर्णाः (विद्यासागराः) | न्यायचन्द्रिका (प्रकृतनिबन्धः) (न्यायसुधाखण्डनरूपा) (इतराण्युपोद्घाते द्रष्टव्यानि) | (1330–1400) |
| द्वैतम् | व्यासराजाः | न्यायामृतम् (चित्सुखीखण्डनम्) | (1466–1559) |
| अद्वैतम् | *नृसिंहाश्रमाः | अद्वैतदीपिकाप्रभृतयः | (1550) |
| | *मधुसूदनसरस्वती | अद्वैतसिद्धिः (न्यायामृतखण्डनम्) | (1575–1640) |
| द्वैतम् | रामाचार्याः | तरङ्गिणी (न्यायामृतव्याख्या, अद्वैतसिद्धिखण्डनात्मिका) | (1600-1650) |
| ,, | *[1]आनन्दभट्टारकाः (?) | न्यायामृतकण्टकोद्धारः, | (1640-1675) |

---

* नक्षत्रचिह्नितानामेतेषां विषये ज्ञातव्यमाङ्ग्लभाषामयेऽद्वैतग्रन्थकारचरितेऽत्र योजितेऽतिविशदम् ।

*[1]कण्टकोद्धारस्य कर्ता विजयीन्द्रयतिरिति मैसूर् अमुद्रितग्रन्थसूची वदति । विजयीन्द्रसमयस्तु श्रीमदप्पय्यदीक्षितेन्द्रसमयः—(1514 to 1595- A. D.) । कण्टकोद्धारो बहुषु स्थलेषु रामाचार्यकृतिं तरङ्गिणीमनुवदति । रामाचार्यसमयस्तु 1600 – 1650 A. D. । अतस्तदनन्तरः कण्टकोद्धारकारः विजयीन्द्रयतिरिति न वक्तुं सुशकम् । केचित्तु व्यासतीर्थ एव कण्टकोद्धारकार इति वदन्ति । इदं त्वसम्भावितम् । न्यायामृतकण्टकोद्धारकारः कुत्रापि स्वनाम नोल्लिखति । तञ्जापुरकोशागार एकत्रैव लभ्यतेऽयं

| | कर्तृनाम | ग्रन्थनाम | कालः |
|---|---|---|---|
| अद्वैतम् | *बलभद्रः | अद्वैतसिद्धिव्याख्या कण्टकोद्धारपरीक्षा | (1660-1700) |
| ,, | *ब्रह्मानन्दसरस्वती, | तरङ्गिणीखण्डनात्मका-द्वैतसिद्धिव्याख्यालघुचन्द्रिकाप्रभृतयः, | (1675–1750) |
| द्वैतम् | वनमालमिश्राः | *[1]न्यायामृतसौगन्ध्यम् ( लघुचन्द्रिकाखण्डनम् ) | (1750-1800) |
| द्वैतम् | श्रीमदनन्ताल्वार् महोदयाः | न्यायभास्करः लघुचन्द्रिका खण्डनम् | (1750-1800) |
| अद्वैतम् | *पूज्यश्रीमन्नार्गुडि-श्रीराजुशास्त्रिचरणाः | *[1]न्यायेन्दुशेखरः | (1800-1890) |
| ,, | *पूज्यश्रीरामसुब्रह्मण्य शास्त्रिपादाः | न्यायभास्कर खण्डनम् | (1830-1923) |
| ,, | *पूज्यश्रीहरिहर-शास्त्रिणः | न्यायेन्दुशेखरः द्वितीय भागः | (1850-1923) |
| ,, | *श्रीगुरुश्रीपञ्चापगेश-शास्त्रिणः | ब्रह्मानन्दीयभावप्रकाशः | (1850-1927) |
| अद्वैतम् | *अनन्तकृष्णशास्त्री | सौगन्ध्यविमर्शः | (1888)-(1930) |
| द्वैतम् | श्रीनिवासाचार्याः नृसिंहाचार्यश्च | न्यायामृतार्णवः टिप्पणीसहितः, | (1947) |
| अद्वैतम् | *अनन्तकृष्णशास्त्री | न्यायामृतार्णवपरीक्षा | (1958) |

---

निबन्धः । तत्र कर्तृनाम प्रश्नचिह्नेन चिह्नितम् । परं तु पूज्यश्री सत्यध्यानतीर्थपादाः स्वकीय कण्टकोद्धारादर्शमनुसृत्य कण्टकोद्धारकार आनन्दभट्टारक इति वदन्ति स्म । अतस्तदेव नामात्र निर्दिष्टम् , परन्तु सोऽप्यादर्शो न परीक्षितः । अत एवात्रापि प्रश्नचिह्नम् ॥

* एतेषां विषये ज्ञातव्यं सर्वमाङ्गलभाषामयेऽद्वैतग्रन्थकारचरितेऽत्र योजितेऽतिविशदम् ॥

* 1 यद्यपि न्यायभास्करो विशिष्टाद्वैतपक्षपातिनामेव निबन्धः ; तथाप्येषु विषयेषु स द्वैतसिद्धान्तस्यापि साधारणः, इति तत्रोभयोरप्यैकमत्यात् चन्द्रिकाखण्डनरूपत्वाच्च तस्य, तत्खण्डनानां चात्र निर्देशः ॥

ॐ

# ॥ द्वैताद्वैतभाष्यप्रस्थानविकासक्रमः ॥

| | कर्तृनाम | ग्रन्थनाम | कालः |
|---|---|---|---|
| द्वैतम् | श्रीमध्वाचार्याः | ब्रह्मसूत्रभाष्यम् | (1199-1278) |
| | | | अथवा (1238-1318) |
| अद्वैतम् | *चित्सुखाचार्याः | भाष्यभावप्रकाशिका | (1250-1300) |
| द्वैतम् | श्रीजयतीर्थाः | न्यायसुधा | (1318-1365) |
| अद्वैतम् | *आनन्दपूर्णाः | न्यायचन्द्रिका | (1330-1400) |
| द्वैतम् | श्रीव्यासराजयतिः | तात्पर्यचन्द्रिका | * (1466-1559) |
| अद्वैतम् | *रघुनाथसूरिः | शङ्करपादभूषणम् | (1510-1550) |
| ,, | *तिरुवशनल्लूर रामसुब्रह्मण्यशास्त्रिपादाः | चन्द्रिकाखण्डनम् | (1835-1922) |
| द्वैतम् | पूज्यश्रीसत्यध्यानतीर्थाः | चन्द्रिकामण्डनम् | (1860-1942) |
| अद्वैतम् | *अनन्तकृष्णशास्त्री | अद्वैतदीपिका | (1921) |
| द्वैतम् | गौडगिरि वेङ्कटरमणाचार्याः | चन्द्रिकाप्रकाशप्रसरः | (1850-1930) |
| अद्वैतम् | *अनन्तकृष्णशास्त्री | अद्वैतदीपिका (द्वितीयभागः) | (1888) (1923) |
| ,, | ,, | *[1]वादावली न्यायसुधादि परीक्षा | ( ग्रन्थकालः 1958) |

---

* तत्त्वप्रकाशिकाभावबोधभूमिकायां व्यासराजयतिकाल 1446 – 1539 इति निर्दिष्टम् । परं तु तदीयतात्पर्यचन्द्रिकायाः किञ्चन परकीयं खण्डनं तदीयशिष्यद्वाराऽवगत्य श्रीव्यासराजयतीन्द्रास्तानब्रुवन्—परिणते वयसि नूतनग्रन्थरचनं न सुशकम्, कर्तव्यमत्र श्रीरघूत्तमतीर्थाः कुर्युरिति श्रीनागराजशर्मा वर्णयति । स हि—रघूत्तमतीर्थानां 1517 तमे शके मन्मथवत्सरे पुष्यशुक्लैकादश्यां तिरुक्कोविलूर सविधे मणप्पूण्डिग्रामे बृन्दावनं निर्णयति ।

* [1]पूज्यश्रीभण्डारकेरी स्वामिचरणानां श्रीपेजावरस्वामिपादानां चाज्ञया तदनुगृहीतन्यायसुधापुस्तकमाश्रित्य सङ्गृहीता

क्रैस्तवसंवत्सरस्तु ततः 78 सङ्ख्याया अधिकाया योजनेन 1595 A. D. संवत्सरो भवति । जननसमयस्तु श्रीरघूत्तमतीर्थानाम्, तेषां सप्तचत्वारिंशे वयसि बृन्दावनस्य तत्रैवोपोद्घाते वर्णनात् ततस्तेषां न्यूनीकरणे 1548 तमः क्रैस्तवो भवति । उपोद्घातोऽयं श्री व्यासराजतीर्थ समयः—1446-1539 A D. इति सङ्कलयति । सति चैवं श्रीरघूत्तमतीर्थानामवतारसमयो यदि तदीयसङ्कलित-दृष्ट्या 1548 तमः क्रैस्तवो वत्सरः, तर्हि श्रीव्यासराजतीर्थानां बृन्दावना-नन्तरं नववत्सरानन्तरमेव तदवतारः, इति कथं चन्द्रिकायाः खण्डनं श्रीरघू-त्तमतीर्थाः करिष्यन्तीति वर्णनं साधु स्यात् ? अतस्तच्चरितं साधु भवतु, इति मत्वा श्रीव्यासराजतीर्थसमयः परिवर्तितः । अन्यथा व्यासराजतीर्थसविधे तच्छिष्यैः परकीयचन्द्रिकाखण्डनस्य निवेदनम् , श्रीरघूत्तमतीर्था अत्र कर्तव्यं कुर्युरिति तदुत्तरमिति च किंवदन्ती किंवदन्तीमात्रम् , न प्रमाणम् । श्रीरघू-त्तमकृतिषु सङ्कलितासु तदीयशङ्करपादभूषणदूषणात्मकचन्द्रिकाभावबोधनामा निबन्धो न सङ्कलितः । विश्वस्यते—तात्पर्यचन्द्रिकाखण्डनंशङ्करपाद-भूषणस्य बहोः कालात् पूर्वं शिलालिपिभिः प्रकाशितस्य श्रीरघूत्तमतीर्थैर्न परिहारः कोऽपि कृतः, अथवा लिखितोऽपि कश्चन निबन्धो नोपलभ्यते —इति । सर्वथा तु श्रीव्यासराजसमय एव शङ्करपादभूषणं तदीयानां दृष्टिपथमगमत् । इदमभिप्रेत्यैव रघुनाथसूरिणां समयः, तदीयशङ्करपाद-भूषणसमयो वा श्रीव्यासराजतीर्थानां परिणतवयःसमय इति निर्दिष्टम् ॥

—:*:—

# ANALYSIS OF THE SUBJECT



## (१) स्वतः प्रामाण्यवादः ।

## (२) शक्तिवादः ।

## (३) अथ वेदापौरुषेयत्ववादः ।

## ॥ अथान्विताभिधानवादस्तुरीयः ॥

## ॥ अथ सिद्धार्थे वेदप्रामाण्यवादः पञ्चमः ॥

## ॥ आगमप्रामाण्यवादः सप्तमः ॥

क्रमसंख्या पृष्ठ

## ॥ अर्थापत्तिप्रमाणान्तरत्वसमर्थनं नवमम् ॥



## ॥ दशममभावस्वतन्त्रप्रमाणत्वसमर्थनम् ॥

## ॥ एकादशं प्रमाणलक्षणम् ॥

## ॥ द्वादशोऽखण्डार्थवादः ॥

क्रमसंख्या पृष्ठ

## ॥ अविरोधाख्यो द्वितीयः परिच्छेदः ॥

## ॥ अख्यात्यसत्ख्यात्यात्मख्यात्यन्यथाख्यातीनां निरासात्मकं प्रथमं प्रकरणम् ॥

क्रमसंख्या पृष्ठ



## ॥ अनिर्वाच्यत्वनिरूपणप्रकरणद्वितीयम् ॥

## ॥ अविद्याया भावरूपत्वोपादानत्वप्रकरणं तृतीयम् ॥

## ॥ ब्रह्मव्यतिरिक्तमिथ्यात्वसाधनप्रकरणं तुरीयम् ॥

## ॥ भेददुर्निरूपत्वप्रकरणं पञ्चमम् ॥

## ॥ आत्मस्वप्रकाशत्वप्रकरणं षष्ठम् ॥

## ॥ तमोऽतिरिक्तपदार्थत्वप्रकरणं सप्तमम् ॥

क्रमसंख्या पृष्ठ



## ॥ परमाणुनिरासप्रकरणमष्टमम् ॥

## ॥ साधनाख्यस्तृतीयः परिच्छेदः ॥

## ॥ फलाख्यस्तुरीयः परिच्छेदः ॥

## ॥ द्वैताद्वैतवादप्रस्थानविप्रतिपन्नाः

## केचन विषयाः* ॥

| क्रमसङ्ख्या | द्वैतम् | अद्वैतम् |
|---|---|---|
| 1 | ब्रह्मसूत्राणामोमथशब्दपूर्वकत्वनियमः | यत्राथशब्दः श्रुतः, तत्र तत्पूर्वकत्वम्, अन्यत्र तु नोंपूर्वकत्वम्, न वाऽथ-शब्दपूर्वकत्वम् |
| 2 | ईश्वरस्यैवोंकारार्थत्वम् | अद्वितीयं निर्विशेषं वा तत्त्वमेवोंकारार्थो माण्डूक्योपनिषदनुसारेण |
| 3 | जीवेश्वरभेदपारमार्थिकत्वम् | जीवत्वेश्वरत्वोपलक्षितसंविन्मात्रैकपारमा-र्थिकत्वम्, भेदमिथ्यात्वं च |
| 4 | ज्ञानस्येश्वरप्रसादद्वारा मोक्षसाध-नत्वम् | *ज्ञानस्य साक्षाद् बन्धनिवृत्तिद्वारा मोक्ष-साधनत्वम् (552) |
| 5 | प्रकृत्यादीनामनादीनामीश्वराधीनस-त्ताकत्वम् | अविद्याविषयशुद्धचैतन्यसमकालिकत्व-मात्मविद्यादीनां जीवेश्वरादीनां |

---

* अन्ये तु—(१) स्वतःप्रामाण्य (२) शक्ति (३) वेदापौरुषेयत्वा (४) न्विताभिधानवाद-(५) वेदवाक्यसिद्धार्थप्रामाण्य (६) शब्दप्रामाण्यो (७) पमानार्थापत्त्यनुपलब्धिप्रामाण्य-(८) प्रमाणलक्षणा (९) खण्डार्थवादा (१०) निर्वचनीयख्यात्यतिरिक्तसर्वख्यात्ययोगा-(११) निर्वचनीयत्वसुवचत्वा (१२) विद्याभावत्व (१३) भेददुर्निरूपत्वा (१४) त्मस्वप्रकाशत्व (१५) तमोऽतिरिक्तपदार्थत्व (१६) परमाणुनिरास (१७) तत्त्वज्ञानाति-रिक्तमोक्षासाधनत्व (१८) ज्ञानकर्मासमुच्चय (१९) मुक्तिस्वरूपेष्वूनविंशतिषु-द्वैताद्वैतावि-प्रतिपन्ना विषयाः । (१) स्वतःप्रामाण्य (२) शक्ति (३) वेदापौरुषेयत्व-तत्प्रसङ्गा-गतशब्दनित्यत्वस्फोटवादनिरासा (४) न्विताभिधान (५) वेदवाक्यसिद्धार्थप्रामाण्या-(६) विद्याभावरूपत्वा (७) त्मस्वप्रकाशत्व (८) तमोऽतिरिक्तपदार्थत्व (९) पर-माणुवादनिरास (१०) ज्ञानकर्मासमुच्चया दश न्यायचन्द्रिकाविषयाः ॥

* एषु विषयेषु न्यायचन्द्रिकापरीक्षिता विषया * नक्षत्रचिह्नेन चिह्निताः ।

| क्रमसङ्ख्या | द्वैतम् | अद्वैतम् |
|---|---|---|
| | | सर्वेषामपि तदधीना सत्ता, नेश्वराधीना प्रकृत्यादिसत्ता |
| 6 | जीवाश्रित जीवविषयाविद्याया ईश्वर-शक्त्यैव स्वप्रकाशजीवचैतन्याच्छादयितृत्वम् | स्वत एव ब्रह्माश्रिता, जीवाश्रिता वाऽविद्या ब्रह्मैवाऽऽवृणोति, यद्वशाद् ब्रह्मणोऽधिष्ठानता, विवर्तमानता वा, न तस्या जीवावरकत्वम्, जडावरकत्वं वा (551) |
| 7 | अनादेरीश्वराश्रितायाः प्रकृतेर्नित्यत्वम् | अनादेः प्रकृतेरपि ब्रह्माश्रिताया जीवाश्रिताया वा बाध्यत्वम्; "भूयश्चान्ते विश्वमायानिवृत्तिः" इति वचनात् |
| 8 | अज्ञानस्य बन्धस्य वाऽनिर्वचनीयत्वानुपपत्तिः | *"नासदासीन्नो सदासीत्"इति श्रुत्याऽन्यान्यकारणैश्चाज्ञानस्यानिर्वचनीयत्वोपपत्तिः (448) |
| 9 | अज्ञानस्य जीवाश्रितस्यानादेरपीश्वर-प्रसादाद् निवृत्त्युपपत्तिः | *ब्रह्माश्रितस्य, जीवाश्रितस्य वाऽज्ञानस्य ज्ञानैकनिवर्त्यत्वम् (553) |
| 10 | बन्धस्येश्वराधीनत्वम् | *बन्धस्याविद्याप्रयुक्तत्वम् |
| 11 | ज्ञाननिवर्त्यत्वं सत्यत्वाविरोधि | *ज्ञाननिवर्त्यत्वं सत्यत्वविरोधि, मिथ्यात्वप्रयोजकं च (444) |
| 12 | असतोऽपि भ्रमेऽपरोक्षतया सत्त्वेन च प्रतीत्युपपत्त्या शुक्तिरूप्यादावसत्ख्यातिरेव | *शुक्तिरूप्याद्यसत्त्वे तस्य विकल्पाख्यवृत्तिमात्रविषयत्वेनापरोक्षत्वेन सत्त्वेन च प्रतीत्यनुपपत्त्याऽनिर्वचनीयख्यातिरेव (420) |
| 13 | ब्रह्मणो निमित्तकारणत्वमात्रम्, नाधिष्ठानत्वम्, विवर्तोपादानत्वं वा। | *शुक्तिरूप्यादौ शुक्तित्वाज्ञानोपहित-प्रमातृचैतन्याभिन्नशुक्त्यवच्छिन्न- |

| क्रमसङ्ख्या | द्वैतम् | अद्वैतम् |
|---|---|---|
| | एवमेव शुक्तिरूप्यादीनामपि न शुक्त्यादिविवर्तत्वम्, येनानिर्वचनीयख्यातिः स्यात् | चैतन्यविवर्तत्वम् । अयमेव न्यायो वियदादावप्यज्ञातब्रह्मविवर्ततायाम्, इत्यनिर्वचनीयख्यातिरेवोभयत्र |
| 14 | प्रत्यक्षविरुद्धागमाप्रामाण्यम् | * "प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्" इति द्वैतसम्प्रदायप्रमाणमूर्धन्यब्रह्मतर्कवचनाद् आगमविरुद्धप्रत्यक्षस्यैवाप्रामाण्यम् (554) |
| 15 | शरीरेन्द्रियादीनामात्मन्यारोपो न स्वरूपेण, किन्तु तत्र तादात्म्यमात्रस्यारोपः | *अज्ञानविषयसन्निकृष्टस्यैव तादात्म्याध्यासमात्रम्, आरोपितस्य त्वज्ञानाविषयस्यानधिष्ठानस्य स्वरूपतादात्म्योभयाध्यासः (430) |
| 16 | सुषुप्त्यवस्थायामपि भासमानस्य जागरे "सुखमहमस्वाप्सम्" इति परामर्शविषयस्याहमर्थस्यैवात्मत्वम्, न विगलिताहङ्कारस्य चैतन्यमात्रस्य। "अथातोऽहङ्कारादेशः" इति त्वात्मनः सत्यत्वादीनामिव गुणस्यैवाम्नानम्, नात्मस्वरूपोपदेशः, येन—'अथात आत्मादेशः' इत्युपदेशान्यथानुपपत्त्याऽहङ्कार-विगलितस्यैवात्मत्वं स्यात् | सुषुप्तिपर्यन्तानुभवेऽहङ्कारभानेऽपि मुक्त्यन्वयित्वमहङ्कारविगलितस्यैव, न साहङ्कारस्य; "भिद्यते हृदयग्रन्थिस्तस्मिन् दृष्टे परावरे" इति श्रुत्या तत्राहङ्कारविगलनस्याप्यवगमात्, सुषुप्तावविद्यात्मनेव मुक्तावविद्यायां निवृत्तायामहङ्कारस्य केनाप्यात्मनाऽभावात्, "अथात आत्मादेशः" इत्यपि निर्गलिताहङ्कारस्यैवाऽऽत्मतत्त्वताया उपदेशोऽप्यत एवोपपद्यते। सर्वातीतस्य भूम्नो ब्रह्मणः सर्वात्मत्वोपदेशस्य नान्यथोपपत्तिः |

| क्रमसङ्ख्या | द्वैतम् | अद्वैतम् |
|---|---|---|
| 17 | ब्रह्मव्यतिरिक्तमिथ्यात्व आगमस्यापि मिथ्यात्वाद् अबाधितस्य ब्रह्मतत्त्वस्यासिद्धिः | आगमस्य स्वरूपतो वस्तुगत्या वा मिथ्यात्वेऽपि यावद्बाधमबाधात्, वियदादेः सगुणोपाधिमायादेरिव विषयतोऽबाधाद् विषयांशे प्रामाण्यं दुरपह्नवम्; ब्रह्मणो मिथ्याभूताज्ञानतत्कार्यान्यतररूपत्वाभावेन सर्वदाऽबाधितत्वाद् न तदंश आगमस्याप्रामाण्यम् |
| 18 | मिथ्याभूतस्यार्थक्रियाकारित्वायोगः | * मिथ्याभूतस्याप्यर्थक्रियाकारित्वम्। (441) |
| 19 | "नेह नानाऽस्ति" इति श्रुतेर्ब्रह्मधर्मज्ञानानन्दादिगुणानां स्वरूपतो भेदमात्रनिषेधपरत्वम्, स्वरूपाभेदेऽपि गुणानाम्—"आनन्दं ब्रह्मणो विद्वान्" इति भेदव्यपदेशः— "अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्" इति न्यायेन विशेषैकनिर्वाह्यो न विरुध्यते, इति सविशेषमेव ब्रह्म | * "नेह नानाऽस्ति किञ्चन" इत्यादौ सजातीय-विजातीय-स्वगतधर्मिधर्मोभयनिषेधोऽध्यारोपापवादनयेन। "आनन्दं ब्रह्मणो विद्वान्" इति राहोः शिर इतिवदुपपद्यते, इति निर्विशेषमेव ब्रह्म (441) |
| 20 | मिथ्याभूतस्य कथानङ्गत्वम् | *मिथ्याभूतस्यापि कथाङ्गत्वं सत्त्वासत्त्वौदासीन्येन; अन्यथा सर्वेषां बौद्धैः सह कथाऽयोगात् केनाप्यनियन्त्रणीयस्य तस्य निरसनस्यैवायोगात् ततो व्यावर्तनं न कस्यापि |

| क्रमसङ्ख्या | द्वैतम् | अद्वैतम् |
|---|---|---|
| | | केनापि कर्तुं शक्यम् । किं बहुना ? अद्वैतिभिः साकमपि द्वैतिनां कथाप्रसङ्गो न स्यात्, इति कथं द्वैतिनां मिथ्यात्वानुमानखण्डनाद्यर्था प्रवृत्तिः ? (441) |
| 21 | भावाभावविलक्षणत्वरूपानिर्वचनीयत्वदुर्वचत्वम् । एवं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्व-सदसद्विलक्षणत्वाद्यपि दुर्वचम् | *भावाभावविलक्षणत्वरूपानिर्वचनीयत्वसुवचत्वम् । अयमेव न्यायः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्व-सदसद्विलक्षणत्वयोरपि (419) |
| 22 | सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन सत्त्वाभावासत्त्वाभावोभयवत्त्वमिथ्यात्वदुर्वचत्वम् | *सत्त्वासत्त्वयोः परस्परं परस्परत्र व्यभिचारेण परस्परविरहत्वायोगः । एवं मिथ्यात्वघटकासत्त्वाभावस्य सत्त्वेन प्रतीत्यर्हत्वरूपस्य विवक्षणात् परस्परविरहरूपत्व-तदभावचर्चाया नात्र लेशतोऽप्यवसरः, इति सत्त्वाभावासत्त्वाभावोभयवत्त्वमिथ्यात्वसुवचत्वम् (419) |
| 23 | सदसद्वैलक्षण्ये सत्प्रतीत्ययोगः | *सदसद्वैलक्षण्येऽपि सत्तादात्म्येन सदसद्वैलक्षण्योपबृंहकेण सत्प्रतीत्युपपत्तिः (430) |
| 24 | वृत्तिव्याप्यत्व-फलव्याप्यत्व-तदन्यतरत्वरूपादिना व्यभिचरितेन दृश्यत्वनिरुक्त्ययोगः | *दृक्तादात्म्यस्य दृश्यत्वस्य ब्रह्मासद्व्यावृत्तस्य निरुक्तिसम्भवेन न तदयोगः (447) |
| 25 | अन्यथा ज्ञातस्य सम्यगन्यथा ज्ञानं बाधोऽसत्ख्यात्यनुगुणः | अधिष्ठानतत्त्वसाक्षात्कार एव बाधः, नोक्तविधः ; बहुदोषदुष्टत्वात् |

| क्रमसङ्ख्या | द्वैतम् | अद्वैतम् |
|---|---|---|
| 26 | सत्पदार्थस्य प्रतीयमानसर्वसाधारण्येन ब्रह्मवत् सर्वसत्यत्वम् — | *सत्पदार्थो ब्रह्मस्वरूपमेकमेव ; अन्यथा द्वैतमतेऽसतोऽपि सत्यत्वं स्यात्, अन्येषां तु ब्रह्मविवर्ततया तत्तादात्म्येनैव सत्प्रतीतिविषयत्वम् ( 30) |
| 27 | अज्ञानाभावरूपत्वसाधनं तार्किकदृष्ट्या, परमतेन परमतनिरसनन्यायेन भाष्यानुगृहीतेन स्वमतेऽप्यज्ञानस्य भावरूपत्वेऽपि । तेन च भावाभाववैलक्षण्यस्यांशतो बाधः फलति | *अज्ञानस्य भावविलक्षणत्वं सिद्धवत्कृत्याभाववैलक्षण्यमात्रं साधयितुमेवाविद्यानुमानेऽभावव्यतिरिक्तत्वमात्रसाधनम् । भावत्वं सत्प्रतीतिविषयत्वं नाज्ञानस्य साक्षाद् बाधितम्, इति तृतीयप्रकारत्वं चित्सुख्यभिमतमिष्टसिद्धिब्रह्मसिद्ध्यभिमतं च साधायितुमेवाभाववैलक्षण्यस्यापि स्वमतपरिशुद्ध्यर्थमेवाज्ञानाभावत्वनिरसनम्, न तु द्वैतिनामिव निष्प्रयोजनं परमतनिरासार्थम्, तत्र प्रत्यक्षादिप्रमाणसमर्थनं च (419) |
| 28 | तत्त्वमस्यादिवाक्यस्य जीव-ब्रह्मैक्यपरत्वनिरासः | *तत्त्वमस्यादिवाक्यानां विशिष्टाहमर्थजीव-मायावच्छिन्नचैतन्येश्वरैक्यस्याविवक्षितत्वात् तत्त्वोपलक्षिततत्तदैक्यस्यैव शास्त्रार्थत्वाद् न प्रत्यक्षादिविरोधस्तत्र कोऽपि ; तत्तत्स्वरूपैक्यमात्रपरत्वात् तेषां वाक्यानाम्(360) |
| 29 | जीवब्रह्मैक्ये तत्त्वमसिवाक्यार्थत्वस्य स्वीकारे “ यजमानः प्रस्तरः ” इति न्यायेन प्रत्यक्षाविरोधार्थं तस्य | *अन्यशेषस्य “ यजमानः प्रस्तरः ” इति वाक्यस्य गौणार्थत्वेऽप्यनन्यशेषस्य तत्त्वमस्यादिवाक्यजालस्य तात्पर्य- |

| क्रमसङ्ख्या | द्वैतम् | अद्वैतम् |
|---|---|---|
| | वाक्यस्य गौणार्थत्वमेव युक्तम् | ग्राहकबहुलिङ्गोपबृंहितस्य तन्न्यायेन गौणार्थत्वायोगः, प्रत्युत देहात्मप्रत्यक्षेणापि "स एष यजमानोऽञ्जसा स्वर्गं लोकं याति" इति वाक्यस्य बाधापत्त्याऽऽभाससाम्यापत्तिः(360) |
| 30 | तत्त्वमसिवाक्यस्य नित्यसिद्धजीवेश्वरस्वरूपैक्यमात्रपरत्वे "परेऽव्यये सर्व एकीभवन्ति" इत्यभूततद्भावार्थच्विप्रत्ययानुपपत्तिः | "परेऽव्यये सर्व एकीभवन्ति" इत्यत्रैकीभावो बन्धनिवृत्त्युपलक्षितस्वरूपमात्रत्वम्, तत्र चाभूताया बन्धनिवृत्तेर्विशेषणस्योपलक्षणस्य वा पूर्वमसिद्धायाः पश्चाद् ज्ञानसाध्यत्वेन च्विप्रत्ययोपपत्तिः; यथा—'घटाकाशमठाकाशादय एकीभवन्ति' 'बद्धो मुक्तीभवति' इत्यादावुपाधिनिवृत्त्यभिप्रायेण विशेषणीभूतबन्धनिवृत्त्यभिप्रायेण वा च्विप्रत्ययः, न तु पूर्वमसिद्धस्य स्वरूपस्य साध्यत्वाभिप्रायेण; यथा—"नेह नानास्ति किञ्चन" इत्यत्र धर्मिनिषेधस्य धर्मनिषेध एव द्वैतसिद्धान्ते तात्पर्यम् |
| 31 | उपास्यस्यापि ब्रह्मणः पदार्थविधयाऽवान्तरतात्पर्यविषयत्वम्, पारमार्थिकत्वं च | अवान्तरतात्पर्यविषयस्योपास्यस्य ब्रह्मणो व्यावहारिक सत्यत्वमवान्तरतात्पर्यविषयत्वादेव; तावताऽप्युपासनायाः, तत्फलदातृत्वस्य च निर्वाहात् |
| 32 | सर्वस्य वेदस्य विष्णुपरतया परविद्यात्वं ब्रह्ममीमांसाया इव; कर्म- | परविद्यात्वं ब्रह्म विष्णु शिवात्मकसर्वकारणतुरीयातीतनिर्विशेषस्वरूपमात्र- |

| क्रमसङ्ख्या | द्वैतम् | अद्वैतम् |
|---|---|---|
| | तत्साधनादिपरतायां त्वपरविद्यात्वम् | बोधकाक्षरविद्या सद्विद्यादीनामेव। सगुणपराणाम्, कर्मकाण्डानाम्, किं बहुना ? सद्विद्याऽक्षरविद्यापराणां च वाक्यानां शब्दरूपेण, निर्विशेषातिरिक्तकर्मादिस्वरूपबोधकत्वेनापरविद्यात्वम्, तत्रापि कर्मोपासनादेर्निर्विशेषशोध्यतत्त्वमर्थस्वरूपपराणामपरविद्योपकारकसाधनविशेषबोधकत्वेनापरविद्यात्वं न विरुद्धम्, वाच्यविधया कर्मकाण्डस्यापि विष्णुबोधकत्वेन परविद्यात्वं तु न युक्तम् |
| 33 | प्रामाण्यवदप्रामाण्यस्यापि साक्षिवेद्यत्वम्, परं त्वपवादकसाहित्येन | *अप्रामाण्यस्य साक्ष्यसम्बद्धबहुपदार्थघटितस्यापवादकसहितेनापि न साक्षिणा वेद्यत्वम्; (57) |
| 34 | वाक्यार्थानुभावकत्वं पदानामन्विताभिधानविधया, न त्वभिहितान्वयवादेन। अन्वयस्तु संसर्गः, इति न तत्त्वमस्यादिवाक्यानामखण्डार्थत्वम् | *न्यायचन्द्रिका अन्विताभिधानवादेनैव वाक्यार्थानुभावकत्वं द्वैतमतवदेवाभिहितान्वयवादनिरासेन सिद्धान्तयति, परं त्वन्वयशब्दोऽत्र "तत्तु समन्वयात्" "वाक्यान्वयात्" इत्यादाविव तात्पर्यमेव; उभयथापि न संसर्गमात्रम्। अतोऽन्विताभिधानवादेऽपि नाखण्डार्थताहानिः। व्यक्तं चेदं न्यायरत्नावल्याम्। चित्सुखी त्वभिहितान्वयवादमेव स्वीकरोति, |

| क्रमसङ्ख्या | द्वैतम् | अद्वैतम् |
|---|---|---|
| | | तत्राप्यन्वयपदं तात्पर्यपरमेव, इति फलतो न विशेष उभयत्र (187) |
| 35 | विद्यास्थानेषु व्यासकृति ब्रह्मसूत्र-व्याख्यारूपा ब्रह्मतर्काख्याऽप्यनादि-सम्प्रदायसिद्धा ग्रहणमर्हति | ब्रह्मतर्को विद्यास्थानेषु, न कुत्रापि परिगण्यते। तस्य तदङ्गत्वे चतुर्दश-विद्यास्थानपरिगणनायोगः। अन्येषां वेदान्तसम्प्रदायप्रवर्तकानां ब्रह्मसूत्रादिवद् ब्रह्मतर्कोऽपि न सम्प्रदाय-सिद्धः। तत्प्रामाण्यमपि न्यायव्याख्यारूपत्वाद् न्यायविरोधे प्रमाणा-न्तरविरोधे च भाष्यान्तरवद् व्यास-वचनत्वमात्रेण न सति न्यायविरोधे, इति ब्रह्मसूत्रवदेव तत्प्रामाण्यं न स्वीकर्तुं शक्यते |
| 36 | अवाच्यस्यामेयस्य च निर्विशेष-ब्रह्मणो न लक्ष्यत्वम् | *अवाच्याया व्यक्तेः, अन्विताभिधान-वादेऽवाच्यस्यान्वयविशेषस्य, इक्षु-क्षीरगुडादिरसविशेषस्यावाच्यस्य च कथञ्चन प्रसिद्धिमात्रेण लक्ष्यत्वं दृश्यते। सुषुप्त्यादिप्रसिद्धिमात्रे-णाप्यत्र विशिष्टवाचकस्यैव पदस्य तात्पर्यवशाद् विशेष्यस्वरूपमात्र-परत्वेनापि वा लक्ष्यत्वनिर्वाहो निर्विशेषस्य (362) |
| 37 | ईश्वरानुयोगिकजीवभेदस्य प्रमा-णान्तरासिद्धस्यापूर्वस्य, अन्येषां भेदानां प्रत्यक्षादिसिद्धानामप्य- | *ईश्वरभेदस्य शास्त्रसिद्धस्याप्युपासनोप-पादकतया चारितार्थ्यात् परत्वेन निर्विशेषवाक्यस्य षड्विधतात्पर्य- |

| क्रमसङ्ख्या | द्वैतम् | अद्वैतम् |
|---|---|---|
| | भ्यासात् तात्पर्यविषयत्वोपपत्त्या च शास्त्रमहातात्पर्यविषयत्वात् तद्विरोधेन जीवब्रह्मैक्यं न शास्त्रार्थः | लिङ्गोपबृंहितस्य ततोऽपि बलवत्तया निषेधापेक्षितनिषेध्यसमर्पकतया, तदुपजीव्यत्वेऽपि "यो होता सोऽध्वर्युः" "औदुम्बरो यूपो भवति" "न तौ पशौ करोति" इत्यादाविव प्रत्याम्नानात् प्रतिषेधाद्वोपजीवकापेक्षया दुर्बलत्वेन निर्विशेषवाक्यबाध्यत्वोपपत्त्या महातात्पर्यविषयत्वायोगः। अत एव "नेति नेति" इति विशेषाणां निषेध उपपद्यते। सर्वथा तु व्यावहारिकं प्रामाण्यं सगुणवाक्यानां साधनावस्थाधिकारिविषयाणाम्, सिद्धावस्थाधिकारिकाणां च निर्विशेषवाक्यानां विरोधाभावादुभयप्रामाण्यनिर्वाहो विनाऽन्यथानयनं भवितुं युक्तम्; अनन्यशेषाणां निर्विशेषवाक्यानामश्रुतोपासनाविधीनामप्युपासनाशेषतया नयनं तु न युक्तम् (452-457) |
| 38 | प्रत्यक्षानुमानागमा एव प्रमाणम्। उपमानार्थापत्त्योरनुमानेऽन्तर्भावः। अनुपलब्धेः प्रत्यक्षेऽन्तर्भावः | * प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धीनां षण्णां प्रामाण्यम्। सर्वेषां स्वतन्त्रं प्रामाण्यम्, न कस्यापि तेषु कुत्राप्यन्तर्भावः (287-324) |
| 39 | "स्मृतिः प्रत्यक्षमैतिह्यम्" इति वचनात् स्मृतिरपि प्रमा; याथार्थ्यमेव | *अनधिगतार्थगन्तृत्वमपि प्रमा। स्मृतिर्न प्रमा। "स्मृतिः प्रत्यक्षम्" इति |

| क्रमसङ्ख्या | द्वैतम् | अद्वैतम् |
|---|---|---|
| | प्रामाण्यम्। अनधिगतार्थपरिच्छित्तिर्न प्रमा | मन्वादिस्मृतिपरम् (325-332) |
| 40 | स्वाप्नानां तत्तद्वासनामयत्वम् | स्वाप्नानामपि शुक्तिरूप्यादिवत् मूलाविद्याकार्यत्वेनानिर्वचनीयत्वम् |
| 41 | ईश्वरप्रतिबिम्बो जीवोऽणुपरिमाणः। तस्य सर्वगतत्वं स्वाभिन्नबिम्बरूपेश्वरात्मना | अन्तःकरणावच्छिन्नो जीवोऽहमर्थोऽन्तःकरणपरिमाणसमानपरिमाणः। तस्य व्यापकत्वं निर्गलिताहङ्कारसंविन्मात्रात्मना |
| 42 | अहमर्थो जीवो नाना; अत एव "न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः" इति त्वमहमादिभेदेन तन्निर्देशः, अन्यथा परेण ज्ञातस्य परेण प्रत्यभिज्ञानाद्यापत्तिः, एकस्य सुखेन दुःखेन वाऽन्यस्य सुखदुःखाद्यापत्तिः | अहमर्थोऽन्तःकरणोपहितरूपेण शरीरभेदेन वा नाना; शुद्धप्रत्यगात्मरूपेणैकः। अत एव अहम्, अहम्, अहमिति व्यक्तिभेदमादाय न वयमिति बहुवचनम्। श्रीवादिराजतीर्था अपि आत्मैकत्व उक्तबहुवचनानुपपत्तिमापाद्य तामपरिहृत्यैव प्रकारान्तरेण तद्भेदसाधनार्थमायतन्ते |
| 43 | पञ्चविधभेददर्शनाप्रतिबन्दिभक्तियोगज्ञानयोगजनितेश्वरप्रसादो विनापि भेद-तत्प्रतियोगिमिथ्यात्वं मोक्षसाधनम् | *भेद-तत्प्रयोजकाज्ञाननिवर्तकात्मसाक्षात्कारो दृष्टविधयैव कर्मयोग-भक्तियोगद्वारको मोक्षसाधनम्, ज्ञाननिवर्त्यत्वाच्चाज्ञानतत्प्रयुक्तानां मिथ्यात्वं च (518) |
| 44 | अहमर्थस्यात्मनो दिव्यज्ञानविग्रहस्य विशेषकृततरतमभावापन्नानन्दानुभवः साक्षिणा मुक्तौ | *विगलिताहङ्कारसंविन्मात्रस्वप्रकाशानावृतानन्दस्वरूपं मोक्षः (556) |

—: * :—



# ॥ न्यायचन्द्रिकाप्रकरणसंग्रहश्लोकाः ॥

## ॥ समन्वयपरिच्छेदः ॥

॥ मङ्गलाचरणम् ॥ पृष्ठसङ्ख्या

आविरस्तु महस्तन्नो गौरीसन्ध्याघनोदितम् ।
अन्तरायतमोहन्तृ नरस्तम्बेरमाकृति ॥ १ ॥ 1

स्वप्रामाण्यविभूषणा श्रुतिवधूः प्रान्वेषमाणापि यम् 2
दृष्ट्वा लक्षणतो न वक्तुमशकत् सर्वप्रमाणातिगम् ।
शुद्धानन्दचिदद्वयात्मवपुषं द्वैतेन्द्रजालास्पदम्
वन्दे चन्द्रविभूषणं गिरिसुतादत्तार्धदेहं हरम् ॥ २ ॥

॥ स्वतःप्रामाण्यम् ॥

धातुवैषम्यसंस्थानशरीराः कामिलादयः । 18
यद्यत्प्र(द्यप्र)माणविज्ञानं तदपेक्षमुपेयते ॥ ३ ॥

साम्यसंस्थानसापेक्षं सम्यज्ज्ञानमुपेयताम् । ,,
यतस्तद्भावभावित्वं नोभयत्र विशिष्यते ॥ ४ ॥

विज्ञानकारणकलापविभिन्नमूर्तिः ,,
दोषाद्यथोदयमुपैत्ययथार्थबोधः ।
तद्वद् गुणादुदयमेति यथार्थबोधः
तद्भावभावनियतेरुभयाविशेषात् ॥ ५ ॥

अथ प्रमीयते मात्वं परस्मादिति यौक्तिकम् । 23
धर्मिग्राहकसामग्रीव्यतिरिक्तं परं मतम् ॥ ६ ॥

---

* अयं पूर्वपक्षमात्रस्य सिद्धान्तस्तु निबन्ध इष्टसाधनत्वमेव लिङर्थः ।

पृष्ठसङ्ख्या



॥ अन्विताभिधानवादः ॥



॥ वाक्यानां न कार्यमात्रम्, किन्तु सिद्धार्थोऽपि ॥

## ॥ अविरोधपरिच्छेदः ॥

### ॥ पूर्वपरिच्छेदार्थसङ्ग्रहः ॥

—: * :—



# न्यायचन्द्रिकायाम्

## समन्वयाख्यः प्रथमः परिच्छेदः

॥ मङ्गलाचरणम् ॥

आविरस्तु महस्तन्नो गौरीसन्ध्याघनोदितम् ।

---

### न्यायचन्द्रिकाविवरणम्

—:*:—

गणेशं लोकेशं परमपरमं पालनपरम्
समस्त-व्यस्तानां सुखनिलयतत्त्वैकवचसाम् ।
[1]हरि-ब्रह्मेशानाः सफलकृतयो यत्करुणया
नमस्यामो देवं गिरिशगिरिजानन्दनकरम् ॥ १ ॥

सरोजजन्माननपद्महंसीं गिरीशकल्पद्रुमकल्पवल्लीम् ।
हरेरुरस्सागरलग्नगङ्गामुपास्महे कामपि देवतां ताम् ॥

ग्रन्थारम्भे शिष्टाचारपरम्पराप्राप्तितकर्तव्यभावं परदेवतास्तुतिनमस्काररूपं मङ्गलमनुविदधानोऽभिमतकार्यस्याप्रत्यूहपरिपूरणं करिवदनप्रसादाधीनम्, इति तमेव तावदाशास्ते — **आविरिति** ॥ तत् महः=ज्योतिः, चैतन्यरूपम्, नः=अस्माकम्, आविरस्तु=चित्तरङ्गे स्फुरतु ॥ १ ॥

**"आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्"**

इत्यलङ्कारकारैराशिषः शास्त्रमुखत्वेन प्रथममुदितत्वादाशीरेव क्रिया लिविधा । [द्वितीयात्य]न्ताभावोपलक्षितचैतन्यस्य प्रत्यग्रूपतया चित्ते स्फुरणं सदास्ति, इति न तत्प्रार्थनार्हे[हं मि]ति, अत्राह — **गौरीति** ॥

---

१. गणेशकृपयैव हरि-हरयोरपि विवाहादिकमपीति गणेशपुराणे व्यक्तम्, सत्यप्येवं गिरिशानन्दनकरमिति तु गणेशस्य परमात्मन एव तत्पुत्रत्वेनावताराभिप्रायेण ।

अन्तरायतमोहन्तृ नरस्तम्बेरमाकृति ॥ १ ॥

स्वप्रामाण्यविभूषणा श्रुतिवधूः प्रान्वेषमाणापि यम्

---

" उपमैव तिरोभूतभेदा रूपकमिष्यते "

इति गौरीं सन्ध्याघनत्वेन रूपयति । सौरज्योतिषा सन्ध्याघनादुदयक्रियायोगितया तुल्ययोगितालङ्कारं प्रदर्श्य, अन्तरायं तिमिरत्वेन रूपयित्वा तन्निरासक्रियायोगितयापि तुल्ययोगितामाह—**अन्तरायेति** ॥

यदाह—" विवक्षितगुणोत्कृष्टैर्यत्समीकृत्य कस्यचित् ।
कीर्तनं स्तुतिनिन्दार्थं सा स्मृता तुल्ययोगिता ॥"

इति । 'सन्ध्याघनोदितं तमोहन्तृ' इति श्लेषालङ्कारोऽपि दर्शितः ॥

उक्तं च—" श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः ।
तदभिन्नपदं भिन्नपदप्रायमिति द्विधा ॥"

इति । समस्तदेवताभेदानां चैतन्यरूपत्वाद् देवतान्तरेष्वसदन्तरायनिराससामर्थ्यमत्रैव कथमिति चेत्, उपाधिविशेषसंबन्धादित्यभिसन्धायाह—**नरेति** ॥ द्वयोः साधर्म्ये सत्येकस्य वैधर्म्याभिधानाद् व्यतिरेकालङ्कारो दर्शितः ।

तदुक्तम्—" शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ।
तत्र यद्भेदकथनं व्यतिरेकस्स कथ्यते ॥ "

इति । नरत्व-स्तम्बेरमत्वयोरन्यत्रैकत्र विरुद्धयोरेकत्र सङ्गतिकीर्तनेन वैनायकं तद् मह इति सूचनाद्विरोधालङ्कारो दर्शितः ॥

आह च—" विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् ।
विरोधसाधनायैव स विरोधः स्मृतो यथा ॥ "

इति । एवं तावद् विघ्नेश्वरप्रार्थनया प्राप्ता बाह्याभ्यन्तरायनिवृत्तिः ॥ १ ॥

अप्रतिपत्त्यन्यथाप्रतिपत्ति-विप्रतिपत्तिरूपान्तरायनिवृत्तेस्तत्त्वप्रतिपत्तिकार्यत्वात् तत्प्रतिपत्त्यर्थम्, तत्त्वानुसरणं तन्नमस्कारलक्षणं मङ्गलमाचरन्नधिकारि-प्रयोजन-सम्बन्धाभिधेयप्रतिपादनायचाह—**स्वप्रामाण्येति** ॥ अस्य च नियोगतः फलवत्कार्यान्तरारम्भसंयोगात् साक्षादफलत्वाच्च " फलवत्सन्निधावफलं तदङ्गम् " इति कार्यान्तरशेषि[ष]त्वेऽवधृते सत्यारम्भस्य समाप्तिपर्यन्तत्वादपेक्षिताविघ्नपरि-

दृष्ट्वा लक्षणतो न वक्तुमशकत् सर्वप्रमाणातिगम् ।

---

समाप्तिः स[तर] प्रयोजना;[म् ] 'अपेक्षितविधेरनपेक्षितविधानं दुर्बलम्' इति फलान्तरकल्पनाया दुर्बलत्वात्, अतो यथा सांप्रदायिकमध्यायानध्यायादि स्वाध्यायाविघ्नार्थम्, एवमिदमपि । तदयमर्थः— त्र्यन्तवाक्यजनितवृत्तिफलको [का ]रूढतया सनिदानसंसारहरणाद्धरः, तं वन्दे [म ?] ॥

ननु — ईश्वर एव नास्ति; प्रमाणाभावात्, अत्राह— **श्रुतीति** ॥ सैव न प्रमाणम्, कुतस्तयेश्वरसिद्धिरिति ? अत्राह— **स्वप्रामाण्येति** ॥ "अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञान-संशयैः"। तत्र न तावदन्त्यं वैदिकवेदने; वाकारार्थानुल्लेखनात्, नापि मध्यमम्; विदितपद-पदार्थसङ्गतेर्वाक्यार्थवेदनोत्पादनात्, नाप्यादिमम्; बाधात् । वेदवाक्यम्, अप्रमाणम्, आप्ताप्रणीतवाक्यत्वात्; उन्मत्तवाक्यवदिति चेत्, न; अदृष्टस्यातीन्द्रियस्य व्याप्ति-लिङ्गाद्यग्रहेऽलौकिकप्रमाणगोचरस्याऽऽवेदकमपौरुषेयवाक्यमुपेयम्, तस्यैव वेदत्वम्; अन्यथाऽदृष्टासिद्धेः, इत्यर्थापत्तिबाधितविषयत्वादिति भावः । भवदपि प्रामाण्यं परत इति केचित्, अत्राह— **स्वेति** ॥ कुलवधूरपि पुरुषान्तरसङ्गरहिता स्वपुरुषान्वेषणकातरा, तथा श्रुतिरपि । 'वधूः' इत्युक्तसाम्यमेवाह— **अन्वेषमाणेति** ॥ यत्परः शब्दः स शब्दार्थः । 'तात्पर्यं च प्रयोजनाधीनम् । तदपि प्रवृत्ति-निवृत्तिकार्य[र्ये] प्रवृत्ति[त्त्य]साध्यगोचरे न सिध्येत्, तत् कथं '**यमन्वेषमाणा**' इत्युक्तम् ? अत्राह — **प्रेति** ॥ अवान्तरतात्पर्यमेव धर्मे, परमतात्पर्यं परमानन्दरूपे प्रतीच्येव; श्रुतेः, "सर्वे वेदा यत्पदमामनन्ति" वेदैश्च सर्वैरहमेव वेद्यः" इति वचनात् । सिद्धेऽपि शब्दशक्तिर्वक्ष्यत इत्यर्थः । धर्मादिवत् तर्हि वाच्यतया जडता, अत्राह— **वक्तुं नाशकदिति** ॥ शब्दप्रवृत्तिनिमित्तानाम्=द्रव्य[म्, ]गुण[:] क्रिया जातिरिति रूढीनामभावादिति भावः । न तर्हि वाक्यस्य तत्र प्रामाण्यम्; तदवाचकत्वात्, वाक्यान्तरवत्, अत्राह— **दृष्ट्वेति** ॥ वृत्त्यन्तर-

---

१. प्रमाणान्तराप्रमेयस्य, शब्दान्तरावाच्यस्य च न लक्ष्यत्वमिति शंकाहृदयम् । इमामेवावलम्ब्य श्रीमदानन्दतीर्थानामीक्षत्यधिकरणसिद्धान्तः, शतदूषण्याः ब्रह्मणि शब्दवृत्त्यनुपपत्तिश्च ।

शुद्धानन्दचिदद्वयात्मवपुषं द्वैतेन्द्रजालास्पदम्
वन्दे चन्द्रविभूषणं गिरिसुतादत्तार्धदेहं हरम् ॥ २ ॥

---

प्रतीतिमुत्पाद्य। निर्गुणे मुख्यार्थगुणयोगायोगान्न[1] गौणी वृत्तिः, नापि लक्षणा; तन्निमित्तमुख्यार्थसंबन्धस्यासङ्गेऽसत्त्वात्, अत्राह—**लक्षणत इति**॥ "नेति नेति" इति व्यावृत्तिमुखेन मूर्तामूर्तलक्षणनिषेधमादाय तदधिष्ठाने धीजननमविरुद्धमिति यावत्॥

तदाहुः—"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते"॥

इति। आरोपितद्वैतनिरासद्वारा तदधिकरणत्वलक्षणकक्षीकरणेन लक्षणया बोधकत्वकल्पनागौरवाद् वरं मुख्यवृत्त्या बोधकत्वम्, अत्राह—**सर्वेति**॥ सकलप्रमाणनिवृत्तेर्वस्तुसत्तानिवृत्तिनियमात् प्राप्तमसत्त्वम्, अत्राह—**आत्मेति**॥ निषेद्धुः स्वरूपस्यानिषेध्यत्वान्नासत्त्वमित्यर्थः। संसारित्वासंसारित्वादिविरुद्धधर्मतया नात्मेश्वराभेदः, अत्राह—**अद्वयेति**॥ आत्मनोऽन्यस्य घटादिवदनीश्वरत्वात्, भेदस्य भेदेऽनवस्थानाद्, भेदो वस्तुमात्रमेव, इति भेदासिद्धेः, संसारित्वादेश्च दृश्यत्वे रूपादिवदनात्मधर्मत्वात्, अदृश्यत्वे तदसिद्धेर्विरुद्धधर्मत्वासिद्धिरित्याशयः॥ तथापि वेद्यः, अवेद्यः, स्ववेद्यो वा। आद्येऽनात्मत्वम्, द्वितीये तदसत्त्वम्, अन्तिमे स्ववृत्तिविरोधः, अत्राह—**चिदिति**॥ चिद्रूपत्वात् स्वातिरेकिदर्शननिरपेक्षस्वव्यवहार इत्यर्थः॥ सुखदुःखप्राप्तिपरिहाररूपत्वात्पुमर्थस्य, न तद्रहिते त्र्यन्तसन्दोहतात्पर्यम्, अत्राह—**आनन्देति**॥ आनन्दस्य जन्मादिमतः कथमात्मता? अत्राह—**शुद्धेति**॥ व्यञ्जक[प्र?]वृत्तिसंबन्धनिबन्धनो जन्मादिप्रतिभास इत्यर्थः। एवं तावत्—"आनन्दादयः प्रधानस्ये"ति सूत्रितं स्वरूपलक्षणं प्रदर्श्य, द्वैतावलम्बिप्रत्यक्षादेः, कर्मकाण्डस्य चामात्वशङ्कां निरस्य "जन्माद्यस्य यतः" इत्युक्ततटस्थलक्षणं प्रदर्शयितुमाह—**[अ]द्वयेति**॥ तथापि हरशब्दवाच्यस्य विग्रहविशेषे कल्पितकपालादितयाऽमङ्गलत्वम्, अत्राह—**चन्द्रेति**॥ चन्द्रोऽमृतात्मा विभूषणं यस्य, तम्; अमृतभूषणतया परममङ्गलमिति यावत्॥ सर्वसंहारकत्वान्निर्घृणो न नमस्कारमर्हेत्, अत्राह—**गिरीति**॥ गिरिसुतायै दत्तं देहस्याप्यर्धं येन, ततोऽन्यः को नाम परमकारुणिकः? ॥२॥

॥ स्वतः प्रामाण्यवादे नैयायिकाभिमतपरतःप्रामाण्याख्यपूर्व-
पक्षप्रसङ्गेन स्वतः प्रामाण्यपक्षनिरासार्थं प्रामाण्य-
स्वतस्त्वे चतुर्दश विकल्पाः ॥

अथ किमिदं प्रमायाः स्वतस्त्वं नाम ? किं (१) स्वजन्यत्वम्, (२) प्रमाजन्यत्वं वा, (३) [ज्ञानजन्यत्वं वा] (४) अनुभवजन्यत्वं वा- (५) प्रमाकारणजन्यत्वं वा, (६) ज्ञानकारणजन्यत्वं वा, (७) अनुभव-

---

प्राणिकर्मवशात् तस्य संहारकाले तत्कर्तृत्वमप्यविरुद्धम् । **शुद्धानन्देति** प्रयोजनस्य निर्देशः, **द्वैतेन्द्रजालास्पद**मित्यज्ञाततया स एव विषयः, इति विषयस्य; प्रतिपाद्यस्यैव विषयत्वात्, प्रतिपाद्य-प्रतिपादकत्वसंबन्धस्य; परमानन्दकामस्याधिकारिणः ॥

स्वप्रामाण्यविभूषणेत्यभाणि । प्रामाण्यस्य भूतार्थौपाधिकसामान्य[स्य]नित्यतया तद्व्यञ्जकप्रमाया उत्पत्तौ स्वतस्त्वम्, इति तदादाय **वादीन्द्रः** प्रत्यवतिष्ठते —**अथेति** ॥ अथेत्यारम्भे । अधिकृतं प्रकरणं वेदितव्यमित्यर्थः । सामान्यतोऽवगतो विशेषतोऽनवगतः संभवदनेकप्रकारोऽर्थः प्रष्टव्यः, नैवं स्वतस्त्वमनेकं स्यादित्याशङ्क्य संभवदनेकप्रकारानाह—**किमित्यादिना** ॥ स्वपदमात्मवचनम्, आत्मीयवचनं वा । आद्ये स्वस्य स्वयं जनकमित्युक्तेः, स्वप्रागभावावच्छिन्नकालस्य स्वपूर्वपदार्थत्वात्, पूर्वभावविशेषस्य कारणत्वरूपतया, स एव कालः तदवच्छिन्नः, तदनवच्छिन्नश्चेति व्याघातेनापरितोषात् पक्षान्तरं कक्षीकुरुते — **प्रमेति** ॥ प्रमान्तरजन्यत्वेन प्रमास्वतस्त्वे, तस्याप्येतज्जन्यत्वे, स्वतस्तायामितरेतराश्रयः; प्रमान्तरजन्यत्वेऽनवस्थेति, अत्राह—**ज्ञानेति** ॥ बाष्पे धूमत्वारोपप्रसूतसंस्कारकृतस्मरणवतो वह्न्यनुमाऽपि प्रमा स्याद् इति, अत आह—**अनुभवेति** ॥

धूलीपटलादौ धूमत्वारोपरूपानुभवजनितधूमध्वजानुमाऽपि प्रमा स्यात्, अत्राह–**प्रमेति** ॥ तथाच स्वकारणजन्यत्वं स्वतस्त्वमित्युक्तयापत्तावप्रमाया अपि स्वकारणजन्यतया स्वतस्त्वप्रसङ्गः, अत्राह—**ज्ञानेति** ॥ तर्हि स्मृतित्वमपि वित्तीनां स्वत एव स्यात्; स्मृतीनामपि ज्ञानकारणजन्यत्वात्, अत्राह— **अनुभवेति** ॥

कारणजन्यत्वं वा, (८) प्रमाकारणव्यतिरिक्ताजन्यत्वं वा, (९) ज्ञानकारणव्यतिरिक्ताजन्यत्वं वा, (१०) अनुभवकारणव्यतिरिक्ताजन्यत्वं वा, (११) प्रमाकारणजन्यत्वे सति तद्व्यतिरिक्ताजन्यत्वं वा, (१२) ज्ञानकारणजन्यत्वे सति तद्व्यतिरिक्ताजन्यत्वं वा, (१३) अनुभवकारणजन्यत्वे सति तद्व्यतिरिक्ताजन्यत्वं वा, (१४) अन्यद्वा ॥

॥ स्वजन्यत्व-प्रमाजन्यत्व-ज्ञानजन्यत्वानुभवजन्यत्वकल्पनिरासः ॥

न तावदाद्यः कल्पः; आत्मश्रयप्रसङ्गात् । न द्वितीयः; संप्रतिपत्तेः, अनुमेया[ मित्या ]दिप्रमाणानां लिङ्गादिप्रमाजन्यत्वात्, सर्वप्रमाणानामीश्वरप्रमाजन्यत्वाच्च । न तृतीय-चतुर्थौ तत एव ॥

॥ प्रमाकारणजन्यत्व-ज्ञानकारणजन्यत्वानुभवकारणजन्यत्वप्रमाकारणातिरिक्ताजन्यत्व-ज्ञानकारणातिरिक्ताजन्यत्वानुभवकारणातिरिक्ताजन्यत्वादिकल्पानां निरासः ॥

न पञ्चम-षष्ठ-सप्तमाः; संप्रतिपत्तेरेव, प्रमायाः प्रमात्वज्ञानत्वानुभवत्वे प्रमाज्ञानानुभवकारणजन्यत्वात् । नाष्टम-नवम-दशमास्तत एव ॥

---

तर्ह्यनुभवकारणसंभूतभ्रमस्यापि स्वतस्त्वं भवेदेव, अत्राह—**प्रमेति** ॥ तथापि स्वकारणव्यतिरिक्ताजन्यत्वं स्वतस्त्वम्, इत्यप्रमाया अपि स्वतस्त्वप्रसक्तिः, अत्राह—**ज्ञानेति** ॥ स्मृतेरपि ज्ञानतया तज्जनकस्यापि ज्ञानकारणत्वात्तदतिरिक्ताजन्यतया स्वतस्त्वं स्यात्, अत्राह—**अनुभवेति** ॥

लिङ्गिभ्रमस्याप्यनुभवरूपस्यानुभवकारणव्यतिरिक्ताजन्यत्वेन स्वतस्त्वं मा प्रसजेदित्याह—**प्रमेति** ॥ तर्हि स्वकारणजन्यत्वे सति तद्व्यतिरिक्ताजन्यत्वं स्वतस्त्वम्, इत्यप्रमाया अपि तन्मा भूदित्याह—**ज्ञानेति** ॥ स्मृतेरपि तथात्वप्रसक्तावाह—**अनुभवेति** ॥ न्यूनतापरिहारार्थं कल्पान्तरमाह—**अन्यदिति** ॥

**संप्रतिपत्तेरिति** ॥ प्रमाजन्यत्वस्यास्माभिरप्यभ्युपगमात्, लक्षणस्य केवलव्यतिरेकिहेतोः सिद्धसाधनभावेनाभासत्वादिति भावः ॥

निर्विकल्पकप्रमाया न प्रमान्तरपुरस्सरत्वम्, तत् कुतः सर्वत्र संप्रतिपत्तिः ? अत्राह—**सर्वेति** ॥ तत एव=सर्वप्रमाणानामीश्वरज्ञानजन्यत्वेन संप्रतिपत्तेरेवेत्यर्थः ॥

॥ प्रमा-ज्ञानानुभवान्यतमकारणाजन्यत्वे सति तदतिरिक्तकारणाजन्यत्वकल्पस्य, कस्यचिदन्यरूपत्वकल्पस्य च निरासः ॥

नाप्येकादश-द्वादश त्रयोदशाः ; संप्रतिपत्तेरेव । प्रमाया ज्ञानानुभवजन्यत्वेन[ व्याप्यत्वेन ]तत्कारणस्य ज्ञानानुभवहेत्वतिरिक्तत्वाभावात् । नाप्यन्त्यः ; अनिरुक्तेः, एवंविधस्वतस्त्वे प्रमाणाभावाच्च । तस्मान्न स्वतः प्रमा, किंतु परतः ॥

॥ नैयायिकानामुत्पत्तौ प्रथमं परतस्त्वनिर्वचनम् ॥

परतस्त्वं च प्रमायाः ज्ञानकारणातिरिक्तजन्यत्वम् । अत्र च प्रयोगः—(१) इदं घटनिर्विकल्पकम्, एतद्विषयशरीरेन्द्रियात्मेश्वरज्ञानेच्छाप्रयत्न-दिकालादृष्ट-संयोग-समवायव्यतिरिक्तजन्यम् , कार्यप्रमात्वात् ; अनुमानवत् ॥

---

प्रमास्वतस्त्वस्यानिरुक्तिरसिद्धा ; प्रमात्वे सति धीहेतुव्यतिरिक्ताजन्यत्वेन तन्निरुक्तेः, अत्राह—**एवंविधेति** ॥

परतस्त्वमपि स्वातिरिक्तजन्यत्वम् , धीहेत्वतिरिक्तजन्यत्वं वा । नाद्यः ; संप्रतिपत्तेः, नेतरः ; प्रमाया धीत्वेन तद्धेतूनां धीहेत्वतिरिक्तत्वासिद्धेः, अत्राह—**परतस्त्वं चेति** ॥ मीमांसकाभिमतधीहेत्वतिरिक्तप्रतिबन्धाभावादिजन्यत्वमित्यर्थः ॥ एवंविधपरतस्त्वे मानाभावः, अत्राह—**अत्रेति** ॥ स्वतस्त्वे मानाभावेन, परतस्त्वे तद्भावसमुच्चये चादृष्टभागे ? सिद्धसाध्यतां निरसितुम्— **निर्विकल्पकमित्युक्तम्** । पटादिनिर्विकल्पकव्यवच्छेदाय — **घटेति** ॥ घटनिर्विकल्पकान्तरव्यवच्छेदाय—**इदमिति** ॥ एतद्विषयादिना सिद्धसाध्यतां व्यवच्छेत्तुं त[ त्तः?]**द्व्यतिरिक्तत्व**विशेषणम् । आत्म-मनसोः समवेतसंयोगस्य ज्ञानकारणत्वात् संयोगविशेषणतया समवायोऽपि हेतुः, इति—**तद्व्यतिरिक्तत्वमुक्तम्** ॥ ईश्वरप्रमया, अस्मदादिज्ञानव्यक्त्या च व्यभिचारं वारयितुं हेतुविशेषणम् ॥

अस्यानुमानस्याऽऽलोकादीनां तद्धेतुत्वमाक्षिप्यापि पर्यवसानाद्विवक्षितासिद्धिः, अत्राह—**न चेति** ॥ एतद्विषयव्यतिरिक्तत्वेन तेषां व्यवच्छेदादिति यावत् ॥

घटनिर्विकल्पकमालोकादिविषयमिति व्याहतम् , अत्राह—**अविषयत्वे( वे )चेति** । औपनिषदैरीश्वरप्रमानिष्ठैः[ ष्टेः ] कार्यत्वविशेषणमव्यवच्छेदकम् ,

॥ अनुमाने एतद्विषयविशेषणप्रयोजनादि ॥

न च आलोकघटमहत्त्वोद्भूतरूपैरर्थान्तरता ; तेषामेतन्निर्विकल्पकविषयत्वात्, अविषयत्वे वा [च] तद्व्यतिरिक्तत्वेन विशेषणात् ॥

॥ हेतौ कार्यत्वविशेषणप्रयोजनम्' सविकल्पकज्ञानत्वोपाधिनिरासः, सत्प्रतिपक्षनिरासादि च ॥

न च कार्यत्वविशेषणं व्यर्थम् ; "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इत्यागमसिद्धेश्वरज्ञानव्यावृत्त्यर्थत्वात् । न च सविकल्पकत्वमुपाधिः ; घटादौ साध्याव्यापकत्वात् । न च[ सविकल्पक ]ज्ञानत्वमुपाधिः ; निर्विकल्पकान्तरे साध्याव्याप्तेः । न च सविकल्पकत्वाभावः प्रतिपक्षः ; निर्विकल्पकान्तरे व्यभिचारात् । न च निर्विकल्पकप्रागभावप्रतिबन्धकाभावाभ्यामर्थान्तरता ; तयोरेवाधिकयोरिष्टत्वात्, मीमांसकैस्तयोः कारणत्वानङ्गीकाराच्च, अङ्गीकारे वा, तद्व्यतिरिक्तत्वेन साध्यविशेषणात् ॥

॥ प्रामाण्यपरतस्त्वे द्वितीयानुमानम् ॥

(२) यद्वा—घटसविकल्पकम्, स्वविषय-शरीरेन्द्रियात्मेश्वरज्ञानेच्छा-

---

अत्राह—**न चेति** ॥ ऐश्वरं सार्वज्ञं न केनचिदपास्यम् ; श्रौतत्वात्, नापि तद्धीरप्रमा ; अनवगताबाधितासन्दिग्धत्वात् । ईश्वरः, प्रमावान्, अहमिव । न संसारित्वमुपाधिः ; प्रलयावस्थायामप्रमावत्त्वेऽपि पुंसां संसारित्वेन साध्यासमव्याप्तेः; समव्याप्तेरेव भवद्भिरुपाधित्वाभ्युपगमादिति भावः ॥

निर्विकल्पकत्वानाक्रान्तत्वमत्रोपाधिः, अत्राह— **न च [ सविकल्पक ] ज्ञानत्वमिति** ॥ इदं घटनिर्विकल्पकम्, ज्ञानत्वे सति नोक्तसाध्यम्, सविकल्पकत्वरहितज्ञानत्वात् ; व्यतिरेकेणानुमितिवदिति सत्प्रतिहेतुता, अत्राह— **न चेति** ॥ ताभ्यामेव तर्हि सिद्धसाधनता, अत्राह —**मीमांसकैरिति** ॥ अन्वयव्यतिरेकवतोस्तयोः कारणत्वं तैरप्यङ्गीकरणीयमेवेत्याह—**अङ्गीकारे वेति** ॥ शास्त्रेष्वनेकहेतूक्तिर्न दोषाय कथास्विवेति मतमालम्ब्यैकस्य विस्मरणेऽप्यपरं हेतुं प्रतिसन्धास्यति, इति प्रयोगान्तरं रचयति – **यद्वेति** ॥ सविकल्पकस्य तज्जनकनिर्विकल्पेनार्थान्तरतां व्युदस्यति— **निर्विकल्पकव्यतिरिक्तेति** ॥ विषयाद्

प्रयत्न-दिक्कालादृष्ट-संयोगसमवाय-निर्विकल्पकव्यतिरिक्तजन्यम् , कार्यप्रमात्वात् ; अनुमानवत् । न चैवंविधासंभवः ; इतरव्यवर्तक[व्यावृत्त]घटत्वादिव्यञ्जकधर्मोपलम्भकाचकमिला[1]द्यभावयोः संभवात् ॥

॥ प्रामाण्यपरतस्त्वे तृतीयानुमानम् ॥

(३) यद्वा—विप्रतिपन्ना प्रमा, [2]अप्रमाजनकत्वरहितजन्या, कार्यप्रमात्वात् ; योगजधर्मजन्यप्रमावत् । न चाप्रसिद्धविशेषणता ; योगजधर्मस्याप्रमाजनकत्वरहितस्य प्रसिद्धत्वात् , अय घटः[ पटः ](ए)तदन्याप्रमाजनकत्वरहितज[3]नकान्यः, मेयत्वात् ; घटवदित्यादिना च साध्यप्रसिद्धेः ॥

---

व्यतिरिक्तं सविकल्पकजनकं न संभवतीति विपरीतनिश्चयेन बाधितविषयमनुमानं नोत्पत्तुमलम्—

संभावितः प्रतिज्ञायां पक्षः साध्येत हेतुना ।
न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः ॥

इति न्यायादिति, अत्राह— **न चेति** ॥ इतरेभ्यः=पटादिभ्यः, व्यावर्तकम्=घटस्य घटत्वम् , करकस्य करकत्वम् , तस्य व्यञ्जको धर्मः=पृथुबुध्नोदरत्वादिः, तदुपलम्भरूपगुणस्य, दोषाभावस्य च संभवादिति भावः ॥

विप्रतिपन्नेति धर्मिविशेषणं ईश्वरप्रमाभागे बाधव्युदासार्थम् । प्रमाऽप्रमासाधारणकारणजन्यत्वेन सिद्धसाधनतां निराचष्टे—[ अ ]**प्रमाजनकत्वेति** ॥ **अयं पट इति** । एतस्मादन्यः=एतदन्यः, स चायमप्रमाजनकत्वरहितः, एतदन्याप्रमाजनकत्वरहितः, स च जनकः, तस्मादन्यः ; एतदन्यत्वे सत्यप्रमाजनकत्वरहितोऽयमेव पटः, तदन्यत्वं सर्वत्रास्तीति साध्यानुगमः । एतदन्यत्वे सत्यप्रमाजनकत्वरहितोऽयं पटः, [वा प्रमाजनकत्वरहितोवा(द्या ? ) तदन्य ] त्वं पक्षे[व्याहतमित्यप्रमाजनकत्वरहितजन्यत्वसिद्धिरिति महाविद्यार्थः । पटान्तरेण सिद्धसाध्यत्वनिरासार्थम्— **अयं पट** इत्युक्तम् ॥ अन्य इत्युक्तेऽर्थक्रियासामर्थ्यविरहिणः शशशृङ्गादेरन्यत्वं सिद्धम् , अत आह—**जनकेति** ॥ प्रमाऽप्रमा[जनकान्य]साधारणजनकान्यत्वं सिद्धमित्यत उक्तम्— **अप्रमाजनकत्वरहितेति** ॥ अप्रसिद्धविशेषणतापरिहारायोक्तम्—**एतदन्येति** ॥ अयं पटः, एतन्निष्ठात्यन्ताभावाप्रमाजनकत्वरहितान्यत्वान्यतराधिकरणम् , मेयत्वात् ; घटवदित्यादिपदार्थः ॥

---

१. उभयोः ख २. प्रमा ख ३. जनिका ख

॥ तृतीयानुमाने सोपाधिकत्वनिरासः ॥

न च योगजधर्मशून्यत्वमुपाधिः ; आर्षधर्मज[1]नितप्रमितौ साध्याव्यापकत्वात् । नापि प्रकृष्टधर्मजन्यत्वमुपाधिः ; अञ्जनादिजन्यनिखातपदार्थप्रमायां साध्याव्याप्तेः । नापि प्रकृष्टधर्माञ्जनान्यतरत्व[जन्यत्व]मुपाधिः ; घटादौ साध्याव्यापकत्वात् ॥

॥ प्रामाण्यपरतस्त्वे तुरीयानुमानम् , सर्वत्र प्रमायां परतस्त्वसमन्वयश्च ॥

यद्वा—विप्रतिपन्ना[2] प्रमा, (अ)प्रमाजनकत्वरहितधर्मजन्या, कार्यप्रमात्वात् ; योगजधर्मजन्यप्रमावदिति । अप्रमाजनकत्वरहितजन्यत्वं परतस्त्वम्, अप्रमाजनकत्वरहितधर्मजन्यत्वं वेति । अनुमायां च व्याप्तिपक्षधर्मतादिप्रमितिरेवातिरिक्तं कारणम्, धर्मविशेषो वा । वाक्यजप्रमायां च वेदवेदार्थगोचरपरमेश्वरप्रमितिरेवातिरिक्तं कारणम् ॥

---

अञ्जनादीति ॥ आदिपदेन पादलेपकवलग(गु)लिकानां भूमौ निहितनिधिप्रमाप्रयोजकानां परिग्रहः । घटादाविति ॥ मृदादेः स्वरूपेणाप्रमाजनकत्व राहित्यात् तत्कार्यघटादौ साध्याव्याप्तेरित्यर्थः ॥

असाधारणहेतुजत्वमात्रं परतस्त्वमितिमतमालम्ब्यानुमितम्, संप्रत्यसाधारणधर्मजत्वं तदिति मतमालम्ब्याह—यद्वेति ॥ अप्रमाजकत्वरहितजन्येत्युक्ते परतस्त्वसिद्धेरकिञ्चित्करं धर्मेतिविशेषणं नोपादेयम्, अत्राह—अप्रमेति ॥

आधुनिकराद्धान्ते प्रमाप्रागभावप्रतिबन्धकाभावाभ्यामर्थान्तरतापाकरणार्थं धर्मविशेषणमित्यर्थः । इतिरत्र परतस्त्वसाधनसमाप्तौ । अनुमायामप्रमाजनकत्वरहितातिरिक्तजन्यत्वाभावादस्य हेतुद्वयस्यानैकान्तिकता, पूर्वतनप्रयोगद्वये दृष्टान्ते साध्यविरहः । अत्राह—अनुमायां चेति ॥ तथापि समनन्तरहेतोर्व्यभिचारो दुर्वारः, अत्राह—धर्मेति ॥ ज्ञानसामान्यजनकतयाऽदृष्टधर्मविशेष इति यावत् । वाक्यस्य प्रमाऽप्रमासाधारणत्वादपरस्यासाधारणस्यासंभवाद्वाक्यार्थप्रमायां व्यभिचारः, अत्राह—वाक्येति ॥ आप्तवाक्यम् । शब्दप्रमाणम् । आप्तप्रमितिजन्यत्वात्, [तथा]स्वीकारादित्यर्थः ॥

---

१. जन्य ख　　२. विप्रतिपन्नप्रमा ख

॥ लोकेऽपीश्वरप्रमितेः कारणत्वसमर्थनम् , उत्पत्तौ परतस्त्वोपसंहारश्च ॥

ननु—लोकेऽपि चिरविनष्टायामाप्तप्रमितौ वाक्याद्वाक्यार्थप्रमाया अतिरिक्तकारणासंभवः—इति[1], न ; तत्रापि[2] वाक्यार्थगोचरपरमेश्वरप्रमितेरतिरिक्तायाः संभवात् , धर्मविशेषस्योपपत्तेर्वा, चिरविनष्टस्याप्यसदाद्याप्तवाक्यार्थज्ञानस्य स्वर्गे [3]याव(यागव)त्कारणत्वसंभवाच्च; वाक्यार्थज्ञानजन्यसंस्कारस्यावान्तरव्यापारत्वोपपत्तेः ; अन्यथाऽपूर्वव्यापारवतो यागस्य स्वर्गकारणत्वाभावप्रसङ्गात् , संस्कारस्यैवाधिककारणत्वात् । तस्मात्सिद्धमुत्पत्तौ परतः प्रामाण्यम् ॥

॥ प्रमाज्ञप्तौ परतस्त्वे प्रथमानुमानम् ॥

एवं ज्ञप्तावपि । तथाच प्रयोगः—प्रमात्वनिर्विकल्पकम् , आत्मशरीरमनस्संयोगसमवायेश्वरज्ञानेच्छाप्रयत्न-दिक्कालादृष्टव्यतिरिक्तजन्यम् , जन्यत्वात् ; संप्रतिपन्नवदिति । तच्चातिरिक्तं निर्विकल्पकप्रमायां भ्रान्तिजनकदोषाभाव एव ॥

॥ प्रमाज्ञप्तौ परतस्त्वे द्वितीयानुमानम् ॥

यद्वा—इदं प्रमात्वनिर्विकल्पकम् , आत्मशरीर-मनस्संयोग-समवायेश्वर-

---

नदीतीरतरुसत्तां प्रमाय समयान्तरे ' सरित्परिसरे सन्ति रम्यास्तरव ' इति वाक्यं प्रयुञ्जानस्य वाक्याद्वाक्यार्थप्रतीतौ नाऽऽप्तप्रमा कारणम् ; चिरप्रणष्टत्वात् , अतस्तत्रानैकान्त्यमिति चोदयति—**नन्विति** ॥ लौकिकवाक्यार्थप्रमा, ईश्वरप्रमाजन्या, कार्यप्रमात्वात् , वैदिक[वाक्या]र्थप्रमावदिति परिहरति—**नेति** ॥ ईश्वरप्रमाया नास्मदादिवाक्यज्ञानप्रमात्वे प्रयोजकता; इतरथा विप्रलम्भकवाक्यादिजनितज्ञानस्यापि प्रमात्वापातात् , अत्राह – **चिरेति** ॥ यागस्य स्वजन्यापूर्वव्यापारद्वारा स्वर्गकारणत्वम् ? नेह तथाऽवान्तरव्यापारोऽस्ति, तत्राह —**वाक्यार्थेति** ॥ तथापि कथं व्यभिचारवारणम्? अत्राह—**संस्कारस्येति** ॥ उत्पत्तिपरतस्त्वसाधनं निगमयति—**तस्मादिति** ॥

घटनिर्विकल्पकमात्मादिव्यतिरिक्तस्वविषयजन्यमिति तद्भागे सिद्धसाधनत्वं मा भूत् , इत्याह—**प्रमात्वेति** ॥ ज्ञानज्ञापकसामग्र्यनन्तर्भूतप्रमात्वस्य प्रमानिर्विकल्पकहेतुत्वस्य परेणानङ्गीकारात् , तद्व्यतिरिक्तिविशेषणं नोपात्तम् ॥

अहं ज्ञानवानितिवदहं प्रमावानित्यनुभवात्प्रमात्वनिर्विकल्पकं न सिद्धमित्याश्रयासिद्धिपरिहारार्थं द्वितीयप्रयोगे विशेषणमिदमिति ॥

---

१. 'इति' पाठः 'ख' पुस्तके नास्ति ।

२. तत्र क

३. यावत् क

निष्ठ[ रेच्छा ]दिक्कालादृष्टव्यतिरिक्तजन्यम्, कार्यप्रमात्वात्, [1]अनुमानवत्। अतिरिक्तं च धर्मविशेष एवेति ॥

॥ प्रकारान्तरेणोत्पत्तौ प्रमायाः परतस्त्वोपपादनम् ॥
तत्र साध्याप्रसिद्ध्यर्थान्तरतादिनिरासो वा दी न्द्र मतेन ॥

अप्रमाकारण[ ाधिकरणाधिकरण ] त्वानधिकरणप्रमामात्रकरणवृत्तिजातिमज्जन्यत्वं वा प्रमाया उत्पत्तौ परतस्त्वम्। न चात्र प्रमाणाभावः। आत्मत्वम्, आत्मत्वव्यतिरिक्ताप्रमाकारणाधिकरणत्वानधिकरणप्रमामात्रकरणवृत्तिजात्यन्यत्,

---

ऋजुसृतिमनुसृत्य प्रमापरतस्त्वे लक्षणप्रमाणे उपन्यस्य, वक्ररीतिमुपक्रमते—**[अ]प्रमेति** ॥ अप्रमायाः कारणमप्रमाकारणम्, तदधिकरणं येषाम्, तेष्वप्रमाकारणाधिकरणत्वं, धर्मः, तद्रहित( म् )अप्रमाकारणाधिकरणत्वानधिकरणम्, सा च प्रमा( मात्र )करणवृत्ति [र्या जातिः ], तद्वज्जन्यत्वम्। जन्यत्वमित्युक्ते सामान्यादिजन्यतद्विषयज्ञानव्यक्तावतिव्याप्तिः, अत उक्तम्—**जातिमदिति** ॥ घटज्ञानव्यक्तावतिव्याप्तिः, तस्या जातिमद्घटजन्यत्वात्, अत उक्तम्—**प्रमाकरणवृत्तीति** ॥ रूपप्रमाकरणचक्षुर्वृत्तिचक्षुष्ट्वजातिमच्चक्षुर्जन्यत्वं रसप्रमायां नास्तीत्यव्याप्तिः, अत उक्तम्—**मात्रेति** । ज्ञा( त )त्वव्यञ्जकज्ञानव्यक्तिमात्रेऽतिव्याप्तिपरिहारायोक्तम्—**अप्रमाकारणाधिकरणत्वानाधिकरणेति,** ॥ प्रमाऽप्रमासाधारणकारणजन्या हि ज्ञानव्यक्तिरप्रमाकारणाधिकरणत्वाधिकरणजातिमज्जन्येति तद्व्युदासः ॥

अप्रमाकारणाधिकरणत्वानधिकरणजन्यत्वमित्युक्तेऽपि ज्ञानकारणं तथा, इति ज्ञानव्यक्तावतिव्याप्तिः, अत उक्तम्—**प्रमामात्रेत्यादि** ॥ आत्मत्वमन्यदित्युक्ते घटादेरन्यत्वं सिद्धमित्युक्तम्—**जातीति** ॥ तथापि घटत्वादिनाऽर्थान्तरम्, अत्रोक्तम्—**प्रमाकरणेति** ॥ रूपप्रमाकरणचक्षुर्वृत्तिचक्षुष्ट्वान्यत्वं सिद्धम्, अत्रोक्तम्—**मात्रेति** ॥ प्रमामात्रकरणवृत्तिजात्यन्यदित्युक्ते प्रमाऽप्रमासाधारणकारणवृत्तिजातेः सकलप्रमाकारणवृत्ति[त्व]संभवेन तादृशजात्यन्यत्वेन स्वतस्त्वेऽप्युपपद्यमानेनार्थान्त[ रम्, अत उ ]क्तम्—**अप्रमाकारणेत्यादि** ॥ अप्रसिद्धविशेषणतापरिहारायोक्तम्—**आत्मत्वव्यतिरिक्तेति** ॥ आत्मत्वव्यतिरिक्ताप्रमाकारणाधिकरणत्वानाक्रान्तवाद्यमा[ जात्यन्य ]त्ववत्, आत्मत्वं धर्म[र्मो]का[ना]न्यत्वप्रतियोगि व्याहतत्वात्, इति द्वितीयं सिध्यत्प्रमामात्रकरणवृत्तिजातित्त्वेन विशेषितम् उक्तरूपजातिमाक्षिपतीति—**महाविद्यार्थः** ॥ आत्मत्वम्, स्वान्योन्याभावोक्तरूपजात्यन्यत्वान्यतराधिकरणम्, मेयत्वात्, घटवदित्यादिपदार्थः ॥

---

१. असमानवत् ख

मेयत्वात्; घट[त्व]वद् इत्यादेः संभवात्। न च—अत्रार्थान्तरता; आत्मत्वव्यतिरिक्ताप्रमाकारणाधिकरणत्वानधिकरणप्रमामात्रकरणवृत्तिजातिसिद्धावप्यप्रमाकारणाधिकरणत्वानधिकरणप्रमामात्रकरणवृत्तिजात्यसिद्धेरिति—वाच्यम्; आत्मत्वस्यात्मत्वव्यतिरिक्तत्वासिद्धौ तत्सिद्धेर्दुर्वारत्वादिति **वा दी न्द्रस्य** पन्थाः ॥

॥ भू ष ण कारदृष्ट्योत्पत्तौ प्रामाण्यपरतस्त्वेऽनुमानम् ॥

भू ष ण कारोऽपि बभाषे—प्रामाण्यम्, परतो भवति, अभूत्वा भावित्वात्; अप्रामाण्यवत्। योऽयं दृष्टान्तः स्वतः प्रवृत्तावुक्तः-

मृच्चक्र-दण्ड-सूत्रादि घटो जन्मन्यपेक्षते।
उदकाहरणे तस्य तदपेक्षा न विद्यते ॥

इति, सोऽप्रामाण्येऽप्यविशिष्टः। किञ्च घटस्यापि संयोगाद्यपेक्षत्वात् तन्निरपेक्षत्वमसिद्धम् ॥

॥ प्रामाण्यज्ञप्तेः परतस्त्वसाधनम्, स्वतस्त्वे दूषणं च ॥

तथा ज्ञप्तिरपि परतः। प्रामाण्यम्, परतो ज्ञायते, ज्ञेयत्वात्; अप्रामाण्यवत्। बोधात्मकत्वेनैव प्रामाण्यसिद्धौ स्वतःप्रामाण्यमिति चेत्, न,

---

आत्मत्वम् अनात्मत्वं[न]भवतीति न प्रमातुं शक्यम्, स्वविशेषणविशेष्यभावप्रसङ्गात्, अत अत्मत्वेनैव प्रतिज्ञावाक्यार्थपर्यवसानाद्विवक्षितजात्यसिद्धेरात्मत्वेनार्थान्तरता, अत्राह—**न चेति** ॥ कुतो न वाच्यम्, अत्राह -- **आत्मत्वस्येति** ॥ आत्मत्वं आत्मत्वं भवतीति विधौ स्वविशेषणत्वादनात्मत्वमिति निषेधेऽपि तत्साम्यात्, स्वव्यतिरेके च वस्तुमात्रासिद्धेरात्मत्वस्य स्वव्यतिरिक्तत्वासिद्धावित्यर्थः।

प्रामाण्यं भवतीत्युक्ते धीहेतोरेवेति सिद्धसाधनम्, अत उक्तम्— **परत इति** ॥ ज्ञानेन व्यभिचारवारणार्थम्—**ज्ञानधर्मत्वे सतीति** हेतुर्विशेषणीयः ॥

उत्पत्तिपरतस्त्वं प्रसाध्य, प्रवृत्त्यादिलक्षणार्थक्रियायामपि तत्साधयितुं ततः स्वतस्त्वे भ ट्ट पठितदृष्टान्तमनुपठति—**योऽयमिति**। एवं च प्रामाण्यस्य स्वोत्पत्तौ ज्ञानकारणापेक्षा न स्वीकार्य[र्ये]इत्यर्थः ॥

**परतो ज्ञायते**=ज्ञानज्ञापकव्यतिरिक्तात् ज्ञायते, ज्ञानधर्मत्वे सति ज्ञेयत्वादित्येव हेतुः, परनिरपेक्षस्वरूपेण तत्प्रतीत्युपपत्तौ परतः तत्कल्पनागौरवं पक्षे बाधकम्, विपक्षे च न बाधकमस्तीति शङ्कते—**बोधेति** ॥ बोधत्वस्य प्रामाण्यसाधकत्वे

बोधात्मकत्वस्याप्रामाण्येऽपि भावात् । अथ—उत्सर्गापवादाभ्यां तयोस्सिद्धिः । तस्मादाहु :—

" तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ "

—इति, तदयुक्तम् ; मिथ्याज्ञानस्यापि प्रागपवादाद् बोधात्मकत्वेन प्रामाण्यप्रसङ्गात् । प्रमाणभूते च बाधोत्पत्तिरयुक्ता ; सर्वबोधेषु [1]बाधोदयप्रसङ्गात् । नचैकस्यैव बोधस्य प्रामाण्याप्रामाण्ये[2] युक्ते ; विरुद्धस्वभावयोरेकत्रासंभावात् ॥

॥ प्रामाण्याप्रामाण्ययोः कालभेदेनाविरोधशङ्कापरिहारः ॥

कालभेदेन सक्रियत्वनिष्क्रियत्वादिवत् तयोरप्येकत्राविरोध इति चेत्, न; बोधस्यास्थिरत्वेन तदसंभवात् । नहि नष्टस्य धर्मिणः पश्चाद्धर्मो भवितुमुत्सहते ।

अथ— भविष्यन्तीमपि बाधामपेक्ष्य बोधस्य प्रामाण्यमपो[3] द्ये[ द्य ]ते,

---

स्यादप्रामाण्येऽपि तत्सिद्धिप्रसङ्ग इति परिहरति—**नेति** ॥ अपवादादन्यत्रोत्सर्गप्रवृत्तिः ; उत्सर्गस्यापवादेन बाधः कस्य न संमतः, इति न्यायादिति शङ्कते—**अथेति** ॥

यद्यथा प्रतीयते, तत्तथैवेत्युत्सर्गः, अन्यथात्वं बाधकात्, इत्युत्सर्गापवादाभ्यां प्रामाण्याप्रामाण्यव्यवस्थेत्यत्र वृद्धप्रसिद्धिमभिधत्ते—**य[त]स्मादिति** ॥ प्रतीतेस्तथार्थत्वमुत्सर्गो यस्मात्, तस्मात्=रूप्यादिबुद्धौ प्रमाणता बोधात्मत्वेन प्राप्ता, ' नेदमिति पूर्वविपरीतप्रमा [बाधिताबोधितम् ]अर्थान्यथात्वम्, तस्माद्धेतो[ रु ]त्वं[ त्थं ] पूर्वकारणदोषज्ञानम्, तस्मादित्यर्थः] विमतं[अ]बाध्यम्, प्रमाणत्वात्, संमतवत्, अन्यथा सर्वा वि[पि]धि[धीः] बाद्या[ध्या] स्यादित्युक्तमयुक्तम्, अनुभवस्याबाध्यत्वे यावत्सत्त्वं प्रामाण्याधिकरणत्वस्य प्रयोजकत्वात्, अस्य तदभावादित्याशङ्क्याह—**नचैकस्येति** ॥ ' इदं रूप्यम् ' नेदं रूप्यमिति ज्ञानयोर्ज्ञानत्वेनैक्येऽपि प्रमाण्याप्रामाण्ये यथा, तथेहापि स्याताम्—**अत्राहैके[कते]ति** ॥ अतिवृत्ते बोधे तद्धर्माप्रामाण्यजननान्न क्षणिकत्वविरोधः, अत्राह—**न हीति** ॥ धर्मस्य स्वातन्त्र्ये सति धर्मत्वविरोधादित्यर्थः ॥ बोधत्वस्य न प्रामाण्योत्पादकत्वम्, अपि तु तज्ज्ञापकत्वम्, तदपि सर्वप्रकारबाधाभावापेक्षम्, अतो यत्र भाविनी बाधा, तत्र न तत्प्रत्यायकत्वमिति शङ्कते—

---

१. बोधोदय ख २. ण्यात् प्रा. क ३. अपोद्येते ख

यदाहुः—"यस्य देशान्तरे कालान्तरे पुरुषान्तरेऽवस्थान्तरे च बाधो नोत्पद्यते, [1]स बोधः प्रमाणमि"ति, न[2] तर्हि बोधात्मकत्वं प्रामाण्यनिश्चायकम्, किं तर्हि? त्रैकालिकबाधाभावविशिष्टं बोधत्वम्, तच्चाशक्यनिश्चयम्—किमस्योत्तरकाले बाधो भविष्यति, न वा—इति; सम्यक्त्वेनाध्यवसितस्यापि पक्षमासादिकालविकल्पेन बाधोत्पत्तेरुपलम्भात्। "दोषज्ञाने त्वनुत्पन्ने नाशङ्का निष्प्रामाणिके" त्यपि न युक्तम्; दोषज्ञानेऽनुत्पन्न एव शङ्कायास्संभवात्। उत्पन्ने हि दोषज्ञाने सत्यप्रामाण्यनिश्चय एव स्यात्॥

॥ अदुष्टकारणजन्यत्वादिना प्रामाण्यनिश्चयायोगोऽनवस्थापत्त्या ॥

अथ — अदुष्टकारणजन्यत्वादिनिश्चयेनाप्रामाण्यकारणशङ्का निवर्त्येत इति—मतम्, मैवम्; अदुष्टकारणजन्यत्वादिनिश्चयस्यापि पूर्वनिश्चयवदाशङ्काविषयत्वात्। अथ तत्रापि [1]तददुष्टकारणजन्यत्वादिनिश्चयेनाशङ्का निवर्तते; तन्निवर्तकस्यापि निश्चयस्य पूर्ववदाशङ्काविषयत्वात्, तत्राप्याशङ्कानिवर्तकनिश्चयप्रार्थने सति कथं नानवस्था?

---

त[अ]थेति ॥

अवस्थान्तरे=कार्यान्तरावच्छेदे ॥ प्रतिज्ञान्तरनिग्रहप्रसक्त्याऽऽक्षिपति—**न तर्हीति** ॥ प्रतिज्ञान्तरनिवृत्तये तर्ह्यादावेव बाधाभावावच्छिन्नबोधत्वं प्रामाण्यसाधकमभिधीयते, अत्राह—**तच्चेति** ॥

अप्रामाण्यशङ्काप्रयोजककारणदोषज्ञानानुदयेऽप्रामाण्यशङ्काभावाद् बाधाभावोऽपि शक्यनिश्चय इति, अत आह—**दोषेति** ॥ भाविबाधाभावनिश्चयोपायान्तरं शङ्कते—**अथेति** ॥ इदमद्द[दु]ष्टकारणजन्यमिति निश्चयेन, दुष्टकारण[ा]जन्यं भवतीति निश्चयेन वाऽप्रामाण्यकारणस्य बाधस्य भाविनः शङ्का निवर्त्येत इत्यर्थः ॥

अदुष्ट[कारण]जन्यत्वाभि[दि]ज्ञानं निश्चितप्रामाण्यं शङ्कानिवर्तकम्; अनिश्चितप्रमाण्यं वा। न चरमः; अतिप्रसङ्गात्, नाद्यः; बोधत्वस्य तन्निश्चायकत्वासिद्धेरुक्तत्वात्, अन्यस्य निश्चायकस्यासत्त्वादित्याह—**मैवमिति** ॥ येन प्रथमज्ञानस्याशङ्का निवर्त्यते, तेनैव तद्द[ददु]ष्ट[कारण] जन्यत्वादिनिश्चयस्याप्यप्रामाण्यशङ्कानिवृत्तिरित्याह—**अथ तत्रेति** ॥ आद्यज्ञानादुष्टजन्यत्वनिश्चयस्य अदुष्टजन्यत्वनिश्चयोऽपि

---

१. सर्वबोधः ख          २. न तस्य हि ख

॥ अनवस्थापरिहारस्य प्रामाण्यस्वतस्त्व-परतस्त्वपक्षयोरविशेषशङ्कापरिहारः ॥

ननु— नास्त्यनवस्था ; यत आहुः —

" एवं त्रिचतुरज्ञानजन्मनो [2]नाधिका मतिः ।
प्रार्थ्यते तावतैवैकं स्वतः प्रामाण्यमश्नुते ॥"

—इति, अधिका मतिर्न प्रार्थ्यत इति कुतः प्रतिपत्तव्यम् ; सर्वत्र संशयाभावात्, निराकाङ्क्षत्वेन विचार[3]काणामपि व्यवहारदर्शनाच्चेति ॥

ननु—अयमेवानवस्थापरिहारोऽस्माभिरभिधीयमानः[4] किमिति भवतां विद्वेषं जनयति ? येनैव प्रमाणेनाप्रामाण्याशङ्का निवर्त्यते, तेनैव प्रामाण्यनिश्चयोऽपि क्रियत इति **न्या य मु क्ता व लि का रो ऽ पि** रराण । प्रमित्युत्पादे तु सर्वत्र परापेक्षा युक्तिमती । न हि बोधमात्रसाधारणकारणाधीनस्तद्विशेषप्रमित्युत्पादः संभवी ; सकलकार्याणामसाधारणकारणाधीनत्वात् । भवति चात्र प्रयोगः — विवादपदम्, असाधारणकारणकम्, कार्यत्वात् ; यदित्थम्, तत्तथा, यथोभयसिद्धम्, तथैतत्, ततस्तथेति ॥

---

शङ्काकलङ्कित इति तस्याप्यदुष्टजन्यत्वगवेषणायां तत्राप्येवमित्यनवस्थेति दूषयति—**तन्निवर्तकस्येति** ॥ त्रिचतुरज्ञानकक्षान्वेषणविश्रान्तविचारकेण विचारकरणान्निराकाङ्क्षप्रवृत्तेर्नानवस्थेति चोदयति—**नन्विति** ॥ **स्वतः प्रामाण्यमश्नुते** इत्य[घ ?]स्य स्वतः प्रामाण्य निरपवादमित्यर्थः ॥

नाधिका मतिः प्रार्थ्यत इति यदुक्तम्, तदुपपादयितुं प्रश्नमुत्थापयति—**अधिकेति** ॥ प्रामाण्यं परतो ज्ञायत इति मतेऽपि तर्हि नानवस्थोद्भावनीया, समाधिसाम्यादित्याह—**नवा[न्व]यमेवेति** ॥ समाधिसाम्यं विशदयति—**येनेति** ॥ यावताऽप्रामाण्यशङ्का निवर्तते, तावता प्रामाण्यनिश्चयोपपत्तेः, अप्रामाण्यपरतस्त्वेऽपि नानवस्थेत्यर्थः ॥

तत्र वेदजनितवेदनस्य स्वतः प्रामाण्यादध्यक्षादेरपि तत् स्यात्, अत्राह—**सर्वत्रेति** ॥ परापेक्षा=धीहेत्वतिरिक्तापेक्षा । संप्रतिपन्नधीहेतुमात्रात्प्रमोत्पत्तिसंभवेनातिरिक्तहेतुकल्पने गौरवात्, अत्राह—**न हीति** ॥ तर्कितमेतन्न प्रमितमिति चेत्, अत्राह—**भवति चेति** ॥ यत्र विपक्षे बाधकमस्ति, तयोरन्वयो व्याप्तिरिति व्याप्ति-

---

१. तददुष्ट ख
२. नाधिकारमतिः ख
३. विचारकारकाणां ख
४. अभिधीयमाना ख

॥ बोधसाधारणकारणस्य प्रमितिहेतुत्वे दूषणम्, दोषाभावहेतुत्वेऽपि परतस्त्व एव पातश्च ॥

बोधसाधारणकारणाधीनस्य प्रमितित्वेऽप्रमापि प्रमैव भवेत्। अस्ति हि तत्रापि बोधहेतुः ; अन्यथा बोधोऽपि स न भवेत्। सत्यपि बोधहेतौ दोषाद् विशेषहेतोरप्रमितिस्सेति चेत्, प्रमितावपि तर्हि दोषभावो विशेषहेतुः किं नेष्यते ? भाववदभावस्याप्यन्वय-व्यतिरेकाभ्यां कारणभावनिश्चयस्याशक्यनिरासत्वात् ॥

॥ दोषस्य दोषाभाववदहेतुता, दोषाभाववत्तस्य हेतुता वेति कथं दोषाभावहेतुत्वे स्वतस्त्वं प्रमायाः ? परतस्त्वं वाऽप्रमाया इति प्रामाण्यस्वतस्त्वस्योत्पत्तौ निरासः ॥

दोषाभावस्यावर्जनीयतया सन्निधिः, न हेतुतयेत्यपि न वाच्यम् ; दोषेऽपि तथाभावप्रसङ्गस्याशक्यपरिहारत्वेनाप्रमितिरपि स्वत इति प्रसक्तेः। तथापि तस्य विरोधिदोषनिरासतयैवान्यथासिद्धः सन्निधिः प्रमितौ, न हेतुतयेति प्रसङ्गात्, न, दोषस्य स्वाभावनिरासरूपेणान्यथासिद्धेरहेतुता; तथा सति विरोधि-

---

लक्षणादिह विपक्षबाधकवैधुर्याद् व्याप्यत्वासिद्धिः, अत्राह—**बोधसाधारणेति** ॥ आपादकासिद्धया सप्रसङ्गाभासत्वमाशङ्क्याह—**अस्ति हीति** ॥ धीहेतुमात्र-जन्यत्वस्य प्रमितित्वप्रयोजकस्य[त्व]भावान्न[ा]प्रमायां प्रमितित्वप्रसङ्ग इति शङ्कते—**सत्यपीति** ॥ यथा दोषस्याप्रमात्वप्रयोजकत्वम्, तथा तदभावस्य प्रमात्वप्रयोजकत्वम् ; अविशेषात्, उभयत्र धीहेतोर्धीत्वमात्रप्रयोजकता स्यादित्याह—**प्रमितावपीति** ॥ कारणत्वस्य भावत्वेन व्याप्तत्वान्नाभावे संभवः, अत्राह—**भाववदिति** ॥ अन्यथा कारणत्वमभावत्वव्याप्तमित्यपि सुवचमिति भावः ॥

यथा धूमोदयेऽग्निपैङ्गल्यस्यावर्जनीयतया सन्निधिः, न हेतुतया, तथा दोषाभावस्यापि प्रमोत्पत्तावित्याशङ्क्याह—**दोषेति** ॥ अनन्यथासिद्धावन्वय-व्यतिरेकौ कारणभावं कल्पयतः, नेह तयोरनन्यथासिद्धिः ; विरोध्यभावविषयतयोपपत्तेरिति शङ्कते—**तथापीति** ॥ दोषस्य प्रमितिविरोधित्ववत् तदभावस्याप्रमाविरोधित्वाद्दोषोऽपि विरोधिस्वाभावनिरासतयाऽन्यथासिद्धसन्निधिरप्रयोजकोऽप्रमायां स्यादिति प्रतिबन्द्या प्रत्याह—**नेति** ॥ दोषान्वयव्यतिरेकयोर्विरोधिस्वाभावनिरासविषयतया नान्यथासिद्धिः, अन्यथा मृदादेरप्यहेतुत्वं घटादौ स्यादिति शङ्कते—**तथा सतीति** ॥ **दोषस्येति** ॥

स्वाभावनिरासरूपतयैव सकलहेतूनामहेतुताप्रसङ्गादिति चेत्, न; तर्हि दोषाभाव[1]-स्यापि स्वाभावदोषनिरासरूपेण नान्यथासिद्धिः; अविशेषात्, इति दुर्वारो हेतुभावः ॥

किञ्च—

धातुवैषम्यसंस्थानशरीराः कामिलादयः ।
यद्वत्प्र[ द्वप्र ]माणविज्ञानं तदपेक्षमुपेयते ॥ ३ ॥

साम्यसंस्थानसापेक्षं सम्यग्ज्ञान[2]मुपेयताम् ।
यतस्तद्भावभावित्वं नोभयत्र विशे[शि]ष्यते ॥ ४ ॥

तथा चानुमानेऽपि लिङ्गविपर्यासादिदोषाभावातिरेकि भावरूपमेव लिङ्गादि तत्त्वज्ञानमन्तःकरणादिरर्थ्यते । शब्दोऽपि यथा विपरीतोपलम्भादिदोषोपेतपुरुष-प्रणीतता[3]मपेक्ष्याप्रमाजनकः, तथैव यथार्थोपलम्भादिगुणवत्पुरुषप्रणयनमपेक्षमाणः प्रमामुपजनयतीत्यन्वय-व्यतिरेकाभ्यामधिगम्यते । गुणानां दोषनिरासार्थः सन्निधिः, न प्रमाणज्ञानकारणरूपेणेति चेत्, न; दोषाणां गुणापाकरणार्थः संनिधिरप्रमायाम्, न कारणभावेनेति विपरीतस्यापि शक्यवचनत्वात् । तत्सिद्धमेतत्—

विज्ञानकारणकलापविभिन्नमूर्ते [ र्ति ]
र्दोषाद्यथोदयमुपैत्य[4]यथार्थबोधम् [ : ] ।

---

यथा विधेरभावः प्रतीषेधः, तथा प्रतिषेधस्याभावो विधिः, एवं च दोषाभावस्यापि स्वाभावदोषनिरासरूपतया नान्यथासिद्धसन्निधित्वं प्रमितावित्याह— **न तर्हीति** ॥

अथापि भवेद्दोषाभावोऽधिको हेतुः, न भावः, तथाच वेदस्याऽऽप्तप्रणीतत्वा-भावेऽपि हि प्रामाण्यविरोधो न भविष्यतीति, अत आह— **किञ्चेति** ॥ धातुत्रय-साम्यलक्षणगुणः प्रमायामन्वयव्यतिरेकवानस्तीति । दार्ष्टान्तिकमाह— **साम्येति** ॥ भवेदेवमध्यक्षे, अनध्यक्षप्रमायां नभावरूपगुणः शक्यः; अनुमितौ तदयोगात्, अत्राह— **तथेति** ॥ शब्दार्थप्रमितेर्व्याप्तिपक्षधर्मताप्रमितिनिरपेक्षत्वान्न तत्र भाव-रूपगुणः, अत्राह— **शब्दोऽपीति** ॥ **विपरीतोपलम्भादीति** ॥ प्रमादाशक्तिविप्र-लम्भा आदिपदार्थः । तद्भावभावित्वं नोभयत्र विशिष्यत इत्ययुक्तम् । गुणान्वयव्यति-रेकयोर्विरोधिदोषनिवर्तकविषयतयाऽन्यथासिद्धेरिति शङ्कते— **गुणानामिति** ॥

---

१. दोषस्यापि
२. अपेयाताट
३. उपेक्ष्य
४. मपेत्य ख

तद्वद् गुणादुदयमेति यथार्थबोधः
तद्भावभावनियतेरुभयाविशेषात् ॥ ५ ॥

[इति] । तदेवमुत्पत्तौ तावन्न स्वतः प्रामाण्यसिद्धिः ॥

॥ प्रामाण्यज्ञप्तौ स्वतस्त्वदुर्वचत्वनिरूपणार्थं तत्र विकल्पद्वयम्, तन्निरासश्च ॥

स्वत एव प्रामाण्यं प्रमीयत इत्यस्यापि कोऽर्थः—किं स्वयमेव वेदनं स्वप्रामाण्यग्रहणमित्यर्थः ? किं वा स्वग्राहकेण स्वप्रामाण्यग्रहणम्—इति ? नाग्रिमः कल्पः; अप्रामाण्यस्यापि स्वसंवेदनाधिकरणस्य तद्वेद्यत्वापत्तेः प्रमाणवेदनादप्रवृत्तेः । नापि पश्चिमः । संवेदनग्राहकं हि संवेदनं ज्ञाततान्यथानुपपत्तिप्रस्तु[सु]तं परेष्टम् । तच्च न प्रामाण्यगोचरमुत्पत्तुमुत्सहेत ; ज्ञानमात्रपरिकल्पनेनैव ज्ञाततानुपपत्तिपरिक्षयात्[1], अन्यथात्वप्रमाणज्ञानात् तदुत्पत्त्यनुपपत्तेः । तदनुत्पत्तौ वा [2]प्रमाणज्ञानस्यासिद्धिप्रसक्तेः ॥

॥ ज्ञातताया बाधकाभावविशेषिताया बाधकविशेषितायाश्च प्रामाण्याप्रामाण्यग्राहकत्वं समानमिति प्रामाण्यमात्रस्वतस्त्वे न विशेषः कोऽपि ॥

स्यान्मतम्—बाधकाभावविशेषिता ज्ञातता प्रामाण्यमाक्षिपति—इति, हन्तैवमविशिष्टं[ष्टा]विज्ञानमाक्षिपति, विशिष्टा तु तत्प्रामाण्यम्, इति कथं न परतः पक्षानुप्रवेशः ? एवमपि तदनुप्रवेशाभावे बाधकावच्छिन्नज्ञातताक्षिप्तमप्रामाण्यमपि परतो न स्यात् ॥

---

ज्ञानस्य स्वप्रमत्वात्तदधिकरणप्रामाण्यग्रहः स्वयमेवेति गुरुमतमाह—**किं स्वयमेवेति** ॥ ज्ञानग्राहकेण तत्प्रामाण्यग्रह इति कौमारिलदर्शनमाह—**किं वेति** ॥ द्वितीये विकल्पेऽनुपपत्तिं प्रथयितुं पराभ्युपगममाह—**संवेदनेति** ॥ ज्ञातृपरिणतिरूपं ज्ञानमर्थस्य ज्ञाततानुपपत्त्या ज्ञायत इति नित्यपरोक्षज्ञानवादिनामभ्युपगमः । किमतः ? तत्राह—**तच्चेति** ॥ बाधाभावस्य ज्ञानज्ञापकविशेषणत्वेनाप्राधान्यात्, तद्विशेष्यज्ञानज्ञापकस्य प्राधान्यात्, ततोऽवगतं प्रामाण्यं स्वत एव स्यात्, अत्राह—**एवमपीति** ॥

ज्ञानतत्प्रामाण्ययोरेकसामग्रीज्ञाप्यत्वे ज्ञानत्ववत्प्रामाण्यसदसत्त्वसन्देहो ], न

---

१. परीक्षात्    २. वा अप्रमाण

॥ प्रामाण्यस्वतस्त्वे तत्संशयानुदयापत्तिः, संशयोदये तु तन्निवृत्त्यनुपपत्तिः ॥

किञ्च वेदनग्राहकेणैव सर्वत्र तत्प्रामाण्यग्रहणे न कदाचनापि तद्व्यभिचाराव्यभिचारे सन्देहः समुत्पद्येत । दृश्यते च दृष्टव्यभिचाराणां कदाचन दूरनीरादिदर्शनेषु तत्सन्देहः । न चासावादित एव निश्चितैककोटिकस्यापि साधारणधर्मावबोधमात्रेण सन्देहः संभवी । नो खलु निश्चितेऽपि स्थाणावूर्ध्वत्वोपलम्भमात्रेण सन्दिहते जनाः ; तथा सति सन्देहानिवृत्तिप्रसङ्गात् ॥

अथोच्येत—प्रमाणवदप्रमाणेऽप्यापाततस्तत्प्रत्ययादसति विशेषोपलम्भे भवति सन्देहः—इति, हन्त भोः किं प्रमाणप्रत्ययप्रतीतावसौ सन्देहः ? किं वा तदप्रतीतौ ? प्रथमे तत्प्रत्ययप्रतीतिरेव तत्प्रामाण्यगोचरा, नो वेति । नाद्ये सन्देहसंभवः ; विशेषोपलम्भात् । द्वितीये तु कथं सर्वत्र स्वतः प्रामाण्योपवर्णनम् ? चरमे तु तदप्रतीतौ कथं सन्देहः संभवी ?

---

स्यादित्याह—**किञ्चेति** ॥ ज्ञानं ज्ञायमानमर्थनियतमेव ज्ञायते, इति न तद्व्यभिचारसन्देहः, अत्राह—**दृश्यते चेति** ॥ कचित्स[दस]दुदकोपलम्भादर्थव्यभिचारं दृष्टवतामित्यर्थः । अर्थैकनियतमिदमिति निश्चितेऽपि प्रमाणाप्रमाणसाधारणधर्माद्बोधत्त्वात् सन्देहः, [अ]त्राह—**न चेति** ॥ विशेषादर्शनस्यापि सन्देहबीजत्वादित्यर्थः ॥ विशेषदर्शने सन्देहाभावमुदाहरति—**नो खल्विति** ॥

सामान्यग्रहणविशेषाग्रहणाभ्यामत्रापि सन्देहः, न पुनः सामान्यग्रहणेनैव, येन निवर्तकाभावादनिवृत्तिरेव संशयस्येति शङ्कते—**अथेति** ॥ आपाततः=प्राग्बाधाद्, ज्ञानज्ञापकादित्यर्थः । प्रमाणत्वेन प्रतीयमानत्वस्य प्रमाणाप्रमाणसाधारणत्वादसति विशेषदर्शने सन्देह इत्युक्तं दूषयितुं विकल्पयति—**हन्तेति** । प्रामाण्याधिकरणे धर्मिणि स्वरूपेण प्रतीते सन्देह इति प्रथमकल्पं द्विधा विकल्पयति—**प्रथम इति** ॥ साधारणधर्मविशिष्टधर्मिदर्शनं सन्देहप्रयोजकम्, न विशेषगोचरमिति चेत्, अत्राह—**द्वितीय इति** ॥ प्रत्ययप्रतीतितोऽन्यत्वात् तत्प्रामाण्यप्रतीतेः, सामग्रीभेदाच्च तद्भेदप्रतीत्यैक्य[ा]प्रसङ्गादित्याशयः ॥ धर्मिभूतप्रत्ययाप्रतीतौ सन्देहपक्षोऽसंभवी ; निर्बीजत्वादित्याह—**चरम इति** ॥

॥ प्रामाण्यस्य बोधात्मकत्वनिरासः ॥

[1]तेनेदमपास्तम् —यदाहुः —"बोधात्मकत्वेनैव स्वकीयेन बोधानां प्रामाण्यप्रतीतिः स्वतःप्रामाण्यम्"—इति। न हि बोधात्मकत्वमेव बोधानां प्रामाण्यमधिगमयति ; तथा सति तत्र तत्सन्देहस्य कदाचिदप्यनुपपत्तेः । कथं च प्रामाण्यव्यभिचारिणो बोधात्मकत्वात्तन्निश्चयः ? तदव्यभिचारे वा न कोऽप्यप्रमाणं बोधो भवेत् ॥

॥ तथाभूतत्वस्य दुर्वचत्वेन तथाभूतार्थानुभवत्वं न स्वतः प्रामाण्यम ॥

यदपि मतम् —तथाभूतार्थानुभवत्वमेव प्रामाण्यम्। तच्च स्वत एव निरूप्यते । तथाहि—किमर्थस्य तथाभावो (१) जातिः ? (२) उपाधिसामान्यम्, (३) विपर्ययव्यावृत्तिः, (४) विद्यमानता वा। प्रथमे सामान्यादिवेदनानामयथार्थत्वापत्तिः ; निस्सामान्यानि तानीत्यभ्युपगमात् । द्वितीयोऽपि श्यामलधवलादिवस्त्वनुवर्तिनो यथार्थत्वोपाधेरनुपलम्भात्, उपलम्भे वा तस्य

---

ज्ञानज्ञापकादेव प्रामाण्यज्ञप्तौ तत्सन्देहानुपपत्तिप्रतिपादनन्यायेन चोद्यान्तरमपि निरस्तमित्याह—**तेनेति** ॥ परिहारभेदान्निराकार्यमतभेदाच्च न पुनरुक्तिरिति द्रष्टव्यम् । बोधात्मकत्वमपि प्रामाण्येनाविनाभूतम्, न वा । चरमं प्रत्याह—**कथं चेति** ॥ व्यभिचारिणः प्रमेयत्वादेः संशयहेतुत्वादित्यर्थः ॥ प्रथममतिप्रसक्त्या परास्यति—**तदिति** ॥

महात्र तस्य मतमुत्थापयति—**यदपीति** ॥ प्रामाण्यस्वरूपविशेषकथनमात्रेण कथं स्वतस्त्वसिद्धिः ? इत्यतः तदुपपादनाय विकल्पयति—**तथाहीति** ॥ तथाभावः= परमार्थत्वम् ॥

'व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः ।'

इत्युक्तजातिबाधकानामन्यतमाविषयत्वे सत्यनुवृत्तप्रत्ययवेद्या जातिः। एषां बाधकानामन्यतमविषयत्वे सत्यनुवृत्तप्रत्ययवेद्यमुपाधिः,सामान्यम्, विपर्ययव्यावृत्तिः,अपोहत्वम्, स्वाभावाभावत्वलक्षणम् । उपलभ्यत एवाबाध्यत्वमुपाधिः श्यामलधवलादिवस्त्वनुगतः, अत्राह—**उपलम्भे वेति** ॥ उपाधिबुद्धेः प्र[ा]माण्यार्थमुपाधावुपाध्यन्तरमस्ति, न वा।

---

१. एतेनेद

यथार्थतासिद्ध्यर्थमुपाध्यन्तरानुसरणे सत्यनवस्थाप्रसङ्गादपाकरणीयः । तृतीये तु स्वरूपविपर्ययव्यावृत्तिः स्वरूपमेव वस्तुनः, इति तदवच्छिन्नत्वं विज्ञानस्य स्वत एव शक्यनिरूपणमिति स्वतः प्रामाण्यम् । चतुर्थे तु विद्यमानत्वं नामार्थस्य वर्तमानत्वम्, आहो स्वरूपसत्त्वम्, आद्येऽतीतादिप्रतीतेरयथार्थत्वापत्तिः । द्वितीये तु पदार्थस्वरूपस्य परानपेक्षेण प्रत्ययेनोपदर्शितत्वात् तदवच्छिन्न एवासौ स्वग्राहकेण निरूप्यते, विपरीतानुभवत्वं तु बाधकाधीनवेदनत्वमिति परतोऽभिधीयत इति, तदपि न साधु; यस्मादर्थस्य बाधकागोचरता, तथात्वम् । तच्च नापाततः प्रत्ययेनावभासते; इति कथं तदवच्छिन्नस्य स्वतो निश्चयः ?

॥ इदं रजतमिति प्रत्ययस्य भ्रमप्रमासाधारणस्य प्रामाण्यमप्रामाण्यमुभयं च परत एव ॥

किञ्च पौरस्त्यरजतरूपप्रत्ययत्वं प्रामाण-तदाभाससाधारणम्, तथार्थानुभवत्वं तु तदाभासव्यावृत्तम्, इति कथं तयोर(नुवृ[1]त्तिव्यावृत्तिधर्मतया विरोधिनोरेकता

---

नो चेत्, तद्बुद्धेरप्रामाण्यम्, अस्ति चेत्, अनवस्था स्यादित्यर्थः । स्वरूपसत्त्वं तथात्वमिति तृतीयः कल्पोऽस्मदभिमतः अत्रा[इत्या]ह—**तृतीये त्विति** ॥ सविषयस्यैव ज्ञानस्य ज्ञेयत्वात् तदवच्छिन्नत्वं प्रामाण्यं ज्ञानज्ञापकादेव शक्यज्ञानमित्यर्थः । तुरीयविकल्पस्तु तृतीयविकल्पान्तर्भूतः, इति तन्निरासेनैव निरस्त इत्याह—**द्वितीयेत्विति** ॥ शुक्तिशकलकलधौततादात्म्यमचि[प]रानपेक्षप्रत्ययेन प्रकाशितमिति तदवच्छिन्नानुभवत्वं स्वग्राहकेणैव शक्यग्रहमित्यप्रामाण्यमपि स्वतः स्यात्, अत्राह—**विपरीतेति** ॥ तदीयमिथ्यात्वं बाधकावेद्यमित्यर्थः ॥ उपाधिसामान्यमर्थस्य तथाभाव इति पक्षं परिगृह्य परिहरति—**तदपीति** ॥ उपाधेरनुपलम्भादिति यदवादि, तदपवदति—**यस्मादिति** ॥ "सर्वेषां सर्वदा यत्र धीः स्यात्, तत्र हि न बाधनम् ॥" इति भट्टवचनादबाध्यत्वं नापाततः शक्यावगमम् । न चोपाधावुपाध्यन्तराभावे तद्वेदनाप्रामाण्यम्; तस्य स्वपरनिर्वाहकत्वात्, अन्यथा भवतोऽप्यबाधितानवगतनिश्चितप्रतीतिः प्रमेति स्वीकारादनवस्था दुष्परिहरा स्यादित्यर्थः । तथात्वस्य वस्तुस्वरूपतया परानपेक्षप्रत्ययेनोपदर्शितत्वात् तदवच्छिन्नोऽसौ स्वग्राहकेण गृह्यत इति यदुक्तम्, तदयुक्तम्; तथात्वस्य धीगोचरस्वरूपमात्रत्वायोगादित्याह—**किञ्चेति** ॥ धीगोचरस्वरूपमेव चेत्तथात्वम्, अप्रमापि प्रमैव स्यादित्याह—**न खल्विति** ॥

संभविनी? न खल्वन्यथा तथाभूतार्थगोचरभावः शक्यः प्रतिषेद्धुं पौरस्त्यरजतप्रतीतेः) कदाचिदपि । तदेवमुन्नीतन्यायेन प्रतीतावपि न स्वतः प्रामाण्यमिति सिद्धम् ॥

॥ प्रामाण्यस्य स्वतस्त्वानुपपत्तिः ॥

तथाच[अथ]"प्रमीयते मात्वं परस्मादिति यौक्तिकं । धर्मिग्राहकसामग्रीव्यतिरिक्तं परं मतम्"। इह खल्विन्द्रियादेः प्रमासाधनत्वं प्रामाण्यमभिमतम् । तन्न पुनः प्रतीतेरेव पराभिमतप्राकट्य[2]भेदकारणभावः प्रामाण्यम्; तस्याप्रामाणिकत्वात् । यच्च तदिन्द्रियादिप्रामाण्यम्, तद्धर्मिग्राहकसामग्रीमात्रावसेयं[न]संभवति; रूपादिगोचरापरोक्षानुभवेन चक्षुरादिस्वरूपपरिज्ञानेऽपि तत्प्रामाण्यानिश्चयात् । प्रमात्वोपहितकार्यपरिज्ञानमन्तरेण तदुपधानस्य तत्साधनभावस्यावसातुमशक्यत्वात्, तत्र यथा परिकल्पितेऽपि स्वरूपे नयनादेः तत्कार्यानुभवव्यभिचारावगमसापेक्षं तदप्रामाण्यपरिज्ञानम्, तथैव तत्कार्यानुभवाव्यभिचारपरिज्ञानसापेक्षं प्रामाण्यपरिज्ञानमपि, इति परत एवोभयं युक्तम् ॥

॥ प्रमितेः स्वतः प्रामाण्यायोगः, तत्संशयानुपपत्तेः ॥

यदापि प्रमितिः प्रमाणमिति व्युत्पादनेन प्रमात्वमेव प्रामाण्यमभिमतम्,

---

इत्थं परपक्षं प्रतिक्षिप्य स्वपक्षसाधनमुपक्रमते—**तथाचेति** ॥ फलविशेषजननसामर्थ्यं धियः प्रामाण्यम् । तच्च फलानुमेयत्वात् फलानुमेयधीज्ञापकेनैव ज्ञायते, तत्राह—**इहेति** ॥ न्यायदर्शने प्रमासाधनत्वरूपप्रामाण्यस्य धर्मिग्राहकेण ग्रहणाभावे हेतुमाह—**रूपादीति** ॥ रूपादिसाक्षात्कारः, करणसाध्यः, कार्यत्वात्; इच्छावदिति चक्षुरादिस्वरूपानुमानेऽपि तत्प्रमाण्याप्रतीतेरित्यर्थः । चक्षुरादेर्धीकरणतयानुमानात्प्रामाण्यमपि प्रतीयत एव, अत्राह—**प्रमात्वेति** ॥ प्रमात्वव्यावृत्तकार्यपरिज्ञानमन्तरेण, तदुपाधिकं तत्करणत्वं दुरवगममित्यर्थः ॥

करणव्युत्पत्तेः परापेक्षत्वेन बहिरङ्गत्वाद्भावव्युत्पत्तेरपरापेक्षत्वेनान्तरङ्गत्वाद्भाव-

---

१. नुवृत्तियावृत्तिधर्मतया विरोधिनोरेकतासंम्भविनी । न खलु अन्यथाभूतार्थगोचरभावश्शक्यः प्रतिषेध्दु । तत्प्रतीतेः ख

२. प्राकट्यभेदकरणऽभाव क

तदापि न तस्य ग्राहकसामग्रीमात्रसंवेदनीयता ; धर्मिनिश्चयेऽपि तत्संशयदर्शनात् । दर्शितश्च दूरे नीरादिवेदननिश्चयेऽपि तत्प्रामाण्यसन्देहः । तत्सिद्धमेतदनभ्यासदशापन्नवेदनप्रामाण्यम्, परतः प्रतीयते, तत्र संशयिकत्वात् ; अप्रामाण्यवदिति । एवं सत्यभ्यासदशापन्नान्यपि [1]प्रमाणवेदनानि, परतः प्रमेयप्रामाण्यानि, प्रमाणवेदनत्वात् ; अनभ्यासदशापन्नप्रमाणवेदनवदिति प्रयोक्तव्यम् ॥

॥ प्रामाण्यपरतस्त्वेऽनवस्थाशङ्का तत्स्वतस्त्वेऽपि समाना ; आप्तपुरुषप्रणीतत्वेन परेणैव परिहरणीया ॥

यत्पुनः [2] एतदपेक्षणीयवेदनानामप्यन्यापेक्षाप्रसक्तावनवस्थेति, तदसत् ; [3] स्वतः प्रामाण्यपक्षेऽपि पुरुषवचनादि [पुवाक्यादि] जनितवेदनेषु बहुलमुपलब्धव्यभिचारत्वाद् आगन्तुकशङ्काकलङ्कितकलेबरेषु शङ्कितव्यभिचारनिवारणद्वारेण स्वाभाविकप्रामाण्यप्रतिष्ठापनार्थमाप्तपुरुषाधीनविरचनादिना दोषाभावावधारणमपेक्ष्यते । शङ्कितव्यभिचारनिवृत्त्यर्थमपेक्ष्यमाणदोषाभावावधारणस्यापि दुष्टकारणप्रसुतत्वाशङ्कायां तन्निवृत्त्यर्थमपि तत्कारणदोषाभावावधारणव्यपेक्षायामनवस्थादौस्थ्यस्य तुल्यत्वम् । यश्चात्र परिहारः, स सर्वत्र, संशयाभावात्, निराका-

---

व्युत्पत्या प्रमात्वं प्रामाण्यं स्वतो ज्ञायत इति,अ(त्रा)ह—**यदापीति** ॥ प्रमात्वरूपप्रामाण्यपरतस्त्वे प्रयोगं रचयति—**तदिति** ॥ प्रवृत्तिसामर्थ्यादिना निश्चितप्रामाण्येन ज्ञानेन समानजातीयतयाऽननुसन्धानदशा=अनभ्यासदशा, तदापन्नवेदनानां प्रामाण्यमिति धर्मिविशेषणमभ्यासदशापन्नवेदनप्रामाण्यभागेऽसिद्धिपरिहारार्थम् । प्रवृत्तिसामर्थ्यादिना तन्निश्चयोत्तरकालमसिद्धिपरिहारार्थम् – **तत्रेति** हेतुविशेषणम् ॥

परतः प्रामाण्यपरिच्छिन्ना[च्छेदेऽ]नवस्थाप्रसक्तिर्बाधिते[के]ति, अत्राह—**अयं(यत्)पुनरितिं** ॥ प्रतिबन्द्या परिहरति—**तदिति** ॥ **पुंवाक्यादीति** ॥ लिङ्गाभासादिसङ्ग्रहः । **आप्तपुरूषाधीनविरचनादिनेति** व्याप्तिपक्षधर्मत्वप्रमित्यादिस्वीकारः । दोषाभावावधारणामात्रेण प्रथमप्रत्ययप्रामाण्यस्य निरपवादत्वात्कुतोऽनवस्था ? अत्राह—**शङ्कितेति** ॥ पर्यनुयोगसाम्यं प्रदर्श्य परिहारसाम्यं दर्शयितुमाह—**यश्चेति** ॥

---

१. दशापन्नान्यप्रमाणवोदनानिं क

२. एतदपेक्षणीय

३. यतः स्वतः

ह्वत्वेन विचारकाणामपि व्यवहारदर्शनाद् नानवस्थेति, सोऽपि समान एव। ततश्चैतत् स्वसिद्धान्तश्रद्धामात्रविजृम्भितम्—

"स्वतः सर्वप्रमाणानां प्रामाण्यमिति भाषितम्—"इति ॥

॥ प्रामाण्यस्वतस्त्वसिद्धान्तसङ्ग्रहकारिका ॥

अत्र ब्रूमहे—बोधकारणसामग्रीमात्राज्जन्म यतो मितेः।
आचक्ष्महे लक्ष्म ततो लक्षणासंभवः कुतः ॥ ७ ॥

॥ प्रमितित्वे सति धीहेत्वतिरिक्ताजन्यत्वं स्वतस्त्वमिति तत्सुवचत्वम्,
तत्र दोषाभावः, तत्रानुमानं च ॥

धीहेतुमात्राधीनत्वं प्रमितेः स्वतस्त्वं नाम। तदधीनत्वं च प्रमितित्वे सति ततोऽतिरिक्ताजन्यत्वम्। अतो न गगनादावतिव्याप्तिः, नापीश्वरप्रमायाम-व्याप्तिः ॥

न च प्रमाणासंभवः; प्रमाणसिद्धत्वात्। **तथाहि**—अनीश्वरप्रमा, न धीहेत्वतिरिक्तजन्या, प्रमात्वात्; ईश्वरप्रमावत्। न च—प्रमाया ज्ञानत्वे तद्धेतूनां ज्ञानकारणत्वादेव सिद्धसाध्यतेति—वाच्यम्; तथा सत्यप्रमाया अपि भवन्मते ज्ञानत्वादेव तद्धेतोरपि धीहेतुत्वात्, धीहेत्वतिरिक्तजन्यत्वलक्षणपरतस्त्वासिद्धि-प्रसक्तेः ॥

---

लक्षणानुपपत्त्या स्वतस्त्वानुपप[त्तिः]उत प्रमाणानुपपत्त्या। नाद्य इत्याह—**बोधेति** ॥ ज्ञानहेतुमात्रजन्यत्वं प्रमाया उत्पत्तौ स्वतस्त्वमिति पुराणा[तना]चार्य संमतं लक्षणमनुपठितम्, तच्छिक्षयितुं तदभिप्रायमाह—**धीहेत्विति** ॥ तन्मात्राधीनत्वं तदतिरिक्ताजन्यत्वम्, तेनै[व]वाजन्यत्वम्। नाद्यः; गगनादावतिव्याप्तेः। नेतरः; ईश्वरप्रमायामव्याप्तेः, अत्राह—**तदधीनत्वं चेति** ॥

**प्रमाणानुपपत्त्येति** द्वितीयमपनुदति—**नचेति** ॥ प्रमाप्रयोजकगुणादीनां ज्ञानहेतुत्वादेव तदतिरिक्ताजन्यत्वानुमाने सिद्धसाधनम्, अत्राह—**न च प्रमाया इति** ॥

॥ धीहेत्वतिरिक्तत्वनिर्वचनप्रकारासंभवशङ्का-तत्परिहारौ, तत्र सर्वदोषनिरासश्च ॥

धीहेत्वतिरिक्तत्वं नाम किं सर्वधीहेत्वतिरिक्तत्वम्, किञ्चिद्धीहेत्वतिरिक्तत्वं वा, ज्ञानाज[1]नकत्वं वा, धीत्वनिरूप्यत्व[2]ज[हेत्व]न्यत्वं वा। आद्ये बो[बा]धः; पटप्रमाहेतोर्घटादिधीहेत्वतिरिक्तत्वात्। तत एव न द्वितीयः। नापि तृतीयः; सिद्धसाधनात्। अन्त्यमुक्तिव्यतिरिक्तस्य सर्वस्यापि विशेषणत्वेन, विशेष्यत्वेन वा विशिष्टधीहेतुत्वात्। न चरमः; धीत्वस्य हेत्वनिरूपकत्वात्, नित्यज्ञाना[नेऽ]सत्त्वात्। अतश्च धीत्वनिरूप्यहेतुत्वा[2]सिद्धत्वेन तदन्याप्रसिद्धेरप्रसिद्धविशेषणतेति चेत्, न; यादृशमप्रमायाम्, प्रमायां च धीहेत्वतिरिक्ताधीनत्वं परतस्त्वं परेणोच्यते, तादृशपरतस्त्वप्रतिषेधस्य साध्यत्वात्। न चाकार्यत्वमुपाधिः;; ज्ञानव्यक्तौ साध्याव्यापकत्वात्। नाप्यनीश्वरप्रमेतरत्वमुपाधिः; पक्षेतरत्वात्। विपक्षे धीहेतुमात्रादुत्पादसंभवे तदतिरिक्तप्रयोजककल्पनागौरवप्रसङ्गो बाधकः॥

---

'न धीहेत्वतिरिक्तजन्ये'ति साध्यानिरुक्त्या पक्षबाधकं शङ्कते—**धीहेत्वतिरिक्तत्वमिति**॥ प्रथमे यावन्तो धीहेतवः, तदन्येन[ना]जन्यत्वं साध्यं स्यात्, तन्न संभवति; घटादिधीहेत्वतिरीक्तजन्यत्वाद् पटप्रमायाः, सर्वधीहेत्वतिरिक्तत्वाभावाच्च घटप्रमाहेतोरित्याह—**आद्य इति**॥ धीहेत्वतिरिक्त[क्ता]जन्यत्ववादिनः कथमिदं सिद्धसाधनम्? अत्राह—**अन्त्येति**॥ लीलावतीकारो यद्यपि नान्त्यमुक्तिमिच्छति; नित्यसंसारिणां केषांचित् स्वीकारात्, [3]तथापि किरणावलीकारादिभिः क्रमेण मुच्यमानेषु संसारिषु कदाचित् सर्व एव मुक्ताः स्युरिति सर्वमुक्तिरिष्टा। तत्रान्त्यस्य मुक्तिः=अन्त्यमुक्तिः, न सा धीहेतुः, ज्ञातुरभावात्, तदतिरिक्तं सर्वमेव धीजनकमिति ज्ञानाजनकाभावादिति भावः। धीत्वस्य नित्यत्वेऽपि तदधिकरणं कार्यत्वाद्धेतुनिरूपकम्, अत्राह—**नित्येति**॥ ज्ञानजातीयकारणमिदमिति न निरूपणमस्ति, नित्यज्ञानव्यक्तेरहेतुकत्वादित्यर्थः। यद् धीहेत्वतिरिक्ताजन्यम्, तदनीश्वरप्रमेतरदिति साध्यव्यापकत्वात्, साधन[ना]व्यापकत्वाच्चानीश्वरप्रमेतरत्वमुपाधिः, तत्राह—**नापीति**॥ पक्षातिरिक्तं व्यावर्त्यरहितं पक्षेतर इति भवतोऽभ्युपगमः, न च तस्योपाधित्वम्; अनुमानकुलोच्छेदापत्तेरिति भावः॥

---

1. जन्यत्वम्   2. हेतुत्वासिद्धेन

3. ईश्वरभावो मुक्तिरनेकजीवादे, शुद्धब्रह्मभावस्तु सर्वमुक्तावित्यद्वैतिनामपि केषांचन सिद्धान्तः सिद्धान्तलेशसंग्रहे स्फुटीकृतः।

॥ परापादितगुणदोषाभावयोः प्रमाहेतुत्वस्य निरासादिप्रतिज्ञा ॥

गुणदोषाभावान्वयव्यतिरेकयोरन्यथासिद्धिः साधयिष्यते। यदि तु ताव-न्मात्राधीना स्यात्; अप्रमापि प्रमैव भवेदित्यादिबाधक[1]तर्कश्च निरसिष्यते ॥

॥ प्रमाया अजन्यत्वशङ्कानिरासः ॥

विमता, न जन्या, प्रमात्वात्, ईश्वरप्रमावदिति तद्दृष्टान्तेनापतत्प्रसङ्ग-बाध इति चेत्, न; अपकर्षसमत्वात् ॥

यदाह भगवानक्षपादः—"साध्य-दृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चो-त्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः" इति ॥

॥ प्रत्यक्षादिषु धीहेत्वतिरिक्तेन्द्रियादिजन्यत्वेनेन्द्रियलिङ्गपरामर्शादीनां धीहेतुत्वनिरासः, तेन प्रत्यक्षादीनामिन्द्रियादिजन्यप्रत्यक्षत्वाद्याकारवतामपीन्द्रियजन्यत्वेन प्रामाण्यस्वत-स्त्वव्यवस्था, तत्र वा दी न्द्र मतान्यतमत्वनिर्वचननिरासश्च ॥

ननु[2][नहि]प्रत्यक्षादिव्यक्तया व्यभिचारः; तस्या धीहेत्वतिरिक्तेन्द्रियलिङ्ग-परामर्शादिप्रयुक्तत्वात्। तथाहि—इन्द्रियादीनां न धीसामग्र्यन्तर्भावः; विक-ल्पासहत्वात्। किमिन्द्रियादीनां मिलितानां धीहेतुत्वम्, प्रत्येकं वा। नाद्यः; तन्मेलनस्य क्वचिदपि ज्ञाने जनकत्वाभावात्। द्वितीये लिङ्गपरामर्शस्य तथात्वे प्रत्यक्षमज्ञानं स्यात्, इन्द्रियस्य तथात्वेऽनुमित्यादेरज्ञानत्वापातः ॥

---

अन्वयव्यतिरेकवतो गुणादेः कारणत्वकल्पनान्न गौरवम्, अत्राह—**गुणेति** ॥

स्पष्टबाधकाभावेऽपि दृष्टान्तावष्टम्भेनापत्तेः प्रसङ्गेन बाध इति शङ्कते—**विमतेति** ॥ पक्षे दृष्टान्तादिषु धर्मनिवृत्तिरूपत्वादपकर्षसमो जातिविशेष इति परि-हरति—**नेति** ॥ साध्य-दृष्टान्तयोः=धर्मि-दृष्टान्तयोः। धर्मि[र्मि]विकल्पादुत्कर्षा-पकर्षवर्ण्यावर्ण्यविकल्पसमाः, उभयसाध्यत्वात्साध्यसम इति विवेकः। प्रमात्वे सत्यपि धीहेत्वतिरिक्त[क्ता]प्रयुक्तत्वात्प्रत्यक्षादिव्यक्तौ व्यभिचार इति चोदयति—**नही[नन्विति]ति** ॥ इन्द्रियादीनां धीहेत्वन्तर्भावा[वो]न्न[ना]विवक्षिता[तः,] अत्राह—**तथाहीति** ॥

---

1. बाधकत्वं निरसिष्यते
2. कुण्डलितो भागो व्याख्यानुसारी

॥ इन्द्रियादीनां प्रत्यक्षत्वादिप्रयोजकत्वेऽपि न तत्तत्प्रमात्वप्रयोजकत्वमिति न प्रत्यक्षादौ व्यभिचारः ॥

न चान्यतमशब्दार्थानुगमः; बहूनामेकपृथक्करणार्थत्वात् तमप्प्रत्ययस्य। इन्द्रियान्यत्वे सति लिङ्गपरामर्शादिभ्यो यदन्यत्, तस्मादन्यत्वमन्यतमत्वमनुगतमिति वादीन्द्रस्याभिमान इति चेत्, न; अन्यत्वविशिष्टान्यत्वासिद्धेः, अन्यत्वस्य विशेषणविशेष्यत्वप्रसङ्गात्, स्वव्यतिरिक्तत्वप्रसङ्गाच्च, इन्द्रियलिङ्गपरामर्शादिकारणवैचित्र्ये कार्यज्ञानगतैकरूप्यस्याकस्मिकत्वपरिहारार्थमिन्द्रियादीनां प्रत्यक्षत्वादिविशेषे प्रयोजकत्वस्योरीकार्यत्वाच्च। भिन्नजातीयसामग्रीजन्यत्वेपि[ऽपि] विज्ञानत्वैकजातीयत्वे धूमस्यापि दहनादहनजन्यत्वे धूम[व]त्त्वाविरोधशङ्कायां आधारा[ग्नचा]धारे धूमदृश्वनो धूमध्वजानुमा[न?]ध्वंसमियात्। तस्मादात्मान्तःकरणसंयोगविशेषः कार्यविशेषानुमेयः, ज्ञानप्रागभावसहितो वा ज्ञानत्वप्रयोजक इति ॥

---

इन्द्रियलिङ्गपरामर्शादीनामन्यतमस्य धीहेतुत्वम्, अतो न विकल्पावकाशः, अत्राह—नचेति ॥ हेतुमाह—बहूनामिति ॥ अन्यत्वस्य प्रतियोगिनि सापेक्षत्वात्, अपेक्ष्यमाणप्रतियोगित्वेन सजातीयानामेव सम्बन्धाद्वा "बहूनां जातिपरिप्रश्ने डतमजि"ति स्मरणादित्यर्थः ॥

इन्द्रियान्यत्वे लिङ्गपरामर्शान्यत्वे वाक्यान्यत्वे[च]सति यदुपमानादन्यत्, तस्मादन्यत्वमन्यतमत्वमनुगतम्, इत्याह—इन्द्रियेति ॥ अन्यत्वेऽन्यत्वान्तरस्वीकारेऽनवस्थानादेकमेवान्यत्वम्, अतो विशिष्टानां विशेषणविशेष्यभावेऽन्यत्वस्य विशेषणविशेष्यत्वप्रसङ्ग इति दूषयति—नेति ॥ इन्द्रियादेर्यदन्यत् तस्मादन्यत्वमित्युक्तेऽन्यत्वविशिष्टस्य प्रतियोगित्वादन्यत्वविशिष्टस्यैव धर्मि[धी ?]त्वाच्च विशेषणस्यान्यत्वस्य स्वतोऽन्यत्वप्रसङ्ग इत्याह—स्वेति ॥

सामग्रीभेदाभेदयोः कार्यवैजात्यसाजात्यप्रयोजकत्वाद् ज्ञानत्वेनैकजातीयत्वेऽन्यदेव प्रयोजकम्; इन्द्रियादीनां प्रत्यक्षादिकार्यविशेषेषु प्रयोजकत्वाच्चेत्याह—इन्द्रियेति ॥ भागा[वा]न्तरं भणति—भिन्नेति ॥ गिरेरकृशानुमत्त्वे धूमवत्त्वमविरुद्धम्, अकृशानुप्रयुक्तस्यापि धूमजातीयत्वाविरोधादिति शङ्कया धूमं दृष्टवतो दहनानुमा न स्यादित्यर्थः। निर्हेतुकं तर्हि ज्ञानं स्यात्, आत्मान्तःकरणसंयोगस्य तत्प्रयोजकत्वे, सुखादेरपि धीत्वप्रसक्तेरिति शङ्कां निराकुर्वन्निगमयति—तस्मादिति ॥

॥ पूर्वोपन्यस्तस्य प्रत्यक्षादौ व्यभिचारस्य विकल्प्य परिहारः ॥

तदतिरिक्तेन्द्रियादिप्रयुक्तप्रत्यक्षादिना व्यभिचार इति चेत्, न; तत्र प्रत्यक्षत्वादिव्यञ्जकाकारे व्यभिचारः, आहो प्रमात्वव्यञ्जकाकारे। न प्रथमः ; तत्र हेतोरवृत्तेः। प्रमात्वव्यञ्जकत्वं हि प्रमात्वहेतूकृतम्। न च प्रत्यक्ष[1]त्वादिव्यञ्जकाकारस्यैव प्रमात्वव्यञ्जकत्वम्; मिलितस्य तस्यासंभवात्॥

कथं तर्हि प्रत्यक्षप्रमा, अनुमितिप्रमेति व्यपदेश इति चेत्; पृथिवी द्रव्यम्, सलिलं द्रव्यमितिवदिति ब्रूमः। तत्र गुणसमवायात् तथा व्यवहार इति चेत्, हन्तात्राप्यनवगततथाभूतार्थविषयत्वोपाध्यनुगमात्प्रमाव्यपदेशोपपत्तिः। न चरमः; तस्य पक्षत्वात्। न च—ईश्वरप्रमाया औपनिषदैरनङ्गीकारादन्यतराश्रयासिद्धमुदाहरणमिति—सांप्रतम्; "यः सर्वज्ञः सर्वविवित्" इति श्रुतिप्रसिद्धेश्वरधियोऽबाधितविषयाया अभ्युपगमात्। तस्या गुणत्वं स्वरूपत्वं वेति विवादान्तरम्। तत्सिद्धमुत्पत्तौ प्रमायाः स्वतस्त्वम्॥

॥ ज्ञप्तिप्रामाण्यस्वतस्त्वोपपादनम्, तत्रानुमाने दलप्रयोजनम्, तत्र ज्ञानत्वाद्युपाधिनिरासश्च ॥

तथा[कार्य]प्रमा, ज्ञानज्ञापकसामग्रीमात्रज्ञाप्या, धीकारणमात्रजन्यत्वात्;

---

प्रत्यक्षे[त्वे ?]प्रत्यक्षत्वं प्रमात्वं चास्त्येव, प्रमादावपि ; तेन तद्व्यञ्जकाकारभेदस्यावश्यकत्वात् विकल्पयति—तत्रेति॥ बुद्धेर्निरंशत्वादाकारभेदायोगात् प्रत्यक्षत्वादिव्यञ्जकस्यैव प्रमात्वव्यञ्जकत्वम्, अत्राह—न चेति॥

"नियामकाद्वि[ध्द्वि]भावानां कादाचित्कत्वस्य संभवः"॥

इति न्यायेन प्रमात्वादिनियामकाकारभेद इत्युक्तम्। तत्र सामानाधिकरण्येनाभेदव्यवहारो न स्यादिति शङ्कते—कथमिति॥ द्रव्यत्व-पृथिवीत्वादिव्यञ्जकाकारभेदेऽपि तद्व्यवहारवदित्याह—पृथिवीति॥ प्रमात्वव्यञ्जकाकार इति द्वितीयमपवदति—नेति॥ ईश्वरस्य स्वरूपज्ञानेन सार्वज्ञम्, न गुणभूतेन, अत्राह—तस्या इति॥ अनवगतभूतविषयमी[के]श्वरज्ञानस्य संप्रतिपन्नस्य दृष्टान्तत्वोपपत्तिः ; इतरथा सत्यमिथ्यात्वादिप्रकारविप्रतिपत्तिस्सर्वत्रेति न किञ्चिदुदाहरणं स्यादित्यर्थः॥

---

1. प्रत्यक्षदि क

धीवत् । न च कार्येतिविशेषणं व्यर्थम्; हेतोर्भागासिद्धिपरिहारार्थत्वात् । न च बाधसिद्धसाधनयोरन्यतरवारणार्थमेव पक्षविशेषणमिति [1]शक्यनियमम्; [2]वेदवाक्यम्, पौरुषेयम्, वाक्यत्वात्; कालिदासवाक्यवदित्यत्र वाक्यमिति पक्षविशेषणस्य सामादिभागेऽसिद्धिपरिहारार्थत्वेन षरैरङ्गीकारात् । न च ज्ञानत्वमुपाधिः; ज्ञानत्वसामान्ये साध्या[3]व्यापकत्वात् । विपक्षे कार्यस्य परानपेक्षत्वाभावप्रसङ्गो बाधकः, अनवस्था च वक्ष्येते । तदेवमुत्पत्तिज्ञप्त्योरनपेक्षत्वं प्रमितेः स्थितम् ॥

॥ नैयायिकानामुपक्रमे निर्दिष्टचतुर्दशस्वतस्त्वविकल्पतन्निरासयोर्भौत-
समत्वोपपादनम् ॥

*यत्पुनः किं स्वजन्यत्वमित्यादिविकल्पजालम्, किं तेन भौतविकल्पसमेन ?

॥ भौतद्विरदविकल्पकथादि ॥

तथाहि—केनचिद्भौतेन राजद्वारि द्विरदमालोक्य, विकल्पितम्—किमयमन्धकारो मूलकमत्ति, आहोस्विज्जलवहो वर्षति, गर्जति च, यद्वा बान्धवोऽयम्;

"राजद्वारि श्मशाने च यस्तिष्ठति स बान्धवः"

इति परमाचार्यवचनात्, यद्वा योऽयं भूमौ दृश्यते, तस्य छायेति । दूषितश्च—न [तत्र]प्रथमः; तस्य शूर्पयुगलप्रस्फोटनाभावात् । न द्वितीयः; तस्य स्तम्भचतुष्टयाभावात् । न तृतीयः; तस्य लकुट(ड)भूषणाभावात् । न चतुर्थः; तस्याः नरशिरः-

---

**कार्येति** ॥ पक्षविशेषणमिति शेषः । प्रमात्वे सति धीहेत्वतिरिक्ताजन्यत्वस्य हेत्वर्थत्वे प्रमामात्रं पक्ष इति द्रष्टव्यम् । परानपेक्ष[त्वा]भावप्रसङ्गः=धीहेतुमात्रजन्यत्वाभावप्रसङ्ग इत्यर्थः ॥

वस्तुतत्वासंस्पर्शित्वान्न निराकार्यत्वमित्यभिप्रायवानाह—**किं तेनेति** ॥ भूताविष्ठो[ष्टो]भौतः, पलाका[ल](?)वान् । धवलदन्तद्वयदर्शनादित्थमुत्प्रेक्षा । वर्षतीति प्रस्रवणदर्शनात्—**तस्या इति** ॥ भूमिष्ठपुरुषच्छाया(या)नरशिरसां शतस्योद्गिरणाभावादिति द्विरदपुरीषविसर्गदर्शनाद् दूषितः ॥

---

1. शक्यमिति नियमम्
2. वेदं पौरुषेयं
3. साध्ययापक

* पृ. 5 प. 4 पृ. 7 प. 7

शतोद्गिरणाभावात् । ततो न किञ्चिदेतत्—इति । किमेतावता द्विरदस्वरूपं निवर्तताम् ?

॥ भौतकथावैरूप्यं प्रमास्वतस्त्व-विकल्पतद्दूषणयोरिति शङ्कापरिहारौ ॥

यद्वा वरमेतत्साद्योऽयं न तत्साम्यमिति वादी द्वितीयो भौतः । न तत्साम्यं स्वतस्त्वस्य; अनिरुक्तेरिति चेत्; न, प्रमा[1]त्वे सति धीहेत्वरिक्ताजन्यत्वेन तन्निरुक्तेरुक्तत्वात् ॥

॥ इदं घटनिर्विकल्पकमिति प्रामाण्यपरतस्त्वसाधकप्रथमानुमाननिरासो विषयस्य धीहेतुत्वाभावेन ॥

*योऽयमाद्यः प्रयोगः इदं घटनिर्विकल्पकमित्यादिः, तत्र 'एतदि'ति विषयविशेषणम्, पक्षविशेषणं वा । आद्ये विषयातिरिक्ते'ति विशेषणवैयर्थ्यम्; अस्मन्मते प्रमाया विषयाजन्यत्वाद् धीसामग्र्यां विषयस्यानन्तर्भावात्, अनुमित्यादेरविषयजस्य ज्ञानत्वात्, परसमवेतक्रियाफलशालितामात्रेण प्रत्यक्षविषये कर्मत्वव्यवहारः । भवन्नयेऽपि विषयो न धीसामग्र्यां शक्यान्तर्भावः; चिरप्रणष्टघटादिस्मृतेरनर्थजत्वेनाज्ञानत्वापत्तेः । न चानुभवस्येव संस्कारद्वाराऽर्थस्य स्मृतिहेतुता; ज्ञानक्रियातिरिक्तस्य संस्कारानभ्युपगमात् ॥

---

एवं वादीन्द्रस्य बहु विकल्पयतो भौतसमत्वमभिधाय अन्तरेण विकल्पं प्रामाण्यमूरीकृत्य दूषणाय प्रवृत्त भूषणकारादेर्द्वितीयभौतसाम्यमाह—**यद्वेति** ॥

भूषणोक्तिविभागज्ञानाय विकल्पयति—**तत्रेति** ॥ एष चासौ विषयश्चेति कर्मधारये विषयविशेषणत्वम्, एतस्य विषय इति षष्ठीसमासे पक्षविशेषणत्वम् ॥ आद्ये अन्यतरन्व्यर्थविशेषणः पक्षाभास इत्याह—**आद्य इति** ॥ धीहेतुमात्राधीनत्वम्, अन्यूनानतिरिक्ततद्धेतुप्रयोज्यत्वम् । अतो धीसामग्र्येकदेशविषयजन्यत्वमेष्टव्यम्, अत्राह—**धीसामग्र्यामिति** ॥ जानातेः सकर्मकत्वात् प्रत्यक्षज्ञानविषये कर्मत्वं तवापि मतम्; कर्म[हि]कारकं क्रियायाः; तत्कथं तस्य तत्रानन्तर्भावः? अत्राह—**परेति** ॥ कर्मफलसुखादिशालिन्यात्मनि प्रसक्तिं वारयति—**क्रियेति** ॥ गमिक्रियाफलग्रामसंयोगशालिनि गन्तरि प्रसक्तिवारणायाह—**परसमवेतेति** ॥ सर्वाधीर्विषयजेति तार्किकमते प्रत्यर्थिनि कथमविषयजत्वं धियः? अत्राह—**भवन्नयेऽपीति** ।' **ज्ञानेति** ॥ काणाददर्शने त्रिविधः संस्कारः—स्थितस्थापकः, वेगः, भावनेति । तत्राद्यः क्रियाजः, चरमो ज्ञानज इत्यर्थः ॥

---

1. प्रमात्वेन प्रमात्वेसति

*पृ. प. 7 प. 8 पृ. 8 प. 12

॥ तत्र द्वितीयविकल्पतत्पदार्थदुर्वचत्वम् ॥

द्वितीय एतदिति परामृष्टधर्मिस्वरूपं साध्यस्य विशेषणम्[1], उपलक्षणं वा। प्रथमे स्वविशिष्टस्य स्वस्मिन् साध्यत्वेंऽशतः स्ववृत्तिविरोधः। चरम एतद्विषय उपलक्ष्यः, विषयमात्राकारो वा, घटाकारो वा। प्रथमे स्ववृत्तिविरोधस्तदवस्थः द्वितीये दोषाभावादेरपि विषयत्वाकारेणोपलक्ष्यकुक्षिनिक्षिप्तत्वाद् व्यतिरिक्तत्वविशेषणासिध्या विशिष्टसाध्यासिद्धिः। तृतीयेऽपि लक्ष्यमाणघटाकारादेतद्विषयस्य व्यतिरिक्तत्वसंभवेन विवक्षितासिद्धिः। एवं विकल्प्य विघटने म हा वि द्या[1] तपस्विनी विघटिता स्यादिति चेत्; नोच्चैर्वाच्यम्। यदि कोऽपि शृणोति, महदनिष्टं नः प्रकटीकृतं स्यात्, ईश्वरेच्छादीनामस्माभिः प्रमितिहेतुत्वानङ्गीकारात् तदतिरिक्तत्वविशेषणवैयर्थ्यापत्तिश्च ॥

॥ तत्र द्वितीयानुमानेऽपि विशेषणवैयर्थ्यसत्प्रतिपक्षादिदूषणम् ॥

*द्वितीयोऽपि प्रयोगो गदितावद्यैरेव नोपादेयः; समवायस्यास्माभिरनभ्युपगमात्, तदतिरिक्तत्वविशेषणवैयर्थ्याच्च। घटसविकल्पकम्, इतरव्यावर्तकघट-

---

धर्मिस्वरूपमुपलक्षणमिति पक्षेऽपि केनाकारेणोपलक्ष्यत्वमेतद्विषयाकारेण वा घटाकारेण वेति विकल्पयति—**चरम इति** ॥ आद्यमपवदति—**प्रथम इति** ॥ एतद्विषयस्य लक्ष्यत्वेऽप्येतस्य साध्यकोटिनिवेशात् स्ववृत्तिः, एकस्य लक्ष्यत्वं लक्षकत्वं चेत्यात्माश्रयोऽपीत्यर्थः ॥ प्रमाप्रयोजकत्वेनेष्टस्यापि विषयत्वाकारेण वा घटाकारेण वेति विकल्प्य लक्ष्यान्तर्गमात्तदतिरिक्तत्वासिध्याऽसंभव इत्याह—**द्वितीय इति** ॥ चरमं प्रत्याह—**तृतीयेऽपीति** ॥ घटमात्रस्य लक्ष्यत्वादेतद्विषयस्य तज्जनकतया प्रतिज्ञापर्यवसानाद्गुणादेः प्रमाप्रयोजकत्वासिद्धिरित्यर्थः ॥

सर्वमहाविद्यायामप्रसिद्धविशेषणतापरिहाराय पक्षेण साध्यविशेषणात् स्ववृत्त्यादिविरोधभिया सैव विलीना स्यादित्याह—**एवमिति** ॥

न वयं महाविद्यामाद्रियामहे, क्वचित्तद्वादिना तस्या निरवद्यत्वात्तद्बोधनाय प्रयोगः, न सिद्धान्तत्वेनेत्याशयवानाह—**नोच्चैरिति** ॥ **गदितावद्यैरिति** ॥ स्वविषय इति साध्यविशेषणं[ त्व ?]वेत्यादिविकल्पदोषैरित्यर्थः। **घटसविकल्पकमिति** ॥ तेन

---

1. महाविधक.
* प्र. प. 8-14 पृ. 9 प. 3

त्वादिव्यञ्जकधर्मोपलम्भ[क] स्वकारणदोषाभाव-स्वप्रागभाव-स्वप्रतिबन्धकाभावजन्यं न भवति; सविकल्पकत्वात्, अनुमानवदिति सत्प्रतिसाधनत्वाच्च। न च पटादिसविकल्पके व्यभिचारः; तस्यापि घटसविकल्पकविषयविशेषोपलम्भाद्य-जन्यत्वात्, तस्यैवात्र साध्यत्वात् ॥

॥ तत्र तृतीयानुमाने सिद्धसाधनादिदूषणम ॥

*तृतीयेऽपि प्रयोगे सिद्धसाधनता; अन्तःकरणादेरेवास्मत्समयेऽप्रमाज-नकत्वरहितत्वात्, विभ्रमादेरविद्याविवर्तस्यानिन्द्रियजत्वाङ्गीकारात् ॥

॥ तत्र तुरीयानुमानेऽपि सिद्धसाधनादिदूषणम् ॥

तुरीयेऽपि प्रयोगे (अ) प्रमाजन्य(नक)त्वरहितधर्मजन्ये'ति धर्मशब्देन परतन्त्रमीर्यते, अदृष्टं वा। पूर्वस्मिन्निन्द्रियसंप्रयोगस्य तथात्वात् सिद्धसाधनम्। द्वितीयेऽपि प्रमाजनकादृष्टव्यक्तेर्ज्ञानसामग्र्यामन्तर्भूताया एवाप्रमाजनकत्वरहितत्वात् सिद्धसाधनम् ॥

॥ तत्र प्रमासामान्यस्य तद्विशेषस्य वा विवक्षायां बाधव्यभिचारादिदूषणम् ॥

* अपिच प्रमामात्रपक्षीकरणे वेदजन्यप्रमाभागे बाधः, तदतिरिक्तपक्ष-विवक्षायां वेदजन्यप्रमायां व्यभिचारः। वेदार्थगोचरपरमेश्वरप्रमितिरेवातिरिक्तं कारणं तत्रापीति चेत्, न; वेदस्यापौरुषेयताया वक्ष्यमाणत्वात् ॥

॥ ज्ञप्तिपरस्त्वानुमाने प्रथमे द्वितीये च हेत्वाश्रयासिध्यादिदूषणम् ॥

* यदपि प्रमाज्ञप्तिपरतस्त्वेऽनुमानं प्रमात्वनिर्विकल्पकमित्यादि, तदपि ज्ञान-तत्प्रामाण्ययोः साक्षिवेद्यत्वोपगमेन प्रमात्वनिर्विकल्पकस्यैवासिध्या हेतोराश्रयासिध्या

---

तेनार्थान्तरतया प्रमास्वतस्त्वासिद्धिपरिहाराय तत्तदजन्यत्वविशेषणम्। पटादिसवि-कल्पकस्य **निषेधो**[विषयविशेषो]पलम्भादिजन्यत्वात्तद्व्यभिचारः, अत्राह—**नचेति** ॥ विभ्रमादेरिन्द्रियान्वयव्यतिरेकितया तत्कार्यत्वात्कथमन्तःकरणादेरतज्जनकत्वम्? अत्राह—**विभ्रमेति** ॥ इन्द्रियसंयोगानुविधानमधिष्ठानग्रहणेनान्यथासिद्धम्, अतः केवलाविद्याविलासत्वं विभ्रमादेः ख्यापयिष्यत इत्यर्थ* ॥

एवं प्रतिप्रयोगमसाधारणं दूषणमभिधाय साधारणमनन्तरप्रयोगद्वयस्याह—**अपिचेति** ॥ प्रमामात्रं पक्ष इति पक्षकक्षीकारेण शङ्कते—**वेदार्थेति** ॥

---

* पृ. 9 प. 5 पृ. 10 प. 3 * पृ. 10 प. 4 पृ. 11 प. 10.
* पृ. 11 प. 2 पृ. 12 प. 2.

* व्यक्तं चैतत् सिद्धान्तलेशसंग्रहे कवितार्किकचक्रवर्तिमतोपपादनावसरे।

च पराकरणीयम्। अनवस्थाप्रसङ्गो बाधकतर्को वक्ष्यते। ज्ञप्तिपरतस्त्वद्वितीयानुमानमप्यनया दिशा परास्यम् ॥

॥ अपरस्य परतस्त्वस्य वादीन्द्राभिमतस्य निरासः ॥

* यच्चावाचि—अप्रमाकारणाधिकरणत्वानधिकरणप्रमामात्रकरणवृत्तिजातिमज्जन्यत्वं परतस्त्वलक्षणम्—इति, तत्रेदं पृष्टो व्याचष्टाम्—अप्रमाकारणवृत्तित्वरहिता प्रमामात्रकारणे च या वर्तते जातिः तदधिकरणजन्यत्वं विवक्षितम्, उताप्रमाकारणस्याधिकरणत्वानधिकरणम्, अप्रमाकारणस्यानाश्रयः, प्रमामात्रकरणवृत्तिश्च या जातिः, तद्वता जन्यत्वम्। आद्ये प्रमामात्रकरणेति मात्रशब्देन सकलप्रमानुगतसाधारणरूपमीर्यते, आहो प्रमाविशेषस्यैव करणम्। आद्ये प्रमाजातीयजनकत्वे सत्यप्रमाया अजनकजातीयं यत्, तज्जन्यत्वमिति पर्यवसितोऽर्थः। तथाच ज्ञानेऽतिव्यापकं लक्षणम्; विभ्रमादेरविद्याविवर्तस्यानिन्द्रियजत्वस्याग्रे निवेदनीयत्वात्। द्वितीयेप्रमामात्रकारणजन्यत्वमुच्यताम्, कृतमितरविशेषणकलापेन। चरमे अप्रमाकारणं प्रत्यधिकरणजातेरभावेन व्यवच्छेद्याभावादप्रमाकारणाधि[1]करणानधिकरणविशेषणमनुपादेयं स्यात्॥

॥ तत्रैव तृतीयानुमाननिरासः ॥

*यद्प्यात्मत्वमित्याद्यनुमानम्, तन्मनस्त्वसिध्याऽर्थान्तरग्रस्तम्; मनसो-

---

प्रमात्वनिर्विकल्पकमित्यादेरनुमानात् ज्ञाप्तिपरतस्त्वसिद्धिः, अत्राह—**ज्ञाप्तिपरतस्त्वेति** ॥ **प्रमाविशेषस्यैवेति** ॥ प्रमात्वव्यञ्जकव्यक्तेरेवेत्यन्ययोगव्यवच्छेदो मात्रार्थ इत्यर्थः ॥

प्रथमकल्पस्य प्रथमकल्पं दूषयितुं पर्यवसितमर्थमाह—**आद्य इति** ॥ ज्ञानहेतोरिन्द्रियसन्निकर्षादेरप्रमाजनकत्वात् कथं ज्ञानेऽतिव्याप्तिः? अत्राह—**विभ्रमादेरिति** ॥ प्रमात्वव्यक्तेरेवजनकजातीयजन्यत्वमित्येतावतैव तवाभिमतधर्मविविशेषसिद्धेरप्रमेत्यादिविशेषणवैयर्थ्यम्, इत्याह—**द्वितीय इति** ॥ अप्रमाकारणस्यानाश्रय इति विशेषणेन तदधिकरणभूता जातिर्व्यवच्छेदनीया, सा च नास्तीति विशेषणवैयर्थ्यमेवाह—**चरम इति** ॥

---

1. धिकरणत्व क

* पृ. 12-प. 4.—पृ. 13 प. 4.

ऽस्मत्समये प्रमामात्रकारणत्वात् ,अप्रमाया अकारणत्वाच्च। दृष्टान्ते यत् संप्रतिपन्नं साध्यम्, न तत्र साध्यान्तरमस्ति ? अनवस्थानात् , इति तेन व्यभिचारश्चेति ॥

॥ कुसुमाञ्जलिकारस्य परतस्त्वसाधकानुमानान्तरनिरासः ॥

प्रमा , ज्ञानहेत्वतिरिक्तहेत्वधीना , कार्यत्वे सति तद्विशेषत्वात् ; अप्रमावदिति प्रयोगान्तरात् परतस्त्वमिति चेत् , न ; ज्ञानहेत्वतिरिक्ताधीनत्वसाधने साध्यपर्यवसानेन हेतुपदानर्थक्यात् ॥

॥ ज्ञानहेत्वतिरिक्तत्वदुर्वचत्वोपपादनम् ॥

किञ्च किं सर्वज्ञानहेत्वतिरिक्तत्वम् , किञ्चिज्ज्ञानहेत्वतिरिक्तत्वं वा , ज्ञानाजनकत्वं वा ? ज्ञानत्वनिरूप्यहेत्वन्यत्वं वा । न तावदाद्यः ; मनस्संयोगविशेषादिना सिद्धसाधनत्वात् । न ह्येकैकान्तःकरणसंयोगस्य सर्वज्ञानहेतुता । नापि द्वितीयः ; अत एव । नापि तृतीयः ; व्याघातात् , अन्त्यमुक्तिव्यतिरिक्तस्य सर्वस्यापि भवन्मते विशिष्टज्ञानजनकत्वात् । नापि तुरीयः ; ज्ञानत्वस्य नित्यस्य हेत्वनिरूपकत्वात् । तदुपगृहीतानित्यव्यक्तिनिरूप्यहेतुव्यतिरिक्ताधीनत्वं साध्यत इति

---

**मनस्त्वसिध्येति** ॥ मनस्त्वजातिसामक्ष[थ्री]व्यापिप्रतिज्ञापर्यवसानाद्विवक्षितधर्मविशेषजातेरसिद्धिरित्याशयः ॥ आत्मान्तःकरणसंयोगादेव प्रमाणाप्रमाणज्ञानजननात् कथं मनस्त्वेनार्थान्तरम् , अत्राह—**मनस इति** ॥ घटे यदुक्तजातीतरत्वं साध्यम् , न तत्र साध्यान्तरम् ; अनवस्थानात् , अस्ति च मेयत्वमिति व्यभिचारोऽपीत्याह—**दृष्टान्त इति** ॥

एवं वादीन्द्रोदितप्रयोगव्रातमपाकृत्य **कुसुमाञ्जलि** गतप्रयोगमुपन्यस्यति—**प्रमेति** ॥ ज्ञानहेत्वधीनत्वेन सिद्धसाधनत्वं व्यासेधति—**ज्ञानहेत्वतिरिक्तेति** ॥

ईश्वरप्रमायाम् , ज्ञानमात्रे च व्यभिचारवारणार्थं क्रमेण हेतुविशेषणम् । यदि परित्यज्य हेतुपदं प्रयुज्यते , तदा ज्ञानहेत्वतिरिक्तत्वविशेषणं दुर्वचमित्यापादयितुं विकल्पयति—**किञ्चेति** ॥ एकैकान्तःकरणसंयोगस्य सर्वज्ञानहे[तु]त्वाभावात् , किञ्चिज्ज्ञानहेतुत्वात्तेनैव सिद्धसाधनत्वान्न द्वितीयोऽपीत्याह—**नापीति** ॥

ज्ञानत्वनिरूप्यहेत्वभावात्तदतिरिक्तत्वविशेषणासंभव इत्यभिहितदूषणपरिजिहीर्षयाऽभिप्रायविशेषमाशङ्कते—**तदुपगृहीतेति** ॥ धीनिरूप्यहेत्वतिरिक्ताधीनत्वमित्यत्रापि मनस्संयोगस्यैकैकस्य सर्वज्ञानहेतुत्वाभावात्तेनैव सिद्धसाधनमित्याह—

चेत्, न; तथापि मनस्संयोगविशेषादिना सिद्धसाधनात्, प्रमाया ज्ञानत्वेन तद्धेतूनां ज्ञानहेत्वतिरिक्तत्वासंभवेन व्याघाताच्च ॥

॥ ज्ञप्तेः प्रामाण्यपरतस्त्वानुमानान्तरोपपादनम्, तन्निरासश्च ॥

ननु--प्रमा, प्रमाऽप्रमासाधारणज्ञानसामान्यहेत्वधिकहेत्वधीना, कार्यत्वे सति ज्ञानविशेषत्वात्; अप्रमावदिति। व्याप्तिद्वयमत्राभिसंहितम्। (यो यत्कार्यविशेषः, स तत्सामान्यहेत्वतिरिक्तहेत्वधीनः) यथा कलमाङ्कुरम्। न ह्यङ्कुरविशेषः कलमाङ्कुरोऽङ्कुरसामान्यहेतोर्बीजादेव भवति, किन्तु तद्विशेषात्, कार्यविशेषश्चायम्—येयं प्रमा नाम, इत्येका सामान्यव्याप्तिः। अपरा च—यो ज्ञानविशेषः, स ज्ञानसामान्यहेत्वतिरिक्तहेतुमान्, यथा प्रमेति विशेषव्याप्तिरिति। अत्र द्रव्यविशेषस्याकाशादेः, ज्ञानविशेषस्य चेश्वरप्रमाया नित्यत्वाद्धेत्वपेक्षैव नास्ति, दूरे तत्तत्सामान्यहेत्वतिरिक्तहेत्वधीनत्वम्, ततश्च तद्विशेषत्वमनैकान्तिकं मा भूदित्युक्तम्—**कार्यत्वे सतीति वरदराजो** व्याचकारेति—चेत्,

॥ प्रमाया धीमात्रहेतुत्वेऽन्वयव्यतिरेकाभावः, अप्रमाया दोषस्य हेतोरन्वयव्यतिरेकौ, दोषस्य गुणनिरासद्वारा नान्यथासिद्धिश्च ॥

अहो बतास्य दुश्शिक्षाप्रकर्ष एषा व्याख्या यदयं व्याघातपरिहारपर्येषणाकातरतातरलितान्तःकरणः प्रमाया धीमात्रकारणान्वयव्यतिरेकविरोधं न पर्यालोच-

---

**तथापीति** ॥ प्रागीरितविकल्पदूषणयोरत्रापि तुल्यत्वं द्रष्टव्यम्। किञ्च ज्ञानप्रमाव्यक्त्योरभेदः, भेदो वाऽस्त्येवेति[अन्त्ये]हेत्वसिद्धिः; ज्ञानत्वाधिकरणत्वे सति तदपरजातिमतः तद्विशेषत्वात्, आद्ये व्याघात इत्याह—**प्रमाया इति** ॥

व्याघातविघाताय यथैतदनुमानं **व र द रा जे न** व्याकृतम्, तथोपन्यस्यति—**प्रमेति** ॥ प्रमाप्रमयोः साधारणं यत् सामान्यम् ज्ञानमात्रस्य कारणम्, तदतिरिक्ताधीनेति निर्वाच्यम्। सामान्यतो दृष्टं दृष्टं चेत्तदा संपद्यत इति दर्शयितुं व्याप्तिद्वयमाह—**व्याप्तीति** ॥ सामान्यतो दृष्टत्वे तद्विशेषत्वादिति हेतोर्गगनादौ व्यभिचारः, अदृष्टत्वे ज्ञानविशेषत्वादिति हेतोरीश्वरप्रमायाम्, तदुभयव्यावृत्त्यर्थं कार्यत्वविशेषणमित्यभिसन्धायाह—**अत्रेति** ॥

धीकारणमात्रान्वयव्यतिरेकानुविधानविरोधोऽतिरिक्ताधीनसाधन इत्यभिसन्धि सोपहासमाह—**अहो इति** ॥ यद्यपि धीहेत्वनुविधानमस्ति; तथापि तस्यैवानु-

-यते । तन्मात्रान्वयव्यतिरेकित्वमसिद्धम् ; प्रमाप्रागभावस्यान्वयव्यतिरेकवत्त्वादिति चेत्, न तावत्प्रागभावस्य प्रमायामन्वयः ; सति तस्मिन् तदनुदयात्, स्वप्रागभावाभावः स्वमेवेति प्रागभावाभावे स्वाभाव इति व्यतिरेकोऽपि दुर्भणः । अतो न प्रागभावस्य कार्यहेतुत्वात [म्] । गुणदोषाभावयोरेवान्वयव्यतिरेकौ दोषापसरण[द्वारा] प्रमायामिति चेत् ; समाहितमनसोऽत्र विदाङ्कुर्वन्तु—तयोः किं विरोधिनिरासद्वारेण प्रमायां सन्निधानम्, उत कारणतयेति । किमत्र विचार्यम् ? कारणतयैवेति निरूपितत्वात्, अपरथा दोषस्याप्यप्रमाविरोधिगुणापसरणद्वारेणान्यथासिद्धसन्निधानस्याप्रमायामकारणत्वेन तस्या अपि स्वतस्त्वापत्तेरिति चेत्, न ; अस्मत्सिद्धान्ते तस्या धि[धी]करणाजन्यत्वेन तदप्रसङ्गात् ॥

॥ धीमात्रहेतुप्रयुक्तत्वे प्रामाण्यस्य परमत इव सिद्धान्ते न स्मृतिप्रामाण्यापत्तिः ॥

यदि च दोषाभाव-गुणरूपाधि[दि]कमासाद्य भवन्ती ज्ञानव्यक्तिः प्रमा स्यात् ; स्मृतिरपि तर्हि प्रमैव स्यात् । अस्ति हि तत्रापि भवन्नये धीहेतुः ; अन्यथा सा धीरपि न स्यात् । न च तत्र दोषः । गुणश्च धातुसाम्यादिलक्षणोऽस्त्येव । तस्माद्दोषाभावगुणसहकृतधीसामग्री प्रमामुत्पादयतीति मते दुर्वारः स्मृतेरपि प्रमात्वापातः । धीमात्रहेतुप्रयुक्तत्वेऽपि प्रमायाः स एवायं पर्यनुयोग इति चेत्, न ; वेदान्तसिद्धान्ते स्मृतेरपि भ्रमसंशयवद् *अविद्याविवर्तत्वोपगमेन प्रमात्वप्रसङ्गपरि-

---

विधानमसिद्धमिति शङ्कते—**तन्मात्रेति** ॥ प्रागभाववतएवोत्पत्तिधर्मकत्वात्सोऽपि कार्यहेतुरिति तार्किकमतं प्रमाणासत्त्वेन निरस्यति—**न तावदिति** ॥ अन्यथासिद्धौ तदन्वयव्यतिरेकाविति मत्वाह—**समाहितेति** ॥ उक्तान्यथासिद्धिं प्रतिबन्द्या परिहर्तुकाम आह—**किमत्रेति** ॥ अप्रमायाः स्वतस्त्वं साध्यते, [परतस्त्वमार]आपाद्यते वा । नाद्यः;अपसिद्धान्तात्, न द्वितीयः; आपादकानिरूपणादित्याह—**नेति** ॥ न तावद्दोषाजन्यत्वमापादकम् ; कलशादौ व्यभिचारात् । न सिद्धहेतुमात्रजत्वम्, असिद्धेरित्यर्थः । गुणादेरन्यथासिद्धि[द्ध]संनिधित्वादप्रयोजकत्वमुक्त्वाऽतिव्यापकत्वाच्च तदाह—**यदीति** ॥ स्मृतेः केवलसंस्कारजत्वान्न धीहेतुजत्वम्, अत्राह—**अस्तीति** ॥

अनवगतपराभिसन्धिः प्रतिबन्दीं गृह्णाति—**धीमात्रेति** ॥ स्मृतेरपि प्रमात्वं न साध्यम् ; अपसिद्धान्तात्, नाप्यापाद्यम् ; आपादकासिद्धेरिति परिहरति—**वेदान्तेति** ॥

---

* स्मृतेरप्यविद्यमानार्थविषयकत्वेन स्मृतिरूपत्वात् परत्र पूर्वदृष्टावभासत्वाच्च भ्रमवत् स्मर्यमाणांशे स्मृतौ चाविद्याविवर्तत्वमिति भावः ।

हारात् । यैः पुनरनुभवसंस्कारसहकृतान्तःकरणात्ममनस्संयोगप्रसुतत्वं स्मृतेः स्वीक्रियते, तेषामात्मप्रत्यभिज्ञावत् स्मृतेरपि प्रामाण्यप्रसङ्गः । तत्सिद्धमेतद्गुणदोषाभावयोः स्मृताविवेतरत्रापि प्रमायामप्रयोजकत्वाद् धीमात्रकारणान्वयव्यतिरेकाविरोधः प्रमाणस्येति ॥

॥ अप्रमाया वेदान्तसिद्धान्ते न धीत्वम्, अतो धीहेतुजन्यत्वं नाप्रमाया इति न तस्या अपि स्वतस्त्वम् ॥

ज्ञानविशेषत्वमपि ज्ञानत्वव्यञ्जकव्यक्तित्वम्, उत ज्ञानत्वन्यूनवृत्तिजात्यधिकरणत्वम् । आद्येऽसिद्धिः । न हि प्रमैव ज्ञानत्वव्यञ्जिका ; भवतोऽपि भ्रमप्रभृतेः प्रमात्वापातात् । द्वितीयेऽन्यतरासिद्धो हेतुः ; अस्माकं ज्ञानत्वप्रमात्वयोस्तुल्यवृत्तित्वात्, प्रमात्वस्यानवगतयथार्थत्वौपाधिकधर्मत्वात् तुल्यवृत्तित्वमविरुद्धम् । दृष्टान्तश्चास्माकं साधनविकलः ॥

॥ अप्रमाया ज्ञानत्वाभावादि ॥

अप्रमाया ज्ञानविशेषत्वाभावे ज्ञानपूर्विका चेतनप्रवृत्तिरिति नियमविरोध इति चेत्, न ; यतो ज्ञानाभासे ज्ञानत्वारोपेण प्रवृत्त्यविरोधः ख्यातिनिरूपणे

---

अन्तःकरणस्यात्मना संयोगो पा[वा]सनाविशिष्टः स्मृतिहेतुः, अतोऽसिद्धमविद्याविलासत्वम्, अत्राह—**यैरिति** ॥ प्रमाणज्ञानम्, न दोषाभावादिजन्यम्, धीत्वात्; स्मृतिवदिति[परसिद्धेन ?]परं बोधयन्निगमयति—**तदिति** ॥ प्रमाया एव ज्ञानत्वव्यञ्जकत्वे विरोधानुपलम्भाद् नासिद्धो हेतुरित्याशङ्क्य, भवन्नयेऽस्ति विरोध इत्याह—**न हीत्यादिना** ॥

ज्ञानत्वस्य प्रमाप्रमासाधारण्यात् कथमन्यतरासिद्धिः? अत्राह—**अस्माकमिति** ॥ प्रमात्वज्ञानत्वयोरन्यूनानतिरिक्तवृत्तित्वे तुल्यव्यक्तित्वं जातिबाधकं स्यादिति, अत्राह—**प्रमात्वस्येति** ॥

विभ्रमादौ ज्ञानाभासे ज्ञानत्वाभावात्साधनविकलो दृष्टान्त इत्युक्तम्, तत्र ज्ञानेच्छाप्रवृत्तीनां कार्यकारणभावनियमव्याकोपः स्यादिति शङ्कते—**[अ]प्रमाया इति** ॥ परिहरति—**नेति** ॥ प्रवृत्तेर्ज्ञानपूर्वक[त्व]मात्रं नियतम्, न त्वनाभासज्ञानपूर्व-

ख्यापयिष्यते । कार्यप्रमा, धीमात्रहेतुप्रयुक्ता, तन्मात्रान्वयव्यतिरेकित्वात्; धीवदिति सत्प्रतिपक्षश्च प्रकृतहेतुः । [1]विपक्षेऽपि न बाधकं पश्यामः । यदि तु तावन्[द्धी]मात्राधीना भवेद्, अप्रमापि प्रमैव भवेदित्यभिहितो बाधक इति चेत्, न; तस्यापादकासिद्धया परिहृतत्वात् ॥

॥ संशयानुपपत्त्या प्रामाण्यपरतस्त्वानुमानस्य व्यभिचारेण दूषणम् ॥

*यो हि [योऽपि]—प्रामाण्यम्, परतो ज्ञायते, अनभ्यासदशायां सांशयिकत्वात्; अप्रामाण्यवदिति प्रयोगः, सोऽपि मन्दिरमध्यनिहितधननिचयं चैत्रोऽद्राक्षीत्, नो वेति मैत्रस्य सन्देहगोचर(चैत्रनिष्ठधनगोचर)प्रतीतावनैकान्तिकः, संप्रतिपन्नज्ञानज्ञापकादेव प्रामाण्यज्ञप्त्युपपत्तौ ज्ञापकान्तरकल्पनागौरवप्रसङ्गस्य[श्च] वि[2]पक्षे बाधकः ॥

॥ प्रामाण्यग्रहणस्य परतस्त्वमेव, अन्यथा संशयायोगः, इति महापूर्वपक्षः ॥

अथ अभिधित्सोर्ज्ञानज्ञापकादेव प्रामाण्यज्ञप्तिरयुक्ता; प्रमाऽप्रमयोर्विवेकस्याशक्यत्वात् । ज्ञानग्राहकेण यत्र प्रमात्वं गृह्यते, सैव प्रमा; यत्र न गृह्यते, सा त्वप्रमेति विवेचनं शक्यमिति चेत्, न; प्रमात्वग्रहणं हि न [3]यथार्थत्वैकनियतं न प्रमायामेव व्यवस्थितम्, अप्रमायामपि प्रमात्वाभिमानात् । यदि

---

कत्वमपि; अतिरेकात् । (त्रि)भ्रमादेरविद्यानिवर्तत्वप्रतिपादनेन ख्यातिनिरूपणेऽर्थादेतत् ज्ञापयिष्यत इत्यर्थः । ज्ञानहेत्वतिरिक्तहेत्वधीनत्वं मा भूत्, भवतु ज्ञानविशेषत्वम्, एवं च बाधकाभावादप्रयोजकतेत्याह—**विपक्षेऽपीति** ॥ कुसुमाञ्जलावेव कल्पितोऽत्र विपक्षे बाधक इत्याह—**यदीति** ॥

तत्रैवोक्तं ज्ञप्तिपरतस्त्वानुमानमनुवदति—**योऽपीति** ॥ परसमवेतज्ञानस्य परसन्देहगोचर[त्व ?]विज्ञानज्ञापकव्यतिरिक्तज्ञेयत्वाभावात् तेन व्यभिचरतीत्याह—**सोऽपीति** ॥ स्वसन्देहगोचरत्वं विवक्षितमिति चेत्, न; बाल्यावस्थायां मयेदमनुभूतं न वेति स्वीयसन्देहगोचरानुभवेनैव व्यभिचारात् । ज्ञानज्ञापकसामग्रीमात्रात्प्रमाज्ञप्त्युपपत्तावतिरिक्तज्ञाप्यत्वकल्पनेन गौरवमिति ॥

शङ्कते—(अ) **तथेति** ॥ ज्ञप्तिस्वतस्त्वे प्रमाऽप्रमयोर्दुर्विवेचत्वापत्तेरितिहेतुमाह—**प्रमेति** ॥ प्रमायामेव प्रमात्वग्रहणम्, नाप्रमायामिति नियमसिद्धौ

---

1. स्वपक्षेपि
2. पक्षे
3. तथार्थे

* पृ. 24 प. 2 पृ. 24 प. 5

ध्वरजते रजतज्ञानमिति कदाचिदपि नाभिमन्येत, ततो रजतार्थी शुक्तौ न प्रवर्तेत। ततो ज्ञानग्राहकस्य व्यभिचारित्वात्, तस्य कथञ्चित् प्रामाण्यग्राहकत्वेऽपि तत्प्रमायामेव प्रमात्वं गृह्णाति ,, नाप्रमायामित्येवंरूपनियमहेतोरभावात् कुतः प्रमाणमेवेदं ज्ञानमिति [ते] निश्चयः। मा भूद् निश्चयः; तत्स्फुरणमात्रादेव व्यवहारः सेत्स्यतीति चेत्, न; प्रमात्वनिश्चयस्य मृग्यमाणत्वात् ॥

**॥ अप्रामाण्यशङ्कानिवर्तनार्थं परापेक्षा, न निश्चयार्थमिति सिद्धान्तिशङ्का, प्रामाण्यनिश्चायकमन्तरेण शङ्कानिवृत्त्ययोग इति महापूर्वपक्षिण उत्तरं च ॥**

ननु—ज्ञानग्राहकं तावत् प्रामाण्यपि गृह्णाति , तस्य तु क्वचिदप्रमायामपि प्रमात्वोपदर्शनेन व्यभिचारितया तदुपदर्शितज्ञानस्याप्रामाण्यशङ्कामात्रं स्यात्, तन्निवर्तने च ज्ञानग्राहकोपदर्शितमेव प्रामाण्यं निश्चितं स्यात्। अतः प्रामाण्यनिश्चयार्थमपि न परापेक्षेति—चेत्, न; प्रामाण्यनिश्चायकत्वमन्तरेण (अ)प्रामाण्य-

---

विवेकसिद्धिः, नियम एव तु न सिद्ध इत्याह—**नेतीति** ॥ त[य]थार्थत्वैकनियतमित्येतद्व्यनक्ति—**न प्रमायामेवेति** ॥ यद् यथा प्रतीयते, तत्तथैवेत्युत्सर्गन्यायात् प्रमात्वग्रहः स्यादेव नियत इति, अत्राह—**यदीति** ॥ *एवकारो भिन्नक्रमः। अ[ना] रजते रजतज्ञानं रजत एव रजतज्ञानमिति अप्रमायामति[पि]प्रमात्वग्राहकत्वात् ज्ञापकं यद्यपि प्रमात्वंव्यभिचारि; तथापि तज्ज्ञापकत्वमविरुद्धम्; व्यभिचारिणोऽपि प्रमेयत्वादेरनित्यत्वादिज्ञानदर्शनात्, अत्राह—**त इति** ॥ व्यभिचारिणः समानहेतुतया सन्देहहेतुत्वादित्यर्थः । क्व[?]च्यादिवद् सन्देहादपि व्यवहारोपपत्तेः किं तन्निश्चयेनेत्याह—**मा भूदिति** ॥ प्रतिज्ञाहान्या परिहरति—**नेति** ॥

ज्ञानज्ञापकमात्रज्ञाप्यत्वं प्रकृतम्, तदपरित्यागे कुतः प्रतिज्ञाहानिरिति चोदयति—**नन्विति** ॥ तथापि तन्निश्चयासिद्धिदोषो दुष्परिहर एव, अत आह—**तस्येति** ॥ शङ्काविरोधादेव तर्हि निश्चयासिद्धिः, अत्राह—**तन्निवर्तने चेति** ॥ कारणदोषभावादिधिया शङ्कानिवृत्तावित्यर्थः । विशेषादर्शनेन प्रसूतसन्देहस्य तद्दर्शननिरसनीयत्वादप्रामाण्यशङ्कानिरसनाय प्रामाण्यनिश्चयो वाच्य इति परिहरति—**नेति** ॥ ज्ञानज्ञापकस्य व्यभिचारितया शङ्कानिवर्तकत्वानुपपत्तौ तदतिरिक्तो[क्तेन]

---

*प्रमाणमेवेदं ज्ञानमिति निश्चय इति=इदं ज्ञानमेव प्रमाणमिति कुतो निश्चय इति योजना।

शङ्कानिवर्तकत्वायोगात् , ज्ञानग्राहकव्यतिरिक्तेनाप्रामाण्यशङ्कानिवृत्त्यभ्युपगमे परतः प्रामाण्यनिश्चयापत्तेः । तथाहि— ज्ञानग्राहकव्यतिरिक्तमपि प्रमाणं ज्ञानप्रामाण्यनिश्चायकम् , न वा । न चेत् , शङ्का न निवर्तेत ; अप्रामाण्यशङ्कायाः प्रामाण्यनिश्चयेनैव निवर्तनीयत्वात् । तन्निश्चायकत्वे पारलौकिकप्रवृत्त्यौपयिकः प्रामाण्यनिश्चयः स्वतो [1]न स्यात् ।

॥ प्रामाण्यस्फुरणमात्रं स्वतः, तन्निश्चयस्तु परत इति सिद्धान्त्येकदेशिपूर्वपक्षः, अर्थतथात्वानुसन्धानस्यैव प्रामाण्यात् , स्फुरणमात्रस्यातथात्वान्न प्रामाण्यस्वतस्त्वमिति महापूर्वपक्षः ॥

ननु—मा भून्निश्चयः, ज्ञानग्राहकेण ज्ञानवत्तत्प्रामाण्यस्यापि स्म[स्फु]रणमात्रं तावदस्तु , तावतैव स्वतः प्रामाण्यं सिद्धं स्यात्—इति , नैतत्साधु ; पारलौकिकप्रवृत्त्यौपयिकस्य तस्याप्रयोजकत्वात् , तदौपयिकस्य तु वेदप्रामाण्यनिश्चयस्य परतस्त्वव्यवस्थानात् स्वत एव तत्स्फुरणेऽपि न काचित् क्षतिः । न च स्फुरणमात्रमप्यनुभवस्य सतः ; अर्थ[: ?] तथात्वोपधानं हि ज्ञानस्य प्रामाण्यम् , न त्वर्थमात्रो-

---

तन्निवृत्त्या परतस्त्वापत्तिरित्याह—**ज्ञानेति** ॥ अतिरिक्तप्रमाणस्याप्रामाण्यशङ्कानिवृत्तिमात्रकरत्वात् कुतः परतस्त्वमिति ? अतस्तदुपपादयितुं विकल्पयति—**तथाहीति** ॥ प्रामाण्यनिश्चयस्यावश्यकत्वे कारणमाह—**पारलौकिकेति** ॥ स्वर्गादिसाधनज्योतिष्टोमाद्यनुष्ठानोपायभूत इत्यर्थः ॥

प्रामाण्यनिश्चायकप्रमाणान्तरस्य शङ्कानिवर्तकस्यास्वीकरणान्न परतस्त्वापत्तिरिति चोदयति—**नन्विति** ॥ ज्ञानज्ञापकमात्रेण ज्ञेयत्वं प्रामाण्यस्य ज्ञप्ति[: ?] स्वतस्त्वलक्षणम् , न निश्चयत्वमित्याशयः ॥ अगृहीतपराभिसन्धेश्चोद्यमभिसन्धिमुद्घाटयन् उत्पाटयति—**नैतदिति** ॥ **स्वत एव तत्स्फुरणेऽपि**=ज्ञानज्ञापकादेव प्रामाण्यप्रतीतावपि । **न कदा[काचित्]त् क्षतिः** ॥ परतस्त्व इत्यर्थः । स्वतोऽस्फुरणस्फुटीकरणाय प्रामाण्यस्वरूपमीरयति—**अनुभवस्येति** ॥ **अर्थतथात्वोपधानम्**= विषयस्य पारमार्थिकत्वौपाधिकम् । वचनक्रियाप(व)गमव्यतिरेके वाचकत्वावगमव्यतिरेकात् औपाधिकोपगमाङ्गतयोपाध्यवगमोऽङ्गीकार्यः । स च परत एवेत्या-

---

1. न्स्यात् ।

पधानम्, तथात्वं चार्थस्यारोपितत्वव्यावर्तकवक्रकोटरादिविशेषणाषानुसन्धानादेमेव। ग्राहकेण चार्थमात्रमनुसन्धीयते, न तु तथात्वव्यवस्थापको विशेषोऽपि। अतः कथं स्वतः प्रामाण्यग्रहणम्?

॥ प्रमाणस्यैव स्वतो ज्ञानस्य मन आदिना ग्रहणेन प्रामाण्यस्वतस्त्वशङ्का-
तत्परिहारात्मको महापूर्वपक्षः, यत्रानभ्यासदशायां प्रामाण्यानु-
मानप्रवृत्तिसामर्थ्येन, अन्यत्र तु प्रमाणजातीयत्वेन तदुपसंहारः॥

ननु—यदर्थविषयं ज्ञानं तत्त्वतः प्रमाणमेव सद् मनसा वा प्राकट्येन वा लिङ्गेन प्रमाणतया [प्रमात्रा] गृह्यते, तत्र विशेषोऽप्यनुसन्धीयत एव; अन्यथा कथमस्याव्यभिचारः—इति, मैवम्; भूयोदर्शनात्पूर्वं प्रवृत्तौ ज्ञानेन प्रमात्रा विशेषाननुसन्धानात्, प्राथमिकज्ञानेनापि विषयगतविवक्षितविशेषग्रहेऽनभ्यासदशापन्नविषये प्राथमिकज्ञानेनापि प्रामाण्यसंशयो न स्यात्। भूयोदर्शनविषयीकृतेऽर्थेऽपि लक्षणादिविशेषानुसन्धानम्, यद् लक्षणसहचरितलक्ष्यज्ञानजातीयम्, न तद् व्यभिचारीत्यादिरूपव्याप्तिस्मरणबलेनैवोपजायमानत्वात् ज्ञानग्राहकव्यतिरिक्ततज्जातीयत्वादिलिङ्गपरा-

---

शयवानाह—**तथात्वं चेति**॥ पुरुषाद्यारोपवि[रो]धिनोऽधिष्ठानविशेषस्य वक्रकोटरत्वादेरन्य[नु]था(नु)सा[सन]धनात्तथात्वमनुसन्धीयत इत्यर्थः॥

तथात्वव्यवस्थापकविशेषोऽपि ज्ञापकविषय इति चोदयति—**नन्विति**॥ '**मनसा वे**'ति काणादैकदेशिमतोपन्यासः; वा दीन द्वादिना प्रामाण्यस्य मानसत्वोपगमात्। विशेषाननुसन्धाने तथार्थत्वमेव न स्यादित्याह—**अन्यथेति**॥ विषयगतविशेषः सत्तयैवाव्यभिचारप्रयोजकः, न तु स्वतो ज्ञायमानतयेत्याह—**मैवमिति**॥ ज्ञानेन=प्राकट्यो[ट्ये]न प्रमात्रा[=आ]त्मसंयुक्तमनसेत्यर्थः। हेतुसिद्धिमुद्धरति—**प्राथमिकेति**॥ प्राथमिकज्ञानेन=तद्ग्राहकेणापीत्यर्थः॥

अभ्यासदशापन्नज्ञानविषयगतविवक्षितविशेषस्य ज्ञानज्ञापकमात्रेण ग्रहणात् तद्व्यवस्थापिततथात्वोपधानप्रामाण्ये स्वतस्त्वसिद्धिः, अत्राह—**भूयोदर्शनेति**॥

**लक्षणादीति**॥ लक्षणवैधर्म्यरूपविशेषानुसन्धानम्=ज्ञानग्राहकाद्व्यतिरिक्तं यत्, तज्जातीयत्वादिलिङ्गम्, तत्परामर्शरूपतयाऽवतिष्ठते। **तज्जातीयत्वादिति**॥ सविशेषार्थज्ञानजातीयत्वात्, समर्थप्रवृत्तिहेतुज्ञानजातीयत्वाच्चेत्यर्थः। लक्षणेन=व्यावर्तकविशेषेण, सहचरितम्=[अवि]नाभूतम्, लक्ष्यम् = लक्षणसहचरितलक्ष्यम्,

मर्शरूपतयाऽवतिष्ठते, इति परत एव प्रामाण्यग्रहणमवशिष्यते। तथाहि— अनभ्यासदशापन्नेषु प्रवृत्तिसामर्थ्यात् प्रामाण्यानुमानम्, अभ्यासदशापन्नेषु तु तज्जातीयत्वात्। तज्जातीयत्वं च प्रवृत्तिसामर्थ्यावधृतप्रामाण्यज्ञानेन तुल्यजातीयत्वम्। तच्चाव्यभिचारिपरोपाधिधर्मयोगत्वं शङ्खगतशौक्ल्यज्ञानत्वादिवदिति। यथाभिधत्ते बौद्धाधिकारे[बोद्धधिकारः]—"नापि स्वग्राहकेण; विवेचनानुपपत्तेः। न हि प्रमाणग्रहणं यथार्थत्वैकनियतम्; अप्रमाणेऽपि प्रमाणाभिमानात्, अन्यथा विपर्ययादप्रवृत्तिप्रसङ्गात्। अतो यदि प्रामाण्यमापाततः स्फुरेदपि; तथापि नियतहेतोरभावात् प्रमाणमेवेदमिति निश्चयः कुतः? स च मृग्यते; पारलौकिकव्यवहाराङ्गत्वात्। शङ्कानिवर्तनेन तदप्रत्यूहं निश्चितमेवेति चेत्, निवृत्तिरेव[1] कुतः? प्रमाणान्तरादिति चेत्, तदपि (निश्चय)फलम्, अन्यथा वेति। अन्यथात्वे न शङ्काविच्छेदः; निश्चयसाध्यत्वात्तस्य। निश्चयफलत्वे तु यो मृग्यते, नासौ स्वतः" इति। स्फुरणमात्रमपि तावदस्तु स्वत इति चेत्, किं तेन? नच तदपि; अननुसंहितोपाधेरुपहितप्रत्ययायोगात्। न च विषयोपधा[नं] प्रामाण्यम्; तदा-

---

तस्य ज्ञानम्। "तज्जातीयमि[ति]। 'इत्यादिव्याप्ती" त्यात्राप्यादिपदेन समर्थप्रवृत्तिजनकज्ञानजातीयं यत्, त[न्न]व्यभिचारीति व्याप्तिसङ्ग्रहः। तज्जातीयत्वादिलिङ्गपरामर्शरूपतयेत्येतदुपपादयति—**तथाहीति** ॥ **प्रवृत्तिसामर्थ्यादिति** ॥ प्रवृत्तेः फलपर्यन्तत्वादित्यर्थः। यदाह **भाष्यकारः**—'सामर्थ्यं पुनरस्य फलेनाभिसम्बन्धः" इति। विमतम्, प्रमाणम्, समर्थप्रवृत्तिजनकत्वात्; व्यतिरेकेण प्रमाणाभासवदित्यनुमानम्। **तज्जातीयत्वात्** ॥ प्रामाण्यानुमानमित्यनुषङ्गः ॥ ज्ञानत्वादीनां तुल्यजातीयत्वं प्रमाणाभासस्याप्यस्तीति, अत आह—**तच्चेति** ॥ अव्यभिचारी= अविनाभूतो विशेषः। परः=अर्थसमवायी। उपाधिः=निमित्तम्, तद्विशिष्टविषयत्वधर्माधिकरणत्वम्। उदाहरति—**शङ्खेति** ॥ शङ्खशौक्ल्या[क्ल्यम्, अ]व्याभिचारि, तद्विशिष्टशौक्ल्यज्ञानत्वं यथेत्यर्थः ॥ ज्ञानग्राहकादेव प्रामाण्यज्ञप्तिरयुक्तेत्यारभ्य यदभिहितम्, तत्सर्वमपि **बौद्धाधिकारे** प्रतिपादितमित्यभिसन्धाय तद्वचनमुदाहरति—**यथेति** ॥

साहसिकस्य भावः=साहसिक्यम्, तत् प्रकटयति—**यदयमिति** ॥ **कुतश्चिदिति** ॥ ज्ञानग्राहकस्य प्रमाणाप्रमाणसाधारणत्वादुपजाततदप्रामाण्यसन्देहस्य

---

1. निवृत्तेरेवेति

भाससाधारण्यात्, अपि त्वनुभवस्य सतो भूतार्थतोपधानम्। न चार्थानुसन्धानेऽपि तस्य भूतत्वमनुसन्धीयते; अरोपितत्वव्यावर्तकविशेषाननुसन्धानात्; अनुसंहितस्य चारोपितत्वसाधारण्यात्। क्वचिद्विशेषोऽप्यनुसन्धीयत इति चेत्, न; क्वापि प्राथमिके न; अन्यथाऽनभ्यासदशायां तत्रापि संशयो न स्यात्। अभ्यासदशापन्नेऽप्यनुसन्धानं व्याप्तिग्रहजनितसंस्कारप्रभवस्मरणबलेन भवेत् (भवत्प्र)माणान्तरशरीरे प्रविशति, इति परत एवावशिष्यत इति॥

॥ पूर्वोक्तमहापूर्वपक्षनिरासेन महासिद्धान्तोपपादनम्॥

अत्रोच्यते:—चित्रमस्य साहसिक्यम्—यदयं ज्ञानज्ञापकादेव तत्प्रामाण्यज्ञाने कुतश्चिदुपजाततदप्रामाण्यसन्देहस्य दोषाभावादिनिश्चयेन निवृत्तौ, ज्ञानज्ञापकोपदर्शितप्रामाण्यनिश्चयोपपत्तौ[च]प्रमाप्रमाविवेचनमशक्यं मन्यते। इदमपरं साहसिक्यम्—यदमुं?[यं]तत्र वेदजन्यवेदनस्यापि प्रामाण्यनिश्चयं पारलौकिकप्रवृत्त्यौपयिकं वक्तृ[कर्तृ] गुणनिश्चयाधीनं प्रार्थयते॥

॥ अनभ्यासदशायां प्रामाण्यसंशयानुपपत्तिशङ्का-तत्समाधाने दोषसत्त्व-तदभावनिबन्धने॥

यदप्युदितम्—वेदनग्राहिप्राथमिकदर्शनेन विवक्षितविषयगतविशेषस्फुरणेऽनभ्यासदशापन्नविषये क्वापि संशयो न स्यात्—इति, तन्मन्दम्; यत्र दोषसत्त्वम्, तत्र विशेषास्फुरणे साधारणधर्ममात्रस्फुरणात् संशयः, यत्र पुनर्दोषासत्त्वम्, तत्र विशे[1]षस्फुरणपुरस्सरविषयतथात्वोपधानं प्रामाण्यनिश्चय इत्यविरोधात्॥

---

कारणदोषाभावगुणयोरप्रामाण्यविरोधिनोर्निश्चयेन निवृत्तावित्यर्थः॥ **वक्तृ[कर्तृ] गुणनिश्चयाधीनं प्रार्थ्य [र्थय] त इति**॥ यथार्थोपलब्ध्य[ब्ध्या]विरचितत्वनिश्चयायत्तं मन्यत इत्यर्थ। चोद्यस्य तुच्छत्वमुपपादयति — **तन्नेति**॥ यस्मिन् ज्ञाने दोषसत्त्वम्=विषयदोषस्य दूरत्वसूक्ष्मत्वादेः सद्भावः। विशेषास्फुरणे = भूतार्थोपधानाग्रहणे [धर्मिमात्रस्फुरणात्] प्रमाणाप्रमाणसाधारणधर्मज्ञानस्वरूपमात्रग्रहणादित्यर्थः। दोषाभावात् प्रामाण्यनिश्चयात् परतस्त्वमिति चेत्, न; दोषाभावसन्निधानस्य प्रामाण्यनिश्चयविरोध्या[ध्य]भावविषयतयाऽन्यथासिद्धत्वात्। दूरत्वादे-

---

1. विवक्षितविषयगतविशेष 2. षास्फुरण। ख

॥ विशेषादर्शनातिरिक्तदोषस्य स्थाण्वादिस्थलोदाहरणपूर्वकं प्रतिपादनम् ॥

विशेषादर्शनातिरिक्तो न दोषस्तत्रेति चेत्; न; सन्देहप्रयोजकविवेकास्फुरणस्य स्वातिरिक्तदोषाविनाभावस्य स्थाण्वादिसन्देहप्रयोजकविशेषादर्शने निश्चयेनात्रापि तत्कल्पनात्। यदि हि दोषान्तरादि[वि]नाभावो नाभ्युपेयते, कथं तवाप्यालोकाभावे रूपित्व-क्रियवत्त्वारोपः—कृष्णं तमो गच्छति, छायेति? अभावेऽन्योन्याभाववैधर्म्यभेदाभावेन स्वरूपस्य भेदतया[अ]भावग्रहे सत्यारोपविरोधिभेदग्रहप्रसङ्गात्। तदुक्तं **बौद्धाधिकारे**—"तत्राभावस्य प्रथम[न]मात्रम्; अभावान्तरधर्मान्तराभावादि"ति ॥

॥ अनभ्यासदशायाम्, अन्यदा वाऽनुमानात्प्रामाण्यग्रहणमिति पूर्वपक्षनिरासोऽनवस्थापत्त्या ॥

यदभ्यधायि—भूयोदर्शनविषयीकृतेऽर्थेऽपीत्यादि, तत्रेदमुपतिष्ठते—अनभ्यासदशापन्नेषु [1](प्रामाण्यनिश्चये सत्यभ्यासदशापन्नेषु) न तद् व्यभिचारीति व्याप्तिस्मरणं स्यात्। अनभ्यासदशापन्नस्य[अ]व्यभिचारित्वनिश्चयः कुतः? इदं ज्ञानम्, अव्यभिचारि, [2](समेऽर्थ[समर्थ]प्रवृत्ति)जनकत्वात्; व्यतिरेकेण प्रमाणाभासवदिति व्यतिरेकेणेति चेत्, न; यन्नोक्तसाध्यम्, न तदुक्तसाधनम्; यथा प्रमाणाभास इति व्याप्तेरप्रमितौ हेतुरूपवैकल्यादनुमानुदयात्, प्रमितौ कुत एतत्प्र[3]मात्वमव[वा]धारि?

---

दोषत्वं मन्वानः शङ्कते—**विशेषेति** ॥ विमतम्, दोषाविनाभूतम्, सन्देहहेतुविशेषादर्शनवत्त्वात्, संमतवदिति परिहरति—**नेति** ॥

विपक्षबाधकेन व्याप्तिं द्रढयति—**यदीति** ॥ विवेकास्फुरणात्तत्र तदारोपः किं न स्यात्? अत्राह—**अभाव इति** ॥ वैधर्म्यान्योन्याभावभेदाभावमुदयनोक्त्योपपादयति—**तदुक्तमिति** ॥ स्वरूपम्, वैधर्म्यम्, अन्योन्याभावश्च, त्रितयमपि यथायथं भेदः, तत्राभावस्य प्रथनमात्रम्, स्वरूपं भेदः, अन्योन्याभाववैधर्म्ययोरभावात्; द्रव्यादिषु तृती(त्रित)यमपि भेदः, सामान्यादौ वैधर्म्याभावादन्योन्यभावः स्वरूपं चेति द्वयमेव भेद इत्युक्तमित्यर्थः ॥

व्यतिरेकव्याप्तिरप्रमिता, प्रमित्वा(ता वा)। (आद्ये)ऽसिद्धो हेत्वाभासः स्यादिति, अत आह—**नेति** ॥ द्वितीयमपवदति—**प्रमिताविति** ॥ व्याप्तिप्रमायां प्रमात्वमनुमानादवधृतम्, मानान्तराद्वा कुतोऽपीत्यर्थः ॥

---

1. कुण्डलाङ्कितो भागो नास्ति क
2. समर्थप्राप्तिवृत्ति
3. प्रमात्वमेवाधारि

अनुमानेनैव व्याप्तिज्ञानस्य प्रमात्वावधारणेऽनवस्थानात् । माऽवधारि प्रमात्वम्, ओ[को]ष्ठगत्या प्रमितिः सेति चेत्, को ब्रूते प्रमितिः सेति? अप्रमैव किं न स्यात्? कदाचिदप्यनिश्चितप्रमात्वस्य सत्त्वानुपपत्तेः, तन्निश्चये चानवस्थानात् ॥

॥ प्रवृत्तिसामर्थ्येन प्रामाण्यावगमोऽनभ्यासदशायामिति नानवस्थेति शङ्का, तत्रापि दृष्टान्तापेक्षणादनवस्थातादवस्थ्यमिति तत्परिहारश्च ॥

ननु—नानवस्था; प्रवृत्तिसामर्थ्येनार्थभूतत्वमवगम्य, तदुपाधिकस्य प्रामाण्यस्य ज्ञानग्राहकेणैव प्रतीतेः । तदुक्तम्—"प्रमाणतोऽर्थप्रतीतौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणमि"ति चेत्, मैवम्; "प्रवृत्तिसामर्थ्येनार्थ[1] तथात्वावगम्य[म]स्यानुमानिकत्वात्, तथा[त्रा]पि दृष्टान्तान्तरगवेषणा(याम)नवस्थानात् । तदेवमनभ्यासदशापन्न [2](ज्ञान-प्रामाण्यानिश्चयाद्, अभ्यासदशापन्न)ज्ञानप्रामाण्यानुमानं दृष्टान्तं नो(दृष्टान्ताभावान्नो) देतुमलम् ॥

किञ्च इदम्, प्रमाणम्, यथार्थैकनियतजातीयत्वात्; गुणवत्कारणजन्यज्ञानत्वाद्वा; संप्रतिपन्नज्ञानवत्, इत्यनुमाम[ने]ज्ञानप्रामाण्यनिश्चायकानुमानान्तरापेक्षायामनवस्था । अ[अत्रा]नुमित्य[ति]प्रामाण्यस्यावश्यज्ञेयत्वाभावान्नानवस्था,

---

व्याप्तिप्रमायाः प्रमात्वावधारणप्रयुक्तावनवस्थापरिहारं शङ्कते—**माधवादिरिति [माऽवधारी]ति** ॥ **कोष्ठगत्या** = वस्तुस्थित्या ॥

संप्रति प्रमात्वावधारणमूरीकृत्यानवस्थापरिहारं शङ्कते—**नन्विति** ॥ **अर्थभूतत्वम्** = विषयतथात्वम् । समर्थप्रवृत्त्याऽर्थभूतत्वमवगम्य तदुपाधिकं प्रामाण्यं समर्थप्रवृत्तिफलकत्वलिङ्गापेक्षं मनसा गृह्यते, यथा घटादिज्ञानेषु, तथा व्याप्तिज्ञानेऽपि व्यवहाराविसंवादापेक्षमनसेत्यर्थः ॥

उदिते[तं]तदीयवचनमुदाहरति—**तदुक्तमिति** ॥ **प्रमाणतः** = वस्तुतः प्रमाणज्ञानात् । **अर्थवत्प्रमाणमिति** ॥ अर्थस्य भूतत्वमिव तदुपाधिकं प्र[प्रा]माण[ण्य]मपि प्रतीयत इत्यर्थः ॥ **दृष्टान्तान्तरेति** ॥ दृष्टान्तज्ञानप्रामाण्यार्थं दृष्टान्तान्तरम्, तत्राप्येवमित्यनवस्थानादित्यर्थः ॥

अभ्यासदशापन्नज्ञानप्रामाण्यानुमानेऽप्यनवस्थामाह—**किञ्चेति** ॥ **संप्रतिपन्नवदिति** ॥ अनभ्यासदशापन्नज्ञानवदित्यर्थः । अर्थज्ञानप्रामाण्यमपि तर्हि न

---

1. अर्थभूत 2. कुण्डलाङ्कितो नास्ति क

जिज्ञासितस्यव ज्ञेयत्वोपगमादिति चेत्, नेदमपि पेशलम्; अनुमितिप्रामाण्यस्यानिश्चये सत्त्वानुपपत्तेः, तदनुपपत्तौ विषयज्ञानप्रामाण्यानुपपत्तिः। सत्यां जिज्ञासायां तदपि कदाचित् प्रमास्यत इति चेत्, न; जिज्ञासा हि ज्ञातुमिच्छा। इच्छा च ज्ञानकार्यत्वादज्ञाते न संभविनी, इति जिज्ञासोपपत्तयेऽनुमानप्रामाण्यं प्रागेव ज्ञेयम्, इति तज्ज्ञापकानुमानान्तरस्याप्येतत्तुल्यन्यायतया कथं नानवस्था? जिज्ञासितस्य वेद्यत्वे, तदैव वेद्यत्वापातात् तत्प्रामाण्य[1]परम्परापत्तिः, तदैवावेद्यत्वे न कदाचित्; अविशेषात्, इति तदसिद्धौ तद्विषयवेदनप्रामाण्यासिद्धिरेव स्यात्। तदेवं ज्ञप्तिपरतस्त्वेऽनवस्थाप्रसङ्गबाधोऽपीति ॥

॥ उत्पत्तौ प्रामाण्यपरतस्त्वसमर्थननिरासः, चक्षुरादिप्रमाणधर्मस्य तस्य धीमात्रकरणातिरिक्ताजन्यत्वात् ॥

* यत् पुनः—प्रामाण्यं परतो भवतीत्यादि, तत्र भणामः। प्रामाण्यस्य

---

ज्ञेयम्[अ]विशेषात्, अत्राह—**जिज्ञासितस्येति** ॥ ज्ञानप्रामाण्यानुमानस्य प्रामाण्यस्याज्ञेयत्वे तदसिद्धिरेवेति दूषयति—**नेदमिति** ॥ तथाप्यर्थज्ञानप्रामाण्यादेव व्यवहारसिद्धिः, आत्राह—**तदनुपपत्ताविति** ॥ तदैवावेद्यत्वेप्यन्यदा वेद्यत्वान्न तदसत्त्वमिति शङ्कते—**सद्य[त्या]मिति** ॥ अनवस्थां स्थापयितुं जिज्ञासार्थं दर्शयन् परिहरति—**नेति** ॥ जिज्ञासानिदानज्ञानमूलतया प्रागपि तद्गोचरमनुमानान्तरमस्तु, तावता नानवस्थेति, अत्राह—**अत्रेति** ॥ **तज्ज्ञापकमिति** ॥ जिज्ञासितस्यैव ज्ञेयत्वोपगमादिति यदुक्तम्, तत्र भङ्गं फणति—**जिज्ञासितस्येति** ॥ विषयज्ञानप्रामाण्यस्य, तदनुमानप्रामाण्यस्य वा जिज्ञासितस्य ज्ञेयत्वे प्रत्यक्षेतरप्रामाण्यस्य ज्ञातस्यैव विषयसाधकत्वात्, तत्तत्साधकज्ञानप्रामाण्यार्थमनुमानपरम्परापत्तिरित्यर्थः। विषयवेदनप्रामाण्यप्रतीतिसमसमयं तदनुमानप्रामाण्यप्रतीत्यनङ्गीकारे बाधमभिधत्ते—**तदैवेति** ॥ **अविशेषादिति** ॥ जिज्ञासाभावाभावविशेषासभवस्याभिहितत्वादिति भावः। तस्य=अनुमानस्य विषयः। आद्यम्=प्राथमिकं विषयवेदनम्, तस्य प्रामाण्यासिद्धिरित्यर्थः ॥ उदयनमतनिरसनमुपसंहरति—**तदेवमिति** ॥ सम्यगनुभवसाधनत्वमिन्द्रियादिसमवेतं प्रामाण्यं पक्षीकृत्य परतस्त्वं साध्यम्, उत प्राकट्यजननसामर्थ्यरूपं ज्ञानगतमिति विकल्प्य प्रथमं प्रत्याह—

---

1. अनुमानपरम्परा

* पृ. 13. प. 4.–पृ. 13–पृ. 12

भवत्सिद्धान्ते(अ)बाधितानुभवसाधनत्वरूपस्य चक्षुरादिधर्मत्वात् तस्य धीमात्र-कारणादतिरिक्ततो भवनसाधने सिद्धसाधनता; विशिष्टबोधजनकस्य चक्षुरादेरेव प्रमाणत्वादिति भवतैवाभिहितत्वात् ॥

॥ ज्ञानधर्मप्रमात्वरूपप्रामाण्यस्य परतस्त्वनिरासयुक्तय:, तत्रापि परतस्त्वंदुर्वचत्वोपपादनं च ॥

अथ पराभिमतवेदनाधिकरणप्रामाण्याङ्गीकरणेन परत एवोत्पत्तिप्रसक्तिरिति परमतम्, तदापि परत इति कोऽर्थ:—यदि स्वव्यतिरिक्तादिति,[1][तर्हि]सर्वस्यापि कार्यस्य स्वव्यतिरिक्तादेव कारणात् संभवाभ्युपगमात् सिद्धसाध्यता। अथ सम्यग्बोधसाधारणकारणातिरिक्तादित्यर्थ:, तत्रापि वाच्यम्—किमतिरिक्तादेव? किं वाऽतिरिक्तसहितसाधारणकारणगणादिति? प्रथमेऽपसिद्धान्त:; केवल-गुणानामेव प्रामाण्यनिर्णये कारणत्वानङ्गीकरणात्। दृष्टान्तोऽपि साध्य-विकल:। अथ द्वितीय:, तदापि प्रामाण्योत्पत्तौ तदाश्रयभूतबोधस्य बोधसाधारण-कारणातिरिक्तस्य कारणत्वाभ्युपगमात् सिद्धसाध्यता, घटादिना व्यभिचारश्च, तस्यातिरिक्तसहित[बोधसहिता]साधारणकारणजन्यत्वाभावेऽप्यभूत्वा भावित्वात् ॥

॥ वासुदेवाभिमतपरतस्त्वनिरुक्तिनिरास: ॥

यदपि **वासुदेवो**ऽवादीत्—परतोऽपि भवतीति बोधसाधारणकारणाद् बोधातिरिक्तसाहिताज्जन्यत इत्यर्थ:। प्रयोगस्तु—प्रमितित्वम्, सम्यङ्मिथ्याबोध-साधारणकारणाद्बोधातिरिक्तसहितात् जन्यते, [1](प्रयोगस्तुप्रमिवित्व) बोध-धर्मि[र्मि]त्वे सत्यभूत्वा भावित्वात्; अप्रमितित्ववत् – इति, तदहृद्यम्; प्रमिति-

---

**प्रामाण्यस्येति** ॥ करणधर्म: प्रामाण्यमित्यत्र भूषणकारभणितमेव भणति—**विशिष्टेति** ॥—

कल्पान्तरमालम्बते—**(अ)थेति** ॥ परशब्द: प्रामाण्यातिरिक्तवचन:, धीमात्रहेत्वतिरिक्तवचनो वेति विकल्पयति—**तदेति** ॥ **दृष्टान्तोऽपीति** ॥ अप्रा-माण्यस्य केवलदोषजन्यत्वाभावादिति भाव: ॥

भूषणे भाषितदोषविघातायाभिहितशिक्षाप्रकारमनुभाषते—**यदपीति** ॥ कथं प्रयोक्तव्यम्, अत्र ह—**प्रयोगस्त्विति** ॥ बोधेन सिद्धसाध्यतां वाद(र)यति—**बोध-धर्मत्व इति** ॥ ज्ञानत्वेन व्यभिचारं वारयति—**अभूत्वेति** ॥ प्रामाण्यस्यौपा-धिकसामान्यस्य नित्यत्वेन हेत्वसिध्या दूषयति--**तदिति** ॥ पुरस्ताद् भट्टदृष्टिमवष्टभ्य

---

1. कुण्डलितो भागो खपुस्तके नास्ति ।

त्वस्य नित्यत्वाद् हेत्वसिद्धेः, अनित्यत्वे जायमानप्रमितित्वाश्रयबोधस्य समवायिकारणतया द्रव्यत्वप्रसङ्गात् । साधनविकलश्च दृष्टान्तः; [अ]प्रमितित्वस्याबोधधर्मत्वात् । प्रामाण्यमसाधारणकारणकमिति साध्यविवक्षायां निर्विशेषणोऽपि हेतुर्न व्यभिचरतीति चेत्, न; सिद्धसाधनात्, तत्सामग्र्यास्तदसाधारण्यात् ॥

॥ न्या य म ञ्ज र्यभिमतपरतस्त्वनिरुक्ति-प्रामाण्यपरतस्त्वानुमानोभयनिरासः ॥

यदपि **न्या य म ञ्ज र्यामीरितम्**—द्विविधं कार्यं भवति—सम्यक्, असम्यक् च । तत्र गुणवता कारकेण सम्यक्कार्यमुत्पाद्यते, दोषवता त्वसम्यक् ।

"निर्दोषं निर्गुणं वापि न समस्त्येव कारकम् ।
अत एव तृतीयस्य न कार्यस्यास्ति संभवः" ॥

इति । सम्यग्ज्ञानोत्पादकम्, स्वरूपव्यतिरिक्तस्वगतधर्मसापेक्षकार्योत्पादकम्, कारकत्वात्; मिथ्याज्ञानोत्पादकवत्, सम्यग्ज्ञानं वा, स्वरूपातिरिक्तस्वधर्मसम्बन्धिकारकनिष्पाद्यम्, कार्यत्वात्; मिथ्याज्ञानवत्—इति, तदसारम्; स्वगतो हि धर्मो गुण

---

सिद्धसाधनत्वमभिहितमिति न विरोधः । नित्यत्वमेव कुत इति? अत आह—**अनित्यत्व इति** ॥ द्रव्यस्यैव कार्यसमवायि(कारण)त्वमिति भवदभ्युपगमादिति भावः ॥

भू ष णानुमानस्यैव भावान्तरं शङ्कते—**प्रामाण्यमिति** ॥ **निर्विशेषणोऽपीति** ॥ [बोध]धर्मत्वविशेषणहीनोऽपीति यावत् । गुणदोषविहीनोऽपि किं न कार्यं कुर्यादिति? अत्राह—**निर्दोषमिति** ॥ सदोषं वा सगुणं वा कारकम्, निर्दोषं निर्गुणमपि कारकं न समस्ति, कुत एतत्? अत्राह—**अत एवेति** ॥ यदि गुणदोषविहीनमपि कारकं स्यात्, तर्हि कार्येणापि सम्यगसम्यग्व्यतिरिक्तेन भाव्यम्, न भवति च; ततो ज्ञायते—गुणदोषविहीनकारकासत्त्वमित्यर्थः ॥

एवं नियममापाद्य प्रकृते प्रयुङ्क्ते—**सर्वमिति** ॥ **[सम्यगिति]** ॥ घटाद्युत्पादकभागे सिद्धसाधकत्वं व्यासेधति—**ज्ञानोत्पादकमिति** ॥ मिथ्याधीहेतुं व्यवर्तयति—**सम्यगिति** ॥ दिक्कालादिना सिद्धसाधनत्वनिवृत्तये—**धर्मेति** ॥ अदृष्टेन तथात्वं वारयति—**स्वगतेति** ॥ प्रयोगान्तरमाह—**सम्यग् ज्ञानं वेति** ॥ सव्यभिचारत्वमीरयितुं धर्मपदार्थमाह—**स्वगतो हीति** ॥ न च दोषाभाव एव गुणः; तस्यान्यथासिद्धेरुक्तत्वात्, दोषप्रध्वंसस्य च कार्यस्यापि तत्परत्वाभावात् । नापि

एव भवतो विवक्षितः, तस्यापि कार्यत्वात् तज्जनने गुणान्तरापेक्षायामनवस्थानात्, अनपेक्षायां तदुत्पादकरूपे कारकत्वहेतोर्व्यभिचारात्, कार्यत्वहेतोरपि तत एव गुणेन व्यभिचारात् ॥

॥ विज्ञानपरतस्त्वानुमानान्तरनिरासः ॥

यदपि कश्चिदवोचत्—विवादाध्यासितानि विज्ञानानि, कारणगुणाधीनप्रामाण्यानि, प्रमाणज्ञानत्वात्; शब्दाधीनप्रामाण्यज्ञानवत्—इति, तदचारु; पक्षस्याप्रसिद्धविशेषणत्वात्, दृष्टान्तस्य च साध्यवैकल्यात्, हेतोरप्यन्यतरव्यर्थविशेष्यत्वात् ॥

॥ अप्रामाण्यस्यापि परतस्त्वायोगापत्तिशङ्का-तत्परिहारौ, प्रमाणाप्रमाणविवेकाभावश्च ॥

यदपि—सोऽप्रामाण्येऽप्यविशिष्ट इति—रटितम्, तन्न घटामटति; उत्पत्तौ परतस्त्वे प्रमाणाभावेन, लाघवन्यायेन च निरपेक्षत्वे स्थिते, कार्येऽपि विषयानवगमनिवृत्तिरूपे निरपेक्षत्वं लाघवादेव भवितुमर्हतीति भट्टपठितदृष्टान्ताभिधानम्, न पुनस्तदभिप्रेतं प्रमाणकार्यमर्थप्राकट्यमभिप्रेत्य, अप्रमाणस्य तु विषयानवगमजन्मनो न तन्निवर्तकत्वम्, इति कथमवैशिष्ट्यम्?

॥ निरपेक्षत्वस्य घटादावप्यसिद्धिरिति प्रामाण्यसाम्यस्याकिञ्चित्करत्वम् ॥

यत्तूक्तम्—घटस्यापि संयोगाद्यपेक्षत्वान्निरपेक्षत्वमसिद्धम्—इति, तदपि निद्रातुरचेतसा प्रलपितम्। यतः प्रामाण्यस्य स्वकार्ये स्वजनकतत्प्रतीतिनैरपेक्ष्य-

---

नित्यो गुणो भावरूपोऽनित्ये संभवति। नापि परम्परयाऽऽरम्भकपरमाणुसमवायी; तथा सति तदारब्धकार्याणां गुणपरत्वमेवेति दोषाभावप्रसङ्गादिति भावः ॥

**कन्दलीका**रानुमानं वदति—**यदपीति** ॥ विवादाध्यासितानि शब्दजविज्ञानेतराणि, कारणगुणजन्यप्रामाण्यानि*। चक्षुरादौ भ्रमे च व्यभिचारवारणाय हेतुविशेषणम्। आप्तगुणाधीनप्रामाण्यं शब्दज्ञानमित्यभिसन्धिः। वेदस्यापौंतन्त्र्ताया वक्ष्यमाणत्[वात् अ]प्रसिद्धविशेषणत्वादिना दूषयति—**तदिति** ॥

अघटत्वमेव घटयति—**उत्पत्तौ परतस्त्व इति** ॥ धीहेतुमात्रजत्वे लाघवेनोत्पत्तिस्वतस्त्वे सिद्धे [धी]गोचरानवगमविगमरूपफलेऽपि नैरपेक्ष्यं लाघवाद्देव सिद्धमिति परोदितदृष्टान्तोदाहरणम्, न तु तदभिमतप्राकट्यरूपं कार्यमभ्यु-

---

*पृ. 13, प. 13–पृ. 14, प. 7

साध्यांशसाम्ये सति दृष्टान्ते वैधर्म्यान्तरमप्रयोजकम्, सर्वसाम्ये तद्भङ्गप्रसङ्गश्च ॥

॥ ज्ञेयत्वेन ज्ञानत्वेन वा ज्ञानपरतस्त्वानुमाननिरासः ॥

*योऽपि—प्रामाण्यम्, परतो ज्ञायते,ज्ञेयत्वादिति प्रयोगः, तत्र ज्ञानेन व्यभिचारः। ज्ञानधर्मत्वे सतीति हेतुविशेषणे, ज्ञानत्वे व्यभिचारः। अथ परतो ज्ञायत इति—बोधत्वादन्यतो वेद्य इत्यर्थः, तदाऽपि [स्वप्न] ज्ञानम्, (स) विषयम्, बोधत्वात्, घटादिबोधवदित्यनुमानसाध्यार्थेन व्यभिचारः। तस्य ज्ञेयत्वेऽपि बोधत्वात्, अन्यतो वेद्यत्वाभावात् ॥

॥ उत्सर्गापवादाभ्यां प्रामाण्यव्यवस्थया बोधात्मकत्वस्य भ्रमसाधारण्येऽप्यक्षतिः ॥

*यदपि बोधात्मकत्वस्य (अ)प्रामाण्येऽपि भावादप्रमायां प्रमात्वप्रसञ्जनम्, तदस्माकमिष्टमेव ; उत्सर्गापवादाभ्यां प्रामाण्याप्रामाण्यव्यवस्थासिद्धेः। तथाहि[अर्थ] परिच्छित्तिरेव प्रमाणकार्यम्। सा पुनरुपजायमानैव न सन्देहादिदूषिततनुरुपलभ्यते,

---

पगम्य, तत्र नैरपेक्ष्ये दृष्टान्तोऽभिधीयत इत्यर्थः ॥ हेतुमाह—**यत इति** ॥ प्रमा स्वकार्यजनने स्वहेतुं तत्प्रतीतिं वा नापेक्षते, इत्येतावन्मात्रं साध्यदृष्टान्तेऽनुगतम्, सर्वसाम्यं नापेक्षितमित्यर्थः। ज्ञानव्यक्तेर्ज्ञेयत्वेऽपि ज्ञानज्ञापकव्यतिरिक्त-

ज्ञेयत्वाभावाद्व्यभिचार इत्याह—**तत्रेति** ॥ ज्ञानाभासव्यभिचारवारणायाभिप्रायं शङ्कते—**अथेति** ॥ ज्ञानप्रामाण्यं बोधत्वेन ज्ञायत इति दर्शननिरसनाय बोधत्वव्यतिरिक्तेन ज्ञेयत्वं साध्यम्, अतो न व्यभिचार ; ज्ञानादेर्बोधक[?]त्वातिरिक्तप्राकट्यादीनां ज्ञेयत्वादित्यर्थः। स्वप्नज्ञानस्य सविषयत्वं बोधत्वातिरिक्ता[त्व]न्न ज्ञायत इति तेन व्यभिचार इति दूषयति—**तद[दा]पीति** ॥

अप्रमायां प्रामाण्यप्रसक्तौ प्रमाणाप्रमाणविवेको न स्यात्, अत्राह—**उत्सर्गेति** ॥ औत्सर्गिकं प्रामाण्यं दर्शयितुं प्रमाणकार्यमाह—**तथाहीति** ॥ यद् यथा भाति, तत्तथैवेत्युत्सर्गमुदीर्य पुंप्रवृत्तेरपि प्रमाणपुरस्सरत्वमौत्सर्गिकमित्याह—**अर्थेति** ॥ अपवादा(द)प्रामाण्ये यत्र वस्तुतोऽप्रमाणे नापचारो[वादो]दयः तत्र

---

* पृ. 13. प. 13. * पृ. 13. प. 14.

इत्यौत्सर्गिकं प्रामाण्यमेव सा भजते । तत्परिच्छेदाच्च प्रवर्तमानः प्रमाता प्रमाणेनैव प्रवर्तितो भवति ॥

॥ औत्सर्गिकप्रामाण्यबाधकापवादद्वैविध्यं शा ब र भाष्यानुमतम् , तत्र गोदोहनादिवद् व्यवस्था ॥

स्थिते चैवमौत्सर्गिकप्रामाण्ये, यत्र तस्यापवादः क्वचिद्भवति , तत्राप्रामाण्यम् । अप्रामाण्ये चावश्यंभाव्यपवादः । [द्वि]विध एव तदपवादः—बाधकप्रत्ययः, कारणदोषज्ञानं च । यथाहुः—"यस्य च दुष्टं करणं यत्र च मिथ्येति बाधकः प्रत्ययः, स एवासमीचीनः प्रत्ययो नान्यः"—, इति । तत्र बाधकज्ञानं पूर्वज्ञानोपमर्दद्वारेणैव तस्मिन् विषये जायते, इति समानविषयत्वान् स्पष्टमेव बाधकत्वम् । कारणदोषज्ञानं तु भिन्नविषयमपि कार्यैक्याद्बाधकतां प्रतिपद्यते । यथा च—"अपः प्रणयेदि"ति दर्शपूर्णमासाङ्गत्वात्क्रत्वर्थश्चमसो "गोदोहनेन पशुकामस्य प्रणयेदि"ति काम्यमानपशुनिर्देशात् पुरुषार्थं गोदोहनमित्येवं क्रत्वर्थपुरुषार्थतया भिन्नविषयत्वेऽपि चमस-गोदोहनयोरप्प्रणयनाख्यं कार्यमेकम् , इति गोदोहनेन निर्वृत्ते तस्मिन् चमसो निवर्तते । एवमिह कारणदोषज्ञानं दोषविषयमपि दोषाणा [दोषज्ञानाना]मयथार्थज्ञानजननस्वभावत्वात् तज्जन्यस्य याथार्थ्यं बाधते । यथाहुः—

---

प्रामाण्यप्रसङ्गमाह—**अप्रामाण्ये चेति** ॥ अपवादावश्यम्भावं वदितुमपवादभेदमीरयति—**द्विविध इति** ॥ अपवादद्वैविध्ये, तदावश्यकत्वे च **शा ब रं** वचनमुदाहरति—**यथेति** ॥ कस्य साक्षादपवादत्वम् , कस्यार्थादिति ? अतो विभजते—**तत्रेति** ॥ **स्पष्टमेव बाधकम्**=साक्षादेव पूर्वधीप्रामाण्यापवादकम् ॥

"पूर्वबुद्धिमबाधित्वा नोत्तरा जायते मतिः ॥" इति न्यायादित्यर्थः । तद्विपरीतप्रमाया बाधकत्वाद्दोषज्ञानं नापवादकम् , भिन्नविषयत्वात् , अत्राह—**[कारणदोषज्ञानं त्विति]** दोषज्ञानात्पूर्वधीविषयो मिथ्येति धीः स्यादिति पूर्वधिया तदर्थप्रकाशरूपकार्यैक्यादित्यर्थः । भिन्नविषयत्वे कार्यैक्या[द]पवादकत्वं त[कु]त्र दृष्टमिति चेत्, अत्राह—**यथेति** ॥ दर्शपूर्णमासप्रकरणे चमसोपरक्ताप्प्रणया[य]नविधानात् चमसः क्रतुशेषः, क्रतुशेषतया प्रकृतप्रणयनमाश्रित्य तदधिकारिण एव पशुकामस्य "गोदोहनेनापः प्रणयेदिति" काम्यमानपशुफलनिर्देशाद् गोदोहनं फलशेषमित्यर्थः । **दोषज्ञानानामिति** ॥

" दुष्टकारणबोधे तु जातेऽपि विषयान्तरे ।
अर्थात्तु[त्तु]ल्यार्थतां प्राप्य बोधो गोदोहनादिवत् " ॥ इति ।

॥ प्रमाया इव भ्रमस्यापि प्रामाण्याबाधशङ्कातात्परिहारौ ॥

*यदप्यगादि—मिथ्याज्ञानस्यापि प्रागपवादाद् बोधात्मकत्वेन प्रामाण्यप्रसक्तौ बाधानुपपत्तिः—इति, तत्र किं प्रामाण्यप्रसक्तिरुत्पत्तिः, ज्ञप्तिर्वा । नाद्यः; अनभ्युपगमात् । द्वितीयेऽप्रसक्तप्रतिषेधः क्वापि न स्यात्, अप्रसक्तप्रतिषेधो नाङ्गीकृतः, [इति] विधिरूपमेव विश्वमपद्येत ॥

॥ एकस्यैव प्रामाण्याप्रामाण्ययोरविरोधो ज्ञप्तौ, न तु वस्तुतः ॥

*यदपि—न चैकस्यैव बोधस्य प्रामाण्याप्रामाण्ये युक्ते—इत्यादि, तत्र प्रामाण्याप्रामाण्ययोरेकधर्मिसमावेशो विरोधः, उतैकधर्मिनिष्ठतया ज्ञप्तौ । प्रथमोऽ[न?]ङ्गीकृतः । द्वितीये न विरोधः ; प्रागपवादात् प्रामाण्यप्रतीतिः, अपवादादप्रामाण्यप्रतीतिरतिवृत्तयेति व्यवस्थानात् ॥

॥ बाधाभावविशिष्टबोधात्मकत्वस्यैव प्रामाण्यप्रयोजकत्वाद् बाधाभावापेक्षया परतस्त्वाक्षेप-त्परिहारौ भट्टदृष्ट्या ॥

*यत्तु—न तर्हि बोधात्मकत्वं प्रामाण्यनिश्चायकम्, किं तर्हि ? त्रैकालिकबाधाभावविशिष्टम्—इति, तदसत्; भ्रमप्रभृतौ बोधाभासे बोधत्वाभावेन तस्य प्रामाण्यनिश्चायकत्वोपपत्तेः । किञ्च वेदान्तसिद्धान्ते ज्ञान-तत्प्रामाण्ययोः केवलसाक्षि-

---

कारणदुष्टत्वधिया पूर्वधीविषयो मिथ्येत्येवंरूपज्ञानजनकत्वस्वाभाव्यादित्यर्थः ॥ दोषधियोऽर्थात्कार्यैक्येन पूर्वधीबाधकत्वे **वार्तिककृतां** वाक्यं कीर्तयति—**यथेति** ॥ '**गोदोहनादी**'त्यादिपदेन " अनतिदृश्नं स्तृणाति प्रजयैवैनं पशुभिरनतिदृश्नं करोति " इत्यादिसङ्ग्रहः ॥

विभ्रमप्रभृतौ प्रमाणतया प्रतिभाते बाधो न भवेत्, इति द्वितीयकल्पमपवदति—**द्वितीय इति** ॥ मेदिनीतलकलशयोगस्यावन[ग]तस्यापवादो न स्यात्, अप्रमाणे प्रसक्तप्रामाण्यस्यानपवादवदित्यर्थः । किमतः ? अत्राह—**अप्रसक्तेति** ॥ **अतिवृत्तस्येति** ॥ निवृत्तस्यैव ज्ञानस्याप्रमाणतया बाधादूर्ध्वमनुसन्धानादविरोध इत्यर्थः ॥

हेतुमाचष्टे—**भ्रमप्रभृताविति** ॥ औपनिषददर्शने बोधत्वस्य प्रामाण्यनिश्चा-

---

1. कुण्डलितः कपुस्तके नास्ति

* पृ. 14 प. 5 * पृ. 14 प. 6 * पृ. 15 प. 2

वेद्यत्वाद् बोधात्मकत्वस्य प्रामाण्यनिश्चायकत्वमसिद्धम् । भट्टदृष्टिमवष्टभ्य तूत्सर्गापवादन्यायो दर्शितः ॥

॥ दोषज्ञानेऽनुत्पन्नेऽपि दोषाप्रतीतिमात्रेण प्रामाण्यनिश्चयः संभवति ॥

*यदपि—दोषज्ञानेऽनुत्पन्न एवाशङ्कायाः संभवात्—इत्याद्यभ्यधायि, तदनुचितम् ; दोषस्याप्रामाण्यप्रयोजकस्याप्रतीत्या व्यतिरेकप्रतीतौ तत्कार्यव्यतिरेकस्फुरणोपपत्तेः, अपरथा धूमध्वजव्यतिरेके धूमव्यतिरेको न सेद्धुमर्हति ॥

॥ अनवस्थापरिहारस्य पक्षद्वयेऽप्यविशेषशङ्का-तन्निरासौ ॥

*यत्तूक्तम्—नन्वयमेवानवस्थापरिहारोऽस्माभिरभिधीयमानः किमिति भवतां विद्वेषं जनयति ?—इति, तदपर्यालोचितवचनम्, यतो यस्यां कक्ष्यायां विचारकस्य सन्देहानुदयः, निराकाङ्क्षप्रवृत्तिश्च, तत्र स्वतस्सिद्धप्रमाणभावस्य निरपवादस्योपगमेनास्माकमनवस्थापरिहारेऽपि सर्वत्रैव परतःप्रामाण्यप्रतीतिं प्रार्थयमानस्य न क्वचिद्-[न]वस्था स्यात् ; अप्रतीतप्रामाण्यसत्त्वानुपपत्तेः । न च स्वतः प्रामाण्यहानिः । यदि च प्रथमविज्ञानसंवादि तृतीयज्ञानमुत्पद्यते, [तर्हि] तत्प्रथमस्य प्रामाण्यमौत्सर्गिकं

---

यकत्वमुपपद्यते ; विभ्रमादौ बोधत्वाभावेन बोधत्वस्य प्रामाण्याव्यभिचारादित्यर्थः । बोधत्वस्य प्रामाण्यनिश्चायकत्वमभ्युपगम्य पर्यहरत्, संप्रति स्वीकारं परित्यजति—**किञ्चेति** ॥ घटादेरपि धीव्यवधानेन साक्षिवेद्यत्वमिष्टम्, अतो विशिनष्टि—**केवलेति** ॥ किं तर्ह्युत्सर्गापवादाभ्यां प्रामाण्याप्रामाण्यव्यवस्थासिद्धेरित्यारभ्याभिहितम्, अत्राह—**भट्टेति** ॥

अनौचित्ये हेतुमाह—**दोषस्येति** ॥ अप्रतीतसत्त्वे प्रमाणाभावादतिरेकप्रतीतावभावावगमे तत्कार्याप्रामाण्याभावावगमप्रयोगादिति यावत् । हेतुव्यतिरेके फलव्यतिरेकास्वीकरणे दण्डमाह—**अपरथेति** ॥ **कक्ष्यायामिति** ॥ ज्ञान[कक्ष्या]याम्=अन्तिमज्ञान इति यावत् ॥ त्रिचतुरप्रत्ययप्रामाण्यप्रतीतावपि नानवस्था, ततः **परं** तत्प्रामाण्यप्रतीतेरनावश्यकत्वादित्याह—**अप्रतीतेति** ॥ प्रथमप्रत्ययप्रामाण्यस्य तृतीयसंवादकृतत्वात्परतस्त्वापत्तिः, अत्राह—**नचेति** ॥ अनभ्यासदशायां संदिग्धप्रामाण्यस्य तृतीयसंवादापेक्षायां त[कु]तः स्वतस्तु[तस्त्व]वाचोयुक्तिः ? अत्राह—**यदीति** ॥

---

* पृ. 15 प. 6    * पृ. 16 प. 7

स्थितमेव। द्वितीयविज्ञानारोपितालीककालुष्यशङ्कानिराकरणं त्वस्य तृतीयेन क्रियते, न तस्य तत्संवादात्प्रामाण्यम्। यदि तु [दापि] द्वितीयज्ञानसंवादि तृतीयम्, तथा[दा] प्रथमस्याप्रामाण्यम्। तच्च परत इष्टमेव। द्वितीयस्य तु ज्ञानस्य[न]तृतीयसंवादकृतं प्रामाण्यम्, अपि तु कल्प्यमानकुशङ्काशमनमात्रेण[णः] तस्य व्यापार इति ॥

॥ बोधमात्रसाधारणकारणाधीनत्वेऽपि प्रामाण्योत्पत्तौ न दोषः ॥

*यत्त्विदं गदितम्—न हि बोधमात्रसाधारणकारणाधीनस्तद्विशेषप्रमित्युत्पादः संभवी—इति, तदभद्रम्; तन्मात्राधीनत्वेऽप्यनवगतभूतार्थतटस्थोपाधिना तदुपपत्तेः। अप्रमायां ज्ञानत्वमनभ्युपगच्छतां तद्विशेषत्वं चासिद्धम्, प्रमात्वज्ञानत्वयोस्तुल्यवृत्तित्वादित्यावेदितम्। विवादपदम्, साधारणकारणकम्, कार्यत्वादिति प्रयोगो भूषणप्रयोगनिरासे निरस्तः। विपक्षबाधश्च प्रागेव परास्तः ॥

॥ धातुवैषम्यसाम्यनिबन्धने भ्रम-प्रमे इति शङ्कानिरासः ॥

*यच्च—"धातुवैषम्यसंस्थानशरीराः कामिलादयः" इत्यारभ्य, यतस्तद्भावभावित्वं

---

क तर्हि तृतीयस्योपयोगः, अत्राह—**द्वितीयेति** ॥ द्वितीयविज्ञानेनारोपितमलीककालुष्यम्=मिथ्यात्वदोषः, तस्य शङ्काशमनमात्रं तृतीयज्ञानकार्यमित्यर्थः। विरोधिनो द्वितीयप्रत्ययस्योपनिपातेऽपि प्रथमप्रत्यय[था]प्रामाण्ये न कोऽपि प्रत्ययः प्रमाणं स्यात्, अत्राह—**यदापीति** ॥ तर्ह्यप्रामाण्यं परतः स्यात्, तृतीयज्ञानसंवादिद्वितीयज्ञानविसंवादनिमित्तत्वात्, अत्राह—**तच्चेति** ॥ द्वितीयप्रामाण्यं तर्हि परतः स्यात्, अत्राह—**द्वितीयस्येति** ॥ तर्हि तृतीयेन द्वितीये किमधिकमाचरितम्? अत्राह—**अपि त्विति** ॥ विशेषादर्शनादिनाऽऽगामिनी याऽप्रामाण्यशङ्का, तदुत्पत्तिनिरोधेन तृतीयस्योपयोग इत्यर्थः। [ प्रमामकुर्वतो ? ]प्यनधि[ग]तार्थस्य विषयतया प्रामात्वोपाधित्वोपपत्तौ नाप्रामाणिकातिरिक्तकारणकल्पनेत्याह—**तन्मात्रेति** ॥ तत्सामग्र्यास्तदसाधारणत्वात्सिद्धसाधनमित्यादि पूर्वोदितदूषणेनेदमप्यनुमानमपास्तमित्याह—**विवादपदमिति** ॥

धातुसाम्यरूपगुणस्य प्रामाण्यविरोधितदसाम्यलक्षणदोषविरोधितया प्रमा-

---

* पृ. 16-10. * पृ. 18. प. 5.

नोभयत्र विशिष्यते—इत्यन्तम्, तदपि धातुसाम्यरूपगुणे सत्यपिं जायमानस्मृतेर-प्रामाण्यदर्शनेनापाकरणीयम् ॥

॥ अनुमाने लिङ्गतत्त्वज्ञानस्य प्रामाण्यप्रयोजकत्वनिरासः ॥

*यत्पुनः—अनुमाने लिङ्गतत्त्वज्ञानं प्रयोजकम्—इत्युक्तम्, तदपि प्रमात्वे तन्न प्रयोजकम्; तदभावेऽपि प्रत्यक्षप्रमादर्शनात्, अपितु तद्गतानुमितित्व-प्रयोजकमिति—परास्तम् ।

॥ शब्दप्रामाण्यस्य गुणापेक्षत्वनिरासः ॥

*यदप्युदितम्—शब्दोऽपि यथा विपरीतोपलम्भादिदोषोपेतपुरुषप्रणीततामपेक्ष्य—इति, तन्न चतुरश्रम्; वेदस्यापुंतन्त्रस्य वक्तृगुणापेक्षया प्रमाजनकत्वानुपपत्तौ लौकिकवाक्यस्यापि कस्यापि तदनुपपत्तेः, गुणान्वयव्यतिरेकयोर्विरोधि-दोषनिराकरणेनान्यथासिद्धेः ॥

॥ दोषाणां गुणापाकरणार्थत्वनिरासः, अप्रामाण्यप्रयोजकत्वं च ॥

*यतु—दोषाणामपि गुणापकरणार्थतया सन्निधिः—इत्यभ्यधायि, तदपि न साधु; यतो दोषस्याप्रामाण्यप्रयोजकत्वात् तदभावेऽप्रामाण्यनिवृत्तिः । प्रामाण्यं तु स्वत एव ॥

॥ अप्रामाण्यस्वतस्त्व-प्रामाण्यपरतस्त्वापत्तिरूपविपरीतशङ्कानिरासः ॥

न च—गुणस्य प्रामाण्यप्रयोजकत्वात् तन्निवृत्तौ प्रामाण्यनिवृत्तिः, अप्रामाण्यं

---

यामन्वयव्यतिरेकौ, न हेतुतया, इतरथा[श्रुतिः?]स्मृतिप्रमात्वो[त्वाप]पपत्तेरित्याह—**तदपीपि** ॥

विगीतः शब्दः, न स्वार्थप्रवृत्तयथार्थोपलम्भापेक्षः, प्रमाजनकशब्दत्वात्; वैदिकशब्दवदिति परिहरति—**तन्नेति** ॥ नच साध्यवैकल्यमुदाहरणे; वेदापौरुषेयत[ता]या वक्ष्यमाणत्वादित्यर्थः । गुणान्वयव्यतिरेकविरुद्धकालातीतत्वं परिहरति—**गुणेति** ॥ अप्रामाण्यस्य स्वतस्त्वमाप[पा]द्यते, साध्यते वा । नादो[द्यः;] विपर्ययापर्यवसायितयाऽऽभासत्वादित्याह—**यत इति** ॥

---

* पृ. 81. प. 9. * पृ. 18. प. 10 * पृ. 18. प. 13

तु स्वत एवेति वैपरीत्यम्—शक्यसंपादनम् ; गुणस्य स्मृतावतिव्यापकत्वेन प्रामाण्यप्रयोजकत्वानुपपत्तेः ॥

॥ स्वयमेव वेदनस्य प्रामाण्यग्रहणमिति पक्षस्वीकारः ॥

*यत्पुनः—किं स्वयमेव वेदनं स्वप्रामाण्यग्रहणमित्यादि विकल्प्य, आद्ये दूषणम्— उदितम्, तदस्मदिष्टं चेष्टितम् ॥

॥ ज्ञानग्राहकेण प्रामाण्यग्रहणपक्षसाधुता, ज्ञानतत्प्रामाण्ययोः साक्षिवेद्यत्वेन ॥

*यत्तु—ज्ञानग्राहकेण प्रामाण्यग्रहणम्, तत्स्वतस्त्वमिति द्वितीयेऽपि ज्ञाततानुपपत्त्या प्रामाण्यानुपपत्तिः—इत्युक्तम्, तदपीष्टमेव ; ज्ञान-तत्प्रामाण्ययोः साक्षिवेद्यत्वाभ्युपगमात् ॥

न च—प्रामाण्यवदप्रामाण्यस्यापि ज्ञानग्राहिसाक्षिग्राह्यत्वात् स्वतस्त्वापत्तिरिति—युक्तम् ; अप्रामाण्यस्य ज्ञानाभासाधिकरणस्य ज्ञानसमानग्राह्यत्वाभावात्, साक्षिणः स्वरूपैक्येऽपि तत्तदुपधानभेदेनोपहितभेदात् ॥

॥ प्रमाणरूपधर्मिग्राहकस्य तत्प्रामाण्यग्राहकत्वाविरोधः ॥

*यत्पुनरराणि—किं प्रमाणप्रत्ययप्रतीतावसौ सन्देहः? किं वा तदप्रतीतौ ?

---

न द्वितीयः ; अपसिद्धान्तादित्याह—**न चेति** ॥ गुणस्या[स्य]प्रामाण्यप्रयोग[ज]कत्वादिति हेत्वसिद्धिरित्याह—**गुणस्येति** ॥

साक्षिवेद्यस्य प्रामाण्यस्य स्वतस्त्वेऽप्रामाण्यमपि स्वतः स्यात्, ज्ञानग्राहकसाक्षिणैव ग्राह्यत्वादिति, अत्राह—**न च प्रामाण्यवदिति** ॥ अप्रामाण्यस्य ज्ञानाभासाधिकरणत्वे विज्ञानग्राहकमात्रग्राहक[ग्राह्य]त्वमस्ति ; साक्षिस्वरूपाभेदात्, इत्याशङ्क्याह—**साक्षिण इति** ॥ प्रमाणाकारपरिणतान्तःकरणोपलक्षितं चैतन्यं प्रमाणसाधकम्, [अ]प्रमाणाकारपरिणताविद्यानुगतमप्रमाणसाधकमित्यर्थः ॥

प्रत्ययप्रतीतावपि तत्प्रामाण्याप्रतीतौ सर्वत्र स्वतस्त्वा[स्त्व]हानिरिति यदुक्तम्, तद् दूषयितुं विकल्पयति – **तत्र किमिति** ॥ स्वतस्त्वमते धीग्राहकस्य तत्प्रामाण्यग्राहकत्वनियममाश्रित्य चोद्यते ? किं वा क्वचिद्धर्मिप्रतीतेः तत्प्रामतण्य[ण्या]विषयत्वे

---

* पृ. 19 प. 6 * पृ. 19 प. 9 * पृ. 20 प. 9

प्रथमे तत्प्रत्ययप्रतीतिरेव तत्प्रामाण्यगोचरा, नो वा इति—इति, तत्र धर्म्यप्रतीति-प्रामाण्यप्रतीतिकल्पावस्वीकारपरास्तौ ॥

* यदुक्तम्—द्वितीये कथं[न ?] सर्वत्र स्वतः प्रामाण्योपवर्णनम्—इति, तत्र किं धर्मिग्राहकेण प्रामाण्यग्राहिणैव भवितव्यमिति नियममङ्गीकृत्य पर्यनुयोगः ? आहोस्वित् धर्मिग्राहकस्य (प्रामाण्य) ग्राहकत्वाभावनियमम् ? नाद्यः ; अनङ्गीकारात् । न द्वितीयः ; [अप्रतिबद्ध]सामग्रीप्रस्तु[सू]तधर्मिग्रहस्य तत्प्रामाण्यगोचरत्वाविरोधात् । प्रतिबन्धा[न्धका]भावस्य कारणत्वाभावमावेदयिष्यामः । तथा सन्देहगोचरधर्मिग्रहस्य तद्गतविशेषाग्राहकत्वेऽपि स्थाणुरेवायमिति सविशेषस्थाणु गोचरः प्रत्यय उदीयते ॥

॥ प्रत्यये प्रामाण्याप्रामाण्यसंशयेऽपि प्रामाण्यप्रत्ययस्य साक्षिवेद्यत्वान्न कालान्तरेऽपि प्रमाणान्तरवेद्यत्वं प्रामाण्यस्य ॥

स्यादेतत्—यत्र प्रत्यये प्रामाण्याप्रामाण्यसंशयः, तत्र स्वरूपमात्रप्रत्ययः प्राथमिकः, तत्प्रामाण्यप्रत्ययस्तु प्रमाणान्तरात् (कालान्तरात्,) कालान्तरे जनिमासादयति, इति स्वतस्त्वविरोधोपवर्णनम्—इति, मैवम्, कालान्तरेऽपि प्रत्ययप्रामाण्यस्य धर्मिग्राहकसाक्षिणैव ग्रहणात्, एकाधिकरणधर्माणां कृशानुप्रकाश-दाहादीनामिव परस्परगोचरीकरणानुपपत्त्या ज्ञानानां केवलसाक्षिवेद्यत्वाभ्युपगमात्,

---

तद्दृष्टान्तेनान्यत्रापि धर्मिप्रतीतिगोचरत्वं प्रामाण्यस्य न स्यादित्यापद्यत इत्यर्थः । आपादकासिध्याऽऽद्यमपवदति -- **नान्य [द्य] इति** ॥ विपक्षबाधकाभावेन व्याप्त्यसिध्या द्वितीयं दूषयति -- **[न]द्वितीय इति** ॥ परमतानुसारेणायं परिहारः, स्वमते नित्यानुभावगम्यत्वात् प्रामाण्यस्येति द्रष्टव्यम् । अप्रतिबद्धसामग्रीप्रसूतप्रतीतेः प्रामाण्यगोचरत्वे प्रतिबन्धाभावस्य कारणता स्यात्, अत्राह—**अप्रतिबद्धेति** ॥ सन्देहप्रयोजकधर्मिप्रतीतेस्तदीयविशेष[षा]विषयत्वे प्रतिबन्धकदोषाभावे जायमान-ज्ञानस्य सविशेषविषयत्वे दृष्टान्तमाह -- **तथेति** ॥

कथं सर्वत्र स्वतः प्रामाण्योपवर्णनमित्यस्याशयविशेषं शङ्कते—**स्यादेतदिति** ॥ यदि कालान्तरे ज्ञानज्ञापकातिरिक्तप्रमाणेन सन्देहगोचरप्रत्ययप्रामाण्यं प्रतीयेत, स्यादेव तर्हि स्वतस्त्वविरोधः, न त्वेवम्; साक्षिणैव ग्रहणादिति

---

* पृ. 20 प. 11 अत्रत्यानुवादवशात् 20 पृष्ठे 11 पंक्तावपि कथं न सर्वत्रेति पाठोऽनुसन्धेयः ।

प्रमाणान्तरेण तद्ग्रहणेऽनवस्थानाच्च । " न हि बोधात्मकत्वमेव बोधानां प्रामाण्यमधिगमयती " त्यादिना बुद्धेः प्रामाण्यं स्वेन बोधरूपेण प्रतीयत इति मतनिरसनमसदिष्टमेव ॥

॥ अर्थतथात्वस्यारोपविरोधिविशेषसाहित्यरूपस्यापातप्रतीतिर्न विरुध्यते ॥

*यदप्यभिहितम् — अर्थस्य बाधकागोचरता तथात्वम्, तच्च नापाततः प्रत्ययेनावभासते — इति, तदतिमन्दम् : आरोपविरोधिविशेषसाहित्यस्यार्थतथात्वेनाभ्युपगमात् ; तस्य चापाततः प्रतीतौ न विरोध इति पुरैवावेदितम् । न च पौरस्त्यरजतरूपप्रत्ययत्वं प्रमाणतदाभाससाधारणमिति युक्तम् ; प्रमाणाभासे प्रत्ययत्वाभावात् ॥

॥ प्रामाण्यस्वतस्त्ववादिना प्रमासाधनत्वरूपं प्रामाण्यं न विवक्षितम्,
ईश्वरज्ञानाप्रामाण्यापत्तेः ॥

*यदप्यगादि—इह खल्विन्द्रियादेः प्रमासाधनत्वं प्रामाण्यमभिमतम् —इति, तदसारम् ; ईश्वरज्ञानस्याप्रमाणत्वप्रसङ्गात् । तज्ज्ञानं प्रमैव, न प्रमाणमिति चेत्, न ; तथापीश्वरे परमाप्ततया प्रमाणतयाभ्युपगतेऽव्यापकत्वात्,

---

परिहरति—**मैवमिति** ॥ धीतद्धर्माणां साक्षिवेद्यत्वमेव कुतः ? मानसप्रत्यक्षत्वात् तेषाम्, अत आह—**एकेति** ॥ विमतम्, न स्वाश्रयविषयम्, नापि स्वसमानाश्रयविषयम्, गुणत्वात् ; अग्नेः प्रकाशादिवत्—इति ज्ञानानां परस्परगोचरत्वानुपपत्तौ साक्षिवेद्यत्वमेव परिशिष्यत इत्यर्थः ॥

यद्द[दद]र्शनाद् भ्रमसंशयौ, यद्दर्शनाद्बाधव्यवस्थे, तद्विशेषत्वमर्थतथात्वम्, न तु बाधकागोचरत्वमिति परिहरति—**तदतिमन्दमिति** ॥ तादृशस्य तथात्वस्य प्रथमत एव परिस्फुरणे न कापि संशयः स्यात्, अत्राह—**तस्येति** ॥ यत्र दोषसत्त्वम्, तत्र विशेषास्फुरणम्, इत्यादिना वेदितमित्यर्थः । पौरस्त्यरजतप्रत्ययत्वं साधारणमिति यदुदितम्, तद् दूषयति—**नचेति** ॥

प्रमासाधनं प्रमाणमिति लक्षण[म]व्याप्त्या दूषयति—**तदसारमिति** ॥ अव्याप्तिपरिहारं शङ्कते—**तदिति** ॥ ईश्वरप्रमाया नित्यत्वात्तदकारणेश्वरेऽव्याप्ति-

---

* पृ. 22 प. 7 * पृ. 23 प. 6

"मन्त्रायुर्वेदवच्च तत्प्रमाण्यमाप्तप्रामाण्यादि" त्यक्षचरणवचनात्। *योऽपि "तत्र सांशयिकत्वादि" ति हेतुः, स परसन्देहगोचरसमवायिसंवेदने व्यभिचरतीत्युक्तम्॥

॥ प्रामाण्यपरतस्त्वनिरासोपसंहारः, तत्र भट्टसंमतिश्च ॥

एवं च द्वितीयः प्रयोगो* निदर्शनस्य साध्यहीनतया निरस्तः। प्रामाण्यस्य परतो ज्ञप्तावपेक्षणीयवेदनानामप्यन्यापेक्षाप्रसक्तावनवस्थाप्रसक्तिश्च। यथाहुः—

"जातेऽपि यदि विज्ञाने तावन्नार्थोऽवधार्यते।
यावत्कारणशुद्धत्वं न प्रमाणान्तराद्गतम्॥

तत्र ज्ञानन्तरोत्पादः प्रतीक्ष्यः कारणान्तरात्।
यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा॥

तस्यापि कारणे शुद्धे तज्ज्ञाने स्यात् प्रमाणता।
तस्याप्येवमितीत्थं च न क्वचिद्व्यवतिष्ठते"॥ इति।

---

रित्याह—**नेति**॥ ईश्वरोऽपि प्रमातैव, न प्रमाणम्, अत आह—**मन्त्रेति**॥ मन्त्रः=वेदः, आयुर्वेदः=वैद्यशास्त्रम्, तयोर्यथा प्रामाण्यम्, आप्तप्रामाण्यात्, एवं तस्य कर्तुरीश्वरस्य प्रामाण्यम्; आप्तप्रामाण्यात्, ईश्वरस्य चाप्तत्वादिति सूत्रार्थः॥

अभ्यासदशापन्नवेदनानि, परतः प्रमेयप्रामाण्यानीति प्रयोगं परास्यति—**एवं चेति**॥

विपक्षे बाधकाभावात्, पक्षबा[सा]धकाभावाच्चाप्रयोजकतामाह—**प्रामाण्यस्येति**॥

उक्तमर्थं वृद्धसंवादेन द्रढयति—**यथेति**॥ विज्ञाने जातेऽपि यावत् कारणशुद्धत्वम्=गुणवददुष्टकारणजन्यत्वम्, प्रमाणान्तरान्न गतम्=न निश्चितम्, तावदर्थो नावधार्यते=अदुष्टकारणजत्वेन ज्ञानप्रामाण्यमर्थो[र्थे] नावधार्यते, यदेत्यर्थः॥

अस्मिन् दर्शने दूषणं दर्शयति—**तत्रेति**॥ कारणशुद्धौ हेतुमाह—**यावद्धीति**॥ हिशब्दो हेत्वर्थो भिन्नक्रमः। असत्समा, हि=यस्मादिति॥ कारणशुद्धिविषयज्ञानान्तरमिष्यताम्, को दोषः? अत्राह—**तस्यापीति**॥ शुद्धिविषय-

---

* पृ. 24 प. 3 * पृ. 24 प. 4

॥ स्वतः प्रामाण्यपक्षेऽप्यनवस्थासाम्यासंभवः; सिद्धान्तेऽनवस्थापरिहारसंभवात्, तत्परतस्त्वे तु न तत्परिहारसंभवः ॥

*यत्पुनरुक्तम्—स्वतः प्रामाण्यपक्षेऽपि वेदोदितवेदने स्वारसिकप्रामाण्यापादनाय कारणशुद्धत्वावधारणापेक्षायाम्, तस्यापि तदपेक्षायामनवस्थासाम्यम्—इति, तदसत्; एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिरिति भट्टमिश्रैरेव परिहृतत्वात् ॥

* यदपि परिहारसाम्यमितीरितम्, तत्—त्रिचतुरकक्ष्यागवेषणविश्रान्तवेदनस्य स्वतः प्रामाण्येनास्माकमनवस्थापरिहारेऽपि सर्वत्र परतस्त्वमर्थयमानस्य क्वचिदप्यवस्थातुमशक्यत्वात्, अविदितसत्त्वस्यासिद्ध्या, तत्रापि मानान्तरगवेषणावश्यंभावेन वैषम्यम्—इति परिहृतम्। [1]तदेवम्[तस्माद्]—

निसर्गसिद्धसामर्थ्यं प्रमाणं स्वार्थसाधनम् [कम्]।
स्वोत्पत्तौ स्वप्रतीतौ वा नान्यापेक्षमिति स्थितम् ॥ ८ ॥

॥ इति न्यायचन्द्रिकायां समन्वयपरिच्छेदे प्रथमः स्वतःप्रामाण्यवादः ॥

---

ज्ञानस्यापि कारणे, शुद्धे=शुद्धतया परिच्छिन्ने, तज्ज्ञाने=कारणशुद्धिज्ञाने, तस्यापि=शुद्धिज्ञानस्य तृतीयस्याप्येवं कारणे शुद्धे प्रमाणता स्यादिति कृत्वा तत्रापि ज्ञानान्तरोत्पादःप्रतीक्ष्यः। इत्थं च [न]क्वचिद्व्यवतिष्ठते=अनवस्था स्यादित्यर्थः ॥

अनवस्थसाम्यचोद्य[द्य]मनुवदति—**यत्पुनरुक्तमिति** ॥ वेदोदितवेदने स्वारसिकप्रामाण्यापादनायेत्यर्थः। वेदोदितवेदन इव पुरुषवचनादिजनितवेदनेषु स्वारसिकप्रामाण्यायेत्यध्याहृत्य योजनीयम्, तत्परिहृतमित्युपरि सम्बन्धः। प्रतीतावपि नानवस्थादिकम्, स्वतस्त्वे प्रमाणसत्त्वं लाघवादितर्कानुग्रहश्च।

इति न्यायचान्द्रिकाव्याख्यायां समन्वयपरिच्छेदे प्रथमः प्रामाण्यस्वतस्त्ववादः[2] ॥

---

* पृ. 24 प. 9 * पृ. 24 प. 14

1 तस्मादिति व्याख्यानुसारी पाठः।

2 अन्यथाप्रतिपत्तिविप्रतिपत्तिनिरासार्थतया श्रुतावप्युपपत्तिरूपयुक्तिसापेक्षत्वेऽपि न स्वतः प्रामाण्यहानिरिति न्यायसुधाकारादयः।

## ॥ अथ न्यायचन्द्रिकायां शक्तिवादः ॥

॥ पदार्थस्य भावाभावान्यतरत्वनियमः ॥

अथास्तु—स्वतस्त्वं प्रमितेः, तथापि न नैसर्गिकं सामर्थ्यम्, [किन्तु] पदार्थान्तरमेव संभावनीयम् ॥

॥ पदार्थः, तत्त्वं वा भावाभावान्यतररूपमेव, अतः शक्तिर्भावपदार्थः, अभावपदार्थो वा स्वीकर्तव्यः ॥

तथाहि—

परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥ ९ ॥

न हि भावाभावाभ्यामन्यः प्रकारः संभावनीयः; परस्परविधिनिषेधरूपत्वात् । 'न भाव' इति निषेधमात्रेणैवाभावविधिः, ततस्तं विधाय कथं स्ववचनेनैव पुनः सहृदयो निषेधयेत्—'नाभाव' इति ? एवम्—नाभाव इति निषेध एव भावविधिः, ततस्तं विधाय कथं स्ववचनेनैवानुन्मत्तः पुनर्निषेधेत्—न भाव इति ? अत एवैवंभूतानामेकताऽप्यशक्यप्रतिपत्तिः; प्रतिक्षेप-विध्योरेकत्वासंभवात् । तस्माद्भावाभावावेव तत्त्वम् । भावत्वेऽपि गुणवन्निर्गुणञ्चेति द्वयमेव; पूर्ववत् ॥

---

## ॥ अथ शक्तिवादः ॥

"तस्माद् निसर्गसिद्धसामर्थ्यमि"ति निशम्यासहमान आक्षिपति—**अथेति** ॥ प्रोक्षणादिनाऽऽधेयसामर्थ्यस्यात्म[त्मा]नात्मसमवायविगानेऽपि स्वरूपमिष्टम्, अतो विशिनष्टि—**नैसर्गिकमिति** ॥ अर्थान्तरत्वे प्रष्टव्यम्—किं भावाभावविलक्षणम् ? भावाभावात्मकं वा? भावात्मकम् ? अभावात्मकं वेति भावे· नाह—**तथाहीति** ॥ प्रथमकल्पपराकरणपरतया प्रथमार्धं व्याचष्टे—**न हीति** ॥ **निषेधरूपत्वादिति** ॥ स्वरूपनिषेधात्मकत्वादित्यर्थः । भावनिषेधस्याभावत्वाद् भावत्वं प्रतिक्षिप्य, अभावत्वमपि न प्रतिक्षेप्तुं शक्यम्; स्ववचनव्याघातादित्याह—**तत इति** ॥ द्वितीयकल्पापवादित्वेन द्वितीयार्धं व्याचष्टे—**अत एवेति** ॥ तृतीये विकल्पे पदार्थस्वरूपत्वा[त्वोप]पादनाय भावनियममाह—**भावत्वेऽपीति** ॥ उत्तरम्=निर्गुणम्, आश्रितम्=समवेतम् ॥

भावस्य सगुणनिर्गुणभेदेन, निर्गुणस्याश्रितानाश्रितभेदेन, आश्रितस्य सामान्य-
वन्निस्सामान्यवद्भेदेन, निस्सामान्यस्य स्पन्दास्पन्दभेदेन विभागः। तत्र
सगुणं द्रव्यम्—सामान्यवदाश्रितम्, कर्मगुणौ निस्सामान्यम्। निर्गुण-
माश्रितं तु सामान्यम्, विशेषश्च। अनाश्रितो निर्गुणस्तु समवाय
इति भावविभागः। अभावश्चापर इति सप्तपदार्थवादः॥

तत्र पूर्वं द्रव्यम्, अत्तरमाश्रितमनाश्रितं चेति द्वयमेव पूर्ववत्। तत्रोत्तरं समवाय एव; अनवस्थाभयात्। आश्रितन्तु सामान्यवन्निस्सामान्यं चेति द्वयमेव। तत्र प्रथमं स्पन्दोऽस्पन्द इति द्वयमेव पूर्ववत्। एतद्यथासङ्ख्यं कर्म गुण इति च गीयते। निस्सामान्यम् निर्गुणमाश्रितम्—एकाश्रितम्, अनेकाश्रितं चेत्यर्वागिव द्वयमेव। एतदपि यथासंख्यं विशेषः, सामान्यं चेत्यभिधीयते॥

॥ नैयायिकरीत्या सप्तस्वेव शक्तेरन्तर्भाव उदयनदृष्ट्या॥

तदेतत्सामर्थ्यं एतासु विरोधमासादयन्नातिरिच्यते, अनासादयन्न पदार्थी-भूय स्थातुमर्हति। अतोऽभावेन सह सप्तैव पदार्था इति नियम इत्येके॥

॥ ली ला व ती कारदृष्ट्या तस्यास्तत्रान्तर्भावः॥

भावत्वाधिष्ठितास्सर्वाः प्रत्येकं व्यक्तयो मताः।
द्रव्यादिषट्कविच्छेदमेलकेन विवर्जिताः॥ १०॥
इत्यन्ये। तत्सद्भावे प्रमाणाभावाच्च॥

---

यदर्थं नियम उक्तः, तदिदानीं दर्शयति—**तदेतदिति**॥ किं एतासु=गुणवत्त्वा[दिदीक्षासु(?)] नातिरिच्यिते; द्रव्यादिभ्य इति शेषः। तुरीये न पदार्थन्तरम्, इत्यभिप्रायवानाह—**अत इति**॥

**एवमु द य नोदी**रितमुदीर्य **ली ला व ती** कारोदितमुदीरयति—**भावत्वेति**॥ भावत्वाधिष्ठिताः=भावजातीयाः, द्रव्यादीनाम्, सम्बन्धषट्कम्—द्रव्यादिलक्षणषट्कम्, तस्य विच्छेदस्त्वयोगः, तस्य मेलकः=मेलनम्=समुदायः, तेन रहिताः। एवं च भावजातीयाः सर्वा व्यक्तयः, प्रत्येकं द्रव्यादिलक्षणषट्समुदितायोगरहिता मता इति योजना। द्रव्यं हि गुणाभाववत्, गुणोऽपि द्रव्यादेरित्येवं षडपि भावा मिथः स्वेतर-लक्षणाभाववत्तया संभूय षड्लक्षणाभाववन्त एवेति, अत उक्तम्—**प्रत्येकमिति**॥

कारणस्वरूपसहकारिव्यतिरिक्तायां शु[श]क्तौ प्रमाणाभावाच्चेत्याह—**तदिति**॥

॥ मणिमन्त्रौषधादीनां तत्तद्व्यवहर्तृतत्तत्पुरुषगतादृष्टोत्पादनेनैव दाहप्रतिबन्धकत्वम्, इति स्वतन्त्रशक्तौ नार्थापत्तिः प्रमाणम् ॥

अर्थापत्तिरस्तीति चेत्, न; अन्यथैवोपपत्तेः, मणिमन्त्रादिना दाहप्रतिपक्षभूतस्य क्षेत्रज्ञभेदसमवायिनोऽदृष्टभेदस्योत्पादात्। अग्न्यन्तरेणापि तर्हि तस्य पुरुषस्य दाहो न स्यादिति चेत्, न; प्रतिनियताग्निसाध्यदाहप्रतिपक्षस्यैवादृष्टस्य जननात् ॥

औषधलिप्तकाष्ठादिषु कथमदाह इति चेत्, न; तत्राप्यौषधलेपकारिपुरुषसमवेतादृष्टस्य दाहप्रतिपक्षभूतस्योत्पादनात्। प्रतिपक्षसन्निधानोत्पादकादृष्टविशेषस्य वा दाहप्रातिकूल्यम्, अदृष्टविशेषाञ्चितकरतलानलसंयोगभेदस्य वा दाहप्रतिपक्षत्वम्। स च विशेषो दाहादाहाभ्यामेव कल्पयिष्यते ॥

॥ शक्तिपदार्थान्तरत्वसाधकानुमानम्, तन्निरासश्च ॥

विवादास्पदम्, स्वरूपमात्रसंबन्धा[तिरिक्ता]तीन्द्रियसापेक्षम्, जनक-

---

[सहकारि]समवधानवति वह्नौ सत्यपि प्रतिबन्धकसन्निधौ दाहानुत्पादः प्रतिबन्धकनिरोध्यम्, तद्विनाश्यं वा दाहानुकूलमनुग्राहकं किञ्चिदग्नौ कल्पयतीति कार्यानुत्पादान्यथानुपपत्तिः शक्तौ प्रमाणमिति शङ्कते—**अर्थापत्तिरिति** ॥ अन्यथैवोपपत्तिमाह—**मणीति** ॥ यद्यग्नौ किञ्चिदप्यकृत्वा प्रतिबन्धकेनात्मनि दाहप्रतिकूलमदृष्टं जन्यते, तर्ह्यग्न्यन्तरेणापि तस्य दाहो न स्यात्; तज्जनितस्यादृष्टस्याग्निमात्रजन्यदाहविरोधित्वादिति शङ्कते—**अग्न्यन्तरेणेति** ॥ प्रत्यग्निविशेषमदृष्टस्यापि व्यवस्थानान्नायं दोष इत्याह—**नेति** ॥

तर्ह्यौषधलेपादिना प्रतिबन्धकेन काष्ठादावदृष्टजननायोगात् तेन कथं तत्र दाहाद्यु[नु]त्पाद इति शङ्कते—**औषधेति** ॥ तथाप्यौषधलेपकात्मसमवेतेनादृष्टेनात्मान्तराणां दाहानुत्पादः कथमित्यपरितुष्य तत्प्रकारान्तरमाह—**प्रतिपक्षेति** ॥ प्रतिबन्धकमन्त्राद्युत्पादकादृष्टविशेषस्य वाऽदृष्टविशेषाञ्चितस्याग्न्यङ्गुलिसंयोगादेर्वा दाहप्रातिकूल्यमुपपद्यत इत्यर्थः ॥ कथमयं विशेषः प्रत्येतव्यः? अत्राह—**स चेति** ॥

एवं **भाट्ट**मतोक्तार्थापत्तावन्यथोपपदितायां **गुरु**मतेनानुमानं शङ्कते—**विवादेति** ॥ विशेषणकृत्यं स्वयमेवाह—**अत्रेति** ॥ अस्मिन्नात्मत्वमुपाधी-

त्वात्; आत्मवत् । अत्र स्वरूपशब्देन संबन्धस्याव्यवधानसिद्धौ व्यवहित-संबन्धादृष्टादिर्निरस्तः, मात्रशब्देन दिगादिसंयोगः, अतीन्द्रियशब्देन स्वसमवेतौष्ण्यादिः । दृष्टान्ते तु स्वरूपसंबन्धेत्यनेन ज्ञानादौ कार्ये परम्परासंबन्धिनो मनःकर्मादेर्निरासः। मात्रेति ज्ञानादौ कार्ये मनस्संयोगस्य, अतीन्द्रियेति ज्ञानादेः, इत्यतस्तत्सिद्धिरिति - चेत्, न; अत एव संस्कारादृष्टसापेक्षत्वप्रसङ्गात् । तत्रात्मत्वमुपाधिरिति चेत्, तुल्यं प्रकृतेऽपि; शक्तेरपि शक्त्यन्तरापेक्षायामनवस्थितेः, अनपेक्षत्वे च तत्रैव व्यभिचारात्। जननशक्तियोगित्वं जनकत्वमिति चेत्, न; असिद्धेः । तस्माद्विवादाध्यासितम्, निजरूपसंबन्धा[तिरिक्ता]तीन्द्रियानपेक्षम्, प्रमाणेन तथानुपलभ्यमानत्वात् । यत्प्रमाणेन तथा नोपलभ्यते, न तत् तथाभूतम्; यथा नीलं न पीतरूपमिति ॥

॥ ईश्वरेच्छयैवेष्टसिद्धेर्न शक्तिकल्पना। ईश्वरेच्छायामुत्पद्यते नश्यति च, मण्यादिना शक्तिवत्, अतो न शक्तावर्थापत्तिः ॥

अन्योऽप्याह—स्फोटादिकार्यस्येश्वरेच्छाविशेषादुपपत्तेरन्यथोपपत्तिरर्थापत्तेः; यथा[दा]हि भगवानीश्वरोऽनेन वह्न्यादिनाऽस्य स्फोटो जनयितव्य इतीच्छति, तदा तेन वह्न्यादिना तस्य स्फोटजननात् । न—चैवमेकदोपजायमानानेकपुरुषस्फोटादिजनकानेकेच्छाकल्पनात्कल्पनागौरवमिति – सांप्रतम्; एकस्या एवानेकपुरुषस्फोटजननानुकूलेच्छाया अनेकपुरुषस्फोटादिसंभवात् । न च—तस्या नित्य-

---

कर्तुं तुल्ययोगक्षेमतया प्रतिबन्दीमुद्भावयति-–**नेति** ॥ विमतम्, स्वगतसंस्कारापेक्षम्, स्वगतादृष्टापेक्षमिति प्रतिज्ञाद्वयं वा, संस्काराधेयादृष्टसापेक्षमित्येक प्रतिज्ञां वा कृत्वा जनकत्वादात्मवदि ति वक्तुं शक्यमित्यर्थः ॥ परेणोपाधिमुत्थापयति - **तत्रेति** ॥ शक्तावप्यात्मत्वमुपाधिरित्याह—**तुल्यमिति** ॥ शक्त्या व्यभिचारवारणार्थं जनकत्वहेत्वर्थं शङ्कते – **जननेति** ॥ जननशक्तिमद्धि जनकम्, शक्तिश्च शक्तिरेव, न शक्तिमतीत्यर्थः। शक्तेरेव साध्यमानत्वात् शक्तिमत्त्वं साध्याविशिष्टमित्याह—**नेति** ॥ शक्तिपक्षीकृतावाश्रयासिद्धिबाधयोरन्यतरावति[पत्ति]भयात् परसाध्यविपर्ययमेव साध्यतया निर्दिश्योक्तप्रमाणदूषणोपजीवनेन शक्त्यभावे प्रयोगमाह—**तस्मादिति** ॥ संभावित-प्रमाणाभिमतयोर्दुष्टत्वादित्यर्थः ॥

**वादीन्द्र** मतमुत्थापयति—**अन्योऽपीति** ॥ युगपदनेकपुंसमवेतस्फोटादिकार्यजनने तज्जनकानेकेश्वरेच्छाकल्पनागौरवमित्याह—**न चेति** ॥

त्वेन प्रतिबन्धदशायामपि स्फोटाद्युत्पादप्रसङ्ग इति — वाच्यम् ; तस्याः कार्यत्वात्, विनाशित्वाच्च, मण्यादिना विनाशान्मण्याद्यभावेनोत्तम्भकेन चोत्पादाच्च, इच्छोत्पादन-विनाशनयोश्चानादित्वात्, इच्छाविनाशप्रतिबन्धहेतुत्वेन मण्या[मन्त्रा]दीनां प्रतिबन्धकत्वात्। नचैवं वह्न्यन्तराद्दाहानुत्पत्तिः ; तज्जनकेश्वरेच्छाया विनाशात्। धर्मिग्राहकप्रमाणेन कार्यत्वादिना कार्येच्छादिमत एव भगवतो महादेवस्य सिद्धेः। न च — ईश्वरेच्छा, नित्या, क्षित्याकाशसंसार्थनाश्रितत्वे सति नित्यविशेषगुणत्वात् ; सलिलपरममाणुरूपवदित्यादिना विरोध इति — वाच्यम् ; कार्यत्वेन सिद्धेश्वरेच्छा-पक्षीकरणे धर्मिग्राहकप्रमाणबाधात्, इच्छान्तरपक्षीकरणे चार्थान्तरत्वात्, अस्यां व्यभिचाराच्च। ईश्वरः, ईश्वरनिष्ठानित्यव्यतिरिक्तेच्छावान्, पुरुषत्वात् ; अन्यपुरुषवदित्यादिना विरोध इति चेत्, न ; भिन्नविषयत्वात्, अनेन नित्येच्छा-साधनात्, भगवति चा[नित्या]नित्येच्छास्वीकारात्, मीमांसकानामाश्रयासिद्धेश्च

---

प्रतिबन्धदशायामपि तस्या भावात्कार्योत्पादप्रसङ्गः, अत्राह — **न च तस्या इति** ॥ निर्हेतुजन्म-नाशयोरनङ्गीकारात् तत्कारणानिरूपणाच्चायुक्तौ ताविति, अत्राह — **मण्यादिनेति** ॥ ईश्वरेच्छाया एकत्वात्, तस्याः कार्यत्वे तदुत्पत्तेः प्राग्-नाशादूर्ध्वं च दाहाद्यभाव एव स्यात्, अत्राह — **इच्छेति** ॥ अनादित्वात् प्रवाहरूपेणेति शेषः। इच्छाकार्यस्य स्फोटत्वे कथं मन्त्रादेः प्रतिबन्धकत्वम् ? अत्राह — **इच्छाविनाशेति**। इच्छाया हेतुत्वात्। तद्विनाशः=प्रतिबन्धः, तद्धेतुः, प्रतिबन्धक इत्यर्थः। मन्त्रादिनेश्वरेच्छानाशेऽन्यन्तरेणापि न दह्येत, अत्राह — **न चेति** ॥ **तज्जनकेति** ॥ वह्न्यान्तरसाध्यदाहजनकेच्छाया इत्यर्थः। ईश्वरेच्छाया अनित्यत्वमेव कुतः ? अत्राह — **धर्मीति** ॥ क्षित्यादिकम्, सकर्तृकम्, कार्यत्वात् ; कलशवत् ; क्षित्युदके, प्रयत्नवता धृते, गुरुत्वे सत्यपातित्वात् ; वियति विहङ्गमदेहवदित्यादिनेश्वरसिद्धौ ज्ञानचिकीर्षाप्रयत्नवतः कर्तृत्वात् कार्यकादाचित्कत्वानुपपत्त्याऽनित्येच्छादिसिद्धि-रित्यर्थः ॥

अनुमानबाधमाशङ्क्याह — **न चेति** ॥ पार्थिवपरमाणुरूपादिना, शब्देन सुखादिना, घटरूपादिना व्यभिचारवारणाय हेतुविशेषणानि। ईश्वरेच्छा, नित्या, सर्वदा तदेकाश्रयत्वात्, तद्गतमहत्त्ववत्, इत्यादिपदार्थः ॥

धर्मिग्राहकमानसिद्धकार्येच्छा पक्षः, इतरा वेति विकल्प्य क्रमेण पराकरोति — **कार्यत्वेनेति** ॥ शङ्कते — **ईश्वर इति** ॥ ईश्वरनिष्ठत्वे सत्यनित्यव्यतिरिक्ता, सा चेच्छा, तद्वान्, इच्छावान्। इच्छावानित्युक्तौ अनित्येच्छावत्तया सिद्धसाधनम्,

॥ अनन्तेश्वरेच्छकल्पने गौरवं न दोषः; शक्तिवादेऽप्यनन्तशक्तिकल्पनात् ॥

न च—एवमेकेश्वरेच्छाविनाशानन्तरं अन्येश्वरेच्छास्वीकारादनन्तेच्छा-प्रसङ्ग इति—सांप्रतम्; इष्टत्वात्, मीमांसकैरप्यनन्तशक्तिस्वीकारात् । न चात्र प्रमाणाभावः; स्फोटादिकार्यम्, ईश्वरेच्छाजन्यम्, कार्यत्वात्; संप्रतिपन्नव-दित्यनुमानात् ॥

॥ शक्तिपदस्यागमेषु गौर्यामुपचारः अथवोमायां शक्तिपदं मुख्यमन्यत्रोपचारः । सर्वथा तु न शक्तिः किमपि तत्त्वान्तरम् ॥

"तस्माद्गौरीपतेरिच्छा स्फोटादिजननी परा ।
उपायाधिष्ठिता शक्तिरिति माहेश्वरं मतम्" ॥ ११ ॥

इति शिवशक्तिप्रतिपादकागमेषु गौरीदेव्यां शक्तिपदप्रयोग औपचारिकः; तदधिष्ठातृत्वात्, तदनुविधायित्वाद्वा । यद्वा—उमायामेव शक्तिपदप्रयोगो मुख्यः, ईश्वरेच्छायां त्वौपचारिकः; तदधिष्ठेयत्वात्, प्रतिमादिष्वीश्वरादि-शब्दप्रयोगवत् । तदधिष्ठानं च तत्राहमित्यभिमानः, अहमिति प्रयोगो वा—इति ॥

---

अतउक्तम्—**अनित्यव्यतिरिक्तेति** ॥ नित्येच्छाया अप्रसिद्धत्वादप्रसिद्धविशेषणता, अत आह—**ईश्वरनिष्ठेति** ॥ ईश्वरनिष्ठानित्यव्यतिरिक्तत्वमनीश्वरनिष्ठत्वेन वा स्यात्, नित्यत्वेन वा। आद्यः पक्षो व्याहत इति । द्वितीय इच्छाविशेषणत्वेन सिद्ध्यन्नित्येच्छां साधयतीति भावः । ईश्वरेच्छा, स्वस्वेतरवृत्तित्वरहितनित्यनिष्ठा[?]धिकरणम् मेयत्वात्; घटवत्, इत्यादिपदार्थः । कार्यत्वादेरनित्येच्छासाधकत्वात्, अस्य च नित्येच्छा-साधकत्वाद्व्यवस्थितविषयत्वान्न बाधकतेत्याह—**नेति** ॥ ईश्वर-तदिच्छयोर्जैमिनीयै-रनिष्टेरन्यतराश्रयासिद्धिरित्याह - **मीमांसकानामिति** ॥

इच्छाया दाहहेतुत्वे मनाभावः, अत्राह—**नचात्रेति** ॥ आगमविरुद्ध-मिच्छायां शक्तित्वप्रतिपादनम्; तत्र गौरीदेव्यां शक्तिशब्दप्रयोगात्, अत्राह—**तस्मादिति** ॥

कारिकां व्याकुरुते—**शिवेति** ॥ उपचारे निमित्तान्तरमाह—**तदनु-विधायित्वादिति** ॥ ईश्वरेच्छामनुविधत्ते गौरी, इति तेन तदभेदोपचार इत्यर्थः ॥ शक्तिपदात्पुरःस्फुरन्त्यां गौरीदेव्यां तत्पदस्यौपचारिकत्वं न्यायविरुद्धम्, [अत]

॥ करतलानलसंयोगविशेषातिरिक्तशक्त्यभावः ॥

करतलानलसंयोगविशेषेण स्फोटादिकार्योपपत्तेश्च । विशेषश्चास्य संयोगस्य स्फोटजनककरतलानलसंयोगानुवृत्तः स्फोटाजनककरतलानलसंयोगाद्व्यावृत्तो जातिभेदः । नच — अयं संयोगः, स्फोटाजनककरतलानलसंयोगाद्व्यावृत्तजातिमान्न भवति, संयोगत्वात्; अन्यसंयोगवदिति — वाच्यम्; तथाविधजात्यसिद्धावप्रसिद्धविशेषणत्वात्, तथाविधजातिसिद्धौ च बाधात्, तथाविधजातिरहितसंयोगपक्षीकरणे सिद्धसाधनात्, तथाविधजात्याश्रयसंयोगपक्षीकरणे च बाधादिति ॥

॥ मणिमन्त्राद्यदृष्टाद्यतिरिक्तशक्त्यभावः ॥

मणिमन्त्रौषधजन्यादृष्टाभावेन स्फोटादिकार्योपपत्तेश्च । न च — तान्यदृष्टानि, न स्फोटजनकाभावप्रतियोगीनि, अदृष्टत्वात्; अन्यादृष्टवदिति — वाच्यम्; तदसिद्धावाश्रयासिद्धेः । अत एव तत्सिद्धौ बाधात्, तत्प्रतिबन्ध[क-]त्वप्रतिपादकागमबाधाच्च, कार्यजनकाभावप्रतियोगित्वस्यैव प्रतिबन्ध[क]त्वादिति । तस्मान्नार्थापत्तिर्वह्न्यादिषु शक्तौ प्रमाणम् ॥

---

आह — यद्वेति ॥ तदधिष्ठेये तच्छब्दोपचारः क्व नाम दृष्टः? अत्राह — प्रतिमेति ॥ ईश्वरेच्छायां कथमधिष्ठेयत्वम्? अनाश्रयत्वात्, अत्राह — तदिति ॥ देव्यास्तत्राधिष्ठानं न तत्र वृत्तिः, किन्त्वभि(मा)नादिरूपमित्यर्थः ॥

प्रकारान्तरेणार्थापत्तेरन्यथोपपत्तिमाह — करतलेति ॥ शब्दान्तरेण तर्हि शक्तिः स्वीकृता स्यात्, अत्राह — विशेषश्चेति । अयं संयोगः, न स्फोटजनकः, संयोगत्वात्; संयोगान्तरवदिति, स्फोटजनकः संयोग एव नास्ति, कुतस्तद्विशेषः? अत्राह — न चेति ॥ स्फोटजनकसंयोगमङ्गीकृत्य, तद्गतविशेषनिषेधानुमानमाशङ्क्याह — न चायमिति ॥

मन्त्रादिजन्यादृष्टस्य दाहप्रतिकूलत्वा[त्, त]दभावादेव दाहोत्पत्तौ न शक्तिरङ्गीकार्येति प्रकारान्तरमीरयति — मणीति ॥ मन्त्रादिजन्यादृष्टानां ये अभावाः तेषां स्फोटजनकत्वमनुमानविरुद्धम्, अत आह — न चेति ॥ स्फोटादिकार्यलिङ्गादेव तत्प्रयोजकता[का]भावप्रतियोग्यदृष्टसिद्धिः, अत्राह — अत एवेति ॥

॥ शक्तौ वह्निपक्षकानुमानप्रमाणस्य सोपाधिकत्वसत्प्रतिपक्षत्वार्थान्तरादिना दूषणम् ॥

नाप्यनुमानम् ; केवलान्वयि-केवलव्यतिरेकिणोर्मीमांसकैरनङ्गीकारात्, अन्वयव्यतिरेकिणश्चासंभवात्। वह्निः, अतीन्द्रियाधिकरणमि'त्यादेर्गगनसंयोगादिना सिद्धसाधनत्वात्, वह्निः, स्फोटजनकाधिकरणमि'त्यादेरुष्णस्पर्शादिना सिद्ध-साधनात्, वह्निः, स्फोटजनकातीन्द्रियाधिकरणम्, स्फोटजनकत्वात्; आत्मवदि-त्यादेश्चात्मत्वातेजस्त्वाभ्यां सोपाधिकत्वात्। न चानयोः पक्षेतरत्वम्; अनु-द्भूतस्पर्शतेजसोऽपि पक्षाद् व्यावृत्तेः, अनात्मत्वतेजस्त्वाभ्यां सत्प्रतिपक्षत्वाच्च, स्थितस्थापकेनार्थान्तरत्वाच्च। वह्निः, वह्निनिष्ठगुणकर्मसामान्य[ा]भावत्वानाक्रान्तस्फोट-जनकाधिकरणम्, स्फोटजनकत्वात्; आत्मवदित्यादेर्भाट्टं प्रति समवायेनार्था-न्तरत्वात्, समवाये[य]व्यतिरिक्तत्वेन विशेषणायोगाच्च, तस्याप्रसिद्धविशेषणत्वात्, भाट्टस्य समवायाप्रसिद्धेः, प्र भा क र स्या प्रसिद्धविशेषणत्वात्, तस्याभावाप्रसिद्धेः अभावविशेषणपरित्यागे च तेनैवार्थान्तरत्वात्॥

॥ शक्तौ स्फोटरूपकार्यपक्षकानुमानस्यापसिद्धान्तार्थान्तरसिद्धसाधन-
व्याघातबाधादिना दूषणम्॥

स्फोटः, परिदृश्यमानस्फोटकारणातिरिक्तजन्यः, कार्यत्वात्; घटवदित्यादेश्चा-

---

मणिमन्त्रादीनां दाहप्रातिकूल्यप्रतिपादकागमादवगम्यते तज्जन्यादृष्टाभावस्य दाहानुकूलत्वम्, अत 'आगमविरुद्धं कालातीतमित्याह - **तदिति**॥

मन्त्रादौ प्रतिबन्धकत्वप्रसिद्धिः किंनिबन्धना? अत्राह— **कार्येति**॥ कार्यहेतोरभावस्य प्रतियोगि[गी]प्रतिबन्धः, तदुत्पादकः; प्रतिबन्धक इत्यर्थः॥

वह्निः, अतीन्द्रियाधिकरणम्, कारणत्वात्; आत्मवदित्यस्य गगनसंयोग-पवनपरमाण्वधिकरणतया सिद्धसाधनत्वादित्याह— **वह्निरिति**॥ **स्फोटजनकाधि-करणमिति**॥ घटादौ व्यभिचारं वारयति— **स्फोटजनकत्वादिति**॥ वह्नि-[ःस्व]निष्ठसत्तापरजातिरहितस्फोटजनकाधिकरणम्, स्फोटजनकत्वादित्यादिपदार्थः। समवायव्यतिरिक्तत्वेन साध्यविशिष्टो[ष्टौ त्वा]ह— **समवायेति**॥

स्फोटः, उभयसंप्रतिपन्नस्फोटकारणातिरिक्तभावजन्यः, कार्यत्वात्; घट-वदित्यादिपदार्थः। वह्निशक्तेर्वह्नितादात्म्याद्व्यतिरिक्तत्वासिद्धिरित्याह— **भाट्टैरिति**॥

पसिद्धान्तग्रस्तत्वात्, भट्टैः शक्तिशक्तिमतोस्तादात्म्याङ्गीकारात्। परिदृश्यमानत्वं च किं प्रत्यक्षत्वम्, आहोस्विदस्मत्प्रत्यक्षत्वम्, प्रमितत्वम्, सम्प्रतिपन्नत्वं वा। नाद्यः, अदृष्टेनार्थान्तरत्वात्, तत्प्र[दप्र?][1]त्यक्षत्वसिध्याऽप्यस्य चरितार्थत्वात्, मीमांसकानामदृष्टेन सिद्धसाधनाच्च। न द्वितीयः; अदृष्टेन सिद्धसाधनात्, न तृतीयः; व्याघातात्, बाधाच्च। न चतुर्थः। संप्रतिपन्नत्वं किं प्रमितौ कारणत्वम्, उभयवाद्यभ्युपगतत्वं वा। नाद्यः; पूर्वोक्तदोषात्। न द्वितीयः; ईश्वरादिनाऽर्थान्तरत्वात्॥

॥ वह्निः, उष्णस्पर्शादिव्यतिरिक्तस्फोटकारणाद् भिद्यते, इत्याद्यनुमानस्याप्यप्रसिद्धविशेषणत्वादिनोष्णस्पर्शस्थितस्थापकादिना शक्ताव-प्रामाण्यसाधनम्, सत्प्रतिपक्षाच्च॥

वह्निः, उष्णस्पर्शादिव्यतिरिक्तस्फोटकारणाद्भिद्यते, मेयत्वात्; घटवदिति चेत्, न; आदिशब्देनेश्वरादिग्रहणेऽप्रसिद्धविशेषणत्वात्, अग्रहणे चेश्वरादिनार्थान्तरत्वात्। वह्निस्पर्शः, वह्नि[मात्र?]निष्ठस्थितस्थापकव्यतिरिक्तस्फोटजनकाद्भिद्यते,

---

अदृष्टेनार्थान्तरत्व[मुप]मापादयति—**तद्प्र[तत्प्र]त्यक्षत्वेति**॥ स्फोटहेतोरदृष्टस्याप्रत्यक्षत्वमाक्षिप्य प्रतिज्ञापर्यवसानादित्यर्थः। सर्वज्ञमनङ्गीकुर्वतामदृष्टमेतादृशमिति तेन सिद्धसाधनत्वमेवेत्याह—**मीमांसकानामिति**॥ **व्याघतादिति**॥ '**परिदृश्यमानत्वं प्रमितत्वमि**'ति कल्पे तदतिरिक्तत्वम्=अप्रामाणिकत्वम्, तेन जन[?]न्य इत्युक्तेऽप्रामाणिकस्यासतः कारणत्वेन सत्त्वमुक्तम्, न सतः; प्राक्कालसतः कारणत्वादित्यर्थः। अप्रमितस्याजकत्वनिश्चयेन साध्यसन्देहकालस्य हेतूपन्यासयोग्यस्यासत्त्वेन कालात्ययापदिष्टत्वाच्चेत्याह—**बाधाच्चेति**॥ **पूर्वोक्तेति**॥ व्याघतादेरित्यर्थः॥

शङ्कते—**वह्निरिति**॥ उष्णस्पर्शादिव्यतिरिक्तस्फोटकारणं वह्निर्वा, तद्गते[ताती]न्द्रियातिशयो वा। आद्यमादाय दृष्टान्ते साध्य[ा] प्रसिद्धिः; तद्व्यतिरेकस्य पक्षे व्याघातात् [तद्ग]तातिशयसिद्धिरित्याशयः। ईश्वर-

---

1. तदप्रत्यक्षेति व्याख्यायामादर्शे दृश्यते, मूले त्वादर्शे तत्प्रत्यक्षेति। तत्रमौलिकः पाठ एव युक्तो भाति, श्रीराममूर्तिशास्त्रिणस्तु तदप्रत्यक्षेति पाठमाद्रियन्ते।

मेयत्वात्; घटवदिति चेत्, न; वह्निपरिमाणैकत्व-पृथक्त्वादिनाऽर्थान्तरत्वात्। शक्तिनिषेधे च प्रमाणम् — वह्निः, वह्न्यात्मातिरिक्तवृत्तित्वरहितवह्न्यात्मवृत्तित्वरहित-स्फोटजनकातीन्द्रियवान्न भवति, आत्मातिरिक्तत्वात्; घटवदिति ॥

॥ शक्तेर्वह्निस्वरूपभेदाभेदसहकारिकारणत्वादिविकल्पनेन गुणाद्यतिरिक्तायाः साधनायोग इति भू ष ण का र युक्तयः ॥

**भू ष ण का रः** — पुनर्वम्भणीति — यद्यप्य[न]तिरिक्ताऽग्नेर्दाहादिशक्तिः, तदाऽग्न्यादिप्रत्यक्षत्वादेव तत्प्रत्यक्षत्वम्, व्य[तद्य]तिरेकविरोधो वा। अथ व्यतिरिक्ता सा दाहादेर्हेतुः, अहेतुर्वा? यद्यहेतुः, कथं सा दाहाद्यन्यथानुपपत्त्या गम्येत? अतिप्रसङ्गात्। अथ तद्धेतुः, सा किं केवला, अग्न्यादिसहिता वा। केवला चेत्, नन्वग्न्यादीनामहेतुत्वं स्यात्। ततश्च दृष्टविपरीतैव हेतुकल्पना स्यात्। अथाग्न्यादि-सहिता, नन्वेवं सहकारिकारणमेव शक्तिः। सहकारिकारणं च सर्वमतीन्द्रियम्। अथ न सर्वं सहकारिकारणं शक्तिः, किन्तु विशिष्टम्; कोऽत्र विशेषः? यद्यजहद्-

---

तज्ज्ञानाया[दिना]र्थान्तरपरिहाराय प्रयोगान्तरं रचयति — **वह्निस्पर्श इति** ॥ ईश्वरादि व्यावर्तयति — **वह्नि[मात्र]निष्ठेति** ॥ वह्न्यात्मसंयोगमात्रेति ॥ स्थित-स्थापकेन प्रतिज्ञापर्यवसानं प[र]ास्यति — **स्थितस्थापकव्यतिरिक्तेति** ॥ पक्षान्यत्वेन दृष्टान्ते साध्यसिद्धौ वह्निपरिणामा[माणा]देः स्फोटजनकत्वमाक्षिप्य प्रतिज्ञायाश्चरि-तार्थत्वात्तेनार्थान्तरतेति दूषयति — **नेति** ॥ शक्त्यभावेऽपि प्रमाणाभावादयं[सं]देह एव स्यात्, अत्राह — **शक्तीति** ॥ वह्निरतीन्द्रियवानित्युक्तेबाधः; स्थितस्थापकवत्त्वात्, अत उक्तम् — **स्फोटजनकेति** ॥ तथापि वह्न्यात्मसंयोगोऽतीन्द्रियः स्फोटजनको वह्नावस्तीति बाधः, अत उक्तम् — **वह्न्यात्मवृत्तित्वरहितेति** ॥ एवमपि वह्निदिक्-संयोग उक्तरूपो वह्नाविति बाधनिवृत्त्यर्थम् — **वह्न्यात्मातिरिक्तवृत्तित्वरहितेति** ॥

परिदृश्यमानकारणतत्स्वरूपसहकारीतरातीन्द्रियशक्तिनिरासाय सा कार-णादनतिरिक्ता, अतिरिक्ता वेति विकल्प्य प्रथमं प्रत्याह — **यदीति** ॥ व्यतिरेक[के] दण्डमाह — **व्यतिरेकेति** ॥ प्रत्यक्षाप्रत्यक्षयोरेकत्वविरोध इत्यर्थः ॥ **कथं सेति** ॥ अनुपपद्यमानदर्शनादुपपादके बुद्धिरर्थोप[र्थ]पत्तिः, न तयाऽनुपपादकसिद्धिः; यस्य कस्यचिदन्यथाकल्पनाप्रसक्तेरित्यर्थः ॥ केवलपक्षमनु-भावितमाक्षिपति — **नन्विति** ॥ **ननुरत्र** प्रसिद्धौ। द्वितीये वचनान्तरेण सहकारि-

वृत्तित्वम् , तथा[दा ऽ]ग्नित्वादिसामान्यम् , औष्ण्यादिगुणो वा शक्तिः । अथ चरमत्वं विशेषः, एवमपि संयोगादेरन्या न शक्तिः ॥

किञ्च शक्तिशब्दवाच्यस्य सहकारिणः शक्तिरस्ति वा, न वा ? यदि नास्ति, अव्यतिरिक्ता वाऽस्ति, तदाऽग्न्यादेरप्यन्याशक्ति[र्नवाच्या] अथ शक्तेरप्यन्या शक्तिः, तर्हि चरमैव सहकारिशक्तिः ; चरमस्य चरमान्तराभावात् । तस्मादन्योन्यं कारकाणां सहकारिभाववच्छक्तिभावोऽपि द्रष्टव्य इति ॥

॥ मन्त्रादीनां प्रतिबन्धकत्वेनैव निर्वाहे न शक्तिकल्पनमिति शङ्कापरिहारः, सामान्यसंयोगादिनैव सर्वनिर्वाहात् ॥

ननु—मन्त्रादिप्रतिबन्धादग्निसंयोगे सत्यपि दाहादिकार्यं न दृश्यते । तस्मान्न सामान्यसंयोगादि सहकारिकारणं शक्तिरिति, तदन्यशक्तिपक्षेऽपि तस्मान्न दाहादिकार्यं भवति ; शक्तेः प्रतिबन्धादिति—चेत् ; सामान्यसंयोगादिशक्तिपक्षेऽपि समानः प्रतिबन्ध इति ॥

---

समवधानमेव शक्तिरङ्गीकृता स्यादित्याह—**नन्वेवमिति** ॥ शक्तिमतः प्राधान्यादतीन्द्रियशक्तेः सहकारित्वमिष्टम् , अत्राह—**सहकारीति** ॥ सहकारिमात्रस्य शक्तित्वानिष्टेः विशिष्टस्यैव शक्तित्वादतीन्द्रियत्वमिति शङ्कते—**अथेति** ॥ अग्निस्वरूपापरित्यागेन वृत्तिमत्त्वं विशेषः, चरमत्वं वेति विकल्पयति—**कोऽस्वेति** ॥ **संयोगादेरन्ये[न्ये]ति** ॥ यस्मादनन्तरं कारकान्तरं न व्याप्रियते, स चरमः । स च वह्न्यङ्गुलिसंयोग एव स्यात् , अग्नित्वसामान्यं वा ; तस्य नित्यत्वेन तदानन्तर्यासिद्धेरित्यर्थः ॥ **अव्यतिरिक्ता वेति** ॥ शक्तेः स्वरूपभूतैव शक्तिरित्यर्थः ॥

सहकारिकारणात् कार्योपपत्तावपि प्रतिबन्धानुपपत्त्या शक्तिसिद्धिं शङ्कते—**नन्विति** ॥ प्रतिबन्धदशायां कार्योत्पादप्रसङ्गपर्यनुयोगसाम्यं तावदाह—**तदन्येति** ॥ अगृहीतपराभिसन्धिः परः शङ्कते—**शक्तेरिति** ॥ अभिसन्धिमुद्धाटयन् परिहरति—**सामान्येति** ॥ अप्रतिबद्धस्य कार्यप्रयोजकत्वमस्मन्मतेऽपि सममित्यर्थः ॥

**उदयनेन** यथाऽर्थापत्तेरन्यथोपपत्तिः कथिता, तां प्रथयितुमाह—**अन्यः पुनरिति** ॥ [प्रतिबन्धस्या[स्य]विसामग्रीरूपत्वमितरेतराश्रयादयुक्तमिति शङ्कते—

॥ प्रतिबन्धकाभावस्य कारणत्वान्न शक्तिकल्पनेति महापूर्वपक्षः ॥

अन्यः पुनः प्राज्ञंमन्यो मन्यते—प्रतिबन्धानुपपत्त्या न शक्तिसिद्धिः ; प्रतिबन्धस्य विसामग्रीरूपतयोपपत्तेः ॥

॥ अन्योन्याश्रयापत्त्या प्रतिबन्धकाभावस्य न कारणत्वमिति सिद्धान्त्येकदेश्याक्षेपः ॥

स्यादेतत्—प्रतिबन्धस्य प्रतिबन्धत्वं [1]कारणाभावत्वेनौपाधिकम्, तदभावस्य कारणत्वञ्च[2] प्रतिबन्धकाभावत्वौपाधिकमिति प्रतिबन्धत्वसिद्धौ तदभावस्य कारणत्वसिद्धिः, तत्सिद्धौ च, सति प्रतिबन्धक[के] तदभावरूपकारणविरहापि[द्वि]सामग्रीप्रतिबन्धसिद्धिरिति दुर्वारमितरेतराश्रयत्वमिति ॥

॥ अग्नेरपि तदभावाभावत्वेन कारणत्वेऽन्योन्याश्रयः समानः । अतस्तस्येव प्रतिबन्धकाभावस्यापि नियतप्राक्सत्त्वेन कारणत्वम्, इति नान्योन्याश्रय इति न शक्तिसिद्धिरिति महापूर्वपक्षः ॥

नैतत्सारम्; प्रतिबन्धाभावस्य कारणत्वं न प्रतिबन्धाभावत्वौपाधिकम्, अपि तु नियतप्राक्कालसत्त्वमनन्यथासिद्धम्; अन्यथा प्रतिबन्धान्योन्याभावस्यापि कारणत्वापातात् । यथाऽग्न्यादेर्नियतप्राक्कालसत्त्वं कारणत्वमनन्यथोपपन्नान्वयव्यतिरेकावसेयम्; अन्यथा कार्योत्पादविरोधिस्वाभावापेक्षमग्न्यादेः कारणत्वम्, तदपेक्षञ्च तदभावस्य कार्यविरोधित्वमिति[वा ?]पावकादेरपि कारणत्वं कथमास्थातुमीशिषे ? कार्योत्पादविरोधी प्रतिबन्धः, सामग्र्यन्तर्गतान्यतमकारण-

---

—**स्यादेतदिति** ॥ प्रसञ्जकासिद्धेः प्रसङ्गाभावोऽयमिति परिहरति—**नेति** ॥ नियतप्राक्सत्वा[ त्त्व ]कारणत्वे प्रमाणमाह—**अनन्यथेति** ॥ अनन्यथासिद्धान्वयव्यतिरेकगम्यत्व[?]मित्यर्थः ॥

प्रतिबन्धाभावस्य कारणत्वं तत्त्वेनेति किमापादयसि ? साधयसि वा ? नाद्यः; आपादकस्य व्यभिचारितयाऽऽभासत्वात् । अत एव न द्वितीयो वेति भावेनाह—**अनन्यथेति** ॥ अन्वयव्यतिरेकाभ्यां कारणत्वमुदाहरति—**यथेति** ॥ प्रतिबन्धाभावे विरोध्यभावस्वभावमात्रेण तदेव प्रयोजकमिति विकल्पेन बाधमभिधत्ते—**अन्यथा कार्येति** ॥ प्रतिबन्धाभावकारणत्वं नान्वयव्यतिरेकाभ्यां शक्यनिश्चयम्; तयोरन्यथासिद्धेरिति दर्शयितुमाह—**कार्योत्पादेति** ॥ विसामग्री प्रतिबन्धः, न तूक्तरूपः,

---

1 भावत्वौपाधिकम् (क)     2 कारणत्वम् (ख)

विरहो विसामग्री। प्रतिबन्धाभावस्य विरोध्यभावतयाऽन्यथासिद्धः सन्निधिरिति चेत्, हन्त पावकस्यापि कार्यविरोधिस्वाभावाभावतयाऽन्यथासिद्धः सन्निधिरिति समानम्॥

॥ अन्योन्याश्रयेऽपि शक्तावर्थापत्तिः सन्दिग्धैव, न सर्वथा तदसंभवः, अतः शक्तिर्न पदार्थान्तरम्॥

किञ्चान्योन्याश्रयत्वेऽपि सन्दिग्धाऽन्यथोपपत्तिरर्थापत्तिः—प्रतिबन्धाभावस्याकारणत्वे सामग्रीवैकल्यस्याप्रतिबन्धकत्वम्, सति तस्मिन् प्रतिबन्धाभावस्याकारणत्वमिति विपर्ययेऽपि प्रसङ्गात्॥

॥ उत्तम्भकसत्त्वे प्रतिबन्धकसत्त्वेऽपि कार्योत्पत्तिरकिञ्चित्करी ; उत्तम्भकाभावसहकृतप्रतिबन्धकसंसर्गाभावस्य कारणत्वात्॥

अथोच्येत—प्रतिबन्धके सत्युत्तम्भकप्रयोगकाले कार्योत्पत्तेर्व्यतिरेकव्यभिचारः प्रतिबन्धकाभावस्य—इति, नैतद्युक्तम्; उत्तम्भकप्रयोगकाले मन्त्रादेरप्रतिबन्धकत्वात्, उत्तम्भकाभावविशिष्टस्यैव प्रतिबन्धकत्वात्, उत्तम्भकप्रयोगकाले प्रतिबन्धकाभावाव्यभिचारसिद्धेः। त[य]थाहि—विशेषणदण्डाभावे, विशेष्यपुरुषाभावे, द्वयोरभावे च विशिष्टदण्ड्यभावोऽविशिष्टः, एवं विशेषणभूतोत्तम्भकाभावाभावे, विशेष्यमन्त्राभावे, द्वयोरभावे चोत्तम्भकाभावविशिष्टमन्त्राभावस्याविशिष्टत्वाद् न सामग्रीभेदः॥

---

अत्राह—**सामग्रीति**। एवं न्यायदर्शनमनूद्य फलमाह—**प्रतिबन्धेति**॥ दहनस्यापि दाहहेतुत्वमेवं सति न स्याद् इति दूषयति—**हन्तेति**॥

भावहेतुत्वस्यान्वयादिना प्रतीतेर्नेतरेतराश्रय इत्युक्तम्, संप्रति तमङ्गीकृत्याप्याह—**किञ्चेति**॥ **विपर्ययेऽपि प्रसङ्गादिति**॥ प्रतिबन्धाभावस्याकारणत्वेऽपि परस्पराश्रयत्वप्रसक्तेरित्यर्थः॥

केवलव्यतिरेकविधुरतया न प्रतिबन्धकाभावः कारणमिति शङ्कते—**त[अ]थेति**॥ उत्तम्भकप्रयोगे प्रति[बन्धका]भावोऽस्त्येवेति परिहरति—**नैतदिति**॥ मन्त्रादेस्तर्हि प्रतिकूलत्वप्रसिद्धिर्न स्यात्, अत्राह—**उत्तम्भकाभावेति**॥ क्वचिन्मन्त्राद्यभावे दाहः, क्वचिदुत्तम्भकाभा[वाभा]वे=दाहकाभावे, क्वचिदुभयोरभाव इति सामग्रीवैचित्र्यं विचित्रकार्ये स्यात्, इत्याशङ्क्य सर्वत्र प्रतिपक्षाभावविशिष्टमन्त्राद्यभाव एकरूप इति सोदाहरणं दर्शयति—**यथा हीति**॥

॥ सामग्रीवैशिष्ट्यस्य प्रकारान्तरेण प्रसञ्जनम्, तत्परिहारश्च ॥

क्वचित्प्रतिबन्धकस्य प्रागभावः कारणम्, क्वचित्प्रध्वंसः, क्वचिदत्यन्ताभाव इत्यनियतहेतुकत्वं प्राप्तमिति चेत्, मैवम्; विरोधिसंसर्गाभावस्य कारणत्वात्, प्राक्प्रध्वंसात्यन्ताभावानां संसर्गाभावभेदत्वात् ॥

॥ संसृज्यमानमण्यभावस्यैव कारणत्वम्, न तु संसर्गाभावस्येति संसर्गात्यन्ताभावकारणत्वेऽपि नानियतहेतुत्वम्; कारणवैचित्र्यात् ॥

ननु—संसर्गाभावः कारणमित्युक्तेऽपि संसर्गप्राक्-प्रध्वंसाभावादिविकल्पेनानियतहेतुकत्वम्, तत्रापि संसर्गाभावस्वीकारेऽनवस्थेति—चेत्, न; न ह्यत्र संसर्गस्याभावः कारणम्, यतो विकल्प्येत, किन्तु संसृज्यमानस्य मन्त्रादेः । न हि संसर्गः प्रतिबन्धकः; संसृज्यमानस्य मन्त्रादेस्तथाभावादिति ॥

॥ मन्त्राद्यभावस्याकारणत्वशङ्का-तत्परिहारौ ॥

यत्तूच्यते—इतरेतराभावस्य सत्त्वेऽपि कार्यानुदयान्न मन्त्राभावः कारणम्—इति, तत्र प्रतिविधानम्—द्विविधो ह्यभावः—तादात्म्याभावः, संसर्गाभावश्च । तत्रेदमिदं न भवतीति तदात्मतया यत्र प्रतियोगिनो निषेधः, स तादात्म्याभावः, इदमिह, इदानीं वा नास्तीति यत्र संसर्गितया प्रतियोगी निषिध्यते, संसर्गाभावस्तत्र । ससर्गाभावभेदाः—प्राक्प्रध्वंसात्यन्ताभावाः, तेषामेव संसर्गी ; न[तत्]प्रतियोगिनिरूप्यत्वात्, ततश्चेतरातराभावस्याप्रसक्तिः—इति ॥

---

प्रकारान्तरेण सामग्रीवैचित्र्यं प्रसञ्जयति—**क्वचिदिति** ॥

संसर्गस्य प्रागभावः कारणम्, प्रध्वंसः, अत्यन्ताभावो वा । आद्ये प्रध्वंसे कार्यं न स्यात्, द्वितीये प्रागभावे [न] स्यात्, अन्त्यो[न्त्ये]नोभयत्रापि स्यात् तेषां प्रत्येकं कारणत्वे सामग्रीवैचित्र्यमित्याशयेन चोदयति—**नन्विति** ॥ **संसर्गाभाव इति** ॥ संसृज्यमानमन्त्राद्यभावस्य त्रिवक्षितत्वाद् मैवमित्याह—**नेति** ॥ संसर्गस्य प्रतिबन्धकत्वात् तदभावः कारणं न [?] स्यात्, अत्राह—**नहीति** ॥ इतिरत्रा[हित ?] नियत हेतुकत्वनिराससमाप्तौ ॥

संसृज्यमानमन्त्राद्यभावोऽपि न कारणम्, तदन्योन्याभावे व्यभिचारादिति चोद्यमुत्थापयति—**यत्त्विति** ॥ प्रतिविधानं स्फुटयितुं न्यायदर्शनस्थितिमाह—**द्विविधो हीति** ॥ चतुर्विधोऽभावः प्रसिद्धः, कथं द्वैविध्यम् ? अत्राह—**तथे[त्रे]ति** ॥

॥ संसर्गितापन्नप्रतियोगिनिरूप्यत्वोपाधिनाऽभावत्रयानुगमान्न नियतहेत्वभावः ॥

ननु—अस्तु तादात्म्याभाव-संसर्गाभावयोर्विशेषः; तथापि प्रागभावादित्रयानुगतायास्तादात्म्याभावव्यावृत्ताया जातेरभा[वा]त्कथं त्रयाणामुपसंग्रहः ? अनुपसंगृहीतानां च कथं कारणत्वावधारणम् ?—इति, मा भूज्जातिः, न तदुपगृहीतानामेव व्यवहाराङ्गत्वम्; सर्वत्रोपाधिमद्व्यवहारविलोपप्रसङ्गात्, उपाधिश्चात्र संसर्गितापन्नप्रतियोगिनिरूप्यत्वम्। तथापि न तावन्मात्रेण कारणत्वं शक्यावधारणमिति—चेत्, न; भवतोऽपि समानत्वात् ॥

॥ अभावत्रयानुमानेनैव निर्वाहसाम्यस्योपपादनम् ॥

तथाहि—बीजे सत्यङ्कुरो जायते, तदभावे न जायत इत्यत्र यदि बीजप्रागभावो विवक्षितः, प्रध्वंसे जायेत, अथ प्रध्वंसः, इतरत्र जाय[ये]तेत्यादिप्रसङ्गस्य सुवचत्वात्, बीजाभावमात्रविवक्षायां च तादात्म्याभावेऽप्यङ्कुरानुदयप्रसङ्गात्, तादात्म्याभावव्यावृत्तप्रागभावादित्रयानुगतसंसर्गाभावत्वमङ्गीकरणीयम्—इति ॥

॥ एकस्मिन् प्रतिबन्धके सति तज्जातीयप्रतिबन्धकान्तराभावात् कार्यापत्ति-शङ्का-तत्परिहारावपि समानौ ॥

एतेन—प्रतिबन्धके सत्यपि तज्जातीयस्यान्यस्याभावसम्भवात् कार्योत्पाद-

---

लाक्षणिकाभावभेदकक्षीकारेण पर्यनुयुङ्क्ते—**नन्विति** ॥ मा भूदुपसङ्ग्रहः, अत आह—**अनुपसङ्गृहीतानामिति** ॥ भिन्नानामभिन्नव्यवहारगोचरत्वम्—उपसङ्गृहीतत्वम्, तत्कारणमुपसङ्ग्राहकम्। तदुपाधावन्वयव्यतिरेकाभ्यां कारणत्वमभिधेयमित्यभिसन्धिः। व्यावृत्तेष्वव्यावृत्तव्यवहारो न जाते[?]तिनिबन्धनः सर्वत्रेत्यत्र हेतुमाह—**उपाधिमदिति** ॥ प्रतिबन्धाभावत्वमुपाधिर्वाच्यम्। एवं च प्रतिबन्धसिद्धौ तदभावकारणसिद्धिः, तत्सिद्धौ, सति मन्त्रादौ प्रतिबन्धेन[ा]भावरूपकारणविरहाद्धि[द्धि]सामग्रीप्रतिबन्धसिद्धिरि[ती]तरेतराश्रयः, अत आह—**उपाधिश्चेति** ॥ मन्त्रादेः प्रतिबन्धकत्वं कार्यव्यतिरेकावसेयम्, इतरथा प्रतिबन्धनिश्चयस्तवापि न स्यादित्यर्थः। अभावेषु भावरूपधर्मासंभवात्तेनापि व्यवहारासिद्धिरित्याशयेन शङ्कते—**तथापीति** ॥ जात्युत्तरत्वेन दूषयति—**नेति** ॥

एकस्मिन् मन्त्रादौ सत्यपि मन्त्रान्तराभावात्कार्यं स्यात्, अन्यथा तदतिरिक्तशक्तिः स्वीकार्या, अत्राह—एतेनेति ॥

प्रसङ्गेऽनुत्पादे वा ततोऽप्यधिक किञ्चिदपेक्षणीयमस्तीति—निरस्तम्; य[त]थाहि— तज्जातीये सति कार्यं जायते, अर्थादसति न जायत इति स्थिते, तद्भावेऽपि तज्जातीयान्तराभावाद् न भवितव्यं कार्येणेति, तथैतदपि; अनुकूलवत् प्रतिकूलेऽपि सति तज्जातीयान्तराभावानामकिञ्चित्करत्वादिति ॥

॥ मन्त्रादीनामकिञ्चित्करत्वे तत्प्रतिबन्धकत्वनिर्वाहार्थं शक्तिस्वीकारापत्तिशङ्का, मन्त्रादेरपि कारणाभावाभावरूपत्वेन कारणत्वात् प्रतिबन्धकाभावकारणत्वेनैवोपपत्तिरिति तत्परिहारश्च ॥

यत्तु—अकिञ्चित्करस्य प्रतिबन्धकत्वानुपपत्त्या मन्त्रादिप्रतिबन्धा[द्धा]शक्तिरङ्गीकार्या—इति, नैतद्युक्तम्; सामग्र्यन्तर्गतानामन्यतमाव[भावः] [वगमः ?] प्रतिबन्धो मुख्यः। स च प्रतिबन्धोऽत्राभावकारणत्वस्थितौ मन्त्रादिरेव स्यात्; अभावाभावस्य भावात्मकत्वात, न त्वसौ मन्त्रादि[ः]प्रतिबन्धकः, अतो न मन्त्रादेरकिञ्चित्करत्वे प्रतिबन्धकस्याकिञ्चित्करत्वम्, न [वा]प्रतिबन्धक[?]स्यापि किञ्चित्करत्वापेक्षा; अनवस्थाप्रसङ्गात् ॥

॥ मन्त्रादेरकिञ्चित्करत्वे शक्तेरपि तत्समानम्, शक्तेरपि प्रतिबन्धकनाशकत्वकल्पनायामनुपपत्तिः, तदभावकारणत्वस्वीकाराद्यापत्त्या। सर्वथा न शक्तौ प्रमाणं किमपि ॥

मन्त्रादिप्रयोक्तारः पुरुषाः प्रतिबन्धकाः। ते च मन्त्रादीन् प्रयुञ्जानाः

---

परामृष्टं हेतुं स्पष्टयति—**तथाहीति** ॥ बीजजातीये सत्यङ्कुरजातीयो जायते, इति बीजभावस्य कार्यप्रयोजकत्वसामार्थ्यात् तदभावस्याङ्कुराभावप्रयोजकत्वस्थितौ, सत्येकस्मिन् बीजे बीजान्तराभावे[वो]नाङ्कुराभावप्रयोजको यथेत्यर्थः ॥ उक्तं स्फुटयति—**अनुकूलवदिति** ॥ एकस्मिन् बीजे बीजान्तराभावानामिव प्रतिकूले मन्त्रादौ सति मन्त्राद्यन्तराभावानां[म]प्रयोजकत्वादित्यर्थः ॥

अभावान्तराणामिव मन्त्रादेरप्यकिञ्चित्करत्वे प्रतिबन्धकत्वानुपपत्त्या किञ्चित्करत्वं वाच्यम्, तच्च नान्तरेण शक्तिम्; [अतः]प्रतिबन्धकस्याकिञ्चित्करत्वं तदवस्थम्, अत्राह—**अत इति** ॥ प्रतिबन्धकवत्प्रतिबन्धस्यापि भवितव्यं किञ्चित्करत्वेन, अत्राह—**नेति** ॥ प्रतिबन्धजन्यकार्यस्यापि पूर्वसमानतया[न]कार्यान्तरापेक्षा;

किञ्चित्करा एवेति किमसमञ्जसम्? न चेदेवम्; शक्तिस्वीकारेऽपि कः प्रतीकारः? तथा[त्र]ापि प्रतिबन्धकेन शक्तिर्विनाश्यते, तद्धर्मो वा, धर्मान्तरं वा जन्यते, न वा किमपीति पक्षाः। तत्राकिञ्चित्करस्य प्रतिबन्धकत्वानुपपत्तिः। विपरीतधर्मान्तरजनने, तदभावे सत्येव कार्यमित्यभावस्य कारणत्वस्वीकारः, प्रागभावादिविकल्पावकाशश्च। तद्विनाशे [1]तद्धर्मविनाशे च [पुनरुत्तम्भकेन तज्जननेऽनियतहेतुकत्वम्, पूर्वं स्वरूपोत्पादकम्, इदानीमुत्तम्भकात्तदुत्पत्तेः[त्तिः]। न च समानशक्तितया तुल्यजातीय]त्वान्नैवमिति—साम्प्रतम्; स[वि]जातीयेषु समानशक्तिनिषेधात्। न च—प्रतिबन्धशक्तिमेवोत्तम्भको निरुणद्धि, न तु भावशक्तिमुत्पादयतीति—साम्प्रतम्; तदनुदय[2]प्रसङ्गात्। कालविशेषात्तदुत्पादे तदेवानियतहेतुकत्वमिति। तदेवं भावानां नातीन्द्रिया शक्तिरस्तीति सिद्धम्॥

---

अनवस्थानादित्यर्थः। मन्त्रादिव्यतिरेकेण कस्य प्रतिबन्धकत्वम्? कथं वा किञ्चित्करत्वम्? अत्राह—**मन्त्रादि[दी]ति**॥

यस्तु स्वराद्धान्तरागान्धः— मन्त्रादेरेव प्रतिबन्धकत्वम्, शक्तेः प्रतिबध्यत्वमभिधत्ते, तं प्रत्याह—**नचेदिति**॥ प्रतीकारः=प्रतिबन्धः। तद्धर्मो वा विनाश्यते, कारणे वा तच्छक्तौ वा विपरीतधर्मो जन्यत इति कल्पेऽनिष्टमाह—**विपरीतेति**॥ अनियतहेतुकत्वमुपपादयति—**पूर्वमिति**॥ पावकजनकात् पूर्वं तद्गतशक्ति-तद्धर्मावुपपन्नौ, इदानीमुत्तम्भकादिति सामग्रीवैचित्र्यमित्यर्थः। स्वरूपोत्पादकोत्तम्भकयोरेकजातीयशक्तिकत्वादेकजातीयत्वम्, अत्राह—**नचेति**॥ कुत इति? अत आह—**विजातीयेष्विति**॥

प्रवाहोऽनादिमान्। एष न विजातीयैकशक्तिमानिति। अत्र विजातीयानामेकशक्तित्वे दहनादहनयोरपि समानशक्तित्वेनादहनादपि धूमोत्पत्तिशङ्कया धूमध्वजानुमानानुदयप्रसङ्गेनेत्यर्थः॥

उत्तम्भकस्य पावकादिशक्त्यजनकत्वान्नानियतहेतुः, अत्राह—**न चेति**॥ हेतुमाह— **तदिति**॥ प्रतिबन्धकेन विनाशितशक्तितद्धर्मयोरनुत्पत्त्यापत्तेरित्यर्थः। प्रतिपक्षाभावविशिष्टमन्त्राद्यभावतः कालो[ला]द्वाविशक्त्युत्पादश्चेत्, अत्राह—**कालेति**॥

---

1 तद्धर्मविनाश चः 2 तदुत्पाद (क)

॥ अनुमानागमार्थापत्तिभ्यः शक्तिरतिरिक्ता स्वीकर्तव्येति महासिद्धान्तसंग्रहः ॥

अत्राभिधीयते—

अर्थापत्त्यनुमानाभ्यां श्रुतितश्च मिता सती ।
शक्तिर्वाग्जालमात्रेण कथं निह्नूयते परैः ॥ १२ ॥

॥ शक्तावर्थापत्तिप्रमाणोपपादनम् ॥

तथाहि—करतलानलसम्पर्के, सति च प्रतिकूले दाहकार्यमुदयमनासादयत् कथमतीन्द्रियां शक्तिमन्तरेण समञ्जसं स्यात् ? न हि तत्र दृष्टवैगुण्यमीक्षामहे । ततो नूनं भवितव्यमेव केनचिद् अतीन्द्रियेण, इत्येव वर्तते—यस्यापकुर्वतो मन्त्रादेः प्रतिबन्धकत्वसिद्धिः, इति प्रतिबन्धकान्यथानुपपत्ति[1]रूपार्थापत्तिस्तां गमयति ॥

॥ अभावत्वनिषेधस्य भावत्वपर्यवसानानियमेन भावाभावान्यतरत्वनियमो न तत्त्वस्य ॥

* यदत्र गदितम्—परस्परविरोधेऽपि न प्रकारान्तरस्थितिः—इति, तदसत् ; स्तम्भाभावः कुम्भो वा[?]न भवतीति कुम्भस्य स्तम्भाभावत्वनिषेधेऽपि स्तम्भत्वानुपलम्भात् । विस्तरश्चास्य स्वावसरे भविष्यति ॥

॥ द्रव्यस्यैव गुणवत्त्वम् , अतः सगुणो भावो द्रव्यमेवेति विवेको न युक्तः ;
गुणानामपि संख्यारूपगुणवत्त्वात् । अतो द्रव्यगुण-
कर्मातिरिक्ता शक्तिरित्युदयनमतनिरासः ॥

* यत्पुनः गुणवद् द्रव्यमेवेति ; तदसारम् ; गुणादेरति संख्यावत्त्वात् ,

---

अर्थापत्त्यनुमानाभ्यामिति परोक्तार्थापत्तिं प्रथयति—**तथाहीति** ॥ अतिशयेन कल्पितेन कथमनुपपत्तेरुपरतिः ? अत्राह—**यस्येति** । विषयषष्ठी । यद्विषयमपकारम् कुर्वतो मन्त्रादेरित्यर्थः ॥

स्तम्भतदभावयोर्विरोधेऽपि स्तंभाभावत्वनि[षेधे वि]धेरपर्यवसानात् भावाभावयोरेकतरनिषेधस्यान्यतरविधित्वनियमासिध्द्धे[ध्द्धि]रित्याह—**स्तम्भेति** ॥ स्तम्भतदभावव्यतिरेकेण वस्त्रादिक[कं]कोट्यन्तरमस्ति, अतो न कुम्भस्य स्तम्भत्वम् । भावाभावमात्रव्यतिरिक्तकोट्यभावात्तु द्रव्यत्वम् , तत्रायं नियम इति, अत आह—**विस्तरश्चेति** ॥

---

1 अन्यथानुपपत्ति स्तां (ख)

* पृ. 63. प. 6. * पृ. 63. प. 8.

द्रव्यस्यैव संख्या गुणः, गुणादीनां तदेकार्थसमवायादिना संख्याव्यवहार इति चेत्, न; गुणादौ सत्तापलापस्याप्येवं प्रसङ्गात्। तस्मात्—

न द्रव्यं गुणवृत्तित्वाद् गुणकर्मबहिष्कृता ।
सामान्यादिषु सत्त्वेन शक्तिर्भावान्तरं मता ॥ १३ ॥

॥ भावत्वाधिष्ठितस्य द्रव्यादिषट्कलक्षणमेलनविरहनियम इति वैशिषिकमत-
निरासः, द्रव्यादिलक्षणनिरुक्त्ययोगश्च ॥

* नापि[?]भावत्वाधिष्ठितस्य द्रव्यादिषट्कलक्षणविरहमेलकविरहनियमे द्रव्यलक्षणे द्रव्यलक्षणं तावन्नास्ति ; स्वाश्रयादिप्रसङ्गात् । नापि गुणकर्मसामान्यविशेषलक्षणम् ; समवायस्य गुणाद्यन्यतमत्वप्रसंगात् , गुणसमवायस्य द्रव्यलक्षणत्वात् । नापि समवायलक्षणम् ; गुणस्य समवायत्वप्रसङ्गात् । तस्मात् भावत्वा[1]धिष्ठिते द्रव्यलक्षणे द्रव्यादिषट्कविच्छेदमेलको वज्रलेपायते ॥

॥ द्रव्यलक्षणपरिष्कारः, तन्निरासश्च ॥

गुणवत्त्वात्यन्ताभावानधिकरणत्वं द्रव्यलक्षणमाह पर इति चेत्, न; गुणव[2]त्वात्यन्ताभाव एवातिव्याप्तेः । भावत्वे सतीति चेत्, न ; [3]गुणवत्त्वादौ

---

द्रव्यलक्षणस्य गुणादावुक्तातिव्याप्तिपरिहारं शङ्कते—**द्रव्यस्येति** ॥ कथंतर्हि चतुर्विंशतिगुणाः, पञ्च कर्माणीत्यादिव्यवहारः, अत्राह—**गुणेति** ॥ सङ्ख्यै कार्थसमवायाद् गुणकर्मद्रव्यत्वतदवान्तरसत्तासामान्यविशेषाणां गुणत्वादीनामेकार्थसमवेतसमवाय [ ? ] समवायस्यैकार्थाधारत्वादित्यर्थः ॥ गुणादौ सङ्ख्याप्रतीतेः सत्ताप्रतीत्यविशेषात् स्वीकार्यैव सङ्ख्या, त्याज्या वा सत्तेति परिहरति—**नेति** ॥ एवं गुणवतो द्रव्यत्वमेवेति नियमं भङ्क्त्वा, शक्तेरर्थान्तरत्वे युक्तिं सङ्गृह्णाति—**तस्मादिति** ॥ **गुणकर्मबहिष्कृतेति** ॥ अत्रापि गुणवृत्तित्वादित्येव हेतुः, **सामान्यादिक्षु[दिषु]**सत्त्वेनेति सामान्यादिबहिर्भावे ॥

नियमभङ्गमुपपादयति—**द्रव्यलक्षण इति** ॥ हेतुः—**स्वेति** ॥ तदेव लक्षणं तत्र वर्तते चेत्, आत्माश्रयः, अन्यच्चेत्, अनवस्थास्यादियर्थः ॥ गुणादीनामन्यतमः लक्षणं भविष्यति, नेत्याह—**नापीति** ॥ द्रव्यलक्षणे गुणलक्षणस्य वृत्तौ समवायस्य गुणत्वम्, कर्मादिलक्षणवृत्तौ गुणोऽपि समवायः स्यादित्यर्थः ॥

---

* पृ. 63. प. 15.
1. भावत्वाद 2. गुणत्वादौ 3. गुणत्व

व्याप्तेः, गुणवत्त्वस्य[1] गुणत्व[?]समवायरूपत्वात् । अतो मेयं ज्ञेयमेवेतिवद्भावत्वाधिष्ठितं षड्लक्षणयोग्येव, इत्ययोगव्यवच्छेदस्य, द्रव्यादिषट्कविच्छेदमेलकविशिष्टे भावत्वं नास्तीत्यन्ययोगव्यवच्छेदस्य चासिद्धिः—इति[2] ॥

॥ अग्न्यादौ दाहप्रतिबन्धकमदृष्टमेव, इत्यर्थापत्तेरदृष्टविषयत्वेनान्यथासिद्धिरिति शङ्का, परिहारश्च । अदृष्टकल्पनायोगः ; प्रयोजनाद्यभावात् ॥

* यदप्युक्तम्—मन्त्रादिना दाहप्रतिकूलस्याऽऽत्मसमवायिनोऽदृष्टस्योत्पत्तेरन्यथासिद्धिः—इति, तद् महापातकादिजनितदाहानुकूलप्रबलादृष्टे सति क्षुद्रप्रतिकूलादृष्टोदयविरोधाद् निष्फलं कल्पनम्; मन्त्रादिना क्षेत्रज्ञसमवायिप्रतिकूलादृष्टोत्पत्तौ प्रमाणाभावाच्च [वश्च] । किञ्च तस्य प्रयोजनम्? न तावद्दाहानुदयः ; तस्य प्रागभावस्यानादित्वात्, नापि दाहध्वंसः ; अनुत्पन्नस्य तस्य ध्वंसासिद्धेः ॥

॥ अदृष्टस्य दाहप्रतिबन्धसामग्रीत्वायोगः, अप्रामाणिकेऽदृष्टे प्रतिनियतविषयत्वकल्पनायोगश्च ॥

सति पुष्कलकारणे कार्यप्रागभावस्य कालान्तरप्राप्तिरिति चेत्, न ; कार्यानुत्पादकस्य सामग्रीत्वासिद्धेः । * यदनन्तरं कार्यं भवत्येवेत्येतावन्मात्ररूपत्वात्—

---

द्रव्यादिषट्कविच्छेदमेलकवतो द्रव्यलक्षणस्य न भावत्वमिति शङ्कते—**गुणेति** ॥ अत्यन्ताभावेऽतिव्याप्तिं परिहर्तुं भावत्वे सतीति लक्षणं विशेषणीयमित्याह—**भावत्व इति** ॥ गुणत्वसत्त्वा[व]त्त्वादौ भावत्वे सति गुणवत्त्वात्यन्ताभावानधिकरणत्वं दर्शयितुं गुणवत्त्वस्वरूपमाह—**गुणवत्त्वस्येति** ॥ न च—गुणाश्रयत्वं गुणवत्त्वं गुणत्वादौ नास्तीति—वचनीयम्; गुणसमवायातिरिक्ततदाश्रयत्वादेर्दुर्वचनत्वात्, तयोर्द्रव्यलक्षणे षट्कविच्छेदमेलकोऽसङ्गत इत्याह—**अत इति** ॥ **निष्फलं कल्पनमिति** ॥ 'प्रबलेन दुर्बलं बाध्यते' इति न्यायादित्यर्थः । तददृ- [तददृष्टं] प्रमाणबलात् कल्प्यते, प्रयोजनबलाद्वा । नाद्य इत्याह—**मन्त्रादिनेति** ॥ द्वितीयेऽपि दाहस्यानुदयः, फलध्वंसो वा, दाहकारणपौष्कल्ये सति तस्य कालान्तरप्राप्तिर्वेति विकल्पयति—**किञ्चेति** ॥ तृतीयकल्पमसम्भवेनाक्षिपति—**नेति** ॥ कार्यस्य कालान्तरनयनं तत्प्रागभावपरिपालनम्, तत्कुर्वतः कारणकलापस्य सामग्रीत्वं न स्यादित्यर्थः । तत् प्रकटयितुं परमतेन तल्लक्षणमाह—**यदनन्तरमिति** ॥

---

1 गुणत्व (क) 2 इति इत्येतत् (ख) पुस्तके नास्ति

* पृ. 64. प. 4. * पृ. 64. प. 5.

तस्याः, कार्यानुमेयत्वाच्च । मन्त्रप्रति[1]षिद्धदहनेनादह्यमानदेहस्य दहनान्तरेणाप्यदाहप्रसङ्गाच्च । प्रतिनियताग्निसाध्यदाहप्रतिपक्षस्यैवादृष्टस्य जननादग्न्यन्तरेण दाह इत्युक्तमिति चेत्, महतीयं कल्पना, यदप्रामाणिकमदृष्टम्, तस्य चानुपपद्यमानदाहप्रतिपक्षत्वम्, प्रतिनियतविषयत्वञ्चेति बहु कल्पनीयम् । सम्बद्धस्य नियामकत्वम्, असम्बद्धस्य वा ? नाद्यः ; सम्बन्धस्यासत्त्वात्, न द्वितीयः ; अत्यापत्तेः[2] । पारम्पर्यसंबन्ध[3]स्याप्रसञ्जकत्वात् ॥

॥ अदृष्टस्य काष्ठादावसंबन्धात् कथञ्चनोद्देश्यत्वानुद्देश्यत्वाभ्यां संबन्धे काष्ठसंबद्धतृणादेरनुद्दिष्टस्य दाहानुपपत्तेश्च शक्तिरेव तत्र कारणम् ॥

किञ्चौषधलेपादिना प्रतिबन्धकेन काष्ठादावदृष्टजननायोगात्तेन तत्र कथं दाहाद्यनुत्पादः ; * काष्ठादावदृष्टानुदयेऽप्यौषधलेपकारिक्षेत्रज्ञसमवेतादृष्टोदयात्, इत्यावेदितमिति चेत्, न ; अदृष्टस्यात्मसमवेतस्यासम्बन्ध[द्ध]काष्ठादौ दाहविरोधित्वे काष्ठान्तराणामप्यदाहप्रसङ्गात्, औषधलेपकारिपुरुषोद्देश्यस्यैवादाह इति चेत्, न ; औषधलिप्तकाष्ठे संसृष्टसूक्ष्मतृणादेरनुद्देश्यस्याप्यदाहदर्शनात्, औषधलेपकात्मसमवेतादृष्टेनात्मान्तराणां दाहानुत्पादायोगाच्च ॥

---

कार्यानुमेयसामग्र्यास्तदभावेऽसंभवाच्चेत्याह—**कार्येति** ॥ दाहप्रतिकूलादृष्टस्य क्षेत्रज्ञसमवायेऽतिप्रसङ्गमाह—**मन्त्रेणेति** ॥ कल्पनागौरवेण परिहरति—**महतीति** ॥ तददृष्टं कृशानुसंबद्धं नियामकम्, असम्बद्धं वेति विकल्प्य दूषयति—**संबन्धस्येत्यादिना** ॥

अग्निसंयुक्तात्मनि समवेतमदृष्टम्, इत्यस्ति संयुक्तसमवाय इति, अत आह—**पारम्पर्येति** ॥ असंबद्धा[न्धा]विशेषेऽपि कार्या[ष्ठा]न्तराणां नादाहप्रसङ्गः; उद्देश्यत्वानुद्देश्यत्वाभ्यां व्यवस्थासिद्धेरिति चोदयति- **औषधेति** ॥ नोद्देश्यत्वं प्रयोजकम्; अव्याप्तेरित्याह—**नेति** ॥ प्रयोक्तृसमवेतादृष्टात् काष्ठान्तरादावदाहः, पुरुषान्तरे तु प्रयोज्यगतादिति कल्पनावैरूप्याच्चानुपपत्तिरित्याह—**औषधलेपकेति** ॥

संयोगविशेषो दाहप्रतिकूलः, संयोगमात्रं वेति विकल्प्याद्यं प्रत्याह—

---

1 प्रतिबन्ध (क)
2 असापन्नेः (क)
3 सम्बन्धस्य (क)
* पृ. 64. प. 7,

॥ मन्त्रादिसंनिधापकादृष्टस्य, संयोगविशेषस्य वा न दाहप्रतिकूलत्वम्; संयोगविशेषनियामकाभावात् ॥

* यदप्यगादि—प्रतिबन्ध[क]मन्त्रादिसन्निधापकादृष्टविशेषस्य वा, अदृष्टविशेषार्जितस्याग्न्यङ्गुलिसंयोगादेर्वा दाहप्रतिकूल्यम्—इति, तदपि न हृदयङ्गमम्; तदुपस्थापकादृष्टविशेषस्याप्यचेतने काष्ठादावसम्भवेनौषधलिप्तकाष्ठादौ दाहप्रसङ्गतादवस्थ्यात्। अदृष्टविशेषार्जितकरतलानलसंयोगस्य कार्यप्रतिकूल्ये कदाचित्[1] [संयुज्यग वियुज्य पुनः संयोगे] दह्येत। सोप्यदृष्टविशेषकारित इति चेत्, तर्हि सर्वसंयोगानामदृष्टकार्यत्वात्कदाचिदपि दाहो न भवेत्। न ते संयुज्य पुनः *संयोगविशेषा इति चेत्, न; [दाहाजनकसंयोगाव्यावृत्तदाहजनकसंयोगव्यावृत्तजातौ प्रमाणाभावात्।] दाहादाहाभ्यां प्रत्येप्यत इति चेत्, मैवम्, विकल्पासहत्वात् ॥

॥ संयोगविशेषस्यादाहहेतोरदाहेन, दाहेन, उभाभ्यां वा कल्पनायोगाच्छक्तौ नार्थापत्तिविरोधः ॥

तथाहि – किमदाहेन तत्प्रतीतिः, उत दाहेन, आहोस्विदुभाभ्याम्? नाद्यः; दाहप्रागभावस्यानादित्वेन तदकल्पकत्वात्। न द्वितीयः; दाहस्यापि तदकार्यस्य तदकल्पकत्वादेव। तत एव न तृतीयोऽपि। तस्मान्नार्थापत्तेरन्यथोपपत्तिः। * शक्तिसाधकानुमानदूषणं स्वावसर एव निरसिष्यते। तथा सति प्रमाणेन तथाऽनुपलभ्यमानत्वादिति हेतुरसिद्धः; प्रमाणेन तथानुपलभ्यमानत्वस्य तथा[?]सत्त्वेन व्याप्तिप्रमितौ व्याप्तिग्राहकप्रमाणेन प्रमितत्वाद्व्याघातः। [अ]व्याघाते वा क्वचिदपि व्याघातो न स्यात्। अप्रमितत्वे व्याप्त्यसिध्या हेत्वसिद्धिः। साधनविकलश्च दृष्टान्तः—इति ॥

---

**अदृष्टविशेषार्जितेति** ॥ द्वितीयं शङ्कते—**सोऽपीति** ॥ संयोगमात्रमिति संयोगस्यापरजातीयं विवक्षितमिति शङ्कते—**न'त इति**।' सति संयोगविशेषे न दह्यते, तस्मिन् पुनरसति दह्यते इति तद्भावाभावयोर्दाहादाहदर्शनाज्जातिविशेषसिद्धिरित्युक्तमनुवदति— **दाहेति** ॥

एवमर्थापत्त्या शक्तिं प्रसाध्य, अनुमानतोऽपि तत्सिद्धिरनिवार्येत्याह—**प्रमाणेनेति** ॥ तदभावस्य प्रमितावपि नातीन्द्रियशक्तिप्रतीतिः, अतो न व्याघातः,

---

* पृ. 64. प. 9.
* पृ. 65. प. 8.

1 कुण्डलितां भागे क पुस्तके नास्ति
* संयोग विशेष नतेः

॥ गुरुमतानुसारेणानुमानेनैव शक्तिसाधनार्थं तद्दृष्टया निरसनीयपूर्व-पक्षोपपादनं प्राचीनमेव नैयायिकाद्यभिमतम् - अदृष्टेनैव निर्वाह इत्यादि ॥

अपरे पुनराहुः—[1]सर्वोत्पत्तिनिमित्तकारणादृष्टादेव कार्योत्पत्तेर्न शक्ति-कल्पनास्यात् । मणिसन्निधानात्तस्याभिभवः कल्प्यः, मण्यन्तरात्तस्य पुनरुद्भवः । न चादृष्टस्य सामग्रीमेलन एव व्यापार इति—वाच्यम् ; । संस्कार[2]प्रबोधादौ तस्य व्यापारा[र]दर्शनात् । न चैवम् – संयोगविभागयोरप्यदृष्टहेतुत्वमस्तीति—साम्प्रतम् ; तस्यासमवायित्वानुपपत्तेः । न चा [वा] -- अदृष्टवैगुण्यपक्षे कश्चि[श्च] दहति कश्चि[श्च]न्नेति न सम्भवतीति — कीर्तनीयम् ; अदृष्टस्य विलक्षणत्वात्,

---

अत्राह—[अ]व्याघाते वेति ॥ प्रतियोगिनोऽप्रमितत्वे तद्विशिष्टः, तदुपलक्षितो वा प्रतिषेधोऽपि न प्रमातुं शक्य इत्याशयेन द्वितीयमपवदति—अप्रमितत्व इति ॥

अनुमानादेव शक्तिसिद्धिः, सा[ना]र्थापत्तेरिति गुरुमतमवसरप्राप्तमुपन्य-स्यति—अपरे पुनरिति ॥ संप्रतिपन्नादृष्टादेव दाहोत्पत्तौ नातिरिक्तकल्पना ; गौरवादिति भावः ॥ प्रतिबन्धदशायामपि दह्येत, अदृष्टसत्त्वात् , अत्राह—मणीति ॥ सति प्रतिबन्धके तदुत्तम्भकप्रयोगेऽपि न दह्येत ; अदृष्टस्याभिभूतत्वात् , अत्राह—मण्यन्तरादिति ॥ शक्तिस्वीकारेऽपि सममेतदित्याशयः । अदृष्टस्य दृष्टं साकल्य-सम्पादकत्वम् , न त्वाहत्य कार्यसंपादकत्वम् , अत्राह—नचेति ॥ "सदृशादृष्ट-चिन्ताद्या स्मृतिबीजस्य बोधकाः" – इति संस्कारोद्बोधकत्वम् । आदिपदादौवा [दौत्पत्ति]कपितृ[सवि]सृष्ट्यादिसङ्ग्रहः ॥

संयोगादिकार्यं लिङ्गं[न] कर्मानुमानस्य; अदृष्टादेव संयोगादिसिद्धेः, अत्राह—न चेति ॥ संयोगादेरसमवायितया कर्मानुमीयते, अदृष्टं निमित्तमात्रमित्यर्थः ॥ अदृष्टस्य कार्यसंपादकत्वे तस्य प्रतिपक्षपराभवसंभावनया कार्यानुत्पत्तिसन्देहात् , तदर्थिनोऽप्रवृत्तिः, अत्राह—नवा[चा]दृष्टेति ॥ अदृष्टप्रतिबन्धपक्षे नि[ऽग्नि]गत-विशेषाभावात्किञ्चि[कश्चि ] दग्निर्दहतीति, किञ्चिन्नेति तथा कश्चिद् दहति, कश्चिन्ने [किञ्चिन्ने]त्यव्यवस्था स्यात् , अत्राह—नचेति ॥ विलक्षणत्वादिति ॥ प्रतिनियत-पुरुषदाहस्य प्रतिनियताग्निसाध्यस्याप्यप्रयोजकत्वादित्यर्थः ॥ संप्रतिपन्नोदाहरणेनै-तदुपपादयति—यथेति ॥ अभिशस्तस्य शुक्ति[द्धि]परीक्षायां होमा[म]दिक्पाल-पूजानमस्कारैर्जन्यादृष्टस्य फलप्रतिबन्धकत्वे, अग्निप्रतिबन्धकत्वे च स्वीयोऽसा-

---

1. सत्पत्तिक 2. संस्कारातबोधदौ

यथा शुद्धि[1]परीक्षायां होमादिजन्यस्यादृष्टस्य फलाग्निप्रतिबन्धकत्वे स्वोऽग्निरन्यमपि न दहेत्, पुरुषशक्तिप्रतिबन्धकत्वेऽन्योऽ[ग्निः] न दहेत्, संयोगशक्तिप्रतिब[2]न्धकत्वे, यथा[न्या]दृष्टकार्यप्रतिबन्धः क्वचिद्भवति, क्वचिन्न, [3]तथाऽदृष्टकार्यो दाहः क्वचिद्भवति, क्वचिन्नेति सम्भवति । अथवा मणिसन्निधानाददृष्टं क्वचिदुद्भूतं क्वचिदभिभूत कल्प्यते। विचित्रत्वाददृष्टगतेः सर्वमुपपद्यते । तस्मादर्थाक्षेप[ात्]शक्तिकल्पना न सिध्यतीति ॥

॥ अदृष्टस्याग्निसमवेतस्य नामान्तरेण शक्तित्वम्, आत्मसमवेतस्य मण्यादिना प्रतिबन्धः, न वा दाह इत्यादि कार्योत्पादकत्वमित्यतीन्द्रियशक्तिकल्पना गुरुमतेन ॥

* अत्र वदामः— यत्तावदभ्यधायि—अदृष्टादेव दाहोत्पत्तिरिति; तदयुक्तम्, अन्यथा[4] माण्यादिसन्निधावप्यदृष्ट[5]भावाद्दाहप्रसङ्गात् । प्रतिबन्धकसन्निधौ तस्या अभिभवः, उत्तम्भकसन्निधौ पुनरुद्भव इति चेत्, न; तस्यादृष्टस्याग्निसमवेतत्वे शक्तिस्वीकारात् । आत्मसमवेतत्वे तद्दाहानुकूलमदृष्टं महापातकादिजन्यञ्चेत्, न मण्यादिसन्निधानेन दुर्बलेनाभिभूयेत । मण्यादिजन्यं चेत्, तेन तदभिभवासम्भवात्, सत्यपि प्रतिब[6]न्धके दह्येत । अपि चादृष्टस्य दृष्टसामग्रीमात्रसम्पादक-

---

वह्निः स्वमिवान्यमपि न दहेदिति । पुरुषशक्तिप्रतिबन्धकत्वे च सोऽग्निरिव तमन्योऽप्यग्निर्न दहेदिति च न कीर्तनीयं यथेत्यर्थः । होमादिजन्यादृष्टं शुद्धस्य करतलानलसंयोगशक्तिं प्रतिबध्नाति, अतोऽसंप्रतिपन्नमुदाहरणम्, अत्राह— **संयोगेति** ॥ क्वचित्परीक्ष्ये भवति, क्वचिन्न=ततोऽन्यस्मिन्पुरुषे न भवतीति व्यवस्था यथा, तथाऽदृष्टप्रयुक्तो दाहः क्वचिदनुद्देश्यपुरुषप्रयुक्तो भवति, क्वचिदुद्देश्ये न भवतीति व्यवस्थेत्यर्थः ॥ दाहकारणमदृष्टमभिभूतमपि क्वचिद् दाहमापादयतीति व्याहतमेतत्, अत्राह—**अथवेति** ॥ प्रतिबन्धकमण्यादिसन्निधानाविशेषे कुतस्तस्येयं व्यवस्था ? अत्राह—**विचित्रत्वादिति** ॥ **अर्थाक्षेपे[पादि]ति** ॥ दृष्टानुपपत्तिरर्थः, तेनोपपादकप्रतीतिरित्यर्थः ॥ तददृष्टमग्निसमवेतम्, आत्मसमवेतं वा प्रथमं प्रत्याह— **नेति** ॥ स्वरूपमात्रसम्बन्धा[न्ध्य]तीन्द्रियातिशयस्य शक्तित्वादित्याशयः । यस्मिन् सत्येव यद्भवति, नासति, तत्तस्य कारणम् । दृष्टकारणपौष्कल्येऽ-

---

1. परीक्षया 2. प्रतिबन्धकत्वोऽन्यथा 3. त्नथा
4. अग्न्या 5. अदृष्टस्य भावात् 6. प्रतिबन्धे
* पृ. 84. प. 3.

त्वेनाग[ह]त्य कार्याप्रयोजकत्वात् सत्यां दृष्टसामग्र्यां दाहानुपपत्तिः; इतरथा सत्यपि कर्मणि कदाचिद्विभागो न जायेत। उद्बुद्धसंस्कारस्य स्मृतिसामग्र्यन्तर्भावात् संस्कारोद्बोधकत्वमपि सामग्रीसम्पादकत्वमेव॥

॥ अदृष्टस्य कार्योत्पादकत्वे संयोगविभागयोरपि तज्जन्यत्वापत्त्या कर्माप्रत्यक्षवादिगुरुमते कर्मापि न सिध्येत्, अतः शक्तेरेव कार्योत्पादकत्वम्, नादृष्टस्य॥

किञ्च संयोगविभागयोरप्यदृष्टकार्यत्वोपपत्त्या कर्माप्रत्यक्षवादिनः कर्मापि न सिध्येत्। संयोगविभागयोरसमवायिकारणतया तत्सिद्धिः; अदृष्टस्यासमवायित्वायोगादिति चेत्, न; अदृष्टस्य विचित्रशक्तित्वाद् अप्रत्यासन्नस्यासमवायित्वोपपत्तेः, प्रध्वंसवद्वा संयोगविभागयोरसमवायिविकल्पयोरुपपत्तेः। भावकार्यस्य[स्व]समवायिपूर्वकत्वं नियतमिति चेत्, न; भावातिरिक्ताभावानभ्युपगमेनाभाव[भाव]कार्य इति विशेषणानुपपत्तेः। असमवायिकारणस्य नित्यत्वे त[स]दा संयोगा[1]समवायि[य] प्रसङ्ग[ा]त्, अनित्यत्वे तस्याप्यसमवाय्यन्तरपुरस्सरत्वेऽनवस्थानात्, तदपुरस्सरत्वे तत्रैव

---

दृष्टव्यतिरेकात् कार्यव्यतिरेकादर्शनान्नादृष्टस्य कार्यप्रयोजकतेत्याह—**अपिचेति**॥ परम्परयापि कार्यप्रयोजकत्वमदृष्टस्येष्टं चेत्, आहत्यैव तन्नेष्टम्, अत्राह—**इतरथेति**॥ संस्कारोद्बोधादि साक्षादेव करोतीत्युक्तं दूषयति—**उद्बुन्धे[द्धे]ति**॥ अदृष्टविशेषोपनीतकालापेक्षाविद्याया औत्पात्तिकसवितृसृष्ट्यादिसामग्रीत्वमित्यर्थः॥ विभागपुरस्सरं [रः] संयोगः, स्वश्रयसमवेतातिशयपुरस्सरं[रः],कादाचित्कत्वात्; घटवदित्यनुमानं विपक्षे बाधवैधुर्यादप्रयोजकमेवं सति स्यादित्याह—**किञ्चेति**॥ अदृष्टं कार्यकारणैकार्थसमवायरूपप्रत्यासत्तिविरहादसमवायिकारणं न प्र[प्रः]युज्यत इत्याह—**अदृष्टस्येति**॥ संयोगविभागौ, असमवायिपुरस्सरौ, कार्यत्वात्; घटवदित्यस्य व्यभिचारमभिसन्धाय, प्रत्यासन्नमेवासमवायीति नियममङ्गीकृत्याह—**प्रध्वंसवदिति**॥ संयोगादेरसमवायित्वेन कर्मानुमानायोगात्कारणत्वेनानुमेयम्, तच्चाशक्यम्; अदृष्टेनार्थान्तरत्वादित्याशयवानसमवायिनो नित्यत्वम्, अनित्यत्वं वेति विकल्प्य पराकुरुते—**असमवायीति**॥ किं दृष्टार्थप्रवृत्तेरनुपपत्तिः, उतादृष्टार्थायाः,

---

1. कुण्डलान्तर्गतं नास्ति।

व्यभिचाराच्च । अदृष्टकारणसाद्गुण्येऽप्यदृष्टवैगुण्यमाशंकमानानां क्वचिदपि कार्यानिश्चयेन प्रवृत्त्यनुपपत्तिश्च । शक्तिप्रतिबन्धेऽप्येतत् तुल्यमिति चेत्, न; दृष्टार्थप्रवृत्तेः कृष्यादिवत् सन्देहादप्युपपत्तेः, औषधलिप्ताचेतनकाष्ठादावदाहदर्शनाददृष्टं न मन्त्रादिभिरभिभूयत इति स्थितेऽदृष्टार्थप्रवृत्तिरपि, विशिष्टादृष्टोपस्थापि[ता]दृष्टभोगसामग्र्याः, प्रतिबन्धो[न्धे] विशिष्टादृष्टविरोधादेव न सम्भवतीति निश्चयात्, स्यात् ॥

॥ अदृष्टसाद्गुण्यवैगुण्याभ्यामेव दाहादाहस्वीकारव्यवस्था, अदृष्टवैलक्षण्ये प्रमाणाभावश्च ॥

किञ्चादृष्टसाङ्गुण्यवैगुण्याभ्यामेव दाहादाहौ वाञ्छतः प्रतिबन्धकेनाग्नौ न किञ्चिदाहितम्, इति पावकः किञ्चिद्दहति, किञ्चिन्नेति व्यवस्था न स्यात्। अदृष्टविशेषादुपपत्स्यत इति चेत्, न; (न)*प्रमाणाभावेनादृष्टगतवैलक्षण्यस्य लीलावतीकारोक्तादृष्टसंयोगविशेषवदपास्यत्वात् ॥

* यदपीदमुदाहारि—अभिशस्तस्य शुद्धिपरीक्षायां होमदिक्पालपूजादिना जन्या[संपादिता]दृष्टस्य फलप्रतिबन्धकत्वे, अग्निप्रतिबन्धकत्वे च स्वीयोऽसावग्निः

---

नाद्य इत्याह—**न दृष्टार्थेति** ॥ अपिशब्दाद् अ[दाहा]नुरूपैकतरकोटिनिश्चयाच्चेत्यर्थः ? चरमं प्रत्याह—**औषधेति** ॥ प्रतिबन्धकेनादृष्टाभिभवे काष्ठादावदाह[हो] न स्या[स्यात्] अभिभाव्यादृष्टाभावात्, अतो न क्वचिददृष्टं प्रतिबध्यत इति स्थिते निरवद्यवेदावेदितादृष्टविशेषोपपादितदेवदेहादौ दृष्टभोगसंपादकस्य प्रतिबन्धोऽप्रतिबन्धा[न्ध्य]दृष्टविरोधादेव न सेद्धुमर्हतीति निश्चयाददृष्टार्थप्रवृत्तिरपि स्यादित्यर्थः ॥

प्रतिबन्धकोत्तम्भकाभ्यामदृष्टाभिभवोद्भवस्वीकारे बाधकान्तरमीरयति—**किञ्चेति** ॥ दाहाजनकादृष्ट[ा]व्यावृत्ततज्जनकादृष्टव्यावृत्तजातिरदृष्टविशेषो दाहादाहयोः प्रत्येकसमुदितयोरकल्पकयोर्न सिध्यतीत्याह—**नेति** ॥ न च दाहस्यैव तत्कल्पकत्वम्; सत्यपि तस्मिन् प्रतिबन्धदशायां दाहानुदयात् ॥ न च तत् तदादि[भि]भूतम्; अमूर्तस्यासंभवादभिभवा[तस्याभिभवासंभवा]दिति भावः । निराकाराद[र्था]वमगव्यतिरेकेण निराकरणावगमायोगात् । गूढाभिप्रायं पूर्ववादिनोक्तं साकल्येनानुवदति—**यदपीति** ॥ शुद्धस्य परीक्ष्यस्य देवताप्रीतिः, अत आह—**संपादि-**

---

* पृ. 85, प. 2

स्वमिवान्यमपि न दहेत्—इति, पुरुषशक्तिप्रतिबन्धकत्वे सोऽग्निरिव तमन्योप्यग्निर्न दहेदिति च न कीर्तनीयम्, संयोगशक्तिप्रतिबन्धकत्वे [1]यथाऽदृष्टकार्यं [र्ये] प्रतिबन्धः क्वचिद्भवति क्वचिन्नेति व्यवस्था, तथाऽदृष्टकार्यो दाहः क्वचिद् भवति, क्वचिन्न भवतीति[2](सम्भवतीति), तदतिमन्दम्; होमादिनाऽऽ राध्यमाना[न]देवताप्रीतिरुत्पद्यमानाऽऽराधकस्यादाहसामग्र्यन्तर्भूतेति स्वीकाराद् दृष्टान्तवैषम्यात्। नच—अदाहस्यानादेर्न सामग्रीसम्भव इति – वदितव्यम्; दृष्टदाहकारणपौष्कल्ये सत्यदाहान्तरस्य कालान्तरप्राप्तेः साध्यत्वात् ॥

॥ अदृष्टस्य दाहादाहप्रतिबन्धकत्वनिरासस्य परमतानुपयोगः, तेन स्वस्यैव निरासात् ॥

*यदपि प्रतिबन्धसंनिधे[3]रदृष्टं क्वचिदुद्भूतम् क्वचिदभिभूतम्—इति, तदौषधलिप्तकाष्ठादौ दाहप्रसङ्गान्निरस्तम्—इति, सोऽयं पवनतनयवार्तामुपश्रुत्य तत्स्पर्धया बालवानरः कियदपि दूरमुत्प्लुत्य महार्णव एव पतितः प्राह—“अपार एवायमकूपारः मिथ्या रामायणमि”ति ॥

---

**तेति** ॥ स्वीकृत्यपरिहराति—**तदिति** ॥ सत्याँ सामग्र्यां कार्यानुदयविरोधं परिहर्तुं विशिनष्टि—**दृष्टेति** ॥ काष्ठादौ प्रतिबन्धा[का]दृष्टासिध्या प्रतिषेधति—**तदौषधेति** ॥

एवं परेरितं परास्य कौमारिलौपनिषदैः शक्तिः समर्थिता, इति स्वयमपि तत्साधनाय प्रवृत्तश्शाखामृगपोतवृत्तमनुहरतीत्युपहसति—**सोयमिति** ॥ अकूपारः= समुद्रः। तदितरकारणकलापे सति ईश्वरेच्छाव्यतिरेके दाहव्यतिरेकस्य दुरुदाहरणत्वान्न तस्याः कारणतेत्याह—**तदसारमिति** ॥

ईश्वरेच्छायाः कार्यत्वात्प्रतिबन्धकेन विनाशात् तदभावेनोत्तम्भकेनवोत्पादाद् न प्रतिबन्धदशायां दाहप्रसक्तिरिति यद्वदितम्, तदनुवदति - **यच्चेति** ॥ विमता, न जायते, भावत्वे सत्यसमवायिशून्यत्वात्, आकाशवत्, इत्याह—**तदिति** ॥ चेतनविशेषगुणानामन्तःकरणसंयोगस्यासमावायित्वेन क्लृप्तस्येहासंभवादिति भावः ॥ कार्यैकार्थसमावायात्पूर्वसिद्धेश्वरेच्छादिकमसमवायीति शङ्कते—**नित्येति** ॥ नित्येश्वरेच्छा, न समवायिकारणम्, इच्छात्वात्, असदादीच्छावत्,

---

1. यथादृ (ख)
* पृ. 85. प. 4

2. तोभागी नास्ति (ख)
3. प्रतिबन्धवनिधेःक

॥ ईश्वरेच्छाया दाहसामग्र्यां नान्तर्भावः, अन्यथाऽनेकेश्वरेच्छाकल्पनाप्रसङ्गः ॥

[1]यदपीदमवादि—ईश्वरेच्छाविशेषात् स्फोटोपपत्तिः—इति, तदसारम्; तदिच्छाया दाहसामग्र्यन्तर्भावे मानाभावात्, एकदा जायमानानेककार्यप्रयोजकानेकेश्वरेच्छाकल्पनागौरवाच्च ॥

॥ नित्यैकेश्वरेच्छाया दाहानुकूलत्वे प्रतिबन्धदशायामपि दाहापत्तिः ॥

[2]यदुक्तम्—एकैवेच्छाऽनेकस्फोटानुकूला—इति, तदयुक्तम्; नित्यत्वात्तस्याः प्रतिबन्धदशायां दाहप्रसङ्गात् ॥

॥ ईश्वरेच्छाया असमवायिकारणभावात्, तस्या केवलं निमित्तकारणत्वात्, ईश्वरानुमानस्य कर्तृतामात्रेण तत्साधकत्वात्, तद्गतविशेषाद्यनाक्षेपकत्वात्, तन्निष्ठत्वसाधकानुमानान्तरात् बाधाच्च न कार्यत्वम् ॥

[3]यच्चावाचि—तस्याः कार्यत्वम्—इति, तदप्ययुक्तम्; असमवायिकारणानिरूपणात्। नित्येश्वरेच्छादि तदस्तीति चेत्, न; ईश्वरेच्छादीनां निमित्तमात्रत्वेन व्याप्तत्वात्, इश्वरेच्छाकार्यत्वे मानाभावाच्च। [4]धर्मिग्राहककार्यत्वादिना तत्सिद्धमित्युक्तमिति चेत्, न; कार्यत्वादेः कर्तृमात्राक्षेपेण चरितार्थत्वात्; इतरथा शरीराद्याक्षेपकत्वापातात्। [5]विमता, नित्या, क्षित्याकाशसंसार्यनाश्रितत्वे सति नित्यविशेषगुणत्वात्; सलिलपरमाणुरूपवदित्यादि विरोधाच्च[ना]। [6]कार्यत्वसिद्धकार्येच्छापक्षीकरगे धर्मिग्राहकप्रमाणबाध इति चेत्, न; त्वद्वचनात् प्रतीति[त]मात्रपक्षीकरणात्, प्रतिवादिप्रतीतेरप्रमाणत्वात्, [7]न तया बाधः ॥

---

एवं त्वदीयज्ञानादिकमपि धर्मीकृत्य प्रयोक्तव्यमिति परिहरति—नेति ॥ यत् कार्यम् तत् सकर्तृकमिति[स]कर्तृत्वव्याप्तिग्रहात् तन्मात्रानुमापकत्वम्, न तु तदीयेच्छाकार्यत्वस्य, अव्यापकत्वादिति परिहरति—नेति ॥ कर्तुः कुलालादेरनित्येच्छादिमत्त्वमस्तीति तदनुमाने, शरीरित्वाति[दि] च स्यादित्याह—[इ]त[र]थेति ॥

---

1. पृ 65. प 13
2. पृ 65. प 16
3. पृ 66. प 1
4. पृ 66. प 5
5. पृ 66. प 6
6. पृ 66. प 7
7. तयो

॥ ज्ञानप्रयत्नयोरप्यनन्तत्वकल्पनापत्त्या नानेकेश्वरेच्छाकल्पना ॥

प्रतीतिमात्रसिद्धस्यानुमानाङ्गत्वं च प्रतिबिम्बादौ दृष्टम्। [1]अनन्तेच्छास्वीकारप्रसङ्गश्चेष्ट एवेति चेत्, न; तुल्यन्यायतया ज्ञान प्रयत्नयोरपि भगवत्यानन्त्यप्रसङ्गात्, इच्छानन्त्ये प्रमाणाभावाच्च ॥

॥ स्फोटादिपक्षकानुमानानामीश्वरजन्यत्वसाधनस्य साध्याप्रसिध्यंशबाधदृष्टान्तसाध्यवैकल्यादिदूषितत्वम् ॥

[2]स्फोटादिकार्यम्, ईश्वरेच्छाजन्यम्, कार्यत्वात्, सम्प्रतिपन्नवदिति चेत्, न; साध्यशून्यत्वान्निदर्शनस्य। अयं घटः, एतज्जनकानित्येतरेच्छाजन्यः, कार्यत्वात्; पटवदिति चेत्, न; एतत्पदस्य साध्यविशेषणत्वेऽशतः स्ववृत्तिविरोधात् साध्यस्य पक्षधर्मत्वासिद्धेः, उपलक्षणत्वेऽप्रसिद्धविशेषणत्वात्, निदर्शनस्य साध्यवैकल्याच्च ॥

---

मद्वचनप्रतीतपक्षीकरणे मद्वचनमूलतदनित्यत्वग्राहिमत्प्रतीत्या विरोधः, अत्राह—**प्रतिवादीति** ॥

विपर्यय[ये]गौरवबाधमभिधत्ते—**अनन्तेति** ॥ इच्छा, अनन्तेत्येतत्समानन्यायतया ज्ञानप्रयत्नयोः कार्यत्वादिप्रसक्तौ तदसमवायिमनोयोगाङ्गीकारे सुखदुःखादिप्रसङ्गोऽनिवार्य इत्याह—**न तुल्येति** ॥

दृष्टान्ते साध्यविरहं परिहर्तुमाह—**अयमिति** ॥ घटान्तरभागे सिद्धसाधनं परिहर्तुम्—'अयं घट इत्युक्तम्', अदृष्टादिनाऽर्थान्तरत्वं वारयति—**इच्छेति** ॥ कुलालेच्छाकार्यतया सिद्धसाध्यतां वारयति—**अनित्येतरेति** ॥ अप्रसिद्धविशेषणता मा भूदित्युक्तम्—'**एतज्जनके**'ति ॥ एतज्जनकानित्यादितरत्वमेतदजनकत्वेन वा, नित्यत्वेन वा। नाद्यः; पक्षे व्याहतेः, इति नित्यमेव सिध्यदिच्छारूपंप्रसिध्यतीति भावः ॥

एतत्पदपरामृष्टपक्षस्य साध्यविशेषणत्वं वा, [तदुपलक्षणत्वं वा ।] आद्यमपवदति—**नेति** ॥ द्वितीयं प्रत्याह—**अभावेति १** । [उपलक्षणत्व इति] एतदर्थस्योपलक्षणतया बहिर्भावादनित्येतरेच्छादिसाध्यमप्रसिद्धमित्यर्थः ॥ यथा संयोग-

---

1. पृ 67. प 2
2, पृ 67. प 4

॥ संयोगविशेषस्यदाहकारणत्वनिरासः, तत्साधकानुमानेऽप्रसिद्धविशेषणत्वादि च ॥

[1]यत्त्विदं गदितम्—करतलानलसंयोगविशेषेण स्फोटादिकार्योपपत्तेश्च—इति, तद् दुरुक्तम्; प्रमाणाभावात्। अयं संयोगः, [2]स्फोटाजनककरतलानलसंयोगव्यावृत्त[3] जातिमान् न भवति, संयोगत्वात्; अन्यसंयोगवदिति प्रयोगविरोधाच्च, [4]तथाविधजात्यसिद्धावप्रसिद्धविशेषणतेति चेत्, न; भवद्वचनप्रतीतस्य निषेधात्। न हि प्रामाणिकमेव निषेध्यमिति नियमः; घटैतद्भूतलसंसर्गस्याप्रामाणिकस्यापि निषेधात्, अन्यथातिप्रसङ्गात्। [5]तथापि तथाविधजातिरहितसंयोगपक्षीकरणे सिद्धसाधनम्, तथाविधजात्याश्रयसंयोगपक्षीकरणे बाध इति चेत्, न; स्फोटजनकसंयोगमात्रपक्षीकरणात्, अन्यथाऽयं प्रदेशः, अग्निमानित्यादावनग्निमतः पक्षीकरणे बाधात्, अग्निमतः पक्षीकरणे सिद्धसाधनादुच्छिन्नैवानुमानकथा स्यात् ॥

॥ मन्त्रादिजन्यादृष्टस्यादाहकारणत्वस्य पूर्वमेव निरासान्न तद्व्यतिरेकेण शक्तिरिति शङ्कानिरासः। तत्रानुमानस्याप्रसिद्धविशेषणताबाधौ, आगमाविरोधः, विपक्षे बाधकाभावश्च ॥

[6]यच्चाभाणि—मन्त्रौषधजन्यादृष्टाभावेन स्फोटादिकार्योपपत्तेश्च—इति, तदयुक्तम्; मन्त्रादिजन्यादृष्टस्य दाहप्रातिकूल्यनिरासात्, तान्यदृष्टानि, न स्फोटजनकाभावप्रतियोगीनि, अदृष्टत्वात्, अन्यादृष्टवदिति प्रयोगविरोधाच्च। तथाविधादृष्टासिद्धि[7]बाधौ पूर्ववन्निरस्यौ। [8]मन्त्रादिजन्यस्यादृष्टस्य दाहप्रातिकूल्यप्रतिपादकागमाभावान्नागमविरोधोऽपि। विपक्षे प्रतिबन्धकत्वासिद्धिप्रसङ्गो बाधः ॥

---

विशेषे मानाभावः, तथा तदभावेऽपि मानाभावा[त्]सन्दिग्धाऽन्यथोपपत्तिः, अत्राह—**अयमिति**। प्रतियोगिनोऽप्रामाणिकत्वे प्रतिषेधोऽप्रामाणिकः स्यात्, अत्राह—**न हीति**॥ विशेषवत्तया सन्दिग्धस्य पक्षत्वान्न किञ्चिदवद्यमित्याह—**न स्फोटेति**॥

**दाहप्रातिकूल्यनिरासादिति**॥ औषधलिप्तकाष्ठादौ दाहप्रसङ्गेन निराकरणादित्यर्थः। **पूर्ववदिति**॥ प्रतिवादिवचनप्रतिपन्नादृष्टस्य स्फोटजनकत्वा[क]भावप्रतियोगितया सन्दिग्धस्य पक्षीकरणादित्यर्थः ॥

---

1. पृ 68. प 3
2. स्फोट
3. यावृत्तजा
4. पृ 68. प 5
5. पृ 68. प 6
6. पृ 68. प 9
7. अप्रसिद्धिबाधौ
8. पृ 68. प 11

॥ प्रतिबन्धकत्वस्य दुर्वचत्वम् ॥

[1]कार्यजनकाभावप्रतियोगित्वं प्रतिबन्धक[त्व]मित्यपि न; कार्य एवातिव्याप्तेः, कार्यप्रागभावस्य कार्या[र्थ]जनकत्वात्। न च तदेव तस्य प्रतिबन्धकम्; स्वप्रवृत्तिविरोधात्। तस्मान्नार्थापत्तेरन्यथोपपत्तिः ॥

॥ व्यतिरेकाव्यतिरेकहेतुत्वाहेतुत्वशक्तिकारणस्वरूपत्वतदतिरेककेवलत्वाग्न्यादिसाहित्यविकल्पानामनिर्वचनीयवादेऽनिर्वचनीयत्वाङ्गीकारानङ्गीकारादिना निरासः ॥

[2]यदपि—व्यतिरेकाव्यतिरेकविकल्पेन दूषणमुदितम्—तदस्मन्मतेऽनङ्गीकारपरास्तम्; अनिर्वचनीयत्वात्। यत्पुनः—हेतुः, अहेतुर्वेति—विकल्पितम्, तत्र किं हेतुत्वमभिमतम्—नियतप्राक्सत्त्वम्? उत सहकारिविरहप्रयुक्तकार्याभाववत्त्वम्, आहोस्वित् शक्तिमत्त्वम्? तत्राद्यावङ्गीकृतौ। चरमोऽनङ्गीकार[;?] प्रयुक्तः ॥

किञ्च पक्षत्रयेऽपि कारणस्वरूप[3]मात्रसम्बन्धा[द्धा]तीन्द्रियधर्मस्वीकारे धर्मिप्रमितिविरोधात् तन्निरासोऽशक्यः, तदनङ्गीकारे त्वाश्रयासिद्धस्तर्काभासः; प्रामाणिकस्यैव भवतो धर्मित्वात् ॥

[4]योऽपि हेतुत्वे केवला[अ]ग्न्यादिसहिता वेति विकल्पः, स परं तवैव शोभते; कारणस्वरूपमात्रसम्बद्धातीन्द्रियातिशयः शक्तिरित्यावेदितत्वात् ॥

---

अतिव्याप्तिमुपपादयति—**कार्येति** ॥ व्यतिरेकाव्यतिरेकविकल्पोऽनिर्वचनीयवादिन्यनवसरनिरस्त इत्याह—**तदस्मन्मत इति** ॥ **सहकारिविरहेति** ॥ अभाववत्त्वं हेतुत्वमित्युक्ते हेत्वभाववति सामान्यादावव्याप्तिः, अत उक्तम्—**कार्येति** ॥ कार्यात्यन्ताभाववत्त्वमहेतोरस्ति, तत उक्तम्—**सहकारिविरहप्रयुक्तेति** ॥

स्वरूपसहकारिसमवधानातिरिक्ता शक्तिः प्रमिता, नो वेति विकल्प्यापास्यति—**किञ्चेति** ॥

---

1. पृ 68. प 12
2. पृ 71. प 6
3. मात्रासंबन्ध
4. पृ 71. प 9

॥ शक्तेः सहकारिकारणत्वस्य साहित्यस्य, सहकारित्वस्य वाऽऽपादकत्वे आत्माश्रयादिदूषणग्रस्तत्वान्निरासः ॥

[1]यत्तूक्तम्—सहकारिकारणमेव शक्तिः—इति, तत्र सहकारिकारणत्वमापाद्यम्, सहकारित्वादित्यापादकमापाद्या[द]भिद्यमानं कथं नात्माश्रयमावहेत्? न हि साहित्यमात्रमापादकम्; मेयत्वादौ व्यभिचारात्। [2]किञ्चित्सहकारिकारणमेवशक्तिरिति तर्कमात्रमनुमानं[न] बाधे कथमनुग्राह्यप्रमाणाभावान्न तर्काभासः? प्रमाणानुग्राहकत्वात् तर्कस्य। द्वितीये तथाविधशक्तिपक्षीकरणे कथं[3] न धर्मिप्रमितिविरोधः? तदतिरिक्तसहकारिचक्रपक्षीकरणे कथं न सिद्धसाधनता, [4]यच्चोक्तम्—अथ न सर्वमित्यादि, तच्छक्तेः सहकारिमात्रत्वासिद्धावनवसरग्रस्तमनौचित्यदोषं नातिवर्तते ॥

॥ शक्तेरपि शक्तिरस्ति वा न वेति विकल्प्य तद्दूषणानां सहकारिकारणतापक्षे, सामान्यसंयोगादिशक्तितावादेऽपि साम्यात् स्वतन्त्रशक्तिस्वीकारे न दोषलेशोऽपि गुरुमतेऽपि ॥

[5]यच्चावाचि—शक्तिशब्दवाच्यस्य शक्तिरस्ति वा, न वा, इत्यादि, तत् तुरगारूढस्य तुरगविस्मरणवृत्तमनुसरति—यदयं न्यायाभिमानी न्यायं नानुसन्धत्ते। तथाहि—यस्य सहकारिमात्रं शक्तिः, तस्यापि सहकारिणः सहकार्यन्तरमस्ति वा, नवा। न चेत्, यथा सहकरिणः सहकार्यन्तररहितस्य कारणत्वम्, तथाग्न्यादेरेव कारणत्वं किं न स्यात्? इति सहकारिमात्रविलयः। अस्ति चेत्, तत्रापि सहकार्यन्तरप्रसक्तावनवस्थायां स्वव्याघातापत्त्या कथं न जातिः?

---

सामान्यावगमविशेषानवगममूलो विकल्प इह विशेषावगमविरोधे नोत्थातुमलमित्याह—**स परमिति** ॥

शक्तेः सहकारिकारणत्वस्य सहकारित्वमापादकम्, साहित्यं वेति विकल्प्य प्रथमं प्रत्याह—**तत्रेति** ॥ द्वितीयमपवदति—**न हीति** ॥ सत्यपि मेयत्वादौ साहित्ये सहकारिकारणत्वाभावादित्यर्थः। **तथाविधशक्तेति** ॥ [स्व]रूपमात्रसंबन्धातीन्द्रियातिशयरूपेति यावत् ॥

---

1. पृ. 71 प 11.
2. पृ. 71 प 12.
3. पृ. 71 प 12.
4. कथं न क
5. पृ. 72 प 3.

[1]यत्पुनरभ्यधायि —सामान्यसंयोगादिशक्तिपक्षेऽपि समानः प्रतिबन्धः— इति, तन्न शोभते; प्रतिबन्धसत्त्वासत्त्वयोः सामान्यादेरविशेषात् ॥

॥ अतिरिक्तशक्तिस्वीकारे कौमारिलमतेन प्रयोजनविशेषाभिधानोपक्रमः ॥

अतिरिक्तशक्तौ[क्तेः] को विशेष इति इति चेत्; श्रूयतां तर्हि—**कौ मा रि ल द र्श न रहस्यम् ।**

॥ सहजजन्यभेदेन भाट्टमते शक्तिद्वयम्, तस्य स्वरूपकार्यादिविवेचनं च ॥

द्वे किल भावानां शक्ती—एका भावकारणजन्या सहजेत्युच्यते । सा च सहकारिषु सत्सु कार्योत्पत्तिविनाशाभ्यां कार्यजननशक्तिमुत्पादयति , सा च कार्यम् । एवं च यत्र कार्यजननशक्तिरनुत्पन्ना, उत्पन्नाऽपि प्रतिबन्धकसन्निधेर्नश्यति, तत्र कार्यानुदयोऽपि । प्रतिबन्धाव[प]गमे पुनरुत्पन्नया कार्यजननशक्त्यै[2]वाऽनष्टया कार्योत्पत्तिः । यत्र पुनः प्रबलेनैव प्रतिबन्धकेन सहजशक्तेरवि[पि]नाशः, तत्र कार्योदयोऽपि नास्तीति ॥

---

हेतुस्वरूपसंसृष्टातीन्द्रियधर्मस्य शक्तित्वेन सहकारिरूपत्वासिद्धावुत्तरविकल्पदूषणमस्थाने इत्याह—**तच्छक्तेरिति** ॥

सामान्यादिव्यतिरिक्तशक्तेर्मन्त्रादिना नाशे मन्त्राद्यपगमे कार्यानुदयः स्यात्, अतोऽतिरिक्तत्वेऽपि प्रतिबन्धा[न्ध]सिद्धिः समेति शङ्कते —**अतिरिक्तशक्तेरिति** ॥ किं भट्टपादनये विशेषः पृच्छ्यते? भगवत्पादनये वा। प्रथमं प्रत्याह—**श्रूयतामिति** ॥

**भावकारणजन्येति** ॥ भावस्य पावकादेर्यज्जनकम्, तस्मादेव जन्येत्यर्थः ।

द्वितीयशक्तिमिदानीं दर्शयति —**सा चेति** ॥ सहकारिषु—करतलानलसंयोगादिषु, कार्योत्पत्तिविनाशाभ्यामुत्तरकार्यजननात् पूर्वकार्यविनाशाच्च सहकारिसमवधानवति हेतौ कार्योत्पादनशक्तिमुत्पादयतीति यावत् ॥ उत्पन्नयापि किं स्यात्, अत आह —**सा चेति** ॥ **कार्यम्** ॥ उत्पादयतीति शेषः । सहजशक्त्या कार्यजननशक्तिरुत्पाद्यते चेत्, प्रतिबन्धदशायामपि कल्प्येत, अत्राह —**एवं चेति** । प्रतिबन्धकसन्निधिना कार्ये[र्य]जननशक्तिविनाशे, प्रतिबन्धकविगमे कार्यं न स्यात्, अत्राह—

---

1. पृ 72 प 11.
2. शक्त्यै वानष्टया क

॥ वेदान्तनये प्रतिबन्धः नाग्निर्दहतीति व्यवहारालम्बनयोग्यतैव, सा च संयोगादिसहकारिचक्रातिरिक्ता ॥

अस्मत्सिद्धान्ते तु प्रतिबन्धकेन क्रियते—नाग्निर्दहतीति विपरीतव्यवहारालम्बनयोग्यता । सा च भवतो न सम्भवति ; सामान्यसंयोगादिसहकारिस्वरूपातिरिक्तयोग्यतानङ्गीकारादिति ॥

॥ प्रतिबन्धस्य न विसामग्रीत्वम्, न वा प्रतिबन्धकाभावस्य कारणत्वम् ; प्रमाणाभावात् ॥

[1]यदपि मतम्—प्रतिबन्धोऽपि[न्धो वि]सामग्री—इति, तदप्यनुचितम्, अग्न्यङ्गुलिसंयोगे दाहकारणपौष्कल्यात् । अथ प्रतिबन्धे सति तदभावरूपकारणविरह इति—मतम्, तदसत्; तदभावस्य कारणत्वे प्रमाणाभावात् ॥

[2]अन्वयव्यतिरेकाविति चेत्, मैवम्; उत्तम्भकसन्निधौ प्रतिबन्धकसन्निधानेऽपि [3]कार्यदर्शनात्, व्यतिरेकासिद्धेः ॥

॥ उत्तम्भके सति प्रतिबन्धकेन कार्यानुत्पादान्नान्वयव्यतिरेकौ, न वोत्तम्भकाभावविशिष्टस्य तौ ; विकल्पासहत्वात् ॥

[4]यत्पुनरभिहितम्—उत्तम्भकाभावविशिष्टमण्यादेः प्रतिबन्धकत्वादुत्तम्भकप्रयोगकाले तदभावविशिष्टमण्याद्यभावः—इति, तत्रेदं संप्रधार्यम्—विशिष्टाभावः

---

—प्रतिबन्धकापगम इति । तर्हि तैलकलुषितशालिबीजादौ तैलकालुष्यविलये कार्यमुल्लसेत्, अत्राह—यत्रेति ॥

द्वितीयमुत्तरयति—अस्मदिति ॥ ॥सहकारिचक्रं शक्तिरितिमते विपरीतव्यवहारयोग्यतां प्रतिबन्धकः किं न कुर्यात्? अत्राह—सा चेति ॥

प्रतिबद्धो[न्धो]पि[वि]सामग्री"ति लक्षणमसंभवेन दूषयति—तदपीति ॥ प्रतिकूलव्यतिरेकस्य कारणत्वान्नासंभव इति शङ्कते—अथेति ॥

असत्प्रतिपक्षस्य मण्यादेः प्रतिबन्धत्वात सत्प्रतिपक्षदशायां पतिबन्धाभावोऽस्त्येव, इत्यन्वयव्यतिरेकसिद्धिमुक्तामनुवदति—यत्पुनरिति ॥ विशिष्टेति ॥

---

1. पृ. 73. प. 3.
2. पृ. 73. प. 17.
3. कार्यदर्शनत्व व्यतिक
4. पृ. 74. प. 11.

किं विशेषणाभावः ? विशेष्याभावो वा ? तदभावद्वयं वा ? तदरिक्तो वा ? आद्ये विशेषणम् उत्त[म्भ]काभावः, तदभावश्चोत्तम्भक एव, इति मण्याद्यसन्निधावप्युत्तम्भकासन्निधौ कार्यं न स्यात् । द्वितीये तूत्तम्भकसन्निधानेऽपि विशेष्यमण्यादिसन्निधाने कार्यं न स्यात् । तत एव न तृतीयः ; विशेष्यमन्त्राभावस्य विशेषणाभावरूपोत्तम्भकस्य च तदभावद्वयत्वात् । नाप्यन्तिमः ; विशिष्टस्य तत्त्वान्तरत्वापातात् । न हि तत्त्वान्तरमेव तत् ; तस्य नित्यत्वे सदाऽकार्यप्रसङ्गात् , अनित्यत्वे गुणादौ तदुत्पत्तिसामग्र्यनिरूपणात् ॥

॥ उत्तम्भकाभावविशिष्टमन्त्राद्यभावकारणतायामुत्तम्भकाभावो मण्याद्यभावस्य विशेषणम्, उत मन्त्रादेः । उभयमपि न युक्तम् ; कालदेशभेदेनोत्तम्भकयोगे देशकालान्तरयोरपि कार्यप्रसङ्गात्, अनियतहेतुकत्वात् ॥

किञ्चोत्तम्भकाभावविशिष्टमण्याद्यभावः कारणमिति किम्—उत्तम्भकाभावविशिष्टो मन्त्रादेरभावः, किं वोत्तम्भकाभावविशिष्टस्य मन्त्रादेरभावः कारणम् ? आद्ये

---

उत्तम्भकाभावविशिष्टाभावः किं विशेषणीभूतोत्तम्भकाभावाभावः, विशेष्यस्य मण्यादेरभावो वा, तयोर्विशेषण-विशेष्ययोरभावद्वयं वा, तदभावद्वयव्यतिरिक्तो वेति विकल्पार्थः । **उत्तम्भकासन्निधाविति** ॥ विशिष्टाभावरूपतयोत्तम्भकस्य दाहहेतुत्वात् तदभावे दाहो न भवेदिति भावः । **मण्यादिसन्निधान इति** ॥ विशेष्याभावरूपविशिष्टाभावस्य कारणस्यासत्त्वादित्याशयः । कल्पद्वयोदितदोषानुषङ्गात्तृतीयोऽपि न चातुरीं प्राञ्चतीत्याह—**तत एवेति** ॥ अतिदिष्टावद्यं स्फुटयितुं विशिष्टव्यतिरेकस्य विशेष्यादिव्यतिरेकद्वयरूपत्वं स्फुटयति—**विशेष्येति** ॥ **तत्त्वान्तरा[त्त्व]पातादिति** ॥ अभावभेदस्य प्रतियोगिभेदाधीनत्वाद् विशिष्टो विशेष्यविशेषणतत्सम्बन्धातिरिक्तः स्यादित्यर्थः । **सदेति** ॥ अकार्यप्रसङ्गादिति छेदः । विशिष्टस्य नित्यत्वेन तदभावरूपकारणासंभवादिति भावः । **गुणादाविति** ॥ गुणकर्मादेरपि वैशिष्ट्यमस्ति, न च—तदुत्पत्तौ समवायिकारणमस्ति ; गुणादेरेव तत्त्वे द्रव्यत्वापत्तेरित्याशयः । विशिष्टपदस्याभावपदेनान्वयः, मन्त्रादिपदेन वेति विकल्पयति—**किञ्चेति** ॥ प्रथमं प्रत्याह—**आद्य इति** ॥ विशेष्यस्य मन्त्राद्यभावस्य विशेषणस्योत्तम्भकाभावस्य चाभावादिति शेषः ॥

द्वितीयं दूषयति—**द्वितीय इति** ॥ असत्प्रतिपक्षमण्यादिसंसर्गव्यतिरेकस्य कारणत्वात् कालान्तरे देशान्तरे वा मण्यादेः सत्प्रतिपक्षत्वे तद्व्यतिरेको न हेतुरिति कार्यं न स्यादिति यावत् ॥ देशान्तरे मन्त्रादेरुत्तम्भकयोगेऽपि

मन्त्रादौ सत्युत्तम्भकप्रयोगकाले कार्यं न स्यात्। द्वितीये देशान्तरेऽपि मण्यादेरुत्तम्भकायोगेऽत्र कार्यं न स्यात्। व्यक्त्यन्तराभावादत्र कार्यं चेत्, एकव्यक्तिसन्निधानेऽपि व्यक्त्यन्तराभावात् कार्यप्रसङ्गः ॥

॥ विरोधिसंसर्गाभावस्य कार्यहेतुत्वेन कालान्तरे देशान्तरे च कार्यपरिहारोऽपि तस्यापि प्राक्प्रध्वंसात्यन्ताभावभेदेन भिन्नत्वात्तदितरेतराभावादनियतहेतुकत्वपर्यवसानादयुक्तः ॥

[1]यत्त्वनियत[2]हेतुकत्वपरिहाराय विरोधिसंसर्गाभावः कारणमित्युक्तम्, तत्र सत्यपि विरोधिसंसर्गे [3]तदितरेतराभावात् कार्यं भवेत् ॥

॥ संसर्गितया प्रतियोग्यभावकारणत्वेऽपि पूर्वोक्तस्य कार्याभावप्रसङ्गस्यापरिहारः ॥

[4]ननु—तत्राप्युक्तः परिहारः; संसर्गितया यत्र प्रतियोगी निषिध्यते,[तत्र] संसर्गाभावः, इतरेतराभावस्तु तादात्म्यप्रतियोगिकः—इति, मैवम्; संसर्गितयेति तृतीया किमित्थम्भावलक्षणे, करणादौ वा कारकभेदे। प्रथमे संसर्गितया लक्षितप्रतिबन्ध इतरेतराभावस्वीकारेण स एव प्रसङ्गः, द्वितीये त्वव्याप्तिः; प्रागत्यन्ताभावयोः संसर्गि[ता?]रूपकारकाजन्यत्वात्। [5]यदपि—प्राक्प्रध्वंसात्यन्ताभावोप-

---

तदसंसृष्टमन्त्राद्यन्तरस्याप्यसत्त्वात्कार्यमिति शङ्कते—**व्यक्तीति** ॥ असत्प्रतिपक्षमन्त्रादेरत्र सत्त्वेऽपि तज्जातीयमन्त्राद्यन्तरव्यतिरेकात् कार्यप्रसक्तिरित्याह—**एकेति** ॥

प्राक्प्रध्वंसात्यन्ताभावानां प्रत्येकं हेतुत्वे[ऽ]नियतहेतुत्वप्रसक्तिपरिहारमनुवदति—**यत्त्विति** ॥

अनेकार्थत्वाद्विकल्पयति—**संसर्गितयेति** ॥ "**इत्थम्भूतलक्षणे**" इति लक्षणे तृतीया विहिता, यथा—श्वेतच्छत्रेण राजानमद्राक्षीदिति। "कर्तृकरणयोस्तृतीये"ति कर्तरि करणे च विहिता, यथा—'रामेण शरेण विद्धः' इति। **स एव प्रसङ्ग इति** ॥ सत्यपि विरोधिसंसर्गे कार्यं स्यादित्यर्थः ॥ चरमे संसर्गिरूपकारकेण प्रतिषेधो जन्यत इत्युक्तं स्यात्, एवं चाव्यक्ति[व्याप्ति]रित्याह—**द्वितीये त्विति** ॥ प्रकारवाचिनीयं तृतीयेति चेत्, न; संसर्गिप्रकारे-

---

1 पृ. 75. प. 3.
2. यत्तुनियत
3. तरभावात्
4. पृ. 75. प. 9.
5. पृ. 75. प. 16.

संग्राहकमुक्तम्—संसर्गितापन्नप्रतियोगिनिरूप्यत्वमिति । तदेवं सतीतरेतरभावमभ्युप गृह्णातीत्यतिप्रसङ्गः ॥

॥ बीजाङ्कुराभावयोरपि न व्यतिरेकव्याप्तिः; तयोरनादित्वात्, न वा तयोरविनाभावादिना प्रतिबन्धस्य किञ्चित्कारत्वम्, शक्तेस्तु विपरीतव्यवहार-योग्यतापादकत्वं च ॥

[1]या च प्रतिबन्दी—बीजाभावेऽङ्कुरो न भवतीति, साऽपि बीजाभाववदङ्कुराभावस्यानादित्वात् तयोः कार्यकारणभावाभावेनोन्मोचनीया । तथापि बीजाभावोऽङ्कुराभावाविनाभावीति चेत्, न; बीजाभावेऽप्यङ्कुरावस्थानात् । तस्माद् बीजाभावस्याङ्कुरजन्माभावव्याप्तत्वम् । न तदपि तव संभवति; कारणसत्तासमवायस्य जन्मनो नित्यत्वात् ॥

॥ प्रतिवन्धकाभावकारणतामताद् विपरीतव्यवहारयोग्यतापक्षस्यैवौचित्यम्, अतोऽर्थापत्त्या शक्तिसिद्धिरित्युपसंहारः ॥

[2]यदपि[वि]सामग्रीरूपत्वात्प्रतिबन्धस्य न किञ्चित्करत्वापेक्षेत्युक्तम्; तत्प्रतिबन्धाभावस्य कारणत्वनिरासान्निरस्तम् । [3]यच्च—नचेदेवं शक्तिस्वीकारेऽपि कः प्रतीकारः-इत्यादि, तदपि वह्नेर्विपरीतव्यवहारालम्बन[4][योग्यता]प्रतिबन्धकेन क्रियत इत्युक्तत्वादयुक्तम् । [5]विपरीतधर्मजनने तदभाव ए[स्यै]व जननादभावे हेतुत्वावगमः,

---

तरेतराभावस्वीकारेण प्रसङ्गतादवस्थ्यात् । **तदेवं सतीति** ॥ **संसर्गितये'ति** तृतीयार्थानिर्वचने सति संसर्गेतरेतराभावसाङ्कर्यादित्याशयः ॥ यत्र बीजाभावः, तत्राङ्कुराभाव इत्यविनाभावोऽनुभूयते तत्र बीजाभावस्य प्राक्प्रध्वंसाभावादिरूपेण विकल्पावकाश इति शङ्कते—**तथापीति** ॥ का[कथं]तर्हि बीजाभावेऽङ्कुरो न भवतीति प्रसिद्धेर[द्धिः अ]त्राह—**तस्मादिति** ॥ जन्माभावव्याप्यत्वमपि बीजाभावस्य—तस्येतिविकल्पावकाशः, अत्राह—**नेति** ॥ प्रागसतः सत्तासमवायः, कारणसमवायो वा तन्मते जन्म । समवायश्च नित्य इत्यर्थः ॥

असाकं पुनरनिर्वक्तव्यभेदोपरागेन संसर्गाभावः कारणमित्यभिधानेऽपि न

---

1. पृ. 76. प. 9.
2. पृ. 77. प. 12.
3. पृ. 78. प. 1.
4. व्यवहारालंवनमेतत्प्रसङ्गमात्रं । कुण्डलान्तर्गतं नास्ति ख पुस्तके
5. पृ. 78. प. 3

प्रागभावादिविकल्पावकाशश्चेत्येतदपि न हृद्यम्; विचारासहत्वात्। कि] मेतत्प्रसङ्गमात्रम्? साधनं वा? न प्रथमः; विपरीतधर्मजनने तदभावस्य हेतुत्वापातान्नासावुपपद्यते, इति विपर्यये प्रमाणस्याशक्योपन्यासतया पर्यवसानात्। न द्वितीयः; धर्मान्तरतदभावयोर्भवद्भिरनभ्युपगमात्। अस्माकमपि [1]तदा[द]सन्निधेर्विरोधिभावगोचरतयाऽन्यथासिद्धेरहेतुता। तदेवमर्थापत्त्या शक्तिसिद्धिः॥

॥ शक्तावनुमानप्रयोगः, तत्राभाससाम्यसोपाधिकत्वादिनिरासश्च॥

प्रयोगश्च—विवादास्पदम्, स्वरूपमात्रसम्बन्धा[द्धा]तीन्द्रियसापेक्षम्, जनकत्वात्; आत्मवदिति। विवादपदम्, भावनापेक्षम्, अदृष्टापेक्षं वा, जनकत्वात्; आत्मवदित्याभाससमानयोगक्षेम इति चेत्, न; तत्रात्मत्वोपाधेः। तुल्यं प्रकृतेऽपीति चेत्, न; स्वरूपमात्रसम्बन्धा[द्धा]तीन्द्रियगुरुत्वसापेक्षपतनकारिपाषाणे साध्याव्यापकत्वत्॥

सर्वस्येश्वरप्रत्यक्षविषयत्वेऽपि सर्वस्यातीन्द्रियत्वमविरुद्धम्, अस्मदाद्यप्रत्यक्षत्वस्यैवातीन्द्रियपदेन विवक्षणात्। न च शक्तेः शक्त्यन्तरापेक्षायामनवस्थादि; पूर्वसंबन्धनियमस्यैव जनकत्वरूपवत्वात्॥

सर्वज्ञेश्वरप्रत्यक्षगोचरः सर्वम्, इत्यतीन्द्रियमप्रसिद्धमिति चेत्, न, अस्मदाद्यतीन्द्रियत्वस्य विवक्षितत्वात्। शक्तेरपि शक्त्यन्तरापेक्षायामनवस्था; अनपेक्षायां तत्रैव व्यभिचार इत्युक्तमिति चेत्, न; अदृष्टादि, कस्यचित् प्रत्यक्षम्, मेयत्वादित्यादौ प्रत्यक्षत्वादिसाध्ये प्रत्यक्षत्वाद्यन्तरस्वीकारेऽनवस्था, तदस्वीकारे तेन व्यभिचार इति। केवलान्वयिन एव साध्ये [ध्यत्वे] साध्यभावाभावविकल्पेन

---

दोष इति भावः॥ विपरीतधर्मतदभावयोर्भवतामनिष्टत्वात्तत्साधनेऽपसिद्धान्तः, आश्रयासिद्धिश्चेत्याह—**न द्वितीय इति**॥ भवतैव तर्हि तदभावस्यान्वयव्यतिरेकाभ्यां हेतुत्वमनुभूयताम्, अत्राह—**अस्माकमिति**॥

**अर्थापत्यनुमानाभ्यामि**"ति कारिकापदेनोक्तार्थापत्तिं विवृत्य, अनुमानमिदानीं विवृणोति—**प्रयोगश्चेति**॥

अप्रसिद्धविशेषणः पक्षाभास इति शङ्कते—**सर्वज्ञेति**॥ **मेयत्वादित्यादाविति**॥ सैव प्रतिज्ञा मीमांसकानाम्; प्रत्यक्षात्वात्, अस्मत्सुखदिवदित्यादि-

---

1. अस्माकमपि तदभावसन्निधेः

भङ्गप्रसङ्गात् [ङ्गः]। [1]यत्पुनः शङ्काव्यभिचारवारणाय जनकशक्तियोगित्वं जनकत्वमित्याशंक्यासिद्ध्या प्रत्युक्तम्, न तदस्माकमनिष्टम्; पूर्वसम्बन्धनियमस्य जनकत्वेनास्माभिरभिधानात्।

॥ केवलान्वयिकेवलव्यतिरेकिणोरनुभूतिस्वप्रकाशत्ववादिब्रह्ममीमांसकैरङ्गीकारान्न शक्त्यनुमानविरोधः। परंरीत्या वाऽनुमानम् ॥

[2]यत्पुनरत्रोक्तम्—केवलान्वयिकेवलव्यतिरेकिणोर्मीमांसकैरनङ्गीकारात्—इति, तदसत्; ब्रह्ममीमांसकैरङ्गीकात्, तदनङ्गीकारे वा परसिद्धेन परबोधनाविरोधात्॥

॥ स्फोटजनकत्वहेतुकशक्त्यनुमानस्यात्मत्वादिना सोपाधिकत्वार्थान्तरसत्प्रतिपक्षादिना निरासः ॥

किञ्च वह्निः, वह्नीतरावृत्तिस्फोटजनकातीन्द्रियसामान्यवदधिकरणम्, स्फोटजनकत्वात्; आत्मवत्। [3]न चात्मत्वमुपाधिः; यत्रानात्मत्वम्, तत्र साध्याभावः इति व्यतिरेक[के]ज्ञानानधिकरणत्वस्योपाधित्वात्। नाप्यतेजस्त्वमुपाधिः; यत्र प्रदीपप्रभादौ तेजस्त्वम्, तत्रोक्तसाध्याभाव इति व्यतिरेकः[के] उद्भूतोष्णस्पर्शा-

---

पदार्थः। प्रत्यक्षादि[त्वादी]त्यादि पदेन व्यक्तिः, अभिधेया मेयत्वात्; जातिवदिति सङ्ग्रहः। शक्तिवादिनो नान्यज्जनकत्वमस्तीत्याह—**पूर्वेति** ॥

**अङ्गीकारादिति** ॥ **अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गादित्यत्र**—अनुभूतिः, स्वप्रकाशा, अनुभूतित्वात्, घटवदि'ति व्यतिरेकिणो विपर्ययेऽनुभूतित्वाभिमता, अननुभूतिः, अनुभाव[व्य]त्वात्, घटवदित्यन्वयिनश्च विवक्षितत्वादिति भावः॥ साध्ये साध्यभावाभावविकल्पे दुस्साधः केवलान्वयीति चेत्, अत्राह—**अ[तद]नङ्गीकारे वेति** ॥

आत्मत्वातेजस्त्वाभ्यां सोपाधि[क]त्वादित्युक्तं दूषयति—**न चेति** ॥ मुक्तात्मसु साध्याभावेऽप्युपाधिभावादधर्मव्याप्तेरित्यर्थः॥ दूषणान्तरमाह—**यत्रेति** ॥ आत्मत्वाभावो यत्र, तत्र साध्याभाव इति व्यतिरेकव्याप्तौ ज्ञानानधिकरणत्वस्य प्रयोजकत्वेन तदसिद्धौ विपक्षव्यावृत्तिहीनतया पक्षेतरत्वादित्याशयः। **[अ]तेजस्त्वमिति** ॥ अतेजस्त्वोपाधिरित्यर्थः। अस्माकं समव्याप्तेरेवोपाधित्वात् मुक्तात्मसु साध्यव्यभिचारश्चोपाधेरत्रापि इति भावः। **स्फोटाजनकत्वादिति** ॥ वह्नि[:?]

---

1. पृ. 65. प. 7
2. पृ. 69. प. 2
3. पृ. 69. प. 6

नधिकरणत्वस्योपाधित्वात्। न च स्थितस्थापकेनार्थान्तरता ; तस्य स्फोटाजनकत्वात्, जनकत्वे च तदितरत्वेन साध्यविशेषणात् ॥

वह्निः, उक्तसाध्यो न, अनात्मत्वात्, घटवदित्यपि न; उद्भूतोष्णस्पर्शानधिकरणत्वस्योपाधित्वात्। वह्निः, उक्तसाध्यो न, तेजस्त्वात्; प्रदीपप्रभावदिति चेत्, न; अत्रापि तस्यैवोपाधित्वात्[1]।

॥ वह्निपक्षकसप्तपदार्थविभाजकधर्मातिरिक्तस्फोटजनकधर्माधिकरणत्वसाध्यकानुमाने समवायेन न सिद्धसाधनादि, न वेश्वरेणेत्यादिविवेकः, तदतिरिक्तत्वस्यापि साध्यविशेषणत्वात् ॥

अपिच वह्निः, वह्निनिष्ठगुणकर्मसामान्याभावत्वानाक्रान्तायुतसिद्धसम्बन्धातिरिक्तस्फोटजनकाधिकरणम्, कारणत्वात्; आत्मवत्। अस्माभिः समवायानभ्युपगमेऽप्ययुतसिद्धतादात्म्याभ्युपगमात् तदतिरिक्तत्वविशेषणे नाप्रसिद्धविशेषणता नापि समवायेनार्थान्तरता ; अयुतसिद्धसम्बन्धमात्रातिरिक्तत्वविशेषणात्। किञ्च वह्निः, उष्णस्पर्शादिव्यतिरिक्तस्फोटकारणाद् भिद्यते, मेयत्वात्; घटवत्। न चेश्वरादिनाऽर्थान्तरता ; आदिपदेन तस्यापि ग्रहणात्। नचाप्रसिद्धविशेणता ; ईश्वरादेर्भवतां प्रसिद्धत्वात्, तदिच्छादेर्भवदुक्त्यैव प्रतीतत्वात्। प्रतीतिमात्रमनुमानाङ्गमिति चावोचाम। न चैवमप्रसिद्धविशेषणतालोपः; परार्थानुमाने परेण विशेषणस्या-

---

स्थितस्थापकः, न स्फोटजनकः, स्थितस्थापकत्वात्, संस्कारत्वाच्च; कटसमवायिस्थितस्थापकवत्, गा[वेगव]च्चेत्यर्थः। बह्नि[:?]स्थितस्थापकः, स्वस्वेतरवृत्तित्वरहितस्फोटजनकाधिकरणम्, मेयत्वात्; घटवदिति शङ्कामुररीकृत्याप्याह—**जनकत्वे चेति** ॥ अयुतसिद्धयोः सम्बन्धः समवायः, तस्य भावतामप्रसिद्धत्वात्तदतिरिक्तत्वविशेषणमप्रसिद्धम्, अत्राह—**अस्माभिरिति** ॥ तर्हि कृशानोरयुतसिद्धतादात्म्यातिरिक्तसमवायाधिकरणत्वेन प्रतिज्ञापर्यवसानात् तेनार्थान्तता, अत्राह—**नापीति** ॥ ईश्वरसमवायिन इच्छादेरप्रसिद्धत्वात्, तदतिरिक्तत्वस्वीकारेऽप्रसिद्धविशेषणत्वम्, तदस्वीकारे तेनार्थान्तरता, अत्राह—**तदिच्छादेरिति** ॥

"अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति-हि" इति शाब्दविकल्पगोचरः सकलमपि, इत्यप्रसिद्धविशेषणता लोपमियात, अत्राह—**न चेति** ॥ परप्रत्य[ा]-

---

1. साध्यत्वाविशेणनात् (ख)

प्रमितत्वे तत्राप्रसिद्धविशेषणत्वस्य प्रचारात्, प्रकारान्तरेण तस्याशक्यसमर्थनत्वात् ॥

॥ वह्निस्थितस्थापकपक्षकानुमाने विपक्षव्यावृत्तस्य ज्ञानानधिकरणत्वे-
सत्यनद्भूतस्पर्शानधिकरणत्वस्योपाधित्वसमर्थनम्, शक्त्यनुमानोपसंहारश्च ॥

अपिच वह्निस्थितस्थापकः, वह्न्याश्रितादतीन्द्रियसामान्यवतो भिद्यते, मेयत्वात्; घटवत्। [1]यत्पुनः शक्तिनिषेधेऽनुमानम्—वह्निः, वह्न्यात्मातिरिक्तवृत्तित्वरहितवह्न्यात्मवृत्तित्वरहितस्फोटजनकातीन्द्रियवान् न भवति, आत्मातिरिक्तत्वात्; घटवत्—इति, तदसत्; ज्ञानानधिकरणत्वे सत्युद्भूतोष्णस्पर्शानधिकरणत्वस्योपाधित्वात्। न चास्य पक्षेतरता; विपक्षादात्मनो व्यावृत्तत्वात्। विपक्षाद्व्यावृत्तिरहितः पक्षेतर इति हि भवतोऽभ्युपगमः। तदेवमनुमानाच्छशक्तिसिद्धिः ॥

॥ नैसर्गिकशक्तौ श्रुतिप्रमाणोपन्यासः, शक्तितत्त्ववादे सुरेश्वरवार्तिकविरोधशङ्का-
परिहारेण सहजशक्तिवादोपसंहारः ॥

श्रुतिरपि—"पराऽस्य शक्तिर्विविधैव श्रूयते इत्याद्या शक्तिमावेदयति।

अथ—अतीन्द्रियशक्तिसमर्थने [नं न] राद्धान्तः; अत्रभवद्भिर्वार्तिककारैस्तन्निषेधात्। तथाच तदीया वचनव्यक्तिः—

---

य[ा?]न[ा]र्थप्रयोगे विशेषस्य परकीयप्रकल्पनया प्रमित्यगोचरत्वेऽप्रसिद्धविशेषणतासाम्राज्यादिर्थः। प्रयोक्तृप्रतिपत्त्रोरुभयोरप्यप्रमितावप्रसिद्धविशेषणता, अत आह—**प्रकारान्तरेणेति** ॥ प्रतिपत्तृप्रसिद्धिमात्रेणाप्रसिद्धविशेषणत्वप्रसिद्धौ प्रयोक्तुरपीति विशेषणं गौरवाद्व्यतिरेकवैधुर्याच्च नोपादेयम्; इतरथा—भाव[?] भाववैलक्षण्यस्याभावलक्षणत्वादभाववैलक्षण्यस्य भावलक्षणत्वादित्यादिपरपक्षप्रतिषेधोऽपि न सिध्येदिति भावः ॥

**वह्निस्थितस्थापक इति**। अतीन्द्रियं सामान्यं यस्य, तस्मादि[दती]न्द्रियसामान्यवत इत्यर्थः ॥ कटादिस्थितस्थापकभागे सिद्धसाधनत्वं परिहरति—**वह्निस्थितस्थापक इति**। सामान्यवतो भिद्यत इत्युक्ते घटादिभेदेन सिद्धसाधनम्, अत उक्तम्—**अतीन्द्रियेति** ॥ तथाप्यदृष्टादिभेदेन सिद्धसाधनम्, अत उक्तम्—**वह्न्याश्रितेति** ॥ न च वह्निसंयुक्तपरमाणुभेदेन सिद्धसाधनत्वम्; आश्रितशब्देनायुतसिद्धसंबन्धस्य विवक्षितत्वादिति भावः ॥

**श्रुते[तित]श्चेति** कारिकाभागं व्याचष्टे—**श्रुतिरपीति** "देवात्मशक्तिं स्वगुणैर्नि

---

1. पृ. 71 प. 2

अशक्तं शक्तिमच्छक्त्या शक्तिः शक्तिमता[ती]तथा ।
अशक्तेति कथं योगमन्योन्यं हेत्वसम्भवात् ॥
शक्तयः सन्ति भूयस्यः तयोरपि मतं यदि ।
तत्रापि तुल्यचोद्यत्वादनवस्था प्रसज्यते ॥

—इति, मैवम् ;

॥ व्यावहारिकनैसर्गिकशक्तितत्त्वनिरासे न वार्तिकतात्पर्यम्, अवाच्यस्यामेयस्याप्यात्मस्वरूपस्यात्मनः श्रुत्या बोधनोपपत्तिश्च ॥

शक्तिशक्तिमतोर्वास्तवसंसर्गस्वरूपपराकरणपरतया व्यावहारिकशक्तिस्वरूपपराकरणपरत्वाभावात्,

शब्दशक्तेरचिन्त्यत्वादात्मत्वाद्बोधरूपिणः ।

---

गूढाम्" इत्यादिपदार्थः । **अशक्तमिति** ॥ शक्तिमतः शक्त्या योगे, शक्तेश्च शक्तिमता योगे न शक्तिरस्ति, उतास्ति । यदि नास्ति, तदा शक्तिमद् अशक्तम् सम्बन्ध[द्ध]-शक्तिहीनं शक्त्या कथं योगमेति ? शक्तिश्चाशक्ता शक्तिमता योगं कथमेति ? न कथमपि; कुतः ? अन्योन्यहेत्वसंभवात्, परस्परसंबन्धप्रयोजकभूतशक्तेरभावात्, सर्वकार्यस्य शक्तिपुरस्सरत्वात् ॥ द्वितीयमुत्थापयति—**शक्तय इति** ॥ तयोः= शक्तिशक्तिमतोर्द्वे शक्ती, अपिशब्दात्तयोरपि द्वे, इति भूयस्य इति बहुवचनम् । **तत्रापि**=स्वीकृतशक्तिभेदेऽपि । **तुल्यचोद्यत्वात्**=तासां शक्तीनां शक्तिमतां च शक्तिवैकल्ये योगायोगाच्छक्त्यन्तराणीति[णि] स्वीकार्याणीति समानपर्यनुयोग-त्वादित्यर्थः ॥ शक्तिशक्तिमतोर्वास्तवसंसर्गस्वरूपयोर्निरासपरत्वम्, न स्वरूपमात्र-निरासपरतेत्यत्र तदीयमेव वचनं लिङ्गतयोदाहरति—**शब्देति** ॥ तत्त्वमस्यादि-शब्दानां ब्रह्मात्मैक्ये गृहीतसङ्गतिकत्वे मानान्तरगोचरस्य घटादितुल्यत्वम्, [अ]गृहतीतसङ्गतिकत्वे न शब्दबोधकत्वम्, अत्रोक्तम्—**अचिन्त्यत्वादिति** ॥ शबले गृहीतसङ्गतिकानां लक्षणया बोधनासामर्थ्यादित्यर्थः ॥ यदस्ति, तद् मीयते, तदुच्यत एव, इति नियमात्, अमेयमवाच्यं वस्तु नास्तीति, अत आह—**आत्मत्वादिति** ॥ जडत्वं मेयत्वादौ प्रयोजकमित्यर्थः । बोधात्मन्यबोधासिद्धेः अबुद्धबोधकत्वं मात्वमुपनिषदो न स्यात्, अत्राह—**तदिति** ॥ **निद्रायाः**=

तत्साक्षित्वाच्च निद्रायाः, विद्युस्तां मोहहानतः ॥

इति तैरेवाभिहितत्वात् ॥

॥ श्रुतेरवाच्यामेयस्वरूपबोधकत्वं विवरणसिद्धान्तेऽपीति निरूपणम् ।
नैसर्गिकशक्तिवादोपसंहारः, अद्वैतमते नैसर्गिकशक्तिस्वीकारप्रयोजनं च ॥

कथमपरथा तच्चरणशरणा **वि व र ण का रा** अपि

"शब्दोपादानभावा ध्वनिगतविषयद्योतना[ः] शक्तयोऽमू
र्ब्रह्मण्येवासुरग्नेर्विषयविषयिणी दीपशक्तिः खलूच्चैः ॥"

इति शक्तिपक्षं कक्षीकुर्युः ? तदेवं भावानां नैसर्गिकी शक्तिः प्रमाणसिद्धेति सिद्धम् ॥

॥ महापूर्वपक्षिणोऽतिशयाख्यसहजशक्तौ प्रमाणाभावप्रतिज्ञा ॥

[1]**सिध्यतु,** असिद्धा तु नैसर्गिकी शक्तिः, आधेया तु प्रोक्षणादिना व्रीह्यादौ न सिध्यति ; प्रमाणाभावात् ॥

॥ सिद्धान्त्येकदेशिनाऽतिशयपदवाच्यायामसहजायामन्याधेयायां वा
शक्तावनुमानप्रमाणोपन्यासः ॥

अथोच्येत - भावभूतमतिशयमुपजनयन्त एव प्रोक्षणादयः, कालान्तरभाविने फलाय कल्पन्ते, प्रमाणतस्तदर्थमुपादीयमानत्वात् ;[1] यो [याग] कृषि-चिकित्सावत् ।

---

अविद्यायाः । तद्दृश्यत्वात्स्वरूपबोधः केवलः, तत्साधकत्वान्न तद्विरोधी, तेन=वाक्यकृतवृत्तिफलकारूढबोधेन, **मोहहानतः**=अविद्यानिवृत्त्या, **विद्य** इति कर्तृत्व-[त्वेना]विद्यानिवृत्तेः साध्यत्वमुपचर्यते । अत्रापि स्वरूपसहकारिसमवधानमात्रं शक्तिशब्दं किं न स्यात् ? अत्राह—**कथमिति** ॥ शब्दगतार्थप्रकाशनशक्ति[ः,]कारणशक्तिपुरस्सरा, कार्यगतप्रकाशशक्तित्वात् ; दीपगतप्रकाशशक्तिवदिति कारिकाभागतात्पर्यम् । द्रष्टुश्च ज्ञानशक्तिर्ननु । न करणता, किन्तु दीपप्रभाव[त्],संयुक्तद्योतनैवेत्यपरमिह पुनः साध्यते । सर्ववित्त्वमित्युत्तरार्धम् ( ? ) । आधेयशक्तिसाधनाय पूर्वपक्षयति —**सिध्यत्विति** ॥

प्रमाणाभावोऽसिद्ध इति शङ्कते—**अथेति** ॥ प्रध्वंसव्यवच्छेदायोक्तम्—**भावेति** ॥ प्रमा[दा]दिपूर्वकफवा[ला]र्थोपादानेऽनैकान्तिकत्वं मा भूदित्युक्तम्—**प्रमाणत इति** ॥ श्रुतिप्रमाणादित्यर्थः । परमाणुषु यवत्वकलमत्वादिजात्यभावाद्

---

1. सिद्ध्यतु, सिद्ध्यतु (ख)

स [न] च कृष्यादौ साध्यवैकल्यम्[1] । तथाहि—परिकलितायामुर्वराया मुप्तं बीजावयवि पाथःपवनतेजस्सं[2]प्रयोगात् क्रियोत्पत्तावक्यवानां विभागे[3]ऽसमवायिकारणतत्संयोगविनाशात् विनश्यति, [4]एवमापरमाण्वन्तं भङ्गात् तेषु च परमाणुषु यवकलमाद्यारम्भनियामिकाया जातेरभावात् कलमबीजावापे कलमाङ्कुर एव, यवबीजावापे यवाङ्कुर एवेत्येवं कार्यजातिनियमानुपपत्तिरिति । अतिशयाङ्गीकारे तु कृष्याद्याहितास्ते ते परमाणवस्तं तं कार्यविशेषमारभन्त इति नियमोपपत्तिरिति ॥

॥ प्रोक्षणादिना पुरुष एव संस्कारो जायते, न तु व्रीह्यादिषु ;
अतो न व्रीह्यादौ शक्तिविशेषः ; तत्तद्वीजादेव तत्तत्कार्यमिति नियमेन
सर्वोपपत्तिरिति महापूर्वपक्षस्थापनं सिद्धान्त्येकदेशिमतनिरासपूर्वकम् ॥

अत्रोच्यते—

संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः ॥ १३ ॥

प्रोक्षणादयः, कञ्चिदतिशयमादधतीति साध्ये सिद्धसाधनम्, उद्देश्यगतमादधतीति हविराहुतिभिरनेकान्तम् । अतः पुंस एव तज्जन्यः संस्कारः । कृष्यादावपि कृतैः पाकजादि[5]गुणविशेषैरेव कार्यनियमोपपत्तेर्नाप्रसिद्धातिशयकल्पनमिति साध्यवैकल्यमिति कारिकार्थः ॥ १३ ॥

---

यवबीजावापे तदारम्भकपरमाणुभ्यो यावाङ्कुर एवेत्यादिकार्यजातिनियमानुपपत्त्या परमाणुषु कृष्याद्याधेयातिशयो नियामको वाच्य इत्याशयेनाह—**तथाहीति** ॥ कथमुक्तहेतौ जीवति "संस्कारः पुंस एवे"ति प्रतिज्ञा ? अत्राह—**प्रोक्षणादय इति** ॥ **हविराहुतिभिरिति** ॥ देवतामुद्दिश्य वह्नौ हविराहुतयः क्रियमाणा नोद्देश्यदेवतामभिसंस्कुर्वत इत्यर्थः ॥ उत्तरार्धं व्याकुरुते—**कृषिवा[ष्या]दाविति** ॥ पार्थिवानां पाकजसलिलपरमाण्वादीनां शीतस्पर्शशुक्लरूपादयः, तथा पार्थिवपरमाणूनां तत्तत्कार्यसमवेतरूपानुमेया रूपादिविशेषा इत्यर्थः । कथं व्रीह्याद्युद्देशेन तत्र प्रयुज्यमानं प्रोक्षणादि पुरुषं संस्कुरुते ? इतीमां शङ्कां निराकुर्वन्ननैकान्तिकत्वं

---

1. ल्यः(क)
2. संयोगात्
3. विभागेनासमवायि
4. एवं पर (क)
5. जादिभिर्गुण

॥ महापूर्वपक्षिणः स्वाशयविवरणम् ॥

यथा हि देवताविशेषोद्देशेन हुताशने हुता हविराहुतयः समन्त्राः पुरुषमभिसंस्कुर्वते,[1]न वह्निम्, नापि देवताम्, तथा व्रीह्याद्युद्देशेन प्रयुज्यमानः प्रोक्षणादिः पुरुषमेव संस्कुरुते,न व्रीह्यादिकम् ॥

॥ कारीर्यादौ पुरुषसंस्कारस्य मेघादौ वृष्टिजननसामर्थ्यवत्
पुरुषसंस्कारेणैव व्रीह्यादावपि कार्यकारिता, इति न व्रीह्यादावतिशयाधानं
कर्मकर्तृसाधनवैगुण्ये, तद्वैगुण्ये तु सर्वत्र फलाभावः ॥

कथं पुनः पुरुषसंस्काराणां व्रीह्याद्यसम्बन्धानामेव तत्सहकारिता इति—चेत्, शृणु—यथा च कारीरीजनितसंस्काराधारपुरुषसंयोगाद् जलमुचां सञ्चरणं जलक्षरणादिक्रिया, तथा व्रीह्यादीनामुत्तरक्रियाविशेषः । ननु—पुरुषसंस्कारपक्षे [2]यदा तस्य पातकादिदोषः, तदा तस्मिन् संस्काराधानायोगाद् वैफल्यम्, एवं प्रोक्षणादेर्व्रीहिसंस्कारपक्षे तु नायं दोषः, अतः स एवास्त्विति [3]चेत्, न; यथाचैकत्र कर्मकर्तृसाधनवैगुण्यात् फलाभावः, तथाऽन्य[पर]त्रापि ; आगमिकत्वस्योभयत्राविशेषात् ॥

---

स्फुटयति—**यथाहीति** ॥ व्रीह्याद्युद्देशेन तत्रैव प्रयुज्यमानम् इत्युपस्कर्तव्यम् । प्रोक्षणाद्याहितसंस्काराणां व्रीह्यादिसहकारित्वादनुपपत्त्या तत्समवायित्वमिति शङ्कते—**कथमिति** ॥ सदृष्टान्तं समाधत्ते—**शृण्विति** ॥ यथा कारीरीजनितसंस्कारानाधारा एव जलधरास्तदाधारयजमानात्मसंयोगादेव गगने सञ्चरन्ते, वर्षन्ति च, एवं व्रीह्यादयोऽपि संस्कृतात्मसंबन्धाः कार्योपयोगिन इत्यर्थः । प्रोक्षणादेरनियतफलपरिहारायोद्देश्यसंस्कारकत्वं स्वीकार्यमिति पर्यनुयुङ्क्ते—**नन्विति** ॥ परिहरति—**नेति** ॥ कर्तृदोषे यथैकत्र कर्तरि फलस्य संस्कारस्याभावः, तथा परत्र व्रीह्यादिष्वपि कर्तृवैगुण्ये क्वचिदपि न संस्कार उत्पद्यत इत्यर्थः । यद्वा—एकत्र=कारीर्याम् ; अपरत्र=प्रोक्षणादिष्विति । उभयत्र=पक्षद्वये । कर्मद्वये वाऽप्यागमिकत्वस्य तुल्यत्वात्, अदुष्टानमेवाधिकार इत्याशयः ॥ अत्र कर्मसाधनयोरुपादानं दृष्टान्ततया ॥

---

1. न च
2. यत्र तस्य(क)
3. चेत् यथा

॥ प्रोक्षितानां व्रीह्यादीनां पुरुषसंस्कारार्थत्वे पुरोडाशाद्यनुपयोगापत्तिः,
अतो व्रीह्यादिसंस्कारार्थत्वमेव युक्तमिति शङ्का-तत्परिहारौ ॥

अथ—यदि भाव्युपयोगार्थं व्रीहयः संस्क्रियन्ते, तदा तेषामेव कार्यान्तरोपयोगो युज्येत, यदि तु प्रोक्षणादिभिः पुरुषः संस्क्रियेत, तदा "यदेकस्मादपूर्वम्, तदेतरस्तदर्थमि"ति न्यायात् सक्तुवद्विनियोगभङ्गेन व्रीह्यादेः प्रोक्षणादिशेषता स्यात्। तत्र[च]प्रोक्षणादिनिवृ[वृ]त्त्यैव कृतार्थानां व्रीह्यादीनां हविरासादनविनियुक्तस्येव बर्हिषः कार्यान्तरोपयोगो न स्यात् ॥

॥ प्रोक्षणस्यात्मसंस्कारार्थत्वेऽपि वचनबलाद् व्रीहीणां यागोपयोगोऽप्यविरुद्धः,
अन्योद्देश्यकसंस्कारस्यान्यत्र कार्यकारित्वमपि दृष्टम्।
अतः प्रोक्षणादीनां व्रीहिसंस्काराभावेऽपि न दोषः, इति मीमांसकानुगृहीतस्य
नैयायिकस्य महापूर्वपक्षोपसंहारः ॥

ननु—"व्रीहीणां यागसाधनत्वेन विहितत्वात् कृतकार्याणामपि यागार्थ-

---

प्रोक्षितव्रीहीणां पुरोडाशादिकार्यान्तरोपयोगविरोधं पुरुषसंस्कारपक्षे शङ्कते—**अथेति** ॥ संस्कृतात्मसयोगादुत्तरकार्यशेषत्वमुक्तम्, अत आह—**यदीति** ॥ तदा व्रीह्यादेः प्रोक्षणादिशेषतेति संबन्धः। व्रीहीनिति द्वितीयावगतं कर्मतया प्राधान्यम्, तत् कथं प्रोक्षणादिशेषता? अत्राह—**विनियोगेति** ॥ प्रोक्षणादेर्व्रीह्यादिशेषत्वं **विनियोगः**, तद्भङ्गेन व्रीहिभिः प्रोक्षतीति कल्पनीयम्। वैदिकोदाहरणमाह—**सक्तुवदिति** ॥ "सक्तून् जुहोती"ति द्वितीयाश्रुत्या होमजन्यातिशयशालितया सक्तूनां प्राधान्यम्, होमस्य च तत्संस्कारकर्मतयाऽङ्गत्वमवगतम्, तथापि होमेन भस्मीकृतसक्तूनां कार्यान्तरेऽनुपयोक्ष्यमाणानामनुपयुक्तानां च संस्कार्यत्वानुपपत्त्या 'सक्तुभिर्जुहोती'ति यथा विनियोगभङ्गः कृत इत्यर्थः। तदुक्तम्—

भूतभाव्युपयोगं हि द्रव्यं संस्कार्यमिष्यते।
सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च कुत्रचित् ॥

इति। व्रीहीणां न सक्तुतुल्यत्वम्; पुरोडाशाद्युपयोगात्, अत्राह—**तदेति** ॥ अ(ए)कस्मात् भावार्थादपूर्वं स्यात्, तदा तत्सन्निधिपठितमितरत् तदर्थम्; "फलवत्सन्निधावफलं तदङ्गमि"ति न्यायादित्यर्थः ॥ तर्हि व्रीह्यादेः प्रोक्षणादिशेषत्वम्, कार्यान्तरशेषत्वं चेति द्विकरत्वं स्यात्, अत्राह—**तत्र चेति** ॥

मीमांसक एव नैयायिकस्य मतमुत्थापयति—**नन्विति** ॥ अनिष्टं प्रसञ्जयन्

मुपादानमिति—चेत्; तर्हि 'प्रोक्षितैर्यष्टव्यमि'ति नियमाभावात् व्रीहिजातीय-व्यक्त्यन्तरमुपादीयेत; प्रोक्षिताप्रोक्षितयोरविशेषादिति चेत्, न; विचित्रा ह्यभि-संस्काराः—केचिद् व्याप्रियमाणोद्देश्यसहकारिण एव कार्ये। किमत्र क्रियताम्? विधेर्दुर्लङ्घ्यत्वात्[1]। यथा ह्यभिचारसंस्कारोऽयं[भ्रातृव्य]देहमुद्दिश्य प्रयुक्तस्तदपेक्ष एव तत्सम्बद्धस्यात्मनो दुःखमुत्पादयति, न तावदनपेक्षः, एवमभिमन्त्रणप्रोक्षणादिसं-स्कारा अपि भवन्तो न मनागपि नोपपद्यन्ते। कथं 'व्रीहीनि'ति द्वितीयावगतं कर्मत्वं प्रोक्षणादिक्रियाजन्यफलभागित्वाभाव उपपद्यत इवि चेत्, प्रोक्षणादि[2]फलसम्बन्धा देव। तथाहि—प्रोक्षणस्य जलसंयोगः फलम्, तद्भागित्वेन व्रीहीणां कर्मत्वमुपपन्नम्, संस्कारास्तु जलसंयोगफलम्, न प्रोक्षणफलम्, इति तदभावेऽपि न काचित् क्षतिः। व्रीह्यादीनामाग्नेयाद्यपूर्वेषूपयोक्ष्यमाणत्वाद् नानीप्सितकर्मत्वमपि। तस्मान्न प्रोक्षणादिना कालान्तरभाविफलानुगुणव्रीह्यादिसमवेतातिशयसिद्धिरिति प्राप्तम्॥

॥ प्रोक्षणाद्याधेयशक्त्यन्तरसाधनं महासिद्धान्तिनः॥

अत्रोच्यते—

[3]संस्कार इष्टो व्रीह्यादेः प्रोक्षणाभ्युक्षणादिभिः।
स्वगुणात्परमाणूनां पाकजा न नियामकाः॥ १४॥

---

मीमांसकः प्रत्याह—**तर्हीति**॥ वैचित्र्यमेव दर्शयति—**केचिदिति**॥ कस्मै चित् कार्याय यल्लक्ष्यीकृत्य या क्रिया, तज्जनितः संस्कारः कश्चित् पुरुषाधारोऽपि तदुद्देश्य-व्यापारसहकार्येव कार्यं करोति, कश्चित्तु तन्निरपेक्ष इत्यत्र विधिरेव प्रमाणमित्यर्थः। अत्रोभयसिद्धं निदर्शनमाह—**यथा हीति**॥ यथा ह्यभिचारजनितः संस्कारो भ्रातृ-व्यदेहानाधारः कर्तृसमवाय्यप्युद्देश्यदेहापेक्षस्तत्सम्बन्ध[द्ध]स्यैवात्मनो मरणनिमित्तं दुःखं जनयति। दार्ष्टान्तिके योजयति—**एवमिति**॥ एवं भवन्तः=उद्देश्यसहका-रिणो भवन्त इत्यर्थः। पृच्छति—**कथमिति**॥ उत्तरम्—**प्रोक्षणादीति**॥ सिद्धं तर्हि प्रोक्षणादेर्व्रीह्यादिसंस्कारकत्वम्, अत्राह—**तथाहीति**॥ व्रीहीनिति द्वितीयावगतमीप्सितकर्मत्वं प्रोक्षणादिजन्यसंस्कारानाधारत्वे विरुध्यते, अत्राह—**व्रीह्यादीनामिति**॥ प्रोक्षणाद्याधेयसंस्कारस्य व्रीह्याद्याधारत्वे[त्वं] मानाभावाद-

---

1. दुर्लङ्घ्यता यथा 2. प्रोक्षणादिवत् संब
3. कुसुमाञ्जलिमनुकृत्व दूषयति—संस्कार इति॥

प्रोक्षणादयः, कालान्तरफलानुकूलभावरूपातिशयजनकाः, प्रमाणतस्तदर्थमुपादीयमानत्वात्; यागकृष्यादिवत् ॥

॥ यत्किञ्चिदतिशयस्यासाधनात्, कालान्तरभाविफलानुकूलातिशयस्यैव साधनान्न सिद्धसाधनम्, न वा पूर्वोक्तमनैकान्तिकत्वादि ॥

[1]यदप्युक्तम्—प्रोक्षणादयः कञ्चिदतिशयमादधतीति साध्ये सिद्धसाधनम्, उद्देश्यगतमादधतीति हविराहुतिभिरनेकान्तमिति; न तच्चारु; कालान्तरफलाकूलातिशयमात्रसाधनेऽपि परिशेषात् व्रीह्यादिगतसंस्कारसिद्धेः ॥

॥ प्रोक्षणादीनां पुरुषसंस्कारार्थत्वाभावः, यागप्रोक्षणयोर्विशेषः, यागस्यापि पुरुषसंस्कारकर्मत्वाभावः, प्रोक्षणादिना व्रीहिगतातिशयाख्यशक्त्यनाधान आगमिकप्रतीतिविरोधश्च ॥

तथाहि — न तावत् प्रोक्षणादिभिः पुरुषः संस्क्रियते; तन्मानाभावात्। प्रोक्षणादयः, पुरुषसमवेतसंस्कारकारकाः, वैदिककर्मत्वात्, यागादिवदिति चेत्, न; दृष्टान्ते साध्यविरहात्, वेगस्थितस्थापकभावनातिरिक्तसंस्काराभावात्। भावरूपातिशयः संस्कारो विवक्षित इति चेत्, न; सिद्धसाधनात्, प्रोक्षणादिना परम्पराऽऽग्नेयाद्यपूर्वजननात्। साक्षादिति चेत्, न; बाधितत्वात्, क्रियानन्तरं संयोगस्यैवोत्पादात्। प्रोक्षणादयः, नात्मसंस्कारकारकाः, अनात्मोद्देशेन संस्कारकर्मत्वात्; दर्पणनिघर्षण-

---

युक्तम्—"संस्कार इष्टो व्रीह्यादेरि'त्याह — **प्रोक्षणादय इति** ॥ संयोगजनकत्वेन सिद्धसाधनत्वं व्यावर्तयति—**कालान्तरेति** ॥ अतिशयमात्रसाधने सिद्धसाध्यता; संस्कार[र]स्वीकारात्, अत्राह—**तथाहीति** ॥ मानान्तरसिद्धं साध्यं यस्य, तद्भावः,= सिद्धसाध्यता। न च मानमस्ति। न च स्वीकारोऽपि युक्तः; मानाभावादित्याशयः। प्रमाणं शङ्कते—**प्रोक्षणादय इति** ॥ यागादेः पुरुषसंस्कारकारकत्वं वक्तुं परकीयनियममाह—**वेदे[गे]ति** ॥ साध्यवैकल्यं परिहर्तुं श्वा[स्वा]शयं शङ्कते—**भावेति** ॥ अतिशयमात्रजनकत्वं साध्यम्, उताव्यवहितातिशयजनकत्वम्। आद्यं प्रत्याह—**नेति** ॥ चरमं शङ्कते—**साक्षादिति** ॥ प्रोक्षणादिक्रियानन्तरभाविनोऽतिशयस्य जलादिसंयोगस्य व्रीह्यादिगतत्वग्राहिप्रत्यक्षादिविरुद्धत्वमिति दूषयति—**नेति** ॥ [अति] प्रसङ्गः, सत्प्रपक्षश्चेत्याह—**प्रोक्षणादय इति** ॥ कर्तृसंस्कारार्थव्रते व्यभिचारं वारयति—**अनात्मोद्देशेनेति** ॥ गमनादौ व्यभिचारं

---

1. पृ. 105. प. 14.

वत्। न च मलनिरासार्थत्वमुपाधिः; धवलदुकूलक्षालनादौ साध्याव्याप्तेः। प्रोक्षणादिना संस्कृता व्रीह्यादय इत्यागमिकप्रतीतिविरोधश्च ॥

॥ प्रोक्षणादिसंस्कारो नाम व्रीह्यादीनां प्रोक्षणादिसंबन्धमात्रम्,
न तस्यातिशयाख्यशक्तिविशेषत्वमिति ली ला व तीकाराणां शङ्का ॥

यदप्यत्र ली ला व ती प्रलपति—संस्कारस्य द्रव्याधारता समवायः, स्वभावप्रत्यासत्तिश्च। तत्र व्रीह्याधारता स्वभावप्रत्यासत्तिरेव स्यात्, भावनावत्; यथा तद्विषयज्ञानप्रसूतत्वमेव तदीयत्वं भावनायाः, तथा तद्विषयप्रोक्षणादिप्रसूतत्वमेव तदीयत्वम्। प्रत्यासत्तिश्च तदुपरक्तप्रतीतिजन्या। सा च ज्ञात इतिवत् संस्कृत इति सम्भवति—इति, न तत् सतां मनोऽनुरञ्जनम्।

॥ व्रीह्यादिसंस्कारस्यातिशयाख्यशक्त्यतिरिक्तस्वभावत्वानुपपत्तिः,
संस्कारस्य स्वरूपत्वस्वीयत्वयोरसंभावात्, संयोगसमवायादीनामपि
तदसंबन्धत्वादित्यादिरीत्या ली ला व तीमतनिरासः ॥

'स्वभावप्रत्यासत्तिरि'ति स्वभावपदमात्मवचनम्, आत्मीयवचनं वा। नाद्योऽनवद्यः; सम्बन्धिद्वयाधिकरणस्य सम्बन्धित्वनियमात्, अन्यथा भेदि-

---

वारयति—संस्कारेति ॥ हेतुमाह—धवल[ले] इति ॥ व्यवहारानर्हतारूपमलनिरासस्तत्रापीति चेत्, न; तथा सत्यनात्मन्याधेयसंस्कारस्वीकारप्रसङ्गात्। परानुमानपक्षे, स्वीयानुमानविपक्षे च बाधमभिधत्ते—प्रोक्षणादिनेति ॥

आगमिकप्रसिद्धिविरोधं परिहर्तुमाधरतां विभजते—संस्कारस्येति ॥ संस्काररूपा व्रीह्याधारता स्यात्, अत्राह—तत्रेति ॥ आत्माधारतैव समवाय इत्यर्थः। तदसमवेतस्य तदाधारत्वमसिद्धम्, अत्राह—भावनावदिति ॥ दृष्टान्तं विशदयति—यथेति ॥ घटविषयज्ञानजन्यत्वमेव संस्कारस्य घटसंबन्धित्वं यथा, तथा व्रीह्यादिविषयप्रोक्षणादिजन्यत्वमेव संस्कारस्य तदीयत्वमित्यर्थः। प्रोक्षणादिजन्यसंस्कारस्य व्रीह्यादिप्रत्यासत्तौ किं प्रमाणम्? अत्राह—प्रत्यासत्तिश्चेति ॥ तदुपरागः=तत्सम्बन्धः। स च संयोगायोगात् समवाय एव स्यात्, अत्राह—सा चेति। ज्ञातो घट इति यथा घटस्य ज्ञानोपरागः स्वभावः, तथेत्यर्थः॥

स्वशब्दस्यात्मात्मीयसाधारण्याद् विकल्पयति—स्वभावेति ॥ आद्ये स्वो भावः स्वभावः इत्यभिहितं भवेत्। न च तत्सम्बन्धलक्षणम्; असंभवादित्याह—नाद्य इति ॥ असंभवमुपपादयति ॥ सम्बन्धीति ॥ संबन्धित्वस्य संबन्धिद्वयाधारत्वेन व्याप्तिर्विपक्षबाधकादध्यवसीयत इत्याह—अन्यथेति ॥ संबन्धिप्रतीतितो

नीतले नीलकलश इत्यादौ स्वभावप्रत्यासत्तिरेव; द्रव्यगुणयोराधारतालाघवादिति, संयोगसमवायापलापप्रसङ्गात्। अथ—तत्र सम्बन्धप्रतीतेर्मुख्यविषयत्वे न बाधकमस्ति, प्रकृते तु क्लृप्तसम्बन्धविजातीयस्य स्वरूपातिरिक्तस्य कल्पनायां गौरवं बाधकम्। नापि क्लृप्तः समवाय एकः संस्कारस्य व्रीह्यादौ सम्भवति; आत्मगुणत्वादिति—मन्यसे, न; संस्कारस्यात्मगुणत्वस्यैवासिद्धेः॥

॥ संस्कारस्य व्रीह्यादिसंबन्धो भावनावदिति दृष्टान्तासंभवोपपादनम्, संबन्धस्य दुर्वचत्वं च॥

यदपि भावनावदित्युदीरितम्[1] तत्र भावनायास्तदीयत्वप्रतीतिरबाधिता चेत्, सम्बन्धान्तरं सम्बन्धिद्वयाधिकरणं कल्पनीयम्। बाधिता चेत्, भ्रान्तिरेव, इति न युक्तमुदाहरणाम्। का तर्हि भूभागकुम्भाभावयोर्गतिरिति चेत्, यैव कुम्भ-भूभागयोः, सैव। तयोः संयोग इति चेत्, स एवानयोरपि। [न]हि द्रव्ययोरेव संयोग इति वैदिकं वचनम्, ज्ञान-ज्ञेययोरप्यध्याससम्बन्धस्वीकारात्। [2]ज्ञात इति-वदित्यप्यनुदाहरणम्। न द्वितीयः; स्वस्वभाव इति स्वीयवचनत्वे षष्ठ्यर्थसम्बन्ध-स्याभिधानीयतया संस्कारस्य व्रीहिगुणत्वसिद्धेः। तस्माद् यत्किञ्चिदेतत्॥

---

विलक्षणाबाधितप्रतीतिविषयत्वात् संयोगादेर्नापलापः स्यदिति शङ्कते—**अथेति**॥ **विजातीयस्येति**॥ संयोगसमयातिरिक्तस्येति यावत्। तर्हि क्लृप्तयोः संयोगस-मवाययोरन्यतरः संबन्धः स्यात्, अत्राह—**नापीति**॥ संयोगोऽपि; अद्रव्य-त्वादिति भावः॥

संस्कारस्य व्रीह्यादौ समवायमुपपादयन् परिहरति—**अबाधिका[ता]चे-[दि]ति**॥ घटस्य भावे[व]नेति प्रतीतेरभ्रान्तत्वे तदुपपत्तये स्वातिरिक्तः सम्बन्धः स्वीकार्य इत्यर्थः। स्वभावप्रत्यासत्त्याः स्वीकारे मेदिनीतले कलशो नास्तीत्यदौ विशे-षणविशेष्यभावः स्वभावसम्बन्धातिरिक्तसंयोगादिर्न सम्भवतीति शङ्कते—**का तर्हीति**॥ निगूढाभिसन्धिरुत्तरमाह—**यैवेति**॥ अगृहीतपराभिसन्धिः पर आह—**[यैव]भूभागयो-रिति**॥ स्वाभिसन्धिमुद्घाटयन् परिहरति—**स इति**॥ अभावस्याद्रव्यत्वाद्गुणः संयोगो न स्यात्, अत्राह—**न हीति**॥ ज्ञानज्ञेययोर्विषयविषयिभावः सम्बन्ध इत्युक्तं दूषयति—**ज्ञानेति**॥ स्वपदस्यात्मीयवचनत्वपक्षमाक्षिपति—**न द्वितीय इति**॥

एवं प्रासङ्गिकं परिसमाप्य, प्रस्तुतमुदनीयस्य मतस्य, निरासमनुसरति—

---

1. पृ. 110. प. 6 2. पृ. 110. प. 8

॥ व्रीह्यादीनामुद्देश्यत्वानुपपत्त्याऽपि तत्र संस्काराख्यातिशयसिद्धिः, अन्यथाऽवहननादीनामपि सक्तुन्यायेन पुरुषसंस्कारकर्मत्वापत्तिरिति गुणकर्मकथैव लुप्येत ॥

यदि च प्रोक्षणादिना व्रीह्यादौ फलानुकूलः संस्कारो न क्रियते, उद्देश एव तस्य हीयेत। उद्देशः समीहाऽभिसन्धिरिच्छेति पर्यायाः। इच्छा च फलगोचरा। न च पुरोडाशादिद्वाराऽऽग्नेयादावुपयोक्ष्यमाणत्वादुद्देश्यत्वम्; प्रोक्षणादिजन्यसंस्कारानाधारत्वे व्रीह्याद्यन्तरवत् तदनुपपत्तेः, अवहननसंयवनदोहनफलानां विकारोत्पत्तिप्राप्तीनां व्रीहिपिण्डदुग्धगतत्वदर्शनात्, व्रतातिरिक्ताङ्गकर्मजन्यातिशयस्य कर्तृव्यतिरिक्तकारकनिष्ठत्वनिश्चयाच्च, व्रीह्यादीनां क्रियाफलानाधारत्वे भूतभाव्युपयोगासम्भवेन सक्तुन्यायेन व्रीहिभिः पुरुषं प्रोक्षतीति करणतया क्रियोपसर्जनतापाताच्च॥

॥ "व्रीहीन् प्रोक्षती"त्यत्र जलसंयोगमात्रेण कर्मणि द्वितीयोपपत्त्यादिशङ्का, आत्मसमवेतादृष्टद्वारकत्वापेक्षया व्रीहिसमवेतादृष्टवत्तया कर्मत्वकल्पनायां लाघवेन तत्परिहारश्च ॥

[1]क्रियाफलं व्रीहिषु जलसंयोगोऽस्तीति चेत्, न "व्रीहीनि"तीप्सितकर्मणि द्वितीया व्रीहीणां विध्यपेक्षितफलाधिकरणत्वं प्रतिपादयति; संयोगस्य विध्यनपेक्षित-

---

**यदि चेति** ॥ तदुपपादयितुमुद्देशं निर्दिशति--**उद्देश इति** ॥ निर्दिष्टस्वलक्षणोप्युद्देशो व्रीहिस्वरूपं किं न गोचरयेत्, अत्राह—**इच्छा चेति**॥ फलगोचारा सती तदुपाधौ साधनमपि गोचरयतीत्यर्थः—**तदु[दनु]पपत्तेरिति** ॥ आग्नेयादिषूपयोगायोगादित्याशयः। यागादिजन्यापूर्वस्यात्मा[त्म]समवायात् तन्निदर्शनेन प्रोक्षणादिकृतसंस्कारस्यात्मसमवायश्चेत्, अवहननादिफलोदाहरणेनानात्मसमवायः किं न स्यात्? अत्राह—**अवहननेति** ॥ "व्रीहीनवहन्ती"ति विहितावघातफलं विकारः=तण्डुलभावः, "पिष्टं संयौती"ति संयवनस्य पिण्डोत्पत्तिः, "गां दोग्धी"ति गोदोहनस्य दुग्धप्राप्तिः। एवं पक्षद्वयेऽप्युदाहरणसाम्ये स्वपक्षे निश्चयमाह—**प्रतो[व्र]तेति** ॥ दीक्षा=व्रतम्।

"कर्तुरीप्सिततमं कर्म", "कर्मणि द्वितीया" इति लक्षणावष्टम्भेन दूषयति—**न व्रीहीनिति** ॥ संयोगोऽपीप्सित इति, अत्राह—**संयोगस्येति** ॥

---

1. पृ. 108, प. 8

त्वात् तन्मात्राधिकरणत्वानुपपत्तेः, जलसंयोगो नादृष्टम्, न चादृष्टं विना विधिरर्थवान् स्यादिति। संयोगविशिष्टस्यापीप्सिततमत्वमिति चेत्, न; आत्मसमवेतादृष्टजनकसंयोगाधिकरणत्वेनेप्सिततमत्वोपचारकल्पनात् प्रोक्षणजन्यसंस्कारवत्तयेप्सिततमत्वस्य कल्पयितुं युक्तत्वात् ॥

॥ कृष्यादिषु पाकजरूपादिभिः कार्यनियमासिद्धिः, परमाणुषु पाकजगुणविशेषे
प्रमाणाभावात् कार्यविशेषदर्शनेनानुमानमपि दुष्टम्;
व्यभिचारादिति तत्तद्गतातिशयाख्या शक्तिरवश्यं स्वीकर्तव्या,
इत्यनुकूलप्रतिकूलानुमानव्रातपरीक्षा ॥

[1]यत्पुनरवादि—कृष्यादावपि क्लृप्तैः पाकजादिगुणविशेषैरेव कार्यनियमोपपत्तौ नाप्रसिद्धातिशयकल्पना, इति साध्यवैकल्यम्—इति, तदप्यपेशलम्; परमाणुषु पाकजादिगुणविशेषे प्रमाणाभावात्। कलमाङ्कुरादिकार्यसमवायिगुणविशेषदर्शनात् तदनुमानमिति चेत्, न; क्षीरतैलयोः सांसिद्धिकद्रवत्व [वत्त्व] दर्शनेन तदारम्भकपार्थिवपरमाणुषु सांसिद्धिकद्रवत[व]त्त्वानुमानप्रसङ्गात्। तैलादौ सांसिद्धिकद्रवत[व]त्त्वमण्वन्तरावष्टम्भादिति चेत्, तुल्यम्; सांसिद्धिकद्रवैरेव सलिलैः कठिनकरकादिकमारभ्यते, इत्यतोऽपि व्यभिचारः। पार्थिवाणवः, न पाकजगुणाः, अणुत्वात्; सलिलाणुवत्, तद्गन्धवत्, पार्थिवाणुगन्धरूपरसस्पर्शाः, न पाकजाः, परमाणुगुणत्वात्;

---

संस्कारस्यैव पुरोडाशादिद्वारोपयोगादित्यर्थः। संस्कारकारकत्वेन संयोगस्य फलत्वात्तदधिकरणस्येप्सितत्वमिति शङ्कते—**जलेति** ॥ लाघवन्यायमभिप्रेत्य परिहरति—**नेति** ॥

पाकजा न नियामका इत्येतद्विभजते—**यत्पुनरिति** ॥ यवाङ्कुरादिरूपाद् विलक्षणा रूपादयः कलमाङ्कुरस्य दृश्यन्ते। ते, समवायिकारणसमवेतसजातीयगुणारब्धाः, कार्यगतविशेषगुणत्वात्; कार्यतोयगतशैत्यादिवदिति शङ्कते—**कलमेति** ॥ क्षीरादिद्रवत्वेन व्यभिचार इति परिहरति—**नेति** ॥ ततोऽन्यत्वविशेषणेऽप्याह—**सांसिद्धिकेति** ॥ वर्षोपलः = करकः। आदिपदेन फेनादिसङ्ग्रह इति भावः। न केवलं साधकाभावः, बाधकं चास्तीत्याह—**पार्थिवेति** ॥ दृष्टान्ते साध्यं साधयति—**पार्थिवाणुगन्ध इति** ॥ रूपादीनां पृथिवीविशेषगुणत्वं पाकजत्वेनैव, इति तदसिद्धावसिद्धो हेतुरित्याह—**नेति** ॥ अवयवविपाक-

---

1. पृ. 105 पं. 15

सलिलपरमाणुरूपवत्, पार्थिवाणुरूपरसस्पर्शाः, पाकजाः, पार्थिवाणुविशेषगुणत्वात्; तद्गन्धवत्, पार्थिवाणुगन्धः पाकजः, गन्धत्वात्; घट[1](गन्ध)वदिति चेत्, न; प्रथमस्य हेतोः प्राक् पाकजत्वसिद्धेरसिद्धेः, द्वितीयस्यापि—गन्धत्वम्, अपाकजवृत्ति, गन्धवृत्तित्वात्, सत्तावदिति सत्प्रतिहेतुकत्वात्। पार्थिवरूपादित्वात् पाकजत्वानुमानमिति चेत्, न; नित्यनिष्ठत्वादिना सत्प्रतिपक्षत्वात्, पार्थिवे[वत्वे]नाणूनामपि कार्यत्वाद्यनुमानापत्तेश्च। कृष्याद्याधेयातिशयाधारतयाऽङ्कुरविशेषनियामकत्वे दृष्टान्ते न साध्यविरहः ॥

॥ उद्देश्यसमवाय्यदृष्टस्यासाध्यत्वान्न देवतादावतिशयाभावेन व्यभिचारादि ॥

[2]यदप्युक्तम्—यदा[था]हि देवताविशेषोद्देशेनेत्यादि, तदकाण्डताण्डवितम्; यत उद्देश्यसमवाय्यतिशयो न साध्यः।

॥ कारीरेष्टेः पुरुषार्थत्वात् पुरुषसंस्कारकत्वम्, प्रोक्षणस्य तु क्रत्वर्थत्वात्ततो विशेषः, इति न तेन न्यायेन व्रीहिष्वतिशयायोगः ॥

[3]यच्चावाचि—यथाच कारीरी—[जनितेत्या]दि, तदपि कारीर्याः पुरुषार्थत्वात् तद्गतापूर्वजनकत्वम्, प्रोक्षणादेः क्रत्वर्थत्वात् तदङ्गव्रीह्यादौ संस्कारजनकत्वमिति विनियोजकश्रुत्यादिप्रमाणविरुद्धम् ॥

॥ अतिशयस्यैवागमिकत्वम् ॥

[4]यदपि रटितम्—आगमिकत्वस्योभयत्राविशेषात्—इति, तदसिद्धम्; प्रोक्षणादेः कर्तृसंस्कारत्वस्यानागमिकत्वात् ॥

---

माश्रित्य शङ्कते—**पार्थिवेति** ॥ परमाणुरूपम्, पाकजम्, पार्थिवरूपत्वात्; घटरूपवत्। रसादिकमपि प्रत्येकं पक्षीकृत्य प्रयोक्तव्यम्। पार्थिवाणुरूपादयः, न पाकजाः, अश्रावणत्वे सति नित्यनिष्ठत्वात्, पारिमाण्डल्यैकार्थसमवायित्वाच्च; सलिलपरमाणुरूपादिवदिति परिहरति—**नेति** ॥ अतिप्रसङ्गतर्कपराहतिमप्याह—**पार्थिवत्वेनेति** ॥ तस्मात् कृष्याद्याधेयता[या]तिशयाः परमाणवः कार्यविशेषमारभन्त इति वाच्यम्। एवं च दृष्टान्तसिद्धिरित्याह—**कृष्यादीति** ॥ "कारीर्या यजेत वृष्टिकामः" इति समीहितोपायतया विधानात्। **विनियोजकेति** ॥ 'व्रीहीनि'ति

---

1. कुण्डलान्तर्गतं नास्ति।
2. पृ. 106. प. 2.
3. पृ. 106. प. 8.
4. पृ. 106. प. 13.

॥ व्रीह्यादीनां संस्कारकर्मत्वप्रयुक्तत्वादतिशयाख्यशक्तिं विना न निर्वाह इत्युपसंहारः ॥

[1]यदप्यभिहितम्—एवमभिमन्त्रणप्रोक्षणादिसंस्कारा अपि भवन्तः—इत्यादि, तदपि व्रीह्यादीनां संस्कार्यत्वोद्देश्यत्वानुपपत्त्या परास्तम् ॥

एवं तावदसाधि शक्तिरखिले हेतौ द्वितामेदिता
**वादीन्द्रा**दिकुतर्कपद्धतितमःसन्तानसंज्ञापिता ।
अर्थापत्तिसहायसम्पदधिकश्रुत्या स्वतस्सिद्धया
तर्कप्रोत्थबलानुमानविलसत्प्रामाण्यसल्लीलया ॥ १५ ॥

इति न्यायचन्द्रिकायां शक्तिवादो द्वितीयः समाप्तः ॥

---

द्वितीयाश्रुतिः प्रोक्षणस्य व्रीहिशेषत्वं बोधयति । आदिपदेन प्रकरणसङ्ग्रहः; "व्रीहिभिर्यजेते"ति प्रकृतव्रीहिसम्बन्धात् ॥

वृत्तमर्थं संक्षिपन् वर्तिष्यमाणार्थमुपक्षिपति—**एवमिति** ॥ अर्थापत्तिः = प्रतिबन्धान्यथानुपपत्तिरूपा, सहायः, तत्सम्पदधिका यस्यां सा, अर्थापत्तिसहाय-सम्पदधिका, सा च श्रुतिश्च, तया पक्षानुकूलः प्रतिपक्षप्रतिकूलः तर्कः । तस्मात् प्रकर्षेण निरस्तसमस्तकलङ्काशङ्कतयोत्थं बलं यस्यानुमानस्य, तेन विलसत् प्रामाण्यस्य, सती = सुगतादिभिः प्रतिक्षेपानर्हा, लीला = चेष्टा यस्यां श्रुतौ, तया, इति शक्तावर्थापत्त्यनुमानागमात्मकं प्रमाणत्रयमनुकीर्तितम् । **स्वतस्सिद्धये**'-त्युत्तरपदा[वादा]र्थः ॥

इति न्यायचन्द्रिकाव्याख्यायां प्रकाशिकायां शक्तिवादो द्वितीयः समाप्तः ।

---

1. पृ. 108. प. 5.

## ॥ अथ वेदापौरुषेयत्ववादस्तृतीयः ॥

### ॥ वेदस्वतःसिद्धत्वस्य द्वेधा विकल्प्य दूषणम् ॥

अथ वेदस्य स्वतस्सिद्धत्वमनादित्वम्, बुद्धिपूर्वरचनाराहित्यं वा। आद्ये शास्त्रयोनित्वाधिकरणविरोधः। न द्वितीयः; मानाभावात्, पौरुषेयत्वप्रमाणविरोधाच्च॥

### ॥ पञ्च वेदपौरुषेयत्वानुमानानि ॥

तथाच प्रयुञ्जते (१) वेदवाक्यक्रमः, पुरुषबुद्धिजन्यः, वाक्यक्रमत्वात्; कालिदासादिवाक्यक्रमवदिति। (२) यद्वा—वेदवाक्यम्, बुद्धिज[1]प्रयत्नजन्यम्, वाक्यत्वात्; कालिदासवाक्यवदिति। (३) यद्वाऽयं कालः, वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयवान्, कालत्वात्; अन्यकालवदिति। (४) यद्वाऽऽकाशः, वेदव्यतिरिक्ताकाशनिष्ठत्व-

---

## ॥ अथ वेदापौरुषेयत्ववादस्तृतीयः ॥

'स्वतस्सिद्धये'इत्युक्तमाक्षेप्तुं पृच्छति—**अथेति**॥ पौरुषेयत्वग्राहिप्रमाणं नोपलभामहे, अत आह—**तथाचेति**॥ **प्रयुञ्जते**॥ वा दी न्द्र मिश्रा इति शेषः। क्रममात्रपक्षीकरणे संसारक्रमभागे बाधः, अत उक्तम्—**वाक्यक्रम इति**॥ दृष्टान्तभागे सिद्धसाध्यत्वं वारयति—**वेदेति**॥ बुद्धिजत्वसाधने यद्यपि साध्यपर्यवसानम्; तथापि पौरुषेयत्वं स्फुटयितुं विशेषणम्—**प्रयत्नजन्यमिति**॥ एतावत्युक्ते प्रमाणान्तरेण प्रयत्नजन्यत्वेऽपि न पौरुषेयत्वसिद्धिः, अत उक्तम्—**बुद्धिजेति**॥ प्रयोगान्तरमपि सुकरमित्याह—**अयमिति**॥ वेदव्यतिरिक्तत्वे सतीदानीन्तनत्वरहितं पौरुषेयं च तद्वान्। वेदव्यतिरिक्तत्वे सतीदानीन्तत्वरहितः, अनिदानीन्तनो वा वेदः स्यात्। आद्यः पक्षेऽ[क्षो]व्याहतः, इति द्वितीयः पौरुषेयत्वपक्षे सिध्यतीति वेदपौरुषेयत्वसिद्धिः। पौरुषेयवानित्युक्ते घटादिमत्तया सिद्धसाधनम्, अत उक्तम्—**इदानीन्तनत्वरहितेति**॥ तथा सति बाधो मा भूदित्याह—**वेदव्यतिरिक्तेति**॥ **आकाश इति**॥ वेदव्यतिरिक्तत्वे सत्याकाशनिष्ठत्वराहित्यमनाकाशनिष्ठतया, वेदतया वा। आद्यः पक्षोऽसंभवी, इति द्वितीयः पौरुषेयत्वविशेषणं सिध्यन्न[द]न्तर्भाव[व्य]साध्यं सिध्यतीत्यर्थः। **श्रोत्रमिति**॥ वेदव्यतिरिक्तत्वे सति श्रोत्रग्राह्यत्वराहित्यमश्रावणत्वेन वा स्यात्, वेदन[दान्य]त्वेन वा। प्रथमः पक्षः पराहत इति द्वितीयः पौरुषेयत्वविशेषणं सिध्येदिति भावः।

---

1. प्रवृत्ति

रहितपौरुषेयवान्, द्रव्यत्वात्; तन्तुवदिति। (५)यद्वा—श्रोत्रम्, वेदव्यतिरिक्त-श्रोत्रग्राह्यत्वरहितपौरुषेयग्राहकम्, इन्द्रियत्वात्; चक्षुर्वदिति ॥ यदाह परमर्षिः—"बुद्धिपूर्वा वाक्यकृतिर्वेदः" इति ॥

अपरोऽप्याह—अस्तु तावदसौ सर्वज्ञः कर्ता, वक्ता तु कथमिति चेत्, वचनशक्तौ सत्यां परार्थैकतानत्वात् ॥

यो हिताहितविभागं विद्वान् परार्थाभिप्रायः, सं[सः] स्थान[1] करणपाटवे सत्य-विदुषेऽवश्यमुपदिशेत्—यथाहि दक्षिणेन याहि, वामेन मा गा इति पृथग्जनोऽपि, तथा भगवान्—इति। परमेश्वरः, हिताहितोपायोपदेष्टा, तदभिज्ञत्वे सति परार्थैक-प्रवृत्तिकत्वात्; तथाविधलौकिकवदिति प्रयोगः ॥

---

पौरुषेयत्व[?]ग्राहकमित्युक्ते कालिदासादिवाक्यग्राहकत्वं विरुद्धम्, अतोश[त उ]क्तम्—**श्रोत्रग्राह्यत्वरहितेति** ॥ बाधपरिहारायोक्तम्—**वेदव्यतिरिक्तेति** ॥ काणादसूत्रं गदितार्थे संवादयति—**यदाहेति** ॥

वौद्धाधिकारं पूर्वपक्षतयोत्थापयति—**अपरोऽपीति** ॥ किमाहेति, अत्राह—**अस्त्विति** ॥ कार्यानुमानबलात् कर्ता सर्वज्ञः सिध्यतु, नैतावता वक्तृत्वमस्य सिध्यति, येन तद्वचनादाम्नायप्रामाण्यं स्यादित्याशयः। **परार्थैकतानत्वादिति** ॥ परस्यार्थः=प्रयोजनम्, एकतानम्=एकरसो यस्य, स तथा। परार्थैकप्रवृत्तत्वादिति यावत्। विश्वकर्तुरुपदेशमनुमातुं व्याप्तिं दर्शयति—**य इति** ॥ **स्थाप[?]नकरणेति** ॥ स्थानम्=स्थाल्या[ताल्वा]दि, तस्य पाटवम्-वातादिजनितजाड्यं[ड्य]विरहः। करणम्=संवृतादि, तस्य पाटवम्=तीव्रत्वम्। व्याप्तहेतोः पक्षधर्मतामाह[—**तथेति** ॥] **प्रयोगमत्र रचयति—परमेश्वर इति** ॥ उपदेष्टेति साध्यम्। कस्येति साकाङ्क्ष-त्वेनानर्थक्यं परिहर्तुं **हिताहितोपायेत्युक्तम्**। रागमूलस्वार्थैकप्रवृत्तिमता व्यभिचारं व्यावर्तयति—**परार्थेति** ॥

[2][स्वार्थशेषयता परार्थं वञ्चनादिविकाराभिप्रायमाशङ्कते—**यदीति** ॥ लौकिक वाक्यस्योद्दिष्टार्थपरत्वेऽपि न वैदिकस्य तथात्वमिति, अत्राह—**लो[लौकि]केति** ॥

---

1. कारणपाटवे
2. [ ] मध्यपतितव्याख्याभागस्य मूलांश आदर्शयोः परीक्षितयोर्न दृश्यते।

॥ उपदेष्टुः स्थानकारणपाटवावश्यंभावात् तद्वानेवेश्वरोऽपीति
तदधिष्ठानेनैवेश्वरस्यापि वेदकर्तृत्वम् ॥

स्थानकरणपाटवमसिद्धम् ; तेषां ताल्वादिविवृतादिदेशत्वात् । न च तदन्तरेणैव तन्निष्पत्तिः ; तदुपप[त्प]त्तेरवधारणात् । न च तत्करणमनधितिष्ठतः तत्कर्तृत्वमीश्वरस्यापीति चेत्, न ; यस्य कार्यस्य यत्करणमन्वयव्यतिरेकसिद्धम्, [1]तत्करणाधिष्ठानस्य स्थूलसिध्यर्थं तदवयवपरम्पराकारणाधिष्ठानवद्वश्यम्भावनियमात् । पितृत्वाद्वोपदेशानुमानम् ॥

---

य एव लौकिकाः, त एव वैदिका इत्यपि न मानम्, [किन्तु]वच्च[च]नमिति, अत्राह—**अन्यथेति** ॥ उद्देश्यविधिपरत्वामात्रेऽर्थवादानामानर्थक्यम् ; स्वार्थे फलाभावादित्यर्थः । तथापि कथं वेदप्रणेता शिवः सेत्स्यतीति ? अत्राह—**स चेति** ॥ उद्देशतात्पर्ययोर्भिन्न[भिन्न]गोचरत्वान्नैकत्वमिति परिहरति—**नेति** ।।] लौकिकतात्पर्यस्यादेयानाप्रवर्तते[?], ततो व्यावर्तयति—**एकेति** ॥ मेघादिना व्यभिचारं वारयति—**तदभिज्ञत्वे सतीति** ॥ ईश्वरस्याशरीरत्वात् कथं स्थानादिपाटवं स्यात् ? इति शङ्कते—**स्थानेति** ॥ स्थानानि=ताल्वादीनि—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥

[इति ।]**विवृतादीति** ॥ स्पृष्टं करणं स्पर्शानाम्, ईषत्स्पृष्टमन्तःस्थानाम्, विवृतमूष्मणां स्वराणां च, संवृतमकारस्य । **तदुत्पत्तेरिति** ॥ स्थानाभि[दि]पाटवादुपदेशोत्पत्तेरन्वयव्यतिरेकाभ्यां निश्चयादित्यर्थः । ईश्वरस्याचिन्त्यशक्तित्वादन्तरेण का[क]रणाधिष्ठानं कर्तृत्वं स्यात्, अत्राह—**न चेति** ॥ कारकान्तरप्रेरकस्यैव कर्तृत्वादित्यर्थः ॥

शरीरमन्तरेणानुपपन्ने कार्ये तदपि स्वीक्रियत एवेत्याह—**नेति** । **स्थूलेति** ॥ कुलालादेरप्यवयविसिध्यर्थं तदवयवपरम्परायां कारणभूतायां यथाऽधिष्ठाननियमः, अन्यथा स्थूलजननस्यैवानुपपत्तेः, तथेत्यर्थः ॥ प्रयोगान्तरमाह—**पितृत्वादेरि[द्वे]ति** ॥ **ईश्वरः**, श्रेयस्साधनोपदेष्टा, पितृत्वात् ; लौकिकपितृवदित्यर्थः । पितृत्वस्याविप्रलम्भकत्वेन व्याप्तेः, कर्तृत्वस्य च तत्कारणज्ञानवत्त्वेन ॥

---

1. तत् इति नास्ति

॥ गतकल्पीयवेदानुसन्धानेनोपदेष्टृत्वमात्रमीश्वरस्य, न तु तत्कर्तृत्वमिति सेश्वरमीमांसा मतनिरसनम्; 'न कदाचिदनीदृशं जगदि'ति सिद्धान्तस्यैव न्यायदर्शनेऽपि समन्वयात्। सर्वज्ञस्येश्वरस्य पूर्वरूपानुसन्धानेन घटान्तरकर्तृत्ववत् सर्वोपपत्तिरिति व्यवस्था ॥

परमेश्वरप्रवृत्तितोऽप्ययमेव वेदसंप्रदायः सर्गान्तरवेदापेक्ष एवेति सेश्वरमीमांसापक्षः स्यादिति चेत्, किमर्थं पुनरियमपेक्षा पूर्ववेदे जगन्नाथस्य? न तावद्वेदार्थोपलम्भाय; नित्यसर्वज्ञत्वात्। नापि रचनार्थम्; स्वभावतः सर्वकर्तृतया[1] दर्शनानपेक्षणात्। नापि विरोधपरिहारार्थम्; प्रतिपाद्यानां तदनुसन्धानविधुरत्वात्, अवैधुर्ये कर्तुः सार्वज्ञविज्ञानादेव समस्तविरोधविधूननात्; तथापि पूर्वसर्गान्तरवेदव्यवहारोऽपि परमेश्वरस्य गोचर इति चेत्, कस्सन्देहः? यदि चैतदेव वेदस्य प्रवाहनित्यत्वम्, न केवलं तस्य, किन्तु [2]पटादेरपीति न्याय एव दर्शनम्; अन्यथा मीमांसैवेति, क सेश्वरमीमांसेति?

---

वेदकर्तृत्वं सर्वज्ञेश्वरस्य स्वीकृत्य शङ्कते—**परमेश्वरेति** ॥ जातमात्रैर्मन्वादिभिरह जन्मनि दुर्ग्रहत्वात्। कथमीश्वरस्याप्तत्वनिश्चयः? [न] मन्वादीनामिति, अत उक्तम्-- **सर्गान्तरेति** ॥ स्वर्गयागादिसाध्यसाधकभावज्ञानार्थं वा रचना, प्रतिच्छन्दतया वा, करिष्यमाणस्य पूर्वेण सहाविरोधार्थं वा विश्वकर्तुः पूर्वं वेदापेक्षेति विकल्पं हृदि निधायाह—**किमर्थमिति** ॥ आदर्शः = प्रतिच्छन्दः। **प्रतिपाद्यनामिति** ॥ सर्गादिभुवां पुंसां सर्गान्तरवेदापरिज्ञानेन तद्विरोधप्रतिसन्धानाभावादिति भावः। विरोधे सत्यपि दोषाभावादित्याह—[अ]**वैधुर्य इति** ॥

यद्यपि सर्वज्ञस्य वेदप्रवर्तनाय पूर्ववेदापेक्षा नास्त्येव; तथापि तद्व्यवहारः तज्ज्ञानगोचर एव, तावतैव प्रवाहा[ह]नित्यत्वसिद्धिरित्याशङ्कते—**तथापीति** ॥ पूर्ववेदस्य तज्ज्ञानविषयत्वेऽपि तस्यानपेक्षणीयत्वान्न प्रवाहनित्य[त्व]सिद्धिरित्याशयेनाह—**क इति** ॥ **इति न्याय एव दर्शनमिति** ॥ विश्वकर्तुर्निरपेक्षस्यैव वेदप्रणेतृत्वं वा स्यात्, ईश्वराभावेन वेदस्येव[स्य वा] नित्यत्वम्। क पुनरीश्वरास्तित्व-वेदनित्यत्वयोः संभावनयेत्यर्थः ॥

---

1. दर्शना(क)
2. पादैरपीति(क)

॥ वेदस्येश्वरकर्तृकत्वे तदनित्यत्वेऽपि च कुसुमाञ्जलिकारानुमतिः,
तत्प्रसङ्गेन वर्णनित्यत्वनिरासपूर्वकं तदनित्यत्वस्थापनं च ॥

अन्यत्रापि वेदनित्यत्वमसिद्धमित्यभिधीयते । नैवाभिहितम् । न हि वर्णा एव नित्याः । तथाहि—इदानीं श्रुतपूर्वो गकरो नास्ति, निवृत्तः कोलाहल इति प्रत्यक्षेणैव शब्दध्वंसः प्रतीयते । न हि शब्द एवान्यत्र गतः; अमूर्तत्वात् । नाप्यावृतः; तत एव सम्बन्धविच्छेदानुपपत्तेः । नाप्यनवहितः; श्रोता[त्राऽ]वधानेऽप्यनुपलब्धेः । नापीन्द्रियं दुष्टम् । नापि सहकार्यन्तराभावः; अन्वयव्यतिरेकवतस्तस्यासिद्धेः । नाप्यतीन्द्रियं तत्कल्पनीयम्; प्रमाणाभावात्, अन्यथा घटादावपि तत्कल्पनाप्रसङ्गात् । न च—शब्दनित्यत्वसिद्धौ तत्कल्पनेति— युक्तम्; तदसिद्धेः ॥

॥ शब्दानित्यत्वानुमानं 'सोऽयं गकार' इति प्रत्यभिज्ञानेन
ज्वालैक्यप्रत्यभिज्ञानवद्बाधितेनाबाधितमित्युपन्यासः ॥

तथा शब्दः, अनित्यः, उत्पत्तिधर्मकत्वात्; घटवत् । न चेदं प्रत्यभिज्ञानबाधितम्; तस्य ज्वालाप्रत्यभिज्ञानेनाविशेषात् ।

---

**कुसुमाञ्जलावपि** वेदकर्तृतयेश्वरोऽसाधीति, अत्राह—**अन्यत्रेति** ॥ क्रमविशेषाक्रान्तवर्णानां वेदत्वाद् वर्णानां नित्यत्वासिद्धौ कुतस्तन्नित्यतेत्याह—**न हीति** ॥ उपपादयति—**तथाहीति** ॥ सामान्यतः कोलाहलो निवृत्त इति, गकारो नास्तीति विशेषतश्च ध्वंसरूपमनित्यत्वं श्रौत्रमित्यर्थः । ध्वंसं विनाऽप्ययमनुपलम्भः स्यात्, अत्राह—**न हीति** ॥ अमूर्तत्वस्य निष्क्रिय[त्व]व्याप्तेरित्यर्थः । अमूर्तत्वादेवेन्द्रियसंबन्धविच्छेदलक्षणमावरणमपि । घटादेरिव न घटत, इत्याह—**नापीति** ॥ सत्येन्द्रियसम्बन्धे श्रोतुरनवधानादनुपलब्धिः, अत्राह—**नापीन्द्रियमिति** ॥ अदुष्टेऽपीन्द्रिये प्रतिशब्दं तत्सहकारिणां भेदाच्छब्दान्तरोपलम्भेऽप्यनुपलम्भः शब्दान्तरस्योपपद्यते; तदुपलम्भसहकार्यन्तराभावात्, अत्राह—**नापीति** ॥ तस्यातीन्द्रियत्वादनुपलम्भः, अत्राह—**नाप्यतीन्द्रियमिति** ॥ श्रुतस्य शब्दस्याभावेनैवोत्तरकालमनुपलम्भोपपत्तेः, तदनुपलम्भोपपत्त्यर्थं सहकारिकल्पनायां प्रमाणाभावादित्यर्थः ॥ तथापि तावत्कल्पने प्रध्वस्तेऽपि घटेऽनुपलम्भः सहकारिविरहादिति स्यादित्याह—**अन्यथेति** ॥ घटादौ न तत्कल्पनम्; अनित्यत्वात्, नित्यस्य तु शब्दस्यानुपलम्भः सहकारिविरहनिबन्धन एवेति तत्कल्पनम्, अत्राह—**न चेति** ॥

स एवायं गकार इति प्रत्यभिज्ञाने पूर्वापरकालयोः स्थिरत्वसिद्धौ तावत्कालं स्थितं चैनं कः पश्चान्नाशयिष्यतीति न्यायान्नित्यत्वमपि सेत्स्यं[त्स्यति], इति तेनानित्यानुमानं बाधितविषम्, अत्राह—**न चेति** ॥ शब्दप्रत्यभिज्ञानस्याबाधितत्वात्, स्वतः

॥ गकारप्रत्यभिज्ञानज्वालाप्रत्यभिज्ञानयोर्विशेषाविशेषविचारः ॥

नैवम्; अबाधितस्य स्वतः प्रामाण्यमिति—चेत्, तुल्यम्—

॥ गप्रत्यभिज्ञानज्वालाप्रत्यभिज्ञानयोरविशेषस्यानुपदसङ्गृहीतस्य विस्तरः ॥

ज्वालायां तन्नास्ति; विरुद्धधर्मग्राहकानन्यथासिद्धप्रत्यक्षव्यतिरिक्तनिमित्तस्य भेदव्यवहारयोग्यस्याभावात्। ज्वालाप्रत्यभिज्ञा भेदग्राहिप्रत्यक्षेण बाध्यत इति चेत्, तुल्यम्; शब्देऽपि तीव्र-तीव्रतर-मन्द-मन्दतरादेर्भावात् ॥

॥ शब्दे तीव्रतीव्रतरत्वादेः स्वाभाविकत्वनियामकन्यायाभावाद्
गकारादिप्रत्यभिज्ञानस्य नित्यत्वासाधकत्वस्य दृष्टान्तपूर्वकमुपपादनम् ॥

तदिह न स्वाभाविकमिति चेत्, न; स्वाभाविकत्वावधारणन्यायस्य यत्र तत्र प्रसिद्धस्यात्रापि तुल्यत्वात् ॥

॥ शब्दतीव्रतीव्रतरत्वादेर्ध्वन्युपाधिनिमित्तकत्वेनौपाधिकत्वमेव,
न स्वाभाविकत्वमित्युपपादनम् ॥

न ह्यपां शैत्य-द्रव्य[व]त्वे स्वाभाविके, तेजसो वौष्ण्यभास्वरत्वे इत्यत्रान्यत् प्रमाणं प्रत्यक्षात्। तथैव युज्यते; अन्यस्योपाधेरनुपलम्भात्, नियमेन तद्गतत्वेन

---

प्रामाण्याच्च न भ्रान्त[त्वम्,] इत्याह—**नैवमिति** ॥ तदेतदुभयं ज्वालप्रत्यभिज्ञानेऽपि तुल्यमित्याह—**तुल्यमिति** ॥

ज्वालाप्रत्यभिज्ञानत्वे[ने] बाधितत्वं नास्ति; अवयवोपचयलक्षणविरुद्धधर्माध्यस्तविषयत्वादित्याह—**ज्वालायामिति** ॥ यदि[?] विरुद्धधर्माध्यस्तस्यापि भेदो न स्यत्, अत्राह—**अन्यथेति** ॥ तदेतद्विरुद्धधर्माध्यस्तविषयत्वं शब्दप्रत्यभिज्ञानेऽपि तुल्यमित्याह—**तुल्यमिति** ॥ कुतस्तत्? अत्राह—**शब्दमपी[शब्देऽपी]ति** ॥

तत्तीव्रत्वादिकं न स्वाभाविकम्; व्यञ्जकध्वनिधर्मस्य शब्द आरोप्यमाणत्वादित्याह—**तदिहेति** ॥ यदि यतः कुतश्चित् न्यायाद् यस्य कस्यचिद्धर्मस्य यं कञ्चिद्धर्मिणं प्रति स्वाभाविकत्वमवधार्यते, तर्हि तेनैव न्यायेन तीव्रत्वादीनामपि शब्दं प्रति स्वाभाविकत्वमवधार्यतामिति परिहरति—**नेति** ॥

तमेव न्यायमाह—**न हीति** ॥ शङ्कते—**तथेति** ॥ द्रववत्त्वादि तथैवाबादीनां स्वाभाविकमिति युक्तम्; तद्धर्मकस्यान्यस्योपाधेरनुपलम्भाद् अबादिगतत्वेनैव च

चोपलम्भादिति चेत्, तुल्यम्। तथापि हेतुरसिद्ध इति चेत्, न; शब्दस्तावत्पूर्वन्यायेन स्वाभाविकतीव्रमन्दतरतमादिभावेन [प्रकर्ष]निकर्षवानुपलभ्यते। इयञ्च प्रकर्षनिकर्षवत्ता कारणभेदानुविधायिनी सर्वत्रोपलब्धा। अकारणका हि [1]नित्यप्रकर्षवन्त एव भवन्ति—यथाऽऽकाशादयः, निकृष्टा एव वा—यथा परमाण्वादयः। न तु ते कुतश्चिदपकृष्यन्ते॥

॥ शब्दानित्यत्वानुमानस्य कुसुमाञ्जलिकारीयस्योपसंहारः, तेन च वर्णानामनित्यत्वाद् वेदस्यापि वर्णसमुदायरूपस्य पौरुषेयत्वमिति व्यवस्था॥

तदियं नित्येभ्यो व्यावर्तमाना कारणवत्स्वेव भवन्ति[न्ती] जायमानतामुपादायैव विश्राम्यति, इति प्रतिबन्धसिद्धौ प्रयुज्यते—शब्दः, जायते, प्रकर्षनिकर्षाभ्यामुपेतत्वात्; माधुर्यादिवदिति; अन्यथा नियामक[2]व्यतिरेकेण भवति[न्ती]नित्येष्वपि स्यात्; नियमे हेतोरभावादिति॥

॥ वक्तुराप्तत्वानाप्तत्वाभ्यामेव शब्दप्रामाण्यात् वक्तुरभावे प्रामाण्यस्याप्यभावापत्तिरिति वेदपौरुषेयत्ववादिनो भा स र्व ज्ञ स्य मतोपन्यासः, यत्रादावुत्पत्तौ वक्त्रपेक्षा साध्यते। इदं तु मतं वर्णनित्यत्वेऽपि वाक्यानित्यत्वं सर्वसम्मतं गृहीत्वा॥

---

शैत्यादीनामुपलम्भादिति भावः। तदपि तुल्यं तीव्रत्वादीनामित्याह—**तुल्यमिति**॥ शब्देऽपि तीव्रत्वादेः स्वाभाविकत्वेन विरुद्धधर्माध्यासेन भेदग्राहिप्रत्यक्षबाधितप्रत्यभिज्ञानानवधृतविषयत्वेप्यन्यतरासिद्धिरवशिष्यत इत्याह—**तथापीति**॥ हेतुसिद्धावनुमानम्। विवक्षितस्य प्रतिबन्धसिद्धिं तावदाह—**शब्दस्तावदिति**॥ ततः किमिति? अत आह—**[इ]यञ्चेति**॥ सर्वत्र मा[धु]र्यादौ कारणप्रकर्षनिकर्षानुविधायिनीत्यर्थः॥ अन्वयं दर्शयित्वा व्यतिरेकमपि दर्शयति—**अकारणका हीति**॥ ततोऽपि किमिति? अत आह—**यदियमिति**॥ अनुग्राहकं तर्कमाह—**अन्यथेति**॥ नियामकम्=कारणम्। प्रकर्षनिकर्षमन्तरेण शब्दे भवन्ती प्रकर्षवत्ता गगनादिष्वपि भवेत्; शब्द एव, नाकाशादिष्विति नियमने हेत्वभावादित्यर्थः॥

---

1. नित्याः प्रकर्ष
2. नियामाव्यति (क)

अन्योऽपि पण्डितम्मन्यो मन्यते—यथैव हि रागादिपरिगतः पुरुषो मृषावादी दृष्टः, तद्वत् परिज्ञानदयादियुक्तः सत्यवादीति। ततश्च यथा शब्दे वक्तृवशाद् मिथ्यार्थता, तथा सत्यार्थतापि, इति, सन्नि[सा]निवर्तमाना तामपि निवर्तयतीत्यानर्थक्यमेवापद्येत ॥

उत्पत्तौ वक्त्रनपेक्षायामपि बोधकत्वं तस्य संकेतकारिणः पुरुषस्यापेक्षयैव,
अतोऽपि पौरुषेयत्वम्; अन्यथाऽबोधकत्वमेव वेदस्य स्यात्,
सर्वेषामपि तदर्थबोधो वा स्यात् ॥

अपि चापौरुषेयोऽप्यवश्यं पुरुषकृतसमयमपेक्ष्यार्थं प्रतिपादयति; अन्यथा हि बालगोपालादीनामपि वेदपाठश्रवणमात्रादर्थप्रतिपत्तिः स्यात्। न चासंकेतिताः शब्दाः क्वचिदर्थमभिदधाना दृष्टाः। सङ्केतश्च पुरुषेण यद्यनाप्तेन कृतः,तदा तमपेक्ष्यार्थमभिदधतोऽप्रामाण्यमेव। आप्तकृतश्चेत्, नन्वेवमाप्तप्रामाण्यादेव प्रामाण्यं वेदस्यापि स्यात् ॥

॥ शब्दार्थसंबन्धस्य स्वाभाविकत्वान्न संकेतयितृपुरुषापेक्षा, किन्तु तत्र
व्युत्पत्तिमात्रापेक्षेति सिद्धान्तिनोऽवान्तरशङ्का, शब्दार्थसंबन्धनित्यत्वे
प्रमाणाभावोपपादनेन तत्परिहारश्च ॥

सम्बन्धबलेन शब्दाः संकेतानपेक्षिणोऽर्थमभिदधतीति चेत्, सम्बन्धोऽप्य-

---

**भा म र्व ज्ञी यं** मतमुत्थापयति—**अन्योऽपीति** ॥ शब्दप्रामाण्यस्य वक्तृगुणाधीनत्वं दृष्टान्तेन स्पष्टयति—**यथेति** ॥ वेदः, वक्तृगुणाधीनप्रामाण्यः, शब्दप्रमाणत्वात्, सम्प्रतिपन्नाप्तवाक्यवत्। विपक्षे व्यापकनिवृत्त्या व्याप्यप्रामाण्यनिवृत्तिबा-[बा]धकमित्याह—**इति सेति** ॥

वेदः, अपौरुषेयः, शरीरवृत्तीतरत्वे सति प्रलयस्थत्वात्, आत्मवत् ,अत्राह—**अपि चेति** ॥ अपिनाऽरुचिं द्योतयति। नामरूपप्रपञ्चस्य प्रलयावस्थायामसत्त्वादौपनिषदस्यासिद्धो हेतुः। स्वार्थप्रवृत्तप्रमाणपुरस्सरत्वाभावे साध्ये—**शरीरवृत्तीतरत्वे सतीति** व्यर्थम्। अकार्यत्वे साध्येऽपसिद्धान्तः, पाकजपरमाणुगुणेन व्यभिचारश्चेति। अक्षादीनामिव सङ्केतानपेक्षाणां बोधकत्वं किं न स्यात्? अत्राह—**अन्यथेति** ॥ वैदिकपदानां सङ्केतबलेनावेदकत्वेऽपि नाप्रामाण[ण्य]म् , अत्राह—**न चेति** ॥ विगीताः, सङ्केतापेक्षया बोधकाः, बोधकशब्दत्वात्; सम्मतवदित्यर्थः। सङ्केतस्या[स्य]कृतकत्वेऽपि कथमाप्तप्रामाण्याद्वेदप्रामाण्यम्? अत्राह—**सङ्केतश्चेति** ॥

नित्यः स्यात्, नित्यो वेति। अनित्यत्वे संकेतवद्दोषः, नित्यत्वे तु सर्वेषां वेदपाठश्रोतॄणां तदर्थप्रतिपत्तिप्रसङ्गः। व्युत्पत्त्यपेक्षित्वादप्रसङ्ग इति चेत्, न; प्रमाणाभावात्। न हि शब्दार्थयोः सम्बन्धविशेषास्तित्वे प्रमाणमस्ति। * **अथास्ति, व्यवस्थादर्शनात्** ॥* शब्द एव वाचकः, अर्थ एव वाच्य इत्येषा व्यवस्था नासति सम्बन्धे युक्ता। सङ्केतकारितैवेति चेत्, न; विपर्ययेणापि वाच्यवाचकभावप्रसङ्गात्। अस्य शब्दस्यायमर्थो वाचकोऽस्यार्थस्यायं शब्दो वाच्य इत्येवमपि हि संकेतः कर्तुं शक्यते। अनवस्थाप्रसङ्गाच्च। यदि हि सङ्केतबलेनैव शब्दोऽर्थं प्रत्याययेत्, सङ्केतो नावाचकेन शब्देन कर्तुं शक्यते। सङ्केतहेतोरपि शब्दस्य वाचकत्वं सङ्केतान्तरसामर्थ्यादित्यनवस्थाप्रसङ्गः। तस्मादस्ति शब्दार्थयोः सम्बन्ध इति॥

॥ शब्दार्थवाच्यवाचकभावव्यवस्था; शक्तिविशेषनिमित्तत्वात्,
सङ्केतस्य पुरुषकृतत्वेऽपि न हानिः॥

तदसत्; ***यत्तावत्—व्यवस्थादर्शनात्*** इति, तन्न; व्यवस्थायाः शक्तिनिमित्तत्वात्। येयं शब्दानामभिधात्री शक्तिः, साऽर्थेषु नास्तीति, तेनेयं व्यवस्था;

---

शब्दार्थानामर्थविशेषभावस्य स्वाभाविकत्वान्न सङ्केतापेक्षेति शङ्कते—**सम्बन्धेति** ॥ स्वाभाविकत्वम्, किमसङ्केतितत्वं वेति विकल्पयति—**सम्बन्धोऽपीति** ॥ **सङ्केतवदिति** ॥ आनाप्तकृतत्वे तदपेक्षस्याप्रामाण्यम्, आप्तकृतत्व आप्तप्रामाण्यात् प्रामाण्यमित्यर्थः॥ सम्बन्धस्य वृद्धस्य बोधाधायकत्वान्नातिप्रसक्तिरित्याह—**व्युत्पत्तीति**॥ "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति जैमिनिसूत्रावयवः प्रमाणम्, अत्राह—**न हीति** ॥ "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादि" त्याप्ताक्षचरणवचनविरुद्धं जैमिनिवचनमित्यर्थः॥ सम्बन्धविशेषेऽर्थापत्तिं शङ्कते—**अथेति** ॥ शब्दो वाचकोऽर्थो वाच्य इति सङ्केतादपि व्यवस्थासिद्धेरन्यथोपपत्तिरिति शङ्कते—**सङ्केतेति** ॥ सङ्केतस्य नियामकत्वानुपपत्त्या परिहरति—**नेति** ॥ स्वाभाविकसंसर्गसाधकप्रामाण्यस्यानुग्राहकमाह—**अनवस्थेति** ॥

अर्थधीजननसामर्थ्यस्य शब्दे नियतत्वात् तन्निबन्धना व्यवस्थेति हेतुमाह—**व्यवस्थाया इति** ॥ इन्द्रियादेः स्वरूपसामर्थ्यातिरिक्तसंसर्गवदत्रापि किं न स्यात्? अत्राह—**अन्यथेति** ॥ कारकाणाम्=दण्डचक्रादीनाम्, व्यञ्जकानाम् दीपादी-

अन्यथा हि सर्वेषां कारकाणां व्यञ्जकानाञ्च व्यवस्थादर्शनात् स्वकार्यैर्व्यङ्ग्यैश्च स्वाभाविकः सम्बन्धः स्यात् ॥

॥ सङ्केतस्य पुरुषकृतत्वे नानवस्था, संबन्धनित्यत्वे तु देशविशेषे शब्दविशेषणामर्थविशेषे नियमोपपत्तिः । अतोऽक्षचरणाभिमताप्तवाक्यत्वेनैव वेदप्रामाण्यम् ॥

[1]यदपीदमुक्तम्—"अनवस्थाप्रसङ्गादि"ति, तदयुक्तम्, नियमानभ्युपमगात् । नायं नियमोऽभ्युपगम्यते । [न]तावक[त्]शब्देनैव सङ्केतः क्रियते, किन्त्वन्यथापि । यथाऽङ्गुल्यादिनादि[निर्दि]श्य हस्तेन संस्पृश्य वाऽयं गौरिति सङ्केतं करोति । देशविशेषे नियमाच्च = यथा चोरशब्दस्तस्करमार्येष्वभिधत्ते, द्राविडेष्वोदनमिति । स्वाभाविकसम्बन्धेष्व[त्व]नियमानुपपत्तिः । न हि धूमः क्वचिदग्निं प्रतिपादयति, क्वचिज्जलमिति ॥

॥ एकत्र सङ्केतवशेनार्थबोधव्यवस्थाऽन्यत्रापि समानेति न नित्यसंबन्धकल्पना शब्दार्थयोः ॥

किञ्च संकेतस्य यद्यसामर्थ्यं स्यात्, तदाऽन्यः सम्बन्धः कल्प्यते । यदा

---

नाम्, कार्यैः=उत्पाद्यैरित्यर्थः । गोशब्दो वाचकः, सास्नादिमानर्थो वाच्य इति सङ्केतः ॥

सङ्केतान्तरस्यापेक्षा शब्दान्तरेण क्रियत इत्यनियमान्नानवस्थेति दूषयति—**तदयुक्तमिति** ॥ **अन्यथापीति** ॥ क्रियत इति शब्दोऽध्याहार्यः; अन्यथार्थमेव प्रकटयति—**यथेति** ॥ तथाऽन्यत्र सङ्केतोपपत्तेरिति शेषः । शब्दानां देशभेदेनार्थबोधकत्वानुपपत्तिरपि सङ्केतं गमयतीत्याह—**देशेति** ॥

देवदत्तादिपदे सङ्केतस्य धीहेतुत्वं विदितम्, नैसर्गिकसंसर्गस्य न तत् क्वचिद् दृष्टचरम्, अतः सम्प्रतिपन्नसङ्केतादेव सर्वत्र बोधोपपत्तौ न विप्रतिपन्नसंसर्गस्या[र्गा]न्तरं कल्प्यम्; गौरवादित्याह—**किञ्चेति** ॥ एवं पौरुषेयत्वमापाद्य साक्षादपि तदापादयति—**वैदिका इति** ॥ उपान्त्यादिशब्दस्यापि पक्षत्वेऽन्यतराश्रयासिद्धिः, तद्व्यावृत्त्यर्थं विशेषणोपादानेऽन्यतरव्यर्थविशेषणत्वम्, अत्राह—**किञ्चेति** ॥ शब्दत्वाधिकरणस्य वर्णात्मकस्य पक्षत्वम्; इतरथाऽन्यतरासिद्धिं प्रतिज्ञाय तदापादकतर्कस्याप्याश्रयासिद्धतया तर्काभासत्वप्रसङ्गादिति भावः ॥

---

1. पृ. 124. प. 7.

त्वेकत्रापि संकेतस्य सामर्थ्यमिष्टम्, तदाऽन्यत्रापि संकेतवशादेव शब्दानां वाचकता भविष्यतीति व्यर्था सम्बन्धान्तरकल्पना ॥

॥ वैदिकमन्त्राणां लौकिकमन्त्रवत् पौरुषेयत्वानुमानम्। एवं लौकिक-
शब्दानामेव वैदिकशब्दत्वात् कथं वैदिकशब्दमात्रेऽपौरुषेयत्वम् ॥

किञ्च वैदिका मन्त्राः, पौरुषेयाः, मन्त्रत्वात्; प्राकृतमन्त्रवत्। किञ्च लौकिकस्याग्न्यादिशब्दा[स्या]र्थवत्त्वं पौरुषेयत्वेन व्याप्तम्, तत्रायं वैदिकोऽग्न्यादि-शब्दः कथं पौरुषेयत्वं त्यक्त्वा तदर्थवत्त्वं ग्रहीतुं शक्नोति? उभयमपि गृह्णीयात्, जह्याद्वोभयमपि ॥

॥ वर्णव्यतिरिक्तवाक्याभावात्, पदवाक्यादीनां केवलं कल्पनासिद्धत्वेन
तेन रूपेणानित्यत्वमादाय वाक्यस्यानित्यत्वानुमानात्,
लौकिकवैदिकवर्णभेदाभावात्, वर्णत्वेन
प्रामाण्याभावाच्च वेदपौरुषेयत्वाविगानम् ॥

अपि च वाक्यस्य नित्यत्वं साध्यते, वर्णानां वा। न तावद्वाक्यस्य; वर्णाव्यतिरेकात्। न हि वर्णव्यतिरिक्तं शब्दात्मकं वाक्यमस्ति। तथाहि—वर्ण-समूहः पदम्, पदसमूहो वाक्यम्। समूहश्च वस्तुतो न भिद्यते। कल्पनया तु भेदः। तथापि कल्पनाया ज्ञानात्मकत्वादनित्यत्वमेव। नापि वाक्या[क्य]नित्यत्वे प्रमाणमस्ति। अनित्यत्वे तु वाक्यत्वाल्लौकिकवाक्यवदित्यनुमानम्। अथ—वर्णा एव नित्याः, तेषां नित्यत्वेऽपि न प्रामाण्यसिद्धिः; सर्वशास्त्राणां प्रामाण्यप्रसङ्गात्,

---

शब्दः, नित्यः, ध्वनितद्धर्मेतरत्वे सति श्रावणत्वात्; शब्दत्ववत्, अत आह—**अपिचेति** वर्णातिरिक्तवाक्याभावमुपपादयितुं पदलक्षणं वदति—**तथाहीति** ॥ एकार्थधीजनकत्वावच्छिन्नवर्णसमूहः पदम्, आकाङ्क्षादिविशिष्टपदकद-म्बकं वाक्यमित्यर्थः। पदवाक्यस्वरूपकीर्तनेन किमत्रानिष्टं पर्यवसितम्? अत्राह—**समूहश्चेति** ॥ एकैकवर्णप्रतीतितोऽपि लक्षणप्रतीतिगोचरः समूहो न तावन्मात्रो भवितुमर्हेत्, अत्राह—**कल्पनयेति** ॥ कल्पितस्य नित्यत्वं साध्यमिति न वक्त-व्यम्; धर्मिग्रहविरोधादित्याह—**तथापीति** ॥ नाप्युक्तानुमान[नं]नित्यत्वसाधकम्; अकार्यत्वोपाधेः, इतरथा रूपादयः, नित्याः, चाक्षुषत्वात्; रूपत्वादिवदित्यपि प्रसङ्गादित्याह—**नापीति** ॥ नित्यत्वमङ्गीकृत्यापि दूषयति—**तेषामिति** ॥ **प्रामा-**

असत्यवचनाभावप्रसङ्गाच्च । न ह्यन्य एव वैदिका वर्णाः; प्रत्यभिज्ञाया अप्रा-[1]माण्यप्रसङ्गात् ॥

॥ वर्णानित्यत्वमुपेत्य वेदाप्रामाण्यमुक्तम्, संप्रति तन्नित्यत्वे प्रत्यक्षादिविरोधोऽपीति प्रतिपाद्यते ॥

अपि च वैदिकशब्देनापि परोक्षाध्येतृविशेषानुमानं दृष्टम्—देवदत्तोऽधीते, विष्णुमित्रोऽधीत इति, तत् शब्दाभेदेऽनुपपन्नम् । न ह्यनेकसाधारणं दण्डच्छत्रादिकं यदा येन धृत्वा प्रकटं क्रियते, तदा तमनुमापयितुं शक्नोति ॥

॥ "दर्शनस्य परार्थत्वादि"ति जैमिनिसूत्रोक्तार्थापत्तिप्रमाणेन नित्यत्वशङ्का ॥

यच्चेदमभाषि—"दर्शनस्य परार्थत्वादि"ति, अनेन किलार्थापत्तिरभिप्रेता । कथम्? दर्शनम् = उच्चारणम्, तत् परप्रतिपत्त्यर्थ(म्) । सा चार्थप्रतिपत्तिः शब्दानित्यत्वे न स्यात् । यो गृहीतसम्बन्धः शब्दः, स तदैव नष्टः, इत्यनित्यत्ववादिनामपूर्व एव श्रूयते । तेन शब्दादर्थप्रतीतिर्नोदियात् । न ह्यगृहीतसम्बन्धाच्छब्दादर्थप्रतिपत्त्युपपत्तिः—इति । तस्मादर्थप्रतिपत्त्यन्यथानुपपत्त्याऽवगम्यते—नित्यः शब्द इति ॥

---

ण्यसिद्धिः । वेदस्येति शेषः । वर्णानामनित्यत्वे तन्निष्पादकपुरुषदोषादप्रामाण्यम्, नित्यत्वे तु स्वतः, परतो वा दोषाभावात्प्रामाण्यमेव, अत आह—**असत्येति** ॥ पाषण्डग[श्र]मना[णा]दीनां यद्वर्णात्मकत्वम्, ततोऽतिरिक्तवर्णात्मकत्वाद्वेदस्य तयोः प्रामाण्याप्रामाण्यव्यवस्था स्यात्, अत्राह – **न हीति** ॥

पूर्वं वर्णनित्यत्वमुपेत्य पौरुषेयत्वे वेदाप्रामाण्यमुक्तम्, इदानीं न तदपि; अनित्यत्वावगमविरोधादित्याह—**अपिचेति** ॥ **शब्दाभेद इति** ॥ वर्णैक्य इति यावत् । यज्ञदत्तविष्णुमित्राभ्यामुच्चार्यमाणवर्णानां स्वरूपैक्येऽपि तत्तद्वक्तृपुरुषोपरक्तरूपेण वैलक्षण्यात् तदनुमापकत्वम्, अत्राह—**न हीति** ॥ असाधारणधर्मस्यैव व्यावर्तकत्वादिति भावः ॥

शब्दनित्यत्वानुमानमुन्मूल्य, अर्थापत्तिमुन्मूलयितुमनुवदति—**यच्चेति** ॥ **अभाषि** ॥ जैमिनीये तन्त्र इति शेषः । परप्रत्यायनार्थं वाक्यप्रयोग इत्येतावदत्र प्रतीयते । ततः कथं नित्यत्वासिद्धिरिति शङ्कते—**कथमिति** ॥

---

1. अप्रमाणप्रसङ्गात्

॥ उक्तजैमिनिसूत्रोक्तार्थापत्तिनिरासेन वर्णानित्यत्वसाधनेन वर्णानित्यत्वमहापूर्वपक्षोपसंहारः ॥

तदपि न युक्तम्; धूमादिवदनित्यत्वेऽप्यर्थप्रतिपादकत्वोपपत्तेः। किञ्चानित्यः, शब्दः, सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वात्; घटवत्, विषयत्वाच्च; रूपादिवत्। न चात्र ज्ञेयत्वं विषयत्वं विवक्षितम्, येनानैकान्तिकत्वं स्यात्, किं तर्हि? योऽर्थः प्रत्यक्षे[1]णोपलभ्यमानः कस्यचिद् रागं जनयति, कस्यचिद् द्वेषम्, कस्यचिद् मोहम्, तस्य भावोऽत्र विषयत्वमभिप्रेतम्। तच्चानित्यं न व्यभिचरति। इतश्चानित्यः, शब्दः, तीव्रादिधर्मयुक्तत्वात्; सुखादिवत्। व्यञ्जकधर्मत्वे श्रोत्रग्राह्यत्वानुपपत्तेर्नासिद्धिरिति॥ तदेवं वर्णमात्रविनाशित्वे सिद्धे वेदाविनाशिताश्रद्धैव वैदिकानां सा [2]वेदवादोपजीविनामिति प्राप्तम्॥

अत्राचक्ष्महे—

वर्णानामविनाशित्वे प्रत्यभिज्ञादिना[3]स्थिते।

---

अर्थापत्तिमन्यथोपपत्त्या दूषयति—**तदपीति**॥ वर्णानामनित्यत्वे गौरवम्; तद्व्यक्तिभेदतदनुगतत्वादिसामान्यानां कल्पनीयत्वादित्याशङ्क्य प्रामाणिकत्वाद् मैवमित्याह— **किञ्चेति**॥ सामान्यादौ व्यभिचारं वारयितुं '**सामान्यवत्त्वे सती**'त्युक्तम्। परमाण्वादौ व्यभिचारं वारयति—**इन्द्रियेति**॥ आत्मनो[ना] व्यभिचारं वारयति—**बाह्येति**॥ योगिबाह्येन्द्रियगोचरे गगनादौ मा भूदित्याह—**अस्मदादीति**॥ उपान्त्यादिभागासिद्धिमुद्धरति—**ग्रहणार्हत्वादिति**॥ विषयस्यापि सामान्यादेर्नित्यत्वाद् व्यभिचारः, अत्राह—**न चेति**॥ न चैवंभूतविषयत्वहेतोरसिद्धिः; विष्णुमित्रश्रवणात् तत्पितुः सुखम्, तदमित्रस्य दुःखम्, तत्कामुक्या मोह इत्यनुभवसिद्धेः, तथापि रूपत्वादिना व्यभिचारः, अत्राह—**तच्चेति**॥ सामान्यादीनां ज्ञानेतरकार्यं प्रत्यहेतुत्वात्, व्यक्तीनां च तादृशीनामनित्यत्वात्। तथाह—एकमेव स्त्रीकलेवरं पत्युः सुखकरम्, सपत्न्या दुःखकरम्, कामुकस्य मोहनमिति सर्वत्र व्याप्तेरित्यर्थः। तीव्रत्वादीनां ध्वनिधर्मत्वादधिकरणासिद्धिः, अत्राह—**व्यञ्जकेति**॥

वर्णनित्यत्वसिद्धौ वेदनित्यत्वं सुसाधम्, इति तत् साधयति—**वर्णानामिति**॥

---

1. प्रत्यक्षनोपलभ्यमान (क)
2. सा ववेदोपजीवि (क)
3. न्विते (क)

स्वातन्त्र्यं वेदवचसां नित्यत्वं[त्वे] केन वार्यते ॥ १६ ॥

तथाहि—स एवायं [1]गकारः सहस्रकृत्वोऽधीत इति प्रत्यभिज्ञा [2]गकारस्य स्थिरत्वमाकलयति । न चेयं सादृश्यनिबन्धनेति निवेदयिष्यामः ॥ १६ ॥

॥ वर्णनित्यत्वेऽनुमानप्रयोग आकाशैकगुणत्वहेतुकः ।
तत्र दलप्रयोजनादि च ॥

अत्र प्रयोगः—वर्णाः, अ[?]नित्याः, स[र्व]दैवाकाशैकगुणत्वात्; तद्गतमहत्त्ववदिति । न च सर्वदेति विशेषणवैयर्थ्यम्; घटविनाशोत्पाददशायां विनश्यदवस्थेन घटाकाशसंयोगेन तदानीं गगनैकगुणेन व्यभिचारवारणार्थत्वात् ॥

॥ आकाशैकगुणत्वस्यात्मैकगुणत्वस्येव न नित्यत्वप्रयोजकत्वम्,
न वा सुखनित्यत्वानुमानेऽकार्यत्वस्य वर्णनित्यत्वानुमान
इवोपाधित्वमित्यादिनिरूपणम् ॥

यदत्रो **द य नो** जगाद—नेदं साध्यसाधकम्; अकार्यत्वस्योपाधेर्भावात्। अन्यथाऽऽत्मविशेषगुणाः, नित्याः, तदेकगुणत्वात्; तद्गतमहत्त्ववदित्यपि स्यात्—इति, तदपि न हृदयङ्गमम्; साधनव्यापकत्वादुपाधेः । यदपि—सुखादीनामात्मैकगुणत्वेन नित्यत्वप्रसञ्जनम्, तदसत्; सुखादीनामन्तःकरणगुणतया हेत्वसिद्धेः, प्रत्यक्षविरोधोऽपि परिहरिष्यते । विपक्षे निर्हेतुकविनाशप्रसङ्गो बाधकः ॥

---

वेदनित्यत्वे शास्त्रयोनित्वाधिकरणविरोधः, अत्राह—**स्वातन्त्र्यमिति** ॥ स्वार्थप्रवृत्तप्रमाणान्तरपुरस्सरत्वाभाव इति भावः ॥ प्रत्यभिज्ञादिनेत्येतद् व्याचष्टे—**तथाहीति** ॥ १६ ॥

आदिपदोदितप्रमाणं दर्शयति—**अत्रेति** ॥ आकाशैकगुणत्वं नित्यत्वं न व्यभिचरतीति विशेषणवैयर्थ्यम्, अत्राह—**न चेति** ॥ घटस्य विनाशः, घटविनाशः, तस्योत्पाददशायाम् । घटस्य विनश्यदवस्थायामिति यावत् । आश्रयनाशनाश[श्य]त्वेन तदा तस्याकाशैकाश्रयत्वं द्रष्टव्यम् ॥

आकाशैकगुणत्वस्य प्रयोजकत्वेऽनिष्टमाचष्टे—**अन्यथेति** ॥ अत्राकार्यत्वस्योपाधित्वं त्वयाप्यङ्गीकार्यमिति भावः ॥ वर्णाः, अकार्याः, सदाऽऽकाशैकाश्रयत्वात्; तद्गतमहत्ववदिति साधनव्याप्त्या दूषयति—**तदपीति** ॥ आत्मगुणानां नित्यत्वानुमानस्य तदनित्यत्वस्योपाधित्वम् । प्रकृते नाध्यक्षबाध इत्याह—**प्रत्यक्षेति** ॥ **निर्हेतु-**

---

1. सकारः 2. सकारस्य

॥ पूर्वपूर्वशब्दस्योत्तरोत्तरशब्दे कारणैकार्थसमवायरूपप्रत्यासत्त्यभावान्न कारणत्वम्; अतो न तस्य तेन नाशः ॥

स्यादेषा मनीषा—पूर्वपूर्वतरशब्दानामुत्तरोत्तरशब्दोत्पादविनाश[श्य]त्वमन्त्यस्योपान्त्येन—इति, तदिदमसारम्; अन्त्योपान्त्यादिविभागायोगात्। तथाहि—द्वितीयशब्दनिष्पादे किमसमवायिकारणम्? प्रथमशब्द इति चेत्, न। प्रत्यासन्नतया जनकमसयवायिकारणं भवन्तो वदन्ति। प्रत्यसत्तिश्च द्वेधा—कार्यैकार्थसमवाय-कारणैकार्थसमवायभेदात्। तत्र जायमानपटेन सह तन्तुसंयोगस्य तन्तुपु समवायः कार्यैकार्थसमवायः। ([1]पटरूपादीनां कारणेन पटेन सह तदारम्भकतन्तुरूपादीनां तन्तुषु समवायः कारणैकार्थसमवायः। तत्र न तावदाद्यस्य शब्दस्य द्वितीयेन सह कारणैकार्थसमवायः;) तत्कारणस्याकाशस्यान्यत्रासमवेतत्वात्॥

---

**विनाशेति**॥ आश्रयनाशविरोधिगुणान्तरोत्पादादीनां गुणनाशकानां योगादित्याशयः॥

सजातीयगुणान्तरोत्पाद एव नाशहेतुरिति शङ्कते—**स्यादिति**॥ यः श्रोत्रसमवेतः श्रूयते, ततः परं शब्दान्तरानुत्पादाद् विनाशकरणाभावान्नित्यः स्यात्। अत्राह—**अन्त्यस्येति**॥ असमवायिकारणमुपान्त्योऽन्त्यस्य नाशक इत्यर्थः, विमताः शब्दाः, नोत्तरशब्दा[द्व]नाश्याः; शब्दत्वात्; अन्त्यशब्दवत्। विपक्षे नाशप्रयोजकवैरूप्यकल्पनागौरवं बाधकमित्याशयवान् परिहरति—**तदिति**॥ हेत्वन्तरमाह—**अन्त्येति**॥ उक्तं व्यनक्ति—**तथाहीति**॥ समवाय्यसमवायिनिमित्तकारणसमाहाराद् भावनिष्पत्तिनियमाभ्युपगमादसमवायिकारणमत्रापि वाच्यमित्यर्थः। प्रथमशब्दस्यासमवायित्वानुपपत्तिप्रकटनाय तल्लक्षणं दर्शयन् परिहरति—**नेति**॥ कार्यैकार्थसमवायरूपप्रत्यासत्तिमुदाहरति—**तत्रेति**॥ कार्येण पटेन सह एकस्मिन् तन्तौ समवायः कार्यैकार्थसमवाय इत्यर्थः। इतरमप्युदाहरति—**पटेति**॥ पटरूपादीनामुपादानकारणं पटः, तेन सह पटरूपाद्यसमवायिकारणानां तन्तुरूपादीनां तन्तुषु समवायः कारणैकार्थसमवाय इत्यर्थः॥ चरमनिर्दिष्टमपि कारणैकार्थसमवायं परानिष्टत्वेनोक्तत्वात् प्रथमं निराचष्टे—**तत्रेति**॥

कार्येण = द्वितीयेन शब्देन सहैकार्थसमवायः प्रथमशब्दस्य प्रत्यासत्तिर-

---

1. कुण्डलान्तर्गतं नास्ति (क)

॥ पूर्वपूर्वशब्दस्योत्तरोत्तरशब्दे कार्यैकार्थसमवायाभावान्न समवायिकारणत्वम्, कारणस्याकाशस्यैकत्वेन तृतीयशब्दस्य प्रथमशब्दाधाराकाशेऽप्रत्यक्षत्वापत्तेः, उपाधिभेदेनाकाशभेदकल्पनायोगाच्च ॥

नापि कार्येणैकार्थसमवायः। कार्यशब्दस्य कारणेनैकदेशत्वे तुल्यन्यायतया तत्कार्यस्य तृतीयप्रभृतेरपि प्रथमशब्देन सहाभिन्नदेशतया श्रोत्रसमवायायोगादनुपलब्धिरेव स्यात्। यद्युच्येत—आकाशस्यैकत्वेप्युपाधिकल्पितभेदादाद्यशब्दो द्वितीयशब्दमारभमाणः[1] स [स्व]देशान्तराकाशप्रदेशे तदारभते, द्वितीयप्रभृतिरप्येवं तृतीयप्रभृति[2]मित्यन्त्यशब्दः श्रोत्रसमवेतो गृह्यते—इति, तन्मन्दम्; एवं हि कार्यैकार्थसमवा[3]योऽपि न स्यात्। आकाशस्वरूपैक्यस्वीकारेण तदुपपादने प्रथमशब्दवत् द्वितीयप्रभृतेः श्रोत्रसमवायासिद्धिः। तदर्थं विशिष्टभेदस्वीकारे कार्यैकार्थसमवायासिद्धिरिति महत्तरं व्यसनमापन्नोऽसि ॥

॥ शब्दानित्यत्वे दूरदेशगतशब्दानामश्रावणत्वापत्तिः; बहिरिन्द्रियस्याप्राप्यकारित्वायोगात् ॥

किञ्चानित्यत्वपक्षे श्रवणमेव शब्दस्यानुपपन्नम्। तथाहि—दूरतरदेशोत्पादितो हि शब्दस्तत्रैव तावदाकाशे समुत्पद्यत इत्याश्रयणीयम्; व्यापकविशेषगुणानामसमवायिकारणदेशाविरोधेनोत्पादनियमात्, बुध्यादिवत्। न च तत्रोत्पन्नस्यापि शब्दस्य

---

स्मदिष्टेति, अत्राह—**नापीति** ॥ कार्यस्य कारणेन सहैकदेशत्वं तन्म[तत्, उ]ताव्यवहितसमनन्तरदेशत्वमिति विकल्प्य, आद्यमपवदति—**कार्येति** ॥ द्वितीयमनुवदति—**यदीति** ॥ उपाधिभेदादाकाशस्वरूपं भिद्यते, नो वा। भिद्यते यदि, तत्राह—**तदिति** ॥ द्वितीयमपवदयति—**आकाशेति** ॥ उपाधिभेदेऽपि शब्दाश्रयाकाशाभेदादाद्यशब्दवद् द्वितीयादेरिन्द्रियसन्निकर्षासिद्धिः, उपाधिसमवाये शब्दस्याकाशविशेषगुणत्वासिद्धिरित्याशयः। विशेष्यांशैक्यादेकार्थसमवायो[ये] विशिष्टभेदादुत्तरोत्तरशब्दानामुत्तरोत्तरदेशतयाऽन्त्यशब्दः श्रोत्रेण सन्निकृष्यते, तत्राह—**तदर्थमिति** ॥ विशेष्यातिरिक्तविशिष्टानङ्गीकारादित्यर्थः ॥

एवं निर्हेतुनाशप्रसङ्गं विपक्षबाधकमाख्याय बाधकान्तरमाख्याति—**किञ्चेति** ॥ विमतः शब्दस्या[:, स्व]समवाय्यभिन्नदेश उत्पद्यते, कार्यत्वे सति व्यापकविशेषगुणत्वात्; बुध्यादिवदित्यर्थः ॥

---

1. आरभमाणस्य देशा
2. मित्यत्य (क)
3. येऽपि

श्रोत्रदेशपर्यन्तमागमनम्; अमूर्तत्वात्। नापि कर्णशष्कुलीमण्डला[1]द्यवच्छिन्नो नभोदेशः श्रोत्ररूपस्तं प्रदेशमुपसर्पति। कर्णशष्कुल्याः प्रत्यक्षतस्तत्रैवावस्थानोपलम्भात्, तदवस्थाने च तदुपहितोऽपि नभःप्रदेशस्तत्रैव, इति कथं देशान्तरप्रत्यासत्तिः? न चाप्राप्यकारि बहिरिन्द्रियम्; अपसिद्धान्तप्रसक्तेः। तस्मादनित्यत्वपक्षे दूरादिदेशजातस्य शब्दस्य श्रवणानुपपत्तिरिति॥

॥ वीचीतरङ्गन्यायेन शब्दसन्ततिस्वीकाराद् दूरतरशब्दश्रावणत्वोपपत्तिरिति न्या य मु क्ता व ली कारमतोपक्षेपः॥

यदपि कश्चिद्द्विपश्चिदवोचत्— नेदमनवद्यम्; [2]सन्ततिरिति स्वीकारात्। कल्प्या खलु सन्ततिः कार्यस्य; अनन्यथासिद्धेः। दृष्टा खलु लोके वीचीसन्ताने पूर्वपूर्वदेशे विनश्यतामपि स्वप्रत्यासत्तिमपेक्ष्य तत्तदव्यवहिते देशे सदृशकार्यारम्भपरम्परया देशान्तरप्राप्तिः, तद्दर्शनेन शब्दानामपि श्रवणपथप्राप्तये सन्तानमभ्युपगच्छामः; प्रकारान्तरेण प्राप्त्यनुपपत्तेः, प्राप्यकारित्वनियमाच्च बहिरिन्द्रियाणाम्; त्वगिन्द्रियवत्। न च—एवं सत्युपरमहेत्वभावात् सन्तानानुपरतिप्रसक्तिरिति—शङ्कनीयम्; तीव्रमन्दमन्दतरादिभावेनारम्भकत्वात्, अत्यन्तमन्दस्यानारम्भकत्वात्, अन्य[न्त्य]तरङ्गव[ङ्गा]त् सन्तानोपरतेः। तस्मात् सन्तानारम्भपरम्परया सजातीयादुत्पन्न एव शब्दः श्रूयत इति युक्तमुत्पश्यामः॥ तथा च प्रयोगः—श्रूयमाणः शब्दः,

---

**न्याय मु क्ता व ल्यामुक्तं** परिहारमुत्थापयति—**यदपीति**॥ निर्मूलत्वान्न कल्पना, अत्राह—**कार्यस्येति**॥ शब्दोपलब्धिरूपस्येत्यर्थः। दृष्टानुसारिणी कल्पना सर्वत्र प्रसरति। न चात्र पूर्वपूर्वविनश्यतामुत्तरोत्तरकार्यारम्भकत्वमव्यवहितदेशे दृष्टम्, अत्राह—**दृष्टेति**॥ नित्यः सर्वगतः शब्दोः व्यञ्जकसन्निधाविन्द्रियसन्निकृष्ट उपलभ्यते, किमत्र सन्ततिकल्पनया? अत्राह—**प्रकारान्तरेणेति**॥ व्यञ्जकस्यानाहतत्वे श्रावणत्वानुपपत्तिः, नो[आ]हतत्वे श्रावण[त्व?]स्य शब्दत्वमेवेत्यर्थः। शब्दस्य शब्दान्तरारम्भकत्वेऽन्त्याभिमतशब्दस्यापि शब्दारम्भकत्वप्रसक्तावन्त्यप्रत्याघातः, अत्राह—**न चेति**॥ मन्दतमस्य[ा]नारम्भकत्वादन्त्यत्वमित्यर्थः। उक्तमर्थं प्रयोगारूढं करोति—**तथाचेति**॥ 'शब्दः सजातीयादुत्पन्नः' इत्युक्त

---

1. मण्डलावच्छि
2. सन्ततिस्वीकारात्

सजातीयादुत्पन्नः, अस्मदादिबाह्येन्द्रियप्रत्यक्षत्वे सति विशेषगुणत्वात्; अवयविरूपवदिति; तदपि न सम्यगिव; शब्दपरम्परोत्पादेऽसमवायिकारणासिद्धेरुदितत्वात् ॥

॥ वीचीतरङ्गन्यायस्यान्त्यशब्दव्यवस्थानुपपत्त्या
तत्साधकानुमानाप्रामाण्याच्चानुपपत्त्या शब्दनित्यत्वसमर्थनम् ॥

सन्ततेरपि कार्यत्वे, शब्दसमवेतत्वे च शब्दस्य द्रव्यत्वापातात्, अकार्यत्वे तदुपरमानुपपत्तेः। शब्दस्वरूपमात्रत्वे, दूरतरादिदेशोदितशब्दानां श्रोत्रासंस्पर्शाद प्रतीतेः, कल्पकाभावाच्च सन्तत्यनुपपत्तेः, नित्यत्वेऽपि नियतानां प्रतीतेर्नियतव्यञ्जकादप्युपपत्तेः। प्रयोगेऽपि 'श्रूयमाणः शब्दः' इति पक्षविशेषणं नित्यत्ववादिनो व्यर्थम्, तत्परिहरणे चाऽऽद्यशब्दभागे बाधः ॥

॥ वीचीतरङ्गन्यायमूलस्य सामान्यतोदृष्टानुमानस्य प्रबलतद्विरोधिविशेषतो-
दृष्टानुमानेन भाट्टवचनानुसारेण बाधव्यवस्थो ॥

विमतः, न सजातीयाज्जातः, शब्दत्वात्; आद्यशब्दवदिति विशेषतोदृष्टेन सामान्यतोदृष्टस्य बाधः ॥ यथाहुः—

---

आद्यशब्दभागे बाधः, अत उक्तम्—**श्रूयमाण इति** ॥ कर्मजविभागादेर्व्यावर्तयति—अ[?]**विशेषेति** ॥ अदृष्टाद् व्यावर्तयति—**प्रत्यक्षत्वे सतीति** ॥ सुखादेर्वारयति—**बाह्येन्द्रियेति** ॥ योगिप्रत्यक्षपरमाणुरूपादौ व्यभिचारं निराकरोति—**अस्मदादीति** ॥

शब्दः, न जायते, भावत्वे सत्यसमवायिशून्यत्वात्; आकाशवदिति दूषयति—**तदपीति** ॥ इवेति तिरु[?]जिह्मिकाप्रयोगः। न सम्यगेवेत्यर्थः। या च सन्ततिरुच्यते, सा शब्देभ्यो भिन्ना, अभिन्ना वा। भिन्नाऽपि कार्या, अकार्या वा, [कार्याप्यन्यसमवेता,] शब्दसमवेता वेति विकल्प्य क्रमेण पराकरोति—**सन्ततेरपि** ॥ **शब्दसमवेतत्वे चेति** ॥ अन्यसमवेतत्वेऽन्यसन्ततिरेव स्यात्, न शब्दानाम्। शब्दसमवेतत्वे जायमानकार्याश्रयत्वेन समवायिकारणं शब्दो द्रव्यं स्यादित्याशयः। नित्यत्वे सदोपालम्भापातादुपलम्भकादाचित्कत्वानुपपत्त्या सन्ततिकल्पना, अत्राह—**नित्यत्वेऽपीति** ॥ बाधस्त्वेति शेषः ॥ अनुमानविरुद्धः, कालात्ययापदिष्टश्चेत्याह—**विमत इति** दृष्टान्तभागे सिद्धसाध्यत्वव्यावृत्त्यर्थम्। यः शब्दो न सजातीयज इति

"प्रसिद्धावयवं यत् स्याद्विशेषे वा प्रतिष्ठितम् ।
तत्साध्याङ्कसामान्यदृष्टाच्च बलवत्तरम् ॥
बाधः सामान्यशास्त्रस्य विशेषश्रुतिभिर्यथा ।
अनुमानान्तरैरेवमनुमानस्य बाधनम् ॥"

इति । परसिद्धेन परबोधनं क्रियते, इति न प्रतिप्रयोगे दूषणावकाशः ॥

॥ वीचीतरङ्गन्यायोपबृंहकस्य वा सु दे व मि श्रानुमानस्य प्रत्यक्षानुमानाभ्यां बाधेन शब्दनित्यत्वसाधनम् ॥

शब्दत्वम्, सजातीयारब्धाश्रितम्, बाह्येन्द्रियग्राह्यगुणजातित्वात्; रूपवदिति **वा सु दे व मि श्र** इति चेत्, न; शब्दत्वम्, न सजातीयारब्धाश्रितम्, क्षणिकगुणजातित्वात्; सुखत्वादिवदिति प्रतिहेतुग्रस्तत्वात् । दूरादुपलभ्यमानः शब्दः,

---

विशेषव्याप्तिः । परप्रयोगे तु योऽस्मदादिबाह्यप्रत्यक्षत्वे सति विशेषगुणः, [स] सजातीयकृत इति विशेषगुणत्वोपाधौ प्रवृत्ता व्याप्तिः पश्चाद्विशेषगुणविशेषे शब्दे प्रवर्तत इति विलम्ब्य प्रतिपत्तिहेतुत्वात्, अन्यत्र सावकाशत्वाच्च दुर्बला, इति तदुपजीवी सामान्यतोदृष्टो बाध्यत इत्यर्थः । [विशेषतो]दृष्टो[ष्टे]न सामान्यतो दृष्टस्या[स्य]बाधे भट्टवचनं पठति—**यथेति** ॥ यत् = साधनम् । **प्रसिद्धावयवम्** =प्रमाणान्तरेण प्रसिद्धा[द्धोऽ]वयवो हेत्वाभासविवेकेन व्याप्तत्वादिरूपो यस्य, तत् तथा, साध्याङ्कम्=मानान्तरेण साधनीयव्याप्यावयवात् प्रसिद्धावयवं बलवत्तरम् । सामान्यतोदृष्टाद्विशेषे प्रतिष्ठितमिति विवेकः । अविनाभावेन परोक्षानुभवसाधनत्वविशेषात्त्वानुमानमनुमानस्य बाधकम्, अत्राह—**बाध इति** ॥ आद्यादिशब्दभेदानङ्गीकरणात् पक्षदृष्टान्तयोरसिद्धस्तवेति, अत्राह—**परेति** ॥

**शब्दत्वमिति** ॥ शब्दाश्रितत्वेन सिद्धसाधनम्, अत उक्तम्—**सजातीयारब्धेति** ॥ कर्मत्वेन व्यभिचारो न स्यादित्युक्तम्—**गुणेति** ॥ सुखत्वादौ व्यभिचारं वारयति—**बाह्येति** ॥ **क्षणिकगुणजातित्वादिति** ॥ रूपत्वादिव्यावृत्त्यर्थम्—'**क्षणिके**'ति विशेषणम् । गुणग्रहणमसन्देहार्थम् । न च द्वित्वादिजातौ व्यभिचारः; द्वित्वादेरक्षणिकत्वात्, क्षणिकत्वे तदुत्पादात् प्रागेकत्वप्रसङ्गे तदनुपप[त्त]त्तिप्रसङ्गात् । '**दूरादि**'ति सिद्धसाध्यत्वं प्रसेधति ॥ **सन्तानेनेति** ॥

सन्तानेनेन्द्रियप्राप्त उपलभ्यते, साक्षादघटनत्वे सत्युपलभ्यमानत्वात्, तटस्थवीचिवदिति चेत्, न; उपलभ्यमानस्य शब्दस्य श्रोत्रप्राप्तिः साक्षादेवास्तीति हेतोर्विशेषणासिद्धत्वात्। अथान्यः पक्षीक्रियते, तस्य चोपलभ्यमानत्वाभावाद् विशेष्यासिद्धिः॥

॥ वर्णनित्यत्वपक्षेऽपि तदनुपलम्भापत्तिं प्रतिनियतध्वनिव्यङ्ग्यत्वेन
परिहरति वर्णातिरिक्तध्वनिसमर्थनपूर्वकम्,
उपसंहरति च वर्णनित्यत्वसाधनम्॥

ननु— वर्णा उपलभ्यस्वभावाः, अनुपलभ्यस्वभावा वा स्वीकरणीया नित्यत्ववादिभिः। प्रथमेऽवहिते चेतसि, अविकले च विकले च श्रवसि शाश्वतिकस्तदुपलम्भो भवेत्। द्वितीये न कदाचिदपि साक्षात्कारगोचराः स्युः; अदृष्टवन्नियामकाभावात्। अभिव्यञ्ज[1]कभावाभावौ नियामकाविति चेत्, न; वर्णानां प्रतिनियतव्यञ्जकव्यंग्यत्वाभावानुमानात्। तथाहि—शब्दाः, प्रतिनियत[2]संस्कारसंकार्या न भवन्ति, समानेन्द्रियग्राह्यसमानधर्मापन्नत्वे सति युगपदिन्द्रियसम्बन्ध[द्ध]त्वात्, घटादिवत्—इति, मैवम्; मनसा समानेन्द्रियेण ग्राह्येष्वात्मत्वेन समानधर्मापन्नेषु प्रतिनियतान्तःकरणसंयोगव्यंग्येष्वात्मसु व्यभिचारात्, चक्षुर्ग्राह्येषु घटपटाद्यभावेष्वभावत्वेन

---

घटादौ व्यभिचारं वारयति—**साक्षादघटनत्वे सतीति**॥ सन्तानमन्तरेणेन्द्रियसन्निकर्षहीनत्वे सतीत्यर्थः। तथोक्ते दूरस्थानुपलभ्यमानतरङ्गादौ व्यभिचारो मा भूदित्युक्तम्—**उपलभ्यमानत्वादिति**॥ श्रोत्रसमवेतः शब्दः, तदसमवेतो वेति विकल्प[ल्पं]क्रमात् पराकरोति—**नेति**॥

उपलम्भकादाचित्कत्वमेवानुपपन्नत्वमनित्यत्वंसाधकं नित्यत्वानुमानबाधकमिति चोदयति—**नन्विति**॥ उपलम्भकादाचित्कत्वनियामकं शङ्कते—**अभिव्यञ्जकेति**॥ अनुमानमाह —**शब्दा इति**॥ संस्कार इन्द्रियादिसहकारी, न त्वतीन्द्रियशक्तिः[अतः]संस्कार्येणे[?]त्युक्तम्। एकसंस्कारासंस्कार्यत्वेन सिद्धम्, अत आह—**प्रतिनियतेति**॥ क्रमेणेन्द्रियेण, सन्निकृष्यमाणैर्व्यभिचारश[प्रस]क्तिं वारयति—**युगपदिति**॥ घटतद्गुणतत्सामान्यैर्युगपदिन्द्रियसंबद्धैः प्रतिनियतेन्द्रियसन्निकर्षव्यङ्ग्यैर्व्यभिचारः, अत उक्तम्—**समानेति**॥ गुणत्वेन समानधर्मापन्नेषु, संयुक्तसमवायेन युगपदिन्द्रियसंबन्धे[द्धे]षु रूपरसादिषु व्यभिचारनिवृत्त्यर्थम्—**समाने-**

---

1. अभिव्यञ्जकाभावा (क)
2. संष्कार्यसंस्कार्याः (क)

समानधर्मवत्सु[1] प्रतिनियतप्रतियोगिव्यङ्ग्येषु युगपत्संयुक्तविशेषणतयेन्द्रियसम्बन्धे[द्धे]षु व्यभिचाराच्च। न च वर्णातिरिक्तध्वनेरसिद्धिः; दूरादाकर्णयतो वर्णव्यक्तिमप्रतिपद्यमानस्य यः कर्णपथमवतरति, प्रत्यासीदतश्च वर्णव्यक्तिमुपजनयति, तस्य ध्वनित्वेनाभिधानात्। किञ्च स्वपक्षसाधनमिदम्, परपक्षेऽनिष्टप्रसञ्जनं वा। आद्ये युगपदिन्द्रियसम्बन्ध[द्ध]त्वमायुष्मतोऽसिद्धम्। द्वितीते तूपाध्युपरागद्वारैव वर्णानामिन्द्रियसम्बन्धः, न [2]स्वरूपेणेत्यस्माभिरभ्युपगमाद् युगपदिन्द्रियसम्बन्ध[द्ध]त्वासिद्धिः॥

॥ वर्णनित्यत्वे साधिते प्रकृतं वेदापौरुषेयत्वसाधनमुपक्रमते
तत्रानीश्वरवचनत्वे सति श्रावणत्वेन हेतुना॥

तदेवं वर्णनित्यत्वसिद्धौ वेदस्यापौरुषेयत्वं प्रयोगमधिरोहति—वेदः, न स्वार्थप्रमितिपुरस्सरः, अनीश्वरवचनान्यत्वे सति [3]श्रावणत्वात्; शब्दत्ववदिति। अनीश्वरप्रणीतत्वात्यन्ताभावाधिकरणत्वमनीश्वरवचनान्यत्वम्। अतो यत्किञ्चिदनीश्वरवचनान्यत्वम्, सर्वानीश्वरवचनान्यत्वं वेति न विकल्पावकाशः॥

॥ वेदः, अपौरुषेयः, अस्मर्यमाणकर्तृकत्वादिति भाट्टानुमाने
जयन्तभट्टोक्तं दूषणम्—कर्त्रस्मरणमप्रयोजकम्, कालस्यातिदवीयस्त्वेन
कर्तुर्नियतशरीराभावेन चेदन्तयाऽस्मरणमित्यादि॥

किञ्च वेदः, उक्तसाध्यः, अस्मर्यमाणकर्तृकत्वात्; आत्मवत्। यदप्युद्भ्रान्त-

---

**न्द्रियेति**॥ आत्मान्यत्वेन हेतुविशेषणेऽप्याह—**चक्षुरिति**॥ वर्णानां प्रतिनियतो व्यञ्जको ध्वनिरूप उपेयते। न चासौ वर्णातिरेकेणास्ति; प्रमाणाभावात्, अत्राह—**न चेति**॥ वर्णग्राहकप्रत्यक्षस्यैव तत्र प्रमाणत्वादित्याह—**दूरादिति**॥ अस्पष्टवर्णा एव ध्वनयन्ति चेत्, न;. निरवयवनिर्गुणवर्णानामस्पष्टप्रतिभासो[सा]सम्भवात्। पुनरपि सिंहावलोकितन्यायेन प्रकृतप्रयोगनिराकरणमुपसंक्रम्याह—किञ्चेति॥

[4]**स्वातन्त्र्यं वेदवचसां** नित्यनी[त्व इ]त्युत्तरार्थं विभजते—**तदेवमिति**॥ **श्रावणत्वादित्युक्ते** मन्वादिवचने व्यभिचारः, अत उक्तम्—**अनीश्वरेति**॥ स घट इत्यादिस्मृतौ व्यभिचारं वारयति—**श्रावणत्वादिति**॥ यत्किञ्चिदनीश्वरवचनान्यत्वस्य हेतुत्वे तद्वचनान्तरे व्यभिचारः, सर्वानीश्वरवचनान्यत्वस्य च प्रत्येकमनीश्वरवचने व्यभिचारः; प्रत्येकं सर्वत्वाभावात, अत्राह—**अनीश्वरेति**॥

पुरातनाचार्यप्रयुक्तमपि हेतुं परदूषितं साधयितुमुपन्यस्यति—**किञ्चेति**॥

---

1. धर्मवत्त्वति (क)
2. स्वरूपेणास्माभि (क)
3. श्रवणत्वात्
4. पृ. 129. प. 1

**चित्तो भट्ट जयन्तो** बभणीति—कर्तुरस्मरणमप्रयोजकम् ; असिद्धत्वात्, सिद्धमपि वा वेदेऽकर्तृस्मरणमन्यथासिद्धम् । वेदकरणकालस्यातिदवीयस्त्वात्, तत्प्रणेतुश्च पुंसः सकलपुरुषविलक्षणत्वात्, नियतशरीरपरिग्रहाभावादिदन्तया पाणिनिपिङ्गलादिवत् स्मरणं नास्ति, न तु नास्त्येव ; अनुमानागमाभ्यां तदवगमात् ॥

॥ एकपुरुषस्मर्यमाणत्वं व्यभिचारि, सर्वपुरुषस्मर्यमाणत्वं दुरधिगमम् ;
असर्वज्ञत्वात्पुंसाम्, अकर्तृकोपदेशस्याननुष्ठापकत्वादपि कर्तुः
स्मरणमास्थेयमित्यादिन्यायमञ्जरीवादः ॥

कथञ्च पक्षधर्मतया ग्रहीतुं शक्यतेऽकर्तृस्मरणम् ? तद्धचेकपुरुषसम्बन्धि व्यभिचरति । सर्वपुरुषसम्बन्धि तु दुरधिगमम् । 'सर्वे हि पुमांसः कर्तारं वेदस्य न स्मरन्ती'ति कथं जानाति भवान् । न हि तत्र सकललोकहृदयानि प्रत्यक्षाणि ; सर्वज्ञत्वप्रसङ्गात् । अपि च कर्तुरस्मरणे सति वेदार्थानुष्ठानं प्रेक्षावतां शिथिलीभवेत् । न ह्यकर्तृक उपदेशः सम्भवति । सम्भवन्नपि प्रामाण्यनिश्चयनिमित्ताभावात् कथं विस्रम्भभूमिरसौ भवेत्—इति ॥

---

अकृतृकत्वादित्युक्तेऽन्यतरासिद्धिः, अत उक्तम्—**असमर्यमाणेति** ॥ अप्रयोजकम्=असाधकम् । **असिद्धत्वादिति** ॥ आगमानुमानाभ्यां तत्स्मरणादिति शेषः । न हि पाठकाः कर्तारं स्मरन्तीति शङ्कां स्वीकृत्याप्याह—**सिद्धमपीति** ॥ तामेवान्यथासिद्धिं साधयति—**वेद इति** ॥ संस्कारस्य प्रमोषात्, सदृशाद्युद्बोधक[का]भावाच्चेत्यर्थः ॥ असिद्धत्वादित्येतद् विवृणोति—**न त्विति** ॥ वेदवाक्यम्, आप्तप्रणीतम्, वाक्यप्रमाणत्वात् ; आयुर्वेदवदित्यनुमानात, " तस्माद्यज्ञात्सर्वहुतः ऋचस्सामानि जज्ञिरे " इत्याद्यागमाच्चेत्यर्थः ॥

येन केनचिदस्मर्यमाणकर्तृत्वं हेतुः, उत सर्वैरिति विकल्पयन्नाह—**कथं चेति** । प्रतिकूलतर्कपराहतश्च हेतुरित्याह—**अपिचेति** ॥ **वेदार्थानुष्ठानमिति** ॥ अध्ययन-तदर्थानुष्ठानरूपमित्यर्थः । ईश्वरः, न वेदकर्ता, अपौरुषेयादेव वेदा[द]र्थमवगम्यानुष्ठानं स्यात्, अत्राह—**न हीति** ॥ उपदेशः=वाक्यम् । तच्च पौरुषेयत्वनियतमित्यर्थः । अभ्युपगम्याप्याह—**संभवन्निति** ॥ **निमित्ताभावादिति** ॥ कारणज्ञानाभावादित्यर्थः ॥

॥ कालतोऽतिदवीयस्त्वं नास्मरणहेतुः ;
ईश्वरस्यातिदवीयःप्रपञ्चकालस्यातिदवीयस्त्वेऽपि सर्वैरपि स्मरणात् ।
वेदस्य तत्स्मारकत्वे तदप्रामाण्यापत्तिः ॥

तदुद्भ्रमव्यपोहायायमुग्रमन्त्रः प्रयुज्यते । [1]यत्तावदसिद्धत्वादिति, तदसिद्धम् ; अननुभूतेऽस्मारणसिद्धेः । [2]यदप्यन्यथासिध्यभिधानम् , तदसाधु ; गिरिधरणीतलादिकरणकालस्यातिदवीयस्त्वेऽपि तत्कर्तुरीश्वरस्य सकललोकस्मरणगोचरत्वात् । विचित्रेयं प्रपञ्चरचनेश्वरस्येति हि लौकिकाः कथयन्ति । तेन तत्प्रणेतुः सकलपुरुषस[वि]लक्षणत्वनियतशरीरपरिग्रहयोरभावेऽपि तस्य सत्त्वे तत्स्मरणं स्यादेव । अस्ति तदागमानुमाभ्यामिति चेत् , न; स्मारकत्वे तयोरप्रामाण्यप्रसक्तेः । न चानुमानं तदावेदकम् ; प्रपञ्चस्य पराकरिष्यमाणत्वात् ॥

॥ कल्पभेदेन स्मृतिपुराणादिवद् वेदस्यापि भेदात् तत्पौरुषेयत्वशङ्का,
तन्निरासश्च तत्रेश्वरस्य वेदरचनायामस्वातन्त्र्य एव तदुत्पत्तिपराणां
वाक्यानां तात्पर्यनिरूपणेन ॥

"प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते ।
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिस्सृताः ॥"

इत्यादिस्मृतिरपि न पौरुषेयत्वं वेदस्यावेदयति ;

"अनादिनिधना वागुत्सृष्टा स्वयम्भुवा ।"

इत्यादिस्मृत्यन्तरविरोधेन, पूर्वसिद्धवेदस्य प्रादुर्भावमात्रपरतया व्यवस्थापनीयत्वात् ,

---

ईश्वरः, न वेदकर्ता, पुरुषत्वात् ; अहमिवेत्यभिसन्धाय परिहरति—**तदिति** ॥ **असिद्धः** ॥ असिद्धिं साधयति—**अननुभूत इति** ॥ वेदकर्तुरस्मदादिभिरननुभूतत्वात् स्मृतिबीजासिद्धावस्मृतिसिद्धिरित्यर्थः । सत्यपि कालव्यवधाने शास्त्रीयवृद्धपरम्पराप्रसिद्धस्य न संस्कारदो[प्रमो]ष इत्युक्तम् , इदानीं संबन्धिकार्यदर्शनमेव संस्कारोद्बोधकमस्तीत्याह— **तेनेति** ॥ अस्मर्यमाणकर्तृकत्वहेतोरसिद्धिमेव शङ्कते— **अस्तीति** ॥

अनुभवद्वारा स्मारकत्वमागमादेर्विवक्षितम् , अत्राह— **न चेति** ॥ आगमोऽपि स्मृतिः, उत श्रुतिः । न प्रथम इत्याह— **प्रतिमन्वन्तरमिति** ॥ निरवकाश-

---

1. पृ. 134. प. 7. 2. पृ. 134. प. 8.

"इदं सर्वमसृजत" "ऋचो यजूंषि सामानि" "तस्माद्यज्ञात्सर्वहुतः ऋचस्सामानि जज्ञिरे" इत्याद्या च श्रुतिर्नेश्वरस्य वेदस्वातन्त्र्यमाह, किन्तु कल्पादावभिव्यक्तिमात्रम्; अपरथा "वागेव विश्वा भुवनानि जज्ञे" इति वाचः समस्तप्रपञ्चकारणत्वप्रतीत्या—"नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनमि"ति सनातनत्वप्रतीत्या "अनन्ता वै वेदाः" इति निरङ्कुशानन्त्यप्रतीत्या च विरोधप्रसङ्गात् ॥

॥ सर्वपुरुषास्मर्यमाणत्वं दुर्वचमिति शङ्कानुवादेन, तस्यानुमानेन साधनेन हेत्वसिद्धिपरिहारो वेदापौरुषेयत्वानुमाने ॥

[1]यदपीदमुदितम्—सर्वपुरुषसम्बन्धि तु दुरधिगमम्—इति, तदपर्यालोचिताभिधानम्; विमताः, न वेदकर्तृस्मृतिमन्तः, पुरुषत्वात्; सम्प्रतिपन्नवदित्यनुमानेन तदवगमात्। कथमन्यथा—"न नित्यसम्बन्ध उपपद्यते; शब्दवदर्थवच्च तृतीयस्य तस्य प्रत्यक्षादिना प्रमाणेनाप्रतीयमानत्वदि"ति स्वप्रयुक्तहेतुं[तौ] तदप्रतीयमात्वम् किमेकपुरुषसम्बन्धि, सकलपुरुषसम्बन्धि वेति विकल्पविशेषमा[षा]शीविषमुखपतितं त्रातुमीशिषे ?

॥ अपौरुषेयत्वेऽपि कल्पादावुच्चारणमात्रेणोपदेशेन वेदार्थानुष्ठानाद्युपपत्त्या नोपदेशस्य स्वतन्त्रकर्तृकत्वनियमः ॥

उपदेशस्येश्वरतन्त्रत्वाभावेऽपीदानीन्तनाध्येतृवदीश्वरस्यापि कल्पादौ तदुच्चारणसम्भवात्, अपौरुषेयत्वेऽपि वेदस्य स्वतःप्रामाण्यनिश्चयादेव तदर्थानुष्ठानसम्भवाद् मुधैव तस्य पौरुषेयत्वकल्पनेति ॥

---

स्मृत्यनुसारेण सावकाशस्मृतेर्नेयत्वादित्याह—**अनादीति** ॥ द्वितीयं दूषयति—**इदमिति** ॥ तर्हि सृष्टिश्रुतेः का गतिः ? अत्राह—**किन्त्विति** ॥ प्रलये कालात्मनि लीनस्य रज्जुभुजङ्गन्यायेन व्यक्तिमात्रमुच्यत इत्यर्थः। वेदकर्तृस्मृतेः सिद्धौ निषेधासिध्याऽप्रसिद्धविशेषणत्वम्, अत्राह—**कथमिति** ॥ **सं[स्वप्र]युक्तहेतुमिति** ॥ स्वग्रन्थ इति शेषः ॥

न ह्यकर्तृक उपदेश इत्युक्तं प्रत्याह—**उपदेशस्येति** ॥ **तदुच्चारणसंभवादिति** ॥ अन्तर्यामिणोऽधिष्ठानत्वस्य हिरण्यगर्भादिरूपेण पाठकत्वस्य च संभवादिति भावः ॥ अनाप्तप्रणीतस्य कथं प्रामाण्यनिश्चयः ? अत्राह—**अपौरुषेयत्वेऽपीति** ॥

---

1. पृ. 137. प. 9.

॥ नित्येषु कर्तुरभावात्, स्मर्यमाणविशेषणवैयर्थ्यात्, स्मृतिपुराणादीनामिव पौरुषेयाणामृषिनामाङ्कितत्वाभावाच्चास्मर्यमाणकर्तृकत्वहेतुका-पौरुषेयत्वानुमानायोग इति भू ष ण कारशङ्का ॥

यदपि **भा स र्व ज्ञीयं** मतम्—अस्मर्यमाणकर्तृकत्वादिति प्रयोगे दृष्टान्ते साधनवैकल्यम्। नित्यं हि न स्मर्यमाणकर्तृकम्, ना[न वाऽ]स्मर्यमाणकर्तृकम्, किन्त्वकर्तृकमेव। अकर्तृकत्वविवक्षायां तु स्मर्यमाणग्रहणमनर्थकम्, जीर्णकूपारामादिषु व्यभिचारश्च। किञ्च स्मृतिपुराणादिवदृषि[1]नामाङ्कितकाण्व-माध्यन्दिन-तैत्तिरीयकादयः शाखाः कथमस्मर्यमाणकर्तृका इति?

॥ सिद्धान्ते वेदेऽपि कर्तुः परतन्त्रस्य स्वीकारात्, अकर्तृकत्वमात्रस्य तत्रासिद्धेः, काण्वादिनाम्नां तत्प्रोक्तत्वमात्रनिमित्तकत्वाच्च नापौरुषेयत्वहानिरिति तत्परिहारः ॥

तदसारम्;[2] स्मर्यमाणः कर्ता न विद्यते यस्येति विवक्षायां दृष्टान्ते साधनानुमानात्। न चास्मर्यमाणग्रहणमनर्थकम्; असिद्धिपरिहारार्थत्वात्, 'मीमांसकानामप्रत्यक्षत्वादि'ति हेतौ मीमांसकानामिति विशेषणस्य भवतैव व्याघातेनासिद्धिपरिहारार्थमभ्युपगमात्। प्रमाणेनाभिधेयमवधार्य तदभिधायकतयाऽभिधानानां विरचनं पौरुषेयत्वम्। तदभावस्य जीर्णकूपादौ विशदत्वात् तत्र व्यभिचारकथनमात्मन एवाज्ञत्वं कथयति। मुक्तकश्लोकादेरपि स्वार्थप्रमितिपुरस्सरत्वमवधारितं चेत्, कथं कर्तुरस्मरणम्?

---

एवं **ज य न्त** जल्पितमुन्मूल्य **भू ष ण का**रभाषितमनुभाषते—**यदपीति** ॥ दृष्टान्ते साधनानुगमार्थमकर्तृकत्वस्य हेतुत्वे व्यर्थविशेषणासिद्धिमभिधाय, सत्यपि पौरुषेयत्वे पुरातनकूपादेरस्मर्यमाणकर्तृकत्वादनैकान्तिकतेत्याह—**जीर्णेति** ॥ असिद्धश्च हेतुरित्याह—**किञ्चेति** ॥

**अस्मर्यमाण इति** ॥ अस्मर्यमाणकर्तृविधेः साधनत्वे दृष्टान्ते साधनवैकल्यम्, स्मर्यमाणकर्तृनिषेधस्य हेतुत्वे नायं दोष इत्यर्थः ॥ व्यर्थविशेषणासिद्धिमुद्धरति—**न चेति** ॥ **असिद्धीति** ॥ अन्यतरासिद्धिपरिहारार्थत्वादित्यर्थः। व्यभिचारवारणार्थमेव हेतुविशेषणम्, नासिद्धिपरिहारार्थम्, अत्राह—**मीमांसकानामिति** ॥ हेतोर्व्यभिचारं दर्शयितुं पौरुषेयत्वं दर्शयति—**प्रमाणेनेति** ॥ तथापि मुक्तकश्लोकादेरस्मर्यमाणकर्तृकस्य पौरुषेयत्वादनैकान्त्यम्, अत्राह—**मुक्तकेति** ॥ नापि

---

1. माना (क) 2. तदसारमस्मर्यमाणः

अनवधारितं चेत्, कथं विपक्षता? काण्वादिसंज्ञाश्च [1](शास्त्र)शाखानामृषिभिर्दृष्टत्वात्, प्रकाशितत्वाद्वा, न तु तत्कृतत्वात्। तदाह भगवान् **पराशरः**—

"कल्पान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥"

इति। नैवम्; पुराणादीनामपि तत्तद्दृष्टत्वमेव, न तु कृतकत्वमिति स्यात्, प्रमाणा[ण]भावाभावाभ्यां वैषम्यात्॥

॥ वाक्यप्रमाणत्वेन वेदवाक्यपौरुषेयत्वानुमानमप्रयोजकशङ्काकलङ्कितमसाधकम्॥

वेदवाक्यम्, आप्तप्रणीतम्, वाक्यप्रमाणत्वात्; आयुर्वेदवदि'ति सत्प्रतिपक्षतेति चेत्, न; वाक्यत्वस्याप्तानाप्तसाधारणत्वेन, प्रामाण्यस्यापि परानपक्षत्वेन विपक्षबाधकवैधुर्येणाप्रयोजकत्वात्॥ यदाहुः—

"यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम्॥" इति।

॥ कुसुमाञ्जलिकाराणां निन्दाप्रशंसापरार्थवादवाक्यानां
तादृशलौकिकवाक्यवत् पौरुषेयत्वाप्रामाण्यशङ्कातत्परिहारौ।

---

सन्दिग्धानैकान्त्यम्; अत्यन्तानुपलब्धे पौरुषेयत्वाभावानिश्चयादिति भावः। तत्कृतत्वात् तत्संज्ञा किं न स्यात्? अत्राह—**तदाहेति**॥

**वाक्यप्रमाणत्वादिति** प्रत्यक्षादौ विप्रलम्भकवाक्ये च व्यभिचारवारणाय विशेषणम्। यत्रानुकूलतर्को नास्ति, सोऽप्रयोजक इति परपरिपाट्यैव परिहरति—**नेति**॥ विप्रलम्भकवाक्यस्या[स्य]दर्शनाद् न वाक्यमाप्तप्रतिबन्धनम्, नापि प्रामाण्यम्; प्रत्यक्षादाविव स्वारसिकत्वादिविशेषणविशेष्यातिरिक्तविशिष्टासत्त्वादित्याशयः। नास्ति घट इत्यभिधित्सतो विप्रलम्भकस्य अस्ति घट इति प्रमादविनिस्सृतवाक्येऽविद्यमानार्थबोधकेऽनैकान्त्याच्चेति द्रष्टव्यम्। विपक्षबाधवैधुर्यादिनोपाधिशङ्कया सन्दिग्धव्यभिचारस्यागमकत्वे भट्टसंवादमाह—**यदी[यावदि]ति**॥ विपक्षस्याव्यतिरेकित्वम्=हेत्वभावराहित्यम्। शतांशेन विपक्षबाधकाभावात्पक्षे प्रतिकूलदर्शनादिनेत्यर्थः॥

---

1. कुण्डलान्तर्गतं नास्ति

वेदः, सर्वज्ञप्रणीतः, वेदत्वादिति तदनुमानस्याप्यत एव निरासः ॥

वैदिकानि प्रशंसावाक्यानि, उपादानाभिप्रायपूर्वकाणि, प्रशंसावाक्यत्वात्; परिणतिसरसमाम्रफलमिति लौकिकवाक्यवत्, एवं तन्निन्दावाक्यानि, हानाभिप्रायपूर्वकाणि, निन्दावाक्यत्वात्, परिणतिविरसं पनसफलमिति लौकिकवाक्यवदिति चेत्, न; उपाध्यायैरधीयमानाधुनिकवाक्यानां धर्मित्वे बाधात्। तेषामीशाशयपुरस्सरत्वान्नेति चेत्, न; अन्यवक्तृकवाक्यानामन्यभावप्रभवत्वसाधनेऽतिप्रसङ्गबाधात्; ईशवक्तृकवाक्यानां धर्मित्वेऽन्यतराश्रयासिद्धेः, हानमभिप्रेत्य परिणतिविरसमित्यभिधित्सतः प्रमाण[द]निस्स्रुतपरिणतिसरसमिति वाक्येनानेकान्तात्, एवमुपादानाशयेन सरसमिति विवक्षतो विरसमिति वाक्येनानेकान्ताच्च। धर्म्यनिरूपणाप्रसिद्धविशेषणत्वाभ्यां वेदाः, सर्वज्ञप्रणीताः, वेदत्वादिति व्यतिरेकी निरस्तः ॥

॥ वैदिकासच्छब्दलिङादिपक्षकानुमानमपि तदीयं लौकिकलिङादौ
शासनपरत्वाद्यभावान्न साधकम्; इष्टसाधनत्वस्यैव लिङर्थत्वात् ॥

वेदेऽसच्छब्दः, स्वतन्त्रवक्तृवचनः, असच्छब्दत्वात्; श्लो[लो]कवदिति चेत्,

---

**कुसुमाञ्जलौ** जल्पितमनुमानमनुवदति—**वैदिकानीति** पक्षविशेषणं दृष्टान्तभागे सिद्धसाधनतापरिहारार्थम्। भा[हा]नाभिप्रायपुरस्सरत्वेन बाधो मा भूत्, **इत्युपादानेत्युक्तम्**। निन्दा[यां]व्यभिचारवारणाय—**प्रशंसेति** विशेषणम्। "प्रातः प्रातरनृतं ते वदन्ती"ति निन्दावाक्यपक्षीकरणेनाप्याह—**एवमिति** ॥ पूर्ववदत्र कृत्यमूह्यम्। सांप्रतिकवाक्यस्य धर्मित्वम्, सर्गादावीश्वरवाक्यस्य वा। आद्ये साधारणवक्त्रभिप्रायपुरस्सरत्वम्, ईशाभिप्रायपुरस्सरत्वं वा। प्रथमं प्रत्याह—**नेति** ॥ उपाध्यायानामर्थावबोधात् [प्राक्]तदभिप्रायासंभवादिति भावः ॥ द्वितीयं शङ्कते—**तेषामिति** ॥ ईशाभिप्राये[यः,णो[नो]पाध्यायवाक्यप्रयोजकः, अभिप्रायत्वात्; पुरुषान्तराभिप्रायवत्; इतरथा तस्यापि तत्प्रयोजकत्वप्रसक्तिरिति पराकरोति—**नेति** ॥ न चेशस्यापि तद्वाक्यवक्तृत्वम्; अशरीरत्वात्, सशरीरत्वे सदा शरीरवत्तयाऽस्मदादिवत् संसारित्वप्रसङ्गात्। संप्रति कल्पान्तरं पराकरोति—**ईशेति** ॥ स्वतन्त्रेश्वरकृतवैदिकवाक्यस्यास्माकमसिद्धेरित्यर्थः। प्रशंसावाक्यत्वहेतोर्व्यभिचारमाह—**हानमिति** ॥ **कुसुमाञ्जला**वुक्तं केवलव्यतिरेकिणं दूषयति—**धर्मीति** ॥ सर्वज्ञस्याप्रसिद्धत्वादप्रसिद्धविशेषणमित्यर्थः ॥

न; सम्प्रत्युच्चार्यमाणवैदिकास्मच्छब्दे बाधात्, तत्त्यागे तत्रानैकान्त्यात्। वैदिकलिङादिः, स्वतन्त्रवक्तृनियोगवचनः, लिङादित्वात्; राजशासनवदित्यपि न; कृतियोग्येष्टोपायताया लिङाद्यर्थत्वोपगमेन दृष्टान्तस्य साध्यविकलत्वात्, तादृशेष्टसाधने लिङादिसङ्गत्यवगमात्॥

॥ इष्टसाधनत्वं न लिङर्थः; बहुशस्तत्प्रयोगे
तत्र सन्देहदर्शनादिति शङ्का नैयायिकानां सोदाहरणनिर्देशम्॥

ननु—नासौ लिङर्थः; सन्देहात्—श्रेयोहेतुता साक्षादेव लिङाऽवगम्यते स्तनपानाद्यनुमानवद् बालेन, किं वा तत्प्रतिपादितात् कुतश्चिदर्थादनुमीयते, चेष्टा-

---

तत्रैवोक्तमनुमानान्तरमनुवदति—**वेद इति**॥ मानान्तरेणार्थमुपलभ्य वाचकशब्दरचयिता स्वतन्त्रवक्ता; तस्य वाचक इत्यर्थः। वक्तृवचन इत्युक्ते पूर्ववाक्यस्मरणसापेक्षतत्सदृशोत्तरवाक्यवक्तृत्ववचनत्वेन सिद्धसाधनतां व्यवच्छिनत्ति—**स्वतन्त्रेति** अग्न्यादिशब्दे व्यभिचारवारणाय हेतुविशेषणम्। वैदिकास्मत्पदमात्रस्य धर्मित्वम्, ईश्वरकृतवाक्यस्य वा। नाद्य इत्याह—**नेति**॥ सांप्रतिकपुंसामस्वातन्त्र्यादित्यर्थः। द्वितीयं दूषयति—**तदिति**॥ तदीयमनुमानान्तरमाशङ्क्य निषेधति—**वैदिकेति**॥ प्रवर्तकोऽभिप्रायो नियोगः, राजवाक्यस्थलीना[लिङा]दिपदं राजशासनम्। अतश्च नियोक्ता विशेष[नियोग]प्रणेता शिवः सिध्येदित्याशयः॥ कुत इति? अत आह—**कृतियोग्येति**॥

मध्यमवृद्धचेष्टालिङ्गेन श्रेयोहेतुमनुमाय तत्र लिङादीनां सङ्गतिमवगन्तुं नचालं शक्नोतीति चोदयति—**नन्विति**॥ सन्देहं विशदयति—**श्रेय इति**॥ लिङा चरमवृद्धप्रयुक्तया प्रमाणेन साक्षादर्थान्तरप्रतिपादनविलम्बमन्तरेण श्रेयोहेतुता मध्यवृद्धेनावगम्यते—विमतम्, श्रेयस्साधनम्, स्तनपानत्वात्, पूर्वानुभूतस्तनपानवदित्यनुमानादिव बालेन, किं वा तत्प्रतिपादिताद् गामानयीतेति लिङा गवानयनेऽस्य प्रवृत्तिर्ममेष्टेत्यभिधीयते; तस्माल्लिङा प्रतिपादिताद् वक्त्रभिप्रायादानयनस्येष्टसाधनताऽनुमीयते; आनयनप्रयत्नः, अस्य समीहितोपायः, भ्रान्तिविप्रलिप्सादिरहितेतथे[तेने]ष्यमाणत्वात्, मयेष्यमाणभोजनादिविषयो यथा पुत्रादेरिति दृष्टान्तमाह—**चेष्टेति**॥ समयाभिज्ञेन=अभिनयसङ्केतविदा। चेष्टाविशेषानुमितात्=नट-

---

1. दारुणी

विशेषानुमितादिवाभिप्रायविशेषात्, समयाभिज्ञेनेति सन्दिह्यते । एवञ्च सति सा नाभिधीयत इत्येव निर्णयः । अग्निकामो [1]दारूणि मथ्नीयादिति श्रुत्वा कुत ? इत्यनुयोगे प्रतिपत्तारो भवन्तीति[न्ति] तत्प्रयत्नस्याग्निहेतुत्वादिति । लिङ्ष्टसाधनताऽभिधाने प्रश्नोपक्रमो न स्यात् । "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इतीष्टसाधनताबोधकादर्थवादात् ब्रह्महत्या(तरणकामोऽश्वमेधेन[1] यजेतेति विधिप्रत्ययमनुमिमते मीमांसकाः । तत्र यद्यप्य[?]नुमितया लिङेष्टसाधनता मीयते, तदे[दै]वास्मादेवार्थवादादश्वमेधस्य ब्रह्महत्या) तरणहेतुता[ऽव]गता, इति विधेरनुमानं व्यर्थं स्यात् । अतोऽतिरिक्तो विधिरिष्टसाधनादवसीयते । यदि प्रथमपुरुष[2]विहित[3]तया लिङेष्टसाधनताऽभिधीयते, तदा कुर्याः, कुर्यामिति मध्यमोत्तमपुरुषयोरपि विहिता लिङ् इष्टसाधनमभिद[4]धीत । तस्माद् मध्यमादाविष्टसाधनताविरहे वक्तृसङ्कल्प एव विध्यर्थः, तद्वत् प्रथमपुरुषेऽपि स्यात्, अन्यत्राऽऽज्ञाध्येषणादौ वक्तृसंकल्पे लिङः कॢप्तसामर्थ्याद्धेतोर्वैदिकलिङोऽपि स एवार्थः ॥

॥ इष्टसाधनत्वं निषेधानुपपत्त्याऽपि न लिङर्थ
इति नैयायिकपक्षस्य प्रस्तुतस्योपपादनम् ॥

निषेधानुपपत्तेश्च ॥ इष्टसाधनतापक्षे न हन्यात्=न हननभावनेष्टाभ्युपाय इति

---

चेष्टाविशेषलक्षण[णात् स्व]स्य प्रवृत्ती रामस्येष्टत्यवगतरामाभिप्रायाद् लक्ष्मणप्रवृत्तेर्हितहेतुत्वमनुमीयते यथेति । श्रेयोहेतुत्वे मध्यमवृद्धावगते बालस्य सन्देहाद् न तत्र सङ्गत्यवगतिरित्यर्थः ॥ एवमपि श्रेयोहेतुत्वस्य लिङाद्यर्थत्वाभावनिश्चयात् सन्दिग्धसाध्यमुदाहरणमिति, अत्राह — **एवं चेति** ॥ कुत इति ? अत आह— **अग्निकाम इति** ॥ तथापि कथं निर्णयः ? अत्राह— **लिङेति** ॥ ज्ञातस्य प्रश्ना[न]र्हत्वात् प्रश्नोत्तरारम्भो न स्यादित्यर्थः । समीहितोपायताया लिङाद्यर्थत्वाभावे हेत्वन्तरमाह— **तरतीति** ॥ अर्थवादस्य विधिलिङ्गत्वात् स्तूयमाने विधिप्रत्ययानुमानमित्यर्थः । इष्टसाधनादतिरिक्त सम्बन्धः । व्यतिरेकद्वारैतदुपपादयति— **यदीति** ॥ न त्वभिधत्ते; पुरुषसङ्कल्पाभिधायकत्वादिति भावः । किञ्च वैदिकलिङादिः सङ्कल्पार्थः, लिङादित्वात्; लौकिकलिङादिवदित्याह— **अन्यो[न्य]त्रेति** ॥ विधिनिमन्त्रणादिसूत्रोदिताऽऽज्ञादिस्वरूपमुपरिष्टादाविष्करिष्यति ॥

---

1. कुण्डलीन्तर्गतं नास्ति
2. पुरुषेविधि
3. विहित तया (क)
4. अभिधीयते

वाक्यार्थः । तथाचानिष्टसाधनत्वं कुतो लभ्यते ? न हीष्टसाधनं यद् न भवति, तदवश्यमनिष्टसाधनम् ; उपेक्षणीयणीस्यापि भावात् । यद् रागादिप्रसक्तं प्रतिषिध्यते, तदवश्यममिनिष्टसाधनं दृष्टम्—यथेदं सविषमन्नं [न]भुञ्जीथा इति, तेन वेदेऽप्यनुमास्यत इत्यपि न साधीयः; प्रतिषेधार्थस्यैव चिन्त्यमानत्वात् । न हि कर्तव्यत्वस्येष्टसाधनत्वस्य, भावनाया वाऽभावः प्रतिपादयितुं शक्यते ; लौकिकानां लौकिकप्रमाणसिद्धत्वात् । तथापि प्रतिपाद्यते तावदिति चेत्, न; पाषण्डादिप्रतिषेधेनानैकान्त्यात् ॥

यदाह— हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ।
अन्यत्र कृतसामर्थ्याद् निषेधानुपपत्तितः ॥ इति ॥

॥ वक्तुरभिप्राय एव लिङर्थः सर्वत्रेति सलक्ष्यसमन्वयं
स्वमतोपसंहारः पूर्वपक्षिणः ॥

तस्मात्—

विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।
अभिधेयोऽनुमेया तु कर्तुरिष्टाभ्युपायता ॥ १७ ॥

---

"न हन्यादि"त्यादिनिषेधादनिष्टहेतुताऽवगत्युपपत्त्यापि न श्रेयोहेतुता विध्यर्थ इत्याह—**निषेधेति** ॥ तदनुपपत्तिं प्रथयितुमिष्टसाधनता विधौ वाक्यार्थमाह—**इष्टेति** ॥ अनिष्टं दर्शयति—**तथाचेति** ॥ विप्रहननम्, अनिष्टसाधनम्, अनिष्टस्या[स्य] साधकत्वात् ; कण्टकभक्षणवदित्यनुमानादिति, अत्राह—**न हीति** ॥ उपल[पे]क्ष्यतृणादौ व्यभिचारादित्यर्थः । विमतम्, अनिष्टसाधनम्, रागप्राप्तत्वे सति निषिद्धत्वात् ; सविषान्नभक्षणवदित्यनुमेयमिति, अत्राह—**यदी[दि]ति** ॥ हेत्वसिद्धिरित्याह—**प्रतिषेधेति** ॥ कर्तव्या[त्वा]दीनामन्यतमाभावः प्रतिषेधार्थ इति, अत्राह—**न हीति** ॥ कुत इति ? अत आह—**लौकिकानामिति** ॥ लौकिकहन्त्यर्थकर्तव्यत्वादीनां मानसाध्यक्षेण, अन्वयव्यतिरेकाभ्यां च सिद्धत्वादित्यर्थः ॥ यद्यपि प्रतिषेधार्थो न विशेषतो निर्वचनार्हः ; तथापि निषेधदर्शनात् तदर्थोऽस्तीत्यनुमीयत इत्याशङ्कते—**तथापीति** ॥ यागे पश्वालम्भः, न कार्यः, हिंसात्वात् ; व्यर्थहिंसावत्, इति फलरागप्राप्तपश्वालम्भेऽनैकान्त्येन दूषयति—**नेति** ॥ स्वोत्प्रेक्षामात्रत्वशङ्कापरिहारायोदयनोदितमुदाहरति—**यदाहेति** ॥ कस्तर्हि लिङाद्यभिधेयः ? तत्राह—**तस्मादिति** ॥ **प्रवृत्त्यादौ** ॥ विषयसप्तमी । प्रवृत्तिनिवृत्तिविषयाभिप्रायभेदस्य विधित्वे,पुरुषत्रयविहितलिङोऽर्थे भेदासिद्धिः, तत्राह—**तत्रेति** ॥ कस्तर्हि लौकिक-

तत्र स्वयंकर्तृकक्रियेच्छाभिधानं कुर्यादि[मि]ति, सम्बोध्यकर्तृकक्रियेच्छाभिधानं कुर्या इति, शेष[1](कर्तृक)क्रियेच्छाभिधानं कुर्वीतेति । ताथाचा'ग्निकामो दारूणि[2] मथ्नी-यादिति लौकिकवाक्यस्यायमर्थः—अग्निकामस्य दारुमथने प्रवृत्तिर्ममेष्टेति । तत्र श्रोताऽनुमिनोति—नूनं दारुमथने यतोऽग्ने[ग्नि]रुपायः; यद्विषयप्रयत्नो यस्याप्ते-नेष्यते, तस्यापेक्षिकहेतुस्तथा तेनावगतश्च, यथा ममैव पुत्रादेर्भोजनादिविषय-ग[इ]ति व्याप्तेः । 'विषं न भक्षये'दित्यस्य तु विषभक्षणगोचरा प्रतिपत्तिर्मम नेष्टेत्यर्थः । ततोऽपि श्रोताऽनुमिनोति—नूनं विषभक्षणभावनाऽनिष्टसाधनम्, यद्विषये हि प्रयत्नः कर्तुरभिमतसाधकव्या[कोऽप्या]प्तेन नेष्यते, स ततोऽधिकतरानर्थहेतुस्तेनैवावगतश्च । [यथा]ममैव पुत्रादेः क्रीडा(कर्दम[1])भक्षणादिविषय इति व्याप्तेरिति ॥

॥ पुरुषाभिप्रायविशेषस्य लिङर्थत्वायोगः, हितसाधनताया लिङर्थत्वेऽपि सन्देहासंभवः, अग्निकामादिवाक्ये पूर्वोक्तसन्देहासंभवोपपादनं चेति सिद्धान्तोपक्रमः ॥

तदेवं[ मैवम्; ]मानान्तरनिबन्धनस्वप्रवृत्तिप्रयोजकतयाऽवगतश्रेयोहेतुतायां पुरःस्फूर्तिकायां तत्रानवगतप्रयोजकभावस्वतन्त्रपुरुषाभिप्रायस्य लिङादिशब्दाभि-धेयत[ा]या[:][3]-शङ्कितुमशक्यत्वात् अभिधाभावनानियोगफलरागाणां विधित्वस्य त्वयैव

---

वाक्यस्य विधिप्रत्ययविशिष्टस्यार्थ इति? अत्राह—**तथाचेति** ॥ कुतस्तर्हि दारुम-थनव्यापारस्य समीहितवह्निसाधनत्वावगतिः? अत्राह—**तत्रेति** ॥ पित्रादिना पुत्रादेः प्रतिषेध्यतयेष्टप्रयत्ने व्यभिचारवारणायोक्तम्—**तथा तेनेति** ॥ लौकिकविधिवचन-स्यार्थं व्याख्याय लौकिकनिषेधार्थं व्याचष्टे—**विषमिति** ॥ आप्तेनानिष्टत्वलिङ्गादनु-मेयत्वाद् अनर्थहेतुभावस्य न निषेधार्थत्वम्, इत्याह—**ततोऽपीति** ॥ **अभि-मतसाधकोऽपीति** ॥ तदानीन्तनश्रेयोहेतुरपीत्यर्थः । दुःखसाधनत्वेनानिष्टश्रेयोहेतुं व्यवच्छिनत्ति—**तथेति** ॥

परिहरति—**मैवमिति** ॥ प्रत्यक्षादिमूलस्ता[स्तन्यपा]नादिप्रवृत्तिप्रयोजक-त्वेन स्वात्मन्यवगतहितहेतुत्वस्य मध्यमवृद्धप्रवृत्तिहेतुत्वेन बालेनानुमानायोगादि-त्यर्थः ॥ यदुक्तं सन्देहादिति—**तद् दूषयति**—**अभिधेति** ॥ [न]लिङादिव्यापा-

---

1. कुण्डलान्तर्गतं नास्ति (क) 2. दारुणी(ख) 3. अभिधेयता शङ्कितु

निषेधात् कुतो हितहेतुत्वविधित्वसन्देहः स्यात्। "अग्निकामो मथ्नीयादि"त्यत्र 'कुतः' इति हेतुपर्यनुयोगः प्रमाणपर्यनुयोगो वा, फलपर्यनुयोगो वा। नाद्यः; मथनसाधनानां प्रसिद्धत्वात्। न द्वितीयः; अस्य वाक्यस्यैव तन्मानत्वात्। न तृतीयः; प्रत्ययाभिहित-[1]श्रेयोविशेषाकांक्षायामधिकारिविशेषणादग्नेरेव तद्धेतुत्वेन सम्बन्धनिर्णयात्। न हि 'तृप्तिकामो भुञ्जीते'त्युक्ते कश्चिन्मूढः सन्दिग्धे—भुक्तेः किं साध्यम्—इति?

॥ 'तरति ब्रह्महत्याम्' 'अश्वमेधेन यजते' इत्यादिवर्तमानापदेशे कुर्याः कुर्यात्, कुर्याम्, इत्यादौ च सर्वत्रेष्टसाधनत्वमेवार्थः; न कर्तुरभिप्रायो लिङर्थः कुत्रापि। अन्यथाऽऽज्ञादिभेदासिद्धिः॥

"तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति वर्तमानापदेशाद् वर्तमान-श्रेयोहेतुप्रतीतौ तत्संकीर्तनवैयर्थ्यपरिहारार्थं विधिप्रत्ययस्य कृतियोग्यश्रेयस्साधनता-बोधकस्य कल्पना श्रेयस्साधनविधिपक्षे सुतरां समञ्जसा, कुर्या[दि]तिप्रत्ययादिष्टहेतुता[2] प्रतीयते। मध्यमोत्तमाभ्यां युष्मदस्मदर्थसम्बन्धिता प्रतीयते, न तु संकल्पः; तस्य मानसवेद्यतया, साक्षिवेद्यतया वा कुर्या इत्यत्र तत्प्रतीतौ प्रत्ययानपेक्षाणात्। न चान्यत्र वक्तुरिच्छैव लिङर्थ इत्यवधृतिः; तन्मात्रस्य लिङर्थत्वे सत्याज्ञादि-भेदासिद्धेः॥

---

रोऽभिधा, प्रयत्नो, भावना[वा;]अभिधादीनां विधित्वस्य कुसुमाञ्जलौ पञ्चमपरिच्छेदे त्वयैव निरस्तत्वात्, कोट्यन्तरासंभवात्समीहितोपायताविधित्वनिर्णयादित्यर्थः। यदुक्तं लिङिष्टसाधनताभिधाने प्रश्नोत्तरोपक्रमो न स्यादिति, तद् दूषणाय विकल्पयति—**अग्नीति**॥ मथनसाधनमन्थादीनां प्रसिद्धत्वाद् न प्रश्नयोग्यतेत्याह—**नाद्य इति**॥ आप्तवाक्यप्रमेयत्वाद् नेतर इत्याह—**न द्वितीय इति**॥ चरमं प्रत्याचष्टे—**नेति**॥ प्रत्ययेन श्रेयोमात्रहेत्वभिधाने कस्य श्रेय इति तद्विशेषणाकाङ्क्षायामधिकारि-विशेषणतया सन्निहिताग्नेरेव **तद्धेतुत्वेन** तन्मथनं हेतुर्यस्य न[?] तत्त्वेनेत्यर्थः॥ दृष्टान्तेनैतदाह— **न हीति**॥

अनुमानादिति द्वितीयहेतुमपवदति—**तरतीति** वर्तमानकालावच्छिन्नश्रेयो-हेतोरप्रवर्तकत्वात् तत्सङ्कीर्तनवैयर्थ्यमित्यर्थः। मध्यमादौ विहिताया लिङः सङ्कल्पा-र्थत्वात् शेषविहिताया अपि तदर्थ[त्व]मिति, अत्राह—**कुर्या इति**॥ मानसवेद्यत्वं

---

1. श्रेयोमात्रहेतुत्वस्य 2. हेतुना

॥ वक्तुरिच्छाया एवोपाधिभेदादाज्ञात्वादि, न तु स्वतन्त्राज्ञादि लिङर्थ इति पूर्वपक्षिणः शङ्का, आज्ञादीनां पृथक् प्रत्ययार्थत्वे गौरवाद् लाघवेने च्छामात्रस्य लिङर्थत्वेन तत्परिहारश्च ॥

यां वक्तुरिच्छामननुविदधानस्तत्क्षोभात् बिभेति, साऽऽज्ञा । या तु श्रोतरि पूजासम्मानव्यञ्जिका, साऽध्येषणा । वारणाभावस्य व्यञ्जिका त्वभ्यनुज्ञा अवसान-प्रयोजना । संप्रश्नः=लाभेच्छा । प्रार्थना=शुभाशंस[न]माशीरिति चेत्, न; विभिन्न-परस्परव्यभिचरिणामाज्ञादीनां प्रत्ययार्थत्वे गौरवात्, प्रयोगमूलतया [1]प्रयोगलिङ्गा-वगतत्वात्, अन्यलब्धस्याशब्दार्थत्वात्, इच्छामात्रस्य प्रत्ययार्थत्वेऽर्थविशेष-व्यवहारासिद्धेः, अर्थविशेषावच्छिन्नस्य तस्य प्रत्ययार्थत्वे लाघवात् अर्थभेद एव प्रत्ययार्थोऽस्तु, कृतमिच्छाभिधानेन ॥

॥ निषेधवाक्येऽनिष्टसाधनं नञुपरक्तलिङर्थ इति भाष्याद्यनुसारेण विवेकः ॥

न च निषेधानुपपत्तिः, 'न हन्यादिति' हननभावना नेष्टाभ्युपाय इति न वाक्यार्थः; धात्वर्थकरणभावना प्रत्ययार्थ इत्यस्माभिरनभ्युपगमात्, किन्तु हन्त्यर्थस्य श्रेयोहेतुता प्रत्ययार्थः, तेनानुरक्तो नञपि तदभावं स्वभावतो बोधयति । तत्र माना-

---

तार्किकमते, स्वमते साक्षिवेद्यत्वम् । अन्यत्र क्लृप्तसामर्थ्यादित्येतदसिद्धमित्याह— **नचेति** ॥ कुत इति ? अत आह— **तन्मात्रस्येति** ॥

भेदकोपाधिं शङ्कते— **यामिति** ॥ आज्ञादिभेदानां प्रत्ययार्थत्वम्, तत्रानु-गतेच्छामात्रस्य वा । नाद्यः; शक्तिकल्पनागौरवादित्याह—**नेति** ॥ द्वितीयं दूषयति —**इच्छेति** ॥ विमतः प्रयोगः, विवक्षापूर्वकः, प्रेक्षापूर्वप्रयोगत्वात; संप्रतिपन्नवदिति लिङ्गावगतस्यानन्यलभ्यत्वाभावादित्यर्थः । किञ्चेच्छामात्रं प्रत्ययात् प्रतीयते, धात्व-र्थावच्छिन्नवक्तृभियो वा । नाद्यः; अर्थविशेषे प्रवृत्त्यसिद्धेरित्याह—**इच्छेति** ॥ प्रत्ययेनेच्छाभिधाने प्रकृत्यर्थसामानाधिकरण्यात् तदुपरागप्रतीतावपि वक्त्रवच्छिन्न-त्वासिद्धेरित्यर्थः ॥ द्वितीयं दूषयति—**अर्थेति** ॥

कस्तर्हि प्रत्ययार्थो भवतामिति ? अत्राह—**किन्त्विति** ॥ हन्त्यर्थस्येष्टहेतुत्व-मन्वयव्यतिरेकदृष्टमशक्यप्रतिषेधम्, अत्राह—**तत्रेति** ॥ मुख्यार्थेनाविनाभूतो लक्षणीयः।

---

1, लिङ्गमवगतत्वात् (क)

न्तरविरोधात् द्द[ष्टे]ष्टादधिकतरानिष्टसाधनत्वं बोधयति ; यद्रागादिप्रसक्तं प्रतिषिध्यते, तदवश्यमनिष्टसाधनमिति नियमात् । नच प्रतिषेधार्थासि[1]द्धिः ; “नञश्चैष स्वभावः—यत् स्वसम्बन्धिनोऽभावं बोधयती ”ति सिद्धत्वात् । नच प्रमाणविरोधे बोधकत्वासिद्धिः ; ‘ गङ्गायां घोषः ’ इत्यादौ मुख्यार्थप्रतीत्यभावे लक्षणोच्छेदप्रसङ्गात् । यागविषया हिंसा पाषण्डैः प्रतिषिध्यमाना न रागादिप्रसक्ता, शास्त्रप्रसक्तैव, इति न पाषण्डप्रतिषेधेनानेकान्तः ॥

वक्तुरभिप्राये लिङादीनामनवगति[त]सङ्गतित्वे तत्र स्वयंकर्तृकक्रियेच्छाभिधानमित्यादिविभजनं श्वभ्रवर्तिगोधमांसविभजनमिव । “अग्निकामो दा[2]रूणि मथ्नीयादि ”त्यस्याग्निकामस्य दारुमथने प्रवृत्तिर्ममेष्टेत्यर्थ इति व्याख्यानमवधीरणीयम् ; अप्रामाणिकत्वात्, अग्निकामस्य दारुमथने यत्नस्य[ः स्व] समीहितोपायः ; भ्रान्तिविप्रलिप्सादिरहितेन तथे[मये]ष्यमाणत्वात्, मयेष्यमाणभोजनादिविषयो यथा पुत्रादेरिति प्रयोगे हेतुरसिद्धः ; दारुमथनवाक्यस्य श्रेयस्साधनार्थत्वेऽप्या[ना?]प्तेन तथेष्यमाणत्वे प्रमाणत्वाभावात् । एतेन—विषं न भक्षयेदिति वाक्यव्याख्यानम्—प्रत्युक्तम् ; विषभक्षणम्, [3]भोक्तुरनिष्टसाधनम् ; आप्तेनानिष्टत्वात् ; यथा ममैव पुत्रादेः [4]कर्दमभक्षणादिरित्यत्रापि हेतोरसिद्धिः; “विषं न भक्षयेदि ”ति वाक्यस्यानर्थसाधनबोधकत्वेप्याप्तेनानिष्टत्वे मानाभावात् । तस्माद्राजशासनवदिति दृष्टान्तः साध्यविकलः[5] ॥

---

न चात्रानिष्टसाधनत्वस्य निषेधार्थेनापि[वि]नाभावः, अत्राह — **यद्रागेति** ॥ प्रतिषेधार्थस्यैव चिन्त्यमानत्वात् तदविनाभावासिद्धिः ; अत्राह— **न चेति** ॥ स्वसंबन्धिनोऽभावबोधकत्वं निषेधवाक्ये न सिध्यति; मानान्तरविरोधात्, अत्राह— **न च प्रमाणेति** ॥ यदुक्तं पाषण्डादिप्रतिषेधेनानेकान्तात्—इति, तत् प्रत्याचष्टे— **शास्त्रप्रसक्तेति** ॥ प्रमाणसिद्ध श्रेयस्साधनत्वप्रतीत्या प्रसक्तानां मिथ्याज्ञाननिदानरागाप्रसक्तेरित्यर्थः ॥

परकीयविभागमाक्षिपति— **वक्तुरिति** ॥ गर्तवर्तिमौ[गो]धामांसविभजनं यथाऽशक्यम् ; असंप्राप्तेरित्यर्थः । **अवधीरणीयम्** ॥ उपेक्षणीयमित्यर्थः ॥ हेत्वसिद्धिं साधयति— **दारुमथनवाक्यस्येति** ॥ वैदिकलिङादिः स्वतन्त्रवक्तृनियोगवचन इत्यनुमाननिराकरणं निगमयति— **तस्मादिति** ॥

---

1. प्रतिवेधार्थसिद्धा ; 2. दारुणी 3. कर्तु
4. क्रीडाभक्षणाकर्दमादि (क) 5. विकलः स्यात् ।

॥ उत्तमपुरुषाभिहितसङ्ख्यायाः स्वतन्त्रैकवक्तृकत्वात् "बहु स्यामि" त्या द्युत्तमपुरुषैकवचनघटितस्यापि स्वतन्त्रैकवक्तृकत्वमिति शङ्कायामस्वतन्त्र वक्तुरपि तथावक्तृत्वाद् व्यभिचारेण परिहारः ॥

[1]मा स्याम् भविष्यामीति वैदिकोत्तमपुरुषाभिहिता संख्या, स्वतन्त्रवक्तृगोचरा, उत्तमपुरुषाभिहितसंख्यात्वात्; लौकिकवदिति चेत्, न; आविष्टभाषितोत्तमपुरुषाविष्कृतसंख्यायां व्यभिचारात् ॥

॥ यदुद्देशेन यः शब्दः प्रयुक्तः, स तत्पर इति न्यायः । उद्देशस्तु स्वतन्त्रवक्तृपुरुषाभिप्राय एवेति वेदवाक्यानामपि किञ्चिदुद्दिश्य प्रवृत्तानां नापौरुषेयत्वमिति शङ्का, पुरुषाभिप्रायो नोद्देशः, किन्तु शब्दधर्म एवेति तत्परिहारश्च ॥

यदुद्देशेन यः शब्दः प्रवृत्तः; स तत्परः; उपादानोद्देशेन प्रवृत्तलौकिकप्रशंसावाक्यस्य तत्परत्वात्, लोकानुसाराद् वेदो[दे ऽ]प्येवम्; अन्यथाऽर्थवादाऽऽनर्थक्यात् । स चोद्देशोऽभिप्रायः, इति तदाधारप्रणेतृपुरुषसिद्धिरिति चेत्, न; सिद्धस्योद्देश्यतया, शब्दस्य विधेयपरत्वात् । [2]लोऽकेऽपीच्छापर्यायोद्देशस्य निसर्गतः फल-

---

प्रयोगान्तरं तदीयं शङ्कते — **स्यामिति** ॥ एकवचनाभिहितैकत्वसङ्ख्या स्वतन्त्रवक्तारं सङ्ख्येयं स्वीकरोतीत्यर्थः । "किमहं साधु नाकरवम् । "किमहं पापमकरवम्" इति तप्यमानपुरुषविषयसङ्ख्यायां व्यभिचारे स्थिते व्यभिचारान्तरेण दूषयति—**नेति** ॥ आविष्टस्यास्वतन्त्रत्वादित्याशयः ॥

उद्देश एव तात्पर्यमिति **कुसुमाञ्जलि** काराभिप्रायमाशङ्कते—**यदिति** ॥ लौकिकवाक्यस्योद्दिष्टार्थपरत्वेऽपि न वैदिकस्य तथात्वमिति, अत्राह—**लोकेति** ॥ "य एव लौकिकाः, त एव वैदिकाः" इत्यपि न मानवं वचनमिति, अत्राह—**अन्यथेति** ॥ उद्देश्यविधिपरत्वाभावेऽर्थवादानामानर्थक्यम्; स्वार्थे फलाभावादित्यर्थः । तथापि कथं वेदप्रणेता शिवः सेत्स्यतीति ? अत्राह—**स चेति** ॥ उद्देश्य[श]तात्पर्ययोर्भिन्नगोचरत्वाद् नैकत्वमिति परिहरति—**नेति** ॥ लौकिकतात्पर्यस्योपादेयगोचरत्वेऽपि नोद्देशस्य तद्गोचरत्वमिति दृष्टान्तासिद्धिमाह— **लोकेऽपीति** ॥ वक्तुरभिप्रायः तात्पर्यमपौरुषेयत्वे वेदस्य न स्यात्, अत्राह - **नापीति** ॥ पुरुषधर्मत्वे सुवादि-

---

1. मा भूवम् । 2. लोकोऽवीच्छा

गोचरत्वेनोपादेयार्थसाध्यविषयत्वात् । नापि पुरुषाभिप्रायः तात्पर्यम् ; त[य]त्परः शब्द इति शब्दसामानाधिकरण्यविरोधात् पुरुषधर्मस्य तत्प्रणीतशब्दधर्मत्वे शब्दस्य सुखादिमत्त्वप्रसङ्गात्, पुरुषाशयवशेन[1] शब्दस्यार्थप्रतिपादकत्वे सागरविवक्षया प्रयुक्त-मेरुशब्दादपि सागर[2]प्रत्ययप्रसङ्गात् ॥

पदवाक्ययोः पदार्थतत्संसर्गौ विहाय प्रतिपाद्यान्तराभावाद् न तत्परां[रः] शब्द इति चेत्, न; भूतार्थस्य यद्यपि नाहत्य प्रवर्तकत्वनिवर्तकत्वे, तथापि तात्पर्यतस्तत्रैव प्रामाण्यमिति त्वयैव पदवाक्यशक्त्यगोचरप्रवृत्तिनिवृत्त्योरर्थवादप्रामाण्य-स्योक्तत्वात् । तस्मात् सफलः पदार्थैरपूर्वः प्रतिपाद्यः । तत्प्रमितिशेषत्वं तात्पर्यं शब्द-धर्म एव ॥

॥ वेदः, पौरुषेयः, वाक्यत्वादित्यनुमाने पौरुषेयत्वं त्रेधा विकल्प्य स्वतन्त्रे-श्वरकार्यत्वस्यैव पौरुषेयत्वरूपत्वात्, तस्य वेदेऽभावादपौरुषेयत्वमिति व्यवस्था ॥

वेदवाक्यम्, पौरुषेयम्, वाक्यत्वात्; कालिदासवाक्यवदिति चेत्, न; पौरुषेयत्वं स्वार्थप्रमितिपुरस्सरत्वं वा, (तत्प्रतीतिपुरस्सरत्वं वा,)[3]पुरुषकार्यत्वं वा। आद्ये विप्रलम्भकवाक्ये व्यभिचारः । द्वितीये 'अस्ति घटः" इत्यभिधित्सतो 'नास्ति घटः' इत्यपि प्रमादान्निस्सृतवाक्येऽनैकन्तिकता । चरमे सिद्धसाधनता । देशकालव्यापकत्वे भाविकक्रमविकलवर्णानां परोपरागकृतक्रमक्रोडीकृतानां वेदपदवेदनीयत्वेन विशिष्ट-

---

वच्छब्दसामानाधिकरण्यायोगादित्यर्थः ॥ पुरुषधर्मः=तात्पर्यं तत्प्रणि[णी]सङ्क्रमतीत्याह—**पुरुषेति** ॥ तात्पर्यस्य पुरुषाभिप्रायत्वे भङ्ग्यन्तरमाह—**पुरुषाशयेति** ॥ पदवाक्यविषयातिरिक्तविषयस्यासम्भवाद् न तात्पर्यं शब्दधर्म इति शङ्कते—**पदेति** ॥ स्ववचनविरोधेन निराकरोति—**नेति** ॥ उ द य नचोद्य निरासमुपसंहरति—**तस्मादिति** ॥

अपौरुषेयत्ववादिनः कथं पौरुषेयत्वं सिद्धम्? अत्राह—**देशेति** ॥ न तावद् वर्णमात्रं वेदः; अक्षरसमाम्नायेऽपि प्रसङ्गात्, क्रमविशेषविशिष्टानां वेदत्वे **भाविकः**=पारमार्थिकः क्रमो देशकालनिबन्धनो न संभवति, इति पाठप्रतीत्योरन्य-तरक्रमो वर्णेषूपरज्यते; इति तद्विशिष्टरूपेण वर्णानां पुरुषप्रयत्ननिष्पाद्यत्वादित्याशयः ।

---

1. वशेनाशब्दस्य (क) 2. सागरस्य प्रत्यय
3. कुण्डलितो भागः ख पुस्तके दृश्यते

क्रमस्य क्षणिकत्वेन तद्विशिष्टवर्णानां पुरुषसंपाद्यतया तत्कार्यत्वोरीकारात्, क्रमसादृश्यपरम्पराया अनादितामात्रेणापौरुषेयत्ववाचोयुक्तिः ॥ यथाहुः—

"यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता"

इति । वैदिक्यो रचनाः, स्वतन्त्रपुरुषसम्पाद्याः, रचनात्वात्; भारतादिरचनावदिति चेत्, पुरुषस्य स्वातन्त्र्यं प्रमाणान्तरेणार्थमुपलभ्य रचयितृत्वम्, उत कारकान्तराधिष्ठातृत्वम् । आद्ये विप्रलम्भकवाक्यरचनासु व्यभिचारः । द्वितीये सिद्धसाधनम्; नामप्रपञ्चोपादानस्येश्वरस्याधिष्ठातृत्वाभ्युपगमात् । रचनानां च वाक्यधर्माणामुत्पादे वाक्यानां द्रव्यत्वप्रसङ्गः ॥

॥ वेदवाक्यक्रमस्य पुरुषबुद्धिजन्यत्वानुमानस्य बहुधा विकल्प्य सिद्धिसाधनादिना निरासः, तेनैव न्यायेनानुपूर्वीपक्षकस्यानुमानस्यापि निरासः ॥

[1]यदप्यवादि—वेदवाक्यक्रमः, पुरुषबुद्धिजन्यः, वाक्यक्रमत्वात्—इति, न तच्चातुर्यमञ्चति; क्रमस्यान्यधर्मत्वे पुरुषबुद्धिजन्यत्वप्रतिज्ञाव्याघातः, वाक्यस्वरूपमात्रत्वे क्रमविशेषणवैयर्थ्यम् । तत्त्यागे वेदवाक्यं पुरुषबुद्धिजन्यमिति साध्यं[2] पर्यवस्येत् । तदपि न चारु,[तदपि]स्वार्थप्रमितिजन्यत्वम्,प्रतीतिमात्रजन्यत्वं वा । आद्ये[नाद्यः;] प्रमादनिसृतवाक्ये व्यभिचारात् । द्वितीये पूर्वपूर्ववेदवाक्यानुस्मृतिजन्यत्वमुत्तरोत्तरवेदवाक्यानाम्, इति स्वीकरात्, अनुभवजन्यत्वसाधने[3]ऽनुभूतमनुस्मृत्य विरचित-

---

तर्हि वेदनित्यत्वाभ्युपगमविरोधः, अत्राह—**क्रमेति** ॥ **स्वतन्त्रतेति** ॥ मानान्तरेणार्थमुपलभ्यापूर्वक्रमवत्तया रचनकर्तृतेत्यर्थः । **रचनात्वादिति** ॥ क्रमविशेषवत्तया पदानामुच्चारणं रचना । सिद्धसाधनत्वं साधयति—**नामेति** ॥ उपादानस्याज्ञाततयाऽधिष्ठानस्याज्ञानतत्सम्बन्धरूपकारणान्तराधिष्ठातृत्वादित्यर्थः ॥

क्रमस्यान्यधर्मत्वम्, वाक्यधर्मत्वम्, वाक्यस्वरूपत्वं वेति विकल्प्य प्रथमं प्रत्याह—**क्रमस्येति** ॥ द्वितीयेऽपि कार्यत्वम्, अकार्यत्वं वेति विकल्प्य क्रमेण पराकरोति—**वाक्येति** ॥ अन्त्यं निरस्यति—**वाक्यस्वरूपेति** ॥ क्रमविशेषणं परिहाय साध्यनिर्देशेऽपि दोषं दर्शयितुं पर्यवसितमाह—**तदिति** ॥ प्रतीतिमात्रजन्य-

---

1. पृ. 116. प. 5
2. सामर्थ्यम्
3. नैरनुभूत

मन्वादिवचने (सिद्धसाधनता) व्यभिचारात् । एतेन—वैदिक्यानुपूर्वी, प्रणेतृपूर्विका, वर्णानुपूर्वित्वात् ; सम्प्रतिपन्नवदित्याद्यपि—निरस्तम् ; तस्या अप्यानुपूर्व्या वर्णधर्मत्वम् , अन्यधर्मत्वं वेत्यादिविकल्पदोषलङ्घनाजङ्घालत्वात् ॥

॥ वेदवाक्ये बुद्धिजन्यत्वानुमानस्यापि सिद्धसाधनता ॥

[1]यदप्युक्तम्—वेदवाक्यम् , बुद्धिजप्रयत्नजन्यम् , वाक्यत्वात्—इति, तत्रापि प्रयत्नजन्यत्वसाधने बाध—सिद्धसाधनयोरन्यतरविरहाद् बुद्धिजविशेषणवैयर्थ्यम् । अधुनास्मदादिभिरधीयमानस्वाध्यायस्य[2] पूर्वाधीतस्वाध्यायानुस्मरणपुरस्सरप्रयत्नजन्यत्वस्वीकारेण सिद्धसाधनता च ॥

॥ इदानीन्तनकालः, वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयवानिति तु गगनादेरपि पौरुषेयत्वापादकत्वादनुचितम् , सत्प्रतिपक्षाच्च ॥

[3]यच्चोक्तम्—अयं कालः , वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयवान् , इति, तत्र समाधिः—अयं कालः, वेदव्यतिरिक्तेदानीन्तनत्वरहितापौरुषेयवान् , कालत्वात् ; अन्यकालवदित्यपि वदतो न हृदयं विदीर्यते ॥

अयं कालः, गगनव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयवान् , कालत्वात्, इति गगनादेरपि पौरुषेयतापत्तिरिति ॥

॥ आकाशश्रोत्रपक्षकवेदपौरुषेयत्वपर्यवसाय्यनुमानद्वयेऽपि सत्प्रतिपक्षोपन्यासः ॥

[4]यदपरमीरितम्—आकाशः, वेदव्यतिरिक्ताकाशनिष्ठत्वरहितपौरुषेयवान्—इति, तत्राप्याकाशो वेदव्यतिरिक्ताकाशनिष्ठत्वरहितापौरुषेयवान्, द्रव्यत्वात् ,

---

त्वम् , अनुभवजन्यत्वं वेति विकल्प्याद्यं सिद्धसाधनत्वेनापवदति—**द्वितीय इति** ॥ उक्तं भङ्गमन्यत्रातिदिशति – **एतेनेति** ॥

अतथाविधसंसारानुपूर्व्या व्यभिचारं वारयति—**वर्णानुपूर्वित्वादिति** ॥ वैदिक्यानुपूर्वी, इदम्प्रथमा, वर्णानुपूर्वीत्वात् , संप्रतिपन्नवदित्यादिपदार्थः । अजङ्घालत्वात् [अदूरत्वात्] । [अवैदिकत्वात् ?] क्रमकोडीकृतवर्णात्मनो वेदस्य प्रयत्नजन्यत्वमस्त्येव, इति सिद्धसाधनतानिषेधार्थं बुद्धिग्रहणम्, अत्राह—**अधुनेति** ॥

---

1. पृ- 116. व. 6.
2. अभिधीयमानस्वाध्यायस्य पूर्वाधीतस्वाध्यायस्य पूर्वाधीतस्वाध्यायानुसरण
3. पृ. 116. प. 7. 4. पृ. 116. प. 8,

तन्तुवदिति सत्प्रतिपक्षदुष्टतरक्षुद्ग्रास[1] एव। श्रोत्रम्, वेदव्यतिरिक्तश्रोत्रग्राह्यत्वरहितपौरुषेयग्राहकमित्यपि—श्रोत्रम्, वेदव्यतिरिक्तश्रोत्रग्राह्यत्वरहितापौरुषेयग्राहकम्; इन्द्रियत्वात्, चक्षुर्वदिति सत्प्रतिपक्षताएव

॥ वेदे सर्वज्ञेश्वरकर्तृकत्वानुमानं तु यद्यागमानुसारेण, तर्हि तदप्रयत्नजत्वेनैव तदनुसारित्वात्, तस्य चेष्टत्वात् सिद्धसाधनम् ॥

[2]यत् पुनः—ईश्वरः, हिताहितोपायोपदेष्टा, तदभिज्ञत्वे सति परार्थैकप्रवृत्तित्वात्, इत्यनुमानम्, तत्रेदं सम्प्रधार्यम्—किमीश्वरस्य सार्वज्ञ्य[ज्ञ]मागमादवगतम्, लिङ्गाद्वा। यद्याद्यः; तदा यथाऽऽगमावगतसर्वज्ञत्वमङ्गीकृतम्, तद्वत्—"अस्य महतो भूतस्य निश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदः" इति निश्वसितशब्देन प्रसिद्ध[द्ध]निश्वाससादृश्याभिधायिनाऽयत्नपूर्वकत्वप्रतिपादकेन प्रकरणानुगृहीतेनेश्वरोपादानत्वमात्रपरेण प्रतिपादित[तं]पौरुषेयत्वमप्यङ्गीकरणीयम्; अविशेषात्, नेतरस्तत्[त्तत्]; तदनिरूपणात् ॥

॥ अदृष्टं कस्यचित्प्रत्यक्षमित्याद्यनुमानेन नेश्वरसाधनम्, तस्य सोपाधिकत्वात् ॥

अदृष्टादि, कस्यचित् प्रत्यक्षम्, प्रमेयत्वात्, करतला[मलक]वदमीमांसका-

---

सत्प्रतिपक्षतया दूषयति—**तत्रेति** ॥ विशेषणकृत्यं पूर्ववदूह्यम्। अतिप्रसङ्गबाधमाह—**अयं कालः, गगनव्यतिरिक्तेति** ॥

प्रथमं पराकरोति—**यद्याद्य इति** ॥ पौरुषेयत्वमप्यङ्गीकार्यमिति सम्बन्धः। हेतुगर्भं विशेषणमाह—**निश्वसितशब्देन** ॥ **प्रतिपादितमिति** ॥ निश्वसितशब्दात् कथं तत्प्रतीतिः? अत्राह—**प्रसिद्धेति** ॥ सादृश्यमेवाह—[अ]**प्रयत्नेति** ॥ तर्हि शास्त्रयोनित्वाधिकरणविरोधः, अत्राह—**ईश्वरेति** ॥ अत्रोपोद्बलकमाह—**प्रकरणेति** ॥ ब्रह्मणो जगदुपादानत्वप्रतिपादकप्रकरणपाठादस्य वाक्यस्येत्यर्थः ॥

**अदृष्टादीति**—अदृष्टम्, आदिः येषां[यस्य समुदास्य,]इति सर्वातीन्द्रियावरोधः। अस्मिन्नेव प्रतिज्ञार्थे द्वितीयोऽपि हेतुः। कस्यचित्पदेनास्मदादिविलक्षणविवक्षाया[म]प्रसिद्धविशेषणत्वम्। न पुरुषमात्रविवक्षा; जाति[तिं]व्यक्तिं चान्तरेण मात्रार्थानिरूपणात्। असदादिविवक्षायां व्याप्यत्वासिध्या दूषयति—**नेति** ॥ अन्वयव्यतिरेकिण एव धर्मविशेषस्योपाधित्वात् सन्दिग्धसाध्यधर्मिणोऽन्यत्र व्यतिरेकासिद्धौ नास्योपाधित्वम्, अत्राह—**केवलेति** ॥ यत्र साधनेऽन्वयव्यतिरेकरूपव्याप्तिरारोपिता, तत्र

---

1. द्रा (क) 2. पृ. 117 प. 8

नामप्रत्यक्षत्वात्, अस्मत्सुखादिवदिति—चेत्, न; अस्मदादीन्द्रियग्रहणयोग्यत्वोपाधेः, केवलान्वयिनि केवलान्वयिधर्मस्योपाधित्वाविरोधात् ॥

॥ सर्वस्य कार्यस्य सर्वज्ञकर्तृकत्वानुमानेनापि नेश्वरसाधनम्, अप्रसिद्ध विशेषणत्वात्, तस्य केवलव्यतिरेकिण्यपि दोषत्वादिति व्यवस्था ॥

सर्वं कार्यम्, सर्ववित्कर्तृ[1]पूर्वकम्, कादाचित्कत्वात्, यन्नैवं तन्नैवम्, यथाऽऽकाशमिति चेत्, न; अप्रसिद्धविशेषणत्वात्। केवलव्यतिरेकिणि नायं दोष इति चेत्, न; भूः, शशविषाणोल्लि[2]खिता, भूत्वात्, इत्यादेरपि प्रसङ्गात्। विपक्ष-

---

तदारोपहेतोरुपाधेरन्वयव्यतिरेकित्वेन भाव्यते, यत्र तु केवलान्वयारोपः, तत्र तदारोपहेतोरुपाधेरपि केवलान्वयित्वे नास्तीति[स्ति]विरोध इत्यर्थः ॥

व्यतिरेकसाध्यं सर्ववित्कर्तृत्वमन्यत्र प्रतीतम्, अप्रतीतं वा। प्रथमे यत्र प्रतीतम्, तत्र हेतुः प्रवर्तते चेत्, अन्वयव्यतिरेक्येव। ततो निवर्तते चेत्, असाधारण एव। नित्यत्वसाधने शब्दत्ववत्। चरमे त्वप्रसिद्धविशेणः पक्ष इति परिहरति—**नेति** ॥ यदेवानिश्चितस्वभावमपि संभावनाविषयीकर्तुं [योग्यम्, तदेव]विशेषणं धर्मिविशेषे साधनमर्हति, न सर्वं सर्वत्र। संभावना तु सति संशय एव वादिविप्रतिपत्त्यादिनिबन्धने प्रतिपक्षबाधकाधीने, न[च]सर्वत्र सम्भाविनी, न; एवं सत्यप्रसिद्धविशेषणत्वदोषा संभावना,[अ]प्रसिद्धत्वा[ा]स्या]त् साध्यसंसर्गवदेवेति शङ्कते—**केवलेति** ॥ मैवम्, शशविषणादिविशिष्टतया साधनप्रसङ्गात्। न च तथा साधने दृश्यानुपलम्भविरोधः; ईश्वरत्ववदतीन्द्रियत्वोपगमे विरोधाभावादिति दूषयति—**नेति** ॥ [वि]प्रतिपत्त्यादे[दि]रेव न संशयबीजम्; ज्ञाततत्त्वस्य गुरोः शिष्यप्रबोधनार्थं शास्त्रं प्रणयतः तन्मूलत्वेनाहार्यसंशय[व]त्त्वात्, शास्त्रेऽभ्यनुज्ञानात् आहार्यसंशयगोचरविषाणादेः संभावनास्पर्शद[व]त्त्वसंभवादित्यपिशब्दार्थः। शशविषाणादेः प्रतिपक्षबाधकविधुरस्य प्रतिबन्धबोधगोचरव्यतिरेकानिरूप[प्य]त्वम्, प्रकृते तु न तावत्सर्ववित्कर्तृ[र्त्रे]भावे कार्यत्वमेव संभवेत्। न खलु [त्व]चेतनं चेतनानधिष्ठितं प्रवर्तते; चेतनाचेतन प्रवृत्त्योर्हेतुफलभावस्य कुविन्दवेमादावन्वयव्यतिरेकनिरूपितत्वात्। न च सर्वज्ञ ए[इ]वास्मदादिरदृष्टाद्य[दिर]धिष्ठातुमीष्टे। तदिह[तर्हि]कुम्भादेरपि न सर्वविदमन्तरेण सम्भवः। तस्मात् कुम्भादावपि धर्माद्यधिष्ठातृत्वेन सर्वविनिर्माता स्वीकार्य इति

---

1. कर्तृकपूर्वकम्   2. णोल्लिता (क)

बाधकभावा[1]भावाभ्यां विशेष इति चेत्, न; प्रागभावप्रतियोगित्वमात्रेण कार्यत्वोपपत्तावत्रापि तदभावात् ॥

॥ क्षित्यादिकं सकर्तृकमित्यनुमानस्य कर्तृव्यापारकत्वसाधनेऽनवस्थापत्त्यादूषणम् ॥

क्षित्यादिकम्, सकर्तृकम्, कार्यत्वात्, घटवदिति जगत्कर्तृत्वसिद्धावधिकरणसिद्धान्तन्यायेन सर्वज्ञत्वसिद्धिरिति चेत्, न; कर्तृव्यापारस्य कार्यत्वेऽपि न कर्तृपूर्वकत्वम्; अनवस्थानात्। अतः कर्तृव्यापारे व्यभिचारात्।

॥ न केवलं व्यापारेण, किन्तु कार्येणापि कर्तुर्न व्याप्तिग्रह इत्युक्तानुमानदूषणम् ॥

किञ्च कार्यस्य कर्त्रा व्याप्तिर्न चक्षुरादिगम्या; कर्तुस्तदगोचरत्वात्। नापि मनोगम्या; परस्य परप्रत्यक्षत्वाभावात्। स्वकार्ये स्वप्रयत्नपुरस्सरत्वं [2]मनसा वा

---

बाधकमस्ति। ततो नाभाससाम्यमिति शङ्कते—**विपक्षेति** ॥ कुविन्दवेमादिप्रवृत्त्योर्हेतुफलस्वभावनिरूपणमिति कोऽर्थः? किं कुविन्ददेहव्यापारस्य हेतुभावः, तदात्मव्यापारस्य वा। नाद्यः; देहस्याचैतन्यं[न्यात्,] न द्वितीयः; आत्मान्तरस्याप्रत्यक्षगोचरस्यान्वयव्यतिरेकावसेयाधिष्ठातृत्वानुपपत्तेरिति परिहरति—**नेति** ॥

प्रयोगान्तरं शङ्कते—**क्षितीति**। सकलकार्यपक्षीकारे घटादिनांऽशे सिद्धसाध्यता स्यात्, व्यतिरेकिता च हेतोः; सपक्षाभावात्, अतः क्षित्यादिव्यतिरेकपर्यन्तविमतिगोचरकार्यं क्षित्यादिकमित्युक्तम्—**सकर्तृकमिति** ॥ परिदृष्टसामर्थ्यकारकप्रयोक्तृपूर्वकमित्यर्थः। यस्य हेतोः, पक्षस्य वा सिद्धावन्यस्य वाऽनुषक्तस्यापि सिद्धिः, सोऽधिकरणसिद्धान्तः—यथेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति हेतोः सिद्धावनुषङ्गिणोऽर्था[द्]इन्द्रियनानात्वम्, नियतविषयाणीन्द्रियाणीत्यादयः। विवादाध्यासितं बुद्धिमत्पूर्वकमिति पक्षस्य सिद्धावनुषङ्गिणोऽर्थाः—सर्वज्ञत्वादयः सिध्यन्तीति। कार्यस्य कर्त्रा व्याप्तिः, व्यापारस्य वा[।न द्वि]धापि; कर्तृव्यापारे व्यभिचारात्, न ह्यात्मनः केवलस्य मुक्तात्मवद् व्यापारः, किन्तु देहावच्छिन्नस्य। न च तस्य चेतनत्वम्; तस्यापि चैतन्यापत्तौ व्याप्त्यनिश्चयादनुमाना[नु]दया[य]इति दूषयति[—**नेति**]**न च** कर्तृव्यापारस्य सन्दिग्धसाध्यतया धर्मित्वम्; व्यापारवतः कर्तृत्वात्, तेनैव व्यापारेण तत्कर्तृत्वे आत्माश्रयः, व्यापारान्तरेण तत्कर्तृत्वेऽनवस्थेति बाधकदर्शनादकर्तृक इति विपरीतनिश्चयात् ॥

---

1, भावाभाभ्यां    2. मनसा वा यत (क)

[क्रियत इति चेत्, न; ज्ञानस्य स्वाश्रयाद्भिन्नविषयत्वनियमेन स्वग्रहणायोगे स्वकृतिपुरस्सरत्वग्रहणायोगात् ॥

॥ ईश्वरस्य ज्ञातृत्वासंभवेनापि न कर्तृत्वमिति प्रकारान्तरेणापि पूर्वोक्तानुमानदूषणम्, तज्ज्ञानस्य नित्यत्वानित्यत्वविकल्पेन, ज्ञानं नित्यमिति व्याघातेन च ॥

अपि च भागवतं [1]ज्ञानमनित्यम्, नित्यं वा । आद्ये तत्कारणशरीरेन्द्रियादि[2]-प्रसक्तौ न तस्य सार्वज्ञम्; अस्मदादिवत् । नापि द्वितीयः; नित्यं ज्ञानमिति व्याघातात्, इन्द्रियादिविकारमात्रव्यङ्ग्यत्वाद् ज्ञानत्वसामान्यस्य ॥

॥ नित्यत्वज्ञानत्वयोर्व्याघाताभावेन नित्यज्ञानवत्त्वस्येश्वर उपपादनं नैयायिकस्य ॥

स्यादेतत्—सहानवस्थानं हि द्वेधा—परस्पराभावरूपतया, परस्पराभावाक्षेप[क]तया चेति । तत्र न तावन्नित्यत्वाभावो ज्ञानत्वं, मातृत्वाभाव इव वन्ध्यात्वम् । तथा सति घटादेरनित्यस्य चैतन्यप्रसङ्गात् । नापि नित्यत्वं ज्ञानत्वस्याभावमाक्षिपेत्;

---

भङ्गान्तं[न्तरं]भणति—**किञ्चेति** ॥ ज्ञानचिकीर्षाप्रयत्नवान् कर्ता, तेन व्याप्तिश्चक्षुरादिना, मनसा वा नावगन्तुं शक्ष्यतीत्यर्थः । व्याप्तिसंवेदनस्य मानसत्वस्वीकारेण शङ्कते—**स्वेति** ॥ आत्मनो घटादेश्चैकप्रमाणागोचरत्वाद् न तदुभयनिष्ठं संवेदनम्, नाप्यात्मनो मानसत्वमिति दूषयति—**नेति** ॥ विमतम्, स्वाश्रयाद् भिन्नविषयम्, ज्ञानत्वात्; घटज्ञानवदित्यर्थः ॥

एवं तावत् कार्यस्य न कर्त्रा व्याप्तिरित्युक्तम्, संप्रति स्वीकृत्यापि व्याप्तिं क्षित्यादौ न कर्त्रनुमानसंभवः; व्याघातादित्याह—**अपिचेति** ॥ चेतनस्य कर्तृत्वाद् ज्ञानं विकल्पत इति द्रष्टव्यम् ॥ **इन्द्रियादीति** ॥ चतुष्टयद्वयत्रयसन्निकर्षसङ्ग्रहः । **मात्रेति** ॥ नित्यस्य ज्ञानत्वव्यञ्जकस्य व्यावृत्तिः ॥

तार्किकगर्ववाहस्त्वाह—**स्यादेतदिति** ॥ सहानवस्थारूपं व्याघातं परिहर्तुं विभजते—**सहेति** ॥ हेतुः—**तथासतीति** ॥ नित्यत्वाभावस्य ज्ञानत्वे घटादिषु सोऽस्तीति तेषामपि चेतनत्वापत्तेरित्यर्थः ॥ द्वितीयोऽप्ययुक्त इत्याह—**नापीति** ॥ नित्यत्वं हि स्वविरोधिन एवाभावमाक्षिपेत, न चास्य ज्ञानत्वेन विरोध इत्याशयः ।

---

1. ध्यानं (क) 2. शरीरेन्द्रियाप्रसक्तौ (क)

ज्ञानत्वेनाविरोधात्। यथा हि शीतोष्णयोरैकाधिकरण्येन जलानलयोः सङ्करः स्यात्, उभयधर्मकं द्रव्यान्तरञ्चापद्येतेत्यादि बाधकमस्ति, तदे[थे]ह विरोधमूलस्य विपक्षे बाधकस्याभावात्, दर्शनादर्शनयोश्चार्थप्रवणत्वाप्रवणत्वोपाधिग्रस्तत्वात् रूपत्वान्यत्वयोश्चक्षुर्मात्रग्राह्यग्राह्यव्यक्तित्ववत्। न चेन्द्रियादिविकारो ज्ञानत्वाभिव्यक्तिहेतुः; अर्थप्रवणस्य व्यक्तिमात्रस्यैव तन्निरपेक्षस्य तथाभावात्, अर्थप्रवणव्यक्त्यनपेक्षस्येन्द्रियादिविकारस्येन्द्रियादिविकारत्वे घटत्वादावपि ज्ञानत्वप्रसञ्जकत्वात्—इति,

॥ ईश्वरे नित्यज्ञानायोगव्यवस्था, इन्द्रियव्यापारस्य ज्ञानत्वव्यञ्जकत्वम्, नार्थप्रावण्यस्य, इच्छादेरपि ज्ञानत्वापत्तेः। अस्मदादिवदीश्वरस्याप्यसर्वज्ञत्वाच्च। सर्वथा तु वेदकर्तृत्वमागमिकस्यैवेश्वरस्य, न जीवविशेषस्यास्मदादिविलक्षणस्यापि ॥

नैतदपि हृद्यम्, नित्यत्वस्य [1]ज्ञानत्वाभावेन गगनादावविनाभूतस्वभावस्य ज्ञानस्य[नेन] सह स्थितौ स्वभावत्यागप्रसङ्गात्। यद्यपि यत्र नित्यत्वम्, तत्र ज्ञाने-

---

अविरोधमेव व्यतिरेकदृष्टान्तेनाह—**यथेति** ॥ **इत्यादीति** ॥ शैत्यस्य स्वाभाविकद्रव्य[द्रव]त्वाप्रतिबन्धादुष्णस्य तदभावाविनाभावात् स्वाभाविकद्रव्य[द्रव]त्वतदभावयोरपि संकरः स्यादित्यर्थः। ज्ञात[न]त्वनित्यत्वयोरैकाधिकरण्ये बाधकस्यापाततोऽनुपलम्भेऽपि नित्यानां ज्ञानेतरत्वेन सहदर्शनात् ज्ञानत्वेनादर्शनाच्च नित्यत्वज्ञानत्वयोर्विरोधः कथं न स्यादिति ? अत्राह—**दर्शनेति** ॥ यथाहि नित्यत्वं न रूपेतरत्वे प्रयोजकम्, रूपत्वारूपत्वयोश्चक्षुर्मात्रग्राह्याग्राह्य[त्व ? ]व्यक्तित्वस्योपाधित्वात्, तथेहापीत्यर्थः। नन्विन्द्रियादिव्यापार एव ज्ञानत्वव्यञ्जकः, नित्ये च ज्ञाने तदभावात् तत्र कथं ज्ञानत्वं स्यादित्युक्तमेवेति, अत्राह—**न चेति**। इन्द्रियादिव्यापारनिरपेक्षयाऽर्थप्रवणव्यक्त्यैव ज्ञानत्वस्य व्यङ्ग्यत्वादर्थप्रवणव्यक्तिं विहायेन्द्रियादिव्यापारमात्रेण तस्य व्यञ्जयितुमशक्यत्वाच्च नासौ ज्ञानत्वस्य व्यक्तिहेतुरित्यर्थः ॥

विपर्यये बाधमभिधत्ते—**अर्थेति** ॥ घटत्वादेरपि[पीन्द्रिय]विकारव्यङ्ग्यत्वेन ज्ञानत्वापत्तिरित्याशयः ॥

विमतम्, न नित्यम्, ज्ञानत्वात्, अस्मदादिज्ञानवदिति दूषयति—**नेति** ॥ विपक्षबाधकेन व्याप्तिमापादयति—**नित्यत्वस्येति** ॥ स्वाभाविकसंबन्धो व्याप्तिः,

---

1. ज्ञातत्वा (क)

तरत्वं दृश्यते, ज्ञानत्वञ्च न दृश्यते; तथापि न तत् तत्प्रयोजकम्; ज्ञानत्वतदन्यत्वे प्रति स्वभावतोऽर्थप्रवणत्वाप्रवणत्वयोरुपाधित्वादित्युक्तमिति चेत्, न तद् युक्तम्; अर्थप्रावण्यस्य ज्ञानत्वव्यञ्जकत्वे सतीच्छादेरपि ज्ञानत्वापातात्। प्रकाशस्य सतोऽर्थ-प्रावण्यमिति चेत्, न; प्रकाशत्वस्यैवाव्यवहितत्वात्, अर्थप्रावण्यस्य संयोगादेर-योगाच्च। न चेन्द्रियादिविकारस्य ज्ञानत्वव्यञ्जकत्वेऽतिप्रसङ्गः; अर्थप्रावण्येन विशेष-णीयत्वात्। न चैवं गौरवम्, अर्थप्रावण्यानिरूपणं वा; अनन्यथासिद्धलघुप्रयोजकान्त-राभावात्, अध्याससम्भवाच्च। आत्मत्वम्, न सर्वज्ञवृत्ति, जातित्वात्; गोत्ववदिति तत्प्रतिषेधाच्च ॥

॥ नैयायिकाभिमतेश्वरसर्वज्ञत्वनिरासः, अभिन्ननिमित्तोपादनस्यैवागमिकत्वात्, इति न तस्य वेदे कर्तृत्वं स्वतन्त्रम्; वागाद्यभावात् ॥

परपरिकलितसर्वज्ञवृत्तित्वस्यैतद्धटैतद्भूतलयोराधाराधे[2]यभावस्येवाप्रामाणि-कस्य प्रतिषेधसम्भवाद् नाप्रसिद्धविशेषणता। आगमगम्येश्वरपरिग्रहे न कश्चित्

---

स्वाभाविकत्वं च निरुपाधित्वम्, न चेह तदस्तीति शङ्कते—**यद्यपीति** ॥ स्वभाव-त्वे[तो]ऽर्थप्रवणत्वं संयोगादिसंसर्गान्तरमन्तरेण तदीयस्वभावत्वम्; अर्थविषयत्व-मित्यर्थः। यद् नित्यम्, तदज्ञानमित्यत्र नार्थप्रवणत्वाभाव उपाधिः, इच्छादौ साध्या-व्याप्तेरित्याह—**न तदिति** ॥ ज्ञानत्वविशेषितार्थप्रावण्याभाव इति विशेषणीय-मित्याह—**प्रकाशस्येति** ॥ ज्ञानत्वसिद्धौ कथितोपाधिसिद्धिः, अतश्च ज्ञानत्व-सिद्धौ तदसङ्कीर्णज्ञानत्वसिद्धिरिति चक्रकप्रसक्त्या परिहरति—**नेति** ॥ इन्द्रियादि-विकारस्य तदितरस्य वा यदर्थप्रवणत्वम्, (तत्त्वम्,) तद्[न]स्वरूपमात्रम्; अविशेषेण कलशप्रतीतौ पलाशादेरपि प्रतीत्यापातात्। अतः संयोगसमवायादिरूपं तदूरीकार्यम्। न च तद् ज्ञानस्य घटादिना घटत इत्याह—**अर्थेति** ॥ **विशेषणीय-त्वादिति** ॥ प्रमाणसामग्रीप्रसूतान्तःकरणपरिणामो ज्ञानत्वव्यञ्जक इति निर्वचनीय-त्वादित्यर्थः ॥ तर्कितमेतत्, न प्रमितमिति चेत्, अत्राह—**आत्मत्वमिति** ॥

---

1. प्रापणस्य (क)
2. धेयि (क)

क्षुद्रोपप्लवः। असर्वज्ञस्य चातीन्द्रियावेदकवेदकर्तृत्वायोगः, वाक्यरचनाकारणवागाद्यभावाच्च नेश्वरस्य वेदकर्तृत्वम् ॥

॥ स्वेच्छाकल्पितदेहवतोऽपीश्वरस्य न वेदकर्तृत्वमित्युपपादयितुं तस्य दिव्यशरीरवत्त्वे प्रमाणसङ्ग्रहः ॥

योऽप्याह—

स्वेच्छानिर्मितदेहभेदसचिवो वेदप्रणेता शिवो
न ह्येतादृशदेहयोगिनममुं नेच्छन्ति नैयायिकाः।
तद्भोगायतनन्तु भोगविरहान्नेष्टं तृणादेर्विधौ
वैयर्थ्याच्च न कार्यमात्रकरणे कार्यान्वयः स्वीकृतः ॥ १८ ॥

कथमपरथा मूर्ति त्रेधा वदन्ति महर्षयः
कथमिव दश प्रादुर्भावान् स्मरन्ति च शार्ङ्गिणः।
त्रिपुरदहनं नीलग्रीवं क्षपाकरभूषणम्
विविधमसकृद्[1]देहं वेदा वदन्ति च शासितुः ॥ १९ ॥

---

सर्वज्ञवृत्तित्वप्रमितौ बाधः, तदप्रमितावप्रमितप्रतियोगिप्रतिषेधासिध्याऽप्रसिद्धविशेषणता, अत्राह—**परेति** ॥ "यः सर्ववि‌दि"त्यागमावगतः परमकारुणिकः परमेश्वरः। तदपाकरणे स्यादागमविरोधः, अत्राह—**आगमेति** ॥ तत्र वाक्यशेषः—"तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते" इति। "जनिकर्तुः प्रकृतिरि"त्यपादानसंज्ञोपादानपञ्चम्या तदुपादानत्वप्रतिपादनाद् न विरोध इत्यर्थः ॥ एवं परपरिकल्पिततटस्थेश्वरस्य सर्वज्ञत्वं निराकृत्य, तत्फलमाह—**[अ]सर्वज्ञस्येति** ॥

इच्छाकायमधिष्ठाय कल्पादौ वेदकर्तृत्वमीश्वरस्येति शङ्कते—**योऽपीति** ॥ सिद्धान्तविरोधः शरीरित्व इति, अत्राह—**न हीति** ॥ ईश्वरशरीरम्, भोगायतनम्, जीवच्छरीरत्वात्, अस्मदादिवत्। अतश्च तस्य संसारित्वम्, अत्राह—**तदिति** ॥ "अनश्नन्नन्यः" इत्यादिश्रुतेर्भोगासंभवादिति भावः। तर्ह्यङ्कुरादिकार्यस्यापि शरीरजन्यत्वम्, अत्राह—**वैयर्थ्याच्चेति** ॥ ईश्वरप्रयत्नगोचरपरमाणुभिरेव द्व्यणुकादिपरम्पराऽऽरम्भसंभवादिति भावः। ईश्वरस्येच्छामयदेहे न प्रमाणमस्तीति, अत्राह—**कथमिति** ॥

---

1. गेहं (क)

पराशरोऽपि भगवान् स्वेच्छाविग्रहमीशितुः ।
पुराणे वैष्णवे प्राह पुराणपुरुषस्तुतौ ॥ २० ॥

नारायणात् कारणाद्वा कारणाकारणान्न च ।
शरीरग्रहणं व्यापिन् धर्मत्राणाय ते परम् ॥ २१ ॥

ये पुनः परमर्षिभिः प्रणीता आगमाः, तेषामपि पारम्पर्येण परमेश्वरसंस्पर्शादेरेव विश्वासविषयत्वम् । तथाहि—तेषामपि पारमेश्वरं वा वचनं मूलम् , यौगिकं वा वेदनम् । अद्ये मूलोप**दे्ष्टारमेवेश्वर**माद्रियमाणो महाजनः परिगृह्णीयादिति युक्तम् । द्वितीयेऽपि यौगिकवेदनस्य यथार्थत्वं साक्षात् , परम्परया वा अतीन्द्रियार्थप्रमित्यर्थं पारमेश्वरयोगविधिनिबन्धनत्वे सत्येव विश्वसनीयम् । तदेवं साक्षात् , परम्परया वा परमेश्वरस्पर्शमेव विदित्वा प्राथमिको महाजनपरिग्रहः, तत्परिग्रहान्यथानुपपत्त्या प्रामाण्यनिश्चये सत्युत्तरोत्तरमहाजनपरिग्रहोपपत्तिरिति स्थितम् ॥

॥ वेदापौरुषयत्वं विना न स्वेच्छाकल्पितदेहभेदसिद्धिः, अन्यथाऽन्योन्याश्रयाद्यापत्तेः ॥

स इत्थं प्रष्टव्यः—देहभेदोपादाने किं वेदः प्रमाणम्? उत तन्मूला स्मृतिः? उतानुमानमिति । नाद्यः ; वेदस्येश्वरप्रणीततया प्रामाण्यप्रसिद्धौ ततो वेदस्य [देवस्य] देहोपादानसिद्धिः, तत्सिद्धौ च तत्प्रणीतत्वेन प्रामाण्यमितीतरेतराश्रयात् ।

---

"बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ॥

इत्यादौ देहयोगोऽवगतः, नेच्छामयत्वं तस्य, अत्राह—**पराशरोऽपीति** ॥ अकारणात् = भूतपञ्चकात् । कारणात् = प्रधानात् । कारणाकारणात् = प्रकृतिविकृतिसप्तकात् । यद्वा कारणम्=धर्मः, अकारणम्=अधर्मः, कारणाकारणम्= तदुभयम् । व्यास-पराशरादिप्रणीतागमानामीश्वरसंस्पर्शमन्तरेण प्रामाण्यवत् श्रुतिप्रामाण्यमपि किं न स्यात्? अत्राह—**ये पुनरिति** ॥ योगिप्रत्यक्षमूलत्वे कथमीश्वरसंस्पर्शाद्विश्वसनीयत्वम्? अत्राह—**द्वितीयेऽपीति** ॥ योगानुष्ठानाद्यौगिकं वेदनं स्यात्, तदनुष्ठानं च तद्विषयातीन्द्रियप्रमितिनिबन्धनम्, इति तदर्थमीश्वरोपदेशापेक्षेत्यर्थः । एवं श्रुतीनां स्मृतीनां च साक्षात्पारम्पर्याभ्यामीश्वरसंस्पर्शमुक्तमुपसंहरति—**तदेवमिति** ॥

नापि द्वितीयः ; स्मृतिप्रामाण्यसिद्धौ देहोपादानसिद्धिः, तत्सिद्धौ वेदस्येश्वरप्रणीतत्वेन प्रामाण्यसिद्धौ तन्मूलतया स्मृतिप्रामाण्यमिति चक्रकप्रसङ्गात् । नाप्यन्त्यः ; तदनिरूपणात् । एतेन—[1]पितृत्वाद्वोप देशानुमान[2]मिति—प्रत्यादिष्टम् ॥

॥ जगन्नाथस्यापि वेदादिप्रवर्तने वेदापेक्षाऽवर्जनीया, अन्यथा सर्वज्ञत्वहान्यादिः ॥

[3]यत्पुनरभाषि[4]—किमर्थं पुनरियमपेक्षा पूर्वं वेदे जगन्नाथस्येति, तदपि न मनोहरम् ; विचारासहत्वात् । तथाहि—ईश्वरप्रतीतेः पूर्वं वेदोऽगोचरः, गोचरो वा । आद्ये [5]सार्वज्ञ्यहानिः । अन्त्ये स्वोत्तरसर्गवेदसम्प्रदायप्रवृत्तेरहेतुश्चेत् , अपौरुषेयत्वापातो वेदस्य, सिद्धान्तविरोधश्च । हेतुश्चेत् , पूर्ववेदप्रतीतेरुत्तरवाक्यरचनाहेतुत्वात् क्रमसादृश्यपरम्पराया अनिदंप्रथमत्वेनापौरुषेयतासिद्धिरिति, सेश्वरमीमांसा[6] वा न्याय[ एव वा ]दर्शनमित्यपि[7] ब्रुवतो न मुखं वक्रीभवति । ईश्वरप्रतीतेः पूर्वं वेदो नान्तरीयकतया गोचरः, न तु तत्र[8] रागः प्रयोजक इति चेत् , तर्हीश्वरप्रतीतेरपि नित्यतया कल्पादौ वेदसंप्रदायप्रवृत्तौ सन्निधिः, न हेतुतयेति किं न चिन्तयसि ?

॥ वर्णनित्यत्वविरोधियुक्तीनां निरासेन तन्नित्यत्वसाधनम् । तत्र वर्णोत्पाद ध्वंसप्रत्यक्षवादनिरासः ॥

[9]यदवादि—"इदानीं श्रुतपूर्वो गकारो नास्ति, निवृत्तः कोलाहल" इति

---

**तदनिरूपणादिति** ॥ वेदवाक्यम् , शरीर[रि]कार्यम् , वाक्यत्वात् ; कालिदासवाक्यवदित्यादौ पूर्वपूर्ववाक्यमनुसृत्य तत्सदृशोत्तरोत्तरवाक्यस्य पाठैकनिष्पाद्यत्वस्वीकारेण सिद्धसाधनात् , ईश्वरशरीरकार्यमि'त्यप्रसिद्धविशेष[ण]त्वादित्यर्थः ॥ पक्षप्रतिकूलतर्केण, विपक्षप्रतिकूलतर्काभावेन च प्रयोगान्तरमपि निरस्तमित्याह—**एतेनेति** ॥ पूर्वश्रुतिगोचरेश्वरप्रतीतिरुत्तरसर्गश्रुतिसृष्टेर्हेतुः , अहेतुर्वेति विकल्प्य क्रमेण पराकरोति—**अन्त्य इति** ॥ **नान्तरीक[यक]तयेति** ईश्वरप्रतीतेः सर्वगोचरत्वमन्तरेण पूर्वतद्गोचरत्वं न स्यात् , इति सर्गान्तरवेदगोचरत्वमित्यर्थः ।

---

1. पृ. 118. प. 6.
2. शोऽनुमानमिति
3. पृ. 119. प. 6.
4. भाणि
5. साज्ञहानि (क)
6. मीमांसान्याय (क)
7. पृ. 119. प. 11.
8. नतु परागः प्रयोजक
9. पृ. 120. प. 4

प्रत्यक्षेणैव प्रध्वंसः प्रतीयते—इति, तन्मन्दम् ; इन्द्रियसन्निकर्षानिरूपणात् । श्रोत्रेण विशेषणविशेष्यभावः सन्निकर्ष इति चेत्, न ; तत्परिमाणादेरपि श्रावणत्वप्रसङ्गात् । योग्यताविरहाद् नेति चेत्, तुल्यम् । किञ्च [1]संयोगादिसम्बन्धान्तररहितस्या[2] (व्याव[3]र्तकस्या)तिप्रसङ्गात्, विशेषणत्वायोगात्, व्यावर्तकत्वेन विशेषणत्वेऽप्य-प्रतिपन्नस्य तदयोगात्, प्रतिपन्नस्यैव [व्यावर्तकत्वेन] विशेषणत्वम्, इति श्रवसा शब्दा[4]भावप्रतीतौ तस्य श्रोत्रविशेषणत्वम्, तद्विशेषणत्वेन तस्य तेन प्रतीतीरिति दुर्वारः परस्पराश्रयः ॥

॥ वर्णध्वंसप्रत्यक्षानुमानस्याश्रयासिद्धिदृष्टान्तसाध्यवैकल्यसहकारियोग्यतास्वरूपेन्द्रियसंनिकर्षोपाध्यादिदुष्टत्वम् ॥

विवादाध्यासितः, शब्दध्वंसः, प्रत्यक्षः, प्रत्यक्षप्रतियोगिकध्वंसत्वात्, घट-ध्वंसवदिति चेत्, न ; तद्ध्वंसस्यासिद्धतयाऽऽश्रयासिद्धेः, दृष्टान्तस्य चाभावाप्रत्यक्ष-ताया वक्ष्यमाणतया साध्यवैकल्यम्, इन्द्रियसन्निकृष्टत्वस्योपाधित्वाच्च ॥

---

**तत्परिमाणादेरपीति** ॥ श्रोत्रस्य यः परिमाणः, या च सङ्ख्या, तयोरपि तद्विशेषणत्वेन तद्ग्रहः स्यादित्यर्थः । शब्दाभावस्य श्रोत्रविशेषणत्वमूरीकृत्य दूषण-मुदितम्, इदानीं न तदपीत्याह—**किञ्चेति** ॥ श्रोत्रेण शब्दाभावस्य संयोगादि-सम्बन्धान्तरमस्ति, न वा । नाद्यः ; अनभ्युपगमात् । द्वितीये सर्वं सर्वस्य विशेषणं स्यात्, अविशेषात् । एवमव्यावर्तकत्वेन विशेषणत्वम्, व्यावर्तकत्वेन वा । नाद्यः ; अतिप्रसङ्गादेवेत्यर्थः । इतरव्यवच्छिन्नतत्प्रतीतिजनकत्वेन विशेषणत्वे प्रतीतस्य विशेषणत्वं व्यावर्तकत्वम्, अप्रतीतस्य वेति विकल्प्य निराकरोति—**व्यावर्त-कत्वेनेति** ॥

शब्दध्वंसप्रत्याक्षत्वस्यानुमानसिद्धत्वादनिराकार्यत्वमिति शङ्कते—**विवादेति** ॥ आद्यादिशब्दप्रध्वंसव्यावर्तनायोक्तम्—**विवादाध्यासित इति** ॥ **प्रत्यक्षध्वंस-स्येत्यादि** साध्याविशिष्टम्, अत उक्तम्—**प्रतियोगिते[के]ति** ॥ परमाणुवर्तिघट-रूपाभावेन व्यभिचारवारणाय—**ध्वंसत्वादिति** ॥

---

1. संप्रयोगादि
2. रहितस्य चा
3. कुण्डलान्तर्गतं नास्ति ।
4. शब्दभाव
5. स्वरूपयोग्यतया साध्यते

॥ उदयनावष्टम्भेनेन्द्रियसंनिकर्षस्योपाधित्वनिरसनेन
शब्दध्वंसप्रत्यक्षत्वानुमानसमर्थनम् ॥

शब्दप्रध्वंसस्येन्द्रियग्रहणं प्रति स्वरूपयोग्यताऽत्र साध्यते। सा च यावत्स्वरूपभाविनी, इति न तां प्रत्यागन्तुकस्य सहकारियोग्यतारूपस्येन्द्रियसन्निकर्षस्योपाधित्वम्; साध्याव्यापकत्वात्। यदाहोदयनः—स्वरूपयोग्यतां प्रति सहकारियोग्यताया अनुपाधित्वात्, तस्यास्तामनपेक्ष्यैव सर्वदा व्यवस्थितेरिति—चेत्,

॥ स्वरूपयोग्यतायाः साध्यायाः कर्मधारयषष्ठीसमासाभ्यां
विकल्पेनेन्द्रियसन्निकर्षोपाधित्वसमर्थनम् ॥

स्वरूपयोग्यतेति स्वरूपमेव योग्यता, तदतिरिक्ता वा। आद्ये धर्मिसाध्यभेदासिद्धेरनुमानासिद्धिः। द्वितीयेऽपराद्धान्तः; [1]शक्त्यपरपर्याययोग्यतायाः स्वरूपातिरिक्ताया अनङ्गीकारात्॥

॥ श्रोत्रशब्दाभावयोर्विशेष्यविशेषणभावसन्निकर्षसत्त्वशङ्कायाः
अतिप्रसङ्गेन तदभावोपपादनेन परिहारः, तेन
शब्दध्वंसप्रत्यक्षत्वानुमानसत्प्रतिपक्षश्च ॥

अथापि साधनव्याप[2]कता। अस्ति हि श्रोत्रशब्दाभावयोः स्वाभाविको विशेषणविशेष्यभाव इति चेत्, न; संयोगादिसंसर्गान्तरमन्तरेण विशेषणविशेष्यभावस्यातिप्रसञ्जकत्वात्, विवादाध्यासितः, न प्रत्यक्षः, इन्द्रियासन्निकृष्टत्वात्; परमाण्वादिवदिति सत्प्रतिपक्षत्वाच्च॥

---

उपाधेः साध्याव्यापकत्वाभिधानाय साध्यमभिधत्ते—**शब्दप्रध्वंसस्येति**॥

'स्वरूपयोग्यते'ति कर्मधारयो वा, षष्ठीसमासो वेति विकल्पयति—**स्वरूपेति**॥ **अनुमानासिद्धिरिति**। धर्मिस्वरूपस्यैव साध्यत्वे तन्निष्ठतया साधने सा[स्वा]श्रयप्रसङ्गेन व्याघातादित्यर्थः॥

**स्वाभाविक इति**॥ संयोगादिनिरपेक्षः सप्तमः सन्निकर्षः स्वभावानतिरिक्तो विषयविषयिभाववदिति भावः। स्वाभाविकत्वं दूषयन् परिहरति—**नेति**॥ **इन्द्रियासन्निकृष्टत्वादिति**। नासिद्धं विशेषणत्वम्, विशेष्यत्वं च विशेष्ये, न च विशेषणविशेष्यभावो नामैक उभयनिष्ठोऽस्ति—इति॥

---

1. शक्यपर्याययोग्यताया 2. व्यापकास्तिदि

॥ शब्दध्वंसानुभवस्य शपथमात्रत्वम्, सन्दिग्धत्वं वा ।
अनुमानं तूक्तविधया दुष्टम् ॥

भातीति चेत्, मैवम्; यतः—

इदं भाति न भातीति संविद्विप्रतिपत्तिषु ।
परप्रत्यायने पुंसां शरणं शपथोक्तयः ॥ २२ ॥

अनुमानादिति चेत्, न; शब्दः, संप्रति नास्ति, अनुपलभ्यमानत्वादित्याश्रयासिद्धेः । असतः शब्दस्या[1]श्रयत्वानुपपत्तेः ॥

॥ कालाकाशाहमर्थवीणादिपक्षकशब्दाभावानुमाननिरासः
अनेकान्तदृष्टान्तसाध्यवैकल्यादिभिर्हेतुभिः ॥

[आकाशम्, इदानीं निश्शब्दम्, तद्वत्तयाऽनुपलभ्यमानत्वात्, यथा घटवत्तयाऽनुपलभ्यमानं भूतलं निर्घटमिति चेत्, न; अनैकान्तिकत्वात्। शब्दसद्भावकालेऽप्याकाशस्यातीन्द्रियत्वेन तद्वत्तयाऽनुपलम्भात्, आद्यादिशब्दानां सतामेवानुपलम्भाच्च । एवं कालपक्षेऽपि दोषात् । अहम्; इदानीं निःशब्द[ः?]श्रोत्रवान्, शब्दोपलब्धिरहितत्वात्; बधिरवदिति चेत्, न; दृष्टान्तस्य साध्यवैकल्यात्, बधिरश्च श्रोत्रवांश्चेति व्याघातात् ॥

---

प्रत्यक्षावधृतविषयत्वमनुमानस्य शङ्कते—**भातीति** ॥ शब्दाभावस्य प्रत्यक्षत्वनिश्चये त्वदीयानुमानमपि सिद्धसाधनं स्यात्। अतः सन्दिग्धं प्रत्यक्षत्वमिति वाच्यम्, एवं चानुभवविरोध इत्याह—**मैवमिति** ॥ नैयायिकैकदेशी शङ्कते—**अनुमानादिति** ॥ भातीत्यनुषङ्गः । सतः पक्षत्वे व्याघातः, असतः पक्षत्व आश्रयासिद्धिरित्याह—**नेति** ॥ व्याघातपरिहारायोक्तम्—**इदानीमिति** ॥ **अनुपलभ्यमानत्वादिति** ॥

रूपान्तरेणानुपलभ्यमाने [द्वितीय?] व्यभिचरतीत्युक्तम्— **तद्वत्तयेति** ॥ घटादिशब्दकालस्य स्वकालेन व्यभिचार इत्याह—**नेति** ॥ अयं कालः, निश्शब्दः, तद्वत्तयाऽनुपलभ्यमानत्वादिति, अत्राप्याह—**एवमिति** ॥

---

1. आश्रयानुपपत्तेः

निश्शब्दाः, पणवीणावेणवः, तदेकज्ञानसंसर्गयोग्यत्वे तदनुपलम्भेऽप्युपलभ्यमानत्वात्, यत् यदेकज्ञानसंसर्गि[1]योग्यं यस्यानुपलम्भेऽप्युप[2]लभ्यते, तत्र तदभावात्, यथा घटवद्भूतलमिति चेत्, न; एकज्ञान[3]संसर्गयोग्यत्वाभावात्, शब्दस्य श्री[श्रौ]त्रत्वात्, वीणादीनां चाक्षुषत्वात्।

॥ शब्दोऽन्यत्र गत इत्यादिविकल्पजालस्याप्रामाणिकत्वेन शब्दानित्यत्वनिरासेन शब्दनित्यत्वोपसंहारः, अभिव्यक्तिहेत्वभावादनुपलम्भोपपत्तिश्च ॥

तदेवं न शब्दध्वंसः प्रामाणिकः। न हि शब्द एवान्यत्र गत इत्यादिविकल्पदूषणजालं शब्दध्वंसस्याध्यक्षत्वासिद्धौ निर्मूलं सेद्धुमर्हति। शब्दानुपलम्भोऽभिव्यक्तिहेत्वभावात् सम्भवति। न चान्वयव्यतिरेकवतस्तस्यासम्भवः; दूरादाकर्णयतो वर्णानुपलम्भेऽप्युपलभ्यमानध्वनेरभिहितत्वात्, शब्दनित्यत्वसिद्धौ प्रतिनियतव्यञ्जककल्पनाच्च। न च[4] तदसिद्धिः; अनुमानस्य दर्शितत्वात्॥

॥ उत्पत्तिधर्मकत्वेन शब्दानित्यत्वानुमानस्य सत्प्रतिहेतुत्वम् ॥

[5]यदप्यनुमानम्—शब्दः, अनित्यः, उत्पत्तिधर्मकत्वात्—इति, तत्र ध्वनिभागे सिद्धसाधनता। वर्णाः, यावदाश्रयभाविनः, पृथिवीत्वा[त्?] सहवृत्तित्वे सति

---

प्रयोगान्तरं शङ्कते—**निश्शब्दा इति** ॥ सशब्दानामपि वीणादीनामुपलभ्यमानत्वाद्व्यभिचारनिवृत्त्यर्थमुक्तम्—**तदनुपलम्भेऽपीति** ॥ शब्दानुपलम्भेऽपीत्यर्थः। धर्माद्यनुपलम्भेऽप्युपलभ्यमानेनात्मना व्यभिचारो मा भूत्, इत्युक्तम्—**तदेकज्ञानं[न]संसर्गयोग्यत्वे सतीति** ॥ तेन विशेषणेन सह यदेकज्ञानम् = विशिष्टज्ञानमितियावत्। तत्र संसर्गः, तद्विषयत्वम्, तद्योग्यत्वे सतीत्यर्थः। विशेषणासिद्धो हेतुरिति परिहरति—**नेति** ॥

शब्दस्य वीणाद्यनाश्रयत्वेन तत्प्रध्वंसस्याप्यतद्देशत्वान्निश्शब्दा वीणादय इति प्रतिज्ञा बाधितविषया स्यादिति भावेनाह—**तदेवमिति** ॥ शब्दस्य नित्यत्वे सदा सन्निधानादुपलम्भः स्यात्, अतोऽनुपलभ्यमानत्वान्नास्तीति, अत आह—**शब्दानुपलम्भ इति** ॥ प्रत्यक्षगम्योऽन्वयव्यतिरेकवानभिव्यञ्जको नास्तीति, अत्राह—**नचेति** ॥

---

1. योग्य (क)
2. उपयुज्यते (क)
3. संसर्गायोग्यत्वा
4. न च इति नास्ति
5. पृ. 120. प. 12

भूतविशेषगुणत्वात्, सलिलरूपवदिति 'सत्प्रतिहेतुत्वं[1]' च, वर्णप्रत्यभिज्ञानापहृत-विषयत्वं च ॥

॥ सोऽयं सकार इति प्रत्यभिज्ञानस्याबाधान्न ज्वालाप्रत्यभिज्ञानसाम्यम्,
इति ततोऽपि शब्दनित्यत्वम् ॥

प्रत्यभिज्ञानं ज्वालाप्रत्यभिज्ञानवत् सादृश्यादिगोचरत्वादबाधकमिति चेत्, नैतत् सारम्; 'स एवायं घट' इति प्रत्यभिज्ञानवत् प्रमाणतया [2]बोधकत्वमेव किं न स्यात्? अबाधितविषयस्य [3]स्वतः प्रमाणत्वात्; कारणदोषाभावाच्च। सादृश्यं तत्र दोषोऽस्तीति चेत्, मैवम्; व्यक्तिभेदसिद्धौ सादृश्यकल्पना, ततः प्रत्यभिज्ञानभ्रमत्वम्, ततश्चोक्तानुमानादनित्यत्वेन भेदसिद्धिरिति चक्रकप्रसङ्गात्। किञ्च प्रत्यभिज्ञानस्य गत्वादिसामान्यालम्बनत्वकल्पनेऽनन्त[4]व्यक्तिकल्पनम्। तदनुगतसामान्यमपि प्रमाणविकलमेव कल्पनीयमिति कल्पनागौरवाद् वरमेकव्यक्त्यालम्बनत्वकल्पनम्; लाघवात्, प्रत्यभिज्ञानस्य स्वरूपैक्यालम्बनत्वस्य स्वाभाविकत्वाच्च। [5]यत्पुनस्तुल्यं ज्वालायामिति प्रतिबन्दिग्रहणम्, तदपि दुराशामात्रम्। ज्वालप्रत्यभिज्ञानस्य प्रबलं बाधकमस्ति चेत्, न; तुल्यत्वम्, नास्ति चेत्, प्रमाणमेवास्तु ॥

॥ वर्णप्रत्यभिज्ञानस्य वर्णे तीव्रत्वादिधर्मविशेषेण वर्णानां भेदप्रत्ययाद्

---

इदं भाति न भातीत्यादित्वभि[दी]यगाधासाभिरपि सुपठैवा, अत्राह—**शब्दे[ब्दइ]ति** ॥

शब्दमात्रस्य धर्मित्वम्, वर्णात्मनो वा। आद्यं प्रत्याह—**तत्रेति** ॥ द्वितीयं दूषयति—**वर्णा इति** ॥ पाकजरूपादिसुखादिसंयोगादिव्यावृत्त्यर्थानि हेतुविशेषणानि ॥ ज्वालाप्रत्यभिज्ञादृष्टान्तादप्रामाण्ये, घटप्रत्यभिज्ञादृष्टान्तात् किं न प्रामाण्यमित्याह—**नैतदिति** ॥ बाधकत्वे सन्देहमापाद्य तन्निश्चयहेतुमाह—**अबाधितेति** ॥ 'अयमनेन सदृशः' इति सादृश्यस्य भेदप्रतीतिसापेक्षत्वात्, ककारव्यक्तिनानात्वप्रतीतौ 'स एवायं ककारः' इति प्रत्यभिज्ञानस्य सादृश्यनिबन्धनत्वसिद्धिरित्याह—**मैवमिति** ॥ वर्णानां गुणानां गुणावयवसामान्यरूपसादृश्यायोगात् गत्वादिसामान्यमेव सादृश्यं वाच्यम्, तत्र बाधमाह—**किं चेति** ॥ सामान्यालम्बनत्वकल्पने स्वभावत्यागापत्तिरपीत्याह—**प्रत्यभिज्ञानस्येति** ॥

---

1. संप्रतिहेतुत्वं च 2. बाधकत्वमेव 3. स्वतः प्रामान्यत्वात्
4. व्यापारकल्पनं (क) 5. पृ. 120. प. 13.

ज्वालप्रत्यभिज्ञानसाम्यशङ्का, तीव्रतरादीनां सप्तपदार्थेष्वनन्तर्भावात्तीव्रादिभेदेन वर्णानां भेदायोगान्न प्रत्यभिज्ञानस्य ज्वालप्रत्यभिज्ञानसाम्यमिति तत्परिहारश्च ॥

[1]अथ ब्रूषे—ज्वालायां ह्रासवृद्ध्यादिविरुद्धधर्माध्यासवत् शब्देऽपि तीव्रतीव्रतरमन्दमन्दतरादिविरुद्धधर्माध्यासादभेदाध्यवसायेन बाधितं प्रत्यभिज्ञानम्—इति, तदसत्; तथाहि—तीव्रतरादिकं न द्रव्यगुणकर्मसु शक्यान्तर्भावम्; वर्णानां तदाश्रयत्वे द्रव्यत्वप्रसङ्गात्। नापि सामान्यान्तर्भूतम्; वर्णत्वेन परापरभावविरहात्। तथाहि—न तावद्वर्णत्वं परम्; तदभावेऽपि सुखादौ तीव्र[त्वा]देर्भावात्, नापि तीव्रम्; तीव्रानधिकरणमन्दवर्णे वर्णत्वाभावात्। एवं मन्दस्यापि परापरभावो दुर्वचः। समवायविशेषरूपत्वमनाशङ्कनीयमेवेति ॥

॥ विचारासहेनापि तीव्रादिभेदेन वर्णप्रतीत्यापत्तिः, तीव्रादीनां मन्दादिभिरविरोधात् ॥

कथंकारं विचारासहेन तीव्रतीव्रतरादिना वर्णव्यक्ति[क्ते]रभेदवर्णनम्? अपिच संतु ये[2] केचन तीव्रतीव्रतरादयः, तावता तदाश्रयवर्णव्यक्तिनानात्वं कुतः? न ह्येकस्यानेकधर्माधिकरणत्वं विरुद्धम्। [[3]विरुद्धानेकधर्मत्वं] विरुद्धमेकत्रेति चेत्, न; एकस्यैवात्मनोऽवि[नोवि]रुद्धानेकसुखदुःखादिधर्माधिकरणत्वात्। कालभेदाद-

---

ज्वाला प्रतिवन्दिग्रहस्याभिप्रायं शङ्कते—**अथेति** ॥ इन्द्रा[ तीव्रा ]दिकं द्रव्यादावन्तर्भूतम्, अनन्तर्भूतं वा चरमेऽपराद्धान्तः। प्रथमे पूर्वत्रिकेऽन्तर्भूतम्, उत्तरत्रिके वा। न प्रथम इत्याह—**तथाहीति** ॥ चरमेऽपिसामान्यान्तर्गतिः, विशेषादा[ दौ ]वा। आद्यं दूषयति—**नापीति** ॥ तीव्रपरमितिशेषः। **अनाशङ्कनीयमिति** ॥ तीव्रादेः श्रावणत्वात्, अनित्यत्वाच्च; तद्वैपरीत्यात् समवायादेरित्यर्थः ॥

उच्चैरुच्चैस्तरां नीचैर्नीचैस्तरामित्यादिरूपा उदात्तानुदात्तादिभेदास्तीव्रादयः, न ते वर्णत्वं जहतीति शङ्कामाश्रित्याह—**अपिचेति** ॥ उच्चत्वादेः स्थानधर्मत्वान्न वर्णाधिकरणत्वम्, अधिकरणत्वे वा किमेकस्यानेकधर्माधिकरणत्वं विरुद्धम्, उत विरुद्धानेकधर्माधिकरणत्वमिति विकल्प्यापास्यति—**न हीति** ॥ एकदैकत्र विरुद्धसंसर्गो[ र्गे ]व्याघातः, नैवमात्मनि सुखादिसंसर्ग इति शङ्कते—**कालेति** ॥

---

1. पृ. 121. प. 4. 2. स्तुतये (क)
3. कुण्डलान्तर्गतस्य स्थाने "विरुद्धानेकधर्माधिकरणत्वं"

विरोध इति चेत्, तुल्यम्; युगपदनेकवक्तृकैककक्कारे तीव्रादयश्चकासती[त इ]ति चेत्, तदपि नैकान्तिकम्; वियति विहग-तदभावयोरपर्यायमेव दर्शनात् ॥

॥ व्यञ्जकभेदप्रयुक्तभेदत्वे वर्णानां य र ल वादिवर्णाभावप्रसङ्गः,
इति निरवयवस्वरूपमेव वर्ण इति ज य न्त भ ट्टशङ्का य र ल वादिषु
स्वरूपैक्यप्रत्यभिज्ञानाभावान्न युक्ता, न वा तत्रैक्यप्रसञ्जनादिसंभवः ॥

यदपि **न्या य म ञ्जर्यामी**रितम्—नायं व्यञ्जकभेदकृतो गकारभेदप्रत्ययः। यदि व्यञ्जकभेदाधीन एष प्रतिभासः, तर्हि य-र-ल-वादिवर्णभेदप्रत्ययोऽपि तत्कृत एव किमिति न भवति? ततश्च सकलवर्णविकल्पातीत[1]मेकमनवयवं शब्दब्रह्म वैयाकरणवदभ्युपन्तव्यम्—इति, तदपि न; गकारस्वरूपप्रत्यभिज्ञानवद् य-र-ल-वादीनां स्वरूपैक्यप्रत्यभिज्ञानाभावात्। अपिच य-र-ल-वादीनामेकत्वं प्रसाधयसि, प्रसञ्जयसि वा। नाद्यः कृतान्तानुसारी। द्वितीयोऽपि—गकाराभेदे य-र-ल-वादीनामभेदप्रसङ्गः। तस्माद्गकारो भिन्न इति विपर्ययपर्यवासानस्य प्रमाणविकलस्य दर्शयितुमशक्यतया प्रसङ्गाभासत्वप्रसङ्गाद् असमञ्जसः ॥

॥ गङ्गागगनादावपि न गकारस्य भेदप्रत्ययः,

---

न तुल्यमित्याह—**युगपदिति**। विरुद्धधर्माध्यासो न भेदः, नापि भेदहेतुः; अनैकान्तिकत्वादित्याह—**तदपीति**। आकाशोऽन्त्ये [शे श्ये] नसत्त्वासत्त्वयोः, शब्दसत्त्वासत्त्वयोश्च दर्शनात्, उपाधिभेदादविरोधे यदुपाधिविशिष्टे श्येनादिवृत्तिः, तदुपाधेर्यावदाकाशसम्बन्धे [न्त्ये]एव सत्वासत्त्वसङ्करः। यद्याकाशैकदेशे तदुपाधेरसत्त्वम्, तर्ह्युपाधिसत्त्वासत्त्वयोरेकत्र संसर्गः, उपाध्यन्तरकल्पनायामनवस्थानादित्याशयः ॥

वर्णनित्यत्वे तद्भेदप्रतिभासो व्यञ्जकभेदकृतोऽभ्युपेयः। स न संभवति; भ ट्ट ज य न्ताभिहितदोषग्रासादिति शङ्कामुत्थापयति—**यदपीति** ॥ व्यतिरेकद्वारोपपादयति—**यदीति** ॥ एवं चापसिद्धान्तो निग्रह इत्याह—**ततश्चेति**। प्रमाणा[ण]भावाभावाभ्यां वैषम्यप्रदर्शनेन प्रतिबन्दीमुन्मोचयति—**तदपीति** ॥ **द्वितीयोऽपि** ॥ असमञ्जस इति संबन्धः ॥

---

1. विकल्पातीतमनवयवं

व्यञ्जकभेदेऽपि व्यङ्ग्यैक्याविरोधात्, अतो न बाधः प्रत्यभिज्ञानस्य ॥

गङ्गागगनगर्गादिषु परस्परपरिच्छिन्नो गकारः प्रतिभासत इति चेत्, तर्हि मणिकृपाणदर्पणादिषु मुखभेदः प्रतिभासते, इति तद्भेदोऽभ्युपगन्तव्यः; यत्र तत्र प्रत्यभिज्ञानस्य व्यक्तिरूपालम्बनत्वप्रतिपादनन्यायस्य गकारप्रत्यभिज्ञानेऽपि तुल्यत्वाद् न गत्वजातिकल्पना युक्तमती ; स एवायं घटः इत्यादावपि देशकाल-विरुद्धसंसर्गमात्रप्रतीतेस्तुल्यत्वात् ॥

॥ गत्वादिजातिकल्पनया 'सोऽयं घटः' इतिवत् प्रत्यभिज्ञानोपपत्तिः शब्दव्यक्तिभेदेऽपीतिशङ्कानिरासः ॥

गत्वसिद्धौ तद्गोचरतया प्रत्यभिज्ञोपपत्तिः, ततश्च गकारपरिच्छेदः, ततश्च गत्वसिद्धिरिति चक्रकञ्च दुर्वारम्। तस्मादाकाशम्, नित्यविशेषगुणाधिकरणम्, पृथिवीत्वानधि[1]करणत्वे सति नित्यभूतत्वात्, सलिलपरमाणुवत्। आकाश-नित्यत्वादिकं पराङ्गीकृतमेवाङ्गीकृत्य तत्प्रत्यायनमात्रमत्र क्रियते, इति[2] न दूषणमन्वेष-णीयम्। [3]शब्दनित्यत्वसिद्धौ तत्परिच्छेदस्यौपाधिकत्वमित्यलमलीकविकत्थनेन ॥

॥ तारतारतरत्वादेर्न ककारादिस्वाभाविकत्वम् ॥

---

गकारभेदस्य प्रत्यक्षत्वाद् न विपर्ययावसानमिति शङ्कते—**गङ्गेति**। प्रत्यभिज्ञानस्य स्वरूपालम्बनत्वेनान्तरङ्गत्वात्, परिच्छेदप्रतीतेः परापेक्षभेदालम्बन-त्वेन बहिरङ्गत्वाद् अन्तरङ्गेण बहिरङ्गं बाध्यमित्याशयेनाह—**तर्हीति** ॥ गकार-प्रत्यभिज्ञानस्य स्वरूपालम्बनत्वादन[?]न्तरङ्गता, अत्राह—**यत्रेति** ॥

घटादिप्रत्यभिज्ञाया अविरुद्धवस्तुगोचरत्वात् स्वरूपालम्बनत्वेऽपि न गकार-प्रत्यभिज्ञायास्तत्त्वम; विरुद्धधर्माध्यासधीविरोधात्, अत्राह—**स एवेति** ॥ उक्तन्याय-स्यानुग्राह्यप्रमाणं दर्शयन्नुपसंहरति—**तस्मादिति** ॥ अवनिकार्यसलिलात्मव्यावृत्त्यर्थानि हेतुविशेषणानि। अन्यतरस्य विशेषणासिद्धो हेतुः, उदाहरणं च साध्यरहितम्, अत्राह—**आकाशेति** ॥ परसिद्धेन परबोधनानङ्गीकारे परराद्धान्तानुवादेन तन्निषेधानुमाने[नं] न सिध्येदिति भावः। गङ्गागगनादिषु न[ग]कारभेदप्रतिभासस्य का गतिः? अत्राह—**शब्देति** ॥

---

1. करणे (क)
2. न इति नास्ति
3. शब्दे नित्यत्व (क)

शीतादेरिव स्वरूपमात्रसंसर्गस्याभावात् ॥

[1]यदप्यभाणि — स्वाभाविकत्वावधारणन्यायस्य [2]यत्र तत्र सिद्धस्यात्रापि [3]तुल्यत्वात् — इति, तदसत्; शीतादेरिव सलिलादिस्वरूपमात्रसंसर्गस्य तारतारतरादेः ककारस्वरूपमात्रसंसर्गस्याभावात्, कदचित्तारतया प्रतीतककारस्य कालान्तरे तारतरत्वेन प्रतीतेः, स्वरूपव्यभिचारिणोऽस्वाभाविकत्वात्। ककारस्यानेकत्वान्नैवमिति चेत्, न; धर्मभेदव्यतिरेकेण धर्म[र्मि]भेदादर्शनात् ॥

॥ प्रकर्षनिकर्षवत्त्वेन शब्दोत्पत्तिसाधकानुमानस्य भागासिद्ध्यादिना निरासः ॥

[4]यदप्यनुमानम् — शब्दः, जायते, प्रकर्षनिकर्षाभ्यामुपेतत्वात् — इति, तत्र प्रकर्षो[5]पेतत्वम्, निकर्षोपेतत्वं च प्रत्येकहेतुः, विशिष्टं वा ? आद्ये भागासिद्धिः। प्रकृष्टे निकर्षस्य, निकृष्टे प्रकर्षस्य चाभावात्। द्वितीये स्वरूपासिद्धिः—इति। [6]अश्रवणत्वोपाधेश्च ॥

॥ श्रोत्रस्य नित्यशब्दव्यतिरिक्ताग्राहकत्वमित्यनुमानस्य वा दी न्द्रा दृतस्य ध्वनौ सिद्धसाधनसत्प्रतिपक्षादिना दूषणम् ॥

श्रोत्रम्, शब्दव्यतिरिक्तश्रावणत्वरहितानित्य[7]ग्राहकम्, इन्द्रियत्वात्; चक्षुर्वदित्यपि न; ध्वनिभागे सिद्धसाधनात्। श्रोत्रम्, वर्णव्यतिरिक्तश्रावणत्व-

---

ककारादेः ककार[ादि]स्य[स्व]रूपव्यभिचारो नास्तीति शङ्कते—**ककारस्येति** ॥ धर्मभेदप्रतीतिमात्रेण[ निर्वाहे न ]धर्मिभेदः कल्प्यः; गौरवात्,[ अन्यथा ] आत्मनोऽपि क्षणिकत्वप्रसङ्गादित्याह—**नेति**।

शब्दोत्पत्तौ मानाभावाच्छब्दोऽनित्यः कृतकत्वादित्यत्र हेतोरसिद्धत्वमसाधि, इदानीं व्याप्यत्वासिद्धिमाह—**अश्रावणत्वेति** ॥ साधनाव्यापकः साध्यव्यापक उदयनस्य मत उपाधिः, अतो न समव्याप्त्यपेक्षा। नापि ध्वनिभागे साध्याव्याप्तिः; वर्णातिरिक्तस्य तस्य तेनानङ्गीकारादित्यर्थः ॥

वादीन्द्रानुमानं दूषयति—**श्रोत्रमिति**। शब्दव्यतिरिक्तत्वे सति श्रावणत्वरहितः शब्दो वा, श्रावणत्वरहितो वा। अन्त्यः पक्षे व्याहतः, इति शब्दानित्यत्वसिद्धिः। सिद्धसाधनव्यवृत्त्यर्थमुक्तम्—**अनित्येति** ॥ व्याघातपरिहाराय—

---

1. पृ. 121 प. 9
2. "यत्र" अस्य स्थाने तत्र इति वर्तते
3. तुल्यत्वमिति।
4. पृ. 122, प. 9
5. प्रकर्षोपेतत्वञ्च (क)
6. अश्रावणो
7. रहितनित्यग्राहकं। (क)

रहितनित्यग्राहकम्, इन्द्रियत्वाच्चक्षुर्वदिति प्रकरणसमत्वाच्च। शब्दत्वम्, अनत्य-वृत्ति, शब्दवृत्तित्वात्, सत्तावदित्यपि न; त[अ]त एव ॥

॥ स्वतःप्रामाण्यवादे वेदस्य न वक्त्रभिप्रायापेक्षा ॥

यदप्यभाषि—वेदे वक्तुरभावे तदधीनप्रामाण्यासिद्धिः—इति, तदसाधु; स्वतःप्रामाण्यस्य साधितत्वात् ॥

॥ पुरुषकृतसङ्केतापेक्षा न वेदस्य; संबन्धमात्रेण निर्वाहात् ॥

[1]यत्पुनरपौरुषेयस्यापि पुरुषकृतसङ्केतापेक्षयैव बोधकत्वमुक्तम्, तदसत्; पदात्पदा[2]र्थवेदने सम्बन्धमात्रस्य प्रयोजकत्वेन पुरुषकृतविशेषणस्य परिहरणीयत्वात् ॥

॥ विनाऽपि सङ्केतमनादिसंबन्धवशेनैव पदानां बोधकत्वम् ॥

[3]यच्चावादि—(न चासङ्केतिताः शब्दाः क्वचिदर्थमभिदधाना दृष्टाः—इति, तदपि मनोरथमात्रम्; त्वदुदीरितपदानामेवान्तरेण सङ्केतमावेदकत्वात्) न हि तेषां सङ्केतस्त्वयाऽकारि। तान्यपि कृतसंकेतान्येव केनचित्कल्पादाविति चेत्, न; मानाभावात्। विवादपदानि, सङ्केतितान्येव, पदत्वात्; देवदत्तादिपदवदिति चेत्, सङ्केतः कर्तृसमवायी, पदसमवायी, पदार्थसमवायी वा। आद्ये न पदानां पदार्थावेदकत्वसम्भवः; संसर्गासत्त्वात्। अन्यधर्मस्यान्य[4]संसर्गत्वे त्वतिप्रसङ्गः। नेतरः; नीलादिपदसङ्केतस्य तयोरन्यतरसमवेतस्य जनने नीलगुणस्य, नीलपदस्य च

---

**शब्दव्यतिरिक्तेति** ॥ **अत एवेति** ॥ ध्वनिभागे शब्दत्ववृत्त्यासिद्धसाधनात् ॥ शब्दत्वम्, नित्यवृत्ति, शब्दवृत्तित्वात्; सत्तावदिति प्रकरणसमत्वाच्चेत्यर्थः।

गत्वादीनां पक्षतुल्यत्वान्न व्यभिचारः; व्यतिरेकाभावात्, गौरवाच्चेति हेतुमाह—**पदादिति** ॥ त्वदीरितपदानामर्थभेदे सङ्केतस्त[त्वया]कृतः, अन्येन वा। नाद्य इत्याह—**न हीति** ॥ द्वितीयं शङ्कते—**तानीति** ॥ गोशब्दः पुंसि मूढे सङ्केतितोऽपि स्यात्, इति सिद्धसाधनत्वं व्यासेधति—**सङ्केतितान्येवेति** ॥ **नीलगुणस्येत्यादि**। सङ्केतितस्यार्थसमवेतस्योत्पत्तौ समवायिकारणत्वेन नीलगुणस्य

---

1. पृ 123 प. 8   2. पदार्थवेदने   3. पृ. 123 प. 9
4. कुण्डलान्तर्गतस्य स्थाने "नचासङ्केतमात्रवेदकत्वात्" इत्यस्ति।

द्रव्यत्वप्रसङ्गात्[1]। कर्तृसमवेतं ज्ञानम्, संकेतः तद्विषयः पदपदार्थयोः संसर्ग इति चेत्, न; ईश्वरज्ञानस्य[स्या] कार्यत्वात्, विषयत्वमपि स्वरूपमेव, इति संसर्गाभावतादवस्थ्यात्, विपक्षे बाधकवैधुर्याच्च, विवादाध्यासितः, तथाविधपूर्वसिद्धसम्बन्धव्यवहाराधीनः, अभिधानाभिधेयसम्बन्धव्यवहारत्वात्, आधुनिकतद्व्यवहार[2]वदित्यनादित्वावगमविरोधाच्च। न च देवदत्तादिपदसंबन्धव्यवहारे व्यभिचारः; देवदत्तादिपदस्यानभिधानत्वात्। यथोक्तं **विवरणकृद्भिः**—"जातिमात्राभिधायिनो वा, सर्वदेशेऽप्यभिधानतया संप्रतिपन्ना वा? यस्मिन्नुत्पद्यमाने क्वचित् गृहीतसम्बन्धा एवोपरज्यन्ते शब्दाः, तानि वाऽभिधानानि, नैव सांकेतिकशब्दाः" इति। एतेन—संकेतस्याप्तानाप्तकृतत्वविकल्प[3]दूषणम्—अपहसितम्॥

॥ शब्दार्थसम्बन्धास्तित्वे प्रमाणाभावशङ्कानिरासः, तत्रार्थापत्तिप्रमाणोपन्यासश्च ॥

यत्पुनः शब्दार्थयोः सम्बन्धविशेषास्तित्वे प्रमाणं नास्तीत्युक्तम्, तदपि हेतुस्वरूपमात्रसंसर्गिशक्तिपदार्थप्रतिपादनेन प्रत्युक्तम्। शब्द एव वाचकः, अर्थ एव वाच्य इति नियमोऽनुपपद्यमानोऽभिधानाभिधेययोः स्वाभाविकं सम्बन्धं बोधयतीत्यर्थापत्तिसिद्धश्च सम्बन्धः॥

---

द्रव्यत्वम्, शब्दसमवेतत्वे नीलपदस्येत्यर्थः॥ इदमस्य वाच्यमिदमस्य वाचकमिति कर्तृसमवायिज्ञानस्य सङ्केतत्वान्नोक्तदोष इति शङ्कते—**कर्त्रिति**॥ सङ्केतस्य पौरुषेयत्वासिध्या दूषयति—**नेति**। **विवादाध्यासित इति**॥ कल्पादावभिधानाभिधेयसम्बन्धव्यवहारः पूर्वसिद्धाभिधानाभिधेयसंबन्धव्यवहारस्मृतिपूर्वक इत्यर्थः। देवदत्तादिपदानामनभिधानत्वे वृद्धसंवादमाह—**यथोक्तमिति**॥ गोत्वाश्वत्वादिजातिवाचका गवाश्वादिशब्दाः। मात्रपदेन व्यक्तेर्लक्ष्यत्वं ध्वनयति। आकाशादिशब्दानामजादिवाचकानामभिधानत्वान्न[त्वं न]स्यात्, अत्राह—**सर्वेति**॥ अभिधानस्य लक्षणान्तरमाह—**यस्मिन्निति**॥ क्वचिद्गृहीतसम्बन्धाः शब्दाः यस्मिन् उत्पद्यमान एव वाचकत्वेनानुरज्यन्ते, यथा 'गामानये'त्यादौ गोत्वादौ गृहीतसङ्गतिकाः 'गौर्जातः', 'अश्वो जात'इति जायमानसमवेतजातिबोधनद्वारा संबन्धान्तरनिरपेक्षा व्यक्तिं गमयन्तीत्यर्थः॥ शब्दार्थसंबन्धस्य नित्यत्वोपपादनेन चोद्यान्तरं निरस्तमित्याह—**[एतेनेति]**॥ **शक्तिपदार्थेति**॥ अभिधेयधीजननशक्तेरेव संसर्गत्वादित्यर्थः॥

---

1. संसर्गेत्वतिप्रसङ्गात्। (क)
2. दित्यादिनाभावगमनिरोधाच्च, (क) 3. "विकल्प" इति नास्ति

॥ अर्थधीजननानुकूलशक्तेः पदधर्मत्वमर्थधर्मत्वं वेत्यत्र नियामकाभावः,
सङ्केतस्य शब्दधर्मत्वेऽनवस्था च ॥

येयं शब्दानामभिधात्री शक्तिः, साऽर्थेषु नास्तीति तेनायं नियम इति चेत्, तत्वेदं वदितव्यम्—शब्दानां शक्तिः स्वरूपमेव, सहकारिशक्तिर्वा, तदतिरेकिणी वा । आद्ये स्वरूपमर्थेष्वप्यस्ति, तदूरीकारेण विपरीतसंकेतोऽपि शक्यसम्पादः । द्वितीये शब्दानां संकेतविशिष्टानां ग्रहणमेव सा स्यात् । एवञ्च विपरीतसंकेते तद्विशिष्टार्थग्रहणम् । सहकारिशक्ति[1]रनर्थानामपि भविष्यति । चरमस्तु कृतान्तविरोधि[धी ।] । कारकादीनाञ्च स्वाभाविकशक्तिसम्बन्धोऽस्माभिरभ्युपगत एव; अर्थधीजननसामर्थ्यलक्षणसम्बन्धस्य स्वाभाविकस्यानभ्युपगमे संकेतोऽपि नावाचकेन शब्देन कर्तुं शक्यः । संकेतहेतोरपि शब्दस्य वाचकत्वं संकेतान्तरादित्यनवस्था च ॥

॥ अङ्गुल्यादिना निर्देश्य विनैव वाचकान्तरं सङ्केतकल्पनायामप्यनवस्था
तादवस्थ्यम् ॥

वाचकशब्देनैव संकेतः क्रियत इति न नियमः, किन्त्वन्यथापि—यथाऽङ्गुल्यादिना निर्दिश्य, हस्तेन संस्पृश्य वा[अ]यं गौरिति सङ्केतं करोति, तत्कुतोऽनवस्थेति चेत्, हन्तास्येदमभिधेयतया व्यवहर्तव्यमिति निश्चित्य संकेतं करोति, अनिश्चित्य वा [अन्त्ये] । सङ्केतकर्तुरनाप्तत्वम्; प्रेक्षापूर्वकारित्वविरहात् । आद्ये निश्चयो निर्विकल्पकरूपश्चेत्, तस्य वस्तुमात्रग्राहितया विशेषसंकतेस्यानाप्तक[कृत]त्वप्रसङ्गः । सविकल्पकरूपश्चेत्, वाचकशब्दोल्लिखितस्यैव तत्त्वात्, तदीयवाचकत्वमपि सङ्केतान्तरसामर्थ्यायातमिति सैवानवस्था । किञ्च सङ्केतस्वीकर्ताऽपि 'इदमस्या-

---

**स्वरूपमर्थेष्विति** ॥ यथा शब्दानां स्वरूपमेवाभिधात्री शक्तिः, एवमर्थानामपि स्वरूपभूताऽभिधात्री शक्तिरस्ति; इतरथा तेषां निस्वरूपत्वप्रसङ्गादित्यर्थः ॥ सहकारिशब्दस्वरूपं दर्शयति—**द्वितीय इति** ॥ गृहीतसङ्गतिकशब्दानां ज्ञायमानानां ज्ञापकत्वादित्यर्थः —**तद्विशिष्टेति** ॥ अर्थो वाचक इति सङ्केतविशिष्टार्थानां ग्रहणमित्यर्थः । कारकाणां व्यञ्जकानां च सम्बन्धान्तरप्रसङ्ग इति यदुक्तम्, तदिष्टापादनमित्याह—**कारकेति** ॥ परैरपि नैसर्गिकसामर्थ्यसंसर्गोऽङ्गीकार्य इत्याह—**अर्थधीजननेति** ॥

---

1. शक्तिरर्थानामपि (क)

भिधानमि 'ति सविकल्पकेन निश्चिनोति चेत्, प्रागीरितरीत्या संकेतान्तरगवेषण-प्रयुक्ताऽनवस्था। न निश्चिनोति चेत्, विशेषसंकेतस्यानिश्चितत्वाद् विशेषव्यवहारासिद्धिः। स्वाभाविकसम्बन्धप्रतीत्युपायभूतसंकेतकारणं तवापि दुर्घटमिति चेत्, न; स्तन्यपानादिष्विव प्राक्तनजन्माभ्यासभावितभावनाप्रबोधकारणस्मरणद्वारेणोपपत्तेः, अन्यथाऽङ्गुलिनिर्देशादावपि बालादेः [1]सङ्केतकरणमपि दुर्घटं स्यात्॥

॥ चोरशब्दस्योदने तस्करे च प्रयोगात् सङ्केतस्यैव
नियामकत्वमिति शङ्कायाः परिहारः, तत्रास्मदादिसङ्केतातिरिक्तेश्वर-
सङ्केतकल्पनायां प्रमाणाभावश्च ॥

[2]यदप्यवादि—चोरशब्दः तस्करमार्येष्वभिधत्ते—इति, तदपि भाषाऽपरिज्ञानविजृम्भितम्। अजन्तश्चोरशब्दः सर्वत्र तस्करमेवाभिधत्ते। द्रविडाः पुनरचं विमुच्य प्राकृतशब्दमोदनेषु प्रयुञ्जते, न पुनश्चोरशब्दम्। सम्बन्धस्य स्वाभाविकत्वेऽपि नानुपपन्नमनेकार्थप्रत्यायकत्वम्; स्वाभाविकशक्तेरेवानेकगोचरत्वात्। तस्याश्चानन्यथासिद्धकार्यावसेयत्वात् नाव्यवस्थापि। सकेतस्येश्वर[3]**कार्यत्वे**ऽप्यनियमानुपपत्तिस्तुल्या। न हि चोरशब्दस्योदने तेन संकेतः कृतः। [4]यदप्यभाणि—सङ्केतस्य क्वचिदर्थज्ञानसामर्थ्ये स एव सर्वत्रास्तु—इति, तदसत्; यतोऽस्मदादिकृतसङ्केतस्य

---

**प्रागीरितरीत्येति** ॥ वाचकशब्दोल्लेखो विकल्पः, तत्सहितः सविकल्पक इति तार्किकसमये तस्यापि वाचकत्वं सङ्केतान्तरादित्यनवस्थेत्यर्थः। वृद्धव्यवहारेऽर्था[र्थ]धीसामर्थ्यरूपसम्बन्धग्रहणस्य निर्विकल्पकत्वसविकल्पकत्वदूषणं तवापि तुल्यमिति शङ्कते—**स्वाभाविकेति** ॥ केषाञ्चिच्छब्दानां जन्मान्तरीयसंस्कारपाटवाद् वाचकत्वेन स्मरणात् तत्सञ्जल्पितप्रत्ययेन सङ्गतिनिश्चयः स्यदित्याह—**नेति** ॥ इत्थं भावः संबन्धस्य पौरुषेयत्ववादिनाऽभ्युपेय इत्याह—**अन्यथेति** ॥ न चैवम्—कृतक एव सङ्केतः स्यादिति—युक्तम्; अद्यसङ्केतकर्तुः प्राक्तनवाचकस्मरणानुपपत्तौ तन्निश्चयस्य सविकल्पकत्वायोगात्। **अचं विमुच्यते[च्येति]** ॥ रेफस्थाकारमुज्झित्वेत्यर्थः। एकस्यानेकार्थत्वमूरीकृत्याह—**संबन्धस्येति** ॥ तर्ह्ययमेव वाचकः, अयमेव वाच्य इति नियमो न स्यात्, अत्राह—**तस्याश्चेति** ॥ उक्तस्यैव दृढिम्नो[म्ना]परस्यापि पर्यनुयोगसाम्यमाह—**सङ्केतस्येति** ॥

---

1. समवायाभावात् (क) पुस्तकेऽधिकम् 2. पृ. 125 प. 9
3. ईश्वरवाक्यत्वे ख (क) 4. पृ. 125 प. 14

देवदत्तादिपदस्यार्थावेदकत्वदर्शनात् सर्वत्रास्मदादिरेव संकेतयिताऽस्तु, कृतमस्मदादि विलक्षण: [णेन] इति मूले निहतः कुठारः ॥

॥ लौकिकमन्त्रवद् वैदिकमन्त्राणामपि पौरुषेयत्वानुमानस्य बहुधा विकल्प्य सिद्धसाधनादिना निरासः ॥

[1]यदपि—वैदिकमन्त्राणां मन्त्रत्वेन पौरुषेयत्वानुमानम् , तत्र पुरुषनिष्पाद्यत्वमात्रं पौरुषेयत्वञ्चेत् , सिद्धसाधनम् । प्रमाणेन वाच्यं निश्चित्य वाचकानां विरचनं चेत् , निरर्थकहुम्फडादिमन्त्रैर्व्यभिचारः । न हि तेषां वृद्धव्यवहारे कश्चिदर्थः प्रसिद्धः । [2](वैदिकोऽन्यादिशब्दः, पौरुषेयः, अर्थवत्त्वात् , लौकिकाग्न्यादिशब्दवत्—इत्यपि न; ईश्वरज्ञानादिना [व्यभिचारात्] शब्दत्वे सतीति विशेषणे विशेष्य) वैयर्थ्यात् , शब्दत्वादिति प्रयोगे पुरुषकार्यत्वसाधने सिद्धसाधनात् , स्वार्थप्रवृत्तप्रमाणपुरस्सरत्वसाधने विप्रलम्भकशब्दे व्यभिचारात् , ज्ञानमात्रपुरस्सरत्वसाधने पूर्वपूर्वतथाविधानुसरणकार्यत्वादुत्तरोत्तरवैदिकशब्दानां सिद्धसाधनात् ॥

॥ वाक्यानित्यत्वस्योभयसाधारण्यम् ॥

[3]यच्च वाक्यस्य नित्यत्वम् , वर्णानां वेति विकल्प्य वाक्यनित्यत्वनिराकरणम् , तदिष्टमेव; क्रमविशेषावच्छिन्नवर्णानां वाक्यपदवेदनीयानां प्रत्युच्चारणं निष्पाद्यत्वात् ॥

॥ वर्णानां नित्यत्वेऽपि सर्वशास्त्राप्रामाण्यं वर्णानित्यत्वेऽपि तुल्यम्, प्रामाण्याप्रामाण्यव्यवस्थायाः सर्वत्राविशेषश्च ॥

[4]यत्तूक्तम्—वर्णानां नित्यत्वेऽपि[5] न प्रामाण्यसिद्धिः शास्त्राणाम् ; सर्वशास्त्राणां प्रामाण्यप्रसङ्गात्—इति, तन्मन्दम् ; वर्णानामनित्यत्वेऽपि तुल्यत्वात् ।

---

मूले निहत इति ॥ ईश्वरसाधनाय यतमानस्य तदसिद्धिरेवेत्यर्थः ॥

शब्दत्वे सत्यर्थवादत्वा[वत्त्वा]दि’ति हेतुवि[तुर्वि]शिष्टः, अत्राह—शब्दत्वे सतीति ॥ वर्णानां कार्यत्वे व्यक्तिभेदात् सार्थकत्वानर्थकत्वव्यवस्था स्यादिति शङ्कते—

---

1. पृ. 126 प. 5
2. कुण्डलान्तर्गतं नास्ति
3. पृ. 126 प. 13
4. पृ. 126 प. 17
5. “अपि” नास्ति

केचिन्निरर्थका एव निष्पद्यन्त इति चेत्, न; तुल्यजातीयत्वात्। दोषभावाभावाभ्यां व्यवस्थेति चेत्, तर्हि नित्यत्वेऽपि पुरुषसम्बन्धकृतदोषविशिष्टानां मिथ्याधीजनकत्वम्, इति न सर्वशास्त्रप्रामाण्यप्रसङ्गः। दोषाभावगुणयोः प्रामाण्यप्रयोजकत्वस्य पुरस्तान्निरस्तत्वाद् वाक्यप्रामाण्ये वक्तृगुणा[1]पेक्षेत्यपि न युक्ताभिधानम्। किञ्च वाक्यस्य नित्यत्वं साध्यते, वर्णानां वेति नायुष्मतो विकल्पोपपत्तिः; वर्णातिरिक्तवाक्यस्यासत्त्वात्। वर्णसमूहात्मकं पदमेव वर्णेभ्यो न भिद्यते, कुतस्तरां वाक्यम्?

॥ वेदवाक्यपौरुषेयत्वानुमानद्वयस्य वा सु दे व सूर्यभिमतस्याश्रयासिद्ध्यादिना निरासः ॥

एवं च इदानीमनुभूयमानवेदवाक्यानि, साक्षात्परम्परया वा तादृग्विधरचनानुसन्धाननिरपेक्ष[2]पुरुषपूर्वकाणि, वाक्यत्वात्; कालिदासादिवाक्यवत्। विवादपदवेदवाक्यानि, पारम्पर्येण स्वतन्त्रपुरुषपूर्वकाणि, साक्षादघटमानत्वे सति वाक्यत्वात्; इदानीन्तनवाक्यवदिति—अपास्तम्; धर्म्यसिद्धेराश्रयासिद्धेः, हेतोः स्वरूपासिद्धेश्च, दृष्टान्तस्य चाश्रयासिद्धेः॥

॥ वैदिकशब्देन तत्तदधीयमानवेदवाक्यभेदविवक्षाऽसंभवः ॥

---

**केचिदिति ॥** अर्थवत्त्वम्=अर्थि[र्थधी]जनकत्वम्। कार्यकारणभावश्चान्वयव्यतिरेकाभ्यां सामान्योपाधौ ज्ञेयः, न व्यक्तौ; काकतालीयव्यापनात्, इत्याह—**नेति ॥** प्राप्त[प्राप्त]विवेकप्रामाण्यं परतः प्राप्तम्, अत्राह—**दोषाभावगुणयोरिति ॥**

प्रसङ्गाद् वा सु दे व सूरिप्रयुक्तानुमानद्वयं निरस्यति—**एवं चेति ॥** अश्रयासिद्धिं परिहर्तुमि'**दानीमनुभूयमानमि[ने]**'ति। अस्मदादिना निव[र्व]र्त्यमानवाक्यानां तादृशपूर्ववाक्यरचनानुसन्धानपुरस्सरत्वानुभवाभावाद् बाधः स्यात्, अत उक्तम्—**साक्षात्परंपरयेति ॥** साक्षादित्यविवक्षितमित्यर्थः। 'नदीतीरे फलानीत्यादिवाक्यैः साक्षात्स्वतन्त्रपुरुषपूर्वकैर्व्यभिचारो मा भूत्' इत्युक्तम्—**साक्षादघटमानत्वे सतीति ॥** इदीनीन्तनैरधीयमानमन्वादिवाक्यवदित्यर्थः। एवं चेति परामृष्टं स्पष्टयति—**धर्मीति ॥** अतिरिक्तसमूहानङ्गीकारात्तार्किकैरिति ॥

---

1. गुणपेक्ष   2. निरपेक्षपूर्वकाणि (क)

[1]यच्चावाचि—वैदिकशब्देन परोक्षाध्येतृविशेषानुमानदर्शनाद्वैदिकशब्दभेदः—इति, तत्र वर्णानामन्यत्वसाधने प्रत्यभिज्ञाविरोधः । विशिष्टक्रम[वर्ण]विशिष्टतया वाक्यत्वात्स्व[त्वाप]न्नानां विशिष्टव्यक्तिभेदसाधने सिद्धसाध्यता, क्रमस्य विजायतीत्वसाधनेऽपि तत्प्रत्यभिज्ञाऽविरोधः । वक्तृविशेषानुमानञ्च व्यञ्जकोपाधिविशेषादुत्पत्स्यते ॥

॥ धूमाद्यर्थेषु जातीनां सामानाधिकरण्येन व्याप्तावपि वर्णात्मकशब्दानां तथा व्याप्तिग्रहासंभवाद्वर्णानित्यत्वपक्षे धूमाद्यनित्यत्वेऽपि व्याप्तिग्रहन्यायानवतारः ॥

[2]यत्त्विदं गदितम्—"दर्शनस्य परार्थत्वादि"त्यर्थापत्तेरन्यथोपपत्तिरनित्यत्वेऽपि ([3]धूमादिवदर्थप्रतिपादकत्वोपपत्तेः—इति, तदपि न; धूमस्यानित्यत्वेऽपि) धूमत्वजातेर्व्याप्तिग्रहोपायस्य सद्भावात् दृष्टान्तवैषम्यात् । न च धूमत्वाग्नित्वयोर्गम्यगमकत्वे यत्र धूमस्तत्राग्निरिति सामानाधिकरण्यानुपपत्ति; चन्द्रोदयसमुद्रवृद्ध्योरिव तद्व्यञ्जकयोरैकाधिकरण्यस्य तत्त्वात् । न खलु धूमाग्निव्यक्तीनामेव गम्यगमकत्वम्; आनन्त्यव्यभिचाराभ्यां प्रतिबन्धबोधवैधुर्यात् । गत्वादिसामान्यमात्रस्य सङ्केतगोचरत्वे पदार्थधीरशाब्दी स्यात्; सामान्यवतः श्रावणत्वं शब्दलक्षणमिति भवतैवाभिहितत्वात् । वर्णव्यक्तिसामान्यजत्वेना[न]शाब्दत्वे चाक्षुषधूमानुमितधूमध्वजस्यापि चाक्षुषत्वापातः । व्यक्तीनाञ्च क्षणिकत्वे न बोधकत्वम्; गृहीतसङ्गतिकानामतिवृत्तत्वात् । व्यक्ति-

---

वर्णव्यक्तिभेदः साध्यते, वाक्यभेदो वा, क्रमवैजात्यं वेति विकल्प्य क्रमेण पराकरोति—**तत्रेति** ॥

धूमत्वस्य वह्नित्वेन व्याप्तिवेदने यत्र धूमस्तत्र धूमध्वज इति नियतैकाधिकरण्यलक्षणप्रतिबन्धविरोधः, अत्राह—**न च धूमत्वेति** ॥ अयं कालः, समुद्रवृद्धिमा[न्,] चन्द्रोदयकालत्वात्, संमतवदित्यत्र वृद्ध्युदयक्रिययोर्भिन्नाधिकरणत्वेऽप्याश्रययोरेककालसंबन्धद्वारा 'यदा चन्द्रोदयः तदा समुद्रवृद्धिरित्यैकाधिकरण्यवत्, इहाप्युपपत्तेरित्यर्थः । व्यञ्जकैकाधिकरण्येन सामान्ययोरैकाधिकरण्योपचाराद्वरं व्यक्त्योरेव गम्यगमकत्वकल्पनम्, अत्राह—**न खल्विति** ॥ अत्रापि हि गत्वादिसामान्यानामेव सङ्केतगोचरता स्यात्, अत्राह—**गत्वादीति** ॥ सामान्यानामशाब्दत्वेऽपि शब्दव्यक्तत्वात्तत्वा[द्वाराऽ]र्थधियः शाब्दत्वम्, अत्राह—**वर्णेति** ॥ किञ्च वर्णव्यक्तीनां

---

1. पृ. 127. प. 6. 2. पृ. 128. प. 3.

3. कुण्डलान्तर्गतं क पुस्तके नास्ति

विशिष्टसामान्यस्य बोधकत्वं गौरवादयुक्तम् । अतो नार्थापत्तेरन्यथोपपत्तिः । अर्थस्याप्येवं नित्यता स्यादिति चेत्, [1]महन्नोऽदृष्टमापन्नम्; सामान्यस्यैव शब्दार्थत्वात् ।

॥ शब्दः, अनित्यः, सामान्यवत्त्वे सत्यस्मदादिबहिरिन्द्रियग्राह्यत्वादित्यनुमानस्य सामान्यादिभिरनेकान्तः, सामान्येऽपि सामान्याङ्गीकारेऽप्यनवस्थापरिहारसंभवात्, अन्यथा द्रव्यस्यापि द्रव्यान्तराश्रयत्वानुपपत्तेः ॥

योऽपि—सामान्यवत्त्वे सत्यस्मदादिबहिरिन्द्रियग्रहणार्हत्वादिति हेतुः, [स] सामान्यादिभिरेवानैकान्तः; सत् सामान्यम्, सन् समवाय इति सत्तासामान्यवत्त्वात् । सामान्यादौ सत्तानङ्गीकारे द्रव्यादावपि सा न स्यात्; सत्प्रत्ययानुगमनस्याविशेषात्, सामान्यान्तरानङ्गीकारेणानवस्थापरिहारात्, ([2]द्रव्य[स्य]द्रव्यान्तराश्रयत्वेऽप्यनवस्थाऽन्यथा स्यात्) । न च समवाये सम्बन्धाभावो जातिबाधकः; संयोगे समवायवत् समवाये संयोगसंभवात्, संयोगस्य द्रव्यमात्रवृत्तित्वे प्रमाणाभावात् ॥

॥ विषयत्वेन शब्दानित्यत्वानुमानतन्निरासौ, तत्र शब्दे विषयलक्षणायोगश्च ॥

[3]यच्च विषयत्वेनानित्यत्वसाधनम्, तदसिद्धम् । प्रतीयमानस्य रागद्वेषमोहहेतुत्वम्, तत्कस्मिंश्चिदपि शब्दे नास्तीति । एकः शब्द एकस्यैव श्रोत्रसमवायात्

---

गमकत्वम्, सामान्यविशिष्टानां वेति विकल्प्य क्रमान्निराकरोति—**व्यक्तीनां चेति** ॥ वाचकानामानन्त्यव्यभिचाराभ्यां सङ्गतिविर[ह] प्रसङ्गान्नित्यत्वमापाद्यते यथा, तथा वाच्यस्यापि नित्यत्वं स्यात्; संबन्धाद्विशेषणा[न्धाविशेषा]दिति शङ्कते—**अर्थस्येति** ॥

सामान्यादीनां निस्सामान्यत्वाद् न तेषु सत्तासामान्यम्, अत्राह—**सामान्यादाविति** ॥ सामान्ये सामान्यस्वीकारेऽनवस्था जातिबाधकमस्ति, तत्राह—**सामान्यान्तरेति** ॥ एकस्मिन् सामान्ये सामान्यमिष्टं चेत्, तत्रापि सामान्यान्तरमेष्टव्यम्; तुल्यन्यायत्वात्, अत्राह—**द्रव्यस्येति** ॥

असिद्धिमुपपादयितुं तदीयसिद्ध[न्त]माह—**एकः शब्द इतीति** ॥ तीव्रादीनां श्रावणत्वानुपपत्तिरेव वर्णधर्मत्वं गमयति । तथाच विरुद्धधर्माध्यासाद् भेदसिद्धिरि-

---

1. महन्नोऽनिष्टमापन्नम् । (क)
2. कुण्डलान्तर्गतस्य स्थाने "द्रव्यस्य द्रव्यमात्रवृत्तित्वे प्रमाणाश्रयत्वेऽप्यनवस्थाऽन्यथा स्यात् ।" इत्यस्ति ।
3. पृ. 128 प. 4

प्रतीयते । न चैकत्रैतत्त्रयहेतुत्वम्; विरोधात् । [1]तीव्रादिधर्मयुक्तत्वादिति हेतुः उत्कर्षनिकर्षाभ्यामुपेतत्वादितिवद्विक[2]ल्प्यापास्यः । [3]व्यञ्जकधर्मत्वे श्रोत्रग्राहक[ह्य]त्वानुपपत्तिरित्युक्तमिति चेत्, न; तदयुक्तम्; शब्दधर्मत्वे श्रोत्रग्राहकत्वानुपपत्तिरिति विपरिवृत्तिप्रसङ्गात् । शब्दतद्व्यञ्जकयो[4]र्नाभा[भ]सत्वाविशेषात् ॥

॥ अभिव्यक्तशब्दपक्षकशब्दानित्यत्वानुमानस्य व्यो म शि वाभिमतस्य व्यर्थविशेषणत्वेन निरासः ॥

यदपि **व्यो म शि वे नाभिहितम्**—विवादगोचरापन्नः शब्दोऽभिव्यक्तः, प्रत्यभिज्ञानकालं यावन्नावतिष्ठते, शब्दप्रत्ययविषयत्वात्; पूर्वानुभूतशब्दवत्—इति, तदसत्; शब्दोऽभिव्यक्त इति विशेषणवैयर्थ्यात्, प्रत्ययविषयत्वादिति **हेतुविशेषण**वैयर्थ्यात्, दृष्टान्तस्य साध्यवैकल्याच्च, पूर्वानुभूतस्य शब्दस्य यावत्प्रत्यभिज्ञानमवस्थानाभ्युपगमात् ॥

॥ शब्दपक्षकाकाशपक्षकशब्दानित्यत्वसाधकानुमाननिरासः, अपौरुषेयत्ववादोपसंहारश्च ॥

शब्दः, अनित्यः, परमात्मगुणान्यत्वे सति व्यापकविशेषगुणत्वात्; सुखादिवदिति चेत्, न; हेतोर्व्यर्थविशेषणत्वात्, दृष्टान्तस्य साधनवैकल्याच्च ॥

आकाशम्, अनित्यविशेषगुणम्, परमाणुव्यतिरेके सति भूतत्वात्, क्षित्यादिवदिति चेत्, न; हेतुविशेषणवैयर्थ्यादेव । आकाशम्, अनित्यविशेषगुणम्,

---

त्युक्तमनुवदति—**व्यञ्जकेति** ॥ **विपरिवर्ती[वृत्ती]ति** ॥ विपरीतवर्तनमित्यर्थः । तस्मात्तीव्रत्वादेर्व्यञ्जकत्वादसिद्धो हेतुरिति भावः ॥

**विवादगोचरापन्न इति** दृष्टान्तभागे सिद्धसाधनत्वं व्यावर्तयति । अनभिव्यक्तस्याप्रत्यभिज्ञानात् तत्कालविशिष्टावस्थाननिषेधे सिद्धसाधनम्, अत उक्तम्—**अभिव्यक्त इति** ॥ बाधपरिहारार्थम्—**यावत्प्रत्यभिज्ञानकालमिति** ॥ अभिव्यक्तानभिव्यक्तशब्दभेदासिद्धेर्व्यर्थविशेषणः पक्षाभास इति दूषयति—**तदसदिति** ॥

सलिलपरमाणुरूपादौ व्यभिचारं वारयितुं व्यापकविशेषगुणत्वादित्युक्तम् । **व्यर्थविशेषणत्वादिति** ॥ परमाणुगुणादीनां नित्यत्वासिद्धेरित्यर्थः । पारिमाण्डल्याधारः परमाणुः, परत्वापरत्वानुमेयौ दिक्कालौ । गुणादौ व्यभिचारं व्यावर्तयति—

---

1. पृ. 128 प. 8　　2. वद्विकल्प्यास्यः । (क)
3. पृ. 128 प. 8　　4. नाभासत्वादविशेषात् । (क)

परिमाण्डल्याधारपरत्वापरत्वानुमेयपरमात्मान्यत्वे सति समवायिकारणत्वात्, क्षित्यादिवदित्यपि न; पारिमाण्डल्याधारपरमात्मव्यतिरिक्तत्वविशेषणवैयर्थ्यात्, समवायानभ्युपगमेन विशेष्यासिद्धेश्च । तदेवम् --

वर्णनित्यत्वसंसिद्ध्या नित्य[1]सम्बन्धसिद्धितः ।
दुस्[सु]सम्पादमिदं वेदपारतन्त्र्यमिति स्थितम् ॥ २३ ॥

॥ इति न्यायचन्द्रिकायां वेदापौरुषेयत्ववादस्तृतीयः ॥

---

**समवायिकारणत्वादिति** ॥ **परमात्मव्यतिरिक्तत्वविशेषणवैयर्थ्यादिति** ॥ ईश्वरस्यापि गुणभूतनित्यज्ञानाद्यनङ्गीकारादित्यर्थः । वाचकानां शब्दानां वाच्यानां सामान्यानां च नित्यत्वेन तद्धीसामर्थ्यलक्षणसंसर्गस्य नित्यत्वा[त्]सिद्धमपौरुषेयत्वमित्युपसंहरति—**तदेवमिति** ॥ **२३** ॥

॥ इति न्यायचन्द्रिकाव्याख्यायां वेदापौरुषेयत्ववादस्तृतीयः ॥

---

1. नित्यसिद्धितः । (क)

## ॥ अथान्विताभिधानवादस्तुरीयः ॥

ननु पदानां पदार्थमात्रे, किमन्वये, अन्विते वा [शक्तिः] ? तत्राभिहितान्वयवादिनः प्रत्यवतिष्ठन्ते—

अन्विते गौरवाच्छक्तेरन्वयस्यान्यतो गतेः ।
पदार्थैरेव[1] तत्सिद्धेर्नान्विते शक्तिमत् पदम् ॥ २४ ॥

॥ पदानां नान्वयेऽपि शक्तिरित्यभिहितान्वयवादोपक्षेपः ॥

सर्वं हि कार्यं कारणं परिकल्पयत् सति सम्भवे लाघवपक्षपातेनैव कल्पयतीत्यविवादपदम् । तथाच कार्यभूता वाक्यार्थप्रतिपत्तिरपि त[प]दहेतुत्वे गौरवाद् न पदसामर्थ्यमात्मनि कल्पयति ॥

॥ पर्यायपदेष्वनेकशक्तिकल्पनागौरवं समानम्, तत्तदन्वयेऽपि
शक्तिकल्पनागौरवं त्वन्विताभिधानेऽधिकम् ॥

---

## ॥ अथान्विताभिधानवादस्तुरीयः ॥

"**नित्यसम्बन्धसिद्धितः**" इत्युक्तमुपश्रुत्य वादिविप्रतिपत्तेः संशयात् पृच्छति—**नन्विति** ॥ कौमारिलानां मतं पूर्वपक्षत्वेनोपक्षिपति—**तत्रेति** ॥ पदमन्विते न शक्तिमत्=शब्दसामर्थ्यं नान्वितगोचरम् । कुतः ? अन्विते शक्तेः, गौरवात्, एकस्यानेकशक्तिप्रतिपाद्यत्वेप्र[ऽ]तिकल्पनात् । तथा[त्वया]न्वये, विशेषणे, विशेष्ये चार्थे शक्तिकल्पनात् । किञ्चान्वितविशेषणस्यान्वयस्यान्यतः=मानान्तरात्, गतेः=अवगमात, तद्विशिष्टे शक्तिग्रहायोगात्, अनन्यलभ्यत्वाभावाचान्वितस्य पदावगतपदार्थैरेव सिद्ध[द्धि]रित्यर्थः ॥ २४ ॥

पदार्थमात्रे शक्तिरिति स्वीकारे लाघवं स्यादिति स्वमतप्रतिपादनाय संप्रतिपन्नन्यायमाह—**सर्वं हीति** ॥ विध्यर्थोऽभिप्राय इति मते सत्यपि लाघवे तत्परित्यागेनांशत्रयविशिष्टा भावनेत्यङ्गीक्रियते, अत्राह—**सतीति** ॥ दर्शितन्यायस्य प्रकृतोपयोगमाह—**तथाचेति** ॥

'नान्विते शक्तिमत् पदमि'ति प्रतिज्ञाभागं विभज्य, आद्यहेतुं विभजते—

---

1. पदार्थैरेव संसिद्धेः (क)

तथाहि—घटस्यैकस्यानयनाद्यन्वितस्य घटकुटकरीरकलशादिशब्दैः प्रतिपादने प्रतिशब्दं शक्तिकल्पनात् गौरवम्। पदाभिहितपदार्थस्य संसर्गगमकत्वे प्रतिवाक्यं पदभेदेऽपि पदार्थाभेदेन शक्तिरेकैवेति लाघवम्॥

॥ अनेकार्थैकपदेऽपि शक्तिकल्पनायामधिकं गौरवं
पूर्वन्यायेनान्विताभिधाने ॥

न च पदार्थवादिनोऽपि विभीतकादित्रयस्य एकाक्षपदप्रतिपाद्यत्वे प्रतिपादनार्थं शक्तिकल्पनागौरवमिति वाचोयुक्तिर्युक्तिमती; अन्वितस्य शक्तिगोचरत्वेऽपि तद्भेदे शक्तिभेदस्यावश्याश्रयणीयत्वात्। न च—पदवादिनोऽन्यान्वितस्वार्थप्रतिपादने पदानां शक्तिरिति स्वीकारादक्ष[1]शब्दस्यापि[स्य वि] देवनादित्वमपि स्वार्थ एवेति शक्त्यन्तरमन्तरेणापीतरान्वितस्वार्थप्रतिपादनमुचितमिति—साम्प्रतम्; परस्परविलक्षणविदेवनादिविशेषान्वितभेदधियः शक्तिभेदमन्तरेणासिद्धेः, कार्यावान्तरभेदस्य

---

**तथाहीति** ॥ त्वत्पक्षेऽपि पर्यायशब्दानां पदार्थमात्रे प्रतिशब्दं शक्तिः कल्प्येति तुल्यमेव गौरवम्, अत्राह—**पदेति** ॥ पदेषूच्चार्यमाणेषु पदार्थाः क्रमेण प्रथम प्रतीयन्ते, पश्चादन्वितप्रतिपत्तिरिति पदवादिनाम्, पदार्थवादिनामप्यविवादम्। अतः पदानां पदार्थप्रत्यायनशक्ति[क्तिः]पक्षद्वयेऽप्यविशिष्टं[ष्टा,]संसृष्टप्रत्यायनशक्तिं[क्तिः] पदवादिनां प्रतिपदं कल्प्या, इति गौरवम्, पदार्थवादिनस्तु पदार्थस्यैकत्वादेकैवान्वितबोधनशक्तिः, इति लाघवमित्याशयः ॥

विभीतकेन्द्रियविदेवनानामक्षपदप्रतिपादितानामन्वितप्रतिपादकत्वे प्रतिपदार्थं तच्छक्तिकल्पनागौरवम्, अत्राह—**न चेति** ॥ **तद्भेद इति** ॥ एकस्यानेकार्थान्वितभेदादित्यर्थः। हेतुमाह—**परस्परेति** ॥ अक्षपदाद्विदेवनादयोऽक्षपदार्थत्वेन प्रतीयन्ते, विदेवनादित्वेन वा। आद्ये विशेप्य[ष]व्यवहारो न स्यात्। अन्त्यो-[न्त्ये] विलक्षणविशिष्टधीर्विशिष्टशक्तिभेदमन्तरेण न स्यादित्यर्थः ॥ इतरसंसृष्टस्वार्थसामर्थ्यात् तद्विशेषबुध्युपपत्तौ किमवान्तरशक्तिभेदकल्पनया? अत्राह—**कार्येति** ॥ व्यतिरेकमीरयति—**अपरथेति** ॥ पावकस्यापि स्वकार्यमात्रशक्त्या तद्विशेषसिद्धेर्न शक्तिभेदः स्यादित्यर्थः ॥

---

1. स्वीकाररादर्थशब्द

शक्त्यवान्तरभेदाधीनत्वात्, अपरथा पावकस्यापि दाहपाकादिकार्यानुरूपशक्तिभेदो न स्यात् । तस्मादावयोरेकपदस्यानेकार्थप्रतिपादने शक्तिगौरवं तुल्यमेव । यत्र पुनरेकस्यार्थस्य बहूनि पदानि वाचकानि, तत्र पदवादिनो गौरवमतिरिक्तम् ॥

॥ अन्वयस्यान्वितशक्तेन पदेन नावगतिः, किन्त्वन्यैनैव ॥

[1]किञ्च यदि पदानामन्वितगोचरा शक्तिरेकैवाभ्युपगम्यते, ततोऽन्वितविशेषणस्यान्वयस्य च प्रत्यायकाभावात् तदनवगतौ तदवगतिनिमित्ताऽन्वितावगतिरेव न स्यात् ॥

॥ विशिष्टस्योपलक्षितस्य वाऽन्वितपदार्थत्वायोगः । अन्वयेऽपि पदशक्तौ गौरवं च ॥

अपि च किमिदमन्वितम्—अन्वयविशिष्टम्, अहोस्वित् तदुपलक्षितम् । न तावदाद्यः; तथा सति विशेषणानवगतौ विशिष्टबुद्ध्य[2]नुपपत्तेः, अन्वयस्य च तदवगतिहेतोरभावाद् विशेषणे विशेष्ये[3] च पदस्यैव शक्तिः, इति शक्तिद्वयप्रसङ्गात् । न द्वितीयः; पदार्थस्वरूपस्यान्तर्भावितान्वयत्वेनैव प्रतीतिनियमानुपपत्तेः, व्यक्तिप्रतीतिमन्तरेण जातेरिव विनाऽन्वयप्रतीतिं पदार्थस्वरूपप्रतीतेरनुपपत्त्यभावात् । अतोऽन्यतोऽन्वयस्यप्रत्ये[4]तुमशक्यत्वात् पदादेव तस्यापि प्रत्येतव्यत्वे, अन्वये, अन्विते च शक्तिद्वयगौरवं स्थितमेव ॥

॥ पदानां पदार्थस्मृत्युपधानेनैव पर्यवसानादभिहितपदार्थानामेवान्वयबोधकत्वमित्यभिहितान्वयवादिनां स्वपक्षोपपादनम् ॥

अपि च पदवादिनोऽपि न पदान्येवाहत्य पदार्थस्मृतीरनपेक्ष्य वाक्यार्थ-

---

'अन्वयस्यान्यतोऽगतेरि'त्येतद्विवृणोति **किञ्चेति** ॥ 'अन्यतो गतेरित्येतदन्विते गौरवप्रतिपादकत्वेनापि व्याकुरुते—**अपिचेति** ॥ पदात्तदर्थः प्रतीयते, तद पर्यवसानेनान्वयप्रतीतिः, उप[उत]पदादे[व]वेति विकल्पे नाद्य इत्याह—**पदार्थेति** ॥ **अनुपपत्त्यभावादिति** ॥ पदार्थस्वरूपस्य ससर्गानाश्रितत्वात्तदव्यञ्जकत्वाच्चेत्यर्थः । तस्माद् द्वितीयः परिशिष्यत इत्याह—**अत इति** ॥

"पदार्थैरेव तत्सिद्धेरि"त्येतद्विवृणोति—**अपिचेति** ॥ आहत्यैतद्विशदयति—

---

1. अन्यतोगतेरित्यत्राऽकारप्रश्लेषेण विवरणान्तरमभिप्रेत्येयं योजना ।
2. विशिष्टबुद्ध्यनुपपत्ते; 3. विशेष्टे च 4. प्रत्येकमश (क)

बोधमादधति; श्रुतव्युत्पन्नपदस्यापि प्रमुषितसंस्कारस्य पदार्थस्मृतिविधुरस्य वाक्यार्थबोधवैधुर्यात्, पदार्थानामन्योन्यान्वययोग्यतावगमस्य वाक्यार्थबुद्धिसामग्र्यामन्तर्भावाच्च। एवञ्च पदस्मारितपदार्थानामप्य[1]नन्यथासिद्धान्वयव्यतिरेकितया वाक्यार्थबोधहेतुत्वे, तत एव तदुपपत्तेरर्थापत्तिपरिक्षयाद् न पदानामन्विते सामर्थ्यकल्पनावकाशः ॥

॥ प्रमाणान्तरप्रतिपन्नस्याप्यर्थस्य न शब्दबोधजनकत्वाविरोधः, शब्दसन्निधेरपि कारणत्वात् ॥

न च प्रमाणान्तरप्रतिपन्नपदार्थेभ्यो वाक्यार्थप्रत्ययादर्शनात् पदार्थानां वाक्यार्थबोधजननसामर्थ्यम्, पदानां तत्सामर्थ्याधानसामर्थ्यमिति शक्तिद्वयं कल्पनीयमिति—शङ्कनीयम्; पदार्थेषु सामर्थ्याधीनसामर्थ्यस्य पदाश्रयत्वेना[2]श्रयणात्। न च प्रमाणान्तरप्रतिपन्नेभ्योऽपि वाक्यर्थबोधोदयप्रसङ्ग इति—वाच्यम्; यतो न सन्निधिमात्रं वाक्यार्थज्ञानसामग्री, किन्तु शाब्दः सन्निधिः। स च न प्रमाणान्तरप्रतिपन्नेष्वस्ति, इति तत्र वाक्यार्थज्ञानाभावः सहकारी[3]कृतसन्निधिवैधुर्यप्रयुक्त एव। तस्मात्पदवादिन एव गौरवम् ॥

॥ अभिहितान्वयवादे गौरवसाम्येऽपि नान्विताभिधानवादः, सन्निहितार्थेष्वेव शक्तिकल्पनाया उचितत्वात्, पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनं व्यापारमात्रमित्यभिहितान्वयवादोपसंहारः ॥

---

**पदार्थस्मृति[ती]रिति**। एते पदार्था मिथः संसर्गयोग्याः, साकाङ्क्षाः, सन्निहिताश्चेति परामर्शार्थमपि पदार्थप्रतीतेरुपेयत्वादित्याह—**पदार्थानामिति** ॥ पदार्थस्मृतिद्वारैव पदानां तत्संसर्गगमकत्वं स्यात्, अत्राह—**एवञ्चेति** ॥ पदार्थानामपीत्यपिशब्दः संभावनायाम्। तत्र हेतुः—**अनन्यथासिद्धेति** ॥ अन्यत्रानुपक्षीणानामित्यर्थः। **अर्थापत्तिपरिक्षयादिति** ॥ वाक्यार्थधीरूपकार्यस्यान्यथोपपत्तेरित्यर्थः ॥

मानान्तरावगतपदार्थानां संसर्गागमकत्वात्पदावगतानामेव संसर्गगमकत्वे तेषु तत्सामर्थ्यं पदैराधीयत इति गौरवम्, अत्राह—**न चेति** ॥ पदैः पदार्थेषु तत्सार्थ्यानाधाने मानान्तरावगतेऽपि संसर्गावगमप्रसङ्गः, अत्राह—**न च प्रमा-**

---

1. पदार्थानामप्यन्यथा
2. पदाश्रयत्वेनानाश्रयणात् (क)
3. सहकारिकृत

अस्तु वा कथञ्चित् साम्यम्, एवमपि पदार्थानामेव वाक्यार्थधीहेतुत्वम्; सन्निधानात्, अन्यत्र [1]परिक्षयाभावाच्च। [2]न हि ज्वलनानुगुणशक्तिव्यतिरेकेण काष्ठानां पाकानुगुणशक्तिः कल्पनीया; तयैव ज्वलनव्यवधानेन पाकसिद्धौ शक्त्यन्तरकल्पनायां प्रमाणाभावात्। एवञ्च पदानामपि पदार्थस्मृत्यनुगुणयैव शक्त्या तद्व्यवधानेन वक्यार्थप्रत्ययलाभाद् न शक्त्यन्तरं कल्प्यम्। पदार्थस्मृतयस्तु न व्यवहिताः, [3]नाप्यन्यत्रोपक्षीणाः, इति तासामेव पाक इव ज्वलनस्य सामर्थ्यं कल्पनीयम्। एतदेवाभिप्रेत्याभिहितम्—

"साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्।
वर्णाः, तथापि नैतस्मिन् पर्यवस्यन्ति [4]निष्फले॥

---

**णान्तरेति॥ सहकारि[री]कृतेति**॥ पदावगतपदार्थसन्निधानभावनिमित्त इत्यर्थः। **शाब्दस्सन्निधिरिति**॥

शब्दान्तरेण शब्दानामर्थेषु सामर्थ्याधानसामर्थ्यमाश्रितमिति शङ्कां स्वीकृत्याप्याह—**अस्त्विति**॥ सन्निधानाद[?]न्वयव्यतिरेकत्ववत्त्वादिति यावत्। पदार्थस्मृतिः पदानां व्यापारः, न व्यवधानकरी; स्वाङ्गस्य[स्या]व्यवधायकत्वात्, इतरथा 'काष्ठैः पचती'ति करणत्वं पाकेऽवगतं काष्ठानां न स्यात्; ज्वालाव्यवधानात्, अत्राह—**न हीति**॥ काष्ठानां पाककरणत्वस्य प्रमितत्वाद् ज्वलनमवान्तरव्यापारः कल्प्यते, नैवं पदानां संसर्गधीकरणत्वं प्रमितमित्यर्थः॥ वाक्यार्थबुद्धेः शाब्दत्वात् सिद्धं तत्र शब्दानां करणत्वम्, अत्राह—**न हि ज्वलनेति**॥ करणत्वं पदानां पदार्थस्मृतिजननशक्त्यैव, शक्त्यन्तरेण वा। न चरमः; मानाभावात्, दृष्टान्ताभावाच्चेत्यर्थः। दृष्टानुसारित्वात्प्रथम एव कल्प आश्रयणीयः। तथाचाभिहितान्वयसिद्धिरित्याशयवानाह—**एवञ्चेति**॥ पदानामन्वयधीसामर्थ्याभावे-सैव न स्यात्, अत्राह—**पदार्थस्मृतयस्त्विति**॥ पदानां पदार्थस्मृतिजननशक्त्यापि संसर्गहेतुत्वादभिहितान्वयसिद्धान्तविरोध इति, अत आह—**एतदेवेति**॥

---

1. परीक्षायाभावाच्च (क)
2. [न हि ज्वलनमिव काष्ठानां पदार्थस्मृतिः; पदार्थानां व्यवधिमासादयति।] कुण्डलितो भागः क पुस्तके नास्ति (ख)
3. ना'यत्रो (क)
4. निष्कले (क)

वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥"

इति। तदेव[1]मनन्यथासिद्धान्वयव्यतिरेकेण पदार्थानामाकांक्षादिशालिनामितरेतरसंसर्गगमकत्वे सति गौरवाद् नान्विताभिधानपक्षः क्षोदक्षम इति प्राप्तम् ॥

॥ अन्विताभिधानवादसिद्धान्तोपक्षेपः ॥

अत्राचक्ष्महे—

वाक्यार्थबोधः साक्षात्तु[त्तु]शब्दशक्तिनिबन्धनः ।
शाब्द[2]बोधत्वतो बोधः पदार्थविषयो यथा ॥ २४ ॥

॥ अन्विताभिधानस्वरूपम्, तदभावेऽर्थधियः शाब्दत्वानुपपत्तिः, परम्परया शाब्दत्वेऽनुमित्यादीनामपि प्रत्यक्षत्वापत्तिः ॥

योग्येतरसंसृष्टस्वार्थप्रतिपादनं पदानामन्विताभिधानं नाम। प्रयोगोऽपि—वाक्यार्थधीः, साक्षाच्छब्दकार्या, लक्ष्यपदार्थज्ञानान्यत्वे सति शाब्दधीत्वात्; पदार्थधीवत्। न [3]चेदेवम्, संसर्गधियोऽशब्दत्वप्रसङ्गः। शब्दावगतपदार्थजन्यत्वा-

---

वर्णातिरिक्तपदाभावाद् वर्णा इत्युक्तम्। संसृष्टार्थव्यवहारार्थं समभिव्यवहारः। न च पदार्थमात्रप्रतीत्या विशिष्टव्यवहारः, इति पदार्थमात्रप्रतीतौ निष्फलत्वान्न पर्यवसानं शब्दानामित्याशयः। आहत्य पदानि वाक्यार्थमवगमयन्तु, किं पदार्थप्रतिपादनव्यापारगौरवेण? अत्राह—**वाक्यार्थेति** ॥ व्यापारवत एव करणत्वनियमादिति भावः ॥

सुखप्रतिपत्त्यर्थं सिद्धान्तयुक्तिं श्लोकेन सङ्गृह्णाति—**वाक्यार्थबोध इति** ॥ २४ ॥ किमिदमन्विताभिधानम्—किं यत्र पदसामर्थ्यम्, तद्वस्तुगत्याऽर्थान्तरान्वितमिति? किं वान्वितत्वेन प्रतिपादनम्। आद्ये नान्विताभिधानसिद्धिः। न हि चक्षुषो यत्र सामर्थ्यम्, तद्वस्तुतो रसवत्, इति रसेऽपि चक्षुषः सामर्थ्यम्। नेतरः; मानवैकल्यात्, अत्राह—**योग्येति** ॥ इतरसंसृष्टस्य शब्दशक्तिगोचरत्वे संसृष्टोऽपरः, संसर्गश्च स्वार्थ एवेति स्वार्थप्रतिपादनमन्विताभिधानमित्येव वक्तव्यम्, न तु संसृष्टस्वार्थ-

---

1. तदेवमन्यथासिद्ध 2. शब्द (क)
3. स चेदेवं (क)

च्छाब्दत्वे प्रत्यक्षावगतलिङ्गजन्यानुमितिः प्रत्यक्षमेव स्यात्। प्रत्यक्षावगतशब्दसादृश्यानुपपत्तिजन्यप्रमान्तराणामपि प्रत्यक्षत्वमेव स्यात्। शब्ददर्शनादीनामिन्द्रियावान्तरव्यापारत्वञ्च पदानां पदार्थप्रतिपादनवद् भविष्यति। नच स्वव्यापारव्यवधानाद् व्यापारवतः करणत्वं विहन्यते; यागादीनामपूर्वव्यवधानेन फलसाधकानामकरणत्वप्रसङ्गात्॥

॥ पदेन पदार्थप्रतिपादनस्य वाक्यार्थप्रतीताविव चक्षुषाऽनुमितौ
लिङ्गज्ञानस्यावान्तरव्यापारत्वेनानुमित्यादेः
प्रत्यक्षान्तर्भावापत्तिशङ्कानिरासौ॥

ननु—न चक्षुषो लिङ्गज्ञानमवान्तरव्यापारः; अगृहीताविनाभावस्यानुमानानुदयात् अचाक्षुषस्थलेऽपि लिङ्गस्य बोधकत्वात्—इति, मैवम्; पदानां पदार्थप्रतिपादने तदनपेक्षत्वेऽपि वाक्यार्थप्रतिपादने तदपेक्षत्ववदत्राप्युपपत्तेः, नेत्रस्य रूपग्रहणे

---

पदयोर्द्वयोरुपादानं युक्तमिति चेत्, न; असाधारणार्थस्य स्वार्थपदेनाभिधानात्। अभिहितान्वयं व्यावर्तयति—**संसृष्टेति**। ते[के]नेति साकाङ्क्षत्वेनानर्थक्यमसम्भवं च परिहरति—**योग्येतरेति**॥ पदार्थप्रतिपादनद्वारा शब्दकार्यत्वेन सिद्धसाधनत्वं व्यावर्तयति—**साक्षादिति**। लक्ष्यतीरादिज्ञाने, प्रत्यक्षादिज्ञाने च व्यभिचारवारणाय हेतुविशेषणम्। प्रमाणान्तराणां न प्रत्यक्षप्रमान्तर्भावः; शब्ददर्शनाद्यन्वयव्यतिरेकिणां तत्कार्यत्वात्, अत्राह—**शब्ददर्शनादीनामिति**॥

लिङ्गज्ञानस्य प्रत्यक्षमात्रेऽन्तर्भावोऽभिहितः, तदनभिज्ञाय चाक्षुषप्रत्यक्षेऽन्तर्भावोऽभिहित इति मत्वा परः परिचोदयति—**नन्विति**॥ व्याप्तिदर्शने लिङ्गज्ञानमन्तरेणापि नेत्रस्य गमकत्वादिति हेतुमाह—**अगृहीतेति**॥ लिङ्गज्ञानस्य चक्षुर्व्यापारत्वे चक्षुषो यत्र व्यापारो नास्ति, तत्र लिङ्गज्ञानाभावाद् न लिङ्गज्ञानं स्यात्, भवति च; अतोऽपि नैवमित्याह—**अचाक्षुषेति**॥ 'यो[यो]धूमवान्, स सोऽग्निमान्' इत्यपि[वि]नभावानुभवे नेत्रस्य लिङ्गज्ञानानपेक्षत्वादतद्व्यापारत्वं विवक्षितम्, उत व्यापकप्रतीतिमन्तरेणार्थात्प्रतीतिकरत्वादिति विकल्प्य, आद्यमपवदति—**मैवमिति**॥ **तदनपेक्षत्वेऽपीति**॥ पदार्थप्रतिपादनानपेक्षत्वेऽपीत्यर्थः। **अत्रापीति**॥ चक्षुषोऽपि व्याप्तिग्रहे लिङ्गज्ञानानपेक्षत्वेऽपि व्यापकप्रतीतौ व्याप्यप्रतीतिसापेक्षत्वोपपत्ते-

प्रदीपापेक्षस्य प्रदीपग्रहणे तदनपेक्षत्ववत् प्रत्ययान्तरे शब्ददर्शनादिव्यापारानपेक्षत्वोपपत्तेश्च। अचाक्षुषस्थले लिङ्गस्य बोधकत्वेऽपीन्द्रियमात्रव्यापारमन्तरेण तद्बोधकत्वात्, प्रत्यक्षमात्रान्तर्भावस्योक्तत्वाच्च ॥

॥ चक्षुषो लिङ्गज्ञानमिव पदस्य पदार्थस्मरणमपि न नियतो व्यापार
इति शाब्दत्वनिर्वाहार्थमन्वयोऽपि पदार्थ इत्येव युक्तम् ॥

अथ—अगृहीतव्याप्तिकस्य [1]व्यापकप्रमित्यभावेन चक्षुषो न नियतं व्यापक[प्र]मितिहेतुत्वम्, इति न लिङ्गज्ञानमवान्तरव्यापार इति—मतम्, हन्त! अगृहीतसङ्गतिकस्यान्वयप्रमित्यभावेन शब्दस्य न नियतमन्वयप्रमितिहेतुत्वम्, इति न पदार्थस्मरणं [2]पदानामवान्तरव्यापारः स्यात्। नच—मानान्तरावगतलिङ्गात् लिङ्गिज्ञानोत्पत्तेरिन्द्रियस्य नानुमितिजनकत्वमिति—युक्तम्; **अस्मिन् मते** मानान्तरानुपपत्तेरुक्तत्वात् ॥

॥ स्मारितानां पदार्थानां प्रत्यक्षादिष्वन्तर्भावान्न बोधकत्वलक्षणं
प्रामाण्यमभिहितान्वयवादे। अन्विताभिधानवादे तु शब्दप्रमाणेन निर्वाहः ॥

किञ्च स्मारितपदार्थाः प्रत्यक्षादिष्वनन्तर्भूतश्चेत् सप्तमप्रमाणस्वीकारः।

---

रित्यर्थः। तथापि नागमादीनामध्यक्षान्तर्गमः; अन्तरेणापि शब्दादिदर्शनमनुमेयादिधीदर्शनात्, अत्राह—**नेत्रस्येति** ॥ **प्रत्ययान्तर इति** ॥ शब्ददर्शनादिजन्यातिरिक्तप्रत्यय इत्यर्थः ॥ द्वितीयकल्पमिदानीमालम्बते—**अथेति** ॥ येन विना यस्य कार्यं न निर्वहति, स तस्य व्यापारः। निर्वहति च चक्षुःकार्यं रूपादिदर्शनमन्तरेण लिङ्गदर्शनम्, इति न तत्तदीयो व्यापार इत्याशयः। शब्दस्यापि कार्यतया स्वसामग्रीमनुमापयतः कर्मतया स्वविषयज्ञानं कुर्वतोऽगृहीतसङ्गतिकसंसर्गागमकत्वात् पदार्थप्रतिपाद[न]व्यापारता न स्यादिति दूषयति—**[हन्तेति]**आप्तवचनाद्यवगतलिङ्गस्यापि गमकत्वान्नेन्द्रियस्य लिङ्गज्ञानव्यापारत्वम्, अत्राह—**न चेति** ॥ कुतः? अत्राह—**अस्मिन्निति** ॥ पदावगतपदार्थजन्यवाक्यार्थधियः शाब्दत्वे सति, इन्द्रियावगतशब्दादिकृतप्रतीतीनामध्यक्षान्तर्भावस्याभिहितत्वादिति भावः ॥

---

1. व्यापाकप्रमि (क)
2. णवत् इति (क)

अन्तर्भूताश्चेन्न [1]प्रत्यक्षेन्तर्भावः, अप्रतीतानामगमकत्वात् । नापि लिङ्ग इत्यावेदयिष्यामः । नाप्यर्थापत्तौ ; संसर्गमन्तरेणानुपपत्तेरभावात् । नाप्युपमाना[2]भावयोः ; तयोर्नियतविषयत्वात् । नापि शब्दे ; शब्दादर्थे बुद्धिः शाब्दमिति लक्षणहीनत्वात् ।

॥ लिङ्गप्रकरणादीनामिव स्मारितपदार्थानां शब्देऽनन्तर्भावः ॥

लिङ्गप्रकरणस्थानानां विनियोजकश्रुतिकल्पकत्वात् तत्रान्तर्भावेऽपि तल्लक्षणहीनस्य न तत्रान्तर्भावः । अन्तर्भावे वा लिङ्गप्रकरणादिदृष्टान्तात्, लाघवाच्च मानान्तराणामपि तत्रैवान्तर्भावो भवेत् ॥

॥ पदार्थानां संसर्गबोधकत्वं बाधितमपि ; असंबन्धात् ॥

नच पदर्थानां संसर्गगमकत्वम्, असम्बन्धात् । आश्रयाश्रयिभावसम्बन्धात् बोधकत्वञ्चेत्, पदावगतघटादेरपि स्वाश्रितरसादिबोधकत्वप्रसङ्गः । तदाहुः—

"नान्तर्गमः प्रमाणेषु पदार्थानामसम्भवात् ।
अविनाभावरूपादेर्न शब्दे तदलक्षणात् ॥"

इति ॥

---

पदावगतपदार्थानां प्रत्यक्षादावन्तर्भावः, अनन्तर्भावो वेति विकल्प्य, प्रथमं प्रत्याह—**किञ्चेति** ॥ चरमेऽपि प्रत्यक्षेऽन्तर्भावः ; लिङ्गादौ वेति विकल्प्य, क्रमादपास्यति—**अनु[ नन्तर्भू ]भूताश्चे[ दि ]ति** ॥

ननु—यथा श्रुतसामर्थ्यं लिङ्गम्—"बर्हिर्देवसदनं दामी"ति बर्हिर्लवनप्रकाशनसामर्थ्य—अस्य मन्त्रस्य बर्हिर्लवने विनियोजकम्, साकाङ्क्षानेकवाक्यसम्बन्धः प्रकरणम्—प्रयाजादीनां दर्शपूर्णमासाद्यङ्गत्वगमकम्, क्रमपठितानां समसङ्ख्यानां यथाक्रमं सम्बन्धः=स्थानम्—"इन्द्राग्नी रोचना दिव" इत्यादिसमाम्नातदर्शमन्त्राणां क्रमसमाम्नातदर्शेष्टिषु विनियोजकम्, इत्येषां लिङ्गादीनां शब्देऽन्तर्भावः, तथा पदार्थानामपीति, अत्राह—**लिङ्गेति** ॥ पदान्तरनिरपेक्षः शब्दः श्रुतिः, तत्कल्पकत्वेनैव लिङ्गादीनां विनियोजकत्वम् । लिङ्गाद्यनुमितश्रुतेरेव विनियोजकत्वमिति यावत् । शब्दलक्षणक्षीणस्यापि पदार्थस्य शब्देऽन्तर्भावे बो[बा]धकमाह—**अन्तर्भावे वेति** ॥

पदस्मारितपदार्थानां संसर्गगमकत्वमङ्गीकृत्योक्तम्, सम्प्रति तदपि नेत्याह—**नचेति** ॥ पदार्थानां संसर्गस्तदाश्रयः, इत्याश्रयाश्रयिसम्बन्धानां गमकत्वम्, अत्राह—**आश्रयेति** ॥ कीर्तितेऽर्थे **शब्दनिर्णयकृतां** वाक्यं कीर्तयति—

---

1. न प्रत्यक्षाऽन्त
2. उपमानभावयोः

॥ व्यवधानात्पदानां संसर्गाबोधकत्वेन संस्कारेण व्यवधानात्पदानां न पदार्थस्मारकत्वमपि ॥

इति । अपि च पदानां पदार्थप्रतिपादनव्यवधानात्संसर्गबोधकत्वञ्चेत्, पदार्थबोधकताऽपिहीयेत, पदार्थांशे ज्ञानं स्मृतिरिति हि भवदभ्युपगमः ॥

यदाहु :—

" पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते " इति ।

गवयादिषूद्बुद्धसंस्कारकारणत्वेन व्याप्तत्वादत्रापि शब्दसन्दर्शनसमु[1]द्बुद्धसंस्कारकारणकत्वमुपेयम् । एवञ्च पदानां संस्कारोद्बोधकत्वेन व्यवधानान्न पदार्थे धीजनकत्वम्, नापि वाक्यार्थे, इति पदवृत्तं साध्वसाधि ॥

एतेनैतदपास्तम्—यदाहु : —

" अशाब्दे चापि वाक्यार्थे न पदार्थे[ष्वपि शा]ब्दता ।
वाक्यार्थस्येव नैतेषां निमित्तान्तरसम्भवः " ॥

इति ॥

॥ अन्विताभिधानवादे विशिष्टैकशक्तिस्वीकारान्नानेकशक्तिकल्पनमिति लाघवम् ॥

[2]यत्तावदवादि—कार्यदर्शनेन कारणपरिकल्पनं लाघवावष्टम्भेन प्रवर्तते—इति, तदनुमोदामहे । अन्वयि[ अन्वित ]शक्तिमत एव [3]तत्संभावात्, अन्वितस्यै-

---

**तदाहुरिति ॥ अविनाभावरूपादेरसंभवादिति** । अविनाभाव[वा]संभवान्न लिङ्गे; अनवगतानामगमकत्वान्न प्रत्यक्षे, सादृश्याद्यसम्भवा[ वा ]न्नोपमानादावन्तर्भाव इत्यर्थः ॥

शब्दानां संसर्गगमकत्वानङ्गीकारे स्यादबोधकत्वेनाप्रामाण्यमित्याह—**अपि चेति** ॥

पदार्थस्मृतेः शब्दसन्दर्शनसमुद्बुद्धसंस्कारप्रसूतत्वप्रदर्शनेन चोद्यान्तरं निरस्तमित्याह—**एके[ते]नेति** ॥ [अ]शाब्दे=शब्दशक्त्यगोचरेऽपि । **वाक्यार्थस्येवेति** ॥ यथा पदार्थसंसर्गरूपवाक्यार्थस्य पदार्था एव निमित्तम् = बोधकम् = प्रमाणम्, तथा [न]पदार्थानामवगमे शब्दातिरिक्तनिमित्तसंभवः ॥

अत्यर्थलाघवानुकूल्येन कारणकल्पने कथं तवेष्टसिद्धिः ? अत्राह—**अन्वितेति** ॥ तदुपपादयति—**अन्वितस्येति** ॥ प्रयोजकशक्तेः शब्दे गताया इति

---

1. समुद्बन्ध (क)    2. पृ. 182. प. 6.
3. तत्स्वभात् (क)

कत्वात् तत्प्रतीतेरप्येकतया तत्प्रयोजकशक्तेरेकत्वात् , इतरथा पदार्थविशिसंष्टसंसर्गस्य पदार्थगम्यत्वात् संसर्गे, तद्विशेषणपदार्थे च शक्तिभेदगौरवं भवतोऽपि भवेत् ॥ यथाहुः—

"पदार्थैरनुरक्तोऽसौ वाक्यार्थः सम्प्रतीयते ।
नात्मना गमयन्त्येनं विना धूमोऽग्निमत्त्ववत् ॥"

इति । यत्र हि नियमेन विशिष्टमेकमेव, तत्र तन्निरूप्या शक्तिरप्येकैव; स्वतन्त्रकार्यभेदस्य शक्तिभेदप्रयोजकत्वात्, अन्यथा—

"प्राप्ते कर्मणि नानेको[1] विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥"

इति गुणगणविशिष्टापूर्वविधौ प्रतिगुणं विधिश[2]क्तिप्रसङ्गात् ॥

---

शेषः। विशेषणे, [संसर्गे]विशेष्ये पदार्थे च शब्दशक्तिरिति गौरवमित्याशङ्क्य, पदार्थानुरक्तसंसर्गस्य पदार्थगम्यत्वाद्विशेषणविशेष्यभेदेन शक्तिभेदः पदार्थवादिनोऽपि स्यादित्याह—**इतरथेति** ॥ पदा[र्था]न्तरो[पर]क्त एव वाक्यार्थः संसर्गो गम्यत इत्यत्र भट्टाचार्यवचनमुदाहरति—**यथेति** ॥ **नात्मनेति** । पदार्था एनम्=संसर्गमात्मना विना=पदार्थैरननुरक्तं न गमयति,[न्ति,]संसर्गस्यावच्छिन्नप्रतीतित्वात् । व्यतिरेकमुदाहरणमाह—**धूमोऽग्निमत्त्ववदिति** ॥ यथा धूमः; अग्नेः स्याननुरक्तस्य [न]गमक इत्यर्थः । अन्वयधियोऽन्वितधियश्च भेदात् शक्तिभेद इति, अत्राह—**यत्रेति** ॥ विशिष्टैक्येऽपि तदन्तर्गतविशेषणविशेष्ययोरभेदात् परिहारः, अत्राह—**स्वतन्त्रेति** ॥ कार्यभेदमात्रस्य शक्तिभेदप्रयोजकत्वे बाधकमाह– **अन्यथेति** ॥ अन्यथा विधिशक्तिभेदप्रसङ्गादित्यन्वयः । अनेकगुणविशिष्टैकापूर्वविधिसंभवे भट्टाचार्यवचन पठति---**प्राप्त इति** ॥ वाक्यान्तरविहिते वाक्यान्तरविहितं कर्मानूद्य यत्र गुणो विधीयते, तत्रानेको गुणो न विधातुं शक्यते; प्रतिगुणं वाक्यस्यावृत्तिप्रसक्त्या भेदप्रसक्तेः, अप्राप्ते = अपूर्वे कर्मणि **बहवोऽपि** गुणाः **एकयत्नतः** = एकव्यापारेण विधीयन्ते, नानागुणविशिष्टापूर्वकर्मणः एकत्वात्- यथा गवैकहायन्याऽरुणया पिङ्गाक्ष्या सोमं क्रीणाती "ति विशिष्टप्रतीतेरेकत्वम् । शक्तेरेकत्वेऽतिप्रसङ्ग

---

1. नानेक    2. विधिभेदप्रसङ्गात् ।

॥ विशिष्टशक्तेरेकत्व आकृत्यधिकरणविरोधशङ्कातत्परिहारौ ॥

हन्त नियमेन जातिविशिष्टव्यक्तिप्रतीतेर्विशिष्टैव शब्दशक्तिराश्रयणीया, इति व्यक्तेरपि शाब्दत्वप्रसङ्ग इति चेत्, नैतद्युक्तम्; शब्दशक्ते[क्तेः]विशिष्टविषयत्वेऽपि विशेष्यांशे न शब्दप्रयुक्ता; [1]जातिवाचकत्वप्रयुक्तत्वात्, जातिबोधकानामिन्द्रियादीनां व्यक्तिपर्यन्तबोधकत्वदर्शनात् शब्दस्यापि तत्पर्यन्तबोधकत्वेऽपि न व्यक्तेः शब्दार्थत्वम्; अनन्यलभ्यत्वाभावात्। जातौ पुनः शब्दप्रयुक्तैव शक्तिः, इति जातिरभिधेयेति त्रैविद्यवृद्धाः ॥

एतेन—त्वयाऽप्यर्थान्तरे तदन्वये स्वार्थे च पदशक्तीनां कल्पनीयत्वाद्गौरवमिति—अपास्तम्; गुणगणविशिष्टापूर्वविधिशक्तेरेकत्वस्योक्तत्वात् ॥

॥ अन्विताभिधानवादे शक्तित्रयकल्पनागौरवशङ्का,
अभिहितान्वयवाद एव बहुतरशक्तिकल्पनागौरवमिति तत्परिहारश्च ॥

एकस्य पदस्य श्रूयमाणस्य, स्मर्यमाणस्य वा तत्तत्पदार्थस्मरणजननशक्तिः, पुनरेकस्मरणगोचराणाञ्च तेषामेव पदानामन्योन्यान्वितपदार्थाभिधानशक्तिः, सकलपदगोचरस्य स्मरणस्य पदेष्वन्विताभिधानशक्त्याधानशक्तिश्चेति शक्तित्रयकल्पना पदवादिन इति चेत्, न;—पदस्य पदार्थस्मारकत्वाभावात्। पदार्थांशे हि धीरनुवादः।

---

शङ्कते—**हन्तेति** ॥ शब्दाज्जातिरेव प्रतीयते, व्यक्तिराक्षिप्यते; तथापि जातिविशिष्टव्यक्तिप्रतीतिं स्वीकृत्यैव तात्पर्यं परिहरति—**न शब्दप्रयुक्तेति** ॥ शब्दस्य व्यक्तिविषयत्वा[त्वं न]भवति, किन्तु जातिबोधनाय प्रवृत्तः शब्दो व्यक्तिबोधमन्तरेण जातिबोधासिद्ध्या व्यक्तिमपि बोधयतीत्यन्यप्रयुक्तत्यर्थः। शब्द[:]स्वभावतो जातिबोधकश्चेत्, व्यक्तिमपि कस्माद् [न]बोधयेत्? अत्राह—**जातिबोधकानामिति** ॥ **अनन्यलभ्यत्वाभावादिति** ॥ जातिबोधनान्तरीयकतया व्यक्तिबोधात्, अनन्योद्देशप्रवृत्तशक्तिगोचरत्वाभावात्, अनन्यलभ्यस्यैव शब्दार्थत्वादित्यर्थः। व्यक्तिधीनान्तरीयकतया जातिधीरिति विपरीतं किं न स्यात्? अत्राह—**जाताविति** ॥ लाघवाव्यभिचाराभ्यां जाति[:] शब्दार्थ इति वक्ष्याम इत्यर्थः ॥

चोद्यान्तरमतिदेशेन प्रत्यादिशति—**एतेनेति** ॥ परामृष्टं हेतुं स्पष्टयति—**गुणेति** ॥ पदस्यार्थस्मरणजननशक्तिरिति यदुक्तम्, तत्सिद्धान्तानवबोधाधीनमित्याह—**नेति** ॥

---

1. जातिबाधकत्व

यथोक्तम्—"वह्निसामान्यमात्रवदनुमाने पदार्थस्वरूपमात्रं शब्देऽपि संसर्गोऽनूद्यत एवे"ति । नच पदार्थधीजननसामर्थ्यं पदानामपरमस्ति; संसृष्टगोचरसामर्थ्यादेव पदान्तरसन्निधिसहकारिविधुरात् पदार्थमात्रबुद्ध्युत्पादात्, सितासिताद्यशेषरूपगोचर-चक्षुस्सामर्थ्यादिव[1] विषयविशेषसहकारिविरहे तदेकदेशबुद्धिः । नापि सकलपद-गोचरस्मरणस्य पदेष्वन्विताभिधानशक्त्याधानशक्तिः, अन्विताभिधानशक्तेर्नैसर्गिक-त्वात्, एकस्मृत्यारोहस्य पदान्तरसन्निधिप्रयोजकत्वेन सहकारिमात्रत्वात्, अपरथा पदार्थानामप्येकस्मरणगोचराणामेव संसर्गगमकत्वात् सकलपदार्थगोचरस्मरणस्य पदार्थेषु सर्सगबुद्धिशक्त्याधानशक्तिस्तवापि स्यात् । तस्मात्[2] पदानां संस्कारोद्बोधने शक्तिः, संस्कारस्य पदार्थस्मृतौ, स्मृतानां योग्यतादिप्रतिसन्धाने, तत्प्रतिसन्धानस्य पदार्थविशिष्टसंसर्गबोधकत्वेन संसर्गे, पदार्थेषु च प्रमाणान्तरप्रतिपन्नपदार्थेषु संसर्ग-धीजनकत्वादर्शनात् पदस्मारितपदार्थानामिति विशेषणे पदार्थेषु संसर्गधीजननशक्त्या-धानशक्तिश्च पदानामिति शक्तिकल्पनागौरवं भवत एव ॥

॥ विनाऽपि पदानि प्रमाणान्तरप्रतिपन्नेभ्योऽप्यर्थेभ्यः
शाब्दबोधदर्शनाच्छाब्दत्वमेव शाब्दबोधस्येति न नियम इति शङ्का,
तत्राश्वो धावतीत्यनुमानमेवेति, तत्परिहारश्च ॥

"पश्यतः श्वेति[त]माऽऽरूपं हेषाशब्दञ्च शृण्वतः ।

---

उक्तमर्थं शब्दनिर्णयकृतां वाक्येन स्थिरीकरोति—**यथोक्तमिति** ॥ अर्थ-धियोऽनुवादत्वेऽपि तज्जननशक्तिः पदस्य, इति गौरवतादवस्थ्यम्, अत्राह—**नचेति** ॥ संसृष्टगोचरसामर्थ्यात्तदेकदेशधीरयुक्ता ; शक्तेस्सकलशक्यसंवादकत्वात्, अत्राह—**सितेति** ॥ नेत्रस्य प्रतिरूपदर्शनं न शक्तिभेदः ; गौरवात्, अनङ्गीकाराच ; तथापि कर्मकारकतया सहकारिगोचरविशेषविरहे गोचरैकदेशसहकृतनेत्रात्तन्मात्रप्रतीतिरिवे-त्यर्थः । तस्मात् स्मृत्यनारोहिणां पदानामन्वितप्रतिपादकत्वं स्यात्, अत्राह—**एकेति** ॥ एवं स्वसिद्धान्तगौरवं परिहृत्य, परराद्धान्त एव तदाह—**तस्मादिति** ॥ (पदानां पदार्थेषु, संसर्गे च बोधनशक्त्याधा[धा]नशक्तिर्नाश्रयणीया)

श्वेतमारूपं पश्यतः, खुरपुटटङ्कारवं हेषारवं च शृण्वतः 'श्वेतोऽश्वो धावती'ति मानान्तरप्रतिपन्नपदार्थेभ्योऽपि संसर्गधीदर्शनादिति शङ्कते—**पश्यत इति** ॥ अ[आ]

---

1, "व" नास्ति    2. "तस्मात्" इति एतत् नास्ति ।

खुरनिष्पेषशब्दश्च श्वेतोऽश्वो धावतीति धीः ॥"

इति संसर्गधीः पदार्थान्तरेभ्योऽपीति चेत्, मैवम्; हेषाशब्दानुमिते धर्मिणि परिदृष्टश्वैत्य[1]रूपस्य धर्म्यन्तरानुपपत्त्या परिशेषादश्वत्वे निश्चिते खुरनिष्पेषशब्देन धावनानुमानात्। यस्तु न परिशेषमवधत्ते, न तस्य संसर्गधीरेव। यथाहुः—

"नार्थाधीनस्तु संसर्गबोधो मानान्तरं विना।
परिशेषानुमानाद्धि श्वेतोऽश्वो धावतीति धीः ॥"

इति ॥

॥ पदानां स्मारकत्वातिरिक्तसामर्थ्याधानवादायोगः, बहुषु पदेषु श्रुतेष्वपि कस्यचिदेवान्वयात् ॥

पदार्थेषु सामर्थ्याधानसामर्थ्यं पदेषु नाश्रीयते; तेषां स्मारकत्वातिरेकेण सामर्थ्यान्तराभावादित्युक्तमिति चेत्, न; पदस्मृतेषु बहुषु कस्यचिदेवान्वयदर्शनात् तावन्मात्रस्यान्वयाप्रयोजकत्वात्। [प्रमाणान्तरप्रतिपन्नेषु संसर्गप्रत्यय[2]प्रसङ्गाच्च] ॥

---

रूपम्=ईषद्रूपं श्वेतं रूपम्, आपश्यतः=ईषत् पश्यत इति वाऽर्थः। तत्र संसर्गावगम[क?]स्यानुमानिकत्वान्न पदार्थानां संसर्गगमकत्वम्, इति परिहरति—**मैवमिति** ॥ **सत्य[धर्म्य]न्तरानुपपत्त्येति**। सन्निहितपरित्यागेनासन्निहितस्वीकारे गौरवादित्यर्थः। श्वैत्याश्रयस्य हेषाशब्दवत्त्वं श्वेतादश्वादन्यत्र न स्यादिति 'श्वेतोऽश्वोऽयमि'ति अन्यत्राप्रसङ्गेन परिशिष्टबुद्धिरूपपरिशेषमन्तरेण संसर्गावगमादर्शनादिति व्यतिरेकमाह—**यस्त्विति** ॥ तदुक्तं शब्दनिर्णय इत्याह—**यथेति** ॥

संसर्गबोधः=श्वेतोऽश्वो धावतीति धीः, **मानान्तरम्**=अनुमानम्, **विना**, **नार्थाधीनः**=परिदृ[शि]ष्टरूपादिसामर्थ्यप्रयुक्तो न भवतीत्यर्थः ॥

पदस्मारितत्वं नान्वयबोधकत्वप्रयोजकमिति, अन्याया[अन्वया]व्यापकत्वादित्याह—**नेति** ॥ "गामानय, अश्वं पश्ये" त्यादौ बहुषु स्मारकेषु कस्यचित्

---

1. "स्य" इत्यधिक कपुस्तके
2. कुण्डलितो भागः क पुस्तके नास्ति।

॥ शक्तपदसन्निधेरपि सहकारित्वात् प्रमाणान्तरप्रतिपन्नार्थस्या-
बोधकत्वशङ्कातत्परिहारौ, अन्विताभिधानवादसमर्थनोपसंहारश्च ॥

[1]यत्तूक्तम्—शक्तपदार्थसन्निधानस्य वाक्यार्थधीसामग्र्यन्तर्भावाद् न मानान्तरप्रतिपन्नेषु तत्प्रसङ्गः—इति, तदसत्; पदसन्निधिर्वा, विशेषो[षा]भिधानं वा, शब्दतात्पर्यगोचरत्वं वा पदार्थस्य; त्रिधापि शब्दसहकृतस्यान्वयबोधकत्वमन्वयव्यतिरेकाभ्याम्, इति शब्दशक्तेरनिवार्यत्वात् ॥

॥ अन्विताभिधानवाद एकेन पदेन सर्वावबोधप्रसङ्गोऽभिहितान्वय-
वादेऽपि समानः, अन्योन्याश्रयादि च ॥

ननु—शब्दः स्वार्थसमन्वितं वदन् सर्वान्वितं वदेत्, पदार्थविशे[2]षान्वितं वा। आद्ये चन्दनपदात् सर्वप्रतीतिप्रसङ्गः, द्वितीयेऽप्यानयनपदेन चन्दनान्वितानयनेऽभिहिते चन्दनपदेनानयनान्वितचन्दनमभिधीयते; अनभिहिते वा। न प्रथमः; अन्योन्याश्रयात्—आनयनपदाच्चन्दनान्वितानयनप्रतीतौ चन्दनपदादानयनान्वितचन्दनप्रतीतिः, ततश्चानयनपदाच्चन्दनान्वितानयनप्रतीतिः—इति। नेतरः; आनयनपदोच्चारणानर्थक्यादिति, नैतत् साधु; पदेभ्यः पदार्था अवगम्यन्ते, अवगता[तैर]र्थान्तरसंसृष्टस्या[स्वा]र्थः प्रतिपाद्यते, न त्वन्विततयाऽभिहितेन; पदार्थावगतौ परस्परानपेक्षत्वात् परस्पराश्रयानवकाशात्। नापि पदान्तरोपादानानर्थक्यम्; अर्थान्त-

---

केनचिदन्वयः, न सर्वस्य सर्वेण। अतो न स्मृतत्वमात्रमन्वयधीप्रयोजकमित्यर्थः। पदावगतार्थानां पदैरनाहितशक्तीनां संसर्गगमकत्वे बो[बा]धकान्तरमाह—**प्रमाणेति** ॥

तदेवमन्यान्वितस्वार्थः शब्दैरभिधीयत इति स्थिते चोदयति—**नन्विति** ॥ पदान्तरसंनिधिसहकारिविधुरपदानां पदार्थमात्रानुवादकत्वम्, अन्योन्यसन्निधिसध्रीची[ना]नां संसृष्टबोधने सामर्थ्यमिति सिद्धान्तं दर्शयन् परिहरति—**नैतदिति** ॥

**अन्विततयाऽभिहितेन**। संसृष्टस्वार्थ इति शेषः। आनयनपदादानयनेऽभिहिते चन्दनपदेन चन्दनाभिधानम्, अभिहिते च चन्दने तदपेक्षमानयनाभिधानमिति परस्पराश्रयं परिहरति—**पदार्थेति** ॥ आनयनपदार्थान्वितचन्दनस्य चन्दनपदप्रतिपाद्यत्व आनयनपदवैयर्थ्यमुक्तम्, अत्राह—**नापीति** ॥ प्रथममन-

---

1. पृ. 165 प. 11 2. विशेषणान्वितं

रावगतिनिमित्तत्वात् । नापि द्विरभिधानप्रसङ्गः ; पदार्थमात्रानुपादा[वादे] नैकसरण-गोचरतामाचरतां परस्परसाकांक्षाणां संसृष्टस्वार्थप्रत्यायकत्वात् । नापि सर्वान्वयः ; सन्निधानादेरपि प्रयोजकत्वात् । नापि पर्यायता ; स्वार्थभेदात् , अन्यथाऽन्योन्याश्रयादि परस्यापि समानम् । अभिहितान्वयवादिनापि पदानामेव पदार्थाभिधानद्वारेण तदन्वयबोधकत्वं वाच्यम् ; इतरथा शब्दप्रामाण्योच्छेदप्रसङ्गात् । अत एवोक्तम्—

"न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि[1] नः ।
तन्मात्रावसितेष्वेषु पदार्थेभ्यः स गम्यते ॥"

इति । एवञ्चेत् , चन्दनपदेन चन्दनाभिधानद्वारेण सर्वान्वितं चन्दनं बोध्यते, आनयनान्वितं वा । नाद्यः ; चन्दनपदेन चन्दनाभिधानद्वारेण सर्वान्विततद्बोधने सर्वबोधप्रसङ्गाद् वाक्यानर्थक्यापातात् । द्वितीयेऽप्यानयपदेनानयनाभिधानद्वारेण चन्दनान्वितानयने बोधिते चन्दनपदेन चन्दनाभिधानद्वारेणानयनान्वितं चन्दनं बोध्यते चेद् उक्तन्यायेनेतरेतराश्रयः, अबोधित एव चेत्, पदान्तरोच्चारणानर्थक्यमिति ॥

॥ प्रतिपर्यायं शक्तिभेदकल्पनागौरवमप्युभयत्र समानम् ॥

[2]यत्तूक्तम्—एकस्यानेकपर्याय[पदार्थ]प्रतिपादने प्रतिपर्यायं शक्तिकल्पनागौरवम्—इति, तत्पदार्थवादिनोऽप्येकस्यानेकशब्दप्रतिपादितस्य पदार्थस्य संसर्गगमकत्वादनेकशक्त्याश्रयत्वं तुल्यम् ॥

---

न्विताभिधानम्, पश्चात् पदान्तरसन्निध्यपेक्षयाऽर्थान्तरसंसृष्टस्वार्थाभिधानमिति पदानां द्विरभिधानं स्यात्, अत्राह—**नापि द्विरभिधानेति** ॥ वह्निसामान्यमात्रानुवादेन तद्विशेषसंसर्गबोधनमनुमानाद्यथेत्यर्थः । बहुषु पदागतेषु प्रत्येकं बहुभिरन्वयप्रसङ्गः ; अविशेषात्, अत्राह—**नापि सर्वेति** ॥ अर्थान्तरसंसृष्टस्वार्थाभिधानेऽर्थान्तरमप्यस्यैवार्थः, इति पदान्तरैः पर्यायत्वम्, अत्राह—**नापीति** ॥ **स्वार्थभेदादिति** ॥ असाधारणाभिधेयभेदादित्यर्थः । अयं परिहारः परेणाप्यङ्गीकार्य इत्याह—**अन्यथेति** ॥ पदार्थवादिनां पदानामन्वयगमकत्वानङ्गीकारात् कथमन्योन्याश्रयादि ? तत्राह—**अभिहितेति** ॥ **तन्मात्रावसितेषु**=पदार्थमात्रबोधनावान्तरव्यापारेषु । **पदार्थेभ्यः**=पदावगतार्थेभ्यः, पदानामर्थाभिधानद्वारा संसर्गावेदकत्वमापाद्य प्रकृतोपयोगमाह—**एवं[च]चे[दि]ति** ॥

---

1. पदादि  2. पृ. 183 प. 1

॥ पदवादे प्रतिप्रयोगं पदभेदादनेकशक्तिकल्पना, नैवं पदार्थवाद इति शङ्का ॥

अथ ब्रूषे—अर्थान्तरसंसृष्टपदसामर्थ्यस्वीकारे प्रतिप्रयोगं प्रतियोगिभेदात् सामर्थ्यगोचरा[र]संसर्गे भिद्यमाने पदसामर्थ्यमपरिमितं प्रसज्यते, इति गौरवम्, अर्थमात्रगोचरसामर्थ्यस्वीकारे तु प्रयोगभेदेऽपि स्वार्थस्यैकत्वादेकमेव सामर्थ्यम्—इति,

॥ पदार्थानामिव पदानामपीतरेतरसंसृष्टसंसर्गबोधकत्वस्य तुल्यत्वान्न कोऽपि विशेषः पदार्थवादे ॥

मैवम्; पदार्थस्य संसर्गगमकत्वेऽपि संसर्गिभेदात् संसर्गे भिद्यमाने शक्तिगौरवसाम्यात्। अ[1]थ—यथा नेत्रस्य रूपप्रतीतिशक्त्यैकयैव सितासितप्रतीतिहेतुत्वं सहकारिवैचित्र्यात्, तथाऽर्थस्यापि सहकारिवैचित्र्यादेकयैव संसर्गशक्त्या तत्तत्संसर्गिभेदोपहितसंसर्गगमकत्वमिति—मतम्, तत् पदानामितरेतरसंसृष्टस्वार्थसामर्थ्येऽपि न दण्डवारितम् ॥

यथाऽऽहुः—

"विचित्रसहकारित्वात्कार्यभेदस्य सिद्धितः।
शक्तिर्न भिद्यतेऽर्थेषु तथा शब्देषु चाक्षवत् ॥"

इति ॥

---

**अनेकशब्दप्रतिपादितस्येति** ॥ घटादिशब्दप्रतिपादितविशिष्टरूपस्य भिन्नस्य संसर्गगमकत्वाद् भिन्नशक्त्याश्रयत्वमित्यर्थः ॥

अन्विताभिधाननये प्रकारान्तरेण गौरवं शङ्कते—**अथेति** ॥ **प्रतियोगिभेदादिति** ॥ 'गामानय', 'गामवलोकय', 'गां बधान', इत्यादिप्रयोगान्तरेष्वानयनादीनां स्वार्थप्रतियोगिनां भेदादित्यर्थः ॥

स्वार्थैक्येऽप्यानयनादिप्रतियोगिभेदेन प्रतिपादनीयसंसर्गभेदात् प्रतिपादनशक्तिभेदः पदार्थस्यापि सम इति परिहरति—**मैवमिति** ॥ [पदार्थस्य] गोपदार्थ[र्थस्य]। शङ्कते—**[अ]यथेति**। **विचित्रसहकारित्वादिति** ॥ विचित्राः प्रतियोगिनः सहकारिणो येषामर्थानां ते, तथा; तद्भावः=तत्त्वम्, तस्मात्। **कार्यभेदस्य**= तत्तदुपहितसंसर्गज्ञानभेदस्य ॥

---

1. पृ. 194 प. 3

॥ अनेकार्थस्थले प्रतिपदार्थमनेकशक्तिकल्पनागौरवं पदार्थवादेऽधिकं दुरपह्नवम्, न चेयं कल्पना पदवादे ॥

पदार्थवादिन एव देवनादित्रयस्यैकाक्षपदवेदनीयत्वे प्रतिपदार्थं शक्तिस्वीकारगौरवम् । [1]न चान्वितस्य शक्तिगोचरत्वे प्रतिपर्यायं शक्तिस्वीकारगौरवमिति—युक्तम् । पदवादिनोऽन्यान्वितस्वार्थप्रतिपादने पदानां शक्तिरिति स्वीकारात्, अक्षशब्दस्य देवनादित्रयमपि स्वार्थ एव, इति शक्त्यन्तरमन्तरेणापीतरान्वितस्वार्थप्रतिपादनस्योचितत्वात् परस्परविलक्षणदेवनादिविशेषणान्वितभेदधियः शक्तिभेदमन्तरेण सिद्धेः । [2]कार्यावान्तरभेदस्य शक्त्यवान्तरभेदा[3]धीनत्वमभिहितमिति चेत्, न साध्वभ्यधायि; एकया शक्त्या सहकारिवैचित्र्यान्नेत्रस्येव सितासितादौ प्रतीतिभेदहेतुत्वोपपत्तेरुक्तत्वात् । दाहपाकादीनामत्यन्तविजातीयकार्यत्वाद्विजातीयशक्त्यपेक्ष[ त्त्याक्षेप ]कत्वमिति नातिप्रसङ्गः ॥

॥ पदानामन्वितबोधकत्वे विशेषणेऽपि तदावेदकप्रमाणैक्ये विनाऽपि शक्त्यन्तरं बोधोपपत्त्या न पदवादेऽनेकशक्तिकल्पना ॥

[4]यत्त्विदं गदितम्—यदि पदानामन्वितगोचरा शक्तिरेकैव, ततोऽपि तद्विशेषणस्यान्वयस्य प्रत्यायकाभावात् तदनवगतौ तदवगतिनिमित्तान्वितावगतिरेव हीयेत—इति, तदपि न हृद्यम्, विशेषणविशेष्ययोरावेदकप्रमाणैक्ये युगपदेव संवेदनेऽप्यविरोधात् । विशेषणविशेष्ययोरेकसंवेदनविषयत्वमेव नियतम्, न पुनस्तद्वेदनयोः पौर्वापर्यनियमः; प्रमाणमिदं वेदनमिति प्रामाण्यविशिष्टवेदन[5]वेदनवत् ॥

---

एवं साम्यमापाद्य परस्यैव गौरवव्य[वा]तिरेकमापादयति—**पदार्थेति** ॥ क्वचिदन्यान्वितं विदेवनं वेदनीयम्, क्वचिदन्यान्वितमिन्द्रियं अक्षपदवेद्यमिति तवापि समानं गौरवम्, अत्राह—**नचेति** ॥ कुतः? अत्राह — **पदेति** ॥ विभीतकादिविशेषसिद्धिस्तु प्रकरणादिबलादिति भावः । [6]अवान्तरकार्यभेदस्य शक्तिभेदमन्तरेणोपपत्तौ पावकस्यापि दाहपाकादिशक्तिभेदो न भवेदिति यदभिहितम्, तत्राह—**दाहेति** ॥

विशेषणवेदनस्य कारणस्य भवितव्यं पूर्वभावेन, अत्राह—**विशेषणविशेष्य-**

---

1. पृ. 183 प. 6
2. पृ. 183 प. 11
3. भेदाधीनत्वादित्यभिहितमितिचेत् न ।
4. पृ. 184 प. 5
5. प्रामाण्यविशिष्टवेदनत्ववत्
6. पृ. 184 प. 1

॥ प्रमाणग्राहकस्य विशेषणांशप्रामाण्यग्राहकत्ववत् कर्तृसंख्यावाचकस्य पृथक् शक्तिं विना कर्तृबोधकत्ववच्च विनाऽप्यन्वये शक्त्यन्तरमन्वितबोधः ॥

यदि पुनः प्रामाण्यं विशेषणरूपं पुरैव निरूप्य तद्विशिष्टवेदनं निरूप्येत, तदा वेदनावेदकपुष्कलकारणातिरिक्तकारणनिरूप्यत्वात् प्रामाण्यस्य परतस्त्वापातः, अथवा विमर्शारूढेऽन्वयेऽन्वितांशो बोध्यते, इति नान्वयेऽपि शब्दस्य शक्तिः कल्पनीया। यथाऽऽख्या[1]तानां कर्तृसंख्यावाचित्वे [2]कर्तर्यपि न शक्तिः, नाप्यन्यलभ्ये नागृहीतवि([3]शेषणा) विशेष्ये बुद्धिरि'ति न्यायावतारः। नाप्यन्वयप्रतियोगिन्यर्थान्तरे; यतः स्मृत्यारूढस्यार्थान्तरस्य संसर्गः प्रत्याय्यते, इति न तत्र शक्तिराश्रयितव्या। एषा खलु प्रमाणमर्यादा—सकलं प्रमाणं संस्कारसचिवं स्मृत्या प्रमाणान्तरेण वा प्रतीते विशेषणे, तद्विशिष्टरूपं प्रत्याययति, विशेषणांशे स्वयं शक्तिरहितमपि— यथा 'गोसदृशो गवयः', 'मधुरा शर्करा', 'सुरभि चन्दनमित्यादि ॥

---

**योरिति** ॥ विशेषणमगृहीत्वा विशिष्टग्रहणं क्व नाम दृष्टम्? अत्राह—**प्रमाणमिति** ॥

तत्रापि विशेषणमवगम्य विशिष्टमवगम्यताम्, अत्राह—**यदीति** ॥ ज्ञानज्ञापकसामग्र्याः प्रामाण्यग्रहे ज्ञानग्रहोऽपि स्यात्, सामग्र्याः कार्याव्यभिचारात्, अतिरिक्तग्राह्यत्वे, परत्वखलस्त्वं[परतस्त्वम्,]नापि बोधत्वेनैव प्रामाण्यस्फुरणम्; बोधत्वस्य प्रामाण्याव्यभिचारेऽप्रमाणबोधासिद्धेः, व्यभिचारे निश्चायकत्वानुपपत्तेः, साधारणधर्मस्य सन्देहबीजत्वादिति भावः। "नागृहीतविशेषणा विशेष्ये बुद्धिरि"ति न्यायं प्रौढ्याऽभ्युपेत्याह—**अथवेति** ॥ योग्यताभि[दि]मतामन्वयो युक्त इति तर्कावगत इत्यर्थः। विशिष्टविषयत्वे विशेषणेऽपि शक्तिरपरिहार्या, अत्राह—**यथेति** ॥ भवतीत्यादावाख्यातस्य कर्तृविशिष्टसङ्ख्यावाचित्वेऽपि न कर्तरि शक्तिः; लटैव कर्तुरभिधानादित्यर्थः। अन्वितस्य शब्दात् प्रतीतौ 'नागृहीतविशेषणे'त्यादिन्यायविरोधः, अत्राह—**नापीति** ॥ अर्थान्तरसंसृष्टप्रतिपादनेऽर्थान्तरेऽपि सामर्थ्यमिति गौरवम्, अत्राह—**नाप्यन्वयेति** ॥ **स्मृत्यारूढस्येति** ॥ पराभिप्रायेणोक्तत्वाद् न पूर्वापरविरोधः। विशिष्टवेदनं विशेषणविशेष्यग्राहि, तदुत्पादकं विशेषणे शक्तिरहितमिति व्याहतम्, अत्राह—**एषेति** ॥ उदाहरति—**यथेति** ॥ गामुपलभ्यारण्य-

---

1. यथाख्यानमित्यस्ति
2. कार्यपि
3. कुण्डलान्तर्गतं नास्ति

॥ अन्वितपदेनान्वयविशिष्टस्यैव ग्रहणम्, नतु तदुपलक्षितस्य ; दोषाभावात् ॥

[1]यत्त्विदमुदितम्—किमिदमन्वितमन्वयविशिष्टम्, आहोस्वित्तदुपलक्षितमित्यादि, तद्विशिष्टं मतमादायान्वयस्य विमर्शारूढतया, विशेषणविशेष्ययोरपर्यायमेव प्रत्ययोपपादनेन वाऽपहस्तितम् ॥

॥ पदपक्षेऽपि पदार्थस्मृत्यपेक्षायामपि पदार्थपक्षे योग्यतादिप्रतिसन्धानापेक्षायामिव न प्रामाण्यहानिः, पदार्थस्मरणानपेक्षा वा ॥

[2]यच्चावाचि—भवतोऽपि न पदान्येव स्वार्थस्मृतिमन्तरेण वाक्यार्थबोधमादधति—इत्यादि, तदपि न सम्यगिव ; भवतोऽपि योग्यतादिप्रतिसन्धानवैधुर्ये वाक्यार्थबोधवैधुर्यात् तत्प्रतिसन्धानमेवान्वयबोधकम्, न पदार्थ इत्यपि[ति] प्रसङ्गात् । एतदेवाभिप्रेत्याभिहितम्—

न्यायसम्पादितव्यक्ति, पश्चाद्वाक्यार्थबोधकम् ॥

इति । यद्यस्माभि [यदि युष्मा]भि[रभि]हितबाधभिया प्रतिसन्धानविधुरस्यापि वाक्यार्थबोधोऽभिधीयेत, तर्ह्यपमृष्टसङ्गतिसंस्कारवतः श्रुतपदकदम्ब[3]कादेवान्तरेण पदार्थस्मरणं वाक्यार्थप्रतीतिरित्यस्माभिरपि शक्यत एवाभिधातुम् ॥

---

मनुसरतो गवयसंप्रयोगे गवि स्मृत्यारूढायां 'गोसदृशो गवयः' इति धीर्गवयसंप्रयोगाज्जायते, माधुर्यं रसनेन्द्रियेणोपलभ्य तत्संस्कारविशिष्टचक्षुषा 'मधुरा शर्करे'ति धीः, एवं 'सुरभि चन्दनमि'त्यपि । आदिपदेन पूर्वानुभवसंस्कारसहकृतसांप्रतिकसंप्रयोगात्प्रत्यभिज्ञायां तत्ताविशिष्टस्फुरणसङ्ग्रहः । नच सुरभि चन्दनमित्यादावर्थयोरेवावगतयोः संसर्गधीजनकत्वम् ; संसर्गबुद्धेरपरोक्षत्वादिति भावः ॥

योग्यतादिप्रतिसन्धानवैधुर्ये वाक्यार्थधीर्न स्यादित्यत्र वृद्धसंवादमाह—**एतदेवेति** ॥ न्यायेन=योग्यतादिपरामर्शरूपेण, संपादिता=व्यक्तिः-स्फुटीभावः-स[सा]मर्थ[र्थ्य]रूपं यस्य वाक्यस्य, तत्, न्यायसम्पादितव्यक्ति । योग्यतादिप्रतिसन्धानमन्तरेणैव पदावगतार्थानां संसर्गगमकत्वान्नास्ति व्यवधानम्, अत्राह—**यदीति** ॥ काष्ठानां पाके ज्वालेव पदार्थप्रतिपादनं पदानां वाक्यार्थबोधनेऽवान्तरव्यापारः,

---

1. पृ. 184 प. 9 2. पृ. 184 प. 18 3. कदंबकालान्तरेण

॥ असन्निधानं पदार्थानामपि पदानामिव समानम् ॥

[1]यदप्युदितम्—पदार्थानामेव वाक्यार्थधीहेतुत्वं सन्निधानात्, अन्यत्रापरिक्षयाच्च—इति, तन्मुधैव; पदार्थानामपि योग्यतादिप्रतिसन्धानेन व्यवधानात्, तत्र परिक्षयाच्च ॥

॥ पाके काष्ठानां ज्वालया:, वाक्यार्थबोधे पदार्थप्रतिपादनस्य च नास्ति साम्यम् ॥

[2]यत्पुनः काष्ठानां पाके ज्वलनमिवेत्युदाहरणम्, तदपि ज्वलनमात्रं पाके यथाऽन्यनिरपेक्षम्, न तथा पदार्थप्रतिपादनमनपेक्षम्; संसर्गावगमे योग्यतादिप्रतिसन्धानापेक्षत्वादिति वैषम्यप्रदर्शनेनापास्तम्। पदानामेव पदार्थप्रतिपादनोपकरणानां तत्संसर्गगमकत्वे गृहीतसङ्गतिकानामेव पदार्थसंसर्गगमकत्वमङ्गीक्रियताम्, किं तदुपकरणेन ?

॥ प्राथम्यात् पदानामेवान्वयबोधकत्वम्, न तूत्तरस्य पदार्थस्य ॥

अपि च पदानां संसर्गबोधसामर्थ्यम्, [3]उत पदार्थानामिति विशये, पदानामेव तत्कल्पयितुमुचितम्; पदार्थेभ्यः पदानां प्रथमत्वात्, तत्परित्यागेन चरमप्रतिपन्नपदार्थानां तत्कल्पने गौरवात्। यथाहु:—

"[4]प्राथम्यादभिधातृत्वात्ता[5]त्पर्योपगमादपि।
पदानामेव सा शक्तिर्वरमभ्युपगम्यताम् ॥" इति ॥

॥ काष्ठेषु शब्दधर्मस्य तात्पर्यस्य नापेक्षा· इति तत्र तस्य
व्यभिचारोऽकिञ्चित्करः, न वा स्मारकत्वमेवाभिधातृत्वम् ॥

काष्ठेषु व्यभिचारात् तात्पर्यं नैकान्तिकम्, अभिधातृत्वं तु न पदानां

---

इति न तत्रापरा शक्तिराश्रयणीया, अत्राह—**पदानामेवेति** ॥ सङ्गतिग्रहणमेव संप्रतिपन्नं लाघवादुपकरणं स्यादित्यर्थः ॥

कीर्तिते **नाथवचनं** कीर्तयति—**यथेति** ॥ पदार्थेभ्यः पदानां प्रथमत्वात्, तथाऽभिधातृत्वात्, अभिधानसामर्थ्यस्योभयसंप्रतिपन्नत्वात्, पदार्थानां संसर्गधीसामर्थ्यस्य विप्रतिपन्नत्वात्, पदानां संसर्गबुद्धौ तात्पर्यस्य भवद्भिरप्यभ्युपगमादित्यर्थः।

पदानां संसर्गपरत्वात् साक्षात्तद्धीजनकत्वमिति यदुक्तम्, तत्राह—**काष्ठेष्विति** ॥ पाकपराणां काष्ठानां साक्षादतद्धेतुत्वादिति यावत्। अभिधातृत्वा-

---

1. पृ. 186 प. 1 2. पृ. 186 प. 6 3. सामर्थ्यमुक्तपदा
4. प्राधान्या 5. तत्कार्योपगमादपि

स्मारकत्वादितरदस्तीति चेत्, न; तत्प्रमितिशेषभावस्य तात्पर्यस्य शब्दधर्मस्य काष्ठेषु व्यभिचारायोगात्। नापि स्मारकत्वमेवाभिधातृत्वम्; तथासति शब्द-सन्दर्शनसमुद्बुद्धसंस्कारादेव स्मृत्युपपत्तौ पदस्याबोधकत्वप्रसङ्गात्॥

॥ लक्ष्यार्थसंसर्गवत् शक्यार्थसंसर्गोऽपि न पदार्थ इति शङ्का, लक्षणाया अर्थधर्मत्वाभावात्पदधर्मत्वस्यैव युक्तत्वाचैकरूप्यं पदपक्ष एवेति तत्समाधानं च॥

अथोच्येत—पदार्थव्यतिषङ्गावस्थापरतया प्रयुक्तपदनिकुरुम्बकप्रतिपादित-पदार्थव्यतिषङ्गावस्थामन्तरेणापर्यवस्यन्तस्तां क[ल]क्षयन्ति, लक्षितव्यतिषङ्गस्यानन्य-लभ्यत्वाभावान्न तत्र पदवृन्दस्य शक्तिः कल्पनामर्हति—इति, तदपि न चारु; लक्षणायाः पदवृत्तेरर्थेष्वसम्भवात्, लक्षणाव्यापकवैकल्याच्च। तथाहि—मुख्यार्थ-परिग्रहे मानान्तरविरोधे सति तदविनाभूतार्थान्तरे वृत्तिर्लक्षणा॥

॥ मुख्यार्थपरिग्रहे मानान्तरविरोधो न लक्षणाव्यापकः, मासाग्निहोत्रे व्यभिचारादिति शङ्का, तत्रापि तद्व्यापकत्वोपपादनेन तत्परिहारश्च॥

अथ—नेदं लक्षणालक्षणम्; अव्यापकत्वात्। तथाहि—कुण्डपायिनामयने

---

दित्यस्यासिद्धिमाह—**अभिधातृत्वं त्विति**॥ तात्पर्यस्वरूपं ईरयन् परिहरति—**नेति**॥ **अबोधकत्वप्रसङ्गादिति**॥ पदार्थधीहेतुत्वमपि न स्यात्; तस्याः संस्का-रादेवोपपत्तेरित्याशयः॥

"अनन्यलभ्यः शब्दार्थः" इति न्यायाश्रयेण शङ्कते—**अथेति**॥ व्यति-षङ्गावस्था=संसर्गावस्था। विशिष्टार्थप्रयुक्तानि समभिव्याहृतिंजनयइ[न्ती]तिन्यायादि-त्यर्थः। पदार्थव्यतिषङ्गेऽवगते तात्पर्यस्यावगमः, अनवगते वा। आद्ये वाक्यार्थस्यावग महेतोरन्यस्याभावात्पदादेव तदवगतिः स्यात्, लक्षणावैयर्थ्यं च। द्वितीये तात्पर्यमेव-नावगम्येत, विशेषणानवगमे तद्विशिष्टपदतात्पर्यावगमायोगादिति परिहरति—**तद-पीति**॥ लक्षणामूरीकृत्योक्तम्, सापि न संभवतीत्याह—**लक्षणाया इति**॥ रूढ्यादिवल्लक्षणायाः पदधर्मत्वादित्याशयः॥

लक्षणावृत्तेरर्थधर्मत्वाङ्गीकारेऽपि नात्र तत्संभवः, इत्याह—**लक्षणाव्यापकेति**॥

लक्षणायां सर्वत्र मुख्यार्थे मानान्तरविरोधस्यानुगमात् कथमव्यापकता? अत्राह—**कुण्डपायिनामयन इति**॥ सत्रविशेषे। मासमिति द्वितीया "कालाध्व-

"मासमग्निहोत्रं जुहोती"ति, तल्लक्षणायां भाषितलक्षणाभावात्। "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोती"ति श्रवणात् प्रसिद्धाग्निहोत्रे चोपसदामभावात् कर्मान्तरेऽ-[1]ग्निहोत्रशब्दः प्रसिद्धाग्निहोत्रसाधर्म्याल्लक्षणया वर्तते। नच तत्र मानान्तरविरोधः; तदर्थस्य मानान्तरागोचरत्वादिति—मतम्; तदसत्, यतस्तत्रापि स्वरसतोऽग्निहोत्र-पदस्य नैयमिकाग्निहोत्रगोचर[2]त्वस्थितौ प्रक्रियाप्रमाणेन कर्मान्तरग्राहिणा विरोधादेव नैयमिकाग्निहोत्रं विहायैकस्यानेकशक्तिकल्पनागौरवपरिहाराय मुख्याग्निहोत्रसादृश्य-मादाय कुण्डपायिनामयनगतकर्मान्तरे वर्ततेऽग्निहोत्रपदम् ॥

॥ प्रमाणत्वेन प्रमाणविरोध एव लक्षणा, न तु लौकिकप्रमाणमात्रविरोध इति शाबरभाष्योपपादनम् ॥

यथाहुः—"तदिह षड्विधः कर्मभेदः-शब्दान्तरम्, अभ्यासः, संख्या, गुणः, प्रक्रिया, नामधेयम्—"इति। न हि लौकिकप्रमाणविरोधमेव लक्षणालक्ष्माचक्ष्महे।

---

नोरत्यन्तसंयोगे" इत्यधिकरणे। वाक्यान्तरप्राप्ताग्निहोत्रानुवादेन मासाख्यगुणविधि-परत्वाद् नात्र लक्षणेति, अत्राह—**उपसद्भिरिति** ॥ कालस्यानुपादेयस्याविधेय-त्वान्न गुणविधिः, उपसच्छब्दवाच्यानामिष्टीनां च नैयमिकाग्निहोत्रेऽभावात् कर्मान्तरत्वे स्थिते, एकस्य शब्दस्यानेकार्थस्यापन्यायत्वात् प्रसिद्धाग्निहोत्रे[त्र] सादृश्यं देवतादिसारूप्यमूरीकृत्य लक्षणया वर्तत इत्यर्थः। **मानान्तरागोचरत्वादिति** ॥ विध्यर्थस्य भावनाया, नियोगस्य वा प्रत्यक्षाद्यविषयत्वादित्यर्थः। तत्रापि मुख्यार्थ-परिग्रहे प्रकरणविरोधस्य लक्षणामूलत्वाद् नाव्याप्तिः, इत्याह—**तदसी[सदि]ति** ॥

प्रकरणस्य कर्मभेदप्रमाणत्वे शा ब र भाष्यं भाषते—**यथेति** ॥ कर्म भिद्यते-ऽनेनेति कर्मभेदा[दः=]भेदकं प्रमाणमित्यर्थः ॥

अपुनरुक्तः शब्दः शब्दान्तरम्—'यजति' 'ददाती'त्यादि। एकस्यैव पुनः श्रुतिरभ्यासः—"समिधो यजति" "बर्हिर्यजती"त्यादि। "सप्तदश प्राजापत्यान् पशूनालभते" इत्यादिका सङ्ख्या। "वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि"त्यादि गुणः। "अथैष ज्योतिः" "सर्वज्योतिरि"त्यादि नामधेयम्। प्रत्यक्षादिविरोधस्य लक्षणालक्षणत्वात्तस्येहाभावादव्यापकत्वम्, अत्राह—**न हीति** ॥ तथाप्यव्यापकम्; 'दण्डिनो यान्ती'ति दण्डिपदेनैकदेशवाचिना दण्ड्यदण्डिसमूहस्य

---

1. सतोग्नि (क) 2. गोचरस्थितौ (क)

दण्डिनो गच्छन्तीत्येतस्यामपि च लक्षणायामिदं लक्षणमस्ति । 'दण्डिनः पुमांसो यान्ती'ति दण्डित्वविशेषणाददण्डिनामगमनं मुखतः प्रतीयते। नच विशेषणसामर्थ्यावगतस्यामुख्यत्वम् ; तथासति यागस्य श्रुतस्वर्गकरणत्वसामर्थ्यावगतापूर्वस्याशाब्दत्वप्रसङ्गात् । शब्दसामर्थ्यं शब्द एवान्तर्भूतमिति नायं प्रसङ्ग इति चेत्, तुल्यम् । तत्राध्यक्षविरोधात् श्रुतमात्रं विहाय दण्ड्यदण्डिसमुदायो लक्ष्यते , श्रौतस्मार्तार्थवादवाक्येषु तु देवताधिकरणन्यायेनानधिगताबाधितार्थाधिगमे सति स्वार्थेऽपि प्रामाण्यस्य दुर्वारत्वान्न तत्र लक्षणा ; पश्चात् कैमर्थक्यवशेन विधिना वाक्यैकवाक्यत्वे तदनुपपत्तिविरोधपरिहाय विधिस्तावकत्वमिति हि नो रहस्यम् । नच पदार्थानां मुख्यार्थोऽस्ति, [येन]तत्परिग्रहे मानान्तरविरोधः स्यात् । तदेवमविगीतसकललक्षणासु मानान्तरविरोधो व्यापकतयोपलब्धो विवादगोचराद्धर्मिणो व्यावर्तमानः स्वव्याप्यलक्षणामादाय व्यावर्तते ; धूमध्वज इव व्यावर्तमानो धूमम् ; अन्यथा [1]व्यापकानुपलब्धेर्व्याप्याभावनिश्चयः क्वापि न भवेत् ॥

---

लक्ष्यमाणत्वात्, मुख्यार्थे चाविरोधात्, अत्राह—**दण्डिन इति** ॥ मुख्यार्थस्य परिग्रहे मानान्तरविरोधं दर्शयितुं तमाह—**दण्डिनः पुमांस इति** ॥ श्रुतसामर्थ्यस्य शब्दप्रमाणान्तर्भावाद् नापूर्वस्याशब्दत्वमिति शङ्कते—**शब्दसामर्थ्यमिति** ॥ दण्डित्वविशेषणसामर्थ्यस्यापि शब्दान्तर्भावाद् [द]ण्डिनामांग[मग]मनं मुख्यमेवेत्याह —**तुल्यमिति** ॥ "वर्म वा एतद्यज्ञस्य क्रियते" इत्यादयः श्रौताः,

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥"

इत्यादयः स्मार्ताः अर्थवादाः कर्मप्राशस्त्यं लक्षयन्ति, तत्न मानान्तरविरोधाभावादव्यापकत्वम्, अत्राह—**श्रौतेति** ॥ अर्थवादानां स्वार्थप्रामाण्ये कथं विधिनैकवाक्यत्वम् ? अत्राह—**पश्चादिति** ॥ **वाक्यैकवाक्यत्व इति** ॥ अवान्तरपदानां संबन्धेन स्वार्थं बोधयित्वा, तत्र फलाभावे फलाकाङ्क्षायां फलवता वाक्यान्तरेणैकवाक्यताभजनम्=वाक्यैकवाक्यत्वम्, तच्चोपपद्यते—यदि विधितस्तदर्थप्राशस्त्यबोधनेन प्ररोचनद्वारा प्रवृत्तिहेतुर्न स्यात्, इति तत्रापि लक्षणाबीजं मानान्तरविरोधोऽस्तीत्यर्थः ॥ एवं मानान्तरविरोधस्य लक्षणाव्यापकत्वं प्रतिपाद्य, प्रकृते तदभावमाह—**नचेति** ॥

पदार्थानां मुख्यार्थाभावादलक्षकत्वं चेत, पदानामेव लक्षकता स्यादित्याह—

---

1. व्यापकानुपलब्ध्या

॥ शक्तेरर्थधर्मत्वम्, लक्षणायाः पदधर्मत्वमिति पदार्थवादो वार्तिकविरोधादयुक्तः ॥

अस्तु तर्हि—पदानामेव पदार्थसंसर्गत[परत]या प्रयुक्तानां स्वार्थमात्रपरत्वे वाक्यप्रामाण्यानुपपत्त्या पदार्थसंसर्गलक्षकत्वम्—इति, नायं[यमपि] पन्थाः साधीयान्, वार्तिककारसिद्धान्तविरोधात् ॥

अथ—

"न [[1]विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः ॥"

इति तैरुक्तं पदानां [1]वाक्यार्थलक्षकत्वमिति मतम्, तदसत्; ] सामर्थ्यमिति संसर्गाभिधानस्यैवाभिधानात् ॥

"वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति [नः] स्थिति"रिति

वार्तिकान्तरपर्यालोचनया पदार्थप्रतिपादनद्वारा वाक्यार्थलक्षकत्वं सामर्थ्यमुक्तं गम्यत इति चेत्, हन्त! तस्यैव वार्तिकस्योत्तरार्धेषु—

"तन्मात्रावसितेष्वेषु पदार्थेभ्यः स गम्यते ॥"

इति पदार्थानामेव लक्षकत्वाभिधानविरोधः ॥

"पदार्था गमयन्त्येनं प्रत्येकं संशये सति ।
सामस्त्ये निर्णयोत्पादात् स्थाणुमूर्धस्थकाकवत् ॥

---

**अस्तु तर्हीति** ॥ भाट्टराद्धान्तविरोधेन प्रतिषेधति—**नायमपीति** ॥ **संसर्गाभिधानस्येति** ॥ अन्वितप्रतीतिजननसामर्थ्यस्येत्यर्थः । नालान्विताभिधानमुक्तम्; वार्तिकान्तरविरोधादिति शङ्कते-**वाक्यार्थ इति** ॥ पदानामपि लक्षकत्वं वार्तिकविरुद्धम्, अत्राह—**हन्तेति** ॥ पदार्थानामेव गमकत्वं भाट्टसिद्धान्त इति द्रढयितुं तदीयवार्तिकान्तरं पठति—**पदार्था इति** ॥ एनम् = वाक्यार्थम् । ननु—पदार्थानां वाक्यार्थगमकत्वमयुक्तम्; 'गामि'त्युक्ते गोदोहनानयनादिसंसर्गसन्देहात्, अत्राह—**प्रत्येकमिति** ॥ पदार्थानामैकैकश्येन श्रवणे संसर्गविशेषसंशये सति तेषां सामस्त्ये तन्निर्णयोत्पादात्=संसर्गविशेषनिश्चयात्, यथोर्ध्वत्वकाकनिलयन[यो]र्द्वयोः प्रत्येकं संशयजनकत्वेऽप्यूर्ध्वत्वे सति काकनिलयनत्वं स्थान[णु]त्वनिश्चायकमित्यर्थः ।

---

1. कुण्डलान्तर्गतं नास्ति

तदभावाप्रतीतेर्वा तद्गम्योऽयं भविष्यति ।
श्रोत्राभावः[वा] प्रतीतं हि शब्दं श्रो[श्रौ]त्रं प्रचक्षते ॥"

इति च त्व[त]द्वचनविरोधः ॥

॥ सर्वत्र वाक्यार्थस्य लक्ष्यत्ववादायोगः पदार्थवादे, तत्रानुमानं च ॥

न च गामानयेत्यादौ मुख्यार्थपरिग्रहे मानान्तरविरोधेनापि वाक्यार्थस्य, पदार्थसंसर्गस्य मुख्यार्थसम्बन्धोऽस्ति, येन लक्षणा प्रवर्तेत । प्रयोगोऽपि—विवादाध्यासिता पदवृत्तिः, न लक्षणा, तद्व्यापकविधुरत्वात्; पदार्थेषु पदानां प्र[?]वृत्तिवदिति ॥ नच [1]पदानां संसर्गलक्षकत्वे प्रमाणमस्ति । विवादपदानि[2](पदानि), लक्षणया पदार्थानामन्योन्यान्वयप्रतिपत्तिपराणि, अन्वितप्रतिपत्तिपरत्वे सति पदत्वात्; 'विषं भुंक्ष्वे'त्यादिपदकदम्बकवदित्यस्ति प्रमाणमिति चेत्, न; मुख्यार्थपरिग्रहे मानान्तरविरोधस्योपाधित्वात् । नच [3]साधनस्य व्याप्तिः; इह तदभावात् । नच विशिष्टार्थपरतया प्रयुक्तपदानां स्वार्थमात्रपर्यवसाने वाक्यप्रामाण्यानुपपत्तिः; पदानामन्वितबोधकत्वेना[4]प्युपपत्तेः,—अतः सिद्धमन्विताभिधानम् ॥

---

केवलव्यतिरेकाद्वा वाक्यार्थस्य पदार्थगम्यत्वम्, इत्याह—**तदभावाप्रतीतेः**= पदार्थप्रतीत्यभावे वाक्यार्थस्याप्रतीति[ते]रिति ॥

एवं पदानां लक्षकत्वं वार्तिकविरुद्धमित्युक्तम्, इदानीं लक्षणाबीजमपि नास्तीत्याह—**नचेति** ॥ तर्ककलापस्य विपर्ययापर्यवसायित्वपरिहारायानुग्राह्यं प्रमाणमाह—**प्रयोगोऽपीति** ॥ दृष्टान्तभागे सिद्धसाधनतां परिहरति—**विवादाध्यासितेति** ॥ गौरश्वः पुरुष इत्याद्यनन्विते व्यभिचारं वारयति—**अन्वितप्रतिपत्तिपरत्वे सतीति** ॥ अभिप्रायतात्पर्यवति पुरुषे व्यभिचारः, अत उक्तम्—**पदत्वादिति** ॥ दूषयति—**नेति** ॥ तात्पर्यस्य शब्दधर्मस्यान्यत्रासंभवात् पदत्वादिति विशेष्यांशवैयर्थ्यात्, विषभोजनवाक्यास्यानिष्टगृहभोजननिवृत्तिमात्रपरत्वेन दृष्टान्तस्य साध्यसाधनवैकल्याच्चेत्यर्थः । अनुपपत्तिमात्रं लक्षणाबीजम्, तदिहाप्यस्तीत्युक्तम्, इत्याशङ्क्याह—**नचेति** ॥ विपक्षे बाधवैधुर्यमप्यनेनोक्तमिति मन्तव्यम् ॥

---

1. पदार्थानां (क)
2. कुण्डलान्तर्गतं नास्ति
3. साधनस्यावाप्तिरिह (क)
4. भ्यु (क)

॥ अन्विताभिधानस्यानिर्वचनीयत्वेनोदयनाक्षेपः ॥

आह—किमिदमन्विताभिधानं नाम? न तावदन्वितप्रतिपादनमात्रम्; अविवादात्। अभिहितान्वयवादिनोऽप्यन्वितप्रतिपादनमात्रे संवदन्ते। तदभिधान एव हि ते विवदन्ते। नापि स्वार्थाभिधायास्तत्र तत्र तात्पर्यम्; अविवादादेव। अन्वितप्रतिपादनोद्देशेन पदार्थानभिदधति पदानीत्यत्रापि नास्माकं विवादः। नापि सङ्गतिबलेन प्रतिपादनम्; वाक्यार्थस्यापूर्वत्वात्। तद्यदि व्युत्पत्तिबलेनापि तत्प्रतिपादनम्, तर्ह्यननुभूतो वाक्यार्थो नावगम्येत। नापि पदार्थ[1]विषययैव सङ्गत्या वाक्यार्थप्रतिपादनम्; तस्याः पदार्थप्रतीतिमात्रोपक्षीणत्वात्॥

॥ पदवृत्तेः पदार्थमात्रोपक्षीणत्वेन नान्वयबोधकत्वमिति पक्षनिरासेन पदवादिनः शङ्का तत्परिहारश्चोदयनस्य ॥

अथ स्वार्थसङ्गतिरेव तत्रानुपक्षीणा वाक्यार्थेऽप्युपयोक्ष्यत इत्युच्येत, तर्हि-पदार्थवाक्यार्थप्रतीत्योः [[2]पूर्वापरभावो न भवेत्। यौगपद्याभ्युगमे योग्यतादिप्रतिसन्धानविधुरस्यापि पदार्थप्रत्ययवद् वाक्यार्थप्रत्ययप्रसङ्गात्। नाप्येकस्या एव सङ्गतेः पदार्थवाक्यार्थप्रतीत्योः] क्रमेणैव हेतुत्वम्, काष्ठस्येव ज्वलनपाकयोरिति साम्प्रतम्; तस्याः स्वयमकरणत्वात्, करणानामेवावान्तरव्यापारयोगात्। सङ्गतानि हि तानि

---

अन्विताभिधानं निर्वचनानर्हत्वादयुक्तमित्युदयनश्चोदयति—**आहेति**॥ अन्वितप्रतिपादनं वा, स्वार्थाभिधायाः तत्र [2]तात्पर्यं वा, सङ्गतिबलेन तत्प्रतिपादनं वेति विकल्पयति—**किमिति**॥ आद्यं दूषयति—**नेति**॥ **मात्रमिति**॥ शक्त्या प्रतिपादनम्, तात्पर्येण वेत्यविवक्षितविशेषादित्यर्थः। द्वितीयं दूषयति—**नापीति**॥ शब्दस्य स्वार्थधीजननव्यापारोऽभिधा। अन्वितस्य सङ्गतिगोचरत्वेनावगतेर्वाक्यार्थः किं नावगम्येत, अत्राह—**तद्यदीति**। सङ्गतिसंवेदनसमय एव वाक्यार्थस्य पदार्थवदवसितत्वादित्याशयः॥

पदार्थप्रतीतिमात्रोपक्षीणत्वहेतोरसिद्धिं शङ्कते—**अथेति**॥ सङ्गतिरपर्यायमेव वाक्यार्थप्रतीतिं कुर्यात्, पर्यायेण वेति विकल्प्य, आद्यं दूषयति—**तर्हीति**॥ स्यात्तर्हि यौगपद्यम्, अत्राह—**यौगपद्येति**॥ अवगतपदार्थो हि तेषां योग्यतादि

---

1. विषयैव सङ्गत्या
2. कुण्डलितो भागः कपुस्तके नास्ति।

पदानि करणम् । [ननु] सन्तु पदानि करणम्, तथापि[पि]वाक्यार्थप्रतिपादनानुगुणसङ्गतिशालीनि तानि तथा, न तु केवलानि । ततश्च सङ्गतिरपि[1] करणशरीरानुप्रवेशी[शि]न्येवेति—चेत्,

॥ पदवृत्तेर्मीमांसकदृष्ट्याऽऽकृतिपरत्वम्, उदयनदृष्ट्या व्यक्तिविषयत्वम्, न तु संसर्गपरत्वमिति पूर्वपक्षोपपादनम् ॥

न तावद्वाक्यार्थप्रतिपादनानुगुणता सङ्गतेः; मीमांसकरीत्या पदार्थाश्रयत्वेन सामान्यगोचरत्वात्, अस्मद्दृष्ट्या सामान्यवद्व्यक्तिविषयत्वम्, नतु संसर्गगोचरत्वम् । पदार्थविषयत्वेऽपि सङ्गतेर्वाक्यार्थप्रतिपादनानुगुणव्यापारवत्त्वेन[2] तदानुगुण्यमपि न शक्यशङ्कम्; स्वयमकरणत्वादित्युक्तत्वात् । का[क]रणानामपि पदानां पदार्थप्रतिपादनरूपावान्तरव्यापारस्य संगत्यधीनत्वात् । [3]तस्यास्तदनुगुणत्वे न नो विवादः । योग्येतरान्वित एवार्थे सङ्गतिरित्यभिधानादस्त्येव विवाद इत्यपि रिक्तम्, वाक्यार्थस्य[ा]पूर्वत्वात्प्रतीतिक्रमानुपपत्तेश्चेत्युक्तत्वात् ॥

॥ अन्विते सङ्गतिग्रहस्य विकल्प्य निरासेनोदयनमतोपसंहारः ॥

किञ्चान्विते सङ्गतिग्रह इति कोऽर्थः? यदि [4]यत्र व्युत्पत्तिः, तद् वस्तुगत्या पदार्थान्तरान्वितमिति, न किञ्चित् प्रकृतोपयोगि । न हि यत्र चक्षुस्सामर्थ्यमवगतम्,

---

प्रतिसन्धातुं क्षमत इति भावः । पदानां करणत्वमूरीकृत्य सङ्गतेः करणकोटिप्रवेशं दर्शयितुं शङ्कते—**नन्विति** ॥

संसर्गावगमानुगुण्यं सङ्गतेः स्वरूपेण, तदनुगुणव्यापारवत्तया वा । नाद्य इत्याह—**न तावदिति** ॥ **पदार्थाश्रयत्वेनेति** ॥ पदार्थविषया सङ्गतिरित्यविवादपदम्—आकृतिः पदार्थ इति मीमांसकाः । आकृतिर्व्यक्तिरपीति तार्किकाः । मतद्वयेऽपि न संसर्गगोचरत्वमित्यर्थः । द्वितीयं दूषयति—**पदार्थेति** ॥ अस्तु पदार्थानामेव करणत्वादवान्तरव्यापारः, स तु सङ्गत्यधीनः, इति वाक्यार्थप्रत्ययानुगुणत्वं तस्या इति, अत्राह—**करणानामपीति** ॥ आकाङ्क्षादित्रयापेक्षार्थान्तरान्विते सङ्गतिरिति ब्रूमः । अतोऽस्त्येव विवादः, अत्राह—**योग्येति** ॥

अर्थानुपपत्तिमुक्त्वा प्रमाणानुपपत्तिं वक्तुमुपक्रमते—**किञ्चेति** ॥ प्रकृतो-

---

1. रपि (क) 2. त्त्वे (क)
3. तस्य तदनु (क) 4. तत्र

तद्वस्तुगत्या स्पर्शवदिति तद्वक्ता[त्ताऽ]पि [1]तस्य विषयः । अथान्विततयैव तत्र व्युत्पत्तिरित्यर्थः, तन्न; प्रमाणाभावात् । अन्विताथप्रतिपत्त्यन्यथानुपपत्तिरिति चेत्, न ; अनन्विताभिधानेऽप्याकांक्षादिमत्पदार्थप्रतिसन्धानादप्युपपत्तेरिति ॥

॥ योग्येतरत्वोपलक्षितार्थे गृहीतसङ्गतीनां पदानां पदान्तरसमभिव्याहृतानां विवक्षितसंसर्गबोधकत्वान्नान्विताभिधानविरोधः ॥

[2]अत्राभिधीयते—यत्तावद्विकल्पितम्—किमिदमन्विताभिधानं नामेत्यादि, तद्योग्येतरसंसृष्टार्थे गृहीतसङ्गतिकानां पदाना[3]मपि[न्वित]प्रतिपादनमन्विताभिधानमिति प्रतिपादनेनापहस्तितम् । [4]अन्विते गृहीतसङ्गतिकानामन्वितप्रतिपादने वाक्यार्थस्यापूर्वत्वं न स्यात्, सङ्गतिसमयमेव तस्य विदितत्वादित्युदितमेव दूषणमिति चेत्, नैतत् सारम् ;, धूमजातीयं दहनजातीयेनाविनाभूतमित्यविनाभावानुभवे जात्युपहितमर्याय[दयाऽ]शेषविशेषदर्शनेऽपि शिखरिशिखरादिप्रदेशविशेषे बहुलोर्ध्वपाण्डरधूमदर्शनात् तथाविधभास्वररूपोष्णावयविदहनसंवेदनमुदीयमानं नानुवादो भवितुमुत्सहते, [5]तथा [6]योग्येतरत्वोपलक्षितार्थमात्रसंसर्गे विदितसंगतीनां पदानां पदान्तरसमभिव्याहृतानां तद्विशेषसंसृष्टस्वार्थप्रतिपादने नानुवादकता ; अन्यथा व्याप्तिसंवेदनसमयमशेषव्यापकविशेषाणामवगमादनुमापि सिद्धसाधनतयाऽऽभासः स्यात् ॥

॥ संसर्गे सङ्गतिग्रहो न मीमांसकमते, न वो द य न मत इति शङ्कायाः स्वसिद्धान्तविरोधात्परिहारः, अन्विततयैवार्थे सङ्गतिग्रहात्, तत्रापि वाक्यार्थापूर्वत्वादेः सूपपादत्वात् ॥

[7]यत्त्विदमगादि—संगतेरपि मीमांसकरीत्या पदार्थविषयत्वेन जातिमात्र-

---

पयोगि=अन्विताभिधानानुगुणम् । यत्र=रूपवति । अन्विते सङ्गतिग्रह इत्यस्य प्रकृतोपयोगिनमर्थान्तरमाशङ्कते—**अथेति** ॥

इतरविशेषसंसर्गस्येदानीं[नीम]प्रतीयमानत्वाद्वाक्यार्थस्यापूर्वत्वमिति दृष्टान्तपूर्वकं परिहरति—**नैतत्सारमिति** ॥ अर्थमात्रत्वोपहितमर्यादया तद्विशेषस्यापि प्रागेव स्फुरणात् स्यादेवानुवादकता, अत्राह—**अन्यथेति** ॥

---

1. तस्या विषय ; (क)
2. पृ. 208. प. 2
3. "अपि प्रतिपादनं" इति नास्ति
4. पृ. 209 प. 4
5. तथा कपुस्तकेऽधिका
6. योग्येतरेत्वालक्षितार्थं (क)
7. पृ. 209. प. 5.

गोचरत्वम्—इति, तदसत्; इतरसंसृष्टस्वार्थे सङ्गतिग्रह इत्यस्मत्समयत्वात् । [1]यत्पुनर्योग्येतरान्वित एव सङ्गतिरित्यङ्गीकारे वाक्यार्थस्यापूर्वत्वप्रतीतिक्रमयोरनुपपत्तिः—इत्युदितम्, तदपि न ; दहनत्वोपलक्षितैर्धूमत्वोपलक्षितानामविनाभावग्रहेऽपि यथा नानुमानस्य सिद्धसाधनता, नापि व्याप्तिसंवेदनानुमानयोः क्रमानुपपत्तिः, तथा प्रकृतेऽपीति दत्तोत्तरम् ॥

॥ अभिहितान्वयवादे वाक्यर्थस्याशाब्दत्वापत्त्याऽन्विताभिधानवादस्यै-
वौचित्यमिति पदवादोपसंहारः ॥

[2]यदपि यत्र व्युत्पत्तिः, तद्वस्तुगत्या पदार्थान्तरान्वितम्, [3]उता[न ?]न्वित-तयैव तत्र व्युत्पत्तिरिति विकल्पितम्, तत्रान्त्यमूरीकुर्महे । नच प्रमाणाभावः; अन्वितार्थप्रथाऽन्यथानुपपत्तेस्तत्त्वात् । [4]नाप्यनन्विताभिधाने योग्यतादिप्रतिसन्धानादप्युपपत्तिः ; तथासति संसृष्टप्रतीतेरशाब्दत्वप्रसङ्गात् ॥

॥ अभिहितान्वयवादस्यानिर्वचनीयत्वेन निरासः ॥

कश्चायमभिहितान्वयो नाम ? न तावदभिहितानामन्वयः; क्रियाकारकादिभावेन पदार्थानां प्रागप्यन्वितत्वात् । नाप्यभिधानोत्तरकालमन्वयप्रतीतिः ; शब्दसामर्थ्यनिबन्धनत्वेऽन्विताभिधानात्, अर्थशक्तिनिबन्धनत्वे ‘ कुठारेण वृक्षं छिनत्ती’

---

पदाभिहितपदार्थानामाकाङ्क्षादित्रयवत्तया प्रतिसंहितानामन्वयप्रतिपादकत्वादन्यथोपपत्तिः, अत्राह—**नाप्यनन्विताभिधान इति** ॥ कुत एतत्, अत्राह—**तथा सतीति** ॥ पदार्थप्रतीतेः स्मृतेरप्रमाणत्वात्, वाक्यार्थप्रतीतेरशब्दकार्यत्वात्, शब्दावगतार्थजत्वेन शाब्दत्वे [प्रत्य]क्षावगतलिङ्गजन्यानुमाया अपि प्रत्यक्षत्वापाताच्छब्दप्रामाण्यहानिरित्यर्थः ॥

अभिहितान्वयमभ्युपगम्य दूषणमभाणि । संप्रति स एव न निरूपणसरणिमधिरोढुमर्हतीत्याह—**कश्चेति** ॥ अनन्वितानामभिहितानां पश्चादन्वयो भवतीत्यभिहितान्वयः, उतान्वितानामेव सतां स्वरूपेणाभिहितानां पश्चादन्वयप्रतीतिरित्यभिहितान्वय इत्यर्थः । पश्चादपि भवन्ती संसर्गप्रतीतिः शब्दसामर्थ्यकृता, अर्थसामर्थ्यप्रयुक्ता वेति विकल्प्य क्रमेणापाकरोति—**शब्दसामर्थ्येति** ॥ **संसर्गा-**

---

1. पृ. 210 प. 8
2. पृ. 209. प. 13.
3. उतानन्वितं तयैव स (क)
4. पृ. 210 प. 3

त्यत्र वृक्षेण कुठारो देवदत्तं भिनत्तीत्यपि संसर्गावगमप्रसङ्गः; पदार्थसामर्थ्यानपायात्। यथाहुः—

"नाप्यभिहितानामन्वयः; प्रागप्यन्वयसम्भवात्। अन्वयो हि क्रियाकारकविशेषणादीनामन्योन्यसंसर्गोऽभिधीयते। स च प्रागप्यस्ति। तद् दर्शयति=तत्प्रतिपादनाय वाक्यमुच्चारयति—श्यामः पुरुषः कुठारेण गिरौ महान्तं वृक्षं छिनत्तीति। अभिहितानां पदार्थानां पश्चादन्वयः प्रतीयते, तेनाभिहितान्वय इति चेत्, न; स पुनः किं पश्चादर्थसामर्थ्यात् प्रतीयते? किं वा शब्दसामर्थ्यादिति। यद्यर्थसामर्थ्यात्, तदा श्यामे कुठारः पुरुषं गिरये महता वृक्षेण छिनत्तीत्येवं शब्दैरभिहितानामप्यर्थानां सामर्थ्यादन्वयः प्रमीयेत। [1]न ह्यन्यथाभिधानेन पदार्थानां सामर्थ्यं निवर्तते, अन्यथात्वं वा भवेदि"ति॥

॥ अन्विताभिधाने लाघवाद् वाक्यस्यैव शक्तत्वम्, पदानां तु पदार्थस्मारकत्वमात्रमिति स्यादित्याक्षेपः॥

अत्र कश्चिदाह—

अन्वितस्यैव शक्यत्वे भवेद्वाक्यस्य शक्तता।
औचित्याल्लाघवादैक्यात् क्वचिदप्यनुपक्षयात्॥ २६॥

यदि हि व्युत्पत्तिसमयसिद्धप्रथमावगमानुरोधादन्वितस्यैव शक्यत्वम्, तर्हि तदनु-

---

वगमप्रसङ्ग इति॥ 'कुठारेण देवदत्तो वृक्षं छिनत्ती' त्येवं क्रियाकारकान्वयधीः स्यादित्यर्थः। भाषिते भा स र्व ज्ञ वचनं भाषते—यथेति॥

अभिधानात् प्रागेव सज्ञा[संसर्गा]स्तित्वे किं प्रमाणम्? अत्राह—तद[दि]पी[?]ति। प्रमाणान्तरेण स्वावगतमर्थं परस्मै प्रतिपादनायाप्तानां वाक्यप्रयोगनियमादिति भावः। अन्यथाऽभिधानेन पदार्थानां सामर्थ्यस्यापसारितत्वात्, अन्यथाकृतत्वाद्वा न पूर्ववत्संसर्गावगमः, अत्राह—न ह्यन्यथेति॥ 'इदं रूप्यमि'ति शुक्तिशकलस्य कलधौतपदप्रतिपादनेऽपि नैसर्गिकशक्तेरनवगमाद्वलयकरणादिसार्थ्यादर्शनाच्चेत्याशयः॥

एवं तावदभिहितान्वयासंभवादन्वितस्यैवाभिधानमभ्युपेयमित्यभ्यधायि। तत्र त्वाविर्भाव? क्रारश्चोयइत्य[चोदयति]अत्र कश्चिदिति॥ कारिकापूर्वभागं व्याकरोति—यदीति॥ अयं व्यवहारः, संसृष्टधीपुरस्सरः, संसृ[सृ]ष्टव्यवहारत्वात्;

---

1. नाप्यन्यथाभिधानेन क

रोधाद् वाक्यस्यैव शक्य[क्त]त्वमपि स्यात्। व्युत्पित्सुर्हि प्रयोज्यवृद्धस्य चेष्टमानस्यान्वितधियमनुमाय तत्र पदानां हेतुत्वमवधारयन् प्रथमतोऽनधिगतपदावधित्वाद् न तत्र पदस्य शक्तिमवधत्ते, किन्तु वर्णसमुदायस्यैव; यथा च तथा [तथा च]तादृशप्रथमावगमानुरोधेनान्वितस्यैव शक्यत्वम्, अर्थस्वरूपस्य तु निष्कृष्टस्य स्मार्यत्वम्, इत्यभ्युपगतम्, एवं तेनैव नयेन वर्णसमुदायस्यान्विताभिधानशक्तत्वम्, निष्कृष्टस्य स्वरूपमात्रस्मारकत्वमभ्युपगन्तव्यम्। आवापोद्धापाभ्यामपि सर्वत्रानुयायिना पदतदर्थयोः स्मार्थस्मारकभावेन निष्कर्षमात्रं विधेयम्। एवञ्च पदमात्रं स्वरूपमात्रस्य स्मारकम्, स्वरूपातिरिक्तस्य त्वन्वितस्य पदातिरिक्तं वाक्यमभिधायकमित्यौचित्यं स्यात्। तथाऽनेकेषां पदानामेकत्रान्विते शक्तिकल्पनादेकस्य [1]वाचकत्व[त्व]कल्पनं लघुतरं स्यात्, तथाऽन्वितस्य वाक्याभिधेयत्वे तस्यैकत्वान्नान्वयप्रत्ययावृत्तिप्रसङ्गः। [2]पदाभिधेयत्वे तु तेषामनेकत्वात् प्रतिपदं सापि स्यात्, तथा पदानां पदार्थस्मृताविव वाक्यस्य न कश्चित्प्रक्षयः, इत्यनुपक्षीणस्य तस्यैवान्वितबोधहेतुत्वं युक्ततरम्—इति॥

उच्यते मानविरहाद्वाक्यस्यैव निरूपणात्।
अनौचित्याद्गौरवाच्चायुक्ता वाक्य[स्य]शक्तता॥ २७॥

---

संप्रतिपन्नवदिति संसृष्टधियमनुमान[य] तज्जननसामर्थ्यं बालः पदानामाकलयति। तत् कथं वाक्यस्य शक्तत्वम्? अत्राह—**व्युत्पित्सुर्हीति**॥ **अनधिगतपदावधित्वादिति**॥ वर्णानामेकार्थबीजनकत्वोपाधिकं पदत्वं सङ्गतिसंवेदनसमयेऽनधिगतम्, उत्तरकालत्वात्तद्बीजनकत्वनिश्चयस्येत्यर्थः। फलितमाह—**तथा चेति**॥ **निष्कृष्टस्येति**॥ असंसृष्टस्येत्यर्थः। प्रतिपदमावापोद्धापाभ्यामन्विते सामर्थ्यनिश्चयात् तस्यैव शक्तत्वम्, अत्राह—**आवापेति**॥ पदमात्रावापे तदर्थमात्रावापः, पदोद्धारे तन्मात्रोद्धारः, नान्वितस्येति। एतत्पदमस्य स्मारकमित्येतावदत्र निश्च[श्चे]यमित्यर्थः। लाघवादिति हेतुं विवृणोति—**तथेति**॥ ऐक्यादित्येतत्स्फुटयति—**तथान्वितस्येति**॥ क्वचिदप्यनुपक्षयादित्येतद्विभजते—**तथा पदानामिति**॥ २६॥

---

1. एकस्य वाक्यवाचकत्व कल्पनं
2. तद (क)

[1]अथ यदुक्तम्—अन्वितस्य शक्यत्वे वाक्यस्यैव शक्तता भवेत्—इति, तदयुक्तम्। तथाहि—किं वाक्यस्य शक्तत्वं प्रसाधयसि, प्रसञ्जयसि वा? नाद्यः; अपसिद्धान्तात्। न द्वितीयः; अन्वितस्य शक्यत्वे वाक्यस्य शक्तत्वप्रसङ्गः; तस्माद् न पदानामन्विते शक्तिरिति विपर्यये प्रमाणाभावेनापर्यवसानात्। अपि चैकार्थधीजनकत्वोपाधौ वर्णानां [2]पदभाववदनेकसंसृष्टधीजनकत्वोपाधौ पदानामेव वाक्यभावसम्भवेन[न]तदतिरिक्तवाक्यसद्भावे प्रमाणमस्ति। प्रयोक्तारो हि व्यवहारार्हमितरेतरसंसृष्टमर्थं प्रतीत्य परप्रतिपत्तये प्रयुञ्जते, [3]व्युत्पत्तापि परचेष्टां दृष्ट्वा विशिष्टधियमनुमाय तत्तत्पदसामर्थ्यं व्युत्पद्यते। यद्यपि विशेषसंसर्गव्यभिचारः; तथापि प्रथमावगतशक्तिगोचरसंसृष्टमात्रस्याव्यभिचारात्, तत्परिहारेण पदपदार्थयोर्निष्कृष्टयोः स्मार्यस्मारकभावसम्बन्धकल्पनायाः पदस्याबोधकत्वप्रसङ्गेनानुचितत्वाच्च, पदानामर्थमात्रधीसामर्थ्यं परिकल्प्य पुनर्वाक्यतत्सामर्थ्यकल्पनागौरवाच्च॥

॥ शिशो! अर्भक! बालेत्यादिबहुसंबोधनघटितानां गामानयेत्यादीनामनेकवाक्यानां बहुशक्तिकल्पना पदार्थवादे, पदवादे तु ततो न्यूनकल्पना॥

अपरे पुनरपरथा गौरवं वर्णयन्ति—'शिशो गामानय', 'गां बधान', 'अर्भक गामानय', 'गां बधान', 'बाल गामानय', 'गां बधान', 'माणवक गामानय', गां [4]बधानेत्यष्टानां प्रयोगाणामष्टौ वाक्यानि, तच्छक्तयश्च कल्पयितव्याः, पदवादिनस्तु—सप्तैव। तथा 'शुक्लामि'ति पदान्तरप्रयोगे वाक्यभेदात्

---

मानविरहादित्येतद् व्याख्याय, वाक्यस्यैवानुरोहीति[निरूपणादिति व्याख्याति—**अपिचेति**॥]'गामानये'त्यत्रानयनान्वितं गोपदस्याभिधेयम्, 'गां बधाने'त्यत्र तु बन्धनान्वितमित्य[न्]वयप्रतियोगिनामानन्त्याद्व्यभिचाराच्चान्वयस्यानन्त्यव्यभिचाराभ्यां न शक्तिगोचरत्वम्, इत्याशङ्क्याह—**यद्यपीति**॥ **गौरवाच्चेति** इत्येतद्व्यनक्ति—**पदानामिति**॥

शब्दनिर्णयकृतां परिहारप्रकारमीरयति—**अपरे पुनरिति**॥ **सप्तैवेति**॥ पदानां सप्तत्वादित्यर्थः। गौरवान्तरमाह—**तथेति**॥ 'शिशो शुक्लां गामनये'त्येवं शुक्लशब्दप्रश्लेषेण पूर्वप्रयुक्तवाक्यानां प्रयोग इत्यर्थः। ऐक्यात् क्वचिदप्यनु-

---

1. पृ. 212. प. 14.
2. पदभाववदनेकार्थसंसृष्टार्थधी
3. व्युत्पत्तापि परचेष्टा
4. बधानेत्यादीनां (क)

पुनरष्टौ वाक्यानि, तच्छक्तयश्च कल्पयितव्याः, [1]पदवादिनस्त्वेकैव शक्तिरिति। एवञ्चैक्यानु[2]पक्षयौ प्रत्यादिष्टौ। तस्मादाकांक्षादिविशिष्टपदानामेव विशिष्टधीसामर्थ्यम्। तत्र यथा व्यवधानस्य [3]सम्बन्धविरोधात् सन्निधि[4]रपि अ[?]सम्ब[5]न्धहेतुः, तथा [योग्यताराहित्ये सति 'वह्निना सिञ्चिदि'त्यादावसम्बन्धाद् योग्यतापि हेतुः । [6]सति सन्निधौ सत्याञ्च] योग्यतायाम्—'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामि'त्यत्र राजपदस्य पुत्रपदसम्बन्धेन निराकाङ्क्षस्य पुरुषपदेनासम्बन्धादाकाङ्क्षाऽपि हेतुः तदेवमन्विताभिधानमेव युक्तमित्**याचार्याः**। तथाचाहुः—

"पदैरैवान्वितस्वार्थप्रतिपादनशक्तिभिः।
गुणप्रधानभावात्मा संसर्गः प्रतिपाद्यते॥"

इति। **भगवता भाष्यकारेणा**प्यभाषि—"नच तद्गतानां पदार्थानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्त''ति। पदार्थविवक्षायान्तु 'तद्गतानामि'ति "सदेवे''त्यादि वाक्यगतत्वमभिधीयमानं विरुध्येत; पदानामेव

---

पक्षयात् इति परिशिष्टपूर्वपक्षबीजद्वयं प्रत्यादिष्टमित्याह—**एवञ्चेति**॥ पदातिरिक्तवाक्यान्वये वाक्यानेकत्वस्योक्तत्वात् प्रतिवाक्यं प्रत्ययावृत्तेः, तथा वाक्यप्रतीत्यनन्तरं योग्यतादिप्रतिसन्धानवैधुर्येऽन्वितबोधासिद्धेः, तत्प्रतिसन्धाने वाक्यस्योपक्षयादित्यर्थः॥ २७॥

पदानामेवान्वितशक्तिरस्तु, किमाकाङ्क्षादिविशिष्टत्वेन? अत्राह—**तत्रेति**॥ 'व्यवहारे भाट्टनय इति स्वीकारादन्विताभिधानप्रतिपादनं सिद्धान्तविरुद्धम्, अत्राह—**तदेवमिति**॥

व्यवहारे भाट्टनय इति नेदं मानवं दृष्टम्, नापि युक्तम्; अन्यथाऽख्यातिविश्वनित्यत्वात्मानैक्यपरिणामिज्ञानानुमेयत्वादेरपि प्रमाणविकलस्य स्वीकार्यत्वापातादिति भावः। गुणप्रधानभावात्मा=विशेषणविशेष्यभावेन गुणप्रधानरूप इति यावत्। पदार्थानां समन्वय एवाभिहितस्तत्रेति, अत आह—**पदार्थेति**॥

---

1. ऐकैव क
2. पक्षया
3. सम्बन्धिवि
4. "अपि" नास्ति
5. द्ध।
6. कुण्डलान्तर्गतं नास्ति

वाक्यगतत्वात्, पदार्थानां [1]वाक्याश्रितत्वाभावात्, वाक्यबोधितत्वाभावाच्च। **पदार्थानामिति** ॥ पदवाच्यानामित्यर्थः ॥ पदस्फोट[2]निराकरणार्थमर्थग्रहणमप्यविरुद्धम् ॥

तस्मादन्यान्वितस्वार्थमात्रप्रत्यायनक्षमाः।
शब्दा इत्यवसातव्यं विना कार्यार्थसङ्गतिम् ॥ २८ ॥

**॥ इति न्यायचन्द्रिकायामन्विताभिधानवादस्तुरीयः समाप्तः ॥**

---

वाक्यगतत्वम्=वाक्यबोधितत्वम्, गत्यर्थानां ज्ञानार्थत्वात्, अत्राह—**वाक्यबोधितत्वेति** ॥ तथापि गौरवम्, अत्राह—**पदेति** ॥ वादार्थोपसंहारेणोत्तरवादपातनिकां करोति—**तस्मादिति** ॥ २८ ॥

**॥ इति न्यायचन्द्रिकाव्याख्यायामन्विताभिधानवादस्तुरीयः समाप्तः ॥**

---

1. वाक्याश्रितत्वाभावात् वाक्यबोधितत्वाभावाच्च पदार्थानामिति
2. निरासार्थं

## ॥ अथ सिद्धार्थे वेदप्रामाण्यवादः पञ्चमः ॥

॥ कार्यमेव, न त्विष्टसाधनत्वमर्थ इति वादस्य संग्रहश्लोकः ॥

वेदार्थः कार्यरूपं तदपि नरकृतेरीप्सितं कार्यमाहुः
सर्वेषां कार्यबोधाद् व्यवहृतिरखिला नेष्टसम्बन्धबोधात् ।
कार्यार्थाऽतः प्रमाणं श्रुतिरनतिशयानन्दरूपे प्रतीचि
प्रामाण्यं नैव युक्तं श्रुतिशिरस इति प्राह शिक्षाविशेषात् ॥ २९ ॥

॥ पदानामितरेषां कार्यान्वितस्वार्थपरत्वम्, लिङादीनान्त्वितरसंसृष्ट-कार्यपरत्वं च वृद्धमध्यमव्यवहारवशेनोपपादयति ॥

[1]इह हि कश्चित् कार्यस्यैव प्रवर्तकतामाचक्षाणः प्रवर्तकवाक्येष्वेव सङ्गतिग्रहं नियमयन् तदनुरोधेन कार्यान्वितस्वार्थाभिधानमितरेषाम्, अर्थान्तरान्वितकार्या-

---

## ॥ अथ सिद्धाऽर्थे वेदप्रामाण्यवादः पञ्चमः ॥

विना कार्यार्थसङ्गतिमित्युक्तम्, वृद्धव्यवहारे कार्यसङ्गतेः सकलपदानां सङ्गति-संवेदनात्, लोकावगतसङ्गतिकानां वेदे बोधकत्वात् सोऽपि कार्य एव प्रमाणम्, न तु प्रत्यगात्मनीति प्रत्यवतिष्ठते—**वेदार्थ इति** ॥ अन्वितमात्रे सर्वत्राव्यभि-चारिणि लघौ प्रयोजके संभवति कार्येण तस्य विशेषणं किंकृतम्? अत्राह—**शिक्षाविशेषादिति** ॥ तदीयदर्शनाभ्यासाहिताभिनिवेशादित्यर्थः ॥ २९ ॥

इष्टसाधनन[ता]बोधस्य प्रवर्तकत्वात् प्रवृत्याऽनुमीयमानशब्दार्थसंबन्धो न कार्यसंबद्धगोचरः स्यात्, अत्राह—**इहेति** । इतरेषाम्=विधिपदातिरिक्तानाम् । 'महति कानने शतं हस्तिनो धावन्ती' त्यत्र प्रसिद्धार्थपदसमभिव्याहारादप्रसिद्धार्थ-सङ्गतिसंवेदनात् कथं प्रवर्तकवाक्य एव सङ्गतिग्रहः शक्यनियमः? अत्राह—

---

1. टिप्पणी—

अज्ञातसङ्गतित्वेन शास्त्रत्वेनार्थवत्तया ।
मननादिप्रतीत्या च कार्यार्थाद्ब्रह्मनिश्चयः ॥

इति भामतीकारिकार्थोपपादनेन पूर्वपक्षोपक्रमः ।

भिधानञ्च लिङादीनां वर्णयाञ्चकार। तथाहि—'चैत्र चन्दनमाहरे'ति प्रयोक्तृपुरुषवचननिचयश्रवणसमनन्तरभाविनीं चैत्रचेष्टां दृष्ट्वा पार्श्वस्थो व्युत्पित्सुरेवमनुमिमीते—प्रेक्षापूर्विका, इयमस्य प्रवृत्तिः, स्वतन्त्रप्रवृत्तित्वात्, मदीयप्रवृत्तिवदिति। स्वात्मनि च प्रमाणान्तरपुरस्सरप्रवृत्तिषु कार्यप्रतीतेः प्रवर्तकत्वमधिगतम्—'स्नानं कार्यम्', 'पानं कार्यमि'ति। ततश्चात्मनि दर्शनेन तदीयप्रवृत्तेरपि कार्यप्रतीतिकार्यतां परिकल्प्य, तस्याश्च कादाचित्कतया कारणगवेषणेऽन्वयव्यतिरेकाभ्यां वचननिचयस्य कार्यधीसामर्थ्यमध्यवस्य प्रयोगभेदेषु प्रतिपदमावापोद्वापाभ्यां कार्यविशेषसंसर्गव्यभिचारेऽपि तन्मात्रसंसर्गाव्यभिचारात् चन्दनादिपदानां कार्यसंसृष्टार्थसामर्थ्य(म्), कार्यपदस्यार्थान्तरसंसृष्टकार्येऽध्यवस्यति॥ यथाह **भवनाथः**—"पार्श्वस्थो व्युत्पित्सुः शब्दश्रुत्यनन्तरजां चेष्टां दृष्ट्वा तद्विषयां प्रयोज्यगतां कार्यधियमवधारयन्नावापोद्धारभेदात् कार्यपरान्वितस्वार्थाभिधानेऽन्येषाम्, लिङादेस्तु कार्याभिधाने व्युत्पद्यते"—इति॥

॥ साध्यसाधनेतिकर्तव्यताविशिष्टार्थभावनाशब्दभावनोभयबोधकत्वमेव लिङादीनाम्, न तु कार्यार्थत्वमिति भाट्टमतेन पूर्वपक्षेऽवान्तरशङ्का॥

अत्र केचिदाहुः—शब्दव्यवहारे शब्दभावनैव प्रवृत्तिहेतुः, तत्राभूतप्रादु-

---

**तथाहीति**। कार्यसंसृष्टेऽवगतसामर्थ्यैतरपदानुरोधेन तस्यापि कार्यान्वयपरत्वाद् न क्वापि कार्यमन्तरेण सङ्गतिसंवेदनमित्याशयः॥

परपक्षप्रतिक्षेपेण स्वपक्षं द्रढयितुं भाट्टपक्षमुपक्षिपति—**अत्र केचिदिति**॥ कार्यातिरेकिणी भाव[ना]नैव; अर्हणा[लक्षणा]निरूपणात्—कथं तस्याः प्रवर्तकत्वम्? अत्राह—**तत्रेति**॥ अभूतस्य=अनिष्पन्नस्य, प्रादुर्भावः=निष्पत्तिः, फलं यस्य, तदभूतप्रादुर्भावफलम्। तदनेन भाव्यनिष्ठत्वमुक्तम्। करोत्यर्थमात्रत्वमिति भावकव्यापारत्वमुक्तम्। अभूतप्रादुर्भावफलमित्युक्ते धात्वर्थेऽतिव्याप्तिः, अत उक्तम्—**करोत्यर्थमात्रमिति**॥ **करोत्यर्थमात्र**मित्युक्ते सामान्यस्यापि करोतिशब्दाभिधेयस्य भावनात्वप्रसक्तिं वारयति—**अभूतप्रादुर्भावफलमिति**॥ करोत्यर्थः=प्रयत्नः, स भावनेत्युक्तेऽचेतने शब्दे तदसंभवाच्छब्दभावनायामव्याप्तिः,

भावफलं करोत्यर्थमात्रं भावना। तत्र चार्थव्यापारोऽर्थभावना, शब्दव्यापारस्तु स्वाभिधेयज्ञानजननलक्षणः शब्दभावना ॥

॥ भावनाया अंशत्रयोपपादनम् ॥

सा च शब्दकर्तृकार्थज्ञानभाव्यनिष्ठा शब्दज्ञानकरणिका सम्बन्धज्ञानसंस्कारेतिकर्तव्यताका च सर्वशब्दानामविशेषवती, लिङादिशब्दे तु भिद्यते। सा हि लिङादिकर्तृकार्थभावनालक्षणपुरुषप्रवृत्तिभाव्यनिष्ठा स्वज्ञानकरणिका स्तुतिनिन्दार्थवादादिविज्ञानेतिकर्तव्यताका च समाश्रीयते ॥

॥ अर्थभावनाया लिङर्थत्वोपपादनम् ॥

एवं तर्ह्यर्थभावनायाः कथं [1]लिङभिधेयतेति चेत्, उच्यते; 'पाकं करोती'ति

---

अत उक्तम्—मात्रमिति ॥ पूर्वापरौदासीन्यप्रच्युतिरूपो भावकस्य व्यापारः करोत्यर्थो विवक्षितः, नतु प्रयत्न एवेति भावः ॥

सा द्वेधा अर्थभावना, शब्दभावना चेति। तथा[त्रा]र्थभावनां लक्षयति—**तत्रेति** ॥ इतरस्या लक्षणमाह—**शब्देति** ॥ निरवयवस्य शब्दस्य व्यापाराभावादसंभवो लक्षणस्य, अत्राह—**स्वाभिधेयेति** ॥ ज्ञानरूपकार्यलिङ्गकल्पित इत्यर्थः ॥

अङ्गत्रयरहितत्वादस्याः कथं लिङादौ प्रतिपन्नार्थभावनाप्रवर्तकत्वम्? अत्राह—**सा चेति** ॥ लिङादिशब्दभावनापि स्वाभिधेयज्ञानभाव्यनिष्ठाऽस्तु, शब्दभावनात्वादिति पुंप्रवृत्तिरूपार्थभावनाभाव्यनिष्ठत्वं न स्यात्, अत्राह—**लिङादीति** ॥ **स्वज्ञानकरणिकेति** ॥ लिङादिशब्दो मां प्रेरयतीति प्रेरणारूपभावनाज्ञानात् पुमान् प्रवर्तते। ततोऽर्थभावनारूपभाव्यनिष्पादकत्वाद्भावनाज्ञानमेव लिङादिशब्दभावनायां करणमित्यर्थः। **स्तुतीति** ॥ गुणिसमवेतगुणसङ्कीर्तनं स्तुतिः, दोषसङ्कीर्तनं निन्दा। आदिपदेन फलसङ्कीर्तनसङ्ग्रहः। '**स्वज्ञानकरणिके**'ति लिङादिवाच्यत्वं भावनाया इत्युक्तम्। **भट्टमिश्रै**रप्येवमुक्तम्—

"अभिधाभावनामाहुरन्यामेव लिङादयः"।

इति। ततोऽर्थभावनाया लिङभिधेयता न स्यादिति चोदयति—**एवं तर्हीति** ॥ लिङादीनामप्याख्यातत्वरूपेण करोत्यर्थरूपार्थभावनाभिधायकत्वमित्याह—**उच्यत इति**। 'ओदनं पचती'ति वाक्य[पाक]स्यान्वयव्यतिरेकसिद्धसाधनत्वादोदनार्थिनस्तत्र

---

1 लिङ् अभिधीयते इति।

'पचती'त्याख्यातार्थस्य करोतिना व्याख्यानात् सर्वाख्यातानां तावत् करोत्यर्थोऽभिधेयः। लिङादीनान्तु विधिविवक्षया प्रयुज्यमानानां चेतनविषयप्रवृत्तियोगितया पुरुषप्रयत्नः पुरुषार्थभाव्यनिष्ठो धात्वर्थकरणकः प्रयाजादीतिकर्तव्यताको भावनालक्षणः करोत्यर्थोऽभिधेयः।

॥ शब्दभावनाया लिङर्थस्यैवार्थभावनासाधकत्वम् ॥

तत्र स्वाभिधेयार्थभावनाज्ञानजनना[नुकूल]लिङादिशब्दव्यापारः स्वाभिधेयार्थभावनामभि[पि] भावयतीति विशेषः। लिङादिशब्दव्यापारस्य तादृशस्वभावविशेषे किं प्रमाणमिति चेत्,

शृणु—लिङादिश्रवणानन्तरं प्रवृत्तिदर्शनात्, शब्दमात्रस्यागृहीतसम्बन्धस्याप्रवर्तकत्वात् प्रवृत्तिहेतुं कञ्चिदर्थमभिधाय शब्दः प्रवर्तयतीति गम्यते। तत्रार्थान्तराभिधानकल्पनायां गौरवात् स्वाभिधाव्यापारमभिधेयज्ञानजननलक्षणमभिधाय

---

प्रयत्नो घटते, इति तदभिधायक[त्व ?]माख्यातमस्तु, लिङादौ तु पुरुषप्रयत्नप्रयोजकस्याभावात् कथं तदभिधायिता तस्य ? अत आह—**लिङादीनां त्विति** ॥ विधिप्रेरणादिविधिविल[व]क्षया प्रयुज्यमानेषु लिङादिषु तदर्थाभिधानं पुरुषार्थभाव्य-तत्साधन-तदितिकर्तव्यतोपेतपुरुषप्रयत्नाभिधानमन्तरेण नोपपद्यते; चेतनविषयत्वाद् विधीनाम्, तस्य चापुरुषार्थे प्रेरणायोगादित्याशयः॥

भवत्वेवमर्थभावनाभिधानं लिङादीनाम्, तस्याः सिद्धिः केनेति ? अत आह—**तत्रेति** ॥ लिङादेस्तावत् स्वाभिधेयज्ञानजनको व्यापारोऽस्ति, इतरथा ज्ञानायोगात्। अतः स व्यापारः स्वाभिधेयार्थभावनां यथोक्तांशत्रयविशिष्टामुत्पादयति। इदमेव विधेर्विधित्वमित्यर्थः॥

प्रयोज्यवृद्धप्रवृत्तेर्लिङादिशब्दश्रवणानन्तरभावनियमानुपपत्तिर्लिङादिशब्दभावनाया एतादृशस्वभावत्वे प्रमाणमित्याह—**शृण्विति** ॥ एवमर्थापत्त्या लिङादीनां प्रवर्तकार्थाभिधायकत्वं प्रतिपाद्य, प्रसक्तप्रतिषेधान्यत्राप्रसङ्गाभ्यां स्वव्यापारप्रत्यायकत्वं परिशिष्टमित्याह—**तत्रेति** ॥ **गौरवादिति** ॥ सुगमासुगमयोरसुगमकल्पनं गौरवम्, तत्र सन्निहितासन्निहितयोरसन्निहितमसुगमम्, दृष्टादृष्टयोरदृष्टमसुगममित्यर्थः॥

"किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ।
तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिंश्चोदनोच्यते॥"

तद्द्वारेणार्थभावनां प्रवृत्तिं जनयतीति परिशेषार्थापत्तिभ्यां कल्प्यते । तस्मादभिधाव्यापार एवाभिधीयमानः साक्षात् प्रवृत्तिं प्रसूते, शब्दस्तु तदभिधानप्रणाडिकयेति सिद्धम् । ततश्चार्थभावनाभाव्यनिष्ठा शब्दभावना, न तु केवलं तज्ज्ञानभाव्यनिष्ठा । अभिधानजन्यं शब्दभावनाविषयं विज्ञानम्, प्रवर्तकज्ञानत्वात् प्रवृत्तिलक्षणभाव्यनिष्पादनद्वारेण शब्दभावनां प्रति [1]करणतामश्नुते । अंशत्रयसहितार्थभावनाविषयस्तुतिनिन्दाऽर्थवादादिज्ञानमपि प्ररोचनाद्वारेण प्रवृत्तिहेतुत्वात् शब्दभावनां प्रतीतिकर्तव्यतामनुभवति । तदेवमंशत्रयसहिता शब्दभावना शब्दव्यवहारे प्रवृत्तिहेतुरिति ॥

॥ लिङादीनां कार्यार्थत्वमेव लोकसिद्धम्, न त्वंशत्रयविशिष्टभावना लोकसिद्धेति भाट्टमतनिरासेन कार्यार्थवादिनः पूर्वपक्षोपपादनम् ॥

नैतत् सारम्; शब्दभावनाया मध्यमवृद्धप्रवृत्ति[2]हेतुतयाऽनुमानस्य दृष्टान्तस्यासिद्धेः, प्रमाणान्तरनिबन्धनस्वात्मप्रवृत्तेर्भावनानिबन्धनत्वेनाननुभूतत्वात् । एतेन—लिङादिस्वरूपस्या[3]पि प्रवर्तकत्वम्—प्रत्युक्तम्; तस्यापि स्वप्रवृत्तौ हेतुत्वानुपलम्भात् ।

---

इति वाक्यस्य प्रवर्तकत्वमुक्तम्, तद्विरुद्धमिदं भावनाप्रवर्तकत्वम्, अत्राह—**तस्मादिति** ॥ पूर्वं सर्वशब्दानामर्थज्ञानं भाव्यमित्युक्तम्, इदानीमर्थभावना भाव्येति भाव्यद्वयकल्पना प्रसरीसर्ति, तच्चायुक्तम्, अनिष्टं चेति, तत्राह— **तत चे[तश्चे]ति** ॥ प्रमाणप्राप्तं बहु कल्पनीयमिति भावः । भवत्वेवं शब्दभावनाया अर्थभावना भाव्या; तथापि कथं तस्याः स्वज्ञानकरणता ? अत्राह—**अभिधानेति** ॥ [भावना]भाव्यनिष्पादकत्वमेव भावनां प्रति करणत्वं सर्वत्रेत्यर्थः । स्तुतिनिन्दार्थवादफलकीर्तनानामंशत्रयविशिष्टार्थभावनाविषयाणां कथं शब्दभावनां प्रतीतिकर्तव्यता ? अत्राह—**अंशत्रयेति** ॥

कार्यवादी निराकरोति—**नैतदिति** ॥ विमता, भावनानिबन्धना, स्वतन्त्रप्रवृत्तित्वात्; मदीयप्रवृत्तिवदित्यनुमानं दृष्टान्ते साध्या[ध्य]विरहादयुक्तम्, अतो न तत्र शब्दसामर्थ्यग्रह इत्यर्थः । दृष्टान्तस्य साध्यवैकल्यं कुतः ? अत्राह—**प्रमाणान्तरेति** ॥ परिशेषार्थापत्तिभ्यां शब्दभावनाया लिङा[ङ]भिधेयत्वमुक्तम्,

---

1. कारणता क  2. "हेतु" नास्ति
3. स्वरूपस्य प्रवर्तकत्वं क

नापि परिशेषार्थापत्तिभ्यां स्वाभिधेयाभिधानमभिधेयतयाऽवगम्यते ; लोकसिद्ध-कार्यानुमानेनैवान्यथासिद्धेः । एकस्य शब्दस्य शब्दार्थभावनाभिधेयकल्पना-गौरवाच्च ॥

॥ अभिधाव्यापारस्यानन्यलभ्यत्वाभावान्न शब्दार्थत्वम्, अन्यथाऽनवस्था च ॥

अपि चाभिधेयज्ञानगम्ये चाभिधाव्यापारे न शब्दसामर्थ्यकल्पना युक्ता ; अनन्यलभ्यत्वाभावात् । किञ्च लिङादीनां व्यापारान्तरेण स्वव्यापारप्रतिपादनेऽनवस्था । अन्तरेण व्यापारं व्यापारप्रतिपादने तद्वदेवार्थप्रतिपादनमस्तु, किमनेनान्तर्गडुना ?

॥ कार्यातिरिक्तलिङादिव्यापारस्य दुर्वचत्वम्,
लिङादीनां कार्यपरत्वपूर्वपक्षोपसंहारश्च ॥

कश्चायं लिङादेर्व्यापारः ? न तावत् परिस्पन्दः ; तस्य मूर्तद्रव्यसमवायिनो-[1]ऽमूर्तशब्देऽसम्भवात्, नापि परिणामः ; विभुद्रव्यस्य गगनवत् तदनुपपत्तेः, एकदेशसामस्त्यविकल्पानुपपत्तेश्च । नापि प्रयत्नोऽचेतने सम्भवति । नापि जनकावस्थायामजनकावस्थातोऽतिशयमात्ररूपः स इति युक्तम् ; अजनकावस्थातो जनकावस्थायामतिशयवत्तयाऽतिशयजनकत्वेऽनवस्थानात्, [2]अन्तरेणातिशय[ान्तरम्]जनकत्वे तद्वदेवाभिधेयज्ञानजनकत्वमस्तु, किमतिशयकल्पनादुर्व्यसनेन । अजन[3]कावस्थातो

---

अत्राह—**नापीति** ॥ **स्वाभिधेयाभिधानम्**=शब्दभावना । परिशेषार्थापत्त्योरनुदय एव ; शब्दभावनार्थभावनयोरन्वितयोरभिधेयत्वे कल्पनागौरवादित्याह—**त[एक]स्येति** ॥

कार्यलिङ्गानुमेयत्वाच्च शब्दव्यापारस्य न शाब्दत्वमित्याह—**अपिचेति** ॥ लिङादयः स्वव्यापारं ब्रुवन्तो व्यापारान्तरेण ब्रुवन्ति ? किं वाऽन्तरेण व्यापारान्तरमिति विकल्प्य, आद्यं प्रत्याह—**किञ्चेति** ॥ द्वितीयमपवदति—**अन्तरेणेति** ॥

पूर्वं लिङादिव्यापारमूरीकृत्यादूदुषत्, इदानीं स एव न संभवतीत्याह—**कश्चेति** ॥ परिस्पन्दः, परिणामः, प्रयत्नः, अतिशयमात्रं वेति विकल्पार्थः । संप्रति प्रमाणिकातिशयासंभवेऽपि पराभिनिवेशमालक्ष्याऽऽह—**अजनकावस्थात इति** ॥ **बु[सि]द्धिगोचरभाव इति** ॥ अनवगतसङ्गतिकस्य शब्दस्य श्रोत्रेण गृह्यमाणत्वमित्यर्थः ॥

---

1. मूर्ते शब्दे सभावात्     2. अन्तरेणान्तरमतिशयजनकत्वे
3. 'कस्था"

जनकावस्थायामपि भवितव्यमतिशयेनेति भवतोऽभिनिवेशश्चेत्, उभयबु[सि]द्धिगोचरभाव एवातिशयो [1]भवतु । [2](किमप्रसिद्धातिशयान्तराभ्युपगमेन)? तस्मात् स्वात्मनि प्रवर्तकभावेनानुभूतं कार्यमेव प्रयोज्यवृद्धप्रवृत्तिहेतुभावेनानुमी[मा]य तदन्वितेऽर्थे शब्दसामर्थ्य) बालो गृह्णातीति प्राप्तम् ॥

॥ लिङादिपदानां योग्येतरसंसृष्टार्थमात्रमर्थः, न त्वितरान्वितकार्यमात्रमिति स्वमतोपन्यासः ॥

अत्रोच्यतेऽन्यसंसृष्टमात्रे शक्तिः प्रमीयते ।
बोधकत्वप्रमाणत्वहेतुभ्यामक्षमानवत् ॥ ३० ॥

विवादाध्यासितः शब्दः, अर्थान्तरमात्रसंसृष्टस्वार्थबोधकः, बोधकत्वात्, प्रमाणत्वाच्च; चक्षुर्वत् । प्रमाणत्वञ्चात्रानुभवसाधनत्वमभिप्रेतम्, अतो न साध्यहीनं निदर्शनम् । गन्धादयोऽपि गन्धत्वादिधर्मीण एवाऽध्यवसीयन्ते, इति न घ्राणादौ व्यभिचारः ॥

॥ कार्यपरेतरपदस्य कार्यपदस्य न कार्यान्वितपरत्वम्, न वेतरान्वितकार्यपरत्वमित्यनुमानैरुपपादनम् ॥

यद्वा—कार्यपदे इतरपदसामर्थ्यम्, न कार्यसंसृष्टगोचरम्, पदसामर्थ्यत्वात्, कार्यपदसामर्थ्यवत् । यद्वा—विवादाध्यासितः पदार्थः, कार्यसंसर्गानपेक्षपदशक्तिगोचरः, पदार्थत्वात्; कार्यपदार्थवत् । यद्वा—विवादाध्यासितं पदशक्तिजवेदनम्, न कार्यसंसृष्टगोचरम्, पदशक्तिजवेदनत्वात्; कार्यपदशक्तिजवेदनवत् ॥

---

सङ्ग्रहश्लोकं व्याचष्टे—**विवादेति** ॥ कार्यपदभागे सिद्धसाधनत्वव्यावृत्त्यर्थं पक्षविशेषणाम् । कार्यस्याप्यर्थान्तरत्वेन तदन्वितबोधकत्वं पदस्य सिद्धमिति तदर्थमाह – **मात्रेति** ॥ अनुभूतेः प्रमाणत्वात् शब्दस्य प्रमाणत्वमसिद्धम्, साधनहीनं च निदर्शनम्, अत्राह—**प्रमाणत्वं चेति** ॥ प्रा[घ्रा]णादेः गन्धादिस्वलक्षणमात्रग्राहकत्वेनानेकान्तो हेतुः, अत्राह—**गन्धेति** ॥

विधिपदेतरपदसामर्थ्यं पक्षीकृत्याप्याह – **यद्वेति** ॥ कार्यसंसृष्टानुमापकलिङ्गसामार्थ्ये सामर्थ्यत्वादिति हेतोर्व्यभिचारो मा भूदित्याह —**पदेति** ॥ न

---

1. भवतु इत्यस्यानन्तरं "किमप्रार्थ्यं" इत्यस्ति
2. कुण्डलान्तर्गतं नास्ति

॥ इष्टसाधनत्वज्ञानस्य प्रवर्तकत्वेन न कार्यार्थत्वमिति प्रतिबन्द्या निरूपणम् ॥

ननु—कार्यसंसृष्टमिति पदात् कार्यसंसृष्टं गम्यते चेत्, तत्पदसामर्थ्यकृतवेदनेनैकान्तिकम्, न चेद् गम्यते, प्रसिद्धप्रतियोगिकप्रतिषेधासिद्ध्याप्यप्रसिद्धविशेषणता—इति, मैवम्; कृतियोग्येष्टसाधनधीः प्रवर्तिकेति वाक्यस्य बोधकत्वे [1]तद्बोधकस्य च यथार्थत्वे तन्निषेधासिद्धेः कार्यासिद्धिः, [2]अयथार्थत्वेऽपसिद्धान्तः, [3]बोधकत्वे तत्प्रतिषेधासिद्धिरित्युभयथापि कार्यासिद्धिः। एवं न किञ्चिद्भवतः प्रतिषेद्धुं [4]शक्यमिति प्रतिज्ञामात्रेण प्रतिवादिनो विजयेरन् ॥

॥ अव्यभिचारीतरसंसर्गो हितोपायधियाम्, कार्यसंसर्गे तु न तथेति
हितोपायतैव लिङर्थः ॥

अथ हितोपायधीः [5]प्रवर्तिकेत्यविविक्तानेकप्रत्ययोऽयं संसृष्टव्यवहारहेतुः, न पुनरेकः संसृष्टप्रत्यय इति मतम्, प्रकृतेऽपि तर्हि [6]कार्यसंसृष्टमित्यविविक्तानेकप्रत्ययः, न पुनरेक इति न तेन व्यभिचारः। अव्यभिचारीतरमात्रसंसर्गलघुप्रोजकसम्भवेऽपरकार्यसंसर्गस्य व्यभिचारिणो गुरुतरस्य प्रयोजकत्वस्वीकरणगौरवं सर्वत्र विपक्षे बाधकमुन्नेयम्। न च कार्यसंसर्गस्य समस्तपदसामर्थ्यप्रतियोगित्वे प्रमाणमस्ति ॥

---

कार्यसंसृष्टगोचरमिति प्रतिज्ञावाक्यगतकार्यसंसृष्टेति पदं स्वार्थप्रतीतिपरम्, न वेति विकल्प्य क्रमेण निराकरोति—**नन्विति** ॥ प्रतिबन्द्या प्रतिविधत्ते—**मैवमिति** ॥ क्षणिकत्वादिनिराकरणमपि तद्वाक्यस्य बोधकत्वाबोधकत्व-यथार्थत्वायथार्थत्वविकल्पनानलज्वालावलीढतया शक्यमिति प्रतिवादिनां विजय इत्याह—**एवमिति** ॥

**व्यभिचारिण इति** ॥ कार्यस्य कार्यान्तरसंसर्गासत्त्वेन कार्यपदस्येतरमात्रसंसृष्टे सामर्थ्य[र्थ्या]स्वीकारात् कार्यसंसर्गो व्यभिचारीत्यर्थः। कार्यपदेतरपदानाम्, कार्यपदस्य च कार्यान्वयान्वयिनि सामर्थ्यमस्तु, तथाच न कार्यान्वयस्य व्यभिचारः,

---

1. तद्बोधकत्व इति क पुस्तकेऽधिकः पाठः
2. अयथार्थत्वे च सिद्धन्तः
3. बाधकत्वे
4. "न" इति त्यधिकः पाठः कपुस्तके
5. प्रवतकेत्यपि विज्ञाने
6. संसृष्टमित्यपि विज्ञानेकप्रत्ययो

॥ कार्यपदेन प्रवर्तकसामान्यं न विवक्षितुमलम्, तस्य क्रियाऽपूर्वान्तर-रूपत्वात्, उभयमात्रविवक्षाऽसंभवाच्च हितोपायधीरेव प्रवर्तिका ॥

[1]यदपि प्रयोज्यचेष्टया पदकदम्बकस्य [2]सामान्येन [3](प्रवर्तके सामर्थ्यमवधार्य प्रयोजकान्तरे) तदन्वितस्वार्थे नामपदानां सामर्थ्यावधारणमिति—उदितम्, तत्रेदं सम्प्रधार्यम्—किं क्रियाकार्यान्विते नामपदानां सामर्थ्यमवधेयम्, अपूर्वकार्यान्विते वेति। नाग्रिमः कल्पः कल्पते; क्रियाया आयुष्मतोऽप्रत्यक्षत्वात् ॥

॥ संयोगानुमितक्रियाकार्यान्वितपरत्वं लिङादीनामिति शङ्का ॥

अथ—क्रियामनुमाय तदन्विते सामर्थ्यग्रहः। तथाहि—संयोगविभागौ, आगन्तुकजन्यौ, कादाचित्कत्वात्; पटवत्। यद्वा—संयोगविभागौ, असमवायिकारणपूर्वकौ, समवायिकारण[वत्त्वा]त्, पटवत्। संयोगविभागाभ्यां संयोगविभागावारभ्येते, तत्र

---

अत्राह—**न चेति** ॥ अन्वयिमात्रस्य लघुप्रयोजकस्य संभवे कार्यान्वये[यी]ति विशेषणे गौरवम्, एकस्य कार्यस्यान्वयं प्रति विशेषणविशेष्यभावेन गुणप्रधानभावोऽपि स्यादित्यर्थः। न च—कार्यमात्रान्वित इति—शङ्कनीयम्; अन्तरेण व्यक्तिं सामान्यं च मात्रार्थानिरूपणात्, कार्यसामान्यस्य स्वव्यक्त्यैव संसर्गात्। कार्यव्यक्तेश्च क्रियात्वेनापूर्वत्वेन च द्वैविध्यमेवेति मत्वा विकल्पयति—**तत्रेदमिति** ॥ **अप्रत्यक्षत्वादिति** ॥ विमतिपदं कर्म, परोक्षम्, कर्मत्वात्; आदित्यगतकर्मवदिति भवदभ्युपगमादित्यर्थः ॥

संयोगविभागाभ्यामनुमिति[त]क्रियाकार्यान्विते शक्यग्रहं सामर्थ्यमिति शङ्कते—**त[अ]थेति** ॥ कारणवत्त्वादित्युक्ते निमित्तमात्रजन्यसमवायेन व्यभिचारः, तत उक्तम्—समवायिकारण[वत्त्वा]दिति। संयोगमात्रपक्षीकरणे संयोगजत्वेन, विभागमात्रपक्षीकरणे विभागजत्वेन सिद्धसाधनता मा भूत्, इति **संयोगविभागावित्युक्तः[म्]**। तत्राप्यर्थान्तरग्रस्तत्वं शङ्कते—**संयोगविभागाभ्यामिति** ॥ प्रथमद्वितीयतन्तुसंयोगः स्वाश्रयनिरूप्यसमवायं पटं चारभते, द्वितीयतृतीयतन्तुसंयोगस्तु पटम्, तत्समवायं च स्वाश्रययोरारभते। तत्रासमवायिसंयोगः

---

1. पृ. 218 प. 1
2. सामान्येन इत्यस्यानन्तरं "प्रवर्तकसामर्थ्यमवसेयं। अपूर्वकारे" इति वर्तते।
3. कुण्डलान्तर्गतं नास्ति

कथं क्रियानुमानप्रवृत्तिरुपपद्येतेति चेत्, न; संयोगविभागौ हि स्वाश्रये, स्वाश्रयसमवेते वा कार्यस्यारम्भकौ भवतः। यथा तन्तुसंयोगात् पटारम्भः, यथा च कारणसमवेतप्रचयाख्यसंयोगात् कार्ये महत्त्वारम्भः, इह त्वात्मनः संयोगसहितात् प्रयत्नाच्छरीरे क्रियाऽऽरम्यते। अतः संयोगविभागवतः शरीरस्य विभागपूर्वकसंयोगादनुमेयो न संयोगः; किन्तु क्रियैव। तस्याश्च पूर्वोक्तनियमाभावाद् यत्र क्वापि कार्यारम्भकत्वमुपपद्यते। तस्मादनुमितक्रियाकार्यान्वितगोचरं पदसामर्थ्यमिति—मनुषे,

॥ संयोगविभागयोर्नित्यानित्यक्रियानुमापकत्वायोगान्न कार्यपरत्वम् ॥

नैतत् सारम्; यतस्तत्संयोगविभागाभ्यां नित्यम्, अनित्यं वाऽनुमीयते, नित्यत्वे हेतुसन्निधानात् तदन्यानपेक्षणात् सदा संयोगविभागोत्पादप्रसङ्गः। अनित्यत्वे तस्यापि हेतुमत्त्वात् तद्धेत्वभिमतादेव तत्सिद्धिः, इति किमन्तर्गडुना कर्मणा? यथोक्तं भावनाविवेके—

" नित्यत्वे सर्वदा जन्म स्यात् संयोगविभागयोः।
अनित्यत्वेऽस्य यो हेतुस्तयोरेवास्तु तेन किम्॥"

इति। [1]एतेन—विभागपूर्वकः संयोगः, स्वाश्रये स्वपूर्वक्षणवर्त्यतिशयनिबन्धनः,

---

कार्यं कुर्वन् समवायः[यं]स्वाश्रयस्वाश्रयसमवेतयोः कार्यं च करोतीति नियममादाय परिहरति—**नेति**॥ तन्तुविभागात् स्वाश्रये कर्म, तन्तुकेशविभागात् स्वाश्रयसमवेतपटे केशविभाग इत्युदाहार्यम्। नियमप्रदर्शनस्य प्रकृतोपयोगमाह—**इह त्विति**॥ विमतः, संयोगः, स्वाश्रयतत्समवेतादन्यत्रासमवायितया नारम्भकः, संयोगत्वात्, तन्तुसंयोगवत्, इत्याह—**अत इति**॥ श्येनकर्मणा स्थाणोः संयोगो न स्यात्; तस्य स्वाश्रयतत्समवेतातिरिक्तत्वात्, अत्राह—**तस्याश्चेति**॥

व्याप्तिपक्षधर्मलिङ्गमनुसन्धायानुमितक्रियान्विते सामर्थ्यकल्पनाद् वरमन्विते सामर्थ्यकल्पनम्; लाघवादित्याह—**नैतदिति**॥ अनुमेयस्य कर्मणो नित्यत्वान्न प्रसङ्गः, अत्राह—**नित्यत्व इति**॥ प्रत्यक्षत्वेऽपि कर्मणः कर्महेतुभ्य एव संयोगाद्युपपत्तेर्न कर्महेतुत्वमिति चेत्, न; प्रत्यक्षसिद्धकार्यकारणभावस्यापह्नोतुमशक्यत्वात्। अनुमेयत्वे लिङ्गस्यान्यथासिद्धतया कर्मादि[?]सिद्धेः, संयोगादिहेतोरनुमेयस्य नित्यत्वे सदा कार्यप्रसङ्गबाधात्, अनित्यत्वे तद्धेतोरेव संयोगाद्युपपत्तौ विपक्षबाधवैधुर्यादप्रयोजको हेतुरिति। उक्तन्यायेन प्रयोगान्तरमपास्तमित्याह—**एतेनेति**॥

---

1. पृ. 225 प. 8

कादाचित्कत्वात्, घटादिवदिति—अपास्तम्; किञ्चानुमेयातिशयस्यातिशयान्तरवत्त्वेऽ[1]नवस्था, अतिशयान्तररहितत्वे तेनैवानैकान्तिको हेतुः ॥

॥ प्रकारान्तरेण कार्यानुमानशङ्कातत्परिहारौ ॥

[2]यद्युच्येत [3]कर्महेतूनां संयोगविभागसंस्कारवेगगुरुत्वद्रवत्वानां स्वाश्रये तत्समवेते वा कार्यारम्भनियमाद् न तेभ्य एव संयोगविभागौ भवितुमर्हतः, कर्मणस्तु नैतादृशः कार्यारम्भनियमः; तस्य कार्येऽपि[क]गम्यत्वात्। [4]यादृशेन हि कार्येण तदनुमीयते, तादृशमेव तस्य कार्यम्। यदि तस्याप्ययं नियमः स्यात्, तदा कार्यमेव ततो नोपपद्येत। ततः कर्मासमवायिकारणेभ्यः [5]संयोगाद्यनुपपत्तेर्युक्तमेव [6]कार्यानुमानमिति, तदसत्; इन्द्रियार्थसंम्प्रयोगस्यात्मनि ज्ञानारम्भकत्वात्। ना[साव]समवायीति चेत्, न; तथासतीन्द्रियाणामकरणत्वप्रसङ्गात्। अपि च क्षणिकत्वात् क्रियाया यावदनुमानकालमनवस्थानादचलमिति प्रत्ययः स्यात, न तु चलतीति ॥

यदाहुः—

"हेतुसत्ता च कार्येण ततः प्रागनुमीयते।
वर्तमानावभासः स्याद् न क्रियाधिगमस्ततः॥" इति ॥

---

तद्धेत्वभिमतादेव तत्सिद्धिरिति यदुक्तम्, तत्र चोदयति—**यदीति** ॥ कर्म, स्वाश्रयतत्समवेतयोरन्यतरगतकार्यारम्भकम्, समवायित्वात्, संयोगवदित्याशङ्क्याह—**यादृशेनेति** ॥ स्वाश्रयतत्समवेतगतेन, अन्यगतेन वेत्यर्थः ॥ अन्वयेनोक्तं व्यतिरेकद्वाराह—**यदीति** ॥ कर्महेतोः स्वाश्रयतत्समवेतयोः कार्यारम्भकत्वं नियमभङ्गेन दूषयति—**तदिति** ॥ असमवायितयाऽऽरम्भकत्वनियमस्य नास्ति भङ्ग इति शङ्कते—**नासाविति** ॥ इन्द्रियाणां संप्रयोगरूपव्यापारवतां साधकतमत्वं संप्रयोगस्यासमवायित्वाभावे न स्यादिति परिहरति—**नेति** ॥ भङ्गान्तरं भणति—**अपि चेति** ॥ प्रारब्धोऽपरिसमाप्तो यो धात्वर्थः, तत्र लटो विधानात्, निष्पन्नस्य भूतत्वाद् "भूते" इत्यधिकृत्य लङो विधानादित्यर्थः ॥

उक्तं च **मण्डनमिश्रैः—यदाहुरिति** ॥

---

1. "ना" इति क पुस्तकेऽधिकम्।
2. यद्युच्यते
3. पृ. 226 प. 5
4. पृ. 226 प. 1
5. संयोगाद्यनुतत्तेः
6. कर्मानुमानामिति क कार्या ख

॥ अन्यस्यापि कार्यस्य नानुमानम्, न वा तत्र सङ्गतिर्लिङ्गादीनाम् ॥

[1]यदप्यनुमानम्---सर्वेषु कारकेषु कदाचित् पचतीत्येतद् भवति, यस्मिन् सत्येतत्, सा क्रियेति ॥

त[अ]त्रोच्यते—

सिद्धेर्गुणविशेषेण पचतीत्यपि संविदः ।
क्रियापदार्थस्यान्यस्य नानुमानं प्रकल्पते ॥ ३१ ॥

यः खलु तण्डुलावयवेषु विभागलक्षणः, विशिथिलसंयोगलक्षणो वा गुणभेदः, तस्य सन्निहितेष्वपि साधनेषु कदाचिद्भावात् तन्निबन्धनः पचतीति प्रत्ययः, इति न ततः क्रियापदार्थानुमानं युक्तम् । तत एव तर्हि [2]कादाचित्कात् गुणविशेषात् तद[स्तु]; अन्यथा साधनसन्निधिमात्र [3]एव भावः [[4]स्यात् । न, कर्मण्यपि तथा प्रसङ्गात्, कर्मान्तरानुमाने च अनवस्थापातात्, अग्निसंयोगस्य च क्रमेण भावात् प्रकर्षवत्त्वाच्च तद्धेतोस्तस्य न साधनसन्निधिमात्र एव] भावः[5] । तस्यैव तर्हि संयोगस्य कारणं

---

पचतीति ज्ञानम्, संप्रतिपन्नकारकातिरिक्ताधीनम्, तेषु सत्सु कादचित्कत्वात्, येषु सत्सु [यत्]कादाचित्कम्, तत्ततोऽतिरिक्ताधीनम्; यथात्मान्तःकरणादिषु सत्सु कदाचित्सुखमिति जायमानं ज्ञानं ततोऽतिरिक्तसुखाधीनमित्यनुमानात् क्रियासिद्धिरिति शङ्कते—**यदपीति** ॥ अर्थान्तरापत्त्या प्रत्याह—**अत्रेति** ॥ ३१ ॥ येन गुणविशेषेण संविदः सिद्धिः, तस्मादेव गुणविशेषात् कार्यलिङ्गात्कर्मानुमानं स्यादिति शङ्कते—**तत एवेति** ॥ गुणविशेषस्याश्रयसमवेतकादाचित्कातिशयपूर्वकत्वाभावे कादाचित्कत्वभङ्ग इत्याह—**अन्यथेति** ॥ प्रतिबन्द्या परिहरति—**नेति** ॥ अनुमेयस्य कर्मणो नित्यत्वम्, अनित्यत्वं वा । आद्ये सदा गुणविशेषः स्यात्, हेतुसन्निधेरित्यर्थः । अनित्यत्वेऽतिशयान्तररहितत्वे तेनानैकान्तः, अतिशयान्तरवत्त्वेऽनवस्थेत्याह—**कर्मान्तरेति** ॥ विपक्षबाधोऽप्यसिद्ध इत्याह—**अग्नीति** ॥ प्रकर्षवत्त्वात् = अतिशयवत्त्वात् । तद्धेतोः = पचतीतिधीहेतोः, गुणविशेषहेतोर्वा । **'प्रकर्षवत्त्वात्' 'तद्धेतोरि'**ति ब्रुवता भाषान्तरेण कर्मकार्यत्वस्वीकाराद् घट्टकुटयां प्रभातमिति शङ्कते—**तस्यैवेति** ॥ **'प्रयत्नादेरि'**त्यादिपदेन वेगादि-

---

1. पृ. 227 प. 1
2. कदाचित्कत्वात्
3. सन्निधिमात्र एत्यस्यानन्तरं भाव इति नास्ति
4. कुण्डलितो भागः क पुस्तके नास्ति ।
5. भाव इति नास्ति

कर्मेति चेत्, न; प्रयत्नादेरेव कर्महेतोस्तद्धेतुत्वात्। तदेवं क्रियाया एवासिद्धेः क्रियाकार्यान्विते पदसामर्थ्यमित्ययुक्तम् ॥

॥ बालानामितरसंसृष्टमात्र एव सङ्गतिः, न तु क्रियान्विते ॥

किञ्च प्रत्येकं पदानां प्रयोगान्तरेषूद्धारनिधानाभ्यां सामर्थ्यावधारणे कार्यपदमपि कुत्र समर्थमिति पर्यालोचयत्येव बालः, तस्य कार्यसंसृष्टस्वार्थगोचर[1][त्वानुपपत्तौ सर्वेषामैकरूप्येणेतरमात्रसंसृष्टे सामर्थ्यमवधारयति ॥

अपि चाहेतुरसंसर्गे सति कार्यसंसर्गविरहेण पदसामर्थ्यगोचरत्व] व्यतिरेकादर्शनेन। केवलव्यतिरेकविरहिणः कार्यसंसर्गत्व[स्य]प्रयोजकत्वपरिकल्पने क्रियाकार्यसंसर्गस्यापि पदसामर्थ्यप्रयोजक[2]त्वप्रसक्तौ क्रियोत्तीर्णमपूर्वकार्यं श्रौतलिङादिप्रत्ययगोचरतया कथमूरीकर्तुं पारयसे? अथ क्रियाकार्यत्वस्य व्यतिरेकवैधुर्यगौरवाभ्यां परिहारं मन्यसे, तर्हि प्रकृतेऽपि कार्यसंसर्ग([3]स्य व्यतिरेक)वैधुर्यगौरवाभ्यामवश्यपरिहार्यत्वादितरमात्रसंसृष्टस्वार्थगोचरं पदसामर्थ्यं व्युत्पित्सुरवधारयतीति विचार्य परितुष्यतु भवान् ॥

॥ अपूर्वकार्ये न लोके वेदे वा सङ्गतिग्रहयोग्यता, अतस्तदपि न लिङाद्यर्थः ॥

नापि द्वितीयः कल्पः; विकल्पासहत्वात्। तथाहि — किमगृहीतसङ्गतय एव लिङादयो नियोगमभिदधति, गृहीतसङ्गतयो वा? न तावदाद्यः; बालानामपि

---

सङ्ग्रहः। क्रियानुमानासिद्धौ कर्मत्वादिति परोक्षत्वानुमानमाश्रयासिद्धमित्याशयेनाह— **तदेवमिति** ॥

लोके कार्यान्वयस्य प्रमाणाभावादसिद्धत्वान्न तत्र सङ्गतिग्रह इत्युक्तम्, इदानीं प्रयोजकवैरूप्यकल्पनागौरवाच्च न युक्तमेतदित्याह — **किञ्चेति** ॥ व्यतिरेकगम्यत्वात् प्रयोजकभावस्य व्यतिरेकविरहिणः कार्यसंसर्गस्य न प्रयोजकतेत्याह— **अपि चेति** ॥ अपूर्वकार्यान्विते पदसामर्थ्यमिति कल्पान्तरं प्रत्याह— **नापीति** ॥ अपूर्वकार्यस्य लोकेऽभावादिति भावः ॥ वैदिकव्यवहारो यदि सङ्गतिग्रहं ब्रूयात्, तत्राप्याह— **विकल्पासहत्वादिति** । तर्कान्नियोगानवगमं गदितुं तल्लक्षणं निगदि-

---

1. कुण्डलान्तर्गतं नास्ति
2. त्वे
3. कुण्डलान्तर्गतं नास्ति

तत्प्रसङ्गात्, द्वितीयेऽपि किमनवगते संगतिग्रहः, अवगते वा? नाद्यः; वाच्यावगमस्य [1]तद्वाचकावगमकारणत्वात्। द्वितीयेऽपि तदवगतिः प्रमाणात्, तर्काद्वा। नाद्यः; नियोगस्य भवद्भिः प्रमाणान्तरवेद्यत्वानङ्गीकारात्। न द्वितीयः; व्याप्यारोपेण व्यापकापादनस्य तर्कत्वात्। नच नियोगज्ञानात् पूर्वं नियोगव्याप्यतया किञ्चित्प्रमितम्, यदारोपेण नियोगापादनं स्यात्॥

॥ स्वर्गकामपदसमभिव्याहारेण लिङादीनामपूर्वकार्यपरत्वशङ्कातत्परिहारौ॥

अथ मनुषे—नियोज्यपरस्वर्गकामपदसमभिव्याहारपर्यालोचनया[अ][2]स्थाय्यपूर्वं लिङादिना प्रतिपादनीयमिति तज्ज्ञानज्ञेयम्—इति, मैवम्, [अ]स्थाय्यपूर्वं लिङादिना प्रतिपादनीयमिति लिङः[ङोऽ]स्थाय्यपूर्ववाचकत्वज्ञानम्, तच्चापूर्वज्ञानमन्तरेण न सम्भवति। अपूर्वज्ञानञ्च न प्रमाणात्; तस्य मानान्तरावेद्यत्वात्, नापि तर्कात्; तस्यापि पूर्ववत् तर्कापेक्षायामनवस्थाप्रसङ्गात्।

॥ हितसाधनत्वातिरिक्तकार्यत्वदुर्वचत्वेन कार्यार्थत्वपक्षोपसंहारः॥

किञ्चेदं कार्यं नाम? कृतिसाध्यम्=कृत्युद्देश्यमिति चेत्, न; स्वर्गादेरपि तत्त्वात्, साक्षात् कृतिसाध्यत्वे सति तदुद्देश्यमिति चेत्, न; साक्षात्कृतिसाध्यत्व-

---

तम्—**व्यापा[प्या]रोपेणेति**। व्याप्यप्रमित्या व्यापकापादनमनुमानं व्यवच्छिनत्ति—**आरोपेणेति**॥

कालान्तरभाविस्वर्गकामस्य क्षणभङ्गुरयागे कर्तव्यताप्रतिपादनासामर्थ्याद-पूर्ववाचकत्वं लिङादेरवगम्यत इति शङ्कते—**अथेति**॥ किन्तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत्।

फलसाधनता तत्र कारणम्, तेन कार्यतेति ब्रुवता भवता यादृशस्य हितसाधनस्य कार्यप्रयोजकत्वं स्वीकृतम्, तादृशस्य प्रवृत्तिप्रयोजकत्वसंभवात्, लक्षणानिरूपणाच्च न कार्यमस्तीत्याह—**किञ्चेति**॥

**एकाधिकरणत्वासंभवादिति**॥ धात्वर्थस्यैव साक्षात्कृतिसाध्यत्वात् स्वर्गादेरेव कृत्युद्देश्यत्वाद् लक्षणासंभव इति भावः॥

न च कार्ये प्रमाणमस्ति; ममेदं कर्तव्यमित्यस्य कृतियोग्येष्टसाधनधीजन्य-

---

1. तद्वाचकत्वावगम

2. अस्थायित्वं क्षणिकत्वाभावमात्रेण, स्थायित्वमिति दृश्यमानपाठे तु यावत्फलोत्पत्तिस्थायित्वेन।

तदुद्देश्यत्वयोरेकाधिकरणत्वासम्भवात् । पराक्रान्तश्चात्रभवद्भिरपरिमितमतिभिरित्युपरम्यते ॥ तत्सिद्धमेतत्—

यथा वर्णैरभिव्यक्तस्फोटेनार्थप्रकाशनम् ।
निष्प्रमाणम्, तथा कार्यसंसृष्टार्थप्रकाशनम् ॥ ३२ ॥

इति ॥

॥ इति सिद्धेऽर्थे प्रामाण्यवादः पञ्चमः ॥

---

चिकीर्षामात्रत्वादित्याह—**पराक्रान्तमिति** ॥ आधस्त्यपौरस्त्य[वा]दसङ्गतिं कुर्वन् वृत्तं सङ्गृह्णाति—**तत्सिद्धमिति** ॥

॥ इति सिद्धेऽर्थे प्रामाण्यवादः पञ्चमः ॥

## ॥ अथ स्फोटनिरासवादः षष्ठः ॥

॥ स्फोटे गौरित्येकं पदमिति प्रत्यक्षं प्रमाणम् ॥

अथ कथं स्फोटे प्रमाणाभावः? प्रत्यक्षेणैव तदावेदनात्, कथं प्रत्यक्षवेद्यता स्फोटात्मनः? वर्णविज्ञानविलक्षणस्य पश्चाद् 'गौरि'तिज्ञानस्य निरालम्बनत्वायोगात्। नहि तद् वर्णालम्बनमेव; वर्णप्रत्ययविलक्षणत्वात्। तस्मादर्थान्तरमवलम्बितुमर्हति ॥

॥ गौरित्येकं पदमिति प्रत्यक्षस्य वर्णानुविद्धस्य वर्णसमुदायविषयत्वमेव न तु स्फोटविषयत्वमिति सिद्धान्तिनामवान्तरशङ्का ॥

ननु— अस्तीदं पश्चादेकैकवर्णविज्ञानविलक्षणं विज्ञानम्, नतु तदर्थान्तरालम्बनम्, वर्णरूपानुविद्धत्वात्, रूपान्तराप्रतिभासनाच्च। तथाहि—त एव वर्णात्मानः पुरः [1]परिगणितपरिच्छेदास्तत्रावभासन्ते, न रूपान्तरम्। वैलक्षण्यन्तु पूर्वोपलब्धीनामेकैकवर्णगोचरत्वात्, अस्य च समुदितविषयत्वादिति नार्थान्तरविषयत्वं वैलक्षण्यमात्रात् सिध्यति। यदि वैकैकस्मादर्थान्तरम्, अस्तु प्रत्ययविषयः, नतु तदतिरिक्तः कश्चिच्छब्दात्मा; वर्णत्रयपरित्यागेन तस्य बुद्धावप्रतिभासनात् ॥

---

## ॥ अथ स्फोटनिरासवादः षष्ठः ॥

आ[अथ]स्फोटेनार्थप्रकाशनं निष्प्रमाणमित्येतदसहमानः प्रत्यवतिष्ठते— **अथेति** ॥ वर्णानामेव शब्दत्वाच्छब्दस्यैव श्रावणत्वादशब्दात्मनः स्फोटन[?]स्य न श्रावणत्वमिति शङ्कते - **कथमिति** ॥ 'गौरित्येकश्शब्दः' इति गगारौकारविसर्जनीयेषु क्रमावगतेषु पश्चादवगम्यमानत्वादिति परिहरति—**वर्णेति** ॥ निरालम्बनत्वायोगात्=अबाध्यत्वादित्यर्थः। वर्णविषयत्वेऽपि सालम्बनत्वोपपत्तेर्नातिरिक्तालम्बनत्वम्, अत्राह—**न हीति** ॥

क्रमभाविगकारादिप्रत्ययेभ्यो विलक्षणं 'गौरि'तिप्रत्ययमूरीकृत्य, न तस्यार्थान्तरालम्बनत्वमिति चोदयति—**नन्विति** ॥ वर्णविज्ञानस्य, गौरिति विज्ञानस्य च वैलक्षण्यं विषयवैलक्षण्यमन्तरेण न स्यात्, अत्राह— **वैलक्षण्यं त्विति** ॥ 'गौरि'ति विज्ञानविषयस्य किमेकैकवर्णातिरिक्तत्वम्, वर्णत्रयातिरिक्तत्वमिति विकल्प्य, प्रथममूरीकुरुते—**यदिवेति** ॥ न द्वितीयः; अनुभवविरोधादित्याह—**न त्विति** ॥

---

1, परिगृहीत (ख)

॥ विज्ञानस्यैकत्वेऽपि ज्ञेयानामनेकत्वात्, एकत्वविज्ञानस्य भ्रमरूपत्वाच्च वर्णातिरिक्तस्फोटे प्रमाणाभाव इति पूर्वोक्तार्थस्यैवोपपादनम् ॥

अथ मतम्—एकं गौरिति विज्ञानम्, को वाऽऽहाऽन्यथा? ज्ञेयन्तु नैकम्। ज्ञेये तु तद्ग्राह्यताकारितः, एकार्थताकारितो वैकत्वभ्रमः। एकत्वोपचारो वनादिवत्। शैघ्र्याल्पान्तरत्वाभ्यां गोशब्दे भवेदप्येकत्वभ्रमः, देवदत्तादिशब्देषु तु भेद एव स्पष्टः प्रकाशते। तदुक्तम्—"नच गकारादिभ्यः प्रत्यक्षोऽन्यो गोशब्दः; भेददर्शनाभावात्, अभेददर्शनाच्च।" तथा—

"वैलक्षण्यन्तु तस्येष्टमेकैकज्ञानतः स्फुटम्।
वर्णरूपानुवेधात्तु न तदर्थान्तरं भवेत्॥

यदि वाऽर्थान्तरत्वं स्यादेकैकस्मात् त्रयस्य तु।
वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते॥

गौरित्येकमितित्वन्तु नैवास्माभिर्निवार्यते।
तद्ग्राह्यैकार्थताद्या[या]स्तु शब्दे स्यादेकतामतिः॥

---

यद्यपि 'शतम्' 'सहस्रमि'त्यादिवेदनमेकमनेकालम्बनम्; तथाप्येकालम्बनत्वमेकविज्ञानस्योत्सर्गप्राप्तमसत्यपवादे हातुं न युक्तमिति शङ्कते—**अथेति**॥ गूढाभिसन्धिः परिहरति—**को वेति**॥ अभिसन्धिं विवृणोति—**ज्ञेयं त्विति**॥ ज्ञेयस्यानेकत्वे कथ'मेको गौरिति शब्दः' इति प्रत्ययः स्यात्? अत्राह—**ज्ञेयेति**॥ तद्ग्राह्यता=एकज्ञानविषयता, दशानां घटानामेकज्ञानालम्बनानामेकत्वभ्रमो न दृष्टः, अत्राह—**एकार्थेति**॥ एकप्रयोजनत्वम्=एकार्थत्वम्। देवदत्तादिपदे वर्णभेदस्य स्फुटमवभासमानत्वात् कथमेकत्वारोपः, भेदग्रहविरोधात्? अत्राह—**एकत्वोपचार इति**॥ गोशब्द एकत्वारोपः, देवदत्तादिशब्दे तदुपचार इति वैरूप्यकल्पनाद् गौरवमित्याशङ्क्य, निमित्तभेदे नैमित्तिकभेदस्य प्रामाणिकत्वाद् मैवमित्याह—**शैघ्र्येति**॥ मुख्यार्थभेदाग्रहे सत्यैक्यज्ञानमारोपयन्[णम्,]भेदग्रहे पुनरभेदधीरुपचार इति लक्षणतोऽप्युपपादयति—**देवदत्तादीति**॥ भाषितेऽर्थे भाष्यकृद्भाषितं भाषते—**तदुक्तमिति**॥ **भट्टपादै**रप्युपपादितमित्याह—**तथेति**॥

शैघ्र्यादल्पान्तरत्वाच्च गोशब्दे सा भवेदपि ।
देवदत्तादिशब्दे तु स्फुटो भेदः प्रतीयते ॥"

इति ॥

॥ गौरित्येकं पदमिति ज्ञानस्य स्फोटविषयत्वमेव,
तद्भ्रमत्वादिकल्पनमप्रामाणिकम्, अन्यथा सर्वविलयापत्तिः ॥

अत्रोच्यते—न खलु निखिलवर्णेभ्यो विलक्षणविषयं प्रकाशमानं विज्ञानं नार्था[न्तरा]लम्बनमिति चतुरश्रम्। तथाहि—

॥ जात्यादिप्रत्ययानां व्यक्त्यादिपदार्थसिद्धिवदत्रापि स्फोटसिद्धिः ॥

[गौरिति]जातिप्रत्ययो रूपान्तरसंभेदे, अवयविज्ञानं भागरूपानुगतमवयवसमवाये, चित्ररूपावभासिनी च प्रख्याऽवयवगतनीलादिरूपसम्भेदेऽपि नार्थान्तरगोचरतां विजहाति। न ह्यर्थान्तरसमवायि नीलादि; [अ]रूपतयाऽचाक्षुषत्वप्रसङ्गात्। सर्वं [च] चाक्षुषं प्रभारूपानुविद्धबोध्यं न [1]ततोऽन्यविषयतामुज्झति। अथ रूपान्तरप्रकाशनं

---

गौरिति ज्ञानम्, गकारादिभ्योऽर्थान्तरालम्बनम्, तेभ्यो विलक्षणविषयाकारवान्[वत्त्वात्]पटज्ञानवदिति, इतरथा विश्ववैचित्र्यविलयः स्यादित्याशयेनाह—**अत्रोच्यत इति** ॥ [2]वर्णानुविद्धत्वान्नार्थान्तरालम्बनत्वमिति यदुदितम्, तत्र व्यभिचारमाह—**तथाहीति** ॥

**गौरिति** ॥ गोत्वजातिप्रत्ययो रूपान्तरसंभेदे सामानाधिकरण्येन व्यक्तिरूपानुवेधेऽपि ततोऽर्थान्तरगोचरतां न विजहाति। जातिप्रत्ययादितरस्य यदनुविद्धत्वम्, ततो नार्थान्तरालम्बनत्वम्, अत्राह—**अवयवीति** ॥ पटादिकार्यद्रव्यज्ञानं तन्त्वाद्यवयवरूपानुविद्धम्—अयं पट इति सामानाधिकरण्येनोत्पद्यमानं नार्थान्तरगोचरतां विजहाति। अवयविज्ञानस्य भागरूपानुगतत्वे हेतुमाह—**अवयवसमवाय इति** ॥ भागिनो भागेषु समवेतत्वादित्यर्थः। अवयविनोऽवयवानुगतत्वं तदाधारत्वात्, इह तु गौरितिशब्दस्य गकारादिष्वसमवायात्तदनुरक्तप्रत्ययत्वं तदात्मत्वादेवेति, अत आह—**चित्रेति** ॥ चित्रद्रव्यारम्भकावयवसमवेतरूपसमाहारमात्रं चित्ररूपं न ततोऽतिरिक्तम्, अत्राह—**न हीति** ॥ चित्रावयविनो नीरूपत्वेऽपि चाक्षुषत्वम्, रूपिषु समवेतान्त्यावयवित्वात्, अत्राह—**सर्वं चेति** ॥ व्यावृत्तेष्वनुवृत्तत्वेन, भिन्नेष्व-

---

1. अन्यविषयामुज्वलति 2. पृ. 233 प. 9

तत्र, न त्विह तथा, कथं नास्ति ? यथैकशब्दार्थः स्फुटं प्रकाशते । न चायं वर्णानामात्मा ; तेषां भेदात्, ऐ[क्य]स्य विरोधात् । यथोक्तं **स्फोटसिद्धौ**—

"अन्यानुविद्धबोधेऽपि नान्यत्व[1]मुपलभ्यते ।
एकरूपपरिच्छेदे कथमन्याप्रकाशनम् ॥" इति ॥

॥ एकत्वप्रतीतेरौपचारिकत्वे सर्वत्रैवमापत्त्या न किमपि वस्त्वेकं सिध्येत् ॥

किञ्चैकबुद्धिग्राह्यतयैकार्थतया च शब्देष्वेकतां ब्रुवन् सर्वत्रैनामवजानीते ; विशेषाभावात् । तथाहि—पदादयोऽप्येकविज्ञानविषया एकार्थक्रिया[2]कारिणश्चैतन्निबन्धनमेकत्वं लभेरन् । तथा चैकः परमाणुरपि न सिध्येत् । तदप्युक्तम्—

"तद्ग्राह्यैकार्थताभ्याञ्च शब्देषु [3]वदतैकताम् ।
विवेकहेत्वभावेन सर्वत्रोत्सारिता भवेत् ॥" इति ॥

अपि च न खल्वविदितपदरूपावधिरर्थं प्रत्येति । अवध्यन्तरपरिग्रहे तत्वेति [सत्यपि]वर्णानामप्रत्ययात् । तत्रार्थप्रतिपत्त्या पदरूपावधिविशेषमुपकल्पयन् दुरुत्तरमितरेतराश्रयमाविशदयति । उक्तञ्च—

"अर्थस्याधिगमोऽनर्थे[4] पदरूपावधारणात् ।
तदर्थबोधादिति चेद् व्यक्तमन्योन्यसंश्रयम् ॥" इति ॥

---

भिन्नत्वेन च जात्यादौ वैलक्षण्यप्रकाशाद् जात्यादेरर्थान्तरतेति शङ्कते—**अथेति** ॥ वैलक्षण्यस्य प्रकाशोऽत्राप्यस्तीत्याह—**कथमिति** ॥

एवं तावदनेकेषु वर्णेष्वे 'कः शब्दः' इति प्रतिभासाद् वर्णातिरिक्तं शब्दं प्रतिपाद्य, तदेकत्वमौपाधिकमिति यदभ्यधायि, तत्र बाधमभिधत्ते—**किञ्चेति** ॥ एकार्थतया वर्णानामेकत्वधीरित्यत्र परस्पराश्रयमाह—**अपिचेति** ॥ 'गामानये' तिप्रयोग एतावन्तो वर्णा 'एकं पदमि'तिपदावध्यनवगमेऽर्थानवगमादा[त् तद]र्थं पदरूपमवगन्तव्यम् , पदरूपावगमश्चार्थाधिगमरूपैकप्रयोजनत्वादि[ती]तरेतराश्रय इत्याशयः ॥

वर्णभेदे पदाभेदप्रतिभासाद्वर्णातिरिक्तं पदं प्रतिपाद्य, वर्णाभेदे पदभेदप्रति-

---

1. उपलभ्यते (क)
2. कारिणश्चैतितन्निव क
3. वदचैक
4. गमोनर्थे

॥ नदीदीनादिशब्दभेदानापत्त्या बुद्धिक्रमभेदेनापि तदनिर्वाहात् प्रत्यक्षेण वर्णातिरिक्तस्फोटसिद्धिः ॥

यदि खलु वर्णसमूहमात्रालम्बना पदप्रख्या भवेत्, नदीदीनजराराजेति स्पष्टः पदभेदो न प्रतीयेत। स्पष्टश्चेह श्रुतिभेदः। नहि समूहिनामुपलब्धिक्रमभेदेऽपि समूहबुद्धिभेदः। तथाहि—[1]दशान्तरादितरतो वोपलम्भक्रमे न पदबुद्धिर्विशेषवति[ती], नापि वनबुद्धिर्धर्माद्युपलब्ध्यानुपूर्वीनानात्वेऽपि। तदेवमभिन्नेषु, भिन्नेषु च वर्णात्मसु यदनेकमेकञ्च प्रकाशते, तत् प्रत्यक्षं पदम्। यथोक्तम्—

"भिन्नक्रमेऽपि विज्ञाने न समूहिषु भेदवान्।
समूहः पदरूपन्तु स्पष्टभेदं प्रतीयते ॥" इति।

॥ प्रत्येकमिलितविकल्पेनाभिधेयबोधानुपपत्तिरपि स्फोटे प्रमाणम्। न हि प्रत्येकं मिलित वा पदं बोधकम्, वर्णान्तरवैयर्थ्यात्, नित्यानां मेलेनाभावाच्च ॥

अर्थापत्तितोऽपि स्फोटं स्फुटयामः। तथाहि—अभिधेयानुभवस्तावत् कारणसापेक्षस्तदाक्षिपति। नच वर्णा एवाभिधेयबोधमाधातुमीशते; प्रत्येकमिलितविकल्पानुपपत्तेः। तथाहि—न तावत्प्रत्येकम्; अनुपलम्भात्; वर्णान्तरोच्चारणानर्थक्यप्रसङ्गाच्च। नापि सम्भूय; वर्णानां क्षणविशरारूणां सम्भवनासम्भवात्, नित्यत्वे नित्यविभूनां सदैव सम्भवनात् सदैवाभिधेयप्रत्ययः स्यात्। उपलब्धा[ब्धी]नां प्रत्यायकत्वान्नैवमिति चेत्, न; उपलब्धिकारणानामुच्चारणानां क्रमभावितयोपलब्धीनामपि क्रमभावित्वात्, सर्ववर्णानामपर्यायमुपलम्भासम्भवात्। यथोक्तम् स्फोटसिद्धिकारैः—"प्रत्येकमप्रत्यायकत्वात्, साहित्याभावात्, नियतक्रमवर्तिनामयौगपद्ये सम्भूयकारित्वानुपपत्तेः, नानाप्रयोक्तृप्रयुक्तैरन्वयादर्शनात् क्रमविपर्यये, यौगपद्ये वे"ति ॥

---

भासोऽपि वर्णातिरिक्तं पदं गमयतीत्याह—**यदीति** ॥ नदीदीनेत्यादौ समूह[हि]नामभेदेऽपि तदुपलब्धिकर्म[क्रम]भेदात् समूहबुद्धिभेदः, अत्राह—**न हीति** ॥

प्रत्यभिज्ञादिना वर्णनित्यत्वस्य साधितत्वादसिद्धं क्षणिकत्वम्, अत्राह—**नित्यत्व इति** ॥ वर्णोपलब्धीनामर्थधीहेतूनामागन्तुकत्वाद् न सदाऽर्थधीरित्याह—**उपलब्धा[ब्धी]नामिति** ॥ उपलब्धा[ब्धी]नामपि न प्रत्येकं बोधकत्वम्; उक्तयुक्तेः, नापि संभूय; उपलब्धीनां कर्म[क्रम]वत्त्वादिति दूषयति—**नेति** ॥ **नानाप्रयोक्तृ-**

---

1. दशान्तरादितरतः

पूर्वपूर्ववर्णसंस्कारद्वारा क्रमः, तत्सचिवान्त्यवर्णस्य बोधकत्वं चेति
सिद्धान्तिनामवान्तरशङ्का, संस्काराप्रत्यक्षत्वात्, स्मृतिमादायाप्यनिर्वाहश्च ॥

पूर्वपूर्ववर्णोपलम्भसंस्कारसचिवोऽन्त्यो वर्णोऽर्थं प्रत्याययेदिति चेत्, न; संस्काराणामेवाप्रत्यक्षत्वेन तद्विशिष्टान्त्यवर्णस्याप्रत्यक्षत्वापातात्, वर्णोपलम्भसंस्कारनिकरादर्थप्रत्ययानुपपत्तेश्च। नापि—पूर्व[पूर्व]वर्णसंस्कारेभ्योऽन्त्यवर्णोच्चारणा[न]न्तरमेकस्मृतिसमारोहिणां वर्णानामर्थप्रत्यायकत्वमिति—वाच्यम्; संस्काराणां प्रत्येकं निरपेक्षस्मृतिकारणानां सम्भूयैकस्मृतिकरत्वानुपपत्तेः। कियानेष सङ्कटः पन्था वर्णवादिनाम्? स्वस्ति स्फोटात्मने पदाय भूयात्॥

॥ स्फोटपक्षेऽपि तत्तद्वर्णस्फोटानां प्रत्येकं मिलितानां वा बोधकत्वं
वर्णपक्ष इव समानमिति शङ्का, वर्णस्फोटस्य प्रत्येकं बोधकत्वेऽपि
स्फोटादिभेदेनाभिव्यञ्जकवर्णान्तरोच्चारणमिति तत्समाधानं च ॥

[1]अथ ब्रूषे—स्फोटस्यापि सत्तयाऽर्थप्रत्यायकत्वे वर्णोच्चारणानर्थक्यम्, [2]वर्णस्फोटस्यार्थस्फुटताधायकत्वे[3] प्रत्येकं वर्णानां तत्स्फुटीकरण[4]कारणत्वे वर्णान्तरानर्थक्यम्, सम्भूय वर्णानां स्फोटस्फुटीकरणन्तु निरस्ताशङ्कम्; तत्सम्भवनासम्भवस्य भवतैवाभिहितत्वात्—इति, तदसमञ्जसम्, स्फोटस्य=वर्णस्फुटस्यैवार्थस्फुटताहेतु-

---

**प्रयुक्तैरिति** ॥ भिन्नपुरुषोच्चरितैर्वर्णैर्यौगपद्ये सत्यप्यन्वयादर्शनात्, संभूय बोधकत्वानुपलम्भात्, क्रमविपर्यये च तेषामेव वर्णानां प्रयोक्तुरेकत्वेऽपि बोधकत्वादर्शनादित्यर्थः ॥

वर्णानां स्वरूपेण संभवनासंभवनेऽपि संस्कारद्वारा तत्संभवात् संभूय बोधकत्वमिति शङ्कते—**पूर्वेति** ॥ संस्कारसंप्रयोगयोर्निरपेक्षसामग्र्योः संभूय प्रत्यभिज्ञाहेतुत्वाद्व[वत् व]र्णोपलम्भसंस्काराणामपि संभूयैकस्मृतिजनकता स्यात्, अत्राह—**कियानिति** ॥ तत्रानन्यथासिद्धकार्यदर्शनान्निरपेक्षसामग्र्योः संभूय कारणत्वं कल्पितम्, इह पुनरनन्यथासिद्धं कल्पकं नास्तीत्याशयः ॥

वर्णानामर्थप्रत्यायकत्वे याऽनुपपत्तिः, सा स्फोटप्रत्यायकत्वेऽपि तुल्या, परम्, अप्रमाणिकस्फोटकल्पनमतिरिक्तमिति शङ्कते—**अथेति** ॥ सत्त[व]त्त्वात्प्रत्यायकत्वपक्षदोषमनङ्गीकारेण प्रतिक्षिपति—**तदसमञ्जसमिति** ॥ प्रत्येकं वर्णानामर्थप्रत्याय-

---

1. पृ. 226 प. 15
2. वर्णस्फुटस्फोटस्य
3. त्वेन (क)
4. स्फुटीकरणत्वे

त्वात् । नापि प्रत्येकसमुदायविकल्पावकाशः ; प्रत्येकं वर्णव्यंग्यत्वाभ्युपगमात् । नचैतावता वर्णान्तरोच्चारणवैयर्थ्यम् ; स्फोटस्य प्रत्यक्षत्वेन स्फुटस्फुटतरस्फुटतमाद्यवभासार्थत्वाद् वर्णान्तराणाम्, अभिधेयावभासस्य त्वप्रत्यक्षत्वात्, तस्य च स्फुटादिविभागाभावाद् द्वितीयप्रकृतीनामानर्थक्यं भवेत् । तदुक्तम्—

"प्रत्यक्षज्ञाननियता व्यक्ताव्यक्तावभासिताः ।
मानान्तरेषु ग्रहणमथवा नैव वि[नि]ग्रहः ॥"

इति ॥

॥ स्फोटस्याभागवत्त्वान्न स्फुटादिभेदः, सभागत्वेऽप्येकवर्णस्यैवाभ्यासातिशयेन
स्फोटवैशद्योपपत्तिः, इति वर्णान्तरोच्चारणवैयर्थ्यम्,
स्फोटस्यार्थप्रत्यायकत्वेऽन्योन्याश्रयश्चेति ॥

अथ स्फोटस्य प्रत्यक्षत्वेऽपि तस्याभा[1]गत्वेन किञ्चित् स्फुटं, किञ्चिदस्फुटमिति विभागासम्भवेन द्वितीयादिवैयर्थ्यतादवस्थ्यम् । अस्तु वा स्फोटस्य [2]सभागत्वम् ; तथापि यथैकस्या एव प्रत्यक्षसामग्र्या भूयोऽभ्यासादवभासवैशद्यम्, एवमेकस्यैव वर्णस्य भूयोऽभ्यासादवभासवैशद्यम्, न वर्णान्तरेभ्य इति स्यात् । किञ्च पदस्फोटस्याभिधेयप्रत्ययगमकत्वे स्फोटज्ञानाधीनोऽभिधेयप्रत्ययः, तदधीनञ्च स्फोटज्ञानमित्यन्योन्याश्रय इति मतम् ॥

---

कत्वेऽपि न वर्णान्तरानर्थक्यम् ; स्फुटतरस्फुटतमार्थावभासार्थत्वात्, अत्राह— **अभिधेयेति** ॥

स्फुटस्फुटतरादिविभागस्य प्रत्यक्षधीधर्मत्वेऽपि न स्फोटबु[बु]द्धौ तत्संभवः ; तस्य निरवयवत्वेन ग्रहणाग्रहणयोरेकतरप्रसङ्गादिति शङ्कते—**अथ स्फोटस्येति** ॥ पद[?]वाक्यस्फोटविभागवत् पदस्फोटस्यापि नानावर्णव्यङ्ग्यत्वाद्विभागेन सभागत्वमित्याशङ्क्याह—**अस्तु वेति** ॥ रत्नतत्त्वपरीक्षादावेकस्या एव प्रत्यक्षसामग्र्या भूयोऽभ्यासाद् रत्नतत्त्ववैशद्यवद् एकस्यैव वर्णस्य भूयोऽभ्यासात् स्फोटः स्फुटतमो भवेदिति भावः । अर्थप्रत्ययानुपपत्त्या स्फोटप्रतीतावितरेतराश्रयोऽपीत्याह—**किञ्चेति** ॥

निरवयवस्यापि स्फुटास्फुटावभासविषयभावोपलाभात्, स्फोटस्य प्रत्येकवर्णाभि-

---

1. तस्याभागवत्त्वेन 2. भागवत्वं

॥ निरवयवेऽपि स्वर इव स्फुटादिविभागोपपत्तिः, न चान्योन्याश्रय इति तत्परिहारः, स्फोटवादोपसंहारश्च ॥

तदसत्; षड्जगान्धारादीनां स्वराणामनवयवत्वेऽपि प्राथमिकप्रत्यक्षत्वेऽपि भानो[नाविभागेन]गृहीतानां तत्प्रतिपादकशास्त्रस्याभ्यासाहितसंस्कारप्रकर्षे सति पुनः प्रत्यक्षान्तरेषु स्फुटस्फुटतरस्फुटतमाद्यवभासं किं नानुभवसि? [1]यत्पुनरेकस्या एवे[2]त्यादि, तदसत्; तत्रापि पूर्वपूर्वाभ्याससंस्काराणां भेदाद् वर्णाभिव्यक्तस्फोटमात्राधीनत्वादर्थधियः पदस्फोटस्यार्थप्रत्ययगम्यत्वेऽपि नेतरेतराश्रयता। तस्मात् सकलवर्णविकल्पोत्तीर्णस्फोटात्मैव शब्द इति सिद्धम् ॥

॥ वर्णातिरिक्तस्य स्फोटस्याप्रत्यक्षत्वेन निरासोपक्रमः ॥

"अत्राभिधीयते स्फोटो नाध्यक्षेणावसीयते ।
अर्थापत्त्या न प्रथते वर्णेभ्योऽर्थप्रतीतितः ॥ २३ ॥

कस्यायमनुभवः—सकलवर्णविकल्पातीत पदमावेद्यत इति? न तावल्लोकस्य। स खल्वेवं पृष्ट एवाचष्टे—वर्णानेवोपलभे, न तदुत्तीर्णं पदं शब्दरूपम्, अशब्दरूपं वेति। नापि तावकोऽनुभवः; प्रतिवादिवाक्ये वादिनोऽनादरात् ॥

॥ गौरित्येकं पदमिति सर्वलोकानुभवस्य स्फोटे प्रमाणत्वं पूर्वपक्ष्युक्तमाशङ्क्य निरासः, अनेकेष्वेकाकारप्रतीतेरसाधकत्वात् ॥

[3]अथ—गौरित्येकमिदं पदमित्यनेकवर्णेष्वेकाकारापि[वि]संवादिसंवा[वे]दनं

---

व्यङ्ग्यत्वनयेऽपि न वर्णान्तरानर्थक्यमिति दूषयति—**तदिति** ॥ परेरितेतरेतराश्रयं परिहरति—**वर्णेति** ॥ वर्णव्यक्तस्फोटस्यार्थप्रत्यायकत्वमर्थप्रतीत्यनुपपत्त्या कल्प्यते, यथा जीवतो देवदत्तस्य गृहेऽभावानुपपत्त्या बहिर्भावः, अन्यथा तत्रापीतरेतराश्रयो भवेदिति भावः ॥

वर्णोक्तिः [वर्णातिरिक्त] स्फोटानुभवो लौकिकस्य, भवतो वेति विकल्पयति—**कस्येति** ॥

लौकिकानुभव एव युक्त्या व्यवस्थाप्यमानो वर्णातिरिक्तस्फोटमावेदयतीत्युक्तत्वाद् न विकल्पावकाश इति शङ्कते—**अथेति** ॥ 'एकमिदं पदमि'ति वेदनं[ने] वर्णेष्वौपाधि[क]क्यमिति वाद[र]यितुम्—**तत्रेति** ॥

---

1. पृ. 238 प. 13  2. एवेतददि। तदसत्  3. पृ. 233 प. 3

वर्णोत्तीर्णं पदमावेदयतीत्युक्तमिति— मतम्, तत्रेदं विदांकुर्वन्तु भवन्तः— किमनेकेष्वेकाकारसंवेदनमात्रं तदतिरिक्तमावेदयितुमीष्टे? किं वा किञ्चिन्निमित्तमूरीकृत्य तानेवालम्बत इति। तत्रातिरिक्तकल्पनायां [1]गौरवाद् निस्सन्धिबन्धस्थिततरुषु वनमितिवदेकार्थधीजनकत्वोपाधौ वर्णानामेव पदवेदनगोचरभावः परिकल्पनीयः; लाघवात् ॥

॥ स्फोटकल्पनायां हि गौरवम्, न च तत्कल्पनेति शङ्का,
प्रत्यक्षस्य वर्णातिरिक्ताविषयत्वेन परिहारश्च ॥

कल्पनायां हि गौरवम्, न वयं परिकल्पयामः, तस्यैकोऽयमित्यध्यक्ष्यमाणत्वादिति चेत्, किं वर्णानपेक्षोऽध्यक्ष्यते, तत्सापेक्षो वा? नाद्यः; अनुभवविरोधात्। द्वितीयेऽप्येकैकवर्णसापेक्षेन्द्रियेणाध्यक्ष्यं चेत्, गकारमात्रे स्फोटानुभवप्रसङ्गः। गङ्गागगनगर्गादिसाधारणगकारव्यक्तस्य नानासाधारणतया नानार्थव्यञ्जकत्वप्रसङ्गाच्च [ङ्गश्च]। वर्णसामस्त्यसाकांक्षेण चेत्, गकारौकारविसर्गाणामेव गौरिति गम्यमानत्वप्रसङ्गः। तदुक्तम् —

"परस्परानपेक्षाश्च श्रोत्रबुद्ध्या स्वरूपतः।
वर्णा एवावगम्यन्ते न पूर्वापरवस्तुनि[नी]॥" इति॥

॥ स्फोटे श्रोत्राग्राह्ये शब्दलक्षणाभावान्न स्फोटस्य पदत्वम् ॥

श्रोत्रग्राह्ये च शब्दशब्दप्रयोगः; सामान्यवतः श्रोत्रग्राह्यत्वस्य शब्दलक्षण-

---

पदप्रत्यक्षमप्रामाणिकं परिकल्प्यम्, इह तु प्रत्यक्षसिद्धत्वाद् गौरवचोद्यमनुचितमिति शङ्कते—**कल्पनायां हीति**॥ अनुभवविरोधादित्युपलक्षणम्; वर्णोच्चारणानर्थक्यप्रसङ्गाच्चेत्यर्थः॥ एकैकवर्णानुरक्तो गम्यते, सकलवर्णानुरक्तो वेति विकल्प्य क्रमेण दूषयति—**द्वितीये[पी]त्यादिना**॥

वर्णानामेव श्रोत्रग्राह्यत्वम्, न वर्णोपलब्धेः परस्तात् स्फोटप्रतिभास इत्यत्र भ वृद्धसंवादमाह – **तदुक्तमिति**॥ श्रोत्रबुद्ध्या=श्रोत्रजधिया—**पूर्वापरवस्तुनी इति**॥ वर्णोपलम्भात् परं पदरूपं वस्तु न प्रतीयते। तत्र दृष्टान्तत्वेनोक्तम्—**पूर्ववस्त्विति**॥

श्रोत्रागोचरत्वाच्च रूपादिवद् न शब्दशब्दवाच्यत्वमिति प्रतिपादयितुं शब्दशब्दप्रवृत्तिनिमित्तमाह—**श्रोत्रेति**॥ तदुपपादनाय तल्लक्षणमाह—**सामा-**

---

1. गौरवम् (क)

त्वात्। नच स्फोटोऽपि श्रोत्रग्राह्यः; विगलितवर्णोपरागस्य श्रोत्रेणाग्रहणात्, एकैकवर्णानुरागिणः प्रतीतावनवगतिप्रसङ्गात्, तदीयस्फुटस्फुटतरादिविभागस्य पराकरिष्यमाणत्वात्॥

॥ जात्यादिप्रत्ययानां तदतिरिक्तार्थान्तरालम्बनत्ववत्
स्फोटालम्बनत्वं वर्णप्रत्ययस्येति शङ्कानुवादेन तन्निरासश्च ॥

[1]यत्तु—जातिप्रत्ययो रूपान्तरसम्भेदे—इत्याद्युदितम्, तत्रापि लाघवा[2]दर्थान्तरालम्बनत्वं प्राप्तम्। तच्चैकैकव्यक्तिमात्रप्रतीतौ जातिप्रतीतेर्न व्यक्तिसमूहालम्बनत्वम्। नाप्येकैकव्यक्त्यालम्बनत्वम्; तासां व्यभिचारादिति[3] बाधकेनापोद्यते। [4]अपि च विज्ञानस्य नावयवसमुदायालम्बनत्वम्; अवयवानां त्रिचतुराणां पञ्चषाणां वाऽवगमेऽपि पटबुद्धिदर्शनात्, प्रकृते पुनरेकवर्णानुपलम्भेऽपि गोपदवेदनादर्शनात्। चित्ररूपप्रत्ययस्यावयवरूपसमुदायालम्बनत्वे बाधकस्य भवतैवाभिहितत्वाद्वैषम्यम्। [5]नच सर्वं चाक्षुषं प्रभारूपानुविद्धं बोद्धव्यम्; अन्धकारे व्यभिचारात्, इतरथा जात्यादिदृष्टान्तेन वनसेनादीनामर्थान्तरत्वप्रसङ्गः॥

---

**न्येति**॥ वर्णानुपरक्तः प्रतीयते, तदुपरक्तो वा। नाद्य इत्याह—**विगलितेति**॥ द्वितीयेऽप्येकैकवर्णानुरागेण प्रतीतिः, सकलवर्णानुरागेण वेति विकल्प्य दूषयति—**एकैकेति**॥ द्वितीयमपवदति—**तदीयेति**॥ कथं तर्हि जातिसिद्धिः? अत्राह—**तच्चेति**॥ जातिप्रतीतेर्व्यक्त्यालम्बनत्वं च बाधकादपोद्यते। बाधकमुपपादयति—**एकैकेति**॥ **त्रिचतुराणामिति**॥ अवयविनमन्तरेणावयवत्वव्याघातानुगृहीतम्—विमतोऽवयवसमूहः, नावयविप्रतीत्यालम्बनः, समूहत्वात्, अवगतावयवसमूहवदित्यनुमानमवयवप्रतीतेरवयवा[व्या]लम्बनत्वे बाधकम्। न च वने प्रतिवन्दिः, एकदेशस्थतया प्रतीयमानतरूणामेव वनप्रतीत्यालम्बनत्वादित्यर्थः। **अभिहितत्वादिति**॥ [अवयव]समवायादवयविनश्चाक्षुषत्वे घटादेरपि तत एव तदुपपत्तौ नावयवरूपसमूहातिरिक्तमवयविरूपं क्वापि प्रसिद्ध्येदित्यपि द्रष्टव्यम्॥ **वैषम्यमिति**। जात्यादिप्रत्ययस्य लाघवेन प्राप्तमौत्सर्गिकं व्यक्त्याद्यालम्बनत्वं बाधकेनापोद्यते। पदवेदनस्य च वर्णसमूहालम्बनत्वे बाधकं नास्तीत्यर्थः। **अन्धकार इति**॥

---

1. पृ. 234 प. 9
2. लाघवादर्थालम्बनत्वं (क)
3. "ति" नास्ति
4. "अपि च" नास्ति
5. पृ. 234 प. 11

॥ एकत्वप्रत्ययस्यैकार्थबोधकत्वौपाधिकत्वेन नात्रान्योन्याश्रयः,
इति वर्णपक्षेऽपि नैकप्रत्ययविरोधः ॥

[1]यत्पुनरपरमीरितम्—पदादयोऽप्येकविज्ञानविषया एकार्थक्रियाकारिणश्च, इति तन्निबन्धनमेकत्वं लभेरन्—इति, तत्र न तावदयं प्रसङ्गः—तस्माद्वर्णविकल्पोत्तीर्णं पदमिति विपर्ययग्राहिप्रमाणविकलतया प्रसङ्गाभासत्वात्। नापि साधनम्; अपसिद्धान्तात्। औपाधिकबोधस्योपाधिबोधाधीनत्वात्। [2]अभिधेयबोधात्पदबोधः, ततश्चाभिधेयधीरिति परस्पराश्रय इति चेत्, न; पूर्वमेकपदत्वावधारणानभ्युपगमात्॥

॥ एकस्मृत्यारूढत्वेन वर्णानामेकार्थबोधकत्वं न विरुध्यते ॥

एकार्थप्रतीतिहेतुत्वञ्च वर्णानां स्मर्यमाणानां नियतानुपूर्वीविशिष्टानां सुकरमेव। तदुक्तम्—

"यावन्तो यादृशो ये च यदर्थप्रतिपादने।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥"

तथा—

"नान्यथाऽनुपपत्तिश्च भवत्यर्थमितिं प्रति।
तदेवास्यां निमित्तं स्याज्जायते यदनन्तरम्॥

---

प्रभाद्वयेऽपि व्यभिचारादित्यर्थः। प्रमाणमन्तरेणोदाहरणमात्रेण स्फोटस्यार्थान्तरत्वे बाधकमाह—**इतरथेति**॥

पटा[दा]दीनामेकत्वाभावं प्रसञ्जयसि, प्रसाधयसि वा। प्रथमं प्रत्याह—**तत्रेति**॥ तरूणामेकदेशसंसर्ग इव वनबुद्धौ, वर्णानामेकार्थधीजनकत्वोपाधौ पदत्वम्। ततश्च दुरुत्तरमितरेतराश्रयमित्युक्तं स्मारयति—**औपाधिकेति**॥ पदा[दत्वा]वधारणानपेक्षत्वात् पदार्थप्रतीतेर्नेतरेतराश्रयमित्याह—**नेति**॥

पदत्वानवधारणे वर्णानामर्थधीजनकत्वं न स्यादनवधारितपदावधेः, अवध्यन्तरपरिग्रहे क्रमवैपरीत्ये वाऽप्रत्ययात्, अत्राह—**एकार्थेति**॥ नियतक्रमसद्भावच्छिन्नवर्णानामर्थधीजननसामर्थ्यस्य वृद्धव्यवहारे ग्रहणादित्यर्थः॥ कीर्तितेऽर्थे वार्तिकं कीर्तयति—**तदुक्तमिति**॥ पदत्वावधारणमन्तरेण वर्णानामर्थप्रत्यायकत्वमित्येतावन्मात्रसंप्रतिपत्त्या वार्तिकान्तरमुदाहरति—**तथेति**॥

एकार्थधीजननोपाधौ वर्णानां पदत्वे परैरितमितरेतराश्रयं परिहृत्य, परपक्षे तं

---

1. पृ. 235 प. 7 2. पृ. 235 प. 12

सा च वर्णद्वयज्ञानेऽतीतेऽन्त्यज्ञानतः परा ।
भवतीतीदृगेवास्या निमित्तमवकल्पते ॥ " इति ॥

॥ समूहिनां बुद्धिक्रमभेदेऽपि समूहबुद्धिभेदाभावे राजाजरापदयोः पर्यायत्वम्, स्फोटस्य पदत्ववादोऽपि न विकल्पसह इत्यादिनिरूपणम् ॥

[1]यच्चोक्तम्—नहि समूहिनामुपलब्धिक्रमभेदेऽपि समूहबुद्धिभेदः—इति, तत्र राजाजरेति जकारदैर्घ्याभ्यां पदभेदः, नदीदीनेत्यत्रोदात्तादिस्वरभेदात् । स्फोटस्यापि पदत्वं स्फोटत्वान्न; वर्णवाक्यस्फोटस्यापि तत्त्वापातात् । [2]नाप्य[3]र्थावगमकत्वात्, धूमादेरपि तथात्वापातात् । नापि श्रोत्रग्राह्यत्वात्, वर्णानामेव तत्त्वापातात् । नापि श्रोत्रग्राह्यत्वे सत्यर्थधीजनकत्वात्; वाक्यस्फोटस्यापि तत्त्वापातात् । तस्मादेकाभिधेय[4]बोधकत्वेन पदभावे भवतोऽपि कथं नेतरेतराश्रयप्रसङ्गः ? तस्मादेकार्थधीजनकत्वोपाधौ वर्णानामेव पदबोधगोचरीभावान्न वर्णोत्तीर्णपदस्याध्यक्षतासिद्धिरिति सिद्धम् ॥

॥ वर्णेभ्योऽर्थप्रत्ययान्नार्थापत्तिः स्फोटे प्रमाणम् ॥

[5]नाप्यर्थापत्तिः स्फोटं स्फुटयितुमीष्टे; अन्तरेण स्फोटमनुपपद्यमानादर्शनात् । अभिधेयधीरेव स्फोटमन्तरेणानुपपन्ना तत् साधयतीत्युक्तमिति चेत्, नैतत् साधु; वर्णेभ्य एव तत्सिद्धौ तदतिरिक्तस्फोटकल्पनागौरवायोगात् ॥

॥ एकस्मृत्यारूढसकलवर्णानां मिलितानामर्थबोधकत्वात् प्रत्येकमिलितविकल्पायोगः ॥

---

प्रसञ्जयितुं स्फोटस्य पदत्वे स्फोटत्वं प्रयोजकम्, बोधकत्वं वा, श्रौत्रत्वं वा, श्रौत्रत्वे सति बोधकत्वं वा, एकार्थधीजनकत्वं वेति विकल्प्य पराचष्टे—**स्फोटस्येत्यादिना** ॥

स्फोटो नाध्यक्षेणावसीयत इति पूर्वार्धमुपसंहरति—**तस्मादिति** ॥

संस्कारका[रा]णां प्रागनुभूतभावसाकल्यगोचरैकस्मृतिजनकत्वं लौकिकपरीक्षकसंप्रतिपन्नत्वात् स्वीकार्यमिति प्रतिपादयति—**तथाहीति** ॥ यदि कस्यचिदभिनिवेशो निरपेक्षसामग्रीणां संभूयैकस्मृतिजनकत्वमयुक्तमिति, तं प्रत्याह—

---

1. पृ. 236 प. 4
2. पृ. 237 प. 1
3. नाप्यर्थागमकत्वार्थम् (क)
4. पृ. 236 प. 15
5. पृ. 236 प. 13

[1]यत् पुनरत्र प्रत्येकमिलितविकल्पानुपपत्त्या वर्णानामर्थप्रत्यायकत्वमनुपपन्नमित्युक्तम्, तदयुक्तम्; अन्त्यवर्णोपलम्भानन्तरं पूर्वपूर्ववर्णोपलम्भाहितसंस्कारेभ्यः सकलवर्णगोचरैका स्मृतिरुपजायते, तदेकस्मृत्यारूढा वर्णा अर्थबोध[2]मादधतीति किमनुपपन्नम्?

॥ संस्काराणां प्रागनुभूतभावसाकल्यगोचरैकस्मृतिजनकत्वं
परीक्षकानुभवसिद्धम्। अतः संस्कारक्रमेणैकस्मृतिर्न दोषाय ॥

[3]यदप्युदितम्—संस्काराणां प्रत्येकं स्मृतौ निरपेक्षकारणानां सम्भूयैकस्मृतिजनकत्वमयुक्तमिति; तदयुक्तम्। तथाहि—सकलवादिनामभिमतं पौर्वापर्यं पर्यालोचितेष्वपि भावेषु समुच्चयावग्रहं विज्ञानम्। तदनुपगमे हि तत्प्रकारानुपातिषु शतं विंशतिरिति समुच्चयदर्शनं विरुध्येत। तस्मात् श्रोत्रमनोजन्मभिः क्रमवतीभिरपि बुद्धिभिरवधृतेषु वर्णात्मसु पुरस्तात् परस्तादक्रममखिलवर्णग्राहि स्मरणमवकल्पते। तत्र च संक्रान्तप्रतिबिम्बा वर्णाः समीचीनकार्यं प्रत्यनन्तरतां नातिक्रामन्तीति लौकिकवचनं [4]समञ्जसम्—शब्दादर्थं प्रतिपद्यामहे—इति। शास्त्रकारवचनञ्च "भावमाख्याचष्टे" इति। तदुक्तम्—

"यद्वा प्रत्यक्षतः पूर्वं क्रमज्ञातेषु यत्परम्।
समस्तवर्णविज्ञानं तदर्थ[5]ज्ञानकारणम्॥"

इति

---

**तदनुपगमे हीति**॥ तत्प्रकारानुपातिषु पर्यालोचितप्रकारवत्स्थि[त्स्वि]त्यर्थः। संस्काराणां संभूयैकस्मृतिजनकत्वप्रतिपादनफलं निगमयति—**तस्मादिति**॥ **विंशतिरिति** समुच्चयविज्ञानम्। तच्च संस्काराणां संभूयकारित्वे प्रमाणम्, इह तथात्वे न किञ्चिन्मानमस्तीत्याशङ्क्य, शब्दादर्थप्रतिपत्तिप्रसिद्धिरत्रापि मानमित्याह—**तत्र चेति**॥ पूर्ववर्णोपलम्भ[ज]संस्कारसहितान्त्यवर्णस्यार्थप्रत्यायकत्वपक्षेऽरुचिद्योतनाय यद्वेत्युक्तम्॥

एकस्मरणारूढानामपि वर्णानामर्थबोधकत्वमसंबद्धम्; क्रमसङ्क्रमणायोगादिति चोदयति—**नन्विति**॥ उपलब्धिक्रमो वर्णेषूपरज्यताम्, तदुपरक्ताश्च वर्णाः

---

1. पृ. 237 प. 5
2. अर्थबोधकत्वमाद (क)
3. पृ. 237 पं. 6
4. समञ्जसमिति नास्ति।
5. "वि" अधिकम्

॥ उच्चारणक्रमोपरक्तवर्णानां पूर्वोपलब्ध्यनुसारेण स्मरणं न विरुद्धम् ।
स्फोटाभिव्यक्तिवादेऽपीयमेव गतिः ॥

[1]ननु वर्णानां नित्यत्वविभुत्वाभ्यां कालनिबन्धनो देशनिबन्धनश्च क्रमो न सङ्गच्छते ; [2]प्रख्याननिबन्धनस्त्वेष समुपाश्रीयते; पूर्ववर्णोपलब्धीनां प्रख्यानागोचरत्वेन तत्प्रभावितभावनाप्रभवस्मरणस्य क्रमसंक्रमणायोगात् , अभिमतविपरीतक्रमोपलब्धवर्णानामेकस्मृतिसमारोहिणामविशेषाद् अविशेषेणार्थप्रत्यायकत्वप्रसङ्गः—इति, मैवम् ; उच्चारणक्रमोपरक्तवर्णगोचरपूर्वप्रतीतिकृतवासनासमुपजातस्मरणस्य क्रमविशेषावच्छिन्नवर्णगोचरत्वात् , इतरथा वर्णव्यक्तस्य स्फोटस्य ध्वनिव्यक्तस्य वाऽर्थप्रत्यायकत्वेऽपि प्रसङ्गसाम्यात् , चैत्रोच्चारितः शब्दः श्रूयत इत्यनुभवात् । एवंभावानभ्युपगमे स्फोटोऽपि भवतो [3]न व्यज्येत ; तत्रापि प्रत्येकमिलितविकल्पावकाशात् । [4]यस्तु विशेषोऽभाषि—स्फोटस्य प्रत्येकं वर्णव्यङ्ग्यत्वाङ्गीकारात्—इति, सोऽसङ्गतः ; गकारमात्रश्रवणे स्फोटानुपलम्भात् , उपलम्भे वा गगनगर्गाद्यनेकार्थबोधकत्वप्रसङ्गात् ।

---

स्मृत्येकयोपरज्यन्ताम् , किं नश्छिन्नम् ? अत्राह—**पूर्ववर्णेति** ॥ उपलब्धीनां वर्णमात्रगोचरत्वेन स्वगोचरत्वाभावात् तज्जनितसंस्कारकृतस्मरणस्यापि वर्णमात्रगोचरत्वेनाभिमतक्रमोपलब्धानां विपरीतक्रमोपलब्धानां चैकस्मृत्युपारोहिणां स्वरूपमात्रेण स्वरूपस्मर्यमाणत्वाविशेषादित्यर्थः । उच्चारणक्रमोपरक्तवर्णानां पूर्वोपलब्धिगोचरत्वात् क्रमविशेषवतां स्मरणमित्याह—**मैवमिति** ॥ उच्चारणस्य ताल्वोष्ठपुटादिव्यापारस्याश्रावणत्वात् कथं तत्क्रमोपरक्तवर्णोपलब्धिः ? अत्राह—**इतरथेति** ॥ वर्णानां क्षणिकत्वे कालस्याश्रावणत्वेऽपि तत्क्रमविशिष्टवर्णश्रावणत्ववद् उच्चारणक्रमविशिष्टस्य श्रावणत्वमित्युक्तम् , अत्र प्रमाणमाह—**चैत्रेति** ॥ एकस्मृत्युपारोहिणां वर्णानामर्थव्यञ्जकत्वानभ्युपगमे बाधमाह—**एवंभावेति** ॥

गकारमात्रपरिच्छिन्नरूपसाधारण्येऽपि वर्णान्तरपरिच्छिन्नं रूपमसाधारणमसाधारणार्थपरिच्छेदकमिति शङ्कते—**अथेति** ॥ विशेषः स्फोटस्य स्वरूपम् , अर्थान्तरम् , धर्मो वेति विकल्प्य दूषयति—**तदपीति** ॥ कुत इति ? अत आह—**तयोरिति** ॥ स्फोटस्फुरणे विशेषो न स्फुरेत् , विमतौ, न विशेषस्फोरकौ,

---

1. पृ. 236 प. 16
2. प्रज्ञानिब
3. भवतोऽभिव्यज्येत ।
4. पृ. 238 प. 1

[1]अथ गकारमात्रेण स्फोटोऽभिव्यक्तोऽपि न गङ्गाद्यनेकार्थव्यञ्जकम्[:], इतरवर्णाभ्यां विशेषतः परिच्छिन्नस्य व्यञ्जकत्वादित्युच्यते, तदपि न सम्यक्; विशेषस्य स्फोटस्वरूपत्वे भाषितदोषानुषङ्गात्, अर्थान्तरत्वे किमायातं तत्परिच्छेदापरिच्छेदाभ्यां स्फोटस्य? तयोः स्फोटास्फुरणात्, [2]स्फुटनमन्तरेण तत्समवायिधर्मास्फुरणात्। पूर्वोपलम्भसंस्कारवतीतरवर्णावलम्बजनितपरिपाके मनसि विशेषतः स्फोटः स्फुरतीति चेत्, न; [3]तस्याश्रोत्रग्राह्यत्वेनाशब्द[4]त्वात्, अभिधेयधियोऽशब्दत्वप्रसङ्गात्। अस्माकं पुनरात्मविशेषः स्फुरन्नेव नाविद्यां हन्ति; तन्निवर्तकप्रमाणानुपनिपातादिति न प्रतिबन्दीकृत्याऽपि ॥

॥ स्फोटेऽभागे स्फुटत्वादिविशेषदुर्वचत्वेन वर्णान्तरवैयर्थ्यम् ॥

[5]यदप्यवादि—स्फोटस्य प्रत्यक्षत्वेन स्फुटस्फुटतरस्फुटतमाद्यवभासार्थत्वं वर्णान्तराणाम्—इति, तत्र किमिदं स्फुटत्वमवभासस्य—अर्थसाकल्यगोचरत्वम्? अर्थसमवायिभूयोधर्मैः सहार्थगोचरत्वं वा? आद्ये वर्णादेव स्फोटावभासः स्फुटः स्यात्; स्फोटस्य निर्भागस्य साकल्येनावभासनात्। न द्वितीयः; घटसमवायिरसगन्धादीनामन्तरेणापि स्फुरणं घटावभासस्य स्फुटत्वात्। अतो द्वितीयादिवर्णानर्थक्यं तदवस्थम्। नचासौ सभागः; वर्णातिरिक्तभागान[6]नुभवात्, अनभ्युपगमाच्च ॥

॥ स्वरस्यापि न निर्भागत्वम्, इति स्फुटतरत्वादिभेदे न स दृष्टान्तः ॥

---

स्फोटस्फोरकत्वात्; गकारवदित्यर्थः। क्रमेण भवन्तो वर्णोपलम्भा मनसि भावनामादधति, तत्प्रभावितपरिपाकं मनः स्फोटं गृह्णातीति शङ्कते—**पूर्वेति**॥ विमतः, न शब्दः, अश्रावणत्वात्, सुखादिवदित्याह—**नेति**॥ यथा नाज्ञस्यात्मनोऽहमिति प्रतीतौ न विशेषतः स्फुरणम्; नित्यसंसारनिवृत्तिप्रसङ्गात्, वाक्यजज्ञाने सविशेषस्य स्फुरणम्, एवं स्फोटोऽपि न[?]गकारे निर्विशेषः स्फुरन् वर्णान्तरे सविशेषः किं न स्फुरेत्, अत्राह—**अस्माकमिति**॥

प्रथमत एव स्वरः स्फुटं स्फुरति, तत्समयग्राहकशास्त्रानभ्यासे तु तत्सञ्जल्पो न जायते, तदभ्यासे तु तत्सञ्जल्पः, इति न निरवयवावभासे स्फुटत्वास्फुटत्वविशेष इति

---

1. पृ. 240 प. 11
2. तत्स्फुरणमन्तरेण (क)
3. पृ. 240 प. 17
4. तस्याश्रोत्रग्राह्यत्वेनाशब्दसत्वात् अभिधेय
5. पृ. 238 प. 10
6. भावानुभववाभगवात् (क)

[1]यत्त्विदमुक्तम्—निर्भागस्यापि स्वरस्यावभासोऽस्फुट इति, तदपि रिक्तमेव। यो [यतोऽ]ऽस्माकं विश्वमूलमज्ञानमपि न निरवयवम्, किमुत तत्कार्यनामरूपप्रपञ्चे न निरवयवमस्तीति ?

॥ स्वरस्य प्रत्यक्षत्वेन तत्सामस्त्याभ्यासात् सामग्रीवैचित्र्याद्वा स्फुटतरत्वादिप्रतीतिन्यायस्याप्रत्यक्षे स्फोटे न प्रसरः, न वा स्फोटकल्पनागौरवपरिहारः ॥

किञ्च प्रत्यक्षसामग्र्या भूयो भूयोऽभ्यासे प्रथममस्फुटोऽपि स्फुटीभवन् दृष्टः, न तथेह ह[ग]कारमात्राभ्यासे गोत्वव्यञ्जकस्फोटः स्फुटं स्फुरति, तत्रापि संस्कार-भेदसहकारिवैचित्र्यात् सामग्रीवैचित्र्यञ्चेत्, तत् प्रकृतेऽपि सामग्रीवैचित्र्यं स्यादेव, इति गकारमात्राभ्यासे[न] स्फोटस्फुटस्फुरणप्रसक्तिः। तस्माद्यावन्तो यत्क्रमवन्तो वर्णाः स्फोटस्फुरणहेतवः, तेभ्य एवार्थोऽपि स्फुरेत्, इति स्फोटकल्पनागौरवानुपपत्तेर्नार्था-पत्तितोऽपि स्फोटसिद्धिरिति स्थितम् ॥

॥ शब्दतत्त्वमस्माकं वेदान्तिनां ब्रह्मतत्त्वं चैकमेव, तस्याप्रामाणिकत्वे ब्रह्माप्यप्रामाणिकं स्यात् ॥

यदपरमीरितम्—

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन जगतः प्रक्रिया यतः॥"

॥ सर्वेषां प्रत्ययानां शब्दानुवेधोपपादनम्, शब्दानुवेधाभावे सर्वस्यान्धमूकादिभावापत्तिः ॥

---

दूषयति—**तदपि रिक्तमिति**॥ स्वरः, न निरवयवः, अनात्मत्वात्, घटवदित्यनुमानात् साध्यसमश्च दृष्टान्त इत्याह—**यत इति**॥ स्फोटावभासस्य स्फुटस्फुटतरादिभावमभ्यु-पेत्याप्याह—**किञ्चेति**॥

वियदादिविश्वकारणं ब्रह्म परैरुपेतम्। तदेवास्मदभिमतं शब्दतत्त्वं स्फोटा-परपर्यायमिति शङ्कामुत्थापयति—**यदपरमिति**॥ ब्रह्मणो विश्वमूलत्वं प्रामाणिकत्वा-

---

1. पृ. 239 प. 3

तथाहि — विश्ववेदनमुदयमासादयत् शब्दोल्लिखितमेवोदीयते, तदुल्लेखविकलवेदनस्यानासादितप्रकाशस्वरूपस्यानुत्पन्नसमत्वात्, इदमीदृशमिति परामर्शमुषितवपुषि वेदनात्मकतैव न स्यात्। येऽप्यविदितपदतदर्थसङ्गतिविशेषा बालमूकादयः, तेऽपि यत्, तत्, किम्, सदि'त्यादिमानसशब्दाननुल्लिखन्तो न किञ्चिन्निश्चिन्वन्ति, इत्यतः शब्दोन्मिषित[1]प्रभावप्राप्तप्रकाशस्वभावत्वात् सर्वप्रत्ययानां शब्दानुरक्तावेदकत्वमिति सर्वं शब्दतत्त्वमिति निश्चीयताम्। यदाह—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते॥"

इति। एवमनभ्युपगमे संविदः प्रकाशशून्यतयाऽनधिगतविषयः सर्व एवान्धमूकप्रायो लोकः स्यात्। आह च—

"वाग्रूपता चेदुत्क्रामे[2]दवबोधस्य शश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥" इति॥

॥ शब्दार्थभेदोपपादनम् ॥

अतः क्रमेण तावदेवं बुध्यसे, शब्दाख्यविशेषणानुवेधवन्ध्यबोधविशेषाननुभ-

---

दुपेतव्यम्, न तु शब्दात्मत्वम्; प्रमाणवैकल्यात्, अत्राह — **तथाहीति** ॥ विश्ववेदनस्य नादानुरागे तदात्मकं विश्वं स्यात्, तदेव कुतः? अत्राह—**तदुल्लेखेति** ॥ अगृहीतसङ्गतिविशेषाणामर्थविशेषप्रतिभासः शब्दोल्लेखविकल एवेति न सर्वप्रत्ययवेद्यत्वं शब्दात्मकत्वस्य, अत्राह—**येऽपीति** ॥ अन्वयव्यतिरेकाभ्यामुपपादितमुपसंहरति—**अत इति** ॥ फलितं निगमयति—**सर्वमिति** ॥ इति शब्दो यस्मादर्थे ॥ उक्तेऽर्थे **भ र्तृ ह रि**वाक्यमुदाहरति—**यदाहेति** ॥ **अनुविद्धमिवेति** ॥ अनुरक्तमेवेत्यर्थः। निर्विकल्पविज्ञानस्य शब्दोल्लेखविकलत्वान्नेत्थम्भावोऽभ्युपगम्यते, अत्राह—**एवंभावेति** ॥ रटितं च **द ण्डि ना**—

"इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥" इति॥

सामान्यशब्दोल्लेखस्तत्रापीत्यर्थः। निखिलवेदनस्य शब्दोल्लेखनमात्रेण कथं विश्वं शब्दात्मकं स्यात्, अत्राह—**अत इति** ॥ **एवं बुध्यस इति** ॥ विश्वं शब्दा-

---

1. न्मीषित (क)   2. त्क (क)

वात् सर्वं निर्विकल्पकम्, इन्द्रियजं सविकल्पकं वा ज्ञानं शब्दविशिष्टमर्थमवद्योतयति—"गौः शुक्लो गच्छती"ति जातिगुणक्रियावच्छिन्नविषयावभासिनि प्रत्यये शब्दविशिष्ट एवार्थः प्रस्फुरतीति बुध्यस्व। एवञ्चेद् बोद्धुमवतीर्णोऽसि, शब्दाख्यविशेषणानुरक्तस्य विशेष[1]स्वरूपं पृष्टः शब्देनैव दर्शयसि, शब्दापरित्यागलब्धप्रकाशस्वरूपस्यैव वाऽनुभूत्याऽनुभवसि, इति सोऽपि विशेषः [2]शब्दरूप एवेति जानीहि। तदेवं शब्द एवार्थोवा[पा]रूढः प्रतिभातीति व्यवतिष्ठते। इत्थमियन्तमध्वानञ्चेत् प्राप्तोऽसि, ता(तद)धुना यदुपारूढः शब्दः प्रकाशते, तस्य पृथक् दर्शयितुम्, अनुमापयितुं वाऽशक्य[3]त्वाच्छब्द एव तथा तथा प्रतिभातीति शब्दविवर्त एवायमर्थः, नान्यः कश्चिदिति प्रतिपत्तुमर्हसि। यथाचायमिन्द्रियजेषु प्रतिभासेषु प्रक्रमः, तथा शाब्दे-

---

त्मकमवगच्छती[सी]त्यर्थः। तदेव व्यनक्ति—**शब्दाख्येति**॥ जातिगुणक्रियाविशिष्टो विशेषः स्पष्टं स्फुरति। स कथं शब्दानुविद्धः स्यात्? अत्राह—**गौरिति**॥ विशिष्टप्रत्ययस्य सविकल्पकत्वेन वाचकशब्दोल्लिखितत्वादित्यर्थः। शब्दविशिष्टत्वे विशेष्यार्थस्य न शब्दात्मत्वम्, दण्डदेवदत्तयोरिव विशेषणविशेष्ययोर्भेदात्, अत्राह—**एवं चेदिति**॥ शब्दः, स्वविशेष्याद् भिन्नः, विशेषणत्वात्; दण्डवदित्येतत् प्रत्यक्षापहृतगोचरमिति मत्वाऽऽह—**तदेवमिति**॥

नन्वेवं शब्दस्यानुगतत्वादर्थानां व्यावृत्तत्वात्सिद्धो भेदः, अत्राह—**इत्थमिति**॥ वाच्यजातम्, वाचकेऽध्यस्तम्, प्रत्येकं तदनुविद्धत्वात्; यदित्थं तत्तथा; दण्डसर्पधारावलीवदमूर्तितत्वादिकं? रञ्जित[रज्विद]मंशानुविद्धं तत्राध्यस्तमित्यर्थः॥

प्रत्यक्षविषयस्य शब्देऽध्यस्तत्वं प्रसाध्य, मानान्तरविषयस्यापि तत्साधयितुमाह—**यथेति**॥ **शब्दविशिष्ट इति**॥ घटः पट इति वाचकशब्देन[ना] व्यावृत्तः=वाचारम्भणमात्र इत्यर्थः। विगीतो वाच्यः, स्ववाचकाद्वस्तुतो न भिद्यते, वाच्यत्वात्, शशशृङ्गवदिति प्रयोक्तव्यम्। **अर्थारूढ इति**॥ वस्तुतः स्वतो भेदरहितवाच्यानुगतः=विगीतः शब्दः, वस्तुतो भिन्नवाच्यहीनः, वाचकत्वात्; शशशृङ्गशब्दवदित्यर्थः। शब्दः, अर्थरूपेण विवर्तते, तेषु प्रत्येकमनुगतत्वात्,

---

1. विशेष्यस्वरूपं (ख) 2. ष्यस्शब्द (क)
3. मनुभवितुं वाक्य (क)

ष्वपि प्रत्ययेषु शब्दविशिष्टो वाऽर्थः प्रतिभाति, शब्दो वाऽर्थारूढः, शब्द एव वाऽर्थरूपेण [वि]वर्तत इति गृह्यताम् । अतश्च शब्दब्रह्मेदमेकमविद्योपाधि दर्शितविचित्रभेदम्, अविद्योपरमे यथावस्थितरूपं प्रकाशत इति युक्तमुत्पश्याम इति ॥

॥ शब्दब्रह्मवादनिरासोपक्रमः । तत्र ब्रह्मकार्यत्वाच्छब्दस्य न ब्रह्मत्वम् ॥

अत्र ब्रूमहे–"तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियते"ति वाच्यवद्वाचकस्यापि ब्रह्मकार्यत्वश्रवणान्न शब्दात्मकं ब्रह्म भवितुमुत्सहते ॥

॥ वाक्कारणताश्रुतिस्त्वर्थवादः, वागगम्यत्वबोधकबहुतरश्रुतिविरोधात् ॥

"वागेव विश्वा भुवनानि जज्ञे" इति वाक्सूक्ते तत्परे जगत्कारणत्वमिति चेत्, मैवम्; तस्य "वाचं धेनुमुपासीते"तिवदुपास्तिपरत्वात्, इतरथा "यतो वाचो निवर्तन्ते", "यद्वाचाऽनभ्युदितम् येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि", "अशब्दमस्पर्शमरूपमव्ययमि"त्यादिब्रह्मपरबहुतरश्रुतिविरोधात् ॥

॥ संवेदनानां शब्दोल्लेखस्य दुर्वचत्वम्, कुत्रचन तदुल्लेखस्य गतिश्च ॥

संविदामपि वाचकशब्दोल्लिखितत्वं वा, शब्दमात्रोल्लिखितत्वं वा। नाद्यिमः;

---

यद्येषु प्रत्येकमनुगतम्, [तत्]तद्रूपेण विवर्तते। यथा सर्पधारादिष्वनुगता रज्जुस्तद्रूपेणेति मतान्तरमाह—**शब्द एव वेति** ॥ व्यावृत्तानामनुवृत्ते कल्पितत्वाद् न क्वापि व्यभिचारः ॥

शब्दः, न ब्रह्म, विकारत्वात्; घटवदिति सिद्धान्तयति—**अत्रेति** ॥ असिद्धो हेतुः, अत्राह—**तद्धेदमिति** ॥

"जन्माद्यस्य यत" इत्युच्यमानं ब्रह्मलक्षणं शब्दात्मत्वं ब्रह्मणो गमयतीति शङ्कते—**वागिति** ॥ विश्वा = विश्वानि। शिलोपश्छान्दसः। श्रोत्रग्राह्यस्य न ब्रह्मत्वम्; विषयत्वात्, रूपादिवत्; अश्रावणस्य न शब्दत्वम्; श्रोत्रग्राह्ये शब्दशब्दप्रवृत्ति[त्ते]रित्याह—**मैवमिति** ॥ उदाहृतसूक्तस्य जगत्कारणत्वगुणारोपेण तदुपासनायां तात्पर्यादसिद्धं ब्रह्मलक्षणं वाच इत्याह—**तस्येति** ॥

विश्वं वेदनं शब्दोल्लिखितमित्येतद्विघटयितुं विकल्पयति—**संविदामपीति** ॥

अत्यन्तादृष्टचरस्य साधारणरूपसाक्षात्कारस्य वाचकशब्दोल्लेखविकलत्वात्, तत्र वचननिचयस्यागृहीतसंगतिकत्वात्, 'यत्तत्किंसदि'त्यादिसामान्यशब्दानां विशेषवाचकत्वाभावात् सतामप्रयोजकत्वम्। अतो वृद्धव्यवहारपरिचितपदसङ्गतीनां शुद्धवस्तुनिरीक्षणे शब्दानुभवाहितसंस्कारप्रबोधात्, शब्दस्मरणमपरिहारमुपजायते, नेतरथा। नेतरः; अवाचकवचनानां वनगोचरविहगकूजितप[व]दबोधकत्वान्न तदधीनता बोधरूपस्य साधीयसी। इयमेव वार्ता "किं सदि"त्यादि सामान्यवचनेष्वपि। तत एव न तृतीयोऽपि॥

॥ सर्वप्रत्ययवेद्यतयाऽभिमतशब्दस्य वर्णातिरिक्तस्य दुर्वचत्वम्॥

किञ्च शब्दशब्देन वर्णा उच्यन्ते, शब्दत्वसामान्यं वा, तदतिरिक्तं वा? आद्ये वर्णानामनेकतयेतरेतरव्यभिचारेऽपि बोधमात्रा[त्व]व्यभिचाराद् न तदात्मावबोधः। द्वितीयेऽपि शब्दत्वबोध एव तदुल्लेखव्यभिचाराद् न बोधमात्रस्य शब्दोल्लेखः। न चरमः; तदुभयातिरिक्तशब्दस्य प्रमाणतो दर्शयितुमशक्यत्वात्। सम्प्रसादेऽविद्यादिसाधकनित्यानुभवस्य शब्दानुवेधवन्ध्यत्वाच्च[1]शब्दादीनां [धीनं] बोधस्य बोधत्वम्॥

॥ ऐन्द्रियकज्ञानेऽर्थस्यैव भानम्, न शब्दस्य, चाक्षुषत्वापत्तेः॥

[2]यदभाणि—इन्द्रियजभानेषु शब्दविशिष्टोऽर्थो भातीति, तदभद्रम्, शब्दस्य चाक्षुषत्वप्रसङ्गात्। नच तार्किकोऽपि शब्दविशिष्टमर्थं चक्षुषा द्रष्टुमीष्टे; चक्षुषैव रूपज्ञानम्, श्रोत्रेणैव शब्दज्ञानमित्यादिनियमविरोधात्। [3]एवञ्च यदुक्तं विशेषण-

---

यदि वेदनस्य न नादोल्लेखनियमः; कथं तर्हि घटादिविकल्पे शब्दसञ्जल्पनियमः? अत्राह—**अत इति**॥ विज्ञानस्य शब्दोल्लेखनियमं प्रकारान्तरेणापासितुं विकल्पयति—**किञ्चेति॥ शब्दत्वबोध एवेति**॥ शब्दत्वविषयविज्ञाने न शब्दत्वोल्लेखांशः; आत्माश्रयादित्यर्थः।

**चाक्षुषत्वप्रसङ्गादिति**॥ विशेषणविशेष्ययोरेकज्ञानविषयत्वनियमादित्यर्थः। चाक्षुषार्थविशेषणतया शब्दस्यापि चाक्षुषत्वं स्यात्। अतीन्द्रियपरमाणो-

---

1. त्वाच्च न शब्दा (क) 2. पृ. 250 प. 1
3. पृ. 249 प. 7

शब्दरूपव्यतिरेकेण विशेष्योऽर्थो दर्शयितुम्, अनुभवितुं वा[न]शक्य इति, तदपहस्तितम्। इन्द्रियज्ञानेषु शुद्धार्थानुभवात् ॥

॥ शाब्दप्रत्यये शब्दस्य नोल्लेखो युक्तः; एकस्य वक्तृवाच्यभावोभयविरोधात् ॥

[1]यच्चावाचि—इन्द्रियजज्ञानेष्विव शाब्दज्ञानेऽपि शब्दविशिष्टोऽर्थः प्रकाशते इत्यादि, तदचारु; शब्दस्यैव वाच्यवाचकभावप्रसङ्गात्। सोऽप्यस्त्विति चेत्, मैवम्; विकल्पासहत्वात्। तथाहि—एकस्य वक्तृत्वम्, वाच्यत्वञ्च किमेकरूपेण, रूपाभ्यां वा। आद्येऽपि युगपदेव वक्तृवाच्यभावः, क्रमेण वा। नाद्यः; कर्तृकर्मभावस्यैकक्रियायामेकस्य विरोधात्। वक्तृत्वे तथैव समाप्तेः, वाच्यत्वे च तथैव समाप्तेर्न पर्यायेणापि वाच्यवाचकभावः,। रूपाभ्यां वाच्यवाचकभावेऽपि रूपयोर्भेदे वक्तुर्वक्तृत्वमेव, वाच्यस्य वाच्यत्वमेव, न तूभयमेकस्य। रूपयोरभेदे प्रागुक्तदोषानुषङ्गः। भेदाभेदौ व्या[ह]तौ। अनिर्वाच्यत्वे वाच्यवाचकयोः कल्पितत्वमेव, इति तत्कल्पनामूलमन्वेष्टव्यम् ॥

॥ शब्दतत्त्वस्य ब्रह्मण इवं न कल्पनाधिष्ठानत्वम्, येन तत्राध्यासेन वाच्यवाचकयोरभेदः स्यात्, विषयत्वेन तस्यापि मिथ्यात्वात् ॥

नच तदपि शब्दात्मकमेव; प्रमाणाभावात्, श्रोत्रग्राह्य एव शब्दशब्दप्रयोगात्, तस्य चेन्द्रियविषयस्य घटादिवदब्रह्मत्वात्। तस्माद् ब्रह्मविवर्तत्वेऽपि प्रपञ्चस्य न शब्दविवर्तत्वम् ॥

---

रिवानुव्यवसायज्ञानविषयत्वेन प्रत्यक्षत्वम्, अत्राह—**न चेति**॥ चाक्षुषधूमविशेषणतया वह्नेरपि चाक्षुषत्वापत्तावनुमानकथोच्छेदापत्तेरित्यर्थः ॥

एकरूपस्य क्रमेण वाच्यवाचकभावं प्रतिक्षिपति—**वक्तृत्वे तथैवेति** ॥

वाच्यवाचककल्पनामूलं यदूरीक्रियते, तदेव शब्दतत्त्वमिति, अत आह—**न च तदपीति** ॥

न केवलं शब्दतत्त्वे मानाभावः, वैपरीत्ये चास्ति युक्तिरित्याह—**श्रोत्रेति** ॥

---

1. पृ 250 प. 1

॥ स्फोटनिरासस्य शब्दवर्णात्मकत्वस्य साधनप्रयोजनम् ।
इदं च स्फोटवादे न स्यात् ॥

अतो वर्णातिरिक्तशब्दे प्रमाणाभावादेकार्थधीजननसमर्था वर्णाः पदम् । पदवृन्दमाकांक्षादित्रयविशिष्टं वाक्यम् । साकांक्षानेकवाक्यं प्रकरणम्, प्रकरणसमूहोऽध्यायः, काण्डमित्यादि, तत्समूहः शास्त्रमिति स्थितम् ॥

आकांक्षादित्रयोपेताद्वाक्याद्वाक्यार्थबोधतः ।
शब्दः पृथक्प्रमाणत्वान्नानुमानतयेष्यते ॥ ३४ ॥

इति न्यायचन्द्रिकायां समन्वयपरिच्छेदे
॥ स्फोटनिरासवादः षष्ठः ॥

---

अवान्तरप्रमेयमुपसंहृत्य महाप्रमेयमुपसंहरति - **अतो वर्णेति** ॥ वर्णानामेव शब्दत्वे वाक्यप्रकरणादिविभागो न भवेत्, अत्राह—**पदवृन्दमिति** ॥ प्रक[रण]लक्षणमत्राह—**साकङ्क्षेति** ॥ 'गामानयाश्वं पश्यती'त्यादिनिराकाङ्क्षानेकवाक्ये प्रसङ्गं वारयति साकाङ्क्षत्वविशेषणेन । भवतु प्रकरणमेवंरूपम्; तथापि कथमध्यायादिविभागः? अत्राह - **प्रकरणेति** ॥ वर्णानां वाक्यत्वप्रतिपादनफलं दर्शयन् उत्तरवादप्रसङ्गं करोति - **आकाङ्क्षादीति** ॥

इति न्यायचन्द्रिकाव्याख्यायां समन्वयपरिच्छेदे
॥ स्फोटनिरासवादः षष्ठः ॥

## ॥ अथ न्यायचन्द्रिकायामागमप्रामाण्यवादः सप्तमः ॥

॥ इयं विवक्षा, सास्नादिमदर्था, गोशब्दप्रयोगमूलविवक्षात्वादित्यनुमानेन तत्तदर्थानुमानेनैव निर्वाहात् शब्दस्य न प्रमाणन्तरत्वमिति कन्दलिकाराणां पूर्वपक्षः ॥

ननु—न्यायकन्दलिकारेणागमस्य लिङ्गेऽन्तर्गमो गदितः। तथाहि—प्रथमं गोशब्दादुच्चारिताद्वक्तुः ककारादिंव[ककुदादिम]दर्थविवक्षा गम्यते, स्वसन्ताने गोशब्दोच्चारणस्य तदर्थविवक्षापूर्वकत्वोपलम्भात्। तदर्थविवक्षया चार्थानुमानम्। अयञ्च प्रयोगः—पुरुषः, धर्म[धर्मी,]ककुदादिमदर्थविवक्षावान्, गोशब्दोच्चारणकर्तृत्वात्; अहमिवेति। अर्थाभावेऽप्यनाप्तानां विवक्षोपलब्धेर्न विवक्षातोऽर्थसिद्धिरिति—चेत्, शब्दादपि कथं तत्सिद्धिः? भ्रान्त्या विप्रलम्भधिया चार्थशून्यस्य शब्दस्य प्रयोगात्। आप्तोक्ताच्छब्दादर्थप्रतीतिरिति चेत्, आप्ताभिप्रायादेवार्थस्याधिगतिरिति समानमिति ॥

॥ पुरुषः, सास्नादिमदर्थविवक्षावान्, गोशब्दोच्चारणकर्तृत्वादित्यनुमानस्य बाधः, व्यभिचारश्च ॥

तत्रेदं प्रष्टव्यम्—गोशब्दोच्चारणकर्ता सर्वो धर्मी, लौकिकगोशब्दोच्चारणकर्तै[र्ता]वेति। आद्ये "गवा यजेते"त्यादिवैदिकगोशब्दाध्येतृपुरुषभागे बाधः,

---

## ॥ अथागमप्रामाण्यवादः सप्तमः ॥

नानुमानतयेत्युक्तम्, तत्र स्वतन्त्रप्रमाणत्वे गौरवमुक्त्वा चोदयति—**नन्विति** ॥ परप्रयुक्तगोशब्दश्रवणे ककुदादिमदर्थविवक्षाप्रतीतौ व्याप्तिमाह—**स्वेति** ॥ उच्चारणस्य ताल्वोष्ठपुटव्यापाररूपस्य शरीरविशिष्टः कर्ता, शरीरं च विरुद्धपरिमाणतया प्रतिक्षणमन्यदेव भवति, इति स्वसन्तान इत्युक्तम्। तथापि कुतोऽर्थप्रतीतिः? अत्राह—**तदर्थेति** ॥ इयं विवक्षा, सास्नादिमदर्था, गोशब्दप्रयोगमूलविवक्षात्वात्; मदीयतथाविधविवक्षावदित्यर्थः ॥

**बाध इति** ॥ उपनीतमाणवकानामगृहीतसङ्गतिकानां ककुदादिमदर्थविवक्षया गोशब्दप्रयोगायोगादित्यर्थः ॥

द्वितीये तत्रैव व्यभिचारः । उभयत्रापि 'गौरेवायं पुमानि'ति पुंसि मूढत्वविवक्षया गोशब्दोच्चारणकर्त्रा व्यभिचारश्च ॥

॥ अर्थविशेषविवक्षानुमाने, पदार्थमात्रानुमानवैयर्थ्यम्, संसर्गानुमान इव । आप्ताभिप्रायघटकाप्तत्वस्य हेतुविशेषणस्य दुर्वचत्वम् ॥

अपि चाभिप्रायानुमानद्वारेण पदार्थमात्रमनुमीयते, यद्वा पदार्थानां परस्परसंसर्गोऽपि । पूर्वत्र वैयर्थ्यं स्फुटमेव । न हि भूयो भूयः समधिगतं पदार्थमात्रं केचिद् बुभुत्सन्ते, प्रतिपिपादयिषन्ति वेति । संसर्गे तु बुभुत्सिते यद्याप्ताभिप्रायो लिङ्गम्; अभिप्रायमात्रस्यानैकान्तत्वात्, तर्हि विशेषणीभूतमाप्तत्वं कीदृशम्? न तावदविप्रलम्भक[1]त्वमात्रम्; तदभिप्रायस्यापि भ्रान्तिमूलस्य पदार्थसंसर्गव्यभिचारात् । अथ विभ्रमाद्यशेषदोषवैधुर्यमाप्तलक्षणम्, तदपि न तावत्सर्वविषयं शक्यमध्यवसातुमसर्वज्ञानाम्, भ्रान्तेः पुरुषधर्मत्वात्, यत्र क्वचनाप्तत्वमप्यनाप्तसाधारणमिति कथमनेन व्यभिचारव्यवच्छेदः? विवक्षितसंसर्गविशेषविषयं पुनराप्तत्वं प्रथमत एव संसर्गग्रहे दुर्ग्रहम् । न ह्यनधिगते विशेषणे विशिष्टबुद्धिरुत्पत्तुमर्हति ॥

॥ पदार्थपक्षकसंसर्गानुमानमुदयनस्यापि न युक्तम्; तत्राप्याप्तोक्त्या पदार्थानां विशेषणे आप्तत्वदुर्वचत्वात्, नच पदार्थमात्रे संसर्गबोधनियमः, अनाप्तवाक्ये व्यभिचाराच्च ॥

यदपि—संसर्गभेदे पदानाम[2]नुमानाभावमुपपादयन् उदयनो वदति स

---

गोशब्दोच्चारणकर्तृत्वेन पदार्थविषयविवक्षा अनुमेया, तत्संसर्गविवक्षयापि[क्षा] वेति विकल्पयति—**किञ्चेति[अपिचे]ति । वैयर्थ्यमिति ॥** संसृष्टव्यवहारस्य पदार्थमात्रज्ञानादसिद्धेरित्यर्थः । द्वितीय आप्ताभिप्रायत्वं संसर्गगमकमङ्गीकार्यम्, तद्यद्यङ्गीक्रियते, तत्राह—**संसर्गे त्विति ॥** प्रतीतमेव हेतुविशेषणम्; इतरथा विशिष्टहेतोरसिद्धिप्रसङ्गादिति, अतो विकल्पयति—**तर्हीति ॥** अन्यथावगतस्यान्यथा तदूहो विप्रलम्भः, तद्राहित्यमाप्तत्वम्, विप्रलम्भाद्यशेषराहित्यं वेत्यर्थः । एवंविधमाप्तत्वं सर्वस्मिन्विषये, उत यत्र क्वापि, किं वा विवक्षितविषय इति विकल्प्य क्रमेण पराकरोति—**तदपीत्यादिना ॥**

दृष्टान्तभागे सिद्धसाध्यमिति, अत उक्तम्—**एते पदार्था इति ॥** स्वगत-

---

1. "त्व" नास्ति 2. अनुमानभावं (क)

किरणावल्याम्—एते पदार्थाः, मिथः संसर्गवन्तः, आकांक्षादिमद्भिः पदैः स्मारितत्वात्; गामभ्याजेति पदार्थवत्। नच विशेषासिद्धिदोषः; संसर्गस्य संसृज्यमानविशेषादेव विशिष्टत्वात्। यद्वा—एतानि पदानि, स्मारितार्थसंसर्गज्ञानपूर्वकाणि, आकाङ्क्षादिमत्त्वे सति तत्स्मारकत्वात्, गामभ्याजेतिपदवत्। नचैवमर्थासिद्धिः; ज्ञानावच्छेद[क]तयैव तत्सिद्धेः, तस्य च संसृज्यमानोपहितस्यैवावच्छेदकत्वाद् न विशेषात् [षा]प्रतिलम्भः—इति, तदपि बालविभीषिकामात्रम्, विकल्पासहत्वात्। तथाहि—एते पदार्थाः, मिथः संसर्गवन्त इति संसृष्टा एवेति नियमो वा साध्यः, सम्भावितसंसर्गा इति वा। न प्रथमः; अनाप्तोक्तपदकदम्बकस्मारितैरनैकान्तात्। आप्तोक्त्या विशेषणीयमिति चेत्, न; विशेषणीभूताप्तत्वस्य पुरस्तान्निरस्तत्वात्।

॥ संसर्गविशेषनिश्चयमन्तरेणाप्तत्वस्याशक्यनिर्णयत्वात्, आप्तोपदेशस्य प्रमाणतायामितरेतराश्रयाच्चाकांक्षादिमत्पदस्मारितत्वेन संसृष्टप्रतीतिनियमस्वीकाराच्छब्दः प्रमाणमिति शङ्का ॥

[1]यत्पुनरुच्यते—संसृष्टा एवेति नियम एव साध्यः। आप्तोक्तत्वेन विशेष-

---

जातिगुणादिना संसर्गसिद्ध्या सिद्धसाधनत्वं वारयति—**मिथ इति** ॥ स्मारितत्वादित्युक्ते सदृशसन्दर्शनादिस्मारितगवयादिना व्यभिचारो मा भूदित्युक्तम्—**पदैरिति** ॥ अस्मादनुमानात् संसर्गसिद्धावपि पदार्थविशेषासिद्धेर्व्यवहारविशेषासिद्धिः, अत्राह—**नचेति** ॥ पदार्थपक्षीकरणेन प्रयुक्तम्, इदानीं पदपक्षीकरणेन प्रयुङ्क्ते—**यद्वेति** ॥ ज्ञानपूर्वकाणीत्युक्त अर्थमात्रधीपूर्वकत्वेन सिद्धसाधनम्, अत उक्तम्—**संसर्गेति** ॥ 'अहं परप्रतिपत्त्यर्थं वाक्यमुच्चरामी'ति प्रतीत्या प्रयोगात्तज्ज्ञानेनार्थान्तरत्वं वारयति—**स्मारितेति** ॥ अर्थान्तरस्मारकपदान्तरैर्व्यभिचारं वारयति—**तत्स्मारकत्वादिति** ॥ निराकाङ्क्षादिपदैर्व्यभिचारवारणायोक्तम्—**आकाङ्क्षादिमत्त्वे सतीति** ॥ ज्ञानस्यानुमेयत्वे वाक्यार्थः संसर्गो न सिध्येत्, अत्राह—**न चैवमिति** ॥ ज्ञानावच्छेदकत्वेन संसर्गसिद्धावपि पदार्थविशेषासिद्धितादवस्थ्यम्, अत्राह—**तस्येति**; पदार्थांशे ज्ञानमनुवाद इत्यसदभ्युपगमात्। हेतुद्वयमप्यसिद्धमिति दूषयति—**तदपीति** ॥ **अनैकान्तादिति** ॥ असंसृष्टानामेव संसृष्टतयाऽनाप्तैः प्रतिपादनादित्यर्थः। आप्तोक्तत्वविशेषणासिद्धिपरिहाराय प्रथमकल्पालम्बनेन शङ्कते—**यत्पुनरिति** ॥

---

1. पृ. 256 प. 7

णाच्च न व्यभिचारः । न च संसर्गविशेषनिश्चयमन्तरेणाप्तोक्तत्वमशक्यनिश्चयम् । तथा हि—निपुणतरं तावदालोचयत्वायुष्मान् । यदापि भवता शब्दः पृथक् प्रमाणमभ्युपगतम्, तदापि किं शब्दमात्राद्विवक्षितार्थप्रतिपत्तिः ? आहोस्विदाप्तोक्तत्वादिसहिताच्छब्दविशेषात् ? नाग्रिमः कल्पः; अनाप्तवाक्ये व्यभिचारात् । न द्वितीयः; यदि संसर्गावगमात् पूर्वमशक्यमाप्तत्वावधारणम्, तदानीमाप्तोपदेशः शब्द इति परस्पराश्रयः—इति, तदपि सुप्तप्रलापप्रायं पश्यामः ॥

॥ अनाप्तप्रणीतत्वेन शब्दस्य स्वतःप्रामाण्यात्, आप्तत्वनिर्णयस्यागमप्रामाण्यवादेऽनपेक्षणान्नान्योन्याश्रयादिः ॥

शब्दस्य स्वतः प्रामाण्यस्वीकारेण विकल्पानवकाशीकरणात्, वेदे चापौरुषेये न जायत एवाप्रामाण्यशङ्का । पुरुषवचनानामपि स्वार्थप्रत्यायने नाप्तोक्तत्वापेक्षा; अनाप्तवाक्यादपि संसर्गावगमात् । कथमपरथा ततः प्रवर्तेत ? अन्यथा तु द्राविडादिवचनेष्विव गौडदेशीयस्य प्रवृत्तिसंकल्पोऽपि न स्यात्, किं त्वनाप्तसम्बन्धः प्रामाण्यविरोधी, तदपसारणा[1]याप्तत्वावधारणम् अवगते संसर्गे तद्विषयं प्रमाणान्तरेण सुकरमेव ॥

---

यथादृष्टस्यैव वादित्वमाप्तत्वम् । एतद्विषयभूतैतदनिश्चयेऽशक्यनिश्चयमिति विशेषणासिद्धो हेतुः, अत्राह—**न चेति** ॥ आप्तोक्तत्वादित्याकाङ्क्षादिमत्त्वसङ्ग्रहः । **परस्पराश्रय इति** ॥ आप्तोपदेश आगम इति शब्दलक्षणत्वादाप्तत्वसिद्धौ तदुपदेशः शब्दः प्रमाणम्, ततश्च तदुपदिष्टार्थसिद्धौ तद्विषयमाप्तत्वं सिध्येदित्याशयः । शब्दस्य येनाकारेण धीहेतुत्वम्, **तेनैव** प्रमाहेतुत्वस्येष्टत्वात्, अस्थाने चोद्यमेतदिति दूषयति—**तदिति** ॥

किञ्च आप्तोक्तत्वेन संसर्गगमकत्वं वैदिकस्य वाक्यस्य, लौकिकस्य वा । नाद्य इत्याह—**वेदे चेति** ॥ नापि द्वितीय इत्याह—**पुरुषेति** ॥ अनाप्तवाक्यात्संसर्गो नावगम्यते, येनाप्तत्वव्यभिचारः, अत्राह—**कथमिति** ॥ किमत्र कथम् ? अत्राह—**अन्यथेति** ॥ ज्ञानेच्छाप्रवृत्तीनां कार्यकारणभावादिति भावः । यद्यौत्सर्गिकं शब्दस्यार्थशेषत्वम्, व्यर्थमेव तर्ह्याप्तत्वावधारणं स्यात्, अत्राह—**किन्त्विति** ॥ **प्रमाणान्तरेणेति** ॥ अयमस्मिन्नर्थे न मां प्रति विप्रलम्भवान्; मम हितकारित्वात्, मदीयपित्रादिवत्, नापि प्रमादवान्; भूयो भूयः पर्यालोच्य

---

1. सरणायास

॥ लिङ्गप्रामाण्यमव्यभिचारज्ञानमपेक्षते, अतो न तस्य शब्दवत् स्वतः प्रामाण्यम् ॥

लिङ्गं पुनरविदित्वाऽव्यभिचारमनिश्चायकमेव, अन्यथा त्वव्यभिचारपरिच्छेदवैयर्थ्यप्रसङ्गात् सर्वानुमानेषु। न च यथोदितहेतोराप्तोक्तत्वाविशेषितस्याव्यभिचारः समस्तीत्युदितम्। न चैवम्—आरोपिताव्यभिचारेणैतेनार्थाध्यवसाय इति—साम्प्रतम्; लोलाक्षीलक्ष्मभिरमयेत् विद्याधरराज्यकाम इत्यना[1]कलिताप्तभावस्यापि पुंसो वचनमात्रादव्यभिचरितानुसन्धानमन्तरेणाप्यर्थाध्यवसायस्यानुभवसिद्धत्वात्, प्रामाण्यमात्रसन्देहदर्शनात्, अव्यभिचारनिश्चये तु प्रामाण्यसन्देहोऽपि न सम्भवेत्। अन्तर्भावितप्रामाण्यस्यैवाव्यभिचारस्यैव सिद्धेः ॥

---

वक्तृत्वात्, नाप्यशक्तः; सम्यगेव शब्दानामुच्चारयितृत्वात्, नाप्यज्ञानमिथ्याज्ञानवान्; एतद्विषयादृष्टज्ञानपुष्कलहेतुमत्त्वादिति, सुकरमाप्तत्वावधारणमित्यर्थः ॥

यथाऽऽप्तोक्तत्वेनाविशेषिताच्छब्दात्संसर्गगतिः एवं लिङ्गादपि किं न स्यात्? अत्राह—**लिङ्गं पुनरिति** ॥ लिङ्गस्यापि संबन्धमात्रेण गमकत्वमस्तु, किमव्यभिचारविशेषणेन? अत्राह—**अन्यथेति** ॥ विपक्षबाधकोपन्यासोपाधिनिरासादिना आभासानाभासविवेचनं व्यर्थं स्यादित्यर्थः। संसर्गावगमात्प्रागाप्तत्वस्याशक्यावगमत्वात् व्यापक[आप्त]त्वारोपेण तदुक्तत्वविशेषितलिङ्गेऽव्यभिचारारोपादर्थनिश्चय इति, अत आह—**न चैवमिति** ॥ कुतो न युक्तम्? अत्राह—**लोलाक्षीति** ॥ यस्य क्वचिदप्यर्थे नावगतमाप्तत्वम्, तस्य प्रकृतेऽपि विषये निर्मूलमाप्तत्वारोपणं न संभवतीत्यव्यभिचारारोपात् शब्दस्य लिङ्गभावेन गमकत्व अस्माद्वाक्यात् संसर्गावगमो न भवेदिति भावः ॥

लोलाक्षीलक्ष्मभिरमयेदिति भाषिताद्विषयनिश्चये कदाचित् श्रोतॄणां तत्र प्रवृत्त्या भाव्यम्, अत्राह—**प्रामाण्येति** ॥ पुरुषत्वादिसादृश्यादस्याप्याप्तभावारोपेणाऽऽप्तोक्ताकाङ्क्षादिमद्भिः पदैः सारितत्वादिति लिङ्गक[ल्पन]यैवात्रापि गमकत्वम्, अत्राह—**अव्यभिचारेति** ॥ हेतुं चाचष्टे—**अन्तर्भावितेति** ॥ अन्तर्भावितं प्रामाण्यं यथार्थानुभवजनकत्वम्, यस्मिन्नसावन्तर्भावितप्रामाण्यः, [तेन]विशेष[व]गमाविरोधादित्यर्थः। अव्यभिचारावगमस्याप्रामाण्यसन्देहविरोधित्वं स्पष्टयति—

---

1. इत्याकलिता (क)

न खलु तन्नान्तरीयकतया तदुपस्थापयति, तत्र चाप्रमाणमिति शङ्काऽवकाशवती ॥

॥ संभावितसंसर्गत्वं योग्यसंसर्गवत्त्वम्, तत्तु सिद्धमेवेति सिद्धसाधनम् ॥

नापि द्वितीयः; योग्यतामात्रसिद्धावपि संसर्गा[1]निश्चयात्, वक्यस्य च तदेकफलत्वात्, योग्यतामात्रस्य च प्रागेव सिद्धेः, अन्यथा तदसिद्धावासन्नसाकाङ्क्षपदस्मारितत्वादित्येव हेतुः[2] स्यात्। तथा च 'अग्निना सिञ्चेत्' इत्यादिस्मारितैरनैकान्तः; तथाविधानां सर्वदा संसर्गायोग्यत्वादिति ॥

॥ पदपक्षकसंसर्गज्ञानपूर्वकत्वानुमानेऽप्ययथार्थपूर्वकत्वमादायार्थान्तरम्, प्रमितिपूर्वकत्वे साध्ये व्यभिचारश्च ॥

द्वितीयेऽपि प्रयोगे संसर्गज्ञानपूर्वकत्वे यथाश्रुते साध्ये श्रोतुः संसर्गप्रमित्यनुपपत्तिः; संसर्गज्ञानमात्रस्यानुमितस्याप्ययथार्थत्व[स्य]सम्भवात्। संसर्गप्रमितिपूर्वकत्वे तु साध्ये विवक्षिते हेतोस्तदवस्थितमेव सव्यभिचारत्वम्; अनाप्ताभिहितानामपि पदानामाकाङ्क्षादिमत्त्वे सति स्मारकत्वात्। न च तेषां संसर्गप्रमितिपूर्वकत्वम् ॥

॥ पदपक्षकसंसर्गवत्त्वमात्रसाध्यकानुमानमपि पदमात्रे व्यभिचरितम्। संसर्गवत्त्वे मतुबर्थसम्बन्धस्य संयोगादिरूपेण दुर्वचत्वं च ॥

एतानि पदानि, स्मारितार्थसंसर्गवन्ति, तत्स्मारकत्वात्; 'गामभ्याज' इति पदकदम्बकवद[दि]त्यनुमानान्तरमिति चेत्, न; 'गौरश्वः पुरुषो हस्ती मर्कटः' इत्यादि[3]पदैर्व्यभिचारः[ रात् ] ॥

---

**न खल्विति** ॥ तत्परित्यागरहितत्वं तन्नान्तरीयकत्वम्। तेन लिङ्गभूतः शब्दोऽर्थं गमयति। तत्र चाप्रमाणमिथ्याधीहेतुरिति शङ्का व्याहन्यत इत्यर्थः ॥

संभावितसंसर्गा इति द्वितीयकल्पमपवदति—**नापीति** ॥ **तदेकफलत्वादिति** ॥ संसर्गनिश्चयार्थं वाक्यप्रयोगादित्यर्थः। संभावनापरपर्याययोग्यताया अनुमेयत्वमूरीकृत्योदी[रितम्,] संप्रति तदपि न; सिद्धसाध्यत्वप्रसक्तेः इत्याह—**योग्यतेति** ॥ पदार्थानां संसर्गयोग्यता न प्रागवगता; तदवगमकाभावात्, अत्राह—**अन्यथेति** ॥ सिद्धस्यैव हेतुविशेषणत्वादित्यर्थः ॥

प्रयोगान्तरेऽपि संसर्गधीमात्रमनुमेयम्, तत्प्रमा वेति विकल्प्य प्रथमं प्रत्याह—**द्वितीयेऽपीति** ॥ चरमं निराचष्टे—**संसर्गप्रमितीति** ॥

---

1. संसर्गानिश्च 2. दित्येव हेतुत्वात्। तथा
3. त्यादिपदे व्यभिचारात्।

किञ्च संसर्गवन्तीति पदानां संसर्गेण सह मतुबर्थः संयोगो वा, समवायो वा, तादात्म्यं वा, विशेषणविशेष्यभावो वा, ज्ञाप्यज्ञापकभावो वा । न प्रथमे[मः] तयोस्तदनभ्युपगमात् । [अत एव न द्वितीयतृतीयौ[1] ।] नापि तुरीयः; पदार्थविशेषणस्य संसर्गस्य पदैस्तदयोगात् । नापि पञ्चमः; तस्यानुमानप्रवृत्त्युत्तरकालीनत्वेन ततः पूर्वं भवतामसिद्धत्वात् । न च लिङ्गतया ज्ञापकत्वम्; यद् लिङ्गस्य विषयः, न तदेव तस्य विषयः[2]; लिङ्गतया ज्ञापकत्वस्य साध्यस्योपलम्भे सति तेन सह शब्दलिङ्गस्य व्याप्तिनिश्चयः, तन्निश्चये ज्ञापकत्वमितीतरेतराश्रयात्—इति ॥

॥ पदपक्षकसंसृष्टपक्षकलीलावत्यनुमानमपि संसृष्टार्थपरत्वादित्यत्र
ज्ञानतात्पर्यवत्त्वस्यैव विवक्षणीयत्वात्, तदसिद्धौ हेत्वसिद्ध्या दुष्टम् ।
तात्पर्यस्याज्ञातस्य हेतुत्वे 'श्वेतो धावति' इत्यादौ वाक्यार्था-
निर्णयः स्यात् । संसृष्टपरत्वत्यागे निराकाङ्क्षपदव्यभिचारः ॥

यदपि न्यायलीलावत्यामुदितम्—शब्दस्तु न मानान्तरम्; पदानि, स्मारितार्थसंसर्गविज्ञप्तिपूर्वकाणि, योग्यतासत्तिमत्त्वे सति संसृष्टार्थपरत्वात्, 'गामभ्याज' इति पदकदम्बकवदित्यनुमानादेव साध्यसिद्धेः । न च निराकाङ्क्षेण व्यभिचारः; तत्र

---

**पदैस्तदयोगादिति** ॥ पदार्थानां संसर्गः, तेषामेव विशेषणम्, न तु पदानाम्; तदसम्बन्धादित्यर्थः । पदानां संसर्गज्ञापकत्वं संसर्गवत्त्वं किं शब्दरूपेण, लिङ्गरूपेण वा? नाद्यः; सिद्धान्तविरोधादित्याह—**तस्यानुमानेति** ॥ लिङ्गतया ज्ञापकत्वं संसर्गवत्त्वं साध्यमिति द्वितीयं दूषयति—**न चेति** ॥ कुत एतत्? अत आह—**यदिति** ॥ लिङ्गस्य=शब्दलक्षणस्य, यत् लिङ्ग[ङ्गि]तया ज्ञापकत्वं विषयः=साध्यम्, तत्प्रमाणान्तरेण निश्चित्य; तेन सह व्याप्तिर्लिङ्गस्य गृह्यते, लिङ्गे[न ते] नैववा । आद्येऽनुमानवैयर्थ्यम्, वाक्यार्थस्य संसर्गस्य मानान्तरेण सिद्धत्वात् । नापि तस्यैव लिङ्गस्यतद्विषय इत्यर्थः । हेतुमाह—**लिङ्गतयेति** ॥ **साध्यस्योपलम्भ इति** ॥ अनेनैव लिङ्गेनेति शेषः ।

'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यादिनिराकाङ्क्षपदैर्व्यभिचारः, अत आह—**न च निराकाङ्क्षेणेति** ॥ तात्पर्याय[र्थ]स्याज्ञातस्य सत्तामात्रेण प्रतीतिहेतौ न हेतुविशेषणत्वम्; ज्ञातस्यैव हेतुत्वात्, इतरथा तदसिद्धिप्रसक्तेः,

---

1. कुण्डलान्तर्गतं नास्ति    2. विषयलिङ्गतया

संसृष्टार्थपरत्वस्यैवाभावात् । तात्पर्यं च [ । ]ज्ञातमर्थप्रतीतिकारणम् 'श्वेतो धावति' इत्यादौ लक्षणायां च तथा दर्शनात् । संसृष्टार्थपरत्वं चानन्यथासिद्धसम्भूयोच्चारण-वशादेवावधार्यते—इति, तदपि—विज्ञप्तिपूर्वकाणीति विज्ञानमात्रपूर्वकत्वे साध्ये श्रोतुर्विशिष्टार्थासिद्धिः, प्रमितिपूर्वकत्वेऽनाप्तवाक्यस्थपदेषु व्यभिचार इति, पूर्ववन्नि-रस्यम् । 'श्वेतो[1]धावति' इत्यत्र—इतः शुनको गच्छतीति वा, श्वित्री निर्णेनेक्तीति वाऽर्थ इति संशयेऽन्यतरतात्पर्यज्ञानेन, तथा 'गङ्गायां घोषः' इत्यत्र गङ्गा-पदस्य तीरपदा[र]त्वज्ञानेन च वाक्यार्थनिश्चयदर्शनात् तात्पर्यं ज्ञातमर्थप्रतीतिकारण-मिति हेतुविशेषणत्वेनोपात्तम् । एवं च विशेषणासिद्ध्या विशिष्टहेतोरसिद्धिः । तथा हि संसृष्टार्थेऽवगते तात्पर्यमवगम्यते । [2](अनवगते वा) । नाद्यः, तस्यानुमानप्रवृत्त्युत्तर-कालीनतया पूर्वं तदा[सिद्धिः], सिद्धौ चानुमानवैयर्थ्यात् । द्वितीये तु तात्पर्यं नाव-गन्तुं शक्येत, अवच्छेदा[का]वगमव्यतिरेकेणावच्छिन्नावगमायोगात्, संसृष्टपरत्व-विशेषणत्यागे वा—अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्—इत्यादिनिराकाङ्क्षपदै-र्व्यभिचार इति ॥

॥ अयं गौः, ककुदादिमदर्थवान्, शब्दः अनुमानम्, सम्बन्धावगमे सम्बन्धेनार्थबोधकत्वादित्यनुमानद्वयमपि दुष्टम्, प्रथमे मतुबर्थानिरुक्तिः । द्वितीये विशेषणासिद्धिः ॥

---

अत्राह—**तात्पर्यं चेति** ॥ **श्वेतो धावतीत्यत्रेति** ॥ गच्छतीति वा, श्वित्री निर्णेनेक्तीति वा कारणमित्यर्थः । तात्पर्यस्य प्रतीतस्य प्रतीतिहेतुत्वे तत्प्रत्याय-काभावादर्थप्रतीतिरेव न स्यात्, अत्राह—**संसृष्टेति** ॥ पदानां सहपाठात्संसृष्ट-पद[र]त्वं प्रतीयते । न चासौ संसृष्टार्थमन्तरेण विप्रलम्भादिमूलतया स्यात्; आप्तो-क्तत्वादित्यर्थः । **विशिष्टार्थासिद्धिरिति** ॥ ज्ञानस्य भ्रान्तिरूपस्यापि सम्भवादित्यर्थः । न चानाप्तवाक्यस्य तत्परत्वाभावः; भवत्पक्षे तात्पर्यस्य पुरुषाभिप्रायरूपत्वादिति भावः । इदानीं हेतोरसिद्धिसाधनाय तदीयाभिप्रायं दर्शयति—**श्वेत इति** ॥ श्वित्री=श्वेतकुष्ठवान् । निर्णेनेक्ति=शोधयति । 'धावु गतिशुद्ध्योः' इति स्मरणात् ॥

एवमपि न शब्दः, पृथक् प्रमाणम्, अनुमानान्तरादेव वाक्यार्थसिद्धेरित्या-

---

1. श्वेतो धावति, अश्वो धावतीति वाक्यभेदमभिप्रेत्यैवमुक्तम् ॥
2. कुण्डलान्तर्गतं नास्ति

अयं गोशब्दः, ककुदादिव[म]दर्थवान्, गोशब्दत्वात्, पूर्वोपलब्धैवंविधगोशब्दवदित्यपि न; अर्थवानिति मतुबर्थस्य प्रागुदीरितरीत्या निरसनीयत्वात्, शब्दः अनुमानम्, सम्बन्धावगमे सम्बन्धेनार्थप्रतिपादकत्वात्, [धू]मवदित्यपि विशेषणासिद्धम्। सङ्गतिसंस्कार[1]सहकृतप्रतीयमानशब्दस्यैवार्थप्रतिपादकत्वादिति ॥

॥ स्वरूपसामान्यातिरिक्तसम्बन्धाख्यप्रमेयाभावात्, शब्दप्रामाण्येऽन्धानन्धव्यवस्थानुपपत्तेः, वाक्यप्रयोगस्य पुरुषाभिप्रायसूचकत्वमात्रात् प्रत्यक्षानुमानातिरिक्तं शब्दाख्यं प्रमाणान्तरमिति चन्द्रकीर्त्यादिमतेनोपपादनम् ॥

सौगता[तीया]: पुनः सङ्गिरन्ते—शब्दानामर्थेन सह प्रतिबन्धाभावात् नार्थगमकत्वम्। तथा हि—कृतकत्वमनित्यत्वस्य तादात्म्येन गमकम्, तदुत्पत्त्या च धूमोऽग्नेः, न चास्ति द्विविधोऽपि शब्दार्थयोः प्रतिबन्धः, इति [2]कथं शब्दादर्थप्रतिपत्तिः? विवक्षां तु सूचयत्येव; तत्कार्यत्वात्। तदुक्तम्—

---

शङ्कयाह—**अयं गोशब्द इति** ॥ **प्रागुदीरितरीत्येति** ॥ शब्दस्यार्थेन सम्बन्धः संयोगसमवायतादात्म्यविशेषणविशेष्यभावज्ञाप्यज्ञापकभावरूपो न सङ्गच्छत इति निरसनीयत्वादित्यर्थः ॥ न च—अर्थः शब्दस्य विषयतया विशेषणमिति—वचनीयम्; तज्ज्ञाप्यत्वमन्तरेण तद्विषयत्वायोगादिति द्रष्टव्यम्। वृद्धवैशेषिकस्यैवानुमानान्तरमाशङ्क्य निराकरोति—**शब्द इति** ॥ चक्षुरादिना व्यभिचारवारणाय—**सम्बन्धावगम इति विशेषणम्**। विशेषणासिद्धिमुपपादयति—**सङ्गतीति** ॥ संस्कारवतः पुंसः शब्दज्ञानमर्थज्ञानकारणम्, न तु स्वसम्बन्धितया जा[ज्ञा]यमानः शब्दः। संबन्धिन्यर्थेऽनवगते शब्दस्य तत्संबन्धावगमार्थं प्रयोगे वार्थसिद्धौ शब्दवैयर्थ्यादित्यर्थः ॥

अर्धवैनाशिके प्रतिक्षिप्ते सर्ववैनाशिकाः प्रत्यवतिष्ठन्त इत्याह—**सौगतीया इति** ॥ सङ्गिरन्ते = इच्छन्ति। प्रतिबन्धः=सम्बन्धः। तादात्म्यतदुत्पत्त्यनुपलम्भेषु त्रिष्वेवाविनाभावनियमात् शब्दस्यार्थेन नान्यतमोऽपि सम्बन्धप्रयोजकोऽस्तीत्युपपादयति—**तथा हीति** ॥ तर्हि वृद्धव्यवहारे परप्रतिपत्त्यर्थं वाक्यं न प्रयोक्तव्यमेव स्यात्, अत्राह—**विवक्षां त्विति** ॥ तदुत्पत्त्या धूमादिवत्, वक्तुरभिप्रायेण प्रतिबन्धात्तदनुमापकत्वमित्यर्थः ॥

---

1. संस्कृतप्रतीयमान    2. कथं श[ब्]दार्थप्रतिपत्तिः (क)

"नान्तरीयकताऽभावात् शब्दानां वस्तुभिः सह ।
नार्थसिद्धिस्ततस्ते हि वक्त्रभिप्रायसूचकाः ॥"

इति । प्रमाणद्वैविध्याच्च न शब्दः पृथक् मानम् । तथा हि—शब्दः, अनुमानम्; सामान्योपाधौ बोधकत्वात्, प्रत्यक्षेतरमानत्वात्, त्रैकाल्यविषयत्वात्, सम्बन्धज्ञानापेक्षया बोधकत्वाच्च, धूमवदिति । तदप्युक्तम्—

"प्रत्यक्षमनुमानं च प्रमाणे सदृशात्मना ।
अप्रत्यक्षस्य सम्बन्धादन्यतः प्रतिपत्तितः ॥"

इति । प्रत्यक्षानुमानविषयात्[1] व्यतिरिक्तविषयाभावाच्च शब्दो न प्रमाणान्तरम् । तथा हि—स्वलक्षणविषयं प्रत्यक्षम्, सामान्यविषयमनुमानम् । प्रमेयद्वैविध्यात् प्रमाणद्वैविध्यम्, इति, कथं शब्दोऽर्थान्तरत्वे सति प्रमाणम्? यदि चेन्द्रियेण समानविषयः शब्दो भवेत्, अन्धानन्धयोरविशेषः स्यात् ॥ तदाह—

---

कीर्तितेऽर्थे कीर्तिवार्तिकं कीर्तयति—**तदुक्तमिति** ॥ नान्तरीयकता= प्रतिबन्धः । एव तावच्छब्दस्यासम्बन्धस्य बोधकत्वेऽतिप्रसक्तेः, सम्बन्धस्य वाऽसिद्धेरर्थबोधकत्वासिद्धिरित्यभिधाय, अधुना प्रमाणनियमपर्यालोचनयापि न शब्दस्य स्वातन्त्र्येणार्थसाधकत्वमित्याह—**प्रमाणेति** ॥ शब्दस्य लिङ्गान्तर्गमकप्रमाणाभावे प्रमाणद्वैविध्यमेव कुतस्त्यम्? अत्राह —**तथा हीति** ॥ असाधारणरूपेण पदार्थबोधकचक्षुरादौ व्यभिचारं वारयति—**सामान्योपाधाविति** ॥ **सदृशात्मनेति** ॥ सदृशासदृशात्मना प्रतिपत्तित इति सामान्योपाधौ बोधकत्वमुक्तम्—**अप्रत्यक्षस्य प्रतिपत्तित इति** ॥ त्रैकाल्यविषयत्वम्—**सम्बन्धात्प्रतिपत्तित इति** ॥ सम्बन्धज्ञानापेक्षया बोधकत्वम्, **अन्यतः प्रतिपत्तित** इति प्रत्यक्षेतरमानत्वम् । प्रमेयवैजात्येन प्रमाणवैजात्यं वाच्यम्, तदसत्त्वाच्च न मानस्य तार्तीयी विधेत्याह—**प्रत्यक्षेति** ॥

प्रत्यक्षविषय-शब्दविषयातिरिक्तविषयाभावान्नानुमानं पृथक् प्रमाणमिति विपरीतं किं न स्यात्? अत्राह—**तथा हीति** ॥ किञ्चित्प्रतिज्ञाय हेत्वभिधानस्यैवानुमानस्येष्टत्वात्, तदभिधाने सिषा[सा]धयिषितासिद्धेर्नानुमानस्यान्यत्रान्तर्भावः सुसाध इति भावः । **अर्थान्तरत्वे सतीति** ॥ लिङ्गादन्यत्वे सतीत्यर्थः ॥

---

1. त्वात् सम्बन्ध इति अधिकः पाठः क पुस्तके ।

"अन्यदेवेन्द्रियग्राह्यमन्यः शब्दस्य गोचरः ।
शब्दात्प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते ॥"

इति । अन्यदेव = स्वरूपादि स्वलक्षणमिन्द्रियग्राह्यम्, तस्मादन्यः शब्दस्य गोचरः, यतः शब्दात्प्रत्येति भिन्नाक्षः = प्रध्वस्तनयनः, न तु प्रत्यक्षं यथा भवति, [1]तथेक्षते, समानविषयत्वे चानन्धस्येवान्धस्यापि शब्दादपरोक्षैव प्रतिपत्तिः स्यादिति ॥

॥ स्वरूपसामान्यातिरिक्तसंसर्गधीजननसामर्थ्यलक्षणसम्बन्धसत्त्वात्
तादात्म्यतदुत्पत्तिसम्बन्धमात्रेऽतिप्रसङ्गाच्च प्रमेयभेदेन शब्दाख्यप्रमाणभेदः ॥

अत्रोच्यते—न तावच्छब्दस्यार्थेन सह सम्बन्धाभावः; तद्धीजननसामर्थ्यस्य तत्सम्बन्धत्वात् । स चाध्यक्षनिबन्धनः; स्वव्यापारे संसर्गबोधस्य हेतुभावाध्यवसायात्, वृद्धव्यवहारे प्रयोज्यवृद्धचेष्टया तन्निबन्धनत्वेन संसर्गधियमनुमाय तस्याश्च [2]शब्दानुविधायितया शब्दानां तत्र सामर्थ्यम[3]ध्यवसीयत इति कल्प्यते । न च तादात्म्यतदुत्पत्तिनिबन्धनः सम्बन्धः शक्यनियमः; तद्व्यतिरेकेऽपि समुद्रवृद्धिचन्द्रोदयादौ प्रत्यासत्तिदर्शनात् । न चाभिधेयप्रतिबन्धाभावे तद्धीजनन[4]सामर्थ्यसिद्धिः । अप्राप्यकारि चक्षुरिति मते चक्षुष इवार्थसम्बन्धमन्तरेण तदुत्पत्तेः ॥

---

प्रमेयद्वैविध्येऽपि किमिति शब्दस्यानुमानत्वम्? प्रत्यक्षत्वमेव किं न स्यात्? अत्राह—**यदीति** ॥ कीर्तित[?]वार्तिकं स्वयमेव व्याकरोति—**अन्यदेवेति** ॥ शब्दस्य भावरूपत्वान्नानुपलब्धिनिबन्धनोऽपि प्रतिबन्ध इति द्रष्टव्यम् ॥

'शब्दानां नार्थगमकत्वम्' इत्येकस्यैव शब्दस्य स्वार्थगमकत्वागमकत्वयोर्व्याघात इत्यभिसन्धाय सिद्धान्तयति—**अत्रोच्यत इति** ॥ शब्दस्यार्थधीजननसामर्थ्यलक्षणः सम्बन्धो न कल्पनीयः; प्रमाणाभावात्, अत्राह—**स चेति** ॥ **अनुमायेति** ॥ मध्यमवृद्धप्रवृत्तिः, संसर्गधीपूर्विका, स्वतन्त्रसंसृष्टव्यवहारत्वात्, मदीयाध्यक्षनिबन्धनव्यवहारवदित्यर्थः । भावस्य प्रतिबन्धस्तादात्म्यतदुत्पत्तिनियत इति यदुक्तम्, तद्विघटयति—**न चेति** ॥ **चन्द्रोदयादाविति** ॥ चन्द्रोदयेन समुद्रवृद्धिरनुमीयते, कृत्तिकोदयेन रोहिण्यासत्तिरनुमीयते । न तत्र तादात्म्यम्; विलक्षणस्वभावत्वात्, नापि तदुत्पत्तिः; अनभ्युपगमात्, असंभवाच्चेति भावः । प्रतिबन्ध[द्ध]स्यैव धूमादेर्बोधकत्वदर्शनादर्थेनाप्रतिबद्धस्य शब्दस्य तद्धीजनकत्वमेव न सिध्येत्, अत्राह—**न चाभिधेयेति** ॥

---

1. तथेक्षेते (क)
2. शब्दविधायि क
3. "ध्य" इति नास्ति
4. सामर्थ्यासिद्धिः

॥ शब्दस्य संसर्गधीजननसामर्थ्याभावे प्रयोगानुपपत्तिः ॥

[1]यत्पुनर्विवक्षां तु सूचयत्येवेत्युक्तम्, तत्र पर्यनुयुज्यते—किं विवक्षामात्रकार्यः शब्दः? अर्थव्यावृत्तविवक्षाकार्यो वा? आद्ये न विशिष्टव्यवहारसिद्धिः, इति प्रयोगे वैयर्थ्यम्। द्वितीयेऽर्थस्यापि विशेषणतया कारणत्वापत्तावनुगतगोत्वादेरसत्त्वविरोधे क्षणिकत्वक्षतिः। किञ्च शब्दस्यार्थव्यावृत्तविवक्षागमकत्वेऽर्थगमकत्वमेवास्तु, लाघवात्। नचार्थ[ः उप]लक्षणम्; नित्यसङ्घटितत्वात्तेन विवक्षायाः। न च विवक्षाणामर्थगमकत्वम्; शब्दानामिव तासामप्यर्थप्रतिबन्धासिद्धेस्तुल्यत्वात्। असत्यप्यर्थे विवक्षादर्शनात् [2]तादात्म्यतदुत्पत्त्योरनुपपत्तेः ॥

॥ शब्दस्यार्थेनाविनाभावप्रयोजकसम्बन्धाभावेनानुमाने प्रत्यक्षे वानन्तर्भावः ॥

[3]यच्चावाचि—शब्दोऽस्यार्थस्यानुमापकः—इति, तदसत्; तादात्म्यतदुत्पत्त्योरविनाभावप्रयोजकयोरभावे शब्दस्यार्थेन तदसम्भवात्। अनुपलब्धिरपि नाभावप्रयोजिकाऽपि विनात्र[नाविनाभावप्रयोजिकाऽत्र]सम्भवति; अभावविषयत्वात्। भिन्नदेशत्वाद् भिन्नकालत्वाच्च [न] तन्निबन्धनोऽप्यविनाभावः। तस्मादविनाभावेन बोधकत्वस्यानुमानप्रयोजकस्याभावान्न शब्दः प्रत्यक्षवदनुमानम्। तथा च सामान्यो-

---

**न विशिष्टव्यवहारसिद्धिरिति** ॥ श्रोतृप्रवृत्तेरर्थधीनिबन्धनत्वादर्थासिद्धौ व्यवहारासिद्धेः प्रयोगवैयर्थ्यमित्यर्थः। **असत्त्वविरोध इति** ॥ यदेवार्थक्रियाकारि, तदेव परमार्थसदित्यर्थक्रियाकारित्वस्य सल्लक्षणत्वादित्यर्थः। विषयविशिष्टविवक्षावेदकत्वकल्पनाद्वरं विषयस्यैवावेदकं पदमिति कल्पनम्; लाघवात्, उभयसम्प्रतिपत्तेश्चेत्याह—**किं चेति** ॥ **नित्यसङ्घटितत्वादिति** ॥ सविषयत्वेनैव विवक्षावेदननियमात्, उपलक्षणत्वेऽन्तरेणापि गोचरं विवक्षा प्रतीयेत, हंसावगम इव राजमन्दिरमित्यर्थः। शब्देभ्यो विवक्षा एव गम्यन्ताम्, ताः पुनरर्थान् गमयन्तु; तथाच न प्रागीरितगौरवम्, इति तन्मात्रपरिहारमाशङ्क्याह—**न चेति** ॥

चन्द्रोदये समुद्रवृद्ध्यादाविव देशकालभेदनिबन्धनः शब्दार्थयोरविनाभावो भवेत्, अत आह—**भिन्नेति** ॥ शब्दो नानुमानमविनाभावानपेक्षया गमकत्वाच्चक्षुरादिवदित्याह—**तस्मादिति** ॥ शब्दः, अनुमानम्, सम्बन्धज्ञानापेक्षया बोधकत्वादित्यर्थस्य व्यभिचारमाह—**सङ्गतीति** ॥

---

1. पृ. 262 प. 11 2. तदात्म्य (क)
3. पृ. 263 प. 3

पाधौ बोधकत्वादित्यादिहेतुकलापेऽविनाभावबलेन बोधकत्वमुपाधिरुन्नेयः । सङ्गतिज्ञानापेक्षितत्वं च शब्दसञ्जल्पितसविकल्पके व्यभिचरति ॥ यत्तूक्तम्—शब्दस्यापोहो विषयः—इति, तदुपरिष्टान्निरसिष्यत इत्यलं वावदूकैर्विवादेन ॥

॥ लौकिकवाक्यानि मूलवाक्यापेक्षप्रमाणानुवादः, वेदवाक्यं तु स्वतः प्रमाणमिति गुरुमतोपन्यासः ॥

गुरुमतानुसारिणस्त्वेवमास्थिषत—वैदिकवचसामनपेक्ष्य मानान्तरं स्वार्थबोधकत्वम्; अपौरुषेयत्वात्। लौकिकवाक्यानां तु पुरुषाशयदोषभ्रमा[1] शक्तिप्रमादनिदानत्वेनानृतभूयिष्ठत्वाद्दोषशङ्काकलङ्कितशक्तीनामनपेक्ष्य मूलमानं नाभिधेयबोधकत्वम्। स्वगोचरप्रवृत्तप्रमाणपुरस्सररचनत्वनिश्चये तु स्वाभिधेयबोधकत्वम् । एतदेवाभिसन्धायाभिहितम्—

"शङ्क्यमानायथार्थत्वरचनं तेन पुंवचः ।
श्रुतमात्रकमेवार्थे न तावन्निश्चयावहम् ॥
यावद्वक्तुरविज्ञातं पूर्वभावि प्रमान्तरम् ।
विवक्षितार्थविषयमिन्द्रियार्थनिबन्धनम् ॥"

इति । केन तर्हि ज्ञानानुमानम्? इति । उच्यते—यो वाक्यप्रयोगेष्वाशयादिदोष-

---

अवैदिकपक्षप्रतिक्षेपानन्तरं शब्दस्य लिङ्गभावेन गमकत्वमित्येतावता साम्येन बुद्धिस्थं वैदिकपक्षविशेषमुपक्षिपति—**गुरुमतेति** ॥ लौकिकवाक्यानि, मूलमानानपेक्षाणि स्वार्थगमकानि, वाक्यत्वाद्वैदिकवाक्यवदिति, अत्राह—**लौकिकेति** ॥ पुरुषाशयदोषः=विप्रलिप्सा, सम्यक् शब्दोच्चारणशक्तेरन्यशक्तिः=अशक्तिः । शब्दस्यानपेक्षत्वेन बोधकत्वेऽपौरुषेयवाक्यत्वं प्रयोजकमित्यर्थः । तर्हि लौकिकवाक्यानां विप्रलिप्सादिमूलत्वाभावनिश्चयासम्भवात् कदाचिदपि स्वार्थबोधकत्वं न सम्भवति, [इति] स्वकीयो व्याघातो भवति, अत्राह—**स्वगोचरेति** ॥

गुरुमतत्वेनोत्प्रेक्षितमेतन्न गुरोर्मतमित्याशङ्कानिरासाय **शालिकानाथ**पठितं पठति—**एतदेवेति** ॥ **श्रुतमात्रकमिति** ॥ स[स्व]गोचरप्रकृतप्रमाणपुर[स्स]ररचनत्वनिश्चयरहितम्। केवलं श्रुतमित्यर्थः । वाक्यस्य स्वगोचरप्रतिपादकत्वे याऽनुपपत्तिः, सा वक्तृसमवायिज्ञानानुमानलिङ्गत्वेऽपि तुल्येति मन्यमानः शङ्कते—**केनेति** ॥ आप्तवाक्यं वक्तृज्ञानानुमाने लिङ्गमित्याह—**उच्यत इति** ॥ त्रिविधा एव प्रयोक्तारः—निरवद्यत्वेन विदिताः, सावद्यत्वेन वा, अनिरूपितोभयरूपाश्चेति । तत्र प्रथमं प्रति

---

1. दोषप्रमा (क)

रहितोऽयमिति निरूपिततत्स्वभावः, तस्य वचनश्रवणसमनन्तरमस्मिन्नपि प्रयोग आशयादिदोषरहितः, अयम् , तत्पुरुषत्वादिति यावन्नानुमीयते, तावद्यथा[र्थ]तात्पर्यनिश्चयो नास्ति , अयोग्यपदसन्निधानशङ्कापि नापैति ; विस्मृततत्स्वभावस्य शङ्कोदयदर्शनात् । यस्तु निरूपितविपरीतभावः, तस्य वचनाद् भ्रमादिरेवानुमीयते । अनिरूपितोभयवाक्ये प्रथमं शङ्कैव, पश्चाद्देशकालादिना तत्स्वभावमनुगम्य भ्रमाद्यभावः, सम्यक्ज्ञानं चानुमीयते । एवं ज्ञानानुमाने ज्ञेयभूतवाक्यार्थस्यापि नान्तरीयकसिद्धत्वाद् वाक्यं पश्चादनुवादकम्—इति ॥

॥ वेद इवान्वितस्वार्थाभिधानशक्तिप्रतिसन्धानसामग्र्येव लौकिकवाक्यबोधकत्वेऽपि । अतो वक्तृज्ञानं बहुविलम्बकारि न लिङ्गम् ॥

तदेतदतिस्थवीयः ; आकाङ्क्षादिमत्प्रतियोग्यन्वितस्वार्थाभिधानशक्तिप्रतिसन्धानमेव वेदे वाक्यार्थप्रतिपादनसामग्री । सा च लौकिकानामप्यविशिष्टा, इति कथमिव न

---

प्रक्रियामाह—वाक्येति ॥ **तत्पुरुषत्वादिति** ॥ एतद्वाक्यप्रयोक्ताऽयम् , आशयादिदोषरहितः, देवदत्तत्वात् ; पूर्वकालविशिष्टदेवदत्तवदिति वा, एतद्वाक्यम् , निरवद्यपुरुषप्रयुक्तम् , तत्पुरुषवाक्यत्वात् ; प्राक्तनतदर्थवाक्यवदित्यर्थः । **तात्पर्यनिश्चय इति** ॥ सदर्थस्याभिप्राय इत्यवधारणमिति यावत् । **अयोग्यपदेति** ॥ असंसृष्टार्थवाचकशब्दानां सम्भूयोच्चारणशङ्केत्यर्थः । कोष्ठगत्याऽऽशयादिदोषरहितवाक्यस्य प्रयोक्तृस्वभावावगममनपेक्ष्य बोधकत्वं किं न स्यात् ? अत्राह—**विस्मृतेति** ॥ द्वितीयं प्रत्याह—**यस्त्विति** ॥ तृतीयं प्रत्याह—**अनिरूपितेति** ॥ **देशकालादिनेति** ॥ अस्मिन् देशे कालेऽस्य विप्रलिप्सादि न सम्भवति; प्रयोजनाभावात् , एतदर्थावगमे सम्भावितनिरवद्यप्रमाणकारणवत्त्वात् , पर्यालोच्यैव स्पष्टतरमर्थप्रतिपादकत्वाच्चेति वक्तुर्यथार्थवादित्वमवगम्येत्यर्थः । एतद्वाक्यम्, विप्रलिप्सादिमूलं न भवति, स्वगोचरप्रमाणमूलं च, निरवद्यपुंवाक्यत्वात् ; संप्रतिपन्नवदित्यर्थः ॥ वक्तृज्ञानानुमानस्यानाप्तसम्बन्धनिरासोपयोगित्वात् स्वातन्त्र्येणैव शब्दस्य स्वार्थगमकत्वशङ्कां निराकुर्वन्निगमयति—**एवमिति** ॥

लौकिकपदानां संसृष्टस्वार्थप्रतिपादने मूलप्रमाणानपेक्षत्वं प्रतिपादयितुं वैदिकपदानां तत्प्रतिपादनसामग्रीमाह—**आकाङ्क्षादीति** ॥ सामग्री भवतीति शेषः । किमतः? अत्राह—**सा चेति** ॥ एवं तावल्लोकवेदयोरेकरूपप्रयोजकसम्भवे तद्द्वैरूप्यकल्पनं गौरवादयुक्तमित्युक्तम् , इदानीं लौकिकवाक्यस्य न लिङ्गतया गमकत्वम् ,

तानि वाक्यार्थं प्रतिपादयेयुः? वक्तृज्ञानलिङ्गे तु वाक्ये सति स्वार्थविषयज्ञानमनुमायार्थाभिधानशक्तिं तावत्प्रतिसन्धाय वाक्यस्य वक्तृज्ञानेन व्याप्तिरप्यनुसन्धेया। ततश्च विलम्बकारिणो लिङ्गस्य निर्णेतव्यं नावशिष्यते ॥ यथाहुः—

"अश्वैरपहृतं को हि गर्दभैः प्रार्थितुं क्षमः ॥"

इति। [1]लौकिकवचसां शङ्काकुण्ठितशक्तीनामनपेक्ष्य मानान्तरं नाभिधेयबोधकत्वमित्यप्यसाधु; यतश्चक्षुरादेरिव शङ्कितव्यभिचारादपि वाक्याद् वाक्यार्थप्रत्ययः प्रथममुपजनित एव पश्चादन्यतः शङ्कितव्यभिचारनिदानभूतभ्रमादिचतुष्टयाभावनिश्चयात् प्रमाणमिति निश्चीयते ॥

॥ वाक्यं चक्षुरादिवन्न सत्तामात्रेण ज्ञापकम्, किन्तु तदर्थाव्यभिचारानुसन्धानेनैव, इति तात्पर्यनिश्चयार्थं प्रमाणान्तरापेक्षा लौकिकशब्दस्य ॥

यदि मन्वीत—वाक्यं तावन्न चक्षुरादिप[व]दपरामृश्यमानं ज्ञापकम्; तत्र पदपदार्थसम्बन्धसंवेदनतत्स्मरणाकाङ्क्षासन्निधियोग्यत्वपरामर्शतात्पर्यज्ञानानामभावेऽभिधानमेव न स्यात्। यत्रापि 'नद्यास्तीरे फलानि सन्ति' इत्यादौ पश्चाद्व्यभिचारः,

---

विषयाभावादित्याह—**वक्तृज्ञानेति** ॥ स्वार्थप्रमाणपुरस्सरत्वं निर्दोषपुरुषवाक्यत्वेनानुमेयम्। एवं च तस्य स्वार्थत्वं तदभिधानशक्तिरस्यास्तीति प्रतिसन्धानमन्तरेण न स्यादिति तत्प्रतिसन्धानस्थितौ, तत एवार्थप्रतीतेर्वाक्यत्वस्य वक्तृज्ञाने व्याप्तिपक्षधर्मत्वानुसन्धानेन पश्चाद्भवतोऽनुमानस्य सिद्धसाध्यतया वैयर्थ्यमित्यर्थः ॥ वाक्याद् वाक्यार्थज्ञानस्योत्पत्त्यर्थं मानान्तरापेक्षा, प्रामाण्यसिद्ध्यर्थं [वा]। नाद्य इत्याह—**यत इति** ॥ द्वितीये न लिङ्गान्तर्गमो वाक्यस्येत्याशयवानाह—**पश्चादिति** ॥ अन्यतः=देशकालादित इत्यर्थः ॥

इन्द्रियस्याविदितस्य सत्तामात्रेणावेदकत्वाद्व्यभिचारवेदनमन्तरेणावेदकत्वं स्यात्, न तु शब्दस्यैतादृशो महिमा; विदितस्यैव वेदनहेतुत्वादिति वैषम्यं शङ्कते—**यदीति** ॥ प्रत्यक्षेतरमानस्य ज्ञातस्य ज्ञापकत्वेऽपि किं मूलप्रमाणापेक्षया? अत आह—**तत्रेति** ॥ वृद्धान्तरव्यवहारे पदपदार्थसम्बन्धसंवेदनेदानी[न्तन]तत्स्मरणयोग्यतादिप्रतिसन्धानसिद्ध्ये मूलप्रमाणापेक्षेति भावः ॥ अनाप्तप्रणीतनदीतीरादिवाक्यात् स्वार्थाभिधानमन्तरेणापि मानान्तरं भवतीति, अत्राह—**यत्रापीति** ॥

---

1. पृ 266 प. 5

तत्र वैकल्यात् प्रमाणज्ञानं नोत्पद्यत इति विचार्यम्। वक्तृदोषैः [1]शक्तिः प्रतिबध्यत इति चेत्, तर्हि प्राचीनं विज्ञानमभिधानं न स्यात्; शब्दशक्त्यजन्यत्वात्। शब्द-शक्तिजन्यं प्रमाणमभिधानमभिधीयते, तत्र धूमादिष्विव परामृश्यमानज्ञापकानां परामृश्यमानवैकल्याद् ज्ञानानुदय इति वाच्यम्। तत्र तात्पर्यनिश्चयेऽभिधानं भवति, तदनिश्चये नेत्याश्रयणीयम्। तदनिश्चयो विविधाभिप्रायाधीनत्वाद्वाक्यस्य— इति॥

॥ तत्तद्विषयतात्पर्यज्ञानमादाय बोधकत्वे लोकवद्वेदेऽप्यनुवादकत्वापत्तिः ;
उभयस्याप्यनुवादविधयैव प्रामाण्यापत्तिः॥

तदेतद् गगनग्रासकल्पम्। तथा हि—तात्पर्यवेदनस्य, विषयसंवेदनस्य [वा] विषयसंवेदननिदानत्वे निर्विषयं तात्पर्यं न शक्यसंवेदनम्, इति विषयावच्छिन्न-तात्पर्यसंवेदने विषयोऽपि संविन्नः, इति पश्चाद्वक्तृमानानुमानं लोके, वेदे स्वातन्त्र्येण प्रतिपादनमनुवाद एवेति शब्दप्रामाण्याय विकीर्येत जलाञ्जलिः॥

एवं च प्रागुन्नीतनयेन लोकवेदसाधारणसामग्र्यधीनैव शब्दार्थ[2]प्रतीतिः

---

अनाप्तत्वनिश्चये वाक्यात् प्र[भ्र]माद्यनुमानम्, तदनिश्चये शङ्काकुण्ठितशक्तित्वा-न्नाभिधेयबोधकत्वमित्यभिप्रायेणाह—**तत्रेति**॥ अगृहीताभिसन्धिः शङ्कते—**वक्त्रिति**॥ परः स्वाभिसन्धिं विवृणोति—**तर्हीति**॥ उक्तमुपपादयितु-मभिधानलक्षणमाह—**शब्देति**॥ अनुवादस्य व्यावृत्त्यर्थं प्रमाणमिति विशेषणमेव [म्। एवं चा]प्तत्वावधारणात् पुरा नाभिधानमित्युक्तम्। सम्प्रति तात्पर्यमज्ञात-मेवार्थप्रतीतिकारणमिति यद्वेदान्तिनो वदन्ति, तन्निरासार्थमाह—**तत्र धूमेति**॥ व्याप्त्यादिमत्तया प्रतिसन्धीयमानतया बोधकस्य धूमादेः व्याप्त्यादिवैकल्यादबोधक-त्ववत्, शब्दस्यापि यद्विशिष्टतया प्रतिसन्धीयमानस्य बोधकत्वम्, तद्वैकल्यादबोध-कत्वमित्यर्थः। तथापि तात्पर्यधियोऽभिधेयधीहेतुत्वं कुतः? अत्राह—**तत्रेति**॥ पुंवाक्यस्याभिप्रायमूलत्वात्, तदनवगमे मा भूद्बोधकत्वम्। तदनिश्चय एव कुतः? अत्राह—**तदिति**॥ तस्मात्तात्पर्यनिश्चयार्थं मूलप्रमाणापेक्षेति भावः॥

तात्पर्यस्य ज्ञातस्यार्थप्रतीतिहेतुत्वे लोकवद्वेदेऽपि तत्प्रसक्तौ शब्दप्रामाण्य-हानिः, अतः स्वाभ्युपगतशब्दप्रामाण्यपरिपालनायान्विताभिधानसामर्थ्यप्रतिसन्धान-

---

1. शक्तिप्रतिबन्धक इति चेत् 2. शब्दादर्थप्रतीति (क)

पश्चात् प्रवर्तमानलिङ्गस्यैवानुवादोऽयम् , इत्यतः "तथा चेत्थं प्रथमत एवार्थे निश्चिते निरस्ताशङ्काद् वाक्यात् स एवार्थोऽधिगम्यमानो नानुवादगोचरभावमतिवर्तेत" इति ब्रुवतो भवनाथस्य,

"तत्रार्थे निश्चिते पश्चात् सोऽर्थो वाक्यस्य गम्यते ।
तस्यां दशायां वाक्यस्य तस्य स्यादनुवादता ॥"

इति गायतो गौडमीमांसकस्य च "निर्णीतशक्तेर्वाक्यात् प्रागेवार्थस्य विनिर्णयाद् व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिते"ति वदन्नुदयनः प्रतिवादी कर्तव्यः । यत्र नदीतीरे फलानि'इत्यादौ पश्चाद्व्यभिचारः, तत्र दुष्टा सामग्रीति मिथ्याधियं जनयति । ततो न प्राचीनं विज्ञानमभिधानमपि समीचीनम् ॥

॥ शब्दभ्रमस्थलेऽपि दोषसहकृतशब्दशक्तिजन्यत्वं न विरुद्धम् ॥

[1]यत्तु—प्राचीनं विज्ञानमभिधानं न स्यात् , शब्दशक्त्यजन्यत्वात् इत्युक्तम् , तदयुक्तम्; दोषसहकृतशब्दशक्तिजन्यत्वात् । दोषस्य च प्राप्तकार्यनिरोधितया विपरीतकार्यकरत्वमख्यातिनिरसनेनावेदयिष्यामः । यद् ज्ञातमर्थप्रतिपत्तिं जनयति, तस्य शङ्कितव्यभिचारस्य न तज्जनक[त्व]मित्यपि रिक्तम्; तादृशव्याप्तेरव्यभिचारस्मृत्यपेक्षप्रतीतिसाधनलिङ्गत्वप्रयुक्तत्वात् , अपरथा कथञ्चित् साधर्म्येण शब्देऽपि तदापत्तौ

---

मेव वाक्यार्थधीसामग्रीत्याह—**एवं चेति** ॥ **इत्यत इति** ॥ यस्मादेवं **तस्मात् भवनाथस्योदयनः** प्रतिवादी कर्तव्य इत्यन्वयः । तथा च=वक्तृमा[ज्ञा]नावगमात् प्रागबोधकत्वे वाक्यस्य, इत्थं प्रथमत एवार्थे निश्चिते—वाक्यलिङ्गेनानुमीयमान ज्ञानावच्छेदकत्वेनार्थेऽति[पि] निश्चिते । **तत्रार्थ इति** ॥ तस्मिन् वक्तृज्ञानानुमाने । पश्चाद् आशयादिदोषाभावनिश्चये । निर्णीतशक्तेः=स्वार्थज्ञानानुमानायान्वितस्वार्थे शब्दानां शक्तिं निश्चितवतः पुंस इत्यर्थः । वाक्यस्य स्वातन्त्र्येणार्थप्रतिपादकत्वेऽनाप्तोक्तवाक्यादपि प्रमाणज्ञानमेव स्यात्; अविशेषात्, अत्राह—**यत्रेति** ॥

सत्यां व्याप्तौ कथं रिक्तत्वम्, अत्राह—**तादृशेति** ॥ अव्यभिचारस्मृतिमपेक्षत इत्यव्यभिचारस्मृत्यपेक्षम् , तत एव प्रमितिसाधनं यल्लिङ्गम् , तत्प्रयुक्तत्वात्, तस्यां व्याप्तौ लिङ्गत्वमुपाधिरित्यर्थः । विपक्षबाधकेनैतद् द्रढयति—**अपरथेति** ॥ **एतादृशस्येति** ॥ अज्ञातशङ्कितव्यभिचारस्येत्यर्थः ॥

---

1. पृ. 269 प. 2

यद् अर्थप्रतिपत्तिं जनयति, तदज्ञातं शङ्कितव्यभिचारं [न] जनयति, यथा लिङ्गमित्येतादृशस्येन्द्रियस्यार्थप्रतिपत्त्यजनकत्वप्रसङ्गात् ॥

॥ तात्पर्यज्ञानस्य नाभिधानसामग्र्यां प्रवेशः, अन्यपरताशङ्कायामेव
तन्निर्णयार्थं मीमांसाशास्त्रम् । लोकवेदयोरुभयत्र पदसामर्थ्याधीनमेव तात्पर्यम् ॥

[1]यत्पुनरगादि—वेदे पदार्थसामर्थ्याधीनं[2] तात्पर्यम्, लोके त्वाप्ताभिप्रायाधीनम् । विविधाभिप्रायाश्च नरा वाक्यं रचयन्तो दृश्यन्ते । भ्रमादिना तत्राशयदोषादिशङ्कायां स्वार्थतात्पर्य[ा]निश्चयादभिधानं न भवति—इति, तदभद्रम्; तात्पर्यनिश्चयस्याभिधान सामग्रीनिवेशाभावस्य निवेदितत्वात्, अज्ञाततात्पर्यादेव शब्दादर्थप्रतिपत्तौ तस्यान्यपरत्वाशङ्कानिरासे तात्पर्यनिश्चयोपयोगात् । वेदवल्लोकेऽपि पदपदार्थसामर्थ्य प्रयुक्तमेव तात्पर्यमुररीकरणीयम् । लौकिकशब्दाः, नाभिप्रायाधीनतात्पर्याः, शब्दत्वात्; वैदिकशब्दवत् । विपर्यये शक्तिमात्रस्य तात्पर्यप्रयोजकस्यानुगतैकरूपस्यसति सम्भवेऽनेकप्रयोजककल्पनागौरवं बाधकम् ॥

॥ वक्तृज्ञानात्प्राग्वाक्यार्थावगतौ तदनवगतावुभयत्रापि दोषान्न तात्पर्य-
ज्ञानं कारणं शाब्दबोधे । अतो लौकिकवाक्यं न
वक्तृज्ञानानुमापकमालम् ॥

किं च विमतिपदानि पदानि, स्मारितपदार्थसंसर्गधीपूर्वकाणि, अदृ[दु]ष्टपुरुष प्रणीतपदकदम्बकत्वात्, 'गामभ्याज' इति पदकदम्बकवदिति (वैदि[3]कः)वक्तृज्ञाना-

---

लौकिकवचसामित्यादिनोक्तमर्थतोऽनुवदति—**यत्पुनरिति** ॥ तात्पर्यधियो वाक्यार्थधीसामग्र्यामनिवेशे त्र्यन्ततात्पर्यनिश्चयाय शारीरकारम्भो न भवेत्, अत्राह—**अज्ञातेति** ॥ यदुक्तं लौकिकवचसामभिप्रायाधीनं तात्पर्यवेदनमिति, तत्राह—**वेदवदिति** ॥

लौकिकवाक्यानां वक्तृज्ञानानुमापकत्वानुपपत्तिं तदीयानुमानशरीरप्रदर्शनपुरस्सरमाह—**किञ्चेति** ॥

स्मारितपदार्थसंसर्गे परामर्शरूपे, तद्विशिष्टवक्तृज्ञानानुमानमुपपन्नमिति शङ्कते—**स्यादिति** ॥ परामर्शप्रत्ययस्य प्रमाणान्तरनिबन्धनत्वे तत एव वाक्यार्थ-

---

1. पृ. 266 प. 6 2. धीन (क) 3. कुण्डलान्तर्गतं नास्ति

नुमानात्प्राग्वाक्यार्थोऽवगतः, अनवगतो वा? आद्ये वाक्येनैव चेत् स्वार्थप्रतिपादनम्, तस्यानपेक्षत्वसिद्धिः। (अ)? प्रमाणान्तरेण चेत्, तेनैव वाक्यार्थावगमात् वक्तृमा[ज्ञा]नानुमानानर्थक्यम्। द्वितीये तदवच्छिन्नमा[ज्ञा]नानुमानानुपपत्तिः; अगृहीतविशेषणाया विशेष्यावगतेरयोगात्॥

॥ स्मारितपदार्थसंसर्गवक्तृज्ञानपूर्वकत्वानुमानोपपादनम्, तन्निरासश्च॥

स्यान्मतम्—पदैः पदार्थेषु स्मारितेष्वाकाङ्क्षादिवशेन या[वाक्यार्थ]प्रतिपादनयोग्यतापरामर्शज्ञानमनुमीयते, [1]वाक्यार्थप्रतिपादनयोग्यतापरामर्शो वा? नाद्यः; प्रागेवानुमानात् पदार्थानां प्रतिपन्नतयाऽनुमानवैयर्थ्यात्। द्वितीये वाक्यार्थविशेषितप्रतिपादनपरामर्शज्ञानानुमाने प्रागीरितरीत्या वाक्यार्थस्यापि प्रागेवावगन्तव्यत्वे गदितावद्यानिस्तारात्, समभिव्याहृतपदानां यादृगर्थप्रतिपादनयोग्यता, तादृगर्थज्ञानमनुमेयमित्यत्रापि तादृगित्युक्तार्थानवगमे तदवच्छिन्नज्ञानानुमानायोगात्, तस्य च प्रागनवगतस्यावगमे तदवगमस्य स्मृतित्वानुपपत्त्या [2]प्रमात्वापत्तौ तेनैव वाक्यार्थस्य विनिगमनादनुमानवैयर्थ्यतादवस्थ्यम्, स्मृतिप्रमाणातिरिक्तप्रतीतेरनङ्गीकारात्॥ यदाह—'प्रमाणं स्मृतिश्च प्रत्ययः' इति॥

॥ आप्तत्वसमूलत्वयोः प्रामाण्यप्रयोजकत्वे वेदाप्रामाण्यापत्तिः,
निर्दोषत्वमुभयप्रामाण्यप्रयोजकम्। अनुमानमप्युभयत्र समानम्॥

अपि च यद्याप्तत्वं मूलप्रमाणं वा वाक्यस्याभिधानप्रयोजकम्, तदा

---

सिद्धेरनुमानवैयर्थ्यम्, शब्दनिबन्धनत्वे शब्दस्यानपेक्षत्वसिद्धिः, अत्राह—**परामर्शतश्चेति(?)**॥ **प्रागीरितेति**॥ अगृहीतविशेषणाया विशेष्यावगतेरयोगादित्युक्तयुक्त्येति यावत्। पदार्थज्ञानमनुमीयते, वाक्यार्थ[ज्ञानं]ज्ञानं वेति न विशेषं ब्रूमः, किं तर्हि? समानाधिकृतपदानां यादृगर्थप्रतिपादने योग्यत्वम्, तादृगर्थज्ञानानुमानम्, अतो न किञ्चिदनुपपन्नमित्याशङ्क्याह—**समभिव्याहृतेति**॥

आप्तप्रणीतत्वम्, मानान्तरपुरस्सररचनत्वं वा शब्दानां नाभिधानप्रयोजकम्; अव्यापकत्वादित्याह—**अपिचेति**॥ वेदवाक्यस्यापौरुषेयस्य निरस्तसमस्ताशङ्का-

---

1. नरामर्शो भवति, तद्विषयं वक्तृज्ञानमनुमीयते। परामर्शश्च तर्कपर्यायः प्रमाणेतिकर्तव्यता प्रमाणकोटिः=इति, तदपि न; घटपटादिपदार्थमात्र (ख)

2. प्रमाणत्वानुपत्तौ

वेदेऽभिधानं न भवेत् । वेदवाक्यं तयोरनिश्चयेऽपि निर्दोषवाक्यत्वादभिधायकमिति चेत्, तर्हि वाक्यस्याभिधाने निर्दोषत्वमेव प्रयोजकम्, न मूलमानाप्तत्वे, इति तदनवगमेऽपि निर्दोषत्वप्रसङ्गावगमादेव वाक्यमभिदधीत । न च— लौकिकवाक्येषु तन्निश्चयात् पूर्वं व्यभिचारशङ्कैव न निवर्तत इति—साम्प्रतम्; तदनिवृत्तौ मूलमानानुमानस्याप्यनुपपत्तेः । लिङ्गमपि हि न शङ्कितव्यभिचारं गमकम् । [किञ्च] यदि लौकिकवाक्येऽनुमीय तज्ज्ञानावच्छेदकतया वाक्यार्थविधिदू [रू] रीक्रियेत, वेदेऽपि तर्हि किं नानुमानतस्तत्सिद्धिः? सम्भवति ह्यनुमानं—एते पदार्थाः, मिथः संसर्गजुषः, निरस्तपुंदोषाशङ्कैराकाङ्क्षादिमद्भिः पदैः स्मारितत्वात्; आप्तगदितपदकदम्बकस्मारितपदार्थवत्—इति । तदुक्तम्—

"वाक्यार्थोऽनुमया लोके यदि, वेदे तदा न किम् ।
वेदेऽभिधानं सिध्येच्चेत् सिध्येल्लोके ततस्तराम् ॥"

इति । तस्माद् वाक्यार्थस्य सर्वत्रानुमेयत्वात्, शब्दप्रमाणसङ्कथा सङ्कटैव स्यात् ॥

॥ लैङ्गिकभ्रमासंभवाल्लौकिकवाक्यानां लैङ्गिकत्वे न दोष इति शङ्का,
लैङ्गिकभ्रमस्य प्रामाणिकत्वेन ततो नेष्टसिद्धिरिति परिहारश्च ॥

कश्चि[दत्र]कथञ्चित् परिहारकथामग्रथ्नात्— बाधितेऽपि नदीतीरफलसंसर्गे समभिव्याहारमहिम्नाऽस्ति तावत् संसर्गग्रहः । न च बाधिते विषये लैङ्गिकभ्रमो

---

कलङ्कस्य स्वार्थाभिधानेऽनपेक्षत्वमित्याह—**वेदेति** ॥ प्राप्ताप्राप्तविवेकेन निर्दोषत्वमेव लोकवेदसाधारणं प्रयोजकमापतितमिति परिहरति—**तर्हीति** ॥ आप्तत्वमूलमानयोरनिश्चये निर्दोषत्वं न शक्यनिश्चयम्, अत्राह—**न चेति** ॥ कुत एतत्? अत्राह—**तदिति** ॥ तदेव विशदयति—**लिङ्गमिति** ॥ "तत्प्रमाणं बादरायणस्यानपेक्षत्वादि"त्यौत्पत्तिकसूत्रावयवप्रतिपादितमनपेक्षशब्दप्रामाण्यं वेदेऽङ्गीकृत्य न लौकिकवाक्यस्य मूलमानानुमापकत्वं स्वीकारार्हमित्याह—**किञ्चेति** ॥ उक्तेऽर्थे [नीति] तत्त्वाविर्भावकारवचनमुदाहरति—**तदुक्तमिति** ॥ प्रतिपादनाय **शालिकनाथोक्तं** परिहारमुत्थापयति—**अत्रेति** ॥ **कथञ्चिदिति** ॥ साक्षाच्छब्दप्रामाण्यप्रतिपादनासामर्थ्येऽपि तदाभासप्रतिपादनद्वारेत्यर्थः । **संसर्गग्रह इति** ॥ 'संसृष्टव्यवहारहेतुप्रत्यय इत्यर्थः । सरित्परिसरफलसत्तासंसर्गासत्त्वमवगच्छतोऽपि

ऽवकल्पते । न हि पाथसि पावकाभावमवगच्छतो बाधात् तदनुमानभ्रमो भवति । अतोऽस्य लैङ्गिकभ्रमत्वानुपपत्तेः प्रामाणान्तराभासत्वं वाच्यम् । तथैव प्रमाणान्तरं शब्दं[ब्दो]ऽपि क्वचित्सिद्ध्यति — इति, तदिदमसारम्; लिङ्गभ्रमप्रयुक्तलैंगिकभ्रमस्य सत्यपि बाधे[1]यावल्लिङ्गं भ्रमानुवृत्तेः, सामग्र्याः कार्याव्यभिचारात् । न च बाधाभावोऽपि तद्धेतुः; तस्य लैङ्गिकप्रमामात्रहेतोस्तदाभासं प्रत्यहेतुत्वात्, पाथसि पावकारोपस्य वाष्पधूमारोपः कारणमिति लिङ्गभूतधूमभ्रमनिवृत्तौ लैङ्गिक[2]पावकभ्रमोऽपि निवर्तते । नदीतीरफलसंसर्गे तु नद्यास्तीरे फलानि सन्तीति समभिव्याहारदोषेण वाक्यार्थधीपूर्वकवाक्यविशेषत्वरूपलिङ्गभ्रमोऽनुवर्तते, इति लैङ्गिकवाक्यार्थप्र [भ्र]मानुवृत्तेरप्युपपत्तिः, इति सूक्तं शब्दप्रमाणहानिर्वाक्यार्थस्यानुमेयत्वे — इति ॥

॥ शब्दस्य स्वतोऽनवद्यत्वेऽपि संभावितदोषपुरुषाभिव्यक्तत्वेन लौकिके शब्दे सदोषत्वसंभवान्न वेदवाक्ये लौकिकवाक्यसाम्यम् ॥

अथ — लोकेऽपि शब्दस्य महिम्ना धीहेतुत्वे शब्दसमवायिदोषाभावाद् व्यभिचारो न स्यात्, लिङ्गत्वे तु तदुपपत्तिरिति — उच्येत, तदपि न हृदयङ्गमम्;

---

सुरसरित्परिसरे सन्ति फलानी'ति वाक्याद् यत्र प्रत्ययः, तत्र लिङ्गाभासात् संभविष्यतीति, अत आह — **न चेति** ॥ परोक्षत्वात् प्रत्यक्षाभासत्वासंभवे परिशेषादिदमायातमित्याह — **अत इति** ॥ **क्वचिदिति** ॥ वेद इत्यर्थः । बाधितेऽपि विषये संसर्गभ्रमस्य लिङ्गाभासादेव संभवान्न शब्दाभाससिद्धिरिति परिहरति — **तदिति** ॥ लिङ्गभ्रमस्य लैङ्गिकभ्रमसामग्रीत्वादिति भावः । बाधाभावविशेषितलिङ्गभ्रमः सामग्री, तत्राह — **न चेति** ॥ **तस्येति** ॥ पक्षधर्मत्वादिप[व]दबाधितविषयत्वस्यापि प्रमाभूतानुमितिप्रयोजकस्य तदाभासप्रयोजकत्वासंभवादिति भावः । नदीतीरफलसंसर्गाभावोपगमे वाक्यत्वरूपलिङ्गभ्रमासंभवान्न संसर्गग्रहो लिङ्गाभासात् संभवेत्, अत्राह — **नदीति** ॥ **समभिव्याहारदोषेणेति** ॥ असंसृष्टार्थपदानां सहोच्चारणं तद्वदवभासमानत्वं तदारोपप्रयोजकमित्यर्थः ॥

लौकिकवाक्यस्य वैदिकवाक्यस्येवानपेक्षस्य स्वार्थगमकत्वे क्वचिदपि मिथ्यार्थता न स्यादिति शङ्कते — **अथेति** ॥ समानः पर्यनुयोगः त्वत्पक्षेऽपि, अत्राह — **लिङ्गत्व इति** ॥ अबाधितविषयत्वरूपवैकल्यादित्यर्थः ॥

---

1. लिङ्गभ्रमा 2. लैङ्गिका (क)

शब्दस्य स्वतोऽनवद्यत्वेऽपि सावद्यपुरुषेणाभिव्यङ्ग्यत्वरूपशब्दनिष्ठदोषस्य शाब्दधीहेतुदोष[1]त्वस्वीकारात् ॥

॥ सदभिप्रायमूलपदसंघातवत्त्वहेतुकाभिधानानपेक्षाभिप्रायसूचकत्वानुमानस्य व्यर्थविशेषणत्वेन सत्प्रतिपक्षसाध्यविशेषणवैयर्थ्यादिदूषणेन निरासः ॥

यदपि केनचित् प्रायोजि—विमतिपदं वाक्यम्, अभिधानानपेक्षमभिप्रायसूचकम्, सदभिप्रायमूलपदसंघातत्वात्; सङ्केतपदवत्—इति, तदप्यचारु; सदभिप्रायविशेषणकृत्याभावेन हेतोर्व्यर्थविशेषणत्वात्। अनाप्तवाक्यमप्यभिप्रायं सूचयत्येव। तदसूचकत्वे न विमतिपदम्, अभिधानानपेक्षमभिप्रायसूचकम्, वाक्यत्वात्; वेदवाक्यवदिति सत्प्रतिपक्षत्वात्। अथ सदभिप्रायसूचकमिति साध्यविशेषणादनाप्तवाक्ये व्यभिचारवारणाय सदभिप्रायमूलविशेषणमिति, [2]तदाऽभिप्रायसूचकमिति साध्ये बाधसिद्धसाधनयोरभावेन साध्यविशेषणवैयर्थ्यात[र्थ्यम्] ॥

॥ अभिप्रायमूलपदसंघातत्वादिति हेतोराधुनिकवृद्धव्यवहारनिबन्धनपदार्थसम्बन्धबोधकवाक्ये व्यभिचारः, तस्यापि पक्षत्वे तु बाधः ॥

अस्तु तर्हि अभिप्रायमूलपदसङ्घातत्वादित्येव हेतुरिति चेत्, न; आधुनिकमध्यमवृद्धव्यवहारनिबन्धनव्यवह्रियमाणपदार्थसम्बन्धबोधकस्यावश्य[3]माभिधानिकत्वेनाभ्युपगन्तव्यतया तत्र व्यभिचारात्, अपरथा सङ्गत्यधिगतिविगमेन वेदे सम्बन्धग्रहण-

---

भट्टविष्णुभाषितमनुमानमनुभाषते—**यदपीति** ॥ **व्यर्थविशेषणत्वादिति** ॥ वैदिकवाक्यव्यावृत्तेरभिप्रायमूलत्वविशेषणेन सिद्धत्वाद्वैयर्थ्यमित्यर्थः। अनाप्तवाक्ये व्यभिचारवारणाय सदिति विशेषणम्, अत्राह—**अनाप्तेति** ॥ बाधितेऽर्थे कथमभिप्रायसंभवः? अत्राह—**तदिति** ॥

विमतिपदम्, अभिधानानपेक्षमभिप्रायसूचकम्, अभिप्रायमूलपदसङ्घातत्वादिति प्रयोगशरीरं शङ्कते—**अस्त्विति** ॥ मध्यमनरचेष्टयानुमीयमानसंसृष्टाभिधायिपदैर्व्यभिचार इत्याह—**नेति** ॥ अवश्यशब्दसूचितानुपपत्तिमाह—**अपरथेति** ॥ मध्यमवृद्धव्यवहारस्य शब्दशक्तिनिबन्धनसंबन्धबोधाधीनत्वाभावे पदानामन्विते शक्तिलक्षणसंबन्धबोधासिद्धेः, वेदे पृथक्सम्बन्धग्रहणाभावादबोधकत्वात्, अपौरुषेयत्वेन ज्ञानानुमानायोगादप्रामाण्यं स्यादित्यर्थः। विमतवाक्यम्, स्वार्थप्रमाणाधीनरचनम्,

---

1. हेतुत्वस्वीकारात्। (क)
2. तदसदभिप्रा
3. वश्याभिधा

ज्ञानानुमानयोरभावेनाप्रामाण्यं स्यात् । प्रयोज्यचेष्टाया लैङ्गिकधीजन्यत्वेऽपि शब्दाभिधायितया शाब्दत्वं बालो बुध्यत इति चेत्, न; अन्यथाख्यात्यापत्तेः । प्रयोगमूलज्ञानानुमानानन्तरं प्रयोज्यवृद्धस्य वृद्धान्तरेरितवाक्यमनुवादकम्, अतो नान्यथाख्यात्यापत्तिरिति चेत्, न; प्रयोज्यवृद्धस्याप्यनेन न्यायेनान्विताभिधानस्य प्राग[1]वगमादनुमानादनुवादानुपपत्तेः, अवगमे वा पश्चादनुमानात् संसर्गमनुभवतः प्राचीनाभिधानसंवेदनस्य मिथ्यात्वनिश्चयादनुवादोऽपि भ्रमः स्यात् । एतेन—अस्मिन् मते प्रथमा[2]वगतशक्तिविरोधोऽप्युक्तः— मन्तव्यः । सम्प्रति वृद्धप्रयुज्यमानपदानामपि धर्मित्वे, तस्मिन्नेव भागे बाधः ॥

॥ ज्ञानानुमानात् प्रागनिश्चिततात्पर्यकत्वानुमाने सिद्धसाधनम् ॥

विमतिपदम्, ज्ञानानुमानात् प्रागनिश्चिततात्पर्य[क]म्; अनिराकृतसम्भाविता-न्यतात्पर्यात्, तादृशवाक्यवदित्यनुमानान्तरं तु सिद्धसाधनत्वग्रस्तम्; तात्पर्यज्ञानस्या-

---

निरवद्यपुरुषवाक्यत्वात्; सम्मतवदित्यनुमीयमानवक्तृज्ञानावच्छेदकार्थधीनिबन्धनत्वे व्यवहारस्य, पदानां संसृष्टधीसामर्थ्यरूपं संबन्धं बालो गृह्णातीति शङ्कते—**प्रयोज्येति** ॥ सिद्धान्तविरोधेन दूषयति—**नेति** ॥ लैङ्गिकनिबन्धनव्यवहारस्य शाब्दधीनिबन्धनत्वबोधादन्यथाख्यातिरित्युक्तमयुक्तम्; व्यवहारनिबन्धनधियः शाब्दत्वस्यापि भावादिति चोदयति—**प्रयोगेति** ॥ परिहरति—**नेति** ॥ मध्यमनरस्यापि स्वीयव्युत्पत्त्यवस्थायां पदानां ज्ञानानुमापकानां संसृष्टस्वार्थाभिधानसामर्थ्याग्रहादिदानीं तदनुवादो न स्यादित्यर्थः । मध्यमवृद्धोऽपि बाल्यावस्थायां वृद्धान्तरव्यवहारस्य लैङ्गिकज्ञानकार्यस्य शब्दानुविधायिनः शाब्दत्वमवगम्य शब्दानामन्विताभिधानशक्तिमवगच्छतीत्याशङ्क्याह—**अवगमे वेति** ॥ एवं तावदभिप्रायमूलपदसङ्घातत्वादिति हेतोर्व्यभिचारमुदीर्य, बाधमाह—**एके[ते]नेति** ॥

इदानीमुत्तमनरैः प्रयुज्यमानशब्दानां पक्षनिक्षेपान्नते व्यभिचारः, अत्राह—**संप्रतीति** ॥ **वि ष्णु भ** ट्टीयमेवानुमानान्तरं दूषयति—**विमतिपदमिति** ॥ अन्यतात्पर्यत्वमसिद्धमिति तत्परिहारायोक्तम्—**संभावितेति** ॥ तथाविधेन निश्चिततात्पर्येण व्यभिचारनिरासार्थमुक्तम्—**अनिराकृतेति** ॥ **तादृशवाक्यवदिति** ॥ श्वेतो [श्वो ?] धावतीत्यादिसङ्केतवाक्यवदित्यर्थः । वाक्यमनिश्चिततात्पर्यमर्थबोधकम्, मूलमानज्ञानं

---

1. न अधिकं क पुस्तके        2. प्रथमानवगतशक्ति

भिधानहेतुत्वानभ्युपगमात्, अनभिधानपदत्वोपाधिव्याधिग्रस्तत्वाच्च । विपर्यये च प्रयोगः—विमतिपदं वाक्यम्, अनुमानानपेक्षमभिधायकम्, निर्दोषवाक्यत्वात्; अनाप्तप्रणीतवाक्यत्वाद्वा; वेदवाक्यवदिति ॥

॥ वाक्यार्थज्ञानानुमानस्य मननस्य वा विपरीतशङ्कानिरास उपयोगः,
प्रत्यक्षानुमानशब्दप्रमाणलक्षणं च ॥

न चात्रानुमान[1]स्यानिश्चिततात्पर्यत्वमुपाधिः; साधनव्यापकत्वात्। अनुमानान्निश्चयासम्भवस्याभिहितत्वात्। कुत्र तर्हि वाक्यार्थगोचरविज्ञानानुमानस्योपयोग इति चेत्, तत्र मानान्तरविरोधाद्यथाप्रयोगमन्वितेषु पदार्थेषु तदभिधायिनां शब्दानामितरेतरान्वययोग्यविभक्तिसम्बन्धितया संहत्य बुद्धौ सन्निधानं शब्दानां दोषः, तन्निरासमात्रे तदुपयोग इति ब्रूमः ॥

तदुक्तम्—

"वक्तृमानं तु शब्दस्य प्राप्तदोषापनोदि हि"।

इति। तस्मादज्ञातभावकारणजा प्रतीतिः प्रत्यक्षम्, व्याप्यदर्शनाद् व्यापके बुद्धिरनुमानम्, शब्दाज्ज्ञातादर्थे बुद्धिः शाब्दमानम् ॥

---

त्वन्यपरत्वादिशङ्कानिरासार्थमित्युपगमादित्यर्थः । ज्ञानानुमानात् प्रागनिश्चिततात्पर्यत्वं तव सङ्केतपदत्वप्रयोजकम्, अतोऽन्यतरव्यप्यत्वासिद्धिरित्याह—**अनभिधानेति** ॥ साधनव्याप्तिमुपपादयति—**अनुमानेति** ॥ विमतं वाक्यम्, स्वार्थमानपुरस्सरम्, निर्दोषपुरुषवाक्यत्वात्; सम्मतवदिति मूलज्ञानानुमानं शब्दस्य पौरुषेयस्य स्वातन्त्र्यपक्षेऽपीष्टम्, तदनुपयुक्तं स्यादिति शङ्कते—**न चा[कु]त्रेति** ॥ नदीतीरे फलानीत्यादिविप्रलम्भकवाक्ये, यानि पदानि तेषामसङ्गतार्थानां सङ्गतार्थप्रतिपादनयोग्यसप्तम्यादिविभक्त्यन्तानां संभूय पठितानां तथैव गृह्यमाणत्वदोषनिरासायोपयोग इत्याह—**तत्रेति** ॥ तत्र श ब्द नि र्ण य कृतां संप्रतिपत्तिमाह—**तदुक्तमिति** ॥

एवं शब्दस्य स्वतन्त्रप्रमाणतां प्रतिपाद्य, तल्लक्षणं वक्तुं तद्व्यवच्छेद्यप्रत्यक्षादिलक्षणमाह—**तस्मादिति** ॥ [अभाव]प्रमाणव्यावृत्त्यर्थं भावविशेषणम्, व्याप्तिग्राहि व्यापकप्रत्यक्षं व्यावर्तयति—**व्याप्येति** ॥ असंभवपरिहारायोक्तम्—**ज्ञातादिति** ॥

---

1. अनुमानानयानिश्चित

॥ शब्दप्रमाणलक्षणस्य शब्दलिङ्गकवक्तृज्ञानविशेषेऽतिव्याप्तिशङ्का-तन्निरासौ ॥

शब्दलिङ्गवक्तृविशेषानुमानेऽतिव्याप्तिः, भवति च बहिष्ठस्याध्ययनध्वनिश्रवणाद् भवनान्तर्वर्तिपुरुषविशेषानुमानमिति चेत्, शब्दज्ञानादेव वक्तृविशेषानुमानम्, उत व्याप्यत्वपक्षधर्मत्वाभ्यामुपेतशब्दज्ञानात्। आद्ये तदपि शाब्दमेवेति नातिव्याप्तिः, शब्दलिङ्गवक्तृविशेषानुमान इति स्ववचनविरोधश्च; व्याप्यस्य पक्षधर्मतया परामर्शो लिङ्गमिति तल्लक्षणात्। द्वितीयेऽपि नातिव्याप्तिः; ज्ञा[1]तशब्दमात्रजन्यत्वाभावात् ॥

॥ शब्दप्रमाणविभागः, तस्यानुमानातिरिक्तत्वोपसंहारश्च ॥

तद् द्वेधा—अपौरुषेयजम्, पौरुषेयजं चेति। तत्राद्यं वेदवाक्यजनितम्, द्वितीयमाप्तवाक्यजमिति। तस्मात्—

अनुमाना[2]दन्यमानं शाब्दमानमिति स्थितम्।
व्याप्यविज्ञानजादन्यज्ञानत्वाद् रूपबुद्धिवत् ॥ ३५ ॥

**॥ इति न्यायचन्द्रिकायां शब्दस्यानुमानातिरिक्तप्रमाणत्वसमर्थनं सप्तमम् ॥**

---

शब्दलक्षणस्यातिव्याप्तिं शङ्कते—**शब्दलिङ्गेति** ॥ स्ववचनविरोधं स्फुटयितुं लिङ्गलक्षणमाह—**व्याप्यस्येति** ॥ **ज्ञातादिति** ॥ शाब्दलक्षणविशेषणेन शब्दज्ञानातिरिक्तव्याप्त्याद्यवगमापेक्षानुमानव्यावृत्तेर्विवक्षितत्वान्नातिव्याप्तिरित्याह—**द्वितीयेऽपीति** ॥ शाब्दं ज्ञानम्, अनुमानं न भवति, व्याप्यदर्शनजज्ञानादन्यत्वात्; प्रत्यक्षवदिति स्वपक्षसाधनं निगमयति—**तस्मादिति** ॥

**॥ इति न्यायचन्द्रिकाव्याख्यायां**
**शब्दस्यानुमानातिरिक्तप्रमाणत्वसमर्थनं सप्तमम् ॥**

---

1. ज्ञानक (क)
2. मानाद्यन्मानं (ख)

## ॥ अथोपमानस्य प्रमाणान्तरत्वसमर्थनमष्टमम् ॥

॥ उपमानलक्षणम्, तस्य लक्ष्यसमन्वयश्च ॥

उपमितिरपि मानान्तरम्। तथाहि — सन्निकृष्टेनासन्निकृष्टस्य सादृश्यमिति-रुपमितिः। तद्यथा—गामुपलभ्यारण्यमनुसरतो गवयदर्शनानन्तरं[1] गोसदृशोऽयमिति सादृश्यज्ञानम्, तदनन्तरं च मदीया गौरनेन सदृशीति गवयसादृश्यविशिष्टगोज्ञानं [च]भवति। तत्र गवयज्ञानमुपमितिकरणम्। गवयसादृश्यविशिष्टगोज्ञानमुपमितिः। गवयसादृश्यविशिष्टा गौः प्रमेयम् ॥

॥ सादृश्यस्यातिरिक्तपदार्थत्वसमर्थनम् ॥

न च — सादृश्यमेव नास्तीति—सांप्रतम्; सदृशोऽयमित्यनुभवसिद्धत्वात्। यथोक्तम्—"सादृश्यमिति हि सादृश्यमि"ति। न च द्रव्यादिष्वनन्तर्भावात् सादृश्यं नास्ति। सादृश्यासिद्धौ — सादृश्यम्, नास्ति, द्रव्यादिव्यतिरिक्तत्वादित्यादेरा-श्रयासिद्धत्वात्, सिद्धौ वा धर्मिग्राहकप्रमाणबाधात्। तदुक्तं शा लि क[2]ना थेन—"सादृश्यदर्शनोत्थं सादृश्यविषयं ज्ञानमुपमानम्। विषयोऽस्य वृत्तिसिद्धो भिन्नो द्रव्यादिभावेभ्यः" इति ॥

---

## ॥ अथोपमानस्य प्रमाणान्तरत्वसमर्थनमष्टमम् ॥

उपमितेरिवागमस्यापि लिङ्गेऽन्तर्गतिः किं न स्यात्? अत्राह—**उपमिति-रिति** ॥ तदुपपादनाय तल्लक्षणमाह — **तथा हीति** ॥ स्मृतिव्यवच्छेदाय विभ्रमादि-व्यवच्छेदार्थं च मितिग्रहणम्। सदृशाविमाविति सन्निकृष्टयोः सादृश्यमितिं व्यवच्छिनत्ति—**सन्निकृष्टेनेति** ॥ किमस्याः कारणम्? [तत्]दर्शयति—**तत्रेति** ॥

सादृश्यं द्रव्याद्यन्तर्भूतम्, अनन्तर्भूतं वा। आद्ये न पूर्वत्रिकान्तर्भूतम्; समवायस्यापि नित्यत्वादिना सामान्यादिसदृशत्वात्। तत एव नोत्तरत्रिकेऽपि। तस्मान्नास्त्येव तत्, अत्राह—**न चेति** ॥ उक्तेऽर्थे गुरुवचनमुदाहरति—**यथोक्तमिति** ॥ द्वितीयं दूषयति—**न च द्रव्येति** ॥ सादृश्यम्, असत्, द्रव्यादिभ्योऽन्यत्वात्, षड्लक्षणविच्छेदमेलकवत्त्वात्; शशशृङ्गवत्, अत्राह—**सादृश्येति** ॥ **सादृश्यदर्शनोत्थमिति** ॥

---

1. गोपदं क पुस्तके नास्ति। 2. का

॥ उपमानस्य प्रत्यक्षेऽनन्तर्भावः ॥

न च गवयसादृश्यविशिष्टगोज्ञानं प्रत्यक्षफलम्; सादृश्यस्येन्द्रियसन्निकृष्टत्वेन प्रत्यक्षत्वेऽपि सादृश्यविशिष्टस्य गोरिन्द्रियासन्निकृष्टत्वेन सादृश्यविशिष्टगोज्ञानस्य प्रत्यक्षफलत्वानुपपत्तेः। न चेदं स्मृतिरेव; पूर्वं गवयानवगतौ गवयसादृश्यविशिष्टस्य गोरनुभवात् ॥

त[स्मा][1]द्गवयसादृश्यविशिष्टगोज्ञानं मानान्तरम्। तत्साधनं च गोसादृश्यविशिष्टगवयज्ञानमिति स्थितम्। तदुक्तम्—

"प्रत्यक्षेणोपलब्धेऽपि सादृश्ये गवि च स्मृते।
विशिष्ट]स्यान्यतोऽसिद्धेरुपमानप्रमाणता" ॥

इति ॥

॥ सादृश्यस्य पूर्वानुभूतस्य जात्याख्यस्य स्मृतिरेव 'अनेन सदृशी मदीया गौरि'ति ज्ञानम्, न चेयं मानान्तरमिति वादीन्द्र शङ्का ॥

आह – नोपमानं मानान्तरम्; सादृश्यविशिष्टगोपिण्डज्ञानस्य स्मृतित्वात्। अनुभूतमेव हि पूर्वं सादृश्यं गोत्ववत्। यथा हि सकलगोव्यक्तिगतमप्येकगोव्यक्तिग्रहणसमये गोत्वमनुभूयते, तथा सकलगोगवयव्यक्तिगतं सादृश्यमप्येकगोग्रहणसमयेऽनुभूयत एव; योग्येन्द्रियसन्निकर्षादेरुपलम्भकारणकलापस्य विद्यमानत्वात्, सादृश्यस्य च नित्यत्वे सत्यनेकसमवेतत्वेन जातित्वात्, अपरथा गवयेऽपि सादृश्यानु-

---

असन्निकृष्टेन सन्निकृष्टस्य सादृश्यदर्शनादुत्थमित्यर्थः। सादृश्यस्येन्द्रियसन्निकृष्टतया तद्विशिष्टगोपिण्डधियोऽपीन्द्रियजत्वान्नोपमितिर्ज्ञानान्तरम्, अत्राह— **न चेति**। इतरथा शब्दस्य श्रावणत्वेन तद्विशिष्टाकाशस्य श्रावणत्वापत्तेरित्याशयः। उपमितेर्मानान्तरत्वं भट्टवचनेन द्रढयति—**तदुक्तमिति** ॥

वादीन्द्रस्य चोद्यमुद्भावयति —**आहेति** ॥ सादृश्यस्य गोगवयसमवेतस्य प्रागननुभवन[वात्]कथं स्मृतिः? अत्राह– **अनुभूतमेवेति** ॥ सकलगोगवयगतत्वात् सादृश्यस्य नैकगोव्यक्तिग्रहणे ग्रहणं स्यात्, अत्राह—**गोत्ववदिति** ॥ कार्त्स्न्येनाश्रयग्रहणमन्तरेण कथमेकपिण्डग्रहे गृह्यते? अत्राह—**योग्येति** ॥ सामान्यस्य प्रतिव्यक्ति समाप्यवृत्तित्वात्, एकैकव्यक्तिप्रतीतौ प्रतीतिः स्यात्, न तु सादृश्यस्य; तस्यावयविन इव प्रत्याश्रयमसमाप्तेः, अत्राह—**सादृश्यस्येति** ॥ सादृश्यम्, जातिः,

---

1. कुण्डलान्तर्गतं नास्ति

पलम्भप्रसङ्गात्—इति । तथाच पार[1]मर्षं सूत्रम्—"सोऽनपदेशः" इति । सः [2]उपमानादिः अनपदेशः=अप्रमाणम् ; अपदेशशब्दस्य प्रमाणप्रतिपादकत्वात् । हेतुः, अप[3]देशः, लिङ्गम्, निमित्तम्, प्रमा[4]णम्, कारणमित्यनर्थान्तरमिति सूत्रकारवचनादिति ॥

॥ सादृश्यज्ञानस्य स्मृतिव्यतिरिक्तस्य, अनुमानातिरिक्तस्य च प्रमाणान्तरत्वसमर्थनम् ॥

अत्राभिधीयते—

"सादृश्यावगमायोगाद् गवयावगमात् पुरा ।
तज्ज्ञानं न स्मृतिर्नो वा [5]लिङ्गात् व्याप्तयज्ञतां गतः (?) ॥ ३६ ॥

न तावात् सादृश्यविशिष्टगोपिण्डज्ञानं स्मृतिः ; विशिष्टस्य प्रा[6](ग)ननुभूतत्वात् ॥

॥ सादृश्यस्य गोत्वादिजातिरूपत्वनिरासः ॥

[7]यत्तु गोत्ववदित्युदाहारि, तदसत् ; सादृश्यस्याजातित्वात् । तथाहि—भूयोऽवयवगुणसामान्यं सादृश्यम्, उत सामान्यमात्रम् । न तावदाद्यः ; केतकी-

---

तल्लक्षणवत्त्वात्, गोत्ववदित्यर्थः । काणादसूत्रं विवृणोति—स इति ॥

**तज्ज्ञानमिति** ॥ गवयसादृश्यविशिष्टगोज्ञानं न स्मृतिः । कुतः ? गवयावगमात् पुरा तन्निरूप्यसादृश्यावगमायोगात्, तद्विशिष्टगोरननुभूतत्वात् ॥

अस्तु तर्हि लिङ्गादेव तज्ज्ञानम् । यथाहुः—**भूषण**कारादयः, तत्राह—**नो वेति** ॥ ३६ ॥

सादृश्यजातित्वाभावप्रतिपादनाय विकल्पयति—**तथाहीति** ॥ **भूयोऽवयवगुणसामान्यमिति** । भूयसामवयवानां गुणानां च सामान्यमित्यर्थः ॥

एवं सादृश्यमजातिरिति प्रतिपाद्य[दि]ते[अनेन]सादृश्यमिति प्रतियोगिनि-

---

1. परमार्ष   2. सतु मानादि   3. न नास्ति

4. प्रमाणमित्यस्यानन्तरं "कारणं । तदनंतरं च मदीया गौरनेन सदृशीति गवयसादृश्यविशिष्टगोज्ञानं भवति । तत्र गोसादृश्यविशिष्टगवयज्ञानमुपमितिकरणं गवयविशिष्टगोज्ञानम्" इति ख पुस्तके वर्तते ।

5. लिङ्गव्यात्प्यज्ञतां गतः   6. "न" नास्ति   7. पृ. 280 प. 11

गन्धसदृशः सर्पगन्ध इति निर्गुणनिरवयवगन्धयोरप्यबाधितसादृश्याध्यवसायात् । नापि द्वितीयः; सामान्यादीनामवि[पि] ज्ञेयत्वास्तित्वादिसादृश्यदर्शनात् । अतः सादृश्यमन्यदेव प्रतियोगिनिरूप्यस्वभावमभावादिवत् । गोत्वस्य तु युक्तं प्रथमत एव ग्रहणं प्रतियोग्यनिरूप्यस्वभावम्; व्यक्त्या समानसामग्रीकत्वाच्च [[1]सादृश्यस्य च पुनः प्रथमत एवोपलम्भसामग्र्यभावः; प्रतियोगिगवयग्रहणाभावात् ॥

॥ सादृश्ये जातिलक्षणायोगाद् न तद् जातिः ॥

[2]यत्पुनः—सादृश्यस्य नित्यत्वे सत्यनेकसमवेतत्वेन जातित्वम्—इत्युक्तम्] तदयुक्तम्; समवायस्यैवानभ्युपगमात् समवेतत्वासिद्धेः, बहुषु विशेषेषु व्यभिचाराच्च । न चैतावता गवयेऽपि सादृश्यानुपलम्भप्रसङ्ग इति; प्रतियोगिप्रतीतिसहकृतचक्षुरादिना तदुपपत्तेः ॥

॥ अतिरिक्तपदार्थस्य सादृश्यस्य प्रतियोगिनिरूप्यत्वैकत्वाद्यविरोधः ॥

[3]यदपि गवयादीनां सादृश्याप्रतियोगित्वम्—इत्युक्तम्, तत्केन कस्य सादृश्यम्? अनेनास्य सादृश्यमित्यनुभवविरोधात्, वैधर्म्यस्याप्येवं निष्प्रतियोगिकत्वप्रसङ्गाच्चोपेक्षणीयम् । गवयस्य सादृश्यप्रतियोगित्वे गवयान्तरप्रतियोगिनोऽनुपलम्भे गवयेऽपि सादृश्यानुपलम्भप्रसङ्ग इति चेत्, सत्यम्; तदप्रतीतौ तत्प्रतियोगिकं सादृश्यं

---

रूप्यत्वानुभवाद्, गवयावगममन्तरेण सादृश्यानवगमः सिद्ध इत्याह—**अत इति** ॥ **समानसामग्रीकत्वाच्चेति** ॥ तुल्यज्ञापकज्ञाप्यत्वादित्यर्थः । **प्रथमत इति** ॥ धर्मिमात्रग्रह इत्यर्थः ॥

बहूनां विशेषाणां नित्यत्वे सत्यनेकवृत्तीनामजातित्वात्तत्र व्यभिचार इत्याह—**बहुष्विति** ॥ विपक्षबाधकासिद्धेरप्रयोग[जक]श्चेत्याह—**न चेति** ॥

गवयादीनां प्रतियोगित्वाभावात् प्रतियोगिनिरूप्यत्वं सादृश्यस्यासिद्धमिति यदुक्तं वादीन्द्रवार्तिके, तदनुवदति—**यदपीति** ॥ सादृश्यस्य गवयप्रतियोगिकत्वे बाधकान्तरं शङ्कते—**गवयस्येति** ॥ गवयान्तरप्रतियोगि[क]सादृश्यं न प्रतीयेत, गोप्रतियोगिकं [वा । आद्ये]बाधमङ्गीकरोति—**सत्यमिति** ॥ द्वितीयं दूषयति - **गोप्रतियोगिकमिति** ॥ गवयधर्मिकस्य सादृश्यस्य गौः प्रतियोगी,

---

1. कुण्डलान्तर्गतं नास्ति 2. पृ. 280 प. 17 3. पृ. 280 प. 8

न प्रतीयत एव, गोप्रतियोगिकं तु प्रतीयते ; [1]अविरोधात्। न च—गवयादीनां प्रतियोगित्वे सादृश्यस्य भेदप्रसङ्ग इति—वाच्यम् ; गवां गोत्ववैधर्म्यस्य प्रतियोगि-तुरगादिना त[स]त्त्वेऽप्येकत्वात्, सादृश्यस्यैकत्वे प्रमाणाभावाच्च ॥

॥ सादृश्यविशिष्टगोज्ञानस्य पूर्वं गवयस्याननुभूतत्वान्न स्मृतित्वम् ॥

यदप्यपरमीरितम्—[स]प्रतियोगि[क]त्वेऽपि प्रतियोगिज्ञानं विना निर्विकल्प-कोपपत्तेः, सविकल्पक एव प्रतियोगिज्ञानस्य कारणत्वात्, गोगवयाव[दि]गतखुर-त्व(?)पुच्छत्वा(?)दिमत्त्वस्य वा सादृश्यपदवाच्यत्वात्, तेषां च पूर्वमेवानुभूतत्वेन स्मरणोपपत्तेः, सादृश्यविशिष्टगोज्ञानं स्मृतिरेव—इति, तदपि न भद्रम्। प्रतियोगिज्ञानं विना निर्विकल्पकस्याप्यनुपपत्तेः, सादृश्यनिर्विकल्पकम्, न प्राथमिकप्रतियोगिनिर-पेक्षम्, तत्सापेक्षं वा, सादृश्यप्रत्यक्षत्वात्; सविकल्पकप्रत्यक्षवदिति प्रयोगात्। न खलु सविकल्पक एव प्रतियोगिज्ञानं कारणमिति प्रमाणमस्ति। अवयवगत[ [2]खुर-पुच्छादिमत्त्वस्य सादृश्यपदवाच्यत्वमपि निरवयवगन्धादिसादृश्यप्रदर्शनेनापास्तम्। तस्मात् प्रागनवगतत्वात् सादृश्यविशिष्टगोज्ञानं न स्मृतिः। मदीया गौः एतत्सादृश्यवती,] खुरपुच्छादिमत्त्वात्; एतद्गवयवत् इत्यनुमानादस्तु तत्सिद्धिरिति चेत्, न; साध्यविकलत्वाद् दृष्टान्तस्य। न ह्ययं गवय एतत्सदृशः। अन्यस्यान्येन सादृश्यं वैसादृश्यं वा, न स्वेनैव; प्रसिद्धिविरोधात्॥

---

गोधर्मिकस्य गवय इति स्वीकारे सादृश्यनानात्वप्रसङ्ग इति, अत्राह—**नचेति** ॥ अश्वमहिषादिप्रतियोगिनानात्वेऽपि गोत्वस्य वैधर्म्यस्य यथैकत्वम्, तद्वा[द्व]त्सा-दृश्यस्याप्युपपत्तेरित्याह—**गवामिति** ॥ सादृश्यस्यैकत्वमङ्गीकृत्योक्तम्, न तदपी-त्याह—**सादृश्यस्येति** ॥

तदीयग्रन्थोक्तमेवानुवदति—**यदपीति** ॥ **[स]प्रतियोगि[क]त्वेऽपीति** ॥ गवयादीनामिति शेषः। प्रतियोगिज्ञानस्यानुयोगिज्ञानकारणत्वात् कथं तदन्तरे-णोपपत्तिः ? अत्राह—**सविकल्पक इति** ॥ सादृश्यनिर्विकल्पकम्, प्रतियोगि-ज्ञानजन्यम्, सादृश्यज्ञानत्वात्; तत्सविकल्पकवत्, अत्राह—**गोगवयेति** ॥ सविकल्पकप्रत्यक्षे यः प्रतियोगी, न तन्निरपेक्षमित्युक्ते बाधः, अत उक्तम्—**प्राथ-मिकेति** ॥

---

1. विरोधात् (क)  2. कुण्डलितो भाग क पुस्तके नास्ति

[1]यदपि—मदीया सा गौरनेन सदृशीति स्मृतिरेवेयम्, प्रत्यक्षेण प्रागनुभूतत्वादिति [2]भासर्वज्ञीयम्—मतम्, तदसत्; 'अनेन सदृशी'ति विशिष्टप्रत्ययोऽयम्। न च विशिष्टः प्रागनुभूतः; विशेषणगवयस्य प्रागननुभवात्। एवं च कथमननुभूतगोचरविज्ञानं स्मृतिरिति वदन् विदग्धगोष्ठीषु नापत्रपेत?

॥ मदीयगोसदृशो गवय इति प्रतीतिर्गवयसादृश्यस्मृतिविशिष्टेन्द्रियजन्या, अतो गवयानुभवोऽपेक्षित इति शङ्कातन्निरासौ ॥

स्यादेतत्—मदीयया गवा सदृशोऽयं गवय इति प्रतीतिर्भवति। किमस्याः केवलमिन्द्रियं कारणम्? पिण्डमात्रस्मृतिसहकृतम्? सादृश्यमात्रविशिष्ट[3]पिण्डस्मृतिसहकृतं वा? गवयसादृश्यस्मृतिसहकृतं वा? नाद्य[द्वितीयौ;] [अ]दृष्टगोपिण्डारण्यकेन्द्रियेण, महिषादिपिण्डस्मृतिसहकारिणा वा तत्प्रसङ्गात्। न तृतीयः; यत्किञ्चित्सादृश्यविशिष्टस्मृतिसहकृतेन्द्रियेण तत्प्रसङ्गात्। तुरीये गवयसादृश्यविशिष्टगोपिण्डदर्शनमुपेयम्; अन्यथा विशिष्टस्मृतिर्न स्यात्, अदृष्टे स्मृत्ययोगादिति, मैवम्; किमसन्निहितप्रतियोगिकसादृश्यविशिष्टसन्निहिताप्रतीतिरेव वा, [4]एतत्सादृश्यविशिष्ट-

---

वादीन्द्रादिमतमेवानुमानमनुवदति—**मदीयेति** ॥ गवयसादृश्यविशिष्टगोपिण्डस्य प्रागनुभूतत्वमवश्याभ्युपेयमिति मन्वानः प्रत्यवतिष्ठते—**स्यादेतदिति** ॥ 'गोसदृशोऽयम्' इति गवयावगममात्रेण गवयसादृश्यविशिष्टगोपिण्डस्य कथं प्रागनुभवसिद्धिः? इति। तदुपपादनाय विकल्पयति—**किमिति** ॥ **पिण्डमात्रेति** ॥ अवधीरितगवयसादृश्यपिण्डस्मृतिसहकृतमित्यर्थः। **गवयसादृश्येति** ॥ गवयेन सादृश्यं यस्य गोपिण्डस्य, सः गवयसादृश्यः, तत्स्मृतिसहकृतमित्यर्थः। **अदृष्टेति** ॥ न दृष्टो गोपिण्डो येनारण्यकेन, तदिन्द्रियेण, तत्प्रसङ्गात् = गोसदृशगवयप्रतीतिप्रसङ्गादिति प्रथमकल्पस्य निरासहेतुः। महिषादीति—द्वितीयकल्पस्येति विवेकः ॥ गवयसादृश्यविशिष्टगोस्मृत्यनुपपत्त्या सिद्धे[द्धं] तस्य प्रागनुभूतत्वमित्याह—**तुरीय इति** ॥ वस्तुतः सादृश्यवतः स्वरूपेण स्मृतिसहकृतेन्द्रियम्, असन्निकृष्टेन सन्निकृष्टस्य सादृश्यप्रतीतौ कारणमित्याशयेन परिहरति— **मैवमिति** ॥ कारणविकल्पानुपपत्त्या प्रतीतिरेव यथार्था नास्तीति विवक्षितम्, उत कार्यविशेषेण कारणविशेषो विवक्षित इति विकल्पयति—**किमसन्निहितेति** ॥ **तत्प्रतीतिरिति** ॥ असन्नि-

---

1. पु. 254 प. 2
2. इ।
3. मिश्र (क)
4. कुण्डलित भागः क पुस्तके नास्ति
5. विशिष्टतत्स्मृति

[5]स्मृतिसहकृतेन्द्रियेण [वा]तत्प्रतीतिः ? नाद्यः; अनुभवकलहावतारात्। अनुभवकलहे वा गवय एव न प्रतीयत इति ब्रुवति, नेत्रनिमीलात् किमन्यदुत्तरम्? द्वितीये कथमितरेतराश्रय[1]णान्न बिभेषि ? तथाहि—गवयसादृश्यविशिष्टगोपिण्डस्मृतौ तत्सहकृतेन्द्रियेण गोसादृश्यविशिष्टगवयग्रहणम्, ततश्च गोसादृश्यविशिष्टगवयस्मृतिसहकृतेन्द्रियेण तत्सादृश्यविशिष्टगोग्रहणमिति। तस्मात् यथा वस्तुस्थित्या भिन्नस्य स्वरूपप्रतीत्या ततो भेदग्रहणम्, तथा वस्तुतः सादृश्यवतः स्वरूपस्मृताविन्द्रियेण तत्सादृश्यं दृश्यत इति स्वीकारे किमवद्यं पश्यसि? गवयादर्शने तत्सादृश्यदर्शनमनुभवविरुद्धं च ॥

॥ सादृश्यमात्रस्य प्रतियोगिनिरपेक्षस्य निर्विकल्पज्ञानशङ्का, तदसम्भवपरिहारश्च ॥

अथ दर्शनस्य निर्विकल्पकत्वान्न विरोधः, निर्विकल्पकेन हि प्रत्यक्षेण गवयदर्शनात् पूर्वं तत्सादृश्यं गोपिण्डस्थमुपलब्धम्, तेन तदोपलब्ध्यमिमानो न भवति, प्रथमगोपिण्डोपलम्भकाले गोत्वोपलम्भवदिति—चेत्, न; प्रतियोगिनिरपेक्षसादृश्यनिर्विकल्पकस्य प्राक् प्रति[षे]धात् ॥

---

हितसादृश्यविशिष्टसन्निहितप्रतीतिः स्यादित्यर्थः। प्रथमकल्पदूषणमनङ्गीकारपरास्तम्; द्वितीयस्यैवेष्टत्वात्, अत्राह—**द्वितीय इति** ॥ **तत्सादृश्यविशिष्टगोग्रहणमिति** ॥ धर्मिसादृश्यविशिष्टप्रतियोगिस्मरणस्य प्रतियोगिसादृश्यविशिष्टधर्मिग्रहणहेतुभावाभ्युपगमादिति भावः। स्वाभिप्रायमिदानीं तद्दर्शनसिद्धनिदर्शनेनाविष्करोति—**तस्मादिति** ॥ न[ग]वयसादृश्यविशिष्टगोपिण्डस्य प्रागनुभूतत्वं युक्तिविरुद्धम्। संप्रत्यनुभवविरुद्धं चेत्याह—**गवयेति** ॥

सविकल्पकसादृश्यप्रत्ययस्यैव प्रतियोगिप्रतीतिसापेक्ष(त)या निर्विकल्पकतत्प्रतीतौ नानुभवविरोध इति शङ्कते—**अथेति** ॥ मतभेदान्न पुनरुक्तिरिति द्रष्टव्यम् ॥

प्रतियोगिनिरपेक्षसादृश्यनिर्विकल्पकदर्शनमभ्युपेत्याह—**किञ्चेति** ॥ निर्विकल्पकेन गवयविशिष्टतया सादृश्यस्या[न]नुभवात् = विशेषणस्य गवयस्यासन्निहितस्य तदानीमग्रहादित्यर्थः। सादृश्यमात्रस्य निर्विकल्पकगृहीतस्य स्फुरणात् स्मृतित्वम्,

---

1. इतरेतराश्रयात्

किञ्चानेन सदृशीति गवयविशेषणत्वप्रतीतेः कथं स्मृतित्वम्? एवं हि सविकल्पकप्रत्यक्षस्य[1]प्रसङ्गः, तुल्ययोगक्षेमत्वात् ॥

॥ उपमानस्यार्थापत्त्यामन्तर्भावशङ्कातन्निरासौ ॥

यदन्यदुदितम्—नोपमानं मानान्तरम्; अर्थापत्तितस्तत्सिद्धेः। यद्यनेन सदृशी सा न स्यात्, ततस्तया सदृशोऽयं नोपलभ्येत; सादृश्यस्योभयनिष्ठत्वात्। उपलभ्यते चायं तया सदृशः—इति, तद[2]सत्; असन्निहित[साद[3]श्य]धी[:] स्मृतिरिति प्रतिज्ञाविरोधात्। किञ्च किं सन्निहितसादृश्यस्यासन्निहितसादृश्यं व्यापकं प्रमितम्? नो वा? आद्ये न तावत् प्रत्यक्षेण; इन्द्रियासन्निकृष्टत्वत्। न लिङ्गेन; व्याप्त्यदर्शनात्। नागमेन; तदभावेऽपि दर्शनात्। नार्थापत्तिः[तः;] तदन्तरेणानुपपद्यमानादर्शनात्। द्वितीये नैतत्साद्दश्यस्यानुपपत्तिः। न ह्यव्यापकवस्त्वन्तरमन्तरेण वस्त्वन्तरस्यानुपपत्तिरिति प्रसक्ते[क्ति]ः। तस्मान्नार्थापत्तितोऽपि तत्सिद्धिः॥

॥ तस्मादयं दीर्घ इति प्रतीतिवलाद् अस्मादयं ह्रस्व इति प्रतीतिवदेकसादृश्यज्ञानादन्यसादृश्यज्ञानं नार्थापत्तिः; वैषम्यात् ॥

अथ तस्मादयं दीर्घ इति प्रतीतावस्मात्स ह्रस्व इति प्रतीतिर्यथाऽर्थापत्तिफलम्,

---

अत्राह—**एवं हीति** ॥ **तुल्येति** ॥ निर्विकल्पकविषयस्य सविकल्पके प्रतीतेरित्यर्थः ॥

भूषण ग्रन्थस्थचोद्यान्तरमनुवदति—**यदन्यदिति** ॥ पूर्वापरपराहत्या परिहरति—**तदसदिति** ॥ असन्निहितसादृश्यधियः स्मृतित्वं न सिसाधयिषितम्, किंरू[तू]पमानस्य मानान्तरत्वनिराकरणम्, अतो न विरोध इति, अत आह—**किञ्चेति** ॥ सन्निहितसादृश्यस्य = असन्निहितप्रतियोगिकसन्निहितधर्मिकसादृश्यस्य, असन्निहितसादृश्यम् = सन्निहितप्रतियोगिकमसन्निहितधर्मिकं सादृश्यमित्यर्थः। **व्याप्त्यदर्शनादिति** ॥ असन्निहितसादृश्यस्याप्रत्यक्षत्वेन तन्निष्ठव्याप्तिग्रहायोगादित्यर्थः। **तदन्तरेणेति** ॥ असन्निहितसादृश्यमन्तरेण। त्वत्पक्षेऽर्थापत्तेरविनाभावमूलकत्वाद् अविनाभावग्रहस्य निरस्तत्वात्, अनुपपद्यमानव्याप्यदर्शनाभावादित्यर्थः। नो वेत्युक्तविकल्पेऽर्थापत्तेरनुदयमाह—**द्वितीय इति** ॥

सन्निहितेनासन्निहितसादृश्यप्रतीतेरर्थापत्तिप[फ]लत्वं दृष्टान्तबलेन शङ्कते—**अथेति** ॥ चेदित्यर्थेत्युक्तच[प]र्थेनं चोद्यानुवादार्थम्। सादृश्यस्य सामान्यरूपस्य

---

1. स्या सं 2. तदसन्निहित
3. कुण्डलान्तर्गतं नास्ति

अस्मात्तस्य ह्रस्वत्वमन्तरेण तस्मादस्य दीर्घ[1]त्वानुपपत्तेः, एवमस्य तत्सादृश्यानुपपत्त्या एतत्सादृश्यं तस्य गम्यत इति चेत्, न; दृष्टान्तासिद्धेः, प्रतियोगिनिरपेक्षत्वात् तद्गतपरिमाणं पूर्वमुपलब्धमिदानीमेतदुपलम्भानन्तरं पूर्वोपलम्भसंस्कारादेतदुपलम्भ-संस्कारसहकृतात् स्मर्यते—यथा वर्णोपलम्भसंस्कारैः सम्भूयैकस्मृतिजनने वर्णसङ्घा-तवादप्रतीतिरिति स्वीकारात् ॥

॥ वैधर्म्यज्ञानस्य प्रमाणान्तरत्वनिरासः; तस्यानुपलब्धावन्तर्भावात् ॥

वैधर्म्यज्ञानं तर्हि प्रमाणान्तरं स्यादिति चेत्, न; गवयनिष्ठधर्माभावो महिषे वैधर्म्यमनुपलब्ध्या गम्यम्; अभावत्वात्, तन्मात्रनिष्ठं महिषत्वादिकमपि पूर्वं गृहीतमेतद्ग्रहणानन्तरं स्मर्यते, तस्य च वैधर्म्यरूपत्वं गवयनिष्ठत्वाभाव[2][रूप]मनु-पलब्ध्यैवानुभूयते, इति क्लृप्तकरणादुपपत्तौ मानान्तरकल्पनागौरवायोगात्।

॥ सादृश्यज्ञानस्यानुमानेऽन्तर्भावस्योपसंहारः ॥

सा गौः, अनेन सदृशी, स्वप्रतियोगिकसादृश्येनास्यावच्छेदकत्वात्, स्वसादृ-

---

गोगवयगतस्यैकत्वात्तदन्तरेण तदनुपपत्त्या तत्प्रतीतावात्माश्रयस्तवेति दूषयति—**नेति** ॥ विषमश्च दृष्टान्त इत्याह—**दृष्टान्तेति** ॥ वैधर्म्यं स्पष्टयति—**प्रति-योगीति** ॥ पूर्वोपलम्भसंस्कारात्तन्मात्रस्मरणं स्यात्, न त्वस्मात्स इति प्रति-योगिविशिष्टस्मरणम्, अत उक्तम्—**एतदुपलम्भेति** ॥ भिन्नार्थगोचरसंस्काराणां निरपेक्षस्मृतिकारणानां संभूय विशिष्टस्मृतिजनकत्वमयुक्तम्, अत्राह—**यत्र[थे]ति** ॥ तद्गतपरिमाणमिदानीं स्मर्यत इति स्वीकारादित्यन्वयः ॥

साधर्म्यापरपर्यायसादृश्यमितेर्मानान्तरत्वे वैसादृश्यवैधर्म्यमितेरपि माना-न्तरत्वापत्तेः, तेषां प्रामाणी[ण्यं] न स्यादिति शङ्कते—**वैधर्म्येति** ॥ द्वेधा वैधर्म्यम्—तद्धर्म्यन्तरनिष्ठधर्माभावः, तन्मात्रनिष्ठधर्मश्चेति। प्रथमं प्रत्याह—**नेति** ॥ द्वितीये वैधर्म्यविशिष्टस्यापि मानान्तरगम्यतेत्याह—**तन्मात्रेति** ॥ वस्तुवृत्तापेक्षमात्र-ग्रहणम्। **स्मर्यत इति** ॥ विरोधस्यापि संस्कारोद्बोधकत्वादित्यर्थः। महिषत्वस्यापि सामान्यस्य तद्रूपेण पूर्वप्रतीतस्यतादृूप्येण स्मृतिः स्यात्, न तु गवयादिभ्यो वैधर्म्य-रूपेण; गवयादिप्रतीत्यभावेन पूर्वं वैधर्म्यरूपेणाग्रहणात्, अत्राह—**तस्य चेति** ॥

अथापि नोपमानस्य मानान्तरत्वम्; लिङ्गान्तर्गतत्वोपपत्तेरिति शङ्कते—**सेति** ॥ अवच्छेदकत्वादित्युक्ते दण्डादौ व्यभिचारः, अत उक्तम्—**सादृश्येनेति** ॥

---

1. दीर्घत्वानु 2. भावरूपमनु

श्येन[ यत् ]स्यावच्छेदकम् ; तत्तेन सदृशं दृष्टम्, यथा आत्रन्तरमित्यनुमानात् तत्सिद्धिरिति चेत्, न, अप्रसिद्धविशेषणत्वात्, दृष्टान्ते साध्यसाधनोभयवैकल्याच्च। न हि दृष्टन्तस्योभयवैकल्ये सामान्यतोदृष्टोऽपि साधीयान् ॥

॥ प्रतियोग्यन्तरग्रहस्याश्रयसन्निकर्षमात्रेणासंनिकृष्टेऽपि
सादृश्यस्मृतिरनुपपन्नेति शङ्का, तत्परिहारश्च ॥

**कन्द[1]ली कारस्तु**—मदीया गौ[2]रनेन सदृशीति ज्ञानं स्मृतिरेवेति प्रतिज्ञायोक्तवान्—सादृश्यं हि सामान्यवत् प्रत्येकव्यक्तिसमाप्तम्, न संयोगवदुभयत्र व्यासक्तं वर्तते; गोपिण्डस्यादर्शनेऽपि वने गवयव्यक्तौ गोसदृशोऽयमिति प्रतीत्युत्पादात्। यथोक्तम्—

"सामान्यवच्च सादृश्यमेकैकत्र समाप्यते।
प्रतियोगिन्यदृष्टेऽपि यस्मात्तदुपलभ्यते ॥"

इति। प्रत्येकं परिसमाप्तत्वे च सादृश्यस्य यद्यपि ग्रहणाभावाद् गवयसदृशोऽयमिति पूर्वं प्रतीतिर्नासीत्; तथापि स्वाश्रयसन्निकर्षमात्रभाविनी सादृश्यप्रतीतिरुढि[चि]तैव; यथा—प्रतियोग्यन्तरग्रहे कस्मादिदं दीर्घम्' इदं ह्रस्वमिति प्रत्ययाभावेऽपि स्वाश्रयसन्निकर्षमात्रेण परिमाणस्य स्वरूपतो ग्रहणम। कथमन्यथा देशान्तरं गतं प्रतियोगिनं गृहीत्वाऽस्माद्दीर्घं ह्रस्वमिति वाऽध्यवस्यति? यदि गवि पुरा सादृश्यमिन्द्रिया-

---

महिषान्तरस्य सादृश्येनावच्छेदकमहिषे व्यभिचारं वारयति—**अस्येति** ॥ सन्निहितगवयेनासन्निहितगोसादृश्यस्याप्रसिद्धत्वादप्रसिद्धविशेषणं पक्षाभास इत्याह—**नेति** ॥ **उभयवैकल्याच्चेति** ॥ स्वसादृश्येनेति स्वपदेन गोपरामर्शात्। सामान्यतो व्याप्तेर्विवक्षितत्वान्न विशेषरूपानुगमापेक्षा, अत्राह—**न हीति** ॥

प्रतिव्यक्ति[व्यक्ति ?] समाप्यवृत्तित्वेऽपि सादृश्यस्य प्रतियोगिघटितत्वेन प्राग-[न ?]वगमादर्शनेन सदृशी[ नै ?]ति धीर्न स्मृतिः, अत्राह—**प्रत्येकं परिसमाप्तत्वे चेति** ॥ इन्द्रियसन्निकृष्टे गोपिण्डे समवायमात्रेण सादृश्यग्रहणे दृष्टान्तमाह—**यथेति** ॥ परिमाणस्य निष्प्रतियोगित्वादाश्रयसन्निकृष्टमात्रेण ग्रहणं स्यात्, न तु सादृश्य[स्य ;]प्रतियोगिनिरूप्यत्वात्, अत्राह—**यदीति** ॥ गवयसन्दर्शन[स]-

---

1. कन्दलकार 2. गौ

पातमात्रेण न गृहीतम्, सम्प्रति गवयेन गृहीतम्, [तदा]गवयदर्शनादेव गव्येव च स्मरणमित्युभयनियमो न स्यात्; अविशेषात्—इति, तदयुक्तम्; सादृश्यप्रतियोगिप्रतीतिमात्रमन्तरेण प्रतीत्यभावनियमात्। गोपिण्डस्यादर्शनेऽपि गोसदृशोऽयमिति प्रतीयत इति स्ववचनविरोधाच्च ॥

॥ परिमाणसादृश्ययोर्विशेषः ॥

परिमाणं पुनराश्रयमात्रग्रहणे गृह्यत इत्युक्तमेवाधस्तात्। समीरितञ्च **तिमिरारिणा**—किञ्चिद्वस्त्वाश्रयमात्रग्रहणापेक्षम्, किञ्चित् स्वाश्रयप्रतियोग्युभयग्रहणापेक्षम्। परिमाणं ह्याश्रयमात्रग्रहणापेक्षम्; प्रतियोग्यग्रहणेऽपि पूर्व[पूर्वं] परिमाणव्यवहारदर्शनात्। सादृश्यग्रहणं तूभयग्रहणापेक्षमेव; केवलाश्रयमात्रग्रहणे पूर्वं सादृश्यव्यवहारादर्शनादिति। तस्मात्; पूर्वमगृहीतमेव सादृश्यम्; निर्विकल्पकेन[1] गृहीतत्वेनाप्रत्यभिज्ञानात्। स्मृतिनियमश्च वस्तुतः सादृश्यप्रतियोगित्वादुपपन्नः। तदेवं सन्निकृष्टेनासन्निकृष्टस्य सादृश्यमित्युपमानं मानान्तरमिति स्थितम् ॥

---

मुद्बुद्धसंस्कारप्रसूतगोस्मरणात् प्रागपि गवये च[न]सादृश्यं न गृहीतं प्रतियोगिनिरूप्यत्वादेव यदि, तर्हि मदीयया गवा सदृशोऽयं गवय इति प्रतीतिसिद्ध्यर्थं गवयदर्शनादेव गव्येव चेति नियमद्वयं त्वयाऽभ्युपेयम्, तन्न स्यात्; सदृशदर्शनस्य सदृशान्तरे स्मृतिजनकत्वा[योगा]दित्यर्थः। गवयानवगमे तत्प्रतियोगिकसादृश्यं गवि पुराऽनवगतमिदानीं स्मर्तुमयोग्यमिति परिहरति—**तदिति** ॥ **प्रतीतिमात्रेति** प्रत्यक्षादितत्प्रतीतिविशेषनिरासः। तेन गोरप्रत्यक्षत्वेऽपि तत्स्मृतिमतो वने गवये तत्सादृश्यप्रतीतिरित्यर्थः। गोपिण्डस्यादर्शनेऽपि गोसदृशोऽयमिति प्रतीत्युत्पादादिति यदुक्तम्, तद् दूषयति—**गोपिण्डस्येति** ॥

अदर्शनमिति प्रतीत्यभाव उच्यते, प्रत्यक्षत्वाभावो वा। आद्ये स्ववचनविरोधः। द्वितीये सादृश्यस्य प्रतियोगिनिरूप्यत्वमविरुद्धमित्यर्थः। निर्विकल्पकेन प्रतियोगिप्रतीतिनिरपेक्षेण पूर्वं सादृश्यं गृहीतमिदानीं स्मर्यतामित्याह—**निर्विकल्पकेनेति** ॥ उभयनियमो न स्यादिति यदुक्तम्, तत्राह—**स्मृतीति** ॥ यथा वस्तुतो भिन्नस्य स्वरूपेण ग्रहणं भिन्नतया धर्मिग्रहणे प्रयोजकम्, अपरथेतरेतराश्रयात्, एवमत्रापीत्यर्थः ॥

---

1. निर्विकल्पकत्वे गृहीत

॥ उपमानफलं सङ्गतिग्रहमात्रमिति शङ्का ॥

ये त्वाहुः—अनवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानम्; यथा गौस्तथा गवय इति श्रुतातिदेशवाक्यस्य गोसदृशपिण्डमनुभवतः स्मरतश्च वाक्यार्थम्, असौ गवयशब्दवाच्य इति संज्ञासंज्ञिसम्बन्धपरिच्छित्तिर्भवति, सोपमानफलम्—इति, तदाह—

"सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह ।
प्रत्यक्षा[1]देरसाध्यत्वादुपमानफलं विदुः ॥"

इति । तदेतत्[तदपि] स्वसाहसप्रकटनमात्रम्; अनुमानादेव तत्सिद्धेः । यो यत्रासति वृत्त्यन्तरे प्रयुज्यते, स तस्य वाचकः, यथा गोशब्दो गोजातीयस्य । प्रयुज्यते चायमसति वृत्त्यन्तरे प्रतिभासमानजातीये इति ॥

---

एवं स्वाभिमतमुपमानलक्षणमुपपाद्य तद्दृढीकरणाय लक्षणान्तरं दूषयितुमुपन्यस्यति—**ये त्विति** ॥ अनवगता सङ्गतिर्यस्याः संज्ञायाः सा, अनवगतसङ्गतिसंज्ञा, तथा समभिव्याहृतस्य=सहपठितस्य वाक्यस्य योऽर्थः तस्यानुसन्धानमिति लक्षणम् । **संज्ञिनीति** ॥ संज्ञासंज्ञिसम्बन्धप्रमा फलमिति दर्शयति । अनुसन्धानमुपमानमित्युक्ते सोऽयं घट इत्याद्यनुसन्धानेऽतिव्याप्तिः, अत उक्तम्—**वाक्यार्थस्येति** ॥ (तथोक्तम्?) महति कानने शतं हस्तिनस्तिष्ठन्तीति वाक्यार्थानुसन्धानेऽतिव्याप्तिं परिहरति—**अनवगतेति** ॥ गवयशब्दः अत्रानवगतसङ्गतिः, तेन समभिव्याहृताप्तवाक्यार्थानुसन्धानमिति विशदीकुर्वन्नाह—**यथा गौरिति** ॥ उदय ने नैतदुदितमित्याह—**तदाहेति** ॥

संज्ञाया अनवगतसङ्गतित्वं किं सर्वैः? उत येन केनचित्? उतोपमातृमात्रात्? नाद्यः; अतिदेशकेन विदितत्वात् । न द्वितीयः; महति कानन इत्यादिवाक्यार्थानुसन्धानेऽतिव्याप्तेः । न चरमः; उपमानसिद्धावुपमातृसिद्धिः, तत्सिद्धौ तेनान(?)वगतेत्यादिलक्षणसिद्ध्योपमानसिद्धिरिति परस्पराश्रयादिति दूषयति—**तदपीति** ॥ प्रत्यक्षादेरसाध्यत्वादिति हेतुश्चासिद्ध इत्याह—**अनुमानादेवेति** ॥ लीलावतीकारोक्तमनुमानं दर्शयति—**यो यत्रेति** ॥ गवयशब्दः, प्रतिभासमानजातीयवाचकः, वृत्त्यन्तरमन्तरेण प्रतिभासमानजातीये प्रयुज्यमानत्वादिति प्रतिज्ञादिकं द्रष्टव्यम् ।

---

1. प्रत्यक्षाभेदसाध्यत्वात्

॥ सङ्गतिग्रहस्यानुमानफलत्वान्नोपमानफलत्वम्, किन्त्वन्यसादृश्यज्ञानमेवोपमानफलमित्युपसंहारो ली ला व ती कारनिरासपूर्वकम् ॥

न चासि[1]द्धिः ; मुख्यानुपपत्तिं विनोपचारस्यासम्भवात्, सादृश्यवति प्रयोगस्य कल्पनागौरवापत्तिहेतुत्वात्, व्यक्तिषु प्रयोगस्यानन्त्यदूषितत्वात्, नूनमयमेतज्जातीयाभिधानाय प्रयुज्यत इति निश्चयोपपत्तेः। नचेदेवम्, उपमानेऽपि वृत्त्यन्तरनिमित्तान्तरविषयप्रयोगसम्भावनायामपेक्षितासिद्धिप्रसङ्गादिति ॥

**॥ इति न्यायचन्द्रिकायामनुमानाद्यतिरिक्तोपमानसमर्थनमष्टमम् ॥**

---

उपचारप्रयोगसम्भवात्। **असति वृत्यन्तर** इति विशेषणासिद्धो हेतुः, अत्राह—**न चेति**॥ कुतः? अत्राह—**मुख्येति**॥ गवयशब्दस्य मुख्यार्थप्रतीतौ तत्र मानान्तरविरोधे सत्युपचारः स्यादित्यर्थः। तथापि सन्दिग्धासिद्धिः; एतज्जातीयवाचकत्वेन प्रयुक्त इति निश्चयानुपपत्तेः, अत्राह—**सादृश्यवतीति**॥ गोसादृश्यविशिष्टे प्रयोगस्य गवयशब्दसम्बन्धस्य कल्पनायां प्रतियोगिनो गोपदार्थस्य सादृश्यधर्मस्य धर्मिणो गवयस्य चेति तृती[त्रित]यस्यापि गवयशब्दार्थत्वकल्पनागौरवप्रसङ्गादित्यर्थः॥ गवयशब्दस्य मुख्यार्थप्रतीतौ तत्सम्बद्धार्थान्तरे वृत्त्यन्तरसिद्धिः, ततश्चासति वृत्यन्तर इति हेतुसिद्ध्या मुख्यार्थसिद्धिरिति परस्पराश्रयस्तवापीत्याशङ्क्याह—**न चेदिति**॥ प्र[वृ]त्त्यन्तरप्रयोगः = उपचारप्रयोगः; निमित्तान्तरविषयप्रयोगः, गोसादृश्यविशिष्टविषयप्रयोगो व्यक्तिविषयश्च, तत्सम्भावनायां सत्यामपेक्षितासिद्धिः, गवयशब्दः संज्ञा, प्रतिभासमानजातीयः संज्ञीति संज्ञासंज्ञिसम्बन्धप्रमोपमानफलं न सिद्ध्येदित्यर्थः॥

**॥ इति न्यायचन्द्रिकाव्याख्यायामनुमानाद्यतिरिक्तोपमानसमर्थनमष्टमम् ॥**

---

1. न चासिद्धिः मुख्य

## ॥ अथ न्यायचन्द्रिकायामर्थापत्तिप्रमाणान्तरत्वसमर्थनं नवमम् ॥

"परलक्ष्मप्रतिक्षेपादुपमानं न्यरूरुपम् ।
अथावसरसम्प्राप्तामर्थापत्तिं प्रचक्ष्महे ॥ ३८ ॥

॥ अर्थापत्तिलक्षणम् ॥

॥ षोढा तद्विभागः, तस्य सोदाहरणं प्रपञ्चश्च ॥

प्रमितार्थान्यथानुपपत्त्या यदर्थान्तरकल्पनम्; साऽर्थापत्तिः । सा षोढा— प्रत्यक्षपूर्विका, अनुमानपूर्विका, श्रुतपूर्विका, उपमानपूर्विका, अर्थापत्तिपूर्विका, अभावपूर्विका चेति । तदुक्तम्—

"प्रमाणषट्कविज्ञातो यत्रार्थोऽनन्यथा भवन् ।
अदृष्टं कल्पयेदन्यत् साऽऽर्थापत्तिरुदाहृता ॥"

इति । कृशानुकायसम्पर्कात् काये दाहसंवेदनात् कृशानोर्दाहशक्तिरस्तीति विज्ञानम्— प्रत्यक्षपूर्विका । आहुश्च—

"तत्र प्रत्यक्षतो ज्ञाताद्दाहात् दहनशक्तता"

इति । देशान्तरप्राप्तिलिङ्गकेनानुमानेनाऽऽदित्ये गतिमनुमाय तदन्यथानुपपत्त्या गमने शक्तिरस्यास्तीति यद् विज्ञानम्, साऽनुमानपूर्विका ।
तदुक्तम्—

"वह्नेरनुमितात्सूर्ये यानात् तच्छक्तियोगिता"

इति । 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति श्रुत्वा रात्रौ भुङ्क्त इति वाक्यशेष-कल्पना श्रुतार्थापत्तिः । यथाहु:—

"पीनो दिवा न भुङ्क्ते चेत्येवमादिवचःश्रुतौ ।
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ॥"

---

## ॥ अथ न्यायचन्द्रिकाव्याख्यायामर्थापत्तिप्रमाणान्तरत्वसमर्थनं नवमम् ॥

अर्थापत्तिलक्षणमाह—**प्रमितेति** ॥ अनुमानव्यवच्छेदायोक्तम्— **अन्यथानुपपत्त्येति** ॥ भ्रान्तिप्रतीतानुपपत्त्याऽर्थान्तरकल्पनमर्थापत्त्याभासं व्यावर्तयति— **प्रमितार्थेति** ॥ अर्थापत्तेः षड्विधत्वे भट्टवचनं पठति—**तदुक्तमिति** ॥ **अनन्यथाभवन्निति** ॥ उपपादकमन्तरेणानुपपद्यमान इत्यर्थः । क्रमेणोदाहरति— **कृशानुकायेति** ॥ **गतिमनुमायेति** ॥ आदित्यस्य देशान्तरप्राप्तिः, गतिपूर्विका,

इति। गवयदर्शनादेतादृशो गौरित्युपमानेन गवि सादृश्यमुपमाय तदन्यथानुपपत्त्योपमानज्ञानं प्रति ग्राह्यशक्तिरस्तीति यद्धि[1]ज्ञानम्, सोपमानपूर्विका। वदन्ति च—

"गवयोपमिता या गौस्तज्ज्ञानग्राह्यशक्तता।"

इति। गोशब्दोच्चारणे सत्य[न]न्यथासिद्धार्थप्रत्ययानुपपत्त्या वाचिका शक्तिस्तावत् प्रतीयते, पुनरर्थापत्तिप्रमितवाचकशक्त्यन्यथानुपपत्त्या शब्दस्य स्थायित्वं प्रतीयते, साऽर्थापत्तिपूर्विका। आहुश्च—

"अभिधानप्रसिध्द्व[द्धय]र्थमर्थापत्त्याऽवबोधितात्।
शब्दे[2] वाचकसामर्थ्यात् तन्नित्यत्वप्रमेयता॥"

इति। योग्यानुपलब्धिप्रमितचैत्राभावविशिष्टगेहाद् बहिश्चैत्रभान[3]मभावपूर्विका[म्]। उक्तं च—

"प्रमाणाभावविज्ञातचैत्राभावविशेषितात्।
गेहाच्चैत्रबहिर्भावसिद्धिर्वास्त्वि[यात्विह दर्शिता॥
तामभावोत्थितामन्यामर्थापत्ति]मु[4]दाहरेत्॥" इति।

॥ अर्थापत्तेर्न मानान्तरत्वम्, किं त्वनुमान एवान्तर्भाव इति भूषणकाराक्षेपः, तत्र हेतुदुर्वचत्वदुष्टत्वादिना परिहारश्च॥

ननु नार्थापत्तिर्मानान्तरम्; अविनाभाव]बलेनार्थप्रतिपादकत्वादिति। क एवमाह? ननु भो भूषणो भणति—देवदत्तः, बहिस्तिष्ठति, जीवनसम्बन्धित्वे

---

देशान्तरप्राप्तित्वात्; चैत्रग्रामप्राप्तिवदित्यर्थः। उत्क्षेपणादीनामूर्ध्वदेशादिगमनरूपत्वान्न व्यभिचारः। **ग्राह्यशक्तिरिति**॥ सादृश्यविशिष्टगोपिण्डस्येत्यर्थः। **वाचिका शक्तिः**। गोशब्दस्येति शेषः। **प्रमाणाभावेति**॥ योग्यानुपलब्धिरित्यर्थः॥

अर्थापत्तिः, अनुमानान्न भिद्यते, सम्यगविनाभावेनानुभवसाधनत्वात्, धूमादिवदिति चोदयति—**नन्विति**॥ चैत्राभावविशिष्टगेहाद्बहिः तत्सत्त्वावगमप्रयोगादसिद्धो हेतुरिति शङ्कते—**क इति**॥ मृतपुरुषेण व्यभिचारो मा भूदित्युक्तम्—**जीवनेति**॥ गृह इति सप्तम्या यदधिकरणत्वमुच्यते, तदनुपलभ्यमानत्वादित्यत्र विशेषणतयोक्तानुपलब्धिं प्रति किं वा विशेष्यतयोक्तम्, देवदत्तं प्रति, किं वा प्रत्यक्षाभिमतं यत्तत्रासत्त्वम्, तत्प्रतीति विकल्पार्थः। उपलब्धिप्राक्प्रध्वंसाभावयोरात्म-

---

1. ज्ञानं 2. शब्दो 3. भावमभाव (क)
4. कुण्डलान्तर्गतस्य स्थाने एवं वर्तते "मानानान्तरमपि ज्ञानाभावे"

सति गृहेऽनुपलभ्यमानत्वात् ; तदन्यपरिदृष्टपुरुषवदिति, असारमेतत् ; सप्तम्या गृहस्याधिकरणत्वमनुपलब्धिं प्रति विवक्षितम् , उत देवदत्तं प्रति, किंस्वित् तदसत्त्वं प्रति। आद्ये स्पष्टाऽसिद्धिः ; अनुपलब्धेरात्मधर्मत्वेन गृहाधिकरणत्वाभावात्। उपलब्ध्यत्यन्ताभावो गृहेऽप्यस्तीति चेत्, हन्त ! जीवनसम्बन्धित्वे सति गृहनिष्ठात्यन्ताभावप्रतियोग्युपलब्धिगोचरत्वादिति हेतुः पर्यवस्येत्। एवं च गृहावस्थितचैत्रेण व्यभिचारः। द्वितीयेऽप्यसिद्धिः; तदा देवदत्तस्य तन्निष्ठत्वाभावात्। तृतीये पक्षधर्मत्वासिद्धिः ; गृहावच्छिन्नतदसत्त्वस्य देवदत्तवृत्तित्वानुपपत्तेः। एतेन—बहिर्देशे चैत्रस्तिष्ठति, गृहाभावे सति विद्यमानत्वात् ; य एवम् , स तथा ; यथाऽहमिति न्यायमुक्तावल्यामु[1]दितमनुमानं निरस्तम् ॥

तथाप्येकत्र स्थितस्य पुंसोऽन्यत्राभावप्रतिपादिकार्थापत्तिरनुमानमेव। तथा हि—विवादविषयाः सर्वे देशाः, देवदत्तशून्या एव, देवदत्तावष्टब्धोदितदेशव्यतिरिक्तदेशत्वात् ; सन्निहितदेशवदिति चेत् , न; हेतोरर्थे[र्थे] व्यावृत्तिः प्रमिता ; न वा। आद्ये येन प्रमीयते, तेनैव तेषां देवदत्तशून्यत्वसिद्धेरनुमान] वैयर्थ्यात्, सिद्धसाधनात्। द्वितीये हेत्वसिद्धेः। देवदत्तावष्टब्धाः, ते देशाः, सन्निहितदेशव्यतिरिक्तैतल्लोक]देशत्वात् , सम्मतदेवदत्तावष्टब्धदेशवदिति , सत्प्रतिपक्षसाधनत्वाच्च। न चापि संवादिवचनविरोधः; देशकालपुरुषान्तरभाविविसंवादस्यायोग्यस्य तदभावनिश्चयासम्भवादपि संवादित्वासिद्धेः। अयं देवदत्तः, रात्रिभोजी, दिवाभोजनरसायनादिसिद्धिरहितत्वे सति पीनत्वात् ; उभयप्रतिपन्ननक्तभोजिवदित्यनुमानाद् न श्रुतार्थापत्तिर्भिद्यत

---

गतत्वेऽपि तदत्यन्ताभावस्य गृहेऽपि भावान्नासिद्धिरिति शङ्कते—**उपलब्धीति** ॥ अत्र दूषणं दर्शयितुं पर्यवसितमर्थमाह—**हन्तेति** ॥ **एतेनेति** ॥ गृहावच्छिन्नतदसत्त्वविशेषितहेतोरपक्षधर्मत्वेनेत्यर्थः। जीवतो यदस्तित्वं गृहावच्छिन्नमनुपपत्त्या यदन्यत्रासत्त्वं कल्पयति, तल्लिङ्गान्तर्गतमिति तद्दृष्टान्तेन बहिःसत्त्वकल्पकं लिङ्गमेव स्यादिति शङ्कते—**तथापीति** ॥ देवदत्तावष्टब्धदेशव्यतिरिक्तदेशत्वस्य हेतोः देवदत्तानधिष्ठितसर्वदेशेषु वृत्तिः प्रमिता, नो वेति विकल्पयति—**नेति** ॥ देवदत्ताधिष्ठितदेशस्य समीपदेशे चन्द्रलोकादौ च व्यभिचारवारणाय हेतुविशेषणम्। देवदत्तावष्टब्धदेशातिरिक्तदेशेषु स नास्तीत्यविसंवादिपुरुषवचनापहृतविषयमेतत्, अत आह—**न चेति** ॥

---

1. कुण्डलान्तर्गतं क पुस्तके नास्ति।

इति चेत्, न, विग्रीवः ; अनानत इति श्रुतिप्रतिपन्नत्रिदशेश्वरेण व्यभिचारात्, विग्रीवः=स्थूलग्रीवः, अनानतः=कस्यचिदप्यप्रणतः। अयं देवदत्तः, न रात्रिभोजी, सम्प्रतिपन्नरात्रिभोजनव[ द्व्य ]तिरिक्तत्वात् ; संप्रतिपन्नदिवानियतभोजनवदिति सत्प्रतिपक्षत्वाच्च ॥

॥ प्रत्यक्षदृष्टान्तेनार्थापत्तेरनुमानानपेक्षप्रमाणत्वोपपादनम् ॥

किं चाविनाभावेन गमकं लिङ्गम्, न तथाऽर्थापत्तिः ; गृहाभाववहिर्भावयोरेकप्रमाणेनास्फुरणादविनाभावग्रहणायोगादिति ॥

॥ उ द य नमतेनार्थापत्तेरनुमानेऽन्तर्भावशङ्का—अविनाभावानपेक्षया गमकत्वान्नार्थापत्तेरनुमानान्तर्भाव इति तत्परिहारश्च ॥

यदपि **कु सु मा ञ्ज लावुदितम्**—कथमत्र व्याप्तिर्ग्राह्या? इति चेत्, यदाहमिह, तदा नान्यत्र ; यदा चान्यत्र, तदा नेहेति सर्वप्रत्यक्षसिद्धमेतत्, काऽत्रापि कथन्तेति, तदसत् ; सर्वदेशाप्रत्यक्षत्वे तत्राभावस्य दुरवधारणत्वात्। प्रत्यक्षे स्वात्मनि तेषां संसर्गः प्रतिषिध्यते, प्रतियोगिनश्च स्मृतिमात्रेणोपयुज्यन्त इति चेत्, मैवं व्याहतं भाषिष्ठाः। यदाहमिह, तदा नान्यत्रेति सप्तम्या देशान्तराणामेव प्रतिषेधाधिकरणत्वेनाभिधानात्। सप्तम्यर्थो न विवक्षित इति चेत्, किं तर्हि विभक्त्यार्थाविवक्षैव,

---

एवं भू ष ण पक्षं प्रतिक्षिप्य सम्प्रति नार्थापत्तिरनुमानम्, अविनाभावानपेक्षया गमकत्वात्, अक्षवदिति स्वपक्षसाधनमाह—**किं चेति** ॥ साधनासिद्धिमुद्धरति—**गृहाभावेति** ॥ एकप्रमाणगोचरत्वे तत एव साध्यसिद्धेरनुमानवैयर्थ्यमित्यर्थः ॥

अविनाभावग्रहणायोगादित्यस्य परिहारमु द य नोदितं तदीयशङ्कापुरस्सरमनुवदति—**यदपीति** ॥ **नान्यत्रेति** ॥ स्वाधिष्ठितदेशव्यतिरिक्तसर्वदेशेष्वभावो व्यापकत्वेन गृह्यते? किं वा तद्देशानां स्वात्मन्यभाव इति विकल्प्याद्यं दूषयति—**तदसदिति** ॥ सन्निकृष्टमात्रग्राहित्वादिन्द्रियाणामित्यर्थः। द्वितीयमनुवदति—**प्रत्यक्ष इति** ॥ स्ववचनविरोधेन निषेधति—**मैवमिति** ॥ यद्यपि 'सप्तम्यास्त्रल्' इति विधानादन्यत्रेति सप्तमी प्रयुक्ता ; तथापि न सा विवक्षितार्था ; प्रातिपदिकार्थशेषत्वेन प्रयोगादिति शङ्कते—**सप्तमीति** ॥ **(देहान्यत्रेति)** सप्तम्यर्थस्याविवक्षितत्वात् प्रातिपदिकार्थे च प्रथमाविधानादयमन्य इति प्रयोगः स्यात्। तत्रानिष्ट-

तत्प्रत्ययो वा। आद्ये यदाऽयमहम्, तदा नान्य इति सन्निहितदेशतादात्म्येनासन्निहितदेशतादात्म्यनिषेधोऽभिधीयमानः सम्यगेव व्याप्तिं साधयेत्। द्वितीये यदाऽयं मयि, तदाऽन्यो न मयीति वाक्यपर्यवसाने कथमनुभवविरोधं परिहरति? सन्निहितदेशेऽवस्थितमात्मानमनुभवन् कथं च सर्वे देशा अदृष्टचराः स्मर्यन्ते, येनात्मनि[1] तान् प्रतिषेधेत्। आगमावगताः स्मर्यन्त इति चेत्, न; आगमादिसंस्कारविरहिणाम[प्य]र्थापत्तिप्रमाणप्रसरात्। आभासप्रतिपन्ना इति चेत्, न; तेषां त्वन्मते प्रतिषेधायोगात्, अन्यथा ईश्वरज्ञानम्, अनित्यम्, ज्ञानत्वात्; अस्मदादिज्ञानवदित्यादेर्दुर्निवारत्वात्। यदाह भवानेव—

"व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता॥"

इति। न चैतदाभासप्रतिपन्नस्यास्तीति कुतस्तस्य निषेधाधिकरणत्वम्, निषेध्यत्वं वेति?

---

माह—**आद्य इति**॥ अहमिति प्रथमायाः सप्तमीत्वेन विपरिणामः, सप्तम्याश्च प्रथमात्वेनेति। द्वितीयं दूषयति—**द्वितीय इति**॥ स्मृतिमात्रेणोपयुज्यत इति यदुक्तम्, तद् दूषयति—**कथं चेति**॥ स्वावष्टब्धदेशातिरिक्तदेशानामागमावगतत्वाददृष्टचरत्वमसिद्धमित्याह—**आगमेति**॥ कृतकस्य नित्यस्य वाऽऽगमस्य श्रवणमन्तरेणार्थापत्तिदर्शनाद् मैवमित्याह—**नेति**॥ देशान्तराणामाहारादि[र्यारोप]रूपभ्रमतः प्रतिपन्नानां प्रतिषेध्यत्वमित्याह—**आभासेति**॥ प्रमाणिकप्रतियोगिप्रतिषेधस्यैव प्रामाणिकत्वनियमाभावे बाधकमाह—**अन्यथेति**॥ ईश्वरः, न सर्वज्ञः, पुरुषत्व[त्वात्]महमिवेत्यादिशब्दार्थः॥

धर्म्यादिप्रती[मि]तौ तद्विरोधः, अप्रमितावाश्रयासिद्धिः, अप्रमिति[त]प्रतियोगिनिषेधासिद्धेरप्रसिद्धविशेषणा[णता]चेत्यभिप्रायेण तद्गतमेव सङ्ग्राहकं गायति—**यदाहेति**॥ व्यावर्त्यस्य=प्रतिषेध्यस्य, अभाववत्ता=अभावेन विशेषणविशेष्यभावसंबन्धः, विशेष्यता-धर्मिता, भाविकी=परमार्थसती, प्रतियोगितापि वस्तुनः प्रामाणिकस्यैव। तदुपपादनायाभावप्रतियोगितामाह—**अभावविरहात्मत्वमिति**॥ अभावाभावरूपत्वमित्यर्थः॥

---

1. आत्मनि तत् प्रतिषेधेत्

॥ पक्षधर्मताद्यनपेक्षया गमकत्वादपि केवलव्यतिरेकिणि,
केवलान्वयिनि, अन्वयव्यतिरेकिणि वाऽर्थापत्तेरनन्तर्भावः ॥

पक्षधर्मत्वेनागमकत्वाच्च नार्थापत्तिरनुमानम् । तथा हि कोऽत्र पक्षधर्मो हेतुः ? कश्च पक्ष इति विवेचनीयम् । देवदत्तो धर्मी, जीवनसम्बन्धित्वे सति गृहेऽसत्त्वं हेतुरिति चेत्, तत्रापि प्रष्टव्यम्—किं केवलव्यतिरेकी, केवलान्वयी वा, अन्वयव्यतिरेकी वा । आद्ये साध्यव्यावृत्तौ साधनव्यावृत्तेर्व्यतिरेकित्वादेवं प्रयोक्तव्यम्—अयं देवदत्तः, बहिरस्ति, जीवनसम्बन्धित्वे सति गृहेऽसत्त्वात्; यो बहिर्नास्ति, नासावुक्तसाधनः; यथाऽहमन्तरवस्थितः । न चैवं सम्भवति; बहिरवस्थितचैत्रादेः सपक्षस्य सत्त्वात् । नापि केवलान्वयी; गृहान्तरावस्थितमैत्रस्यैव विपक्षत्वात् । नाप्यन्वयव्यतिरेकी; गृहावच्छिन्नतदसत्त्वस्य तद्धर्मत्वासिद्धेरुक्तत्वात्, गृहसंसर्गासत्त्वप्रतियोगित्वविवक्षायां तदन्योन्याभावप्रतियोगिना तत्स्थचैत्रेण व्यभिचारात् । तस्मान्नेदं बहिर्भाववेदनम्, अनुमानम्, पक्षधर्माद्यनपेक्षत्वात्, प्रत्यक्षवेदनवत् ॥

॥ साधारणासाधारणप्रमाणद्वयविरोधात्मकानुपपत्तितद्विरोधपरिहारार्थ-
विषयान्तरकल्पिकार्थापत्तिरित्यर्थापत्तिस्वरूपनिष्कर्षः ॥

कुतस्तर्हि तदवगमः ? प्रमाणद्वयविरोधादिति ब्रूमः—कतिपयकालदेव-

---

अविनाभावा[न]पेक्षया गमकत्वान्नानुमानमित्युक्तमधस्तात्, अधुना पक्षधर्मत्वानपेक्षया गमकत्वान्नानुमानतेत्याह—**पक्षेति** ॥ **तद्धर्मत्वासिद्धेरुक्तत्वादिति** ॥ गृहविशिष्टाभावस्य देवदत्तनिष्ठत्वे गृहस्यापि तन्निष्ठत्वप्रसङ्गात्, अभावस्य प्रतियोग्यारूढत्वेऽविशेषात्, प्रतियोगिनः स्वाभावारूढत्वप्रसङ्गाच्चेत्यर्थः । गृहासत्त्वं गृहनिष्ठसंसर्गाभावप्रतियोगित्वम्, अतो न पक्षधर्मत्वासिद्धिः, अत्राह—**गृहेति** ॥ **तदन्योन्याभावेति** ॥ गृहसंसर्गान्योन्याभावप्रतियोगिनेत्यर्थः । संसर्गाभावप्रतियोगित्वेन विशेषणे तदन्योन्याभावप्रतियोगिना व्यभिचारः । तत्रापि संसर्गविशेषणेऽनवस्थेत्याशयः ॥

बहिर्भाववेदनस्य लैङ्गिकत्वानङ्गीकारे कारणान्तरादुपपत्तिर्न स्यादेवेति मत्वा पृच्छति—**कुतस्तर्हीति** ॥ प्रमाणद्वयविरोधो नार्थापत्तेर्मूलम्; अग्नेर्दाहशक्ति-

दत्तजीवनगमकगणितागमेन सामान्यतो देवदत्तसत्त्वं गम्यते, अनुपलब्ध्यापि गृहेऽसत्त्वमिति साधारणासाधारणप्रमाणविरोधः तस्य बहिस्सत्त्वं कल्पयति । सर्वत्र चार्थापत्तौ साधारणासाधारणप्रमाणविरोध एव सामग्री । स एवानुपपत्तिरित्युच्यते । तदविरोधापादनाय विष[1]यान्तर एवैकस्य स्थापनं सा अर्थापत्तिः ॥

॥ साधारणासाधारणप्रमाणद्वयविरोधोऽनुपपत्तिः, असाधारणप्रमाणद्वयविरोधे विकल्पः, सर्वत्र विरोधाभावेऽद्वैतवादः, तत्र कुत्रचन विषयोपसंहाराद्विरोधपरिहारः, यथा सर्पतदाभावज्ञानयोरित्यादिनिरूपणम् ॥

ननु—प्रमाणयोर्विरोधेऽर्थापत्तिरविरोधापादिका, न त्वनुमानमित्यपि नास्ति । विरोधे हि रज्जुसर्पादिवद् एकस्य बाध एव स्यात्, न तूभयोः प्राणाण्यम् । प्रामाण्ये वा न विरोधः; स्थूलमिदमेकमितिवत् सह सम्भवात्—इति, मैवम्; "अतिरात्रे षोडशिनं गृह्णा[2]ति" इत्यादिवैदिकोदाहरणं यद्यपि पश्यति न भवान्, तद[था]पीदं

---

कल्पनायां तदभावेनाननुगमात्, अत्राह—**सर्वत्र चेति** ॥ अयं दहनः, दाहशक्तिमान्, दहनत्वात्; पूर्वानुभूतदहनवदिति सामान्येन दाहशक्तिः प्रमिता, करतलानलसंपर्केऽपि सति प्रतिकूले दाहानुदयाद् अयं दहनः, न दाहशक्तिमान्, देहसंयोगित्वेऽप्यदाहकत्वात्; घटवदिति शक्त्यभावोऽपि प्रमित इति प्रमाणद्वयविरोध इत्यर्थः । अन्यथानुपपत्त्याऽर्थान्तरकल्पनमर्थापत्तिरिति स्ववचनविरोधः, अत्राह—**स एवेति** ॥

एवमर्थापत्तिप्रयोजकं प्रदर्श्य तामाह—**तदिति** ॥ एकस्य=सत्त्वस्य, विषयान्तर एव=बहिर्देश एव, स्थापनम्=प्रतिपादनम्, यत् सेति विधेयलिङ्गाभिप्रायेण निर्देशः ॥

प्रमाणयोर्विरोधोऽनुपपत्तिरिति यदुक्तम्, तत्रासम्भवं चोदयति—**नन्विति** ॥ असम्भवं स्पष्टयति —**विरोध इति** ॥ व्यतिरेकमाह—**प्रामाण्ये वेति** ॥ तत्त्वविषयत्वात्प्रमाया इत्यर्थः । भावाभावयोरेक[त्रा]सम्भवात् भवति विरोधः, अत्राह—**स्थूलमिति** ॥ प्रमितयोरविरोधे विरोधपरिहाराय शाखादिभेदेन व्यवस्थापनं

---

1. विशेषोऽन्तर एव
2. गृह्णाति अस्यानन्तरं "नातिरात्रे षोडशिनं गृह्णाति" इत्यस्ति ।

पृष्टो व्याचष्टाम्—किं विरोध एव लोके नास्ति ? सद्वा न प्रामाणिकम् [:] ? द्विधापि वैधर्म्यासिद्धौ भेदासिद्धेरद्वैतवनकेसरी विजयेत । अथास्ति प्रमाणिकम्, तथापि नैकप्रमाणप्रतीते विरोधः; अतिप्रसक्तेः । अनेकप्रमाणप्रतिपन्नयोर्विरोधे प्रमेयविरोधद्वारा प्रमाणविरोधोऽङ्गीकृतः स्यात् । "अयं सर्पः" इत्यस्य "नायं सर्पः" इत्यनेन सर्वथैव गोचरापहारा[1]दप्रामाण[[2]ण्य]मिति वैषम्यम् ॥

॥ अनुमानेऽपि प्रमाणद्वयविरोधाविशेषात्तस्यार्थापत्तावन्तर्भावशङ्का
व्यतिरेकव्याप्तयनङ्गीकारेण तत्परिहारश्च ॥

धूमोऽपि तर्ह्यनुपपद्यमानतयैव वह्निं गमयेत् । न हि तेन विनाऽसावुपपद्यते । विरोधोऽपि—धूमाद्वह्निना भवितव्यम्, अनुपलब्धेश्च न भवितव्यमित्यनुमानकुलक्षय इति चेत्, न; व्याप्तस्य पक्षधर्मतावगममन्तरेण तत्रानुपपत्तिप्रमाणविरोधयोरप्राप्ते[3]ऽनुमानमस्तु । यत्र तदवगममन्तरेण विषयव्यवस्था, तत्रार्थापत्तिरिति भेदादित्यलमलीकविकत्थनेन ॥

---

वेदे न कार्यं स्यात्, अतश्चानुष्ठानविरोधः स्यादिति परिहरति—**मैवमिति** ॥ किंचातः ? तत्राह—**द्विधेति** ॥ विरुद्धधर्मस्य वैधर्म्यरूपत्वाद् वैधर्म्यभेदासिद्धावन्योन्याभावभेदोऽपि न भवेत्; नियतत्वात्, तदसिद्धौ वैकस्मिन्निव स्वरूपभेदोऽपि न स्यादित्यर्थः ॥ वैधर्म्यभेदसिद्ध्यर्थं शङ्कते—**अथेति** ॥ एकप्रमाणगोचरयोर्विरोधः, अनेकप्रमाणगोचरयोर्वा । आद्यं प्रत्याह—**तथापीति** ॥ **प्रमेय[विरोधद्वा]रेति** ॥ ज्ञानयोः=प्रकाशस्वरूपयोः स्वारा[भा]विकविरोधासिद्धेर्गोचरविरोधादेव विरुद्धत्वम्, एवं च न प्रकृतलक्षणासम्भव इति भावः ॥

प्रमाणविरोधेनानुपपत्त्याऽर्थान्तरकल्पनमर्थापत्तिरिति लक्षणस्यानुमानेऽतिव्यापकत्वमिति हृदयेन चोदयति—**धूमोऽपीति** ॥ प्रमाणविरोधाभावो[वान्रा]नात्रानुपपत्तिः, अत्राह—**विरोधोऽपीति** ॥ विपर्ययापर्यवसायितया प्रसङ्गाभास इति परिहरति—**नेति** ॥ सोऽयं वह्निव्याप्तो धूम इति व्याप्तस्य पक्षधर्मतया परामर्शोऽस्ति, न वा । आद्ये प्रथममवश्यप्रत्येतव्योपजीव्यलिङ्गपरामर्श एव प्रमाणम्, न पश्चाद्भाविन्यनुपपत्तिः, द्वितीयेऽनुपपत्तिरपि न स्यादित्याह—**व्याप्तस्येति** ॥

---

1. हारात्    2. मिति वैषम्यं
3. अप्राप्तेरनुमाममस्तु

॥ व्यतिरेकिप्रमाणस्थापकश्री व ल्ल भ सिद्धान्तायोगेनार्थापत्तिसाधनम् ॥

अर्थापत्तेर्व्यतिरेकितः पृथक्त्वम्, व्याप्तिविरहाद्वा, पक्षधर्मताविरहाद्वा। उभयमपि नास्ति; अन्यतराभावेऽपि सो[स्वो]पपादककल्पकत्वासिद्धेरित्यभिसन्धानेन यद्धि यदभावे नियतानुपपत्ति, तत् तद्व्यतिरेकनियमवदेवेति क्वचिदुपलब्धमुपपादकं कल्पयति वा, न वा। न चेदतिप्रसङ्गः। उपलब्धं चेत्, नियम[त]पक्षधर्मतावद्-व्यतिरेक्येवेत्यभिदधानः श्री व ल्ल भोऽपि व्यतिरेकप्रयोगासम्भवेन भर्त्सनीयः॥

॥ व्याप्तिपक्षधर्मताहेत्वनुसन्धानेनानुमानत्वमेवार्थापत्तेरिति वा दी न्द्र मतशङ्का, पूर्वोक्तयुक्तिभिस्तत्परिहारसूचनं च ॥

यदत्र वा दी न्द्रो वदति—नार्थापत्तिरनुमानादर्थान्तरम्; पिहितद्वारगृहमध्यवर्तिनो व्याप्ति[1]पक्षधर्मतानुसन्धानरहितस्य देवदत्तो बहिरस्तीति ज्ञानस्यानुदयात्

---

सर्वत्रैव तदवगमादनुमानत्वमेव स्यात्, अत्राह—यत्रेति॥ अर्थापत्तेर्व्यतिरेक्यनुमानत्वमिति यदुक्तं ली ला व त्याम्, तदत्र दूषयति—**अर्थापत्तेरिति**॥ हेतुमाह—**अन्यतरेति**॥ अव्याप्तस्य गमकत्वे यतः कुतश्चिद्यस्य कस्यचिदुपपादकत्वकल्पनं स्यात्, अपक्षधर्मस्य गमकत्वे जीवतोऽजीवतो वा देवदत्तस्य गृहाभावाद् यज्ञदत्तस्य बहिर्भावप्रसङ्गादित्यर्थः॥ **यद्धीति**॥ यत् = जीवतो गृहासत्त्वम्, यदभावे = यस्य बहिर्भावस्याभावे, नियतानुपपत्ति = नियमेनानुपपन्नम्, तत् = गृहासत्त्वम्, तद्व्यतिरेकनियमवत्,=तस्य बहिर्भावस्याभावे नास्त्येवेति। क्वचिदुपलब्धं स्वोपपादकं कल्पयति, अनुपलब्धं वेति। अर्थनियमः=व्याप्तिः॥ **व्यतिरेकिप्रयोगासम्भवेनेति**॥ देवदत्तः, बहिरस्ति, जीवनवत्त्वे सति गृहेऽसत्त्वात्; यो नोक्तसाध्यः, नासावुक्तसाधनः, यथाहमन्तरवस्थित इति प्रयोक्तव्यम्। नैवं सम्भवति; बहिरवस्थितचैत्रस्य सपक्षत्वात्॥

ननु देवदत्त इत्युपलक्षणं जीवतो गृहेऽसतः सर्वस्य पक्षत्वादिति न प्रत्यक्षादिप्रमाणान्तरावगतबहिर्भावस्य चैत्रादेरसन्दिग्धसाध्यस्य पक्षत्वायोगात् प्रत्यक्षेण बहिर्भाववेदनं स्यात्, अत उक्तम्—**पिहितद्वारेति**॥ पक्षधर्मतानुसन्धानाभावस्य स्वयमभिहितत्वादित्यन्वयः। पिहितद्वारगृहमध्यवर्तिना पुरुषेण। **बहिःस्थितपदार्थ-**

---

1, व्याप्ति इत्येवास्ति विसर्गो नास्ति

—इति, तदसत्; जीवतो गृहाभावस्य बहिर्भावेन व्याप्तिग्रहणासम्भवस्याभिहितत्वात्, पक्षधर्महेत्वनुसन्धानाभावस्य च स्वयमेवेदानीन्तनगृहनिष्ठाभावप्रतियोगित्वं हेतुरित्याशङ्क्य पिहितद्वारगृहमध्यवर्तिना बहिर्देशावस्थितपदार्थनिष्ठत्वानवगमे व्याप्तिग्रहणानुपपत्तेरिति व्याप्तिग्रहणासम्भवप्रयुक्तयुक्त्याऽभिहितत्वात्। किंचास्ति तावदनुमानवादिनोऽपि 'इदानीं देवदत्तोऽस्ती'ति ज्ञानम्, अन्यथा देवदत्तस्य धर्मिण इदानीं विद्यमानत्वस्य च हेतुविशेषणस्यासिद्धिप्रसङ्गात्। अस्ति चेदानीं देवदत्तो गृहे नास्तीति ज्ञानम्; अन्यथा इदानीन्तनगृहनिष्ठाभावप्रतियोगित्वेदानीन्तनत्वयोरसिद्धिप्रसङ्गात्। ततश्चैतत्संवेदनद्वयविरोधादेव बहिरस्तित्वज्ञानोपपत्तेर्न व्याप्तिपक्षधर्मताज्ञानानामत्र कारणत्वम्; गौरवात्॥

॥ अनुमानान्तरैरपि जीवन् देवदत्तो बहिरस्तीति ज्ञानस्य न सिद्धिरित्यर्थापत्तिप्रमाणसाधनोपसंहारः॥

अथ नैतदस्ति—इदमिदानीं देवदत्तो अस्तीति ज्ञानम्, नैतदनन्तरोत्पन्नदेवदत्तो बहिरस्तीतिज्ञानजनकम्, देवदत्तोऽस्तीति ज्ञानत्वात्, कालान्तरोत्पन्नदेवदत्तोऽस्तीतिज्ञानवत्। तथेदमिदानीं देवदत्तो बहि[1]रस्तीति ज्ञानजनकं

---

**निष्ठत्वानवगम इति**॥ बहिः स्थितः पदार्थः चैत्रादिः, तन्निष्ठत्वमिदानीन्तनगृहनिष्ठाभावप्रतियोगित्वस्य [न] शक्यावगममिति तदनवगमे यो बहिर्नास्ति, नासाविदानीन्तनगृहनिष्ठाभावप्रतियोगीति व्याप्तिग्रहायोगादित्यर्थः॥

सम्प्रतिपन्नप्रमाणद्वयविरोधादेव बहिर्भाववेदनोपपत्तौ न पक्षधर्मताद्यवगमस्य हेतुत्वम्; प्रमाणाभावादित्याह—**किंचेति**॥ **अभावप्रतियोगित्वेदानीन्तनत्वयोरिति**॥ अभावप्रतियोगित्वं देवदत्तस्य, इदानीन्तनत्वमभावस्येति विवेकः॥

संवेदनद्वयविरोधाद् बहिर्भाववेदनमिति यदुक्तम्, तन्नास्तीति शङ्कते—**अथेति**॥ प्रतिज्ञातेऽर्थे प्रयोगं रचयति—**इदमिति**॥ अस्तीति ज्ञानत्वादित्युक्ते मानद्वयविरोधास्तित्वज्ञाने व्यभिचारो मा भूदित्युक्तम्—**देवदत्तोऽस्तीति ज्ञानत्वादिति**। **नास्तीति ज्ञानत्वादित्युक्ते** बहिर्भावविरोधाभावज्ञाने व्यभिचारः, अत उक्तम्—**देवदत्तो नास्तीति ज्ञानत्वादिति**॥ गृह इति हेतुविशेषणं स्पष्टीकरणार्थम्॥

---

1. गृहे नास्ति इति

न भवति, देवदत्तो गृहे नास्तीति ज्ञानत्वात्, कालान्तरोत्पन्नतथाविधज्ञानवदिति प्रतिषेधादिति, तदपि न; मानद्वयविरोधस्य बहिस्सत्ताव्यवस्थापकत्वस्वीकारात्, सिद्धसाधनात्, एतदनन्तरोत्पन्नैतज्जन्यजनकत्वनिषेधे बाधात्, कार्यकारणभावस्य पौर्वापर्यनियतत्वात्, कालान्तरभावितज्ज्ञानजनकत्वनिषेधे सिद्धसाधनात्, एतत्कालीनैतद्विषयाभावबोधकप्रमाणरहितत्वस्योपाधित्वाच्च, विपक्षे बाधकाभावाच्च, व्याप्तिपक्षधर्मतानुसन्धान[ना]सम्भवेन बहिस्सत्तावेदनानुपपत्तिविरोधाच्च। अथ—इदं देवदत्तो बहिरस्तीति ज्ञानम्, नेदानीं देवदत्तोऽस्तीति ज्ञानजन्यम्, नैतदिदानीं देवदत्तो गृहे नास्तीति ज्ञानजन्यं च, देवदत्तो बहिरस्तीति ज्ञानत्वात्; कालान्तरोत्पन्नतथाविधज्ञानवदिति प्रतिषेध इति—मतम्, तदपि न; अत्रापि सिद्धसाधनबाधादीनां समत्वात्, अन्यथेदानीन्तनबहिस्सत्त्वव्याप्तेदानीन्तनगृहनिष्ठाभावप्रतियोगित्वे सतीदानीन्तनत्ववान् देवदत्त इति ज्ञानं नैतदनन्तरोत्पन्नदेवदत्तोबहिरस्तीति ज्ञानजनकम्, एवंविधविज्ञानत्वात्; कालान्तरोत्पन्नैवंविधज्ञानवत्,

---

किंच देवदत्तास्तित्वनास्तित्वज्ञानद्वयाव्यवहितोत्तरक्षणभावितयैतज्जन्यबहिर्भाववेदनं प्रति जनकत्वे निषेधः? उत कालान्तरभाविबहिर्भाववेदनं प्रतीति विकल्प्य, आद्यं प्रत्याह—**एतदनन्तरेति** ॥ द्वितीयं दूषयति—**कालान्तरेति** ॥ हेतुद्वयस्यापि व्याप्यत्वासिद्धिः; सोपाधिकत्वादित्याह— **एतत्कालीनेति** ॥ न च साधनव्याप्तिः; इदानीं देवदत्तोऽस्तीति ज्ञानविषयाभावबोधकप्रमाणस्य गृहे नास्तीति ज्ञानस्य सत्त्वात्, एवमिदानीं गृहे नास्तीति ज्ञानविषयाभावबोधकप्रमाणस्य देवदत्तोऽस्तीति सामान्यतः सत्त्वग्राहिज्ञानस्य सद्भावादित्याशयः। न केवलं विपक्षबाधकाभावादप्रयोजकत्वम्; बहिर्भाववेदनानुपपत्तिविरोधादपीत्याह—**व्याप्तीति** ॥ सम्प्रति फलभूतबहिर्भाववेदनं पक्षीकृत्य तस्य भावाभाववेदनजन्यत्वाभावं साधयति——**अथेति** ॥ व्याप्तस्य हेतोः पक्षधर्मतानुसन्धानाद् बहिर्भाववेदनं भवतीति भवदभ्युपगमोऽप्येवं प्रतिषेद्धुं शक्य इत्याह—**अन्यथेति** ॥ **बहिःसत्त्वव्याप्तेति** ॥ परामर्शः=इदानीन्तनगृहनिष्ठाभावप्रतियोगित्वे सतीदानीन्तनत्ववानिति पक्षधर्मतापरामर्शः = इदानीन्तनत्वव्याप्तजीवनवानित्यर्थः ॥

एवं लिङ्गपरामर्शं कारणत्वेनाभिमतं पक्षीकृत्यानुमितम्, इदानीं तत्कार्यत्वाभिमतबहिर्भाववेदनपक्षीकरणेनाह—**तथेति** ॥ **सत्प्रतिपक्षताया इति** ॥ पराभि-

[1]देवदत्तो बहिरस्तीति ज्ञानम्, इदानीन्तन[2](गृहनिष्ठाभावप्रतियोगित्वे सतीदानीन्तनत्ववान्) देवदत्त इति ज्ञानजन्यं न भवति, देवदत्तो बहिरस्तीति ज्ञानत्वात्; कालान्तरोत्पन्नतथाविधज्ञानवदिति सत्प्रतिपक्षताया दुर्निवारत्वात्, अत्र ये परिहाराः, तेषां प्रकृतेऽपि सुयोजनत्वात्। तदेवमर्थापत्तिर्मानान्तरमिति स्थितम्॥

॥ इति न्यायचन्द्रिकायामष्टममर्थापत्तिस्वतन्त्रप्रमाणत्वसाधनम् ॥

---

मतलिङ्गपरामर्शजन्यत्वप्रतिषेधद्वारा प्रमाणद्वयविरोधजन्यत्वपर्यवसानादित्यर्थः। तदनुविधायित्वविरोधात् कालात्ययापदिष्टत्वम्, अत आह—अत्रेति॥

इति न्यायचन्द्रिकाव्याख्यायां
॥ अष्टममर्थापत्तिस्वतन्त्रप्रमाणत्वसाधनम् ॥

---

1. तथा इदं देवदत्तो

2. "बहिस्सत्त्वव्याप्तेदानीन्तनगृहनिष्ठाभावप्रतियोगित्वेदानीन्तनत्वात्" -कुण्डलान्तर्गतस्य स्थाने एवं वर्तते।

## ॥ अथ न्यायचन्द्रिकायां नवममभावस्वतन्त्रप्रमाणत्वसमर्थनम् ॥

॥ योग्यानुपलब्धेरभावप्रमाणत्वोपन्यासो यथावार्तिकम् ॥

योग्यानुपलम्भोऽभावप्रमाकरणम् । तज्जनिता धीरभावप्रमाणम् । अभावंच[श्च] तत्प्रमेयम् । योग्यता चार्थतत्सन्निकर्षातिरिक्तज्ञानकारणपौष्कल्यम् । तदाहुः—

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥"

इति । तत्र यद्यभावस्य प्रमेयत्वम्, तज्ज्ञानप्रामाण्यं चेष्यते, प्रत्यक्षादिभ्यः पृथगेवाऽभावप्रमाणमभ्युपेयम् ॥

॥ अनुमानेनाभावप्रमासिद्धेरनुपलब्धेः प्रमाणान्तरत्वायोग इति शङ्का ॥

ननु—'इह भूतले घटो नास्ति' इति प्रतीतिः, इन्द्रियकरणिका, [1]साक्षात्कारित्वात्; रूपादिप्रतीतिवत्; साक्षात्कारित्वमन्यतरासिद्धमिति चेत्, न; एकजातीयत्वे ज्ञाताज्ञातकरणत्वानुपपत्तेः । तथा हि—निपुणतरमनुस्मृतो मया मन्दिरे, चैत्रो न चोपलब्ध इति श्रुत्वा श्रोताऽनुमिनोति—नूनं नासीदेवेति । न हि

---

### अथ न्यायचन्द्रिकाव्याख्यायां
### ॥ नवममभावस्वतन्त्रप्रमाणत्वसमर्थनम् ॥

क्रमप्राप्तमभावप्रमाणं निरूपयति—**योग्येति** ॥ ननु योग्यानुपलम्भो न स्वतन्त्रं मानम्; अभावस्य यथायथमिन्द्रियादिभ्योऽवगम्यमानत्वात् अत्राह—**तत्र यदीति** ॥ उ द य नश्चोदयति—**नन्विति** ॥ **कार्यत्वे सतीति** हेतुविशेषणं द्रष्टव्यम् । प्रतिवाद्यसिद्धो हेतुरिति शङ्कते—**साक्षात्कारित्वमिति** ॥ विमता, साक्षात्कारिणी, अज्ञातकरणजज्ञानत्वात्; रूपप्रतीतिवदिति परिहरति—**नेति** ॥ एकजातीयत्वे परोक्षत्वेनेति शेषः । कासाञ्चिदभावबुद्धीनां ज्ञातकरणजत्वम्, कासाञ्चिदज्ञातकरणजत्वमितीमं विभागं स्पष्टयति—**तथा हीति** ॥ योग्यानुपलम्भादेव मैत्राभावप्रमा श्रोतुः किं न भवेत्, अत्राह—**न हीति** ॥ अव्यवधानादे[दि]र्योग्यता । [अ]र्थस्य, [तद]भावादित्यर्थः । **अनुमिनोतीति** ॥ मैत्रः, मन्दिरे तदा नासीत्; योग्यत्वे सत्यनुपलब्धत्वात्, सम्प्रतिपन्नवदित्यर्थः ॥

---

1. कुण्डलान्तर्गतं नास्ति

तदा देशान्तरस्थस्य श्रोतुर्योग्यानुपलब्धिरस्ति ; किं त्वाप्तवाक्याधिगतयाऽनुमिनोति । एवं प्रातः प्राङ्गणेऽनुपलब्धस्य मैत्रस्य मध्यन्दिनसमयभाविप्रातस्तनाभावज्ञानमप्यनुमानफलमेव ; मध्यन्दिनानुसन्धीयमानप्रातस्तनानुपलब्धिलभ्यत्वादिति नास्तिबुद्धयः काश्चित् ज्ञातकरणिकाः, काश्चिदज्ञातकरणिकाः । तत्र यद्युभय्योऽप्यसाक्षात्कारजातीयाः, तत इदं कारणवैचित्र्यं न स्यात् ॥

॥ अधिकरणद्वारा सन्निकृष्टेन्द्रियेणैवाभावप्रतीतेर्नानुपलब्धेः
प्रमाणान्तरत्वमिति शङ्का ॥

विमता, इन्द्रियकरणिका, अन्यत्रानुपक्षीणेन्द्रियव्यापारानुविधायित्वात् ; रूपप्रतीतिवत् । अधिकरणग्रहणे तदुपक्षीणमिति चेत्, न ; अन्धस्यापि त्वगिन्द्रियोपनीते घटादौ रूपविशेषाभावप्रतीतिप्रसङ्गात् । अस्ति हि तस्य तत्राधिकरणग्रहणम्, अस्ति च प्रतियोगिस्मरणम् । अस्ति च श्यामे रक्तत्वस्य योग्यस्याभावेऽनुपलब्धिश्च । प्रतियोगिग्राहकेन्द्रियगृहीतेऽधिकरणेऽनुपलब्धिः प्रमाणमिति चेत् ; न ; वायौ त्वगिन्द्रियोपनीते रूपाभावप्रतीत्यनुदयप्रसङ्गात्, वातायनविवरविसारितकरपरामृष्टेऽप्यधिकरणे तदुपलम्भप्रसङ्गाच्च ॥

---

ज्ञातकरणजन्याभावज्ञानान्तरमुदाहरति—**एवमिति** ॥ फलितमाह—**इति नास्तीति** ॥ निर्घटं भूतलमिति प्रतीतेः प्रत्यक्षत्वे प्रयोगान्तरमाह—**विमतेति** ॥ धूमग्रहणेनोपक्षीणचक्षुर्व्यापारानन्तरभाविवह्निज्ञाने व्यभिचारवारणाय हेतुविशेषणम् । विशेषणासिद्धिं शङ्कते—**अधिकरणेति** ॥ तर्ह्यन्धस्यापि सामग्रीसाकल्याद् रूपाभावप्रतीतिः स्यादित्याह—**नेति** ॥ **योग्यस्येति** ॥ स्थूलद्रव्यसमवेतत्वादिति[त्वादिः] । घटादावन्धस्य न रूपविशेषाभावधीः, सामग्रीसाकल्यासत्त्वादिति शङ्कते—**प्रतियोगिग्राहकेति** ॥ चक्षुषा वायोरग्रहणात्तत्र रूपाभावप्रतीतिः कदाचि[दपि]न स्यादित्याह—**नेति** ॥ चक्षुस्सन्निकर्षजत्वमभावप्रमाया यदि नाभ्युपेयते, तदाऽनिष्टान्तरमाह—**वातायनेति** ॥ तत्र हि सत्येवापि[धि]करणस्य ग्रहणे चक्षुस्सन्निकर्षाभावादेव तस्य श्यामत्वाभावस्यानुपलम्भ इति ॥

नन्वस्त्वपेक्षणीयचक्षुस्सन्निकर्षः, तथाप्यन्यत्रोपक्षयस्तस्येत्याह — **तथापीति** ॥ योग्यानुपलब्धिर्ह्यभावज्ञानहेतुः । योग्यता च प्रतियोगिव्यतिरिक्तभावज्ञान-

॥ चक्षुषो योग्यतापादनेन नोपक्षयः, अन्यथा घटादिसन्निकर्षमात्रेण रूपादिप्रतीत्यापत्त्या रूपादिज्ञानमपि न प्रत्यक्षं स्यात् ॥

तथा च[पि]योग्यतापादनोपक्षीणं चक्षुः । तदितरसामग्रीसाकल्येऽप्यनुपलभ्यमानस्याभावो निश्चीयते । तच्चक्षुष्यधिकरणसन्निकृष्टे सति स्यादिति चेत्, न; परिपूर्णानि कारणान्येव साकल्यम् । तथाच किं कुत्रोपक्षीणम्? अथान्योन्यमेलनं मिथः प्रत्यासत्त्यादिशब्दवाच्यम्, तदुपक्षये तर्हि न क्वचिच्चक्षुः करणं स्यात् । न हि रूपाद्युपलब्धिमप्यसन्निकृष्टमेतदुपजनयति ॥

॥ अभावज्ञानस्य प्रत्यक्षत्वमु द य नोपष्टम्भेन निरूपयति ॥

विमता, अन्यत्राचरितेन्द्रियजन्या, अज्ञातकरणकज्ञानत्वात्, रूपप्रतीतिवत् । तथा विमता, अभावप्रमाणविशिष्टान्तःकरणजन्या, बाह्यानुभवत्वात्, रूपानुभववत् । तदिदमुदितमु द य नेन—

"प्रतीतेरपरोक्षत्वादिन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥"

इति । इन्द्रियम्, अभावप्रमाकरणम्, तत्प्रतियोगिनि समर्थत्वात्; शब्दलिङ्गादिवत् । इन्द्रियम्, उक्तसाध्यम्, अभावज्ञानं प्रत्यव्यवहितपूर्वकालत्वात्; प्रतियोगिस्मरणवत् । अधिकरणग्रहणस्येन्द्रियावान्तरव्यापारत्वान्नासिद्धो हेतुः ॥

---

कारणसाकल्यम् । तच्चक्षुस्सन्निकर्षे सति भवति; तस्यापि तत्कारणत्वात् । ततश्च सामग्रीसाकल्यापादनोपक्षीणं चक्षुर्नाभावज्ञानं यावद्गच्छतीति भावः । न खलु साकल्यं नाम कारणेभ्यः तत्त्वान्तरं तत्साध्यमस्ति, यत्रोपक्षयः स्यात्, परिपूर्णानां कारणानामेव तथात्वादिति परिहरति—**नेति** ॥ नन्वस्ति मेलनं नाम तत्त्वान्तरमुपक्षयविषय इत्याह—**अथेति** ॥

एवं हि रूपादिज्ञाने व्यभिचारं वारयति—**अज्ञातकरणकेति** ॥ अनवगतकरणजन्याङ्कुरादौ व्यभिचारवारणाय—**ज्ञानत्वादिति** ॥ **बाह्यानुभवत्वादिति** ॥ सुखादिज्ञाने स्मरणे च व्यभिचारं वारयितुं हेतुविशेषणम्—**तत्प्रतियोगिनीति** ॥ अभावप्रतियोगिनि घटादौ ज्ञानजननशक्तत्वादित्यर्थः । इन्द्रियसन्निकर्षानन्तरमधिकरणग्रहणम्, ततोऽभावभानमित्यधिकरणग्रहणेन व्यवधानाद्विशेषणासिद्धो हेतुः, अताह—**अधिकरणेति** ॥ यद् येन विना यन्न जनयति, स तस्य तत्रावान्तरव्यापारः । यदि

॥ अभावभ्रमकरणस्यैव तत्प्रमाकरणत्वम्, अभावभ्रमकरणं चेन्द्रियम्, ततश्च तत्प्रमाकरणत्वमपीन्द्रियस्यैव, अतो नाभावस्य तत्र प्रमाणता ॥

इन्द्रियम्, अभावप्रमाकरणम्, तद्विपर्ययकरणत्वात्; यद्यद्विपर्ययकरणम्, तत् तत्प्रमाकरणम्; यथा रूपप्रमायां चक्षुः। न चासिद्धो हेतुः। तथा हि—अस्ति तावद्विद्यमान एव वस्तुनि विपर्ययात्मकोऽभावप्रत्ययः। स यस्मिन् दुष्टे सति भवति, तदेवादुष्टं समीचीनाभावज्ञानकारणं भवितुं युक्तम्। न तावदनुपब्धि[ब्धे]रभावार्थिकाया दोषाश्रयत्वं भवति। न चाधिकरणग्रहणस्य, प्रतियोगिस्मरणस्य वा स्वगतदोषः सम्भवति। कार्यप्रतिबन्धको हि दोषः; तयोस्ताव[1]दुत्पन्नयोरर्थप्रकाशात्मनः कार्यस्य केनापि प्रतिबन्धायोगात्, अनुत्पन्नयोश्च कार्याभावस्य स्वभावनिबन्धनत्वेन दोषानिबन्धनत्वात्। तस्मादिन्द्रियदोषादेवाभावविपर्ययः ॥

॥ अघटं भूतलमित्यत्र विशेष्यांश इव विशेषणांशेऽपीन्द्रियस्यैव करणत्वम्, नाभावस्य; अन्यथा विशिष्टज्ञानार्थं सप्तमप्रमाणाङ्गीकारापत्तिरिति पूर्वपक्षोपसंहारः ॥

विकल्पना [2]खल्वपि। अघटं भूतलमिति विशिष्टधीः, अवश्यमिन्द्रियकरणिका स्वीकार्या, प्रमाणान्तरं वा सप्तममास्थेयम्। यथा हि विशेष्यमात्रोपक्षीणमिन्द्रियमकरणमत्र, तथा विशेषणमात्रोपक्षीणानुपलब्धिरपि न कारणं स्यात्। आह च—

"प्रतियोगिनि सामर्थ्याद् व्यापाराव्यवधानतः।
अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥"

इति। तस्मान्नाभावो मानान्तरमिति ॥

---

व्यापारेण व्यापारी व्यवधीयते, निर्विकल्पकव्यवधानादिन्द्रियस्य सविकल्पकहेतुत्वं न स्यादित्याशयः। ततः किमायातमिन्द्रियकरणत्वस्य' इति? अत्राह—**न तावदिति** ॥ अभावज्ञानस्येन्द्रियकरणत्वे कारणान्तरमाह—**विकल्पना हीति** ॥ अघटं भूतलमिति विशिष्टज्ञानम्। **खलु**=निश्चये। **अपिः**=समुच्चये। तदुपपादयति—**अघटमिति** ॥

नन्विन्द्रियस्य विशेष्यभूतलोपक्षयेऽप्यभावप्रमाणेन विशिष्टधीः सेत्स्यति, किं सप्तमेनेति, अत्राह—**यथा हीति** ॥

---

1. उपपन्नयोः    2 विकल्पनात् खल्वपि

॥ चक्षुरादेरभावेन योग्यसन्निकर्षस्य दुर्वचत्वेन विशेष्यविशेषणभावस्य सम्बन्धत्वे प्रत्यक्षेणैव निर्वाहादनुमानकथोच्छेदापत्त्या चा-भावस्वतन्त्रप्रमाणता ॥

अत्राभिधीयते—

अभावानुभवस्तावन्नाक्षाद्भवितुमर्हति ।
अक्षैरनभिसम्बन्धाद् भूधरे वह्निधीर्यथा ॥ ३९ ॥

इति । मेदिनीतले कलशो नास्तीति वेदनं नाक्षादुत्पद्यते ; अक्षस्य संसृष्टवेदनोत्पादकत्वनियमात्, कलशनास्तित्वस्याक्षेणासंसर्गात् ॥

न तावत्संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवाय-समवाय-समवेतसमवायाः ; द्रव्यगुणकर्मसामान्यानात्मकत्वात् । एतत्पञ्चविधसम्बन्धसम्बन्धिविशेषणविशेष्यभावः सम्बन्धोऽस्तीति चेत्, न ; विशेष्यविशेषणभावमात्रेणेन्द्रियजत्वे चक्षुस्संयुक्तकलशविशेषणस्य रसादेरपि चाक्षुषत्वप्रसङ्गात् । कलशनास्तित्वं योग्यत्वाद् गृह्यते, न रसादिः ; अयोग्यत्वादिति चेत्, केयं योग्यता नाम—स्वरूपं वा? सहकारिसाकल्यं वा, तदतिरिक्तं वा । नाद्यः ; रसादेरपि तुल्यत्वात् । नान्त्यः ; स्वरूपसहकारिसाकल्यातिरिक्तयोग्यतायास्त्वयाऽनङ्गीकारात् । भवति चात्र प्रयोगः—विमता नास्तिधीः, नाक्षजाता, संसर्गानपेक्षत्वात् ; अनुमानज्ञानवदिति । विपर्ययेऽनुमानादेरप्यक्षजत्वप्रसङ्गः । तदेतदभिप्रेत्याहुः—

---

**अत्रेति** ॥ अघटं भूतलमिति विशिष्टबुद्धावित्यर्थः । **इन्द्रियाणीति** पक्षनिर्देशः—**अभावप्रमाकरणमिति** साध्यमध्याहार्यम् । संयोगादीनामयोगे हेतुं निगदति—**द्रव्येति** ॥ द्रव्येणाक्षस्य संयोगः, गुणकर्मभ्यां संयुक्तसमवायः, तत्समवेतसामान्येन संयुक्तसमवेतसमवायः, शब्दतत्सामान्याभ्यां समवायसमवेतसमवायाविति नियमः अभावस्याद्रव्यत्वादित्यर्थः ॥ सम्बन्धान्तरमाह —**एतदिति** ॥ एते संयोगादयः पञ्चविधाः सम्बन्धाः, तैः **सम्बद्धाः**=एतत्पञ्चविधसबन्धसम्बद्धाः, तैर्विशेषणविशेष्यभाव इत्यर्थः । विशेषणभावो विशेषणे, विशेष्यभावो विशेष्ये, न पुनरेक उभयाश्रितो विशेषणविशेष्यभावो नाम सम्बन्धोऽस्ति । तमङ्गीकृत्यापि दूषयति—**नेति** ॥

कार्यत्वे सति साक्षात्कारित्वादिति विशेषणान्नेश्वरज्ञाने व्यभिचारः, अत्राह—

"न तावदिन्द्रियेणैषा नास्तीत्युत्पद्यते मतिः ।
भावांशेनैव सम्बन्धो योग्यः स्यादिन्द्रियस्य तु ॥"

इति ॥

॥ साक्षात्कारित्वमक्षजत्वाभावेऽपीश्वरज्ञानस्येव तृणारणिमणिनयेन वोपपद्यते ॥

[1]यत्तु—साक्षात्कारित्वेनाक्षजत्वानुमानम्, तदसत्; ईश्वरज्ञाने व्यभिचारात्। तद्व्यावृत्त्यर्थं च तद्विशेषणं कौ मा रि ल स्य व्यर्थम्, अन्यतरासिद्धश्च हेतुः। ज्ञाताज्ञातकरणज[2]त्वमभावप्रतीतेरसाक्षात्कारित्वेऽनुपपद्यमानमज्ञातकरणानां साक्षात्कारित्वं कल्पयतीति चेत्, नाज्ञातकारणजत्वं साक्षात्कारित्वप्रयोजकम्; ईश्वरज्ञान[ना]-व्यापकत्वात्, स्मृतावतिव्यापकत्वाच्च। तस्मात् यथा तृणारणिमणिभ्यो भवतो वह्नेरग्नित्वावान्तरजातिवैचित्र्यं सामग्रीवैचित्र्यात् एवं हि त्वदीया वचनव्यक्तिः—फूत्कारेण तृणादेरेव, निर्मन्थनेनारणेरेव, प्रतिफलिततरणिकिरणैर्मणेरेवेति प्रकारनियमात् तेनैव व्यज्यमानस्य कार्यजातिभेदस्य भावादिति। तथा कारणवैचित्र्यात् कार्यजातिवैचित्र्यमत्रापि स्यात् ॥

॥ अभावज्ञानस्य साक्षात्त्वासाक्षात्त्वातिरिक्तसामान्यवत्त्वेऽपि न दोषः;

---

**तद्व्यावृत्त्यर्थं चेति** ॥ औपनिषदं प्रति प्रयोगे नान्यतरव्यर्थविशेषणासिद्धो हेतुरित्याशङ्क्यान्यतरविशेषणासिद्ध इत्याह—**अन्यतरेति** ॥ एकजातीयत्वे ज्ञाताज्ञातकरणत्वानुपपत्तेरित्यादिनोक्तमनुवदति—**ज्ञातेति** ॥ अज्ञातकरणजन्यत्वस्य न साक्षात्कारित्वकल्पकत्वम्; अव्याप्त्यतिव्याप्तिभ्यामप्रयोजकत्वादित्याह—**नेति** ॥ अप्रयोजकस्यापि कल्पकत्वे यतः कुतश्चिद्यत्किञ्चित् कल्प्यं स्यादित्याशयः। कथं तर्हि ज्ञाताज्ञातकारणवैचित्र्योपपत्तिः, अत आह—**तस्मादिति** ॥ तार्णपार्णादेर्वह्नेरग्नित्वावान्तरसामान्याभावात्साध्यसमुदाहरणम्, अत्राह—**एवं हीति** ॥ एवकारो भिन्नक्रमः ॥ फूत्कारेणैव तृणादेः, निर्मथनेनैव, प्रतिफलिततरणिकिरणैरेवेति प्रकारनियमात् = कारणप्रकारस्य नियमात्। तेनैव प्रकारेणैव नियतेन व्यज्यमानस्य—व्यक्तिनिष्पादनद्वारा प्रकाशमानस्य कार्यभेदस्य=वह्नित्वावान्तरजातिभेदस्य भावात्, कारणवैजात्ये कार्यसाजात्यं न स्यादित्यर्थः। दृष्टान्ते प्रतिपादितमर्थं दार्ष्टान्तिके समर्पयति—**तथेति** ॥ विमतः सामग्रीभेदः, कार्यभेदप्रयोजकः, सामग्रीभेदत्वात्; वह्निसामग्रीभेदवदित्यर्थः। परोक्षत्वापरोक्षत्वव्यतिरेकेण ज्ञानत्वावान्तर-

---

1. पृ. 304 प. 10    2. त्वं नास्ति

इन्द्रियं त्वधिकरणज्ञानमात्रेणान्यथासिद्धम् ॥

न च साक्षात्त्वासाक्षात्त्वव्यतिरेकेण प्रतीतिगतसामान्यासत्त्वम्; स्मृतित्वानुभवत्वादिवत् सामान्यान्तरोपपत्तेः। अतो न साधीयानाद्यो हेतुः। द्वितीयोऽप्यन्यत्वानुपक्षीणेन्द्रियव्यापारानन्तरभावित्वादित्यसिद्धः। विषयतदधीनेतरकारणसाकल्यलक्षणयोग्यत्वायेन्द्रियस्यान्यथासिद्धत्वात् ॥ यथाहुः—

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ॥"

इति।

॥ वायौ रूपाभावज्ञानं योग्यानुपलम्भेऽभावप्रमा, अन्यथा तु न ॥

[1]यत्त्विदं गदितम्—वायौ त्वगिन्द्रियोपनीत इत्यादि, तदसत्; तत्रापि योग्यानुपलब्धे रूपाभावप्रतीतेः, करपरामृष्टे च न रूपाभावप्रतीतिः; अधिकरणचक्षुस्सन्निकर्षलक्षणयोग्यताभावात् ॥

॥ यत्र चक्षुषः करणत्वं क्लृप्तम्, तत्र तत्सन्निकर्षोऽवान्तरव्यापारः,
अभावज्ञाने तु न तत् क्लृप्तम्, अतो वैषम्यम् ॥

[2]यत् पुनरुक्तम्—तदुपक्षये तर्हि न क्वचिच्चक्षुः करणं स्यात् इति, तदपि, वार्तम्; रूपप्रतीतिकरणत्वेनैव चक्षुषः क्लृप्तौ यदन्तरेण न तत्करणत्वं चक्षुषः,

---

जातिवैचित्र्यमेव न सम्भवतीति, अत्राह—**न चेति** ॥ असिद्धौ हेतुमाह—**विषयेति** ॥ प्रतियोगितत्सन्निकर्षातिरिक्तप्रतियोगिज्ञानकारणसाकल्यरूपयोग्यतार्थत्वादित्यर्थः। **अक्षानपेक्षयेति** ॥ बाह्येन्द्रियानपेक्ष्यानुपलब्धिसापेक्षमनोजन्यमित्यर्थः ॥

वायोरचाक्षुषत्वात् तद्धर्मस्याभावस्य चाक्षुषत्वानुपपत्तौ योग्यानुपलब्ध्या तत्र रूपाभावः प्रतीयत इत्याह—**तदसदिति** ॥ इन्द्रियसन्निकर्षस्यानुपयोगे यदनिष्टान्तरमुक्तम्, तत्राह— **करेति** ॥ धर्मिप्रतियोगिनोर्यत्र समानेन्द्रियग्राह्यत्वम्, तत्र प्रतियोगिग्राह्येन्द्रियाधिकरणसन्निकर्षोऽपि योग्यतापादार्थे निविष्ट इत्यर्थः ॥

वैषम्येण दूषयति—**तदपीति** ॥ रूपसाक्षात्कारः, करणसाध्यः, कार्यत्वात्; छेदादिवदिति रूपप्रतीतिरिव चक्षुषः कल्पिता। ततश्च तन्निर्वर्त्यत्वाद् मिथः प्रत्या-

---

1 पृ. 305 प. 13    2. पृ. 306 प. 6

तत् तदवान्तरव्यापारः ; तल्लक्षणयोगादिति सुनिरूपम् ॥ इह तु चक्षुरवान्तर-[1]व्यापारत्वावगमस्य चक्षुःकरणत्वावगमपूर्वकत्वाद्, अभावज्ञाने चक्षुःकरणत्वमेव न क्लृप्तम् इति तत्र योग्यत्वापादनस्य चक्षुरवान्तरव्यापारत्वायोगात् तत्रैवोपक्षीणं चक्षुरित्यवगमात् ॥

॥ निर्विकल्पकज्ञानोपक्षीणत्वेनेन्द्रियकरणकत्वं न सविकल्पकस्य तदिति शङ्कानिरासः, इन्द्रियस्य सविकल्पकज्ञानकरणत्वस्याप्यावश्यकत्वात् ॥

एतेन—हि निर्विकल्पकज्ञानोपक्षीणत्वादिन्द्रियस्य न सविकल्पकमि[मै]न्द्रियकमिति—अपास्तम् ; सविकल्पकानामपि कार्यापरोक्षत्वेन करणान्तरानुपलम्भेन चेन्द्रियकरणत्वेन क्लृप्तौ तदुपयोगित्वेन निर्विकल्पकस्येन्द्रियावान्तरव्यापारत्वाद् न निर्विकल्पक एवोपक्षीणमिन्द्रियम् । तस्मादत्रेन्द्रियकरणत्वावगमपूर्वकं विषयतदधीनेतरेन्द्रियादिकरणमिथःप्रत्यासत्तिरूपयोग्यत्वस्येन्द्रियव्यापारत्वज्ञानम् । ततश्च तत्रानुपक्षीणत्वाद् अ[न]न्यथासिद्धेन्द्रियान्वयव्यतिरेकानुविधानादैन्द्रियकत्वमिति चक्रकं दुर्वारम् ॥

॥ अज्ञायमानकरणज्ञानत्वस्यानुभवसाक्षात्कारस्वरूपातिरिक्तस्मृतौ व्यभिचारः, तत एवानुभवप्रत्यक्षव्यावृत्तत्वस्योपपत्तिश्च ॥

अज्ञायमानकरणज्ञानत्वादिति तृतीयोऽपि हेतुः स्मृतौ व्यभिचारी । स्मृतेरपि

---

सत्तेश्चक्षुरवान्तरव्यापारत्वं युक्तमित्यर्थः । अभावग्रहेऽपि नेत्रावान्तरव्यापारत्वं परस्परप्रत्यासत्तेः किं न स्यात् ? अत्राह—**इह त्विति** ॥ चक्षुषोऽभावप्रतीतिहेतुत्वप्रतीतौ तन्निर्वाहकत्वेन प्रत्यासत्तेस्तदवान्तरव्यापारत्वम्, ततश्च तेनाव्यवधानादभावप्रतीतिहेतुत्वमितीतरेतराश्रयतेत्यर्थः । **एतेनेति** परामृष्टहेतुं स्पष्टयति—**सविकल्पकानामपीति** ॥ सविकल्पकप्रत्यक्षम्, इन्द्रियकरणकम्, कार्यत्वे सति साक्षात्कारित्वात् ; निर्विकल्पकवदित्यनुमानेन कार्यत्वात्कारणपूर्वकत्वे सिद्धे सतीन्द्रियातिरिक्तिकारणानुपपत्तौ[सिद्धौ] परिशेषतोऽपीन्द्रियकारणत्वसिद्धिरित्यर्थः ॥

प्रतिबन्दीमुन्मुच्य प्रकृतमुपसंहरति–**तस्मादिति** ॥ अभावज्ञान इन्द्रियस्य कारणत्वप्रतीतौ तदवान्तरव्यापारत्वं प्रत्यासत्तेः प्रतीयते, ततश्चान्यत्रानुपक्षीणेन्द्रियान्वयव्यतिरेकाभ्यामभावप्रतीतेः तत्कारणत्वमिति चक्रकमित्यर्थः ॥

---

1. व्यावारणावग (क)

साक्षान्मनोजन्यत्वेन सपक्षत्वमिति चेत्, संस्कारकारणत्वानभ्युपगमे सुखादिप्रतीतिवत् साक्षात्कारित्वानुभवत्वप्रसङ्गात्। न तावदनुभवत्वम्; संस्कारातिरिक्तासाधारणकारणाभावात्। नापि साक्षात्कारित्वम्; इन्द्रियार्थसन्निकर्ष[1]समुत्थत्वाभावादिति चेत्, मैवम्; एवमात्मप्रतीतेरप्यननुभवतापातात्, आत्मसन्निकृष्टस्य मनसः सर्वप्रतीतिसाधारणत्वात्। इन्द्रियार्थसन्निकर्षसमुत्थत्वाभावो नासाक्षात्त्वप्रयोजकः; तदभावेऽपीश्वरज्ञानस्य साक्षात्त्वेन व्यतिरेकाभावात्। स्मृतेः साक्षाद् मनोजन्यत्वेऽननुभूतेऽपि तत्प्रसङ्गो दुर्वारः। संस्कारस्यार्थप्रत्यासत्तित्वस्वीकाराद् नेति चेत्, न; लिङ्गादेरपि प्रत्यासत्तित्वमिति लैङ्गिकादिप्रतीतेरपि साक्षाद् मनोजन्यत्वप्रसङ्गात्॥

॥ अभावज्ञानस्य बाह्यानुभवत्वेन साक्षात्त्वानुमानमपि व्यभिचारि;
अनुपलब्धेरभावेनाव्याप्तेः; प्रातर्मन्दिरे
मैत्रो नासीदिति सायमुदीयमानसंवेदनव्यभिचारादिरपि दुर्निवारः॥

स्मृतीतरत्वविशेषणे चाभावप्रमेतरत्वेनापि विशेषणीयम्, अविशेषात्। योऽपि 'बाह्याऽनुभवत्वात्' इति हेतुः, स प्रातर्मन्दिरे मैत्रो नासीदिति सायं समुदीयमानसंवेदनेनानैकान्तिकः। नो खलु तत्र सायमनुसन्धीयमानप्रातस्तनानुपलब्धिर्लिङ्गतया बोधिका; अनुपलब्धेरभावेन व्याप्तेरसंवेदनात्। तथा हि—न तावदनुपलब्धेरभावेन व्याप्तिः; बहिरिन्द्रियैर्ग्राह्यत्वात्, [अ]गोचरत्वादनुपलब्धेः, अभावस्यापि तद्गोचरत्वेऽविवादात्। नापि [2]मनसा; '[तस्या]बहिरस्वातन्त्र्यात्'

---

संस्कारेतरासाधारणकारणजत्वं धियोऽ[र]नुभवत्वे प्रयोजकम्, इन्द्रियसन्निकर्षजत्वं साक्षात्त्वे, ततो न प्रसङ्ग इति शङ्कते—**न तावदिति**॥ आत्मप्रतीतौ तत्सन्निकृष्टमन एवासाधारणं कारणम् अत्राह—**आत्मसन्निकृष्टस्येति**॥ मनस्संयुक्तात्मनि समवेतः संस्कारः, तस्य विषयः पूर्वानुभूतोऽर्थः, इति संयुक्तसमवेत विशेषणविशेष्यभावसंसर्गः, मनसः स्मर्तव्यार्थेन संस्कार एव वा संसर्गः, ततो नादृष्टचरे स्मृतिप्रसङ्ग इति शङ्कते—**संस्कारस्येति**॥ स्मृतीतरत्वे सत्यज्ञायमानकरणजज्ञानत्वादिति विशेषणीयो हेतुः; अत्राह—**स्मृतीति**॥ **अविशेषादिति**॥ स्मृतीतरत्वविशेषितमिन्द्रियजत्वे प्रयोजकम्, अभावप्रमेतरत्वविशेषितं वेति नियामकाभावादित्यर्थः। प्रातर्मन्दिरे मैत्रमनुपलभ्य सायं तदनुपलब्धिमनुसन्धत्ते, साऽनुसन्धीयमानाऽनुपलब्धिः प्रातर्मैत्राभावं लिङ्गतया गमयति, ततो नानैकान्त्यम्,

---

1. समत्वाभावादिति 2. मनसा तस्य बहि

उपलब्धेरमानसत्वेनानुपलब्धेरपि तदयोगाच्च । अनुमानादेव व्याप्तिसंवेदने परस्पराश्रयः, अनवस्था वा । अतः प्रातर्मैत्रासत्त्वसंवेदनस्यानुपलब्धिमात्रप्रयुक्तत्वात् स्पष्टमनैकान्त्यम् , तस्यापि पक्षनिक्षेपे तस्मिन्नेव भागे बाधात् ॥

॥ इन्द्रियमभावज्ञानकारणम् , तत्समर्थत्वादित्यनुमानस्य सामर्थ्यस्य दुर्वचत्वादिना दूषणम् ॥

यत्पुनः [1]प्रतियोगिनि सामर्थ्यादिति, तत्सामर्थ्यम् , तद्धीजनकत्वं वा ? तद्धीकारणसाकल्यवत्त्वं वा ? तदतिरिक्तातीन्द्रिययोग्यता वा ? नाग्रिमः ; तद्धीजनकत्वात् तदभावधीजनकत्वमिति व्याघातात् । न हि यद्यस्य भावं यदा बोधयति, तत्तदा तदभावबोधकम् ; अतिप्रसङ्गात् । तत एव न द्वितीयः । न तृतीयः ; सिद्धान्तविरोधात् , "ज्योतिष्टोमेन स्वर्गकामो यजेत"इति वाक्येन यागस्वर्गसम्बन्धबोधकेन तदभावप्रमाऽजनकेन व्यभिचाराच्च ।

॥ इन्द्रियम् , आभावज्ञानकरणम् , अभावज्ञानं प्रत्यव्यवहितपूर्वकालत्वादित्यनुमानस्यासिद्ध्या दूषणम् ॥

अभावज्ञानं प्रत्यव्यवहितपूर्वकालभावित्वमसिद्धम् ; विषयतदितरकारणसाकल्यलक्षणयोग्यत्वेन व्यवधानात् , भावान्धकारराद्धान्तेऽन्तरेणाधिकरणग्रहणमन्धकाराध्यक्षणात् , अधिकरणग्रहणस्य 'धरातले जलधरो नास्ती'ति प्रतिषेधे करणव्यापारत्वायोगाच्च ॥

॥ इन्द्रियम् , अभावज्ञानकरणम् , तद्विपर्ययकरणत्वादित्यत्र विपर्यये योग्यताया एव दुष्टत्वेन तद्विशिष्टानुपलब्धेरेवाभावनिर्णयान्न दुष्टेन्द्रियजत्वमिति परिहारः ॥

---

अत्राह—**नो खल्विति** ॥ **परस्पराश्रय इति** ॥ व्याप्तिग्रहे सत्यनुमानप्रवृत्तिः, अनुमानप्रवृत्तौ चानुपलब्धेरभावेन व्याप्तिग्रह इत्यर्थः । **बाधादिति** ॥ अनुपलब्धिमात्रजत्वस्थितौ तदतिरिक्तजत्वसाधने बाध इत्यर्थः ॥

अभावज्ञानं प्रत्यव्यवहितपूर्वकालभावित्वादिति हेतुर्विशेषणासिद्ध इत्याह—**अभावज्ञानं प्रतीति** ॥ अधिकरणग्रहणस्य करणावान्तरव्यापारत्वाद् न तेन व्यवधानम् , आह—**भावेति** ॥ इन्द्रियादेर्योग्यताऽर्थान्तर्गममात्रेण प्रकृते तव

---

1. पृ. 307 प. 10

[1]यदपि तद्विपर्ययकारणत्वादिति, तदन्यथासिद्धम् । विषयतदधीनेतरेन्द्रियादिकारणसाकल्यलक्षणयोग्यपदार्थपक्षनिक्षिप्तत्वादिन्द्रियादेः, तद्दोषे योग्यतैव दुष्टेति [2]न तद्विशिष्टानुपलब्धेरेवाभावविपर्ययः, न दुष्टेन्द्रियमात्रनिबन्धनत्वम्, अलिङ्गे लिङ्गत्वारोपाल्लैङ्गिकारोपवत्; अपरथा गृह्यमाणमात्रवस्तुनि तदारोपप्रसङ्गात् ॥

॥ विशिष्टधिय इन्द्रियजत्वाभावे सप्तमप्रमाणत्वापत्तिरिति शङ्कापरिहारः ॥

[3]यत्पुनरुदितम्—विशिष्टधीः, अवश्यमिन्द्रियकरणिकाऽऽस्थेया, प्रमाणान्तरं वा सप्तमम्—इति, तदसारम्; सुरभि चन्दनमित्यादिविशिष्टप्रत्ययेऽपि समानत्वात्, त्वगिन्द्रियस्य [4]चक्षुषश्च चन्दनमात्रोपक्षीणत्वात्, घ्राणस्य गन्धमात्रोपक्षीणत्वात् । गन्धज्ञानसहकृतत्वाच्चक्षुषा सुरभि चन्दनमिति विशिष्टप्रत्यय इति चेत्, अधिकरणोपलब्धिसहायानुपलब्ध्या 'अघटं भूतलम्' इति विशिष्टधीरस्यापि स्यात् ॥

॥ सुरभि चन्दनमित्यादाविव विशेषणग्राहकस्यैव न विशिष्टग्राहकत्वमिति विशिष्टधीरभावप्रमाणिकैव ॥

किं चाघटं भूतलमिति विशिष्टबुद्धेः पूर्वमेव विशेषणस्याभावस्य ग्रहणं वाच्यम्; विशेषणग्रहणकार्यत्वाद् विशिष्टबुद्धेः । न च विशिष्टे सामर्थ्यमस्तीति विशेषणेऽपीन्द्रियसामर्थ्यम्; केवलसौरभेऽपि चक्षुःसामर्थ्यप्रसङ्गात् । तस्मादभावात्मनो विशेषणस्य ग्रहणाय षष्ठं प्रमाणमास्थेयम् ॥

---

किं स्यात्? अत्राह—**तद्दोष इति** ॥ **[तद्वि]शिष्टेति** ॥ दुष्टयोग्यानुपलब्धेरित्यर्थः । दुष्टेन्द्रियमात्रनिबन्धनत्वमभावविपर्ययस्य; लाघवात्, अत्राह—**[अप]रथेति** ॥ अनुपलब्धिनिरपेक्षदुष्टेन्द्रियस्य तद्धेतुत्वे गृह्यमाण एव शुक्तीदमंशादौ तदभावभ्रमो भवेदिति भावः ॥

एवं तावदु द य नोदितहेतुकलापमुन्मूल्य स्वपक्षसाधनमुपक्रमते — **किञ्चेति** ॥ अभावविशिष्टावनिग्रहणसमर्थमिति न षष्ठप्रमाणोपयोगः, अत्राह—**न चेति** ॥

---

1. पृ. 307 प. 3
2. "न" नास्ति
3. पृ. 307 प. 14
4. चक्षुषः चन्दनमात्रोपक्षीणत्वात्, घ्राणस्य गन्धमात्रोपक्षीणत्वात्

॥ अभावनिर्विकल्पासम्भवात्, तत्सविकल्पकस्य षष्ठप्रमाणैकगोचरत्वम् ॥

यदि चाभाव ऐन्द्रियकसविकल्पग्राह्यः, ततो निर्विकल्पकेनासौ पूर्वं गृहीतव्यः; निर्विकल्पकपूर्वत्वाद्विकल्पस्य। न चाभावे निर्विकल्पकसम्भवः; प्रतियोग्याद्यवच्छेदेनैव तस्य स्फुरणात्। न च षष्ठप्रमाणवादिनोऽप्ययं प्रसङ्गः; ऐन्द्रियकविकल्पस्यैव तत्पूर्वकत्वनियमात् ॥

॥ प्रतियोग्यनुपलब्धेरभावप्रतीतिसहकारित्वस्योभयसम्मतत्वात्
क्लृप्तत्प्रमाणतैव युक्ता ॥

किं चाभावप्रत्यक्षवादिनाऽपि [1]प्रतियोगिनोऽनुपलब्धिरवश्यमिन्द्रियसहकारित्वेनाङ्गीकर्तव्या। तथा च सैवोभयवादिसिद्धाऽभावज्ञानहेतुरस्तु; लाघवात् ॥

॥ प्रतियोगिनिरूप्यत्वं पूर्वग्रहणे प्रयोजकम्, ज्ञानादिवदभावोऽपि
प्रतियोगिनिरूप्यः। अतस्तन्निर्विकल्पकमपि स्वीकर्तव्यम्,
इति तत्रेन्द्रियकरणत्वादैन्द्रियकत्वमभावस्येत्यु द य ना शङ्का ॥

स्यादेतत्—न हि पूर्वं ग्रहणे विशेषणत्वं प्रयोजकम्, नाप्यालोचकत्वे विकल्पवेद्यत्वम्, किं तु प्रतियोगिनिरपेक्षनिरूपणीयत्वम्; ज्ञानसमवायादौ तथाऽवसायात्, न चेदेवम्, प्रमाणान्तरेऽपि सर्वमेतद् दुर्घटं स्यात्। तथा हि—सर्वमेव मानं साक्षात्, परम्परया वा निर्विकल्पकविश्रान्तम्। न ह्यनुमानादिकम-

---

अभावस्य योग्यानुपलब्धिगम्यत्वे हेत्वन्तरमाह—**यदि चेति** ॥ अभावस्य षष्ठप्रमाणगम्यत्वेऽपि निर्विकल्पकग्राह्यत्वप्रसङ्गस्तुल्यः, अत्राह—**न च षष्ठेति** ॥

अभावविशिष्टस्येन्द्रियविकल्पवेद्यत्वे विशेषणस्याभावस्य पूर्वग्राह्यत्वमालोचनीयत्वं च स्यादिति यदुक्तम्, तत्रो द य नश्चोदयति—**स्यादेतदिति** ॥ प्रतियोग्यनपेक्षनिरूप्यत्वमेव पूर्वग्राह्यत्वादौ प्रयोजकम्, न विशेषणत्वादित्व[मि]ति कुतोऽधिगमः? अत्राह—**ज्ञानेति** ॥ पृथक्त्वादिरादिपदार्थः। **तथाऽवसायादिति** ॥ प्रतियोगिनिरूप्ये ज्ञानादौ पूर्वग्रहणमन्तरेण विशिष्टबुद्धिविषयत्वं केवलविकल्पनीयत्वं चेति निश्चयादित्यर्थः। उक्तमर्थं व्यतिरेकदण्डेन द्रढयति—**न चेति** ॥ **साक्षात् परम्परया वेति** ॥ साक्षात्=प्रत्यक्षम्, परम्परया=आनुमानादिकमित्यर्थः। तदुपपादयति—**तर्ही[तही]ति** ॥ व्याप्त्यादिग्राहकप्रत्यक्षस्यावश्यकत्वादिति भावः ॥

---

1. विप्रतियोगिनोऽनुपल

प्यनालोचनपूर्वकम्; ततोऽनालोचितोऽभावः कथमनुपलब्ध्या विकल्प्यताम्? न च तथा तदालोचनमेव गम्यते; प्रतियोग्याद्यनवच्छिन्नस्य [तस्य][1] निरूपयितुमशक्यत्वात्, शक्यत्वे वा किमपराद्धमिन्द्रियेणेति?

॥ सर्वस्य प्रमाणस्य निर्विकल्पकविश्रान्तत्वं न नियतम्; अनुमाने व्यभिचारात्, अभावप्रत्यक्षं तु सविकल्पकमेव। न च तत्रेन्द्रियस्य सामर्थ्यमित्यादिकं पूर्वोक्ताभावातिरिक्तप्रमाणत्वसाधकमत्रोपन्यस्यते ॥

अत्रोच्यते—विशिष्टवेदनस्यैन्द्रियकविकल्पस्य क्वचिद्विशेषणवेदनालोचनव्यभिचारे तत्कार्यत्वमेव न स्यात्; व्यतिरेकावसेयत्वात् कार्यकारणभावस्य। तथा च विकल्पस्यैवैन्द्रियिकत्वहानिः; निर्विकल्पकव्यवधानात्। न च प्रतियोगिनिरपेक्षवेद्यत्वं प्रयोजकम्; यत्रोपाधेरभावः, तत्र साध्याभाव इति व्यतिरेकस्य दर्शयितुमशक्यत्वात्। ज्ञानादौ व्यतिरेकग्रह इति चेत्, न; ज्ञानस्य स्वप्रकाशस्य व्याप्तिग्रहागोचरत्वात्, समवायस्य स्वरूपेणैवासिद्धेः। व्यतिरेकरहितस्यापि प्रयोजकत्वे भवताऽभिधीयमानो न्यायः सर्वोऽपि भावविषय इति मयापि शक्यत एवाभिधातुम्। न च सर्वं प्रमाणं

---

यस्मादालोचनपूर्वकत्वनियमः प्रमाणानाम्, तस्माद् नानुपलब्धिगम्योऽप्यभाव इत्याह—**तत इति** ॥ **गम्यत इति** ॥ प्राप्यत इत्यर्थः ॥

विशिष्टवेदनस्य विशेषणवेदनकार्यत्वमैन्द्रियकविकल्पस्य निर्विकल्पककार्यत्व- [ञ्चो]रीकुर्वताऽभावविशिष्टविकल्पस्यैन्द्रियकत्वे तदुभयमभावेऽभ्युपेयमित्याशयेनाह—**अत्रोच्यत इति** ॥ कुत एतत्? अत्राह—**व्यतिरेकेति** ॥ यज्जातीयाभावे यज्जातीयं न भवति, तत्तत्कार्यमिति केवलव्यतिरेककल्प्यः कार्यकारणभाव इति भावः ॥

मा भूदत्र कार्यकारणभावः; ततोऽपि किमनिष्टं पर्यवसानस्य? तत्राह—**तथा चेति** ॥ निर्विकल्पकस्य सविकल्पकाजनकत्वं नेन्द्रियावन्तरव्यापारत्वम्, तज्जन्यजनकस्तद्व्यापार इति लक्षणत्वादित्यर्थः। हेतुमाह—**यत्रेति** ॥

'साध्याभावाविनाभावी स उपाधिर्यदत्ययः'

इति साध्याभावव्याप्यत्वमुपाध्यभावस्य वदता प्रतियोगिनिरपेक्ष[वे]द्यत्वाभावे

---

1. तस्यनिरू

निर्विकल्पकविश्रान्तम् ; अनुमेयस्य प्रत्यक्षाविषयस्य कदाचिदपि निर्विकल्पाविषयत्वात् । यत्किञ्चिदालोचनं प्रकृतेऽपि न दण्डवारितम् ; अधिकरणप्रतियोगिनोरन्ततोऽप्यालोचनीयत्वात् । विमतोऽभावः, नाध्यक्षः, अभावत्वात् ; अनुमेयाभाववत् । विपक्षे संप्रतिपन्नानुपलब्धिव्यतिरेकेणेन्द्रियकरणत्वकल्पनागौरवं बाधकमित्यलमसद्ग्रहेण ॥

॥ भावानुपलब्धेरभावग्राहित्वेऽभावानुपलब्धेर्भावग्राहकत्वापत्तिरिति लीलावतीशङ्का, इन्द्रियस्याभावग्राहकत्वे शुक्तौ सर्वदा रूप्याभावग्रहापत्त्यादिना भ्रमाद्यभावप्रसङ्गेन तत्परिहारश्च ॥

यदि भावानुपलब्धेरभावग्राहितेष्येत, तर्हि, अभावानुपलब्धिरेव भावस्यापि ग्राहिका स्यादिति **श्रीवल्लभ** इति चेत्, स प्रष्टव्यः—केवलमिन्द्रियमभावग्राहकम्, अनुपलब्धिसहकृतं वा ? उभयं वा ? इति । आद्ये शुक्तिसन्निकृष्टचक्षुषा रूप्याभावग्रहापत्त्या तद्भ्रमो न स्यात् । द्वितीये चरमव्यापारत्वं करणत्वमिति तल्लक्षणयोगादनुपलब्धेरपि करणत्वं स्यात् । तृतीये अभावज्ञानस्येन्द्रियजत्वेन साक्षात्त्वम्, अनिन्द्रियजत्वेनासाक्षात्त्वमिति विरोधः स्यात् ॥

॥ दोषस्य शुक्तौ रजताभावग्रहप्रतिबन्धकत्वशङ्कातत्परिहारौ ॥

अथ—भ्रमे रजताद्यभावस्याग्रहणं नेन्द्रियस्याभावा[1]ग्राहकत्वाभावात्, अपि तु

---

विशिष्टविकल्पस्य विशेषणवेदनालोचनपुरस्सरत्वाभावो दर्शनीय इत्यर्थः । **प्रत्यक्षाविषयस्येति** ॥ परमाण्वादेरित्यर्थः । सामान्योपाधौ व्याप्तिग्रहे निर्विकल्पकगोचरत्वमनुमेयस्यापीति, अत्राह—**यत्किञ्चिदिति** ॥ उक्ततर्कस्यानुग्राह्यप्रमाणमाह—**विमत इति** ॥ घटादिः, नाध्यक्षः, भावत्वात्, गगनादिवदित्याभाससमत्वं न शङ्कनीयम् ; विपक्षबाधकभावाभावाभ्यां वैषम्यादित्याह—**विपक्ष इति** ॥

तदेवं योग्यस्यानुपलम्भादभावप्रमेति स्थिते लीलावतीकारः प्रत्यवतिष्ठते—**यदीति** ॥ भावाभावयोस्तुल्यगतित्वाद्भावस्यैन्द्रियकत्वमभ्युपगच्छताऽभावस्य तदभ्युपेयमिति भावः । **चरमव्यापारत्वमिति** ॥ यस्य व्यापारानन्तरं कारकान्तरं न व्याप्रियते, तच्चरमव्यापारं करणमिति लक्षणयोगादनुपलब्धेरपि करणत्वे तदतिरिक्तेन्द्रियस्यापि करणत्वकल्पनागौरवमित्यर्थः ॥

इन्द्रियस्य केवलस्याभावग्राहकत्वे शुक्तौ रूप्याभावधीः स्यात्, अतो

---

1. अभावग्रा

शुक्तिकादिवद्दोषसामर्थ्यात्, अतोऽनुपलब्धेर्नाभावग्राहकत्वम् — इति, तन्न; दोषः सामर्थ्यादभावाग्रहणमिति कोऽर्थः ? किमग्रहो भवति ? ग्रहो वा तेन प्रतिबध्यते ? नाद्यः; ग्रहप्रागभावस्यानादित्वात्। न द्वितीयः; अनुत्पन्नस्य प्रतिबन्धासिद्धेः। तज्जन्मप्रतिबन्ध इति चेत्, न; अभावप्रतीतिसामग्र्यां तदसिद्धेः। दोषाभावोऽपि हेतुरिति चेत, न; तस्य प्रामाण्यप्रयोजकस्य ज्ञानसामग्र्य[न]न्तर्भावात्। अस्माकं तु दोषात् करणस्य विशेषधीजननशक्तिः प्रतिबध्यते। न चैवं तव; स्वरूपातिरिक्तातीन्द्रियशक्तेरनङ्गीकारात्॥

॥ अभावानुपलम्भाद् भावानुपलम्भो न साध्यताम्, न वा प्रसञ्जनमर्हति, सर्वैन्द्रियकत्वनिरासप्रसङ्गात्॥

किं चाभावानुपलम्भाद् भावोपलम्भः साध्यते, प्रसज्यते वा ? अद्ये चक्षुराद्यन्वयव्यतीरेकविरोधः। घटाद्यधिकरणभूतकालादिग्राहकत्वेनात्राप्यन्यथासिद्धिरिति चेत्, न; क्वचिद् भावसाक्षात्क[1]रणस्येन्द्रियजत्वे घटादिसाक्षात्कारस्य तदनुमानात्, अन्यथा भूतलादिसाक्षात्कारोऽपि नेन्द्रियजः, तदन्वयव्यतिरेकयोस्तदाश्रयग्राहकत्वपरमाणुपर्यन्तधावनेन किंस्विदैन्द्रियकं स्यात्। न द्वितीयः; विपर्ययापर्यवसायितया प्रसङ्गाभासत्वादिति यत्किञ्चिदेतत्॥

---

नेन्द्रियस्याभावग्राहकत्वमित्युक्तम्, तत्र शङ्कते—**अथेति**॥ अभावस्येन्द्रियग्राह्यस्य दोषादग्रहे दृष्टान्तः—**शुक्तित्वेति**॥ रूप्याभावग्रहस्यानुत्पन्नत्वे न प्रतिबन्धः; असत्त्वात्, उत्पन्नत्वे रूप्यभ्रमो न भवेदित्युक्तम्, तत्र चोदयति— **तज्जन्मेति**॥ रूप्याभावप्रतीतिसामग्री किमस्ति ? किं वा नास्ति ? प्रथमं प्रत्याह—**नेति**॥ दोषाभावरूपकारणाभावान्न सामग्री विद्यत इति द्वितीयमालम्बते—**दोषेति**॥ दोषवशाच्छुक्तित्वादिविशेषाग्रहो भवताऽप्यभिधेयः। तत्र कथितविकल्पदोषसाम्यम्, अत्राह — **अस्माकं त्विति**॥

घटाभावप्रतीतेश्चक्षुराद्यनुविधानमन्यथासिद्धम्; अधिकरणग्रहणोपयुक्तत्वादिन्द्रियस्य यथा, तथा घटादिप्रतीतेरिन्द्रियानुविधानमन्यथासिद्धमित्याह— **घटाद्य-**

---

1. कारणस्य

॥ अभावप्रतीतेरिन्द्रियजत्ववादस्य वादीन्द्रिमितस्यान्यसंयोगादन्यसंयोगवेदनायोगेन निरासः ॥

यदप्यत्र **वादीन्द्रेण** प्रलपितम्—नेयमिन्द्रियजा, इन्द्रियसन्निकर्षाजन्यत्वात्, अनुमितिवत् – इति, अत्रासिद्धो हेतुः । इह भूतले घटो नास्तीति प्रतीतेरिन्द्रियभूतलसंयोगजन्यत्वादिति, तदतिमन्दम्, अन्यसंयोगादन्यसंवेदनोत्पादे कलशनेत्रसंयोगादेव रूपादिवेदनोपपत्तेः संयुक्तसमवायादिलोपप्रसक्तेः ॥

॥ बहिरिन्द्रियाणामभावप्रत्यक्षत्वसाधकानुमानस्य, घटाद्यभावप्रत्यक्षत्वसाधकचतुरनुमानानां च हेतुविशेषवैयर्थ्यसत्प्रतिपक्षसिद्धसाधनव्यभिचारादिना निरासः ॥

यदपि—स्वपक्षसाधनम्—अस्मदादिबहिरिन्द्रियाणि, अभावप्रमाजनकानि, इन्द्रियत्वात्, मनोवत्—इति, तदस्मदादिविशेषणवैयर्थ्यादसत् । अस्मदादिबहिरिन्द्रियाणि, सुखादिप्रमाजनकानि, इन्द्रियत्वात्; मनोवदित्याभासमानत्वाच्च । घटाभावः, साक्षात्कारविषयः, कार्यसाक्षात्कारविषयो वा, योगजधर्माजन्येन्द्रियसक्षात्कारविषयो वा, मदचाक्षुषैतज्ज्ञानव्यतिरिक्तज्ञानविषयो वा, मेयत्वात्; घटवदिति चेत् नाद्यः, ईश्वरसाक्षात्कारविषयत्वेन सिद्धसाधनात् । द्वितीयादावदृष्टादौ व्यभिचारः ॥

॥ अदृष्टस्य योगजप्रत्यक्षविषयत्वखण्डनम् ॥

न च—अदृष्टादि, कस्यचित् प्रत्यक्षम्, मेयत्वात्; घटवदिति—वाच्यम्; अदृष्टादीनां प्रत्येकं धर्मित्वे तदतिरेकेण व्यभिचारात्, मिलितानां धर्मित्वे हेतोराश्रयासिद्धेः, तेषां मिलितरूपेणैकप्रमाणागोचरत्वात्, अप्रमितस्य च भवता-

---

**धिकरणेति** ॥ **तदनुमानादिति** ॥ घटादिसाक्षात्कारः, इन्द्रियजः, कार्यत्वे सति भावसाक्षात्कारत्वात्, भूतलसाक्षात्कारवदित्यर्थः ॥

घटाभावपक्षीकरणेन तस्य प्रत्यक्षत्वे प्रयोगं रचयति—**घटाभाव इति** ॥ **मेयत्वाद् घटवदिति** षट्स्वपि प्रयोगेषु हेतुदृष्टान्तौ । **कार्यसाक्षात्कारविषय इति** ॥ **सेश्वरमीमांसकं** प्रतीश्वरसाक्षात्कारविषयत्वेन सिद्धसाधनत्वं व्यावर्तयितुम्—**कार्येति** विशेषणम् । तृतीयप्रतिज्ञाविशेषणं योगीश्वरसाक्षात्कारव्यावृत्त्यर्थम्—मदचाक्षुषैतज्ज्ञानव्यतिरिक्तज्ञानविषय इति । मदीयं [अ]चाक्षुषं च तदेतस्य घटाभावस्य ज्ञानं मदचाक्षुषैतज्ज्ञानम्, तस्माद् व्यतिरिक्तज्ञानस्य विषय इत्यर्थः । मदचाक्षुषैतज्ज्ञानव्यतिरिक्तज्ञानविषयो न भवति, मेयत्वात्, घटवदिति

मधर्मित्वात्, योगिनामृषीणां वेन्द्रियम्, नादृष्टादिग्राहकम्, इन्द्रियत्वात् असदादीन्द्रियवत्, योगिप्रभृतयः, नादृष्टादिसाक्षात्कारिणः, पुरुषत्वात्; अहमिव; आत्मत्वम्, न सर्वज्ञवृत्ति, जातित्वात् गोत्ववदित्यादिना सर्वज्ञप्रतिषेधाच्च। धर्मिप्रमितौ बाधः, अन्यथाऽऽश्रयासिद्धिरिति चेत्, न; प्रतिबिम्बादिवदाभासप्रतिपन्नस्याश्रयत्वात्, अन्यथाऽऽश्रयसिद्धिं प्रतिज्ञाय तत्सिद्ध्यर्थमुपन्यस्यमानहेतोरपि तदापत्तेः॥

न च—सर्वज्ञासिद्धौ तद्वृत्तिनिषेधोऽशब्दः, अप्रसिद्धप्रतियोगिकत्वादिति—वाच्यम्; आभासप्रतिपन्नस्यैव सर्वत्र प्रतिषेध्यत्वात्, अन्यथाऽतिप्रसङ्गात्॥

॥ घटाभावज्ञानस्येन्द्रियजत्वसाधकानुमानान्तरदूषणम्॥

विमतं घटाभावज्ञानम्, इन्द्रियजम्, अनुमितित्व-शाब्दत्वरहितकार्यप्रमात्वात्; घटसाक्षात्कारवदिति चेत्, न; कार्यसाक्षात्कारित्वोपाधेः, इतरथा विमतम्, [अ]बाह्येन्द्रियजम्, प्रत्यक्षत्वरहितकार्यज्ञानत्वात्; अनुमितिवदिति स्यात्। न चोक्तोपाधेरिन्द्रियजगुणेषु साध्याव्यापकत्वम्; ज्ञानस्येन्द्रियजत्वे तस्योपाधित्वात्। न च साधनव्यापकत्वम्; इन्द्रियसन्निकर्षाजन्यस्य परोक्षत्वात्॥

---

सत्प्रतिपक्षत्वम्। अदृष्टादीनामप्रत्यक्षत्वसाधनमाह—**योगिनामिति**॥ **इत्यादिनेति**॥ योगिप्रभृतीनां साक्षात्कारः, नादृष्टादिगोचरः, साक्षात्कारत्वात्, मदीयसाक्षात्कारवदित्यादिपदार्थः॥

**विमतमिति**॥ **घटाभावेति**॥ शब्दजन्यज्ञानभागे बाधपरिहारार्थं विशेषणम्। उपमित्यर्थापत्तिप्रमाभ्यां व्यभिचार इत्यभिप्रायेण दूषयति—**नेति**॥ व्याप्यत्वासिद्धिश्चेत्याह—**कार्येति**॥ विपक्षबाधेनोपाधिं द्रढयति—**इतरथेति**॥ **प्रत्यक्षत्वरहितेति**॥ भावविषयत्वरहितेत्यर्थः। इन्द्रियगुणेषु व्यभिचारवारणायोक्तम्—**ज्ञानत्वादिति**॥ ईश्वरज्ञानं व्यावर्तयति—**कार्येति**॥ इतरथा बाह्येन्द्रियव्यतिरिक्तेनैव जन्यत्वमबाह्येन्द्रियजत्वमीश्वरज्ञाने नास्तीति व्यभिचारः स्यात्। अत्रासाक्षात्कारित्वमुपाधिः परेण वाच्य इत्यर्थः। **इन्द्रियसन्निकर्षाजन्यस्येति**॥ बाह्येन्द्रियस्य कलशनास्तित्वेन संयोगादिसन्निकर्षायोगात् विशेषणविशेष्यभावस्यैकस्योभयनिष्ठसम्बन्धत्वासिद्धेरनिन्द्रियसन्निकर्षजत्वात्परोक्षमभावज्ञानमित्यर्थः॥

॥ घटानुपलब्धेर्न घटोपलब्धिप्राक्प्रध्वंसान्योन्याभावरूपत्वम्, किन्तूपलब्धिसंसर्गाभावरूपत्वमिति सदृष्टान्तमुपपादनम् ॥

घटानुपलब्धिः किं घटोपलब्धेः प्रागभावः ? प्रध्वंसो वा ? अत्यन्ताभावो वा ? अन्योन्याभावो वा ? न प्रथमद्वितीयौ ; घटोपलम्भानन्तरमेव सन्निहितदेशे घटतदभावोपलम्भात् । न तृतीयः ; तत एव, घटोपलम्भवति तदत्यन्ताभावासम्भावात् । न चतुर्थः ; सर्वदाऽभावज्ञानप्रसङ्गात् ॥

॥ इन्द्रियसहकृतानुपलब्धेरभावसाधनत्वम्, न त्वनुपलब्धिसहकृतेन्द्रियस्य ; उभयत्र दोषतौल्यात् । प्रथमपक्षस्यैव पूर्वोक्तविधयोचितत्वात् ॥

घटानुपलब्धिः, नाघटं भूतलमिति ज्ञानजनिका, भावानुपलब्धित्वात्, घटोपलब्ध्यभावत्वात् ; [प]टानुपलब्धिवत्, पटोपलब्ध्यन्योन्याभाववच्चेति । निषेधाच्चानुपलब्धिर्नाभावप्रमाहेतुरिति चेत्, न ; अनुपलब्धेरिन्द्रियसहकारित्वेऽपि दोषपरम्परायास्तुल्यत्वात् ॥

किञ्च वह्न्यभावे धूमाभाव इति व्यतिरेकावधारणे किं वह्नेः प्रागभावे धूमाभावः, प्रध्वंसे वा, अत्यन्ताभावे वा, अन्योन्याभावे वा ? आद्ये वह्निप्रध्वंसे धूमः स्यात्, कदाचिद् वह्निसंसृष्टे तदत्यन्ताभावासम्भवात् । तुरीये सदा धूमो न

---

अनुपलब्धिस्वरूपपर्यालोचनया तत्प्रामाण्यखण्डनाय विकल्पयति—**घटानुपलब्धिरिति** ॥ **घटोपलम्भानन्तरमेवेति** ॥ घटोऽयमित्युपलम्भस्यानन्तरक्षणे सन्निहितदेशे घटतदभावयोरुपलम्भादुपलब्धिप्रागभावस्यानुपलब्धित्व उपलम्भानन्तरक्षणे तदभावाद् घटसमीपदेशे तदभावोपलम्भो न भवेत् । प्रध्वंसस्यानुपलब्धित्वे घटोपलम्भानन्तरं पुरोदेशे पुनर्घटोपलम्भो न भवेत् । अभावप्रमाहेतोरुपलम्भप्रध्वंसस्य भावादिति भावः । **तत एवेति** ॥ घटोपलम्भानन्तरं सन्निहितदेशे घटाभावोपलम्भादेवेत्यर्थः । केवलेन्द्रियस्याभावधीहेतुत्वे शुक्तिसन्निकृष्टे चक्षुषि रूप्याभावप्रतीत्यापत्त्या तद्भ्रमासम्भवप्रसङ्गादनुपलब्धिसहकृतमिन्द्रियमभावग्राहकं वाच्यम् । एवं च त्वदुक्तो बाधः त्वय्येव निपतेदिति परिहरति—**नेति** ॥ स्वकीयव्याघातापत्त्या जात्युत्तरत्वेन चासत्त्वमित्याह—**किं चेति** ॥

स्यात् । वह्न्यभावः, न धूमाभावव्याप्यः, अभावत्वात्, घटाभाववदिति व्यतिरेकासिद्धावनुमानानुपपत्त्या जात्युत्तरप्रसङ्गाच्च ॥

यदि तत्र [[1]वह्निसंसर्गा]भावः प्रयोजकः, तर्हि प्रकृतेऽप्युपलब्धिसंसर्गाभावस्तथेति समानम् । नेदं ज्ञानम्, घटानुपलब्धिजन्यम्, अघटं भूतलमिति ज्ञानत्वात्; शब्दजन्यैवंविधज्ञानवदिति चेत्, नैतत्; नेदम्, बहिरिन्द्रियजम्, अघटं भूतलमिति ज्ञानत्वात्; शब्दजन्यैवंविधज्ञानवदिति तुल्यत्वात् । तदलं वादीन्द्रप्रलापपरीक्षयापि ॥

॥ अधिकरणस्वरूपातिरिक्ताभावस्य प्रमेयत्वसाधनम् ॥

दृश्ये प्रतियोगिनि केवलभूतलोपलम्भान्नास्तीति व्यवहार इति चेत्, न; कैवल्यं भूतलस्वरूपत्वम्, तद्धर्मत्वं वा, तज्ज्ञानधर्मत्वं वा । आद्ये सघटेऽपि स्यात् । द्वितीये तद्गतपरिमाणादेः[2] केवलार्थत्वे तस्य यावद्द्रव्यभावित्वात् सघटेऽपि नास्तिव्यवहारः स्यात् । धर्मान्तरत्वे संज्ञान्तरं स्यात् । तृतीये भूतले घटाभाव इति भूतलघटाभावयोराधाराधेय [3]भाव[विरोधात्, ज्ञानतद्धर्मयोरभूभागनिष्ठत्वात् । संसृष्टभूभागभानाद् भिन्नभूभागभानं कुम्भाभाव]व्यवहारहेतुरिति चेत्, न; भिन्नमिति ज्ञानस्वभावाभिधाने संसृष्टभानादपि तत्प्रसंगात्, संसृष्टभानप्रतियोगिकान्योन्या[3]भाववतोऽभिधानेऽभावाभ्युपगमात् ॥

---

भावातिरिक्तप्रमेयाभावान्नाभावप्रमाणतेति शङ्कते— **दृश्य इति** ॥ घटाभवविशिष्टभूतलज्ञानं व्यावर्तयति— **केवलेति** ॥ ज्ञानतद्धर्मयोरभूभागनिष्ठत्वेऽपि भानस्याभाव[व्यव]हारहेतोर्भूभागगोचरत्वात् तदाधारत्वोपचार इति शङ्कते— **संसृष्टेति** ॥ प्रतियोगिघटादिविशिष्टावनिविज्ञानाद्विलक्षणं विज्ञानं नास्तिव्यवहारकारणमित्यर्थः ॥ भिन्नमिति [ज्ञा]नस्वरूपमभिधीयते, अन्योन्याभावाधिकरणं वा । प्रथमं प्रत्याह— **नेति** ॥

---

1. कुण्डलान्तर्गतं नास्ति । 2. परिमाणाद्वा केवला (क)
3. अन्योन्याभावादभिधाल

॥ अभावाभावस्य भावरूपत्वमिव संसृष्टभूतलभागातिरिक्तभूतलं कुम्भाभाव इति भावातिरिक्ताभावाभाववादिनां शङ्का ॥

ननु—भावाभावयोरभावानाञ्च भिन्नत्वमभ्युपगम्यते। न चाभावेऽभावान्तरसंभवः; अनवस्थानात्। तस्माद् यथा तत्र स्वभावत एव व्यतिरेकत्वम्, एवं संसृष्ट-[1]भूभागाद्यतिरिक्तं [2]भूभा[नं] कुम्भाभावव्यवहारकम्। भानवैलक्षण्यमपि विषयवैलक्षण्याधीनमिति भूतलमपि विलक्षणम्, तदेव केवलमेकाकि, तन्मात्रञ्च नास्तित्वमिति ॥

॥ यावत्प्रतीति, अभावादेरपि मिथ्याभेदाभ्युपगमात्, अभावाधिकरणाभावोऽप्यन्य एव, न तत्स्वभाव इति सिद्धान्तः। एकाकित्वस्य केवलत्ववद् दुर्वचत्वं च ॥

नैतत् सारम्; यावत्प्रतीतिव्यवहारमस्माभिरभावप्रभृतेरपि मिथ्याभेदाभ्युपगमात् तत्प्रतिब[न्द्य]नवकाशात्। एकाकित्वमेकत्वसंख्यायोगश्चेत्, सघटेऽपि तदभावव्यवहारः स्यात्। द्व्यादिसङ्ख्या[3]विरहश्चेत्, पटसंसृष्टे घटाभावव्यवहारो न स्यात्, भूतलमात्रालम्बनत्वेऽभावव्यवहारस्य प्रतियोगिविशेषापेक्षा च न स्यात्। यादृशं

---

संसृष्ट[भा]नप्रतियोगिकान्योन्याभाववतो भिन्नपदार्थत्वेऽपि नाभावाभ्युपगमप्रसङ्गः; स्वभावत एव तथात्वादिति सदृष्टान्तं चोदयति—**नन्विति** ॥ भावाभावयोरभावानां च मिथो भिन्नत्वम्; इतरेतराभावयोगादिति, अत्राह—**न चेति** ॥ एवमपि केवलभूभाग[भा]ना[द]भावव्यवहार इति प्रतिज्ञाविरोधः, संसृष्टभूभागविलक्षणकेवलभूभागासिद्धेः, अत्राह—**भानवैलक्षण्यमिति** ॥ भावाभावयोरभावानां च भिन्नत्वम्, अन्योन्याभाववत्वेनेति स्वीकाराद् न तत्प्रतिबन्दीस्थानमित्याह—**नैतदिति** ॥

एकाकित्वं किमेकत्वसङ्ख्यायोग उच्यते? द्व्यादिसङ्ख्याविरहो वा? इति विकल्प्य क्रमेण दूषयति—**एकाकित्वमिति** ॥ केवलशब्दार्थो भूतलज्ञानं कुम्भाभावज्ञानकारणमभ्युपगच्छताभ्युपगन्तव्यः, स एव नास्तित्वमित्याशङ्क्याह—**भूतलमात्रेति** ॥ **प्रतियोगिविशेषेति** ॥ जिघृक्षिते स्मर्यमाणे वा प्रतियोगिनि भूभागभानमभावव्यवहारकारणमिति वदता जिघृक्षितः, स्मर्यमाणो वा प्रतियोगीष्यते,

---

1. भूभानात्  2. भानं
3. विरहितश्चेत्

भूतलमभावाधिकरणम्, तादृशं तद्व्यवहारालम्बनं चेत्, यादृशमभावाधिकरणम्, तादृशमेव भावव्यवहारालम्बनमस्तु, कृतं प्राभाकराणां भावाभ्युपगमदुर्व्यसनेन। तस्मात् स्वीक्रियतामभावः, त्यज्यतां वा भावः; अविशेषादिति सिद्धमभावः प्रमेयम् ॥

॥ अद्वैतसिद्धान्ते दर्शनान्तरवदेव व्यवहारनिर्वाहार्थं प्रमाणभेदाद्युपपत्तिः ॥

यद्यपि विगलितनिखिलकलङ्कादागमादद्वैतमवगतम्; तथापि व्यवहारावस्थायां व्यवहाराङ्गभेदमङ्गीकृत्य प्रमाणप्रमेयभेदनिरूपणमनवद्यम् ॥

तदेवम्—

प्रत्यक्षमनुमानञ्च शाब्दञ्चोपमया सह।
अर्थापत्तिरभावश्च मानषट्कं विपश्चिताम् ॥ ४० ॥

इति स्थितम् ॥

**॥ इति न्यायचन्द्रिकायां नवममभावस्वतन्त्रप्रमाणत्वसाधनम् ॥**

---

तदपेक्षा न स्यादित्यर्थः। चशब्दात् सघटं भूतलमिति विशिष्टप्रत्ययेऽपि भूभागस्य हेतुत्वाद्यादृशभूभागो हेतुः, तादृशभूभागस्य कुम्भवत्त्वसम्भवात् सोऽपि न भवेदित्यर्थः। अनुपलब्धेरुपलब्धायाः कारणत्वेऽनवस्था, सत्तया कारणत्वे सभानिर्गतस्य तत्र चैत्र आसीन्नवेति शङ्का न स्यादिति शङ्कां निरस्यन्नुपसंहरति—**तस्मादिति** ॥ सजिज्ञासस्य सत्तयाऽनुपलब्धिरभावप्रमाहेतुरित्यर्थः ॥

प्रमाणानां तत्प्रमेयाणां च भेदप्रतिपादनमद्वैतवादिनः सिद्धान्तविरोधीति, अत्राह—**यद्यपीति** ॥

**॥ इति न्यायचन्द्रिकाव्याख्यायामभावस्वतन्त्रप्रमाणत्वसाधनं नवमम् ॥**

## ॥ अथ न्यायचन्द्रिकायां दशमं प्रमाणलक्षणम् ॥

किं पुनः प्रमाणलक्षणमिति चेत्, उच्यते,—प्रमाकरणं प्रमाणम्। अज्ञातार्थपरिच्छित्तिः प्रमा। यत आहुः—

"अज्ञातं वस्तु चोद्दिश्य तत्तत्त्वप्रतिपत्तये।
प्रमाणानां प्रवृत्तिः स्यादन्यथा नोपपद्यते ॥"

इति ॥

॥ प्रमाणलक्षणस्य दुर्वचत्वम्, अनधिगताबाधितार्थत्वस्य तत्त्वे धारावाहिप्रमायामव्याप्तिश्च ॥

ननु—अज्ञातत्वविशेषणमनर्थकम्। तथाहि—न ह्यधिगतेऽर्थेऽधिगतिरेव नोत्पद्यते; कारणानामप्रतिबन्धात्। न चोत्पद्यमानापि प्रमातुरनपेक्षितेति न [[1]प्रमा;] प्रमात्वस्यातदधीनत्वात्। नापि पूर्वाविशिष्टतामात्रेणाप्रामाण्यम्; उत्तर[रा]विशिष्टतया पूर्वस्याप्यप्रामाण्यप्रसङ्गात्। तदनपेक्षत्वेन तु तस्याः प्रामाण्ये तदुत्तरस्या अपि

---

## ॥ अथ न्यायचन्द्रिकाव्याख्यायां प्रमाणलक्षणं दशमम् ॥

[प्रमाणविशे[षाः]षोपलक्षिताः, तदयुक्तम्;] [प्रमाण]सामन्यलक्षण[मनु]-मुक्त्वा विशेषस्यैव लक्षणं न शक्यं केवलं वक्तुम्; अतोऽप्यस्य न वाच्यतेति हृदयेनाह—**किं पुनरिति** ॥ अनधिगतार्थाधिगमः प्रमा, क[तत्क]रणं प्रमाणमित्यत्र भगवतः **सुरेश्वराचार्य**स्य वचनमुदाहरति—**यत इति** ॥

"अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक्।
यथार्थानुभवो मानमनपेक्षतयेष्यते"

इति **कुसुमाञ्जलि**कारवचनपर्यालोचनया चोदयति—**नन्विति** ॥

अवगतेऽर्थे प्रमाया अनुत्पत्तिरूपाप्रामाण्यम्, उत्पद्यमानाया अपि प्रमातुरन-पेक्षितत्वेनाप्रामाण्यम्, अथवा पूर्वाविशिष्टतामात्रेणाप्रामाण्यमिति परिहर्तुं विकल्प्य प्रथमं प्रत्याचष्टे—**न हीति** ॥ द्वितीयं दूषयति—**न चेति** ॥ **अतदधीनत्वादिति** ॥ पुरुषापेक्षानुविधायित्वाभावात्, अनिष्टदुर्गन्धादिविषयप्रमादर्शनादित्यर्थः। तृतीयं निराकरोति—**नापीति** ॥ उत्तराधिगमानपेक्षत्वात् पूर्वाधिगमस्य प्रामाण्यम्, अत्राह—**तदनपेक्षत्वेनेति** ॥ पूर्वोत्तराधिगमयोरुत्पत्तौ स्वगोचरव्यवहारकारणे च

---

1. कुण्डलान्तर्गतं नास्ति

तथैव स्यात्; अविशेषात्। छिन्ने कुठारादीनामिव परिच्छिन्ने चक्षुरादीनां साधक-[न]त्वमेव नास्तीत्यपि नास्ति; फलोत्पादानुत्पादाभ्यां विशेषात्। तत्फलं प्रमैव न भवति; गृहीतमात्रगोचरत्वात् स्मृतिवदिति चेत्, मैवम्; यथार्थानुभवत्वनिषेधे [[1]साध्ये बाधितत्वात्, अनधिगतार्थत्वनिषेधे] सिद्धसाधनत्वात्, व्यवहारनिषेधे तन्निमित्तविरहोपाधित्वात्। न चानधिगतार्थत्वमेव तन्निमित्तम्; विपर्ययेऽपि प्रमाव्यवहारप्रसङ्गात्। नापि यथार्थत्वविशिष्टमेतदेव; धारा[2]वहनबुद्धयव्याप्तेरिति॥

॥ उ द य न दृष्टया याथार्थ्यदुर्वचत्वाक्षेपे न तत्त्वविषयत्वं यथार्थत्वम् अबाधितत्वं वेति कल्पद्वयोपपादनम् ॥

अत्रोच्यते—

प्रमाणं लक्षणात् सिद्धयेद् मानाद् मेयं प्रसिद्धयति।
न चान्यलक्षणं तस्य भाषितुं क्षमते सुधीः ॥ ४१ ॥

न तावद् यथार्थानुभवः प्रमा। तथाहि—किमिदं याथार्थ्यम्—तत्त्वविषयत्वं वा? अबाधितत्वं वा? अविसंवादित्वं वा? अव्यभिचारित्वं वा? सम्यक्त्वं वा? नाद्यः; शुक्तिकलधौतबोधव्यापकत्वात्, इदमंशो धर्मी, रजतत्वं धर्मः, तयोस्समवायः

---

परस्परानपेक्षत्वाविशेषादित्यर्थः। निष्पादितक्रिये कर्मण्यविशेषाधायिनः साधनत्वातिपात' इति न्यायात् प्रमाकरणत्वमेवाधिगतार्थविषयाणां न स्यादित्याशङ्कयाह —**छिन्न इति**॥ परिच्छिन्नेऽर्थे जायमानपरिच्छित्तेरप्रमाणत्वात् तत्करणानां न प्रामाण्यमित्याह—**तत्फलमिति**॥ प्रत्यभिज्ञायां व्यभिचारं वारयति—**मात्रेति**॥ प्रमा न भवतीति यथार्थानुभवत्वं निषिध्यते, अनधिगतार्थाधिगमत्वं वा, प्रमाव्यवहारगोचरत्वं वेति विकल्प्य क्रमेण दूषयति—**मैवमित्यादिना**॥ अनधिगतार्थाधिगमत्वस्य प्रमाव्यवहारनिमित्तत्वाद् व्यवहारनिमित्तविरहोपाधेः साधनव्यापकत्वम्, अत्राह—**न चेति**॥ यथार्थत्वे सत्यनधिगतार्थाधिगमत्वं प्रमाव्यवहारनिमित्तम्, अतो नातिव्याप्तिः, अत्राह—**नापीति**॥

प्रमेयसाधकप्रमाणसिद्धयर्थं तल्लक्षणमिच्छते तदेव लक्षणं वाच्यमिति सिद्धान्तयति—**अत्रेति**॥

यथार्थानुभवो मानमिति कु सु मा ञ्ज ल्यादावुक्तलक्षणं दूषयति—**न तावदिति**॥

---

1. कुण्डलान्तर्गतं नास्ति 2. वहनबुद्धया व्याप्तिरिति

संसर्गः, इत्येतत् त्रयं तत्र प्रतीयते। न चैतेषामन्यतम[मत]त्त्वम्। रजतत्वसमवायोऽत्र नास्तीति चेत्, नास्तीति न ज्ञानम्, रजतत्वस्या[न]नुरागे रजतत्वमेव जगति शून्यं स्यात्। समवायस्याननुरागे समवायस्यैव लयः स्यात्। इदमंशस्या[न]नुरागे धर्मिण्यपि ज्ञानमभ्रान्तं न स्यात्। समवायातिरिक्तसंसर्गासत्त्वं समीचीनरजतेऽपि समानमेव। तस्मादाद्यलक्षणस्यातिव्यापकत्वं दुर्वारम्। तत एव न द्वितीयोऽपि; तत्काले कस्याप्यबाधात्, एककालपुरुषान्तरगोचरबाधव्यतिरेकस्य प्राक्तनावसेयत्वाद् दुरवधारणतो लक्षणासिद्धेः॥

॥ अविसंवादित्वस्याप्यबाधितत्वज्ञानान्तरोल्लिख्यमानार्थक्रियाकारित्वरूपस्य धारावाहिकभ्रमादावतिव्याप्तत्वेन दुर्वचत्वम्, प्रत्युत व्यभिचारित्वस्यापि सुवचत्वम्॥

तृतीयेऽप्यविसंवादित्वमबाधितत्वं चेत्, तत एव न युक्तम्। ज्ञानान्तरेण तथोल्लिख्यमानार्थत्वं चेत्, धारावाहिभ्रमव्याप्तिः। अर्थक्रियास्थितिरपि संवाद इति चेत्, न; स्वप्नकामिनीसम्भोगादिभ्रमव्याप्तेः॥

नापि तुरीयः। अव्यभिचारः—किमेकदेशत्वम्, एककालत्वं वा? नाद्यः; घटादिज्ञानाव्याप्तेः। न द्वितीयः; अतीताद्यर्थानुमानाव्याप्तेः। अर्थे सत्येव भवनं ज्ञानप्रामाण्यमिति शम्भुभाषितमप्यत एवासाधु; भवनं जन्म, तदुत्पन्नस्यातिवृत्तमिति द्वितीयक्षणे ज्ञानस्याप्रामाण्यप्रसङ्गात्॥

॥ सम्यक्त्वमपि दुर्वचत्वान्न याथार्थ्यमिति प्रतिपादनम्॥

सम्यक्त्वमपि कृत्स्नगोचरत्वं वा, सविशेषगोचरत्वं वा, तथाभूतार्थनिश्चयस्वभावत्वं वा। प्रथमे सर्वात्मनाऽर्थो ज्ञानेन केनचिद् न हि गृह्यते, इति घटादिज्ञानाव्याप्तिः। द्वितीये चरमविशेषज्ञानेऽव्याप्तिः। तृतीयं तत्त्वविषयत्वनिरासेन निरस्तम्॥

॥ यथार्थत्वस्यैवानुभवत्वस्यापि दुर्वचत्वेन प्रमालक्षणासंभवस्योदयनाभिमतस्योपसंहारः॥

---

**तत एवेति॥** शुक्तिकाकलधौतबोधेऽतिव्याप्तेरेवेत्यर्थः। अबाधितत्वं प्रतीतिकाले, कालान्तरादौ वा। आद्यं प्रत्याह—**तत्काल इति॥** अविसंवादित्वं ज्ञानान्तरेण तथैव गृह्यमाणार्थत्वम्, अर्थक्रियावत्त्वं वेति विकल्प्य दूषयति—**तृतीयेऽपीति॥**

अनुभवत्वमपि जातिर्वा, स्मृतीतरज्ञानत्वं वा, स्मृतित्वानधिकरणज्ञानत्वं वा। नाद्यः ; परोक्षत्वेन परापरभावाभावात्, अननुभवरूपस्मृतेः परोक्षत्वात्, साक्षात्कारिणोऽप्यनुभवत्वात् ॥

॥ अनधिगतार्थगन्तृत्वं प्रमात्वमिति प्रमालक्षणसंभवेनो द य न मतनिरासः ॥

नेतरौ ; अनवगतार्थत्वोपाधिमन्तरेण तदवगमायोगात् । प्रपञ्चितश्चैतत् खण्डनटीकायामस्माभिरिति नेह प्रपञ्च्यते । तस्मात् प्रमाणलक्षणेन भवितव्यं चेत् अनधिगतार्थावगन्तृत्वमेव तल्लक्षणमास्थेयम् ॥

॥ अर्थेऽनधिगतत्वविशेषणं स्मृतावतिव्याप्तिपरिहारार्थम्,
न त्वधिगतस्याधिगमो विरुध्यते ॥

[1]यत्त्विदं गदितम्—न ह्य[2]धिगतेऽर्थेऽधिगतिरिव नोत्प[3]द्यते—इत्यादि, तदसत् ; न हि धीरेव नोत्प[4]द्यत इति वदामः, किन्तु गृहीतमात्रगोचरत्वे स्मृतिवदप्रमा स्यात् ; इतरथा स्मृतिरपि प्रमैव स्यादिति ॥

---

**घटादिज्ञानाव्याप्तेरिति** ॥ ज्ञानानामात्मदेशत्वात् घटादीनां भूतलादिदेशत्वादित्यर्थः । **अत एवेति** ॥ अतीताद्यर्थानुमानाव्याप्तेरेवेत्यर्थः । प्रकारान्तरेण लक्षणाव्याप्तिमुपपादयति—**भवनमिति** ॥ **चरमविशेषेति** ॥ विशेषप्रवाहानन्त्येऽनवस्थानात् क्वचिद्विच्छेदेऽन्त्यविशेषस्य निर्विशेषत्वात्, तत्प्रमायामव्याप्तिरित्यर्थः । यथार्थानुभावो मानमिति लक्षणस्य विशेषणांशमखण्डयत्, इदानीं विशेष्यांशखण्डनायोपक्रमते—**अननुभवरूपेति** ॥ नेतर इत्याह—**साक्षात्कारिण इति** ॥ **तदवगमायोगादिति** ॥ स्मृतीतरत्वस्य स्मृतित्वानधिकरणज्ञानत्वस्य चावगमः स्मृत्यवगमापेक्षः । स्मृत्यवगमश्च न संस्कारमात्रजज्ञानत्वेन ; सामग्र्याः सर्वसमवेन मनस्संयोगादेरपि स्मृतौ हेतुत्वात्, नापि संस्कारमात्रासाधारणकारणज्ञानत्वेन ; आत्मप्रत्यभिज्ञायामतिव्याप्तेः । अतो गृहीतमात्रग्राहिज्ञानं स्मृतिः, अगृहीतग्राहि तदितरदिति निश्चेतव्यमित्यर्थः । सापेक्षज्ञानं स्मृतिः, सापेक्षत्वं च स्वविषय[ये]नियमे[न] ज्ञानान्तरापेक्षेत्यशङ्क्याह— **प्रपञ्चितमिति** ॥ प्रत्यभिज्ञाभागादावतिव्याप्त्यादिना दूषितमित्यर्थः ॥

---

1. पृ. 325, प. 9
2. नह्यनधि
3. नोपपद्यते
4. नोपपद्यते

॥ छिन्नपरिच्छिन्नयोर्भेदाच्छिन्ने छेदाभावेऽपि परिच्छिन्ने विशिष्टे स्वरूपमात्रे वा पूर्वपरिच्छेदविषयीकरणे परिच्छेदो न विरुध्यते ॥

[1]यदपि—पूर्वाविशिष्टतामात्रेणाप्रामाण्यम्—इत्यादि, तदनुक्तोपालम्भनम्, निष्पादितक्रिये कर्मणि किं परशुनेति साधनन्यायातिपाता[2]दसाधकत्वं परश्वादेरिवाप्रामाण्यस्यापि परिच्छिन्नमात्रगोचरत्वे स्यात्, परिच्छिन्न एवार्थे पुनः परिच्छेदलक्षणफलोपपत्तेर्मैवमिति चेत्, न; परिच्छिन्न इति परिच्छेदविशिष्टोऽभिधीयते, वस्तुमात्रं वा? आद्ये विषयभेदा[3]दनवगतत्वसिद्धेः। द्वितीयेऽपि पूर्वपरिच्छेदविषयीकृतत्वाविवक्षायां परिच्छिन्नत्वासिद्धेः। परिच्छिन्ने च न परिच्छेदसिद्धिः; अपरिच्छेदपुरस्सरत्वात् परिच्छेदस्य, प्रागभावरहितस्यानुत्पादात्, ज्ञानवत् तदभावस्यापि भवन्मतेऽर्थविषयत्वात् ॥

॥ अनधिगताबाधितार्थविषयज्ञानस्यैव प्रमात्वात्, गृहीतमात्रग्राहित्वस्यानुभवत्वासाधकत्वाच्च सर्वदोषनिरासः ॥

[4]यदपि रटितम्—यथार्थानुभवत्वनिषेधे साध्ये बाधितत्वात्—इत्यादि, तदयुक्तम्;

---

**विषयभेदादनधिगतत्वसिद्धेरिति** ॥ पूर्वपरिच्छेदस्य शुद्धवस्तुविषयत्वादुत्तरस्य पूर्वपरिच्छेदविशिष्टविषयत्वाद्विषयभेदादित्यर्थः। **वस्तुमात्रमिति** ॥ पूर्वपरिच्छेदविषयत्वं विवक्षितम्, अविवक्षितं वा। पूर्वस्मिन् पूर्वदोषानुषङ्गः, उत्तरस्मिन्नप्यनधिगतत्वसिद्धिरित्याह—**द्वितीयेऽपीति** ॥ परिच्छिन्ने परिच्छेदमङ्गीकृत्यानधिगतगोचरत्वं प्रत्यपीपदत्, इदानीं तदेव न सम्भवतीत्याह—**परिच्छिन्ने चेति** ॥ प्रागभाववत एव परिच्छेदस्य निष्पत्तिरित्येतावता कथमनधिगतगोचरत्वसिद्धिः? अत्राह—**ज्ञानवदिति** ॥ ज्ञानप्रागभावस्याज्ञानत्वमङ्गीकुर्वतां मते जायमानज्ञानप्रागभावरूपाज्ञानविषयत्वेनाज्ञातत्वसिद्धिरित्यर्थः ॥

**अनुभवत्वग्राहिप्रमाणाभावादिति** ॥ यदि गृहीतमात्रगोचरस्यानुभवत्वं प्रमाणान्तरेण गृह्यते, तदा यथार्थानुभवत्वनिषेधे साध्ये बाधः स्यात्, न तु तदस्तीत्यर्थः। गृहीतमात्रग्रहणस्यानुभवत्वे प्रमाणं शङ्कते—**तदिति** ॥ अपरोक्षत्वमनु-

---

1. पृ. 325 प. 11
2. अतिपतत् साधत्वं
3. भेदानधिगतत्वसिद्धेः
4. पृ. 326 प. 3

गृहीतमात्रग्रहणस्यानुभवत्वग्राहिप्रमाणाभावात् । तदनुभवत्वमपरोक्षत्वादिति चेत्, न; अपरोक्षत्वस्य लक्षणत्वेऽनुमित्याद्यव्यापनात्, अनुमानत्वेऽनवगतार्थत्वोपाधेः। प्रमात्वव्यवहारनिषेधो वा साध्यः । न चैवं बाधः; गृहीतमात्रग्राहि ज्ञानं प्रमेति त्वत्कुतर्कानुपहतमतीनां व्यवहाराननुभवात् । नापि तन्निमित्तविरहोपाधिकत्वम्; साधनव्यापकत्वात् ॥

[1]अनधिगतार्थत्वस्य प्रमात्वप्रयोजकत्वे विपर्ययेऽपि तत् स्यादिति यदतिव्याप्तिचोदनम्, तल्लक्षणाज्ञानविलसितम्; अर्थशब्दस्याभासवचनत्वात्, विपर्ययस्यार्थाभासविषयत्वात् ॥

॥ धारावाहिज्ञान उपलक्षणतयाकालविशेषभानात् प्रमालक्षणव्याप्तिः ॥

[2]यदपि धारावहनत्वबुद्धावव्यापकत्वमुदितम्, तदसत्; यतः तत्रोत्तरोत्तरकालकलोपलक्षितरूपमनवगतमेव गम्यते। उपलक्षणग्रहणमन्तरेणोपलक्ष्यग्रहणं न विरुध्यते। अन्यथा तवाप्ययं घटो वर्तत इति धीर्न स्यात्। तदाहुः—

---

भवत्वस्य लक्षणम्, उतानुमानत्वमिति विकल्प्य, आद्यं दूषयति—**नेति** ॥ विमतम्, अनुभवः, अपरोक्षत्वात्; सम्प्रतिपन्नप्रत्यक्षवदिति । द्वितीयमाशङ्क्याह—**अनुमानत्व इति ॥ साधनव्यापकत्वादिति ॥** अनधिगतार्थत्वस्य प्रामाण्यव्यवहारनिमित्तस्य गृहीतमात्रगोचरे विरहादित्यर्थः ॥

उपलक्षणस्य कालस्याप्रत्यक्षस्य ग्रहणायोगादुपलक्षितग्रहणमपि न स्यात्, अत्राह—**उपलक्षणग्रहणमिति** ॥ कालस्यैक्यात्तद्भेदान्नानधिगतत्वम् । अथौपाधिककालभेदादनवगतविषयत्वमिति मतम्, कोऽयमौपाधिको भेदः? किमुपाधिः, उपाधियोगो वा, उपाधिजो धर्मो वा? नान्त्यः; प्रमाणाभावात्, औपाधिकव्यवहारस्योपाधितद्योगाभ्यामेवोपपत्तेराद्ययोः पक्षयोरुपाधिग्रहणेन भवितव्यम्। न च सूर्यगत्याद्युपाधयो धारावाहिसमये प्रकाशन्त इत्याशङ्क्याह—**अन्यथेति** ॥ न चास्ति मे प्रमाणाभावः; औपाधिकव्यवहारानुपपत्तेस्तत्त्वात्। न चोपाधितद्योगाभ्यामेव तदुपपत्तिः; उपाधेस्तपनपरिस्पन्दादेरप्रत्यक्षत्वेनापरोक्षौपाधिकव्यवहारस्य

---

1. पृ. 326 प. 5 2. पृ. 326 प. 6

"यत्रापि स्यात् परिच्छेदः प्रमाणैरुत्तरैः पुनः ।
नूनं तत्रापि पूर्वेण सोऽर्थो नावधृतस्तथा ॥"

इति ॥

॥ कालसम्बन्धप्रयुक्तभेदानुभवाभावशङ्कातन्निरासौ ॥

यदत्र **भट्टजयन्तो** जगाद—न हि स्वहस्ते शतकृत्वो दृश्यमाने केचन विशेषाः परिस्फुरन्ति—इति, तदपि न हृदयङ्गमम्; यावद्दर्शनमुत्तरोत्तरकालोपलक्षितविषयानवगमनिवृत्तीनां विशेषाणां परिस्फुरणात् ॥

॥ अभिज्ञाप्रत्यभिज्ञानयोर्विशेषणतयोपलक्षणतया च कालभानाद्
विषयभेदेन न प्रत्यभिज्ञायामव्याप्तिः ॥

यच्च—यदि चानुपलब्धार्थग्राहि मानमुपेयते, तदयं प्रत्यभिज्ञाया स्पष्ट एव जलाञ्जलिरित्युच्यते, तच्चाचारु; अभिज्ञायां पूर्वकालस्फुरणात्, प्रत्यभिज्ञायां पुनस्तद्देशकालोपलक्षितस्वरूपैक्यस्फुरणम्[1], तदन्तरेण भेदभ्रमनिदानाज्ञानानपायादव्याप्तेरभावात् ॥

॥ स्मृतिवद्धारावाहिज्ञानस्याप्रमात्वमिष्टमेवेति स्वमतोपपादनम् ॥

किं च गृहीते विषये प्रवृत्तं प्रमाणं किं कुर्यात्? अगृहीतेऽपि किं कुर्यादिति चेत्, प्रमाम्। गृहीतेऽपि तामेव [2]धत्तामिति चेत्, न; कृतायाः करणायोगात्। प्रमान्तरमिति चेत्, न; अनवगमनिवृत्तिमन्तरेण प्रमात्वायोगात्, स्मृतिवत्। अनवगमनिवर्तकत्वे, अनवगतविषयत्वेनैव प्रामाण्यमिति घट्टकुट्यां प्रभातम् ॥

---

तत्प्रयुक्तत्वायोगात्, कालभेदानवगमेन [?] प्रकाशत इति लटः प्रयोगो न स्यात्, कालभेदगोचरत्वाल्लकाराणामित्याशयः ॥

**विशेषाणां परिस्फुरणादिति** ॥ उत्तरोत्तरपरिच्छेदैरनवगमनिवृत्तयः क्रियन्ते, तास्तु स्वानुभवेन स्फुरन्तीत्यर्थः ॥

अनवगतार्थाधिगन्तृ प्रमाणमिति लक्षणस्य प्रत्यभिज्ञायामव्याप्तिचोद्यमनुवदति —**यच्चेति** ॥

---

1. स्फुरणं 2. तामेवाधत्तामिति

॥ याथार्थ्यस्यैव प्रमात्वम्, स्मृतेरप्यनुभवयाथार्थ्यं याथार्थ्यमेवेत्यु द य न मते प्रत्यभिज्ञाया अप्यप्रामाण्यापत्तिः, इत्यनधिगतार्थ-गन्तृत्वमेव प्रामाण्यम् ॥

याथार्थ्यैकनियतं प्रमात्वम्। न च स्मृतौ याथार्थ्यमनुभवयाथार्थ्यव्यतिरेकेणास्ति, तस्मिन्नसमीचीने स्मृतेरसमीचीनत्वादिति चेत्, मैवम्, एवमभिज्ञायाथार्थ्यव्यतिरेकेण प्रत्यभिज्ञायास्तन्नास्तीति साऽप्रमैव स्यात्। विषयभेदान्नेति-चेत्, न; प्रत्यभिज्ञायामुभयाभिज्ञार्थानवभासे तदभेदासिद्धेः। अधिकमपि तदैक्यं भातीति चेत, न; अभिज्ञार्थभागे तदमात्वे तदैक्येऽप्यमात्वापातात्, विषयभेदेन तदुपपादने प्राप्ताप्राप्तविवेकेनानधिगतार्थगन्तृत्वे तदै[वै]व तदापाताच्च ॥

॥ तार्किकाणां प्रमालक्षणासम्भवेन स्वाभिमतप्रमालक्षणोपसंहारः ॥

तदेवं न तार्किकाः सम्यक् प्रामाण्यलक्षणक्षमां सरणिमवलोकयितुं कुशलाः। कुतर्ककणकनिकरनिरुद्धसञ्चारमार्गाभासपरिभ्रान्ताः खलु त इत्यलं कलकलेन ॥

**॥ इति न्यायचन्द्रिकायां दशमं प्रमाणलक्षणम् ॥**

---

अनवगमनिवृत्तेः प्रमाणफलस्य गृहीतगोचरेऽनुपपत्तेः, वैयर्थ्यं च गृहीत-विषय इत्याह—**किञ्चेति** ॥

एवं प्रसङ्गाज्ज य न्त जल्पितमुन्मूल्य, पुन रु द य न स्यैव शङ्कामुत्थापयति—**याथार्थ्येति** ॥ यथार्थत्वं प्रमात्वाविनाभूतं चेत्, स्मृतेरपि यथार्थत्वात्प्रमात्वप्रसक्तिः, अत्राह—**न चेति** ॥ जनकज्ञान[।]याथार्थ्यापेक्षयाऽयथार्थस्मृतेरप्रमात्वे प्रत्यभि-ज्ञाऽप्यप्रमा स्यात्; समानन्यायत्वादित्याह—**मैवमिति** ॥ सम्यगनुभवसाधनं प्रमाणम्, सम्यगनुभवः प्रमेति लक्षणान्तरे सति, इदमेव लक्षणं कथं स्थिरी स्यादिति शङ्कां निराकुर्वन् निगमयति—**तदेवमिति** ॥ देवगत्या वह्निमति पर्वते धूमत्वपरिगृहीतधूलिपटलादिना यदग्निमत्त्वज्ञानं सम्यगनुभव इति तत्साधनलिङ्गाभा-सेऽतिव्याप्तिरित्यर्थः। न चानाहार्यजन्यत्वेन प्रमालक्षणं विशेषणीयम्; सम्यक्पद-वैयर्थ्यप्रसङ्गात् ॥

**॥ इति न्यायचन्द्रिकाव्याख्यायां दशमं प्रमाणलक्षणम् ॥**

## ॥ अथ न्यायचन्द्रिकायामेकादशोऽखण्डार्थवादः ॥

॥ अखण्डे स्वप्रकाशे च ब्रह्मणि, संसृष्टविषयत्वनियमाद्वाक्यस्य, कथं वेदान्तवाक्यप्रामाण्यम् ॥

अबुद्धबोधकं मानं ननु यदप्युपेयते ।
स्वतस्सिद्धे ततो मात्वं वेदान्तानां सुदुर्घटम् ॥ ४१ ॥

अनधिगताधिगन्तृत्वे प्रामाण्ये स्वतस्सिद्धे प्रत्यगात्मनि प्रामाण्यमुपनिषत्पदनिकुरुम्बस्य दुर्घटं स्यात्, प्रमाणसम्प्लवोऽपि प्रलीयेत । वाक्यस्य च संसृष्टपदार्थप्रतिपादकस्य नैकरसे प्रामाण्यं भवितुमुत्सहते--इति ।

॥ संविद्रूपस्याप्यज्ञानावृतस्य निवर्तकवृत्तिजनकतया वेदान्तानामखण्डार्थत्वमुपक्रमादिना निर्णीयते ; तात्पर्यानुसारित्वाद्वाक्यवृत्तेः ॥

नैतत् सारम् ; स्वरूपसंवेदनस्य स्वसंविदितरूपस्याप्यविद्यासाधकस्य [1]तद्बाधकत्वासिद्धेस्त्रय्यन्तानामनवगतावगन्तृत्वेन प्रामाण्योपपत्तेः । प्रमाणसम्प्लवप्रलयो-

---

## ॥ अथ न्यायचन्द्रिकाव्याख्यायामेकादशोऽखण्डार्थवादः ॥

अनधिगतार्थाधिगन्तृ प्रमाणमित्युक्तम्, तदयुक्तम् ; तत्त्वमस्यादिवाक्येषु लक्षणस्याव्यापकत्वादिति शङ्कते — **अबुद्धेति** ॥

"सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते"

इति ब्रुवता प्रमाणानामेकत्र वृत्तिरूपसम्प्लवोऽङ्गीकृतः, सोऽपि न स्यादित्याह— **प्रमाणेति** ॥ पुरस्तात्प्रमाणलक्षणपर्यालोचनया स्वप्रकाशे[शं] प्रति चित्तस्य तत्प्रमाण्यमयुक्तमित्युक्तम्, सम्प्रति वाक्यस्वरूपपर्यालोचनया तदाह—**वाक्यस्येति** ॥ तत्त्वमादिवाक्यकृतवृत्तिफलकारूढस्यैव बोधस्याबोधबाधकत्वान्न प्रमाणलक्षणस्याव्याप्तिरिति परिहरति—**नैतदिति** ॥ प्रमाणसम्प्लवो न स्यादित्युक्तमङ्गीकरोति—**प्रमाणसम्प्लवेति** ॥ सर्वप्रत्ययवेद्यत्वं विशेष्यस्वरूपाभेदादिति भावः । तत्त्वमादिवाक्यम्, संसृष्टार्थपरम्, वाक्यत्वात् ; गामानयेत्यादिवाक्यवत्, इतरथा वाक्यप्रमेयस्य

---

1. तद्बोधकत्वा

ऽपीष्यत एव । तत्तत्प्रमाणप्रविलापनीयावगमभेदाल्लौकिकवचनानां संसृष्टपदार्थ-प्रतिपादनत्वेऽपि श्रुतिशिरसामुपक्रमादिलिङ्गावगतैकरसतात्पर्याणां वृत्त्यन्तरेणापि तत्प्रतिपादनमुररीक्रियते ॥

॥ प्रसङ्गादाकृतिव्यक्तितदुभयापोहेषु न व्यक्तिः पदार्थः, न वा जातिव्यक्त्युभयम्, किन्तु जातिरेवेत्याक्षेपदुर्वचत्वादिनोपपादनम् ॥

ननु—कोऽयं पदार्थो नाम? यस्य संसृष्टतया लौकिकवाक्यप्रतिपाद्यत्व-मुदीर्यते—इति, आकृतिरेवेति ब्रूमः । तथा हि—'गामानय' 'गां बधान' 'गामवलोकय' इति प्रयोगभेदेषु शाबलेयादिविशेषणानामानन्त्यव्यभिचाराभ्यां शब्दशक्तिप्रतियोगित्वानुपपत्तौ लाघवाव्यभिचाराभ्यां गोत्वजातिरेव गोशब्दवाच्या निश्चीयते ॥

ननु—यदि जातिरेव पदार्थः, तर्हि शब्दाद् व्यक्तिप्रतीतिर्न स्यात् । शब्दप्रतिपन्नाया जातेराक्षेपतो व्यक्तिर्लप्स्यत इति चेत्, कः खल्वयमाक्षेपो नाम?

॥ अनुमानं नाक्षेपपदार्थः ॥

न तावदनुमानम्; अनन्ताभिः सह सङ्गतिवदविनाभावस्यापि ग्रहीतुमशक्य-त्वात्, शक्यत्वे वा तथैव सङ्गतेरपि सुग्रहत्वात् । सर्वव्यक्त्यनुगतेन व्यक्तिमात्रेणा-

---

ब्रह्मणो धर्म्या[र्मा]दिवज्जडे[डत्व]प्रसङ्ग इत्याशयेन यदुक्तम्, तदुपक्रमादिलिङ्गविरोधेन दूषयति—**लौकिकेति** ॥

संसृष्टपदार्थप्रतिपादकत्वं लौकिकवाक्यस्येत्युक्तमुपश्रुत्य पदार्थस्य वादिविप्रति-पत्तिविषयतया सन्दिग्धत्वात् तज्जिज्ञासया पृच्छति—**नन्विति** ॥ जातिरेव पदार्थ इति मीमांसकाः, सामान्यमुपलक्षणीकृत्य व्यक्तिरेव शब्दवाच्येति वैशेषिकाः, तदुभयमपीति वैयाकरणाः, नैयायिकाश्च, अपोह इति सौगतसूत्रे । कः पदार्थः प्रामाणिक इत्यर्थः । शब्दशक्तिनिरूपणे मीमांसका एव कुशला इत्याह—**आकृतिरिति** ॥ गवादिशब्दाच्छाबलेयादिव्यक्तिप्रतीत्यनुपपत्त्या व्यक्तेरपि शाब्दत्व-मित्याह—**नन्विति** ॥ व्यक्तेरनन्यलभ्यत्वाभावान्न शब्दशक्तिगोचरतेति शङ्कते—**शब्देति** ॥ **कः खल्विति** ॥ न कश्चिदिति भावः । स एवाह—**न तावदिति** ॥ आनन्त्यव्यभिचारदोषो हि सङ्गतिग्रहण इवाविनाभावग्रहेऽपि सुलभ इति । ननु सर्वव्यक्त्यनुगतेन व्यक्तिमात्ररूपेणाविनाभावः शक्यग्रह इत्याह—**सर्वेति** ॥ व्यक्ति-

विनाभावः शक्यग्रह इति चेत्, न; जातिं व्यक्तिं चान्तरेण व्यक्तित्वसामान्याभावात्, भावेऽपि तस्यैव जातेराक्षेपो न व्यक्तीनामिति प्रसङ्गात्। यदि च व्यक्तित्वसामान्यमभ्युपगम्यते, ततः शब्दवाच्यमेव तदस्तु, तस्यैकत्वेन सङ्गतिग्रहस्य सुकरत्वात् किमाक्षेपकल्पनया ?

॥ अर्थापत्तेराक्षेपपदार्थत्वायोगोपपादनम् ॥

अर्थापत्तिराक्षेपः, तस्या अविनाभावग्रहानपेक्षत्वादिति चेत्, व्यक्त्या विना किमनुपपन्नम्? जातिरिति चेत्, न; तद्विनाशानुत्पाददशायामपि सत्त्वात्। न व्यक्तिमात्रं विनेति चेत्, न; मात्रार्थाभावात्। [तथापि] व्यक्तिज्ञानमन्तरेण तज्ज्ञानमनुपपन्नमिति चेत्, न; शब्दात् केवलजातिज्ञानस्य भवद्भिरभ्युपगमात्। व्यक्तिविषयता तस्यानुपपन्नेति चेत्, न;

॥ जातीनामन्वयानुपपत्त्या व्यक्तिपदार्थत्वशङ्का ॥

एवं ह्येकज्ञानगोचरतायां किमनुपपन्नम्? किं प्रतिपादयेदिति? जातीनाम-[1]न्वयानुपपत्त्या व्यक्तिरवसीयत इति चेत्, न; प्रतीतेऽप्यन्वये तदन्यथानुपपत्त्या व्यक्तिः प्रतीयेत, प्रतीतायां च व्यक्तौ तदन्वयप्रतीतिरितीतरेतराश्रयात्। किञ्च

---

धर्मोपगमे तस्यैवाक्षेपः स्यात्। न व्यक्तीनामित्युक्तम्, इदानीमाक्षेपोऽपि तस्य न कल्प्यः; वाच्यत्वसम्भवादित्याह—**यदि चेति** ॥ मा भूदाक्षेपोऽनुमानम्, अर्थापत्तिर्भविष्यतीत्याह—**अर्थापत्तिरिति**। **किमनुपपन्नमिति** ॥ न किञ्चिदित्यर्थः ॥

**जातिरिति** ॥ तदाश्रया हि से ति। **नेति** ॥ व्यक्तीनां विनाशानुत्पाददशायावि[मपि]जातेरवस्थानान्न व्यक्त्या विना जातिरनुपपन्नेति ॥ काश्चिद्व्यक्तीरन्तरेणावस्थानेऽपि व्यक्तिमात्रमन्तरेण नावतिष्ठत इत्याह—**तथापीति** ॥ जातेर्नित्यत्वात्प्रलयावस्थायां व्यक्तिनिरपेक्षावस्थानेऽपि व्यक्तिप्रतीत्या विनाऽनुपपन्नजातिप्रतीतिर्व्यक्तिप्रतीतिमाक्षिपतीत्याह—**व्यक्तिज्ञानमिति** ॥ जातिज्ञानात्मनोर्व्यक्तिविषयतामाक्षिपतोर्व्यक्तिज्ञानसिद्धिरिति शङ्कते—**व्यक्तिविषयतेति** ॥ **नेति** ॥ एवं हि जातिव्यक्त्योरेकज्ञानविषयत्वमेवोक्तं स्यात्, तत्रोभयोरपि ज्ञातत्वाविशेषात्

---

1. जातिनामान्वया

जातिप्रतीतौ सत्यां तदन्वयानुपपत्त्या व्यक्तिप्रतीतिः, व्यक्तिप्रतीतौ सत्यां च जातिप्रतीतिः; [रिति] व्यक्तिप्रतीतिपुरस्कारेण जातिप्रतीतेरुक्तत्वात् ॥

॥ जातिविषयत्वेऽपि शब्दस्य व्यक्तौ पर्यवसानं नाक्षेपः ; क्रमेण युगपद्वा जातिव्यक्त्योः शब्दात् प्रतीत्यसम्भवात् ॥

स्यादेतत्—यथा हि लिङ्गं साध्यसामान्येनैव गृहीतप्रतिबन्धमपि पक्षधर्मतासहायं साध्यविशेषे पर्यवस्यति, तथा शब्दोऽपि जात्या गृहीतसङ्गतिरपि शक्तिविशेषाद् व्यक्तौ पर्यवस्यति, स एवाक्षेप इत्युच्यत—इति, न; किमयं शब्दो जातिव्यक्त्योः प्रतीतिं क्रमेण जनयेत्, युगपद्वा? न तावत् क्रमेण; शक्तिविशेषादेव प्रतीतिं जनयतः शब्दस्यापेक्षणीयान्तराभावेन विरम्यव्यापारायोगात्। जात्या गृहीतसङ्गतिः शब्दस्तद्विषयं ज्ञानं जनयित्वा तदपेक्ष एव व्यक्तिं प्रत्याय[1]यतीति चेत्, कुतस्त[ कृतं ]तर्हि शब्दशक्तिकल्पनया? जातिज्ञानेनैव व्यक्तिज्ञानसिद्धेः। ओमिति चेत्, न;

॥ विना सङ्गतिग्रहं जातिज्ञानेन व्यक्तिज्ञाने जातिज्ञानस्य सप्तमप्रमाणत्वापत्तिः इष्टापत्तौ व्यक्तेर्वाक्यार्थे भानानापत्तिः। अतो जातिरिव व्यक्तिरपि पदार्थ इति शङ्का ॥

व्यक्त्यनालम्बनाया जातिप्रतीतेरेवासम्भवादित्युक्तत्वात्। यदि शब्दव्यापारो

---

किमनुपपन्नं, प्रतिपादकं भवेत्, किं वा प्रतिपाद्यमित्यर्थः। गोत्वशुक्लत्वादीनां परस्परमन्वयप्रतीत्यनुपपत्त्या तदन्वयसिद्ध्यर्थं व्यक्तिः प्रतीयत इत्याह—**जातीनामिति** ॥ तर्हि विशेषपर्यवसानमेवाक्षेप इत्याह—**स्यादेतदिति** ॥ व्यक्तौ पर्यवसानं तद्विषयज्ञानजनकत्वमेव, तद् दूषयितुं विकल्पयति—**किमयमिति** ॥ अपेक्षणीयान्तराभावेनेत्युक्तहेतोरसिद्धिमाह—**जात्येति** ॥ शक्तिविशेषात् पर्यवस्यतीति यदुक्तम्, तदेवं सति न स्यात्; प्रमाणाभावादिति दूषयति—**कृतमिति** ॥ जातिज्ञानेनैव तत्सिद्धिरनुज्ञायत इत्याह—**ओमिति** ॥ **उक्तत्वादिति** ॥

न च व्यक्त्या विना जातिस्फुरणमित्यत्र जातिज्ञानेनैव व्यक्तिज्ञानानुज्ञानेऽनिष्टान्तरमाह—**यदीति** ॥ जातिज्ञानस्य न सप्तमप्रमाणत्वम्; स्मृतिमात्रहेतुत्वादिति शङ्कते—**शब्देति** ॥ व्यक्तिज्ञानं यदि स्मृतिः स्यात्, तर्हि प्रागनुभूतानामेव व्यक्तीनां सहपठितपदार्थान्तरसंसर्गप्रतीतिः स्यात्, न पुनरननुभूतानाम्; स्मरणा-

---

1, प्रत्याययति

जातिज्ञान एव पर्यवस्यन्न व्यक्तिज्ञानं यावद्गच्छेत्, तर्हि व्यक्तिज्ञानं[ न ]जनकं जातिज्ञानं सप्तमं प्रमाणमापद्येत ; अनुमानार्थापत्त्योर्निरस्तत्वात्, असम्भवाच्चान्येषाम्। शब्दप्रतीता जातिः साहचर्याद् व्यक्तिं स्मारयति, न तु प्रमापयति, अतो न प्रमाणान्तरापात इति चेत्, तर्ह्यननुभूतानां गवादिव्यक्तीनां समभिव्याहृतपदार्थान्वयप्रतीतिर्न स्यात्। अस्त्वेकैव प्रतीतिरिति चेत्, कृतस्त[ कृतं त ]र्हि शक्तिभेदप्रकल्पनया। तस्माज्जातिरिव व्यक्तयोऽपि शब्दार्था इति सिद्धम्॥

॥ आनन्त्यव्यभिचाराभ्यां व्यक्तिसमुदाये प्रतिव्यक्ति वा शक्तिस्वीकारायोगः॥

उच्यते—

आनन्त्याद् व्यभिचाराच्च न शक्या व्यक्तयो मताः।
आकृतिस्तु भवेच्छक्या लाघवाव्यभिचारतः॥ ४२॥

अत्रेदं भवान् पृष्टो व्याचष्टाम्— किं व्यक्तिसमुदाये शब्दस्य शक्तिः? उत प्रत्येकं व्यक्तिषु? नाद्यः; प्रतिव्यक्ति गोबुद्धिदर्शनात्। द्वितीयेऽपि प्रतिव्यक्ति भिन्ना शक्तिः, उत सकलव्यक्तिगोचरैकैव। चरमे सकृदुच्चरिताद् गोपदादवनितलगोचरसकलगोव्यक्तिप्रतीत्यापत्त्या विशेषव्यवहारलोपः स्यात्। गोशब्दस्य नवस्वर्थेष्वेकशक्तित्वप्रसङ्गश्च। आद्ये किमगृहीतशक्तयः शब्दाः स्वार्थं प्रतिपादयेयुः?

---

सम्भवादित्याह—**तर्हीति**॥ क्रमप्रतीतिं निरस्य प्रतीतियौगपद्यमुत्थापयति—**अस्त्विति**॥ शब्दादेव जातिव्यक्तिगोचरा प्रतीतिरेकैव जायते, अतो न प्रमाणान्तरापत्त्यादिदोष इत्यर्थः। कार्यैक्यात्कारणभेदो न स्यादित्याह—**कृतं तर्हीति**॥

पूर्वार्धं व्याख्यातुं विकल्पयति—**अत्रेदमिति**॥ अन्त्यं तुच्छत्वादादौ दूषयति – **चरम इति**॥ गामानयेत्युक्ते सकलानां गवां प्रतीतत्वात् सर्वा एव गा आनयेत्, न वा कामपि; अविशेषात्। उपपदस्यापि शुक्लामित्यादेः सकलशुक्लव्यक्तिप्रत्यायकत्वादेकव्यक्तिगोचरो व्यवहारो न स्यात्; प्रत्यक्षदृष्टानयनेऽन्यदीयामप्यानयेदित्यर्थः। यद्यनन्ततद्व्यक्तिषु शक्तिरेका, तर्हि गवादिशब्दस्यानेकार्थत्वप्रसिद्धिरपि न स्यात्; अनेकेष्वेकशक्तित्वोपपत्तेर्लाघवादित्याह—**गोशब्दस्येति**॥

"गोशब्दः पशु-भूम्यंशु-वाग्दिगर्थः प्रयुज्यते।
स्वर्ग-लोचन-बाणाम्बु-कुलिशार्थोऽपि दृश्यते"॥

अहोस्वित् गृहीतशक्तयः ? पूर्वस्मिन्नप्युत्पन्न[1]वृत्तिपदधर्मव्यक्तिक्रमवाक्यधर्मभजनानि ? प्रसज्यन्ते । द्वितीयेऽप्यनन्तव्यक्तिषु प्रतिपन्नासु सङ्गतिसंवेदनम्, अप्रतिपन्नासु वा । नान्त्यः; सम्बन्धिप्रतीतिमन्तरेण तत्सम्बन्ध इत्यवगमायोगात् । चक्षुरादिसन्निकृष्टगवादिसमवेतगोत्वादिविशेषणतया गवादिव्यक्तयोऽध्यक्ष्यन्त इति चेत्, न; तथा सति चक्षुरादिसन्निकृष्टधूमादिसमवेत [[2]सत्त्वद्रव्यत्वादिविशेषणतया गिरिशिखरादिगोचरवह्न्यादिप्रत्यक्षत्वेनानुमानकुलोच्छेदप्रसङ्गात् । शब्दावगतव्यक्तिषु शक्तिसङ्ग्रहे स्फुटमन्योन्यसंश्रयणम् । किञ्च शब्दशक्तेरर्थप्रतीतिकार्यकल्प्यत्वात् किं विशेषमात्रे प्रतीतिर्गोशब्दात्, गोत्वोपलक्षितविशेषेषु वा, तद्विशिष्टेषु वा । आद्येऽतिप्रसङ्गः । न द्वितीयः; शाबलेयादिप्रतीतौ गोत्वानुरागनियमात् । चरमे 'नागृहीतविशेषणा विशिष्टबुद्धिः' इति विशिष्टावगमात् प्रागेव विशेषणीभूतगोत्वे गोशब्दादवगन्तव्ये गोत्वशब्दव्यापारस्य तत्रैव पर्यवसानाद् विरम्य व्यापाराभावाच्च, व्यक्तिप्रतीतिः शब्दावगतजात्याक्षेपनिबन्धनेति भवताऽप्यभिधेयत्वात् । कः खल्वाक्षेपो नाम ? इत्यादिभाषितविकल्पदोषस्त्वय्येव निपतेदित्युष्ट्रलगुडन्यायापातो भवताम् । न च व्यक्तीनां शक्तिगोचरत्वे प्रमाणमस्ति । व्यक्तयः, वाच्याः,

---

इति शाश्वतकोशः । प्रतिव्यक्ति भिन्ना शक्तिरिति कल्पमादाय विकल्पयति— **आद्य इति** ॥ चक्षुरादिना संयुक्ता या गवादिव्यक्तिः, तत्समवेतं गोत्वादि सामान्यं तस्य व्यञ्जकतया विशेषणानि देशकालविप्रकृष्टा गवादिव्यक्तय इत्यनन्तव्यक्तीनां चक्षुरादिभिः सम्बन्ध इत्याह— **चक्षुरादिसन्निकृष्टेति** ॥

**स्फुटमिति** ॥ शब्दाद् व्यक्तिसिद्धौ तत्र सङ्गतिग्रहः, ततश्च शब्दाद् व्यक्तिसिद्धिरित्यर्थः । एवमनन्तव्यक्तीनां कार्त्स्न्येन ग्रहायोगाद् न तत्र शक्तिग्रह इत्युक्तम्, इदानीं जातिप्रत्यायनचरितार्थस्य शब्दस्य न व्यक्तिप्रत्यायकत्वम्; प्रमाणाभावादित्यभिसन्धायाह— **किञ्चेति** ॥ **अतिप्रसङ्ग इति** ॥ गोशब्दाद् रासभादिप्रतीतिरपि स्यादिति भावः । **गोत्वानुरागेति** ॥ गोत्वस्योपलक्षणत्वे तदननुरक्ततया कदाचिद्विशेषप्रतीतिः स्यात्, यथा राजहंसस्योपलक्षणस्याननुरागेणापि राजमन्दिरप्रतीति-

---

1. उपन्नवृत्तिपद

2. कुण्डलितो भागः सर्वोऽपि 291-तमे पृष्ठेऽनन्वितो मातृकायां वर्तते। व्याख्याऽपि तत्र तदसम्बन्धिन्येव वर्तते । अत्र तु व्याख्यानेन सङ्गत्या वाक्यार्थसङ्गत्या च स योजनमर्हतीति प्रकृते स योजितः ।

प्रमेयत्वात्, जातिवदिति चेत्, न; इदंतदादिपदवाच्यत्वोपगमेन सिद्धसाधनात्। गोव्यक्तयः, गोशब्दवाच्याः, प्रमेयत्वात्, इत्यादेः पटादौ व्यभिचारात, गोव्यक्तित्वादित्यादेरसाधारणत्वात्। तस्मादनन्तव्यभिचारिव्यक्तिषु पुरुषायुषेणापि सङ्गतिग्रहायोगाद् गोत्वमात्रं गोशब्दशब्द[?]शक्तिगोचरोऽङ्गीक्रियताम् ॥

॥ जातिप्रत्यायकतया कृतार्थानां शब्दानां व्यक्तिप्रत्यायकत्वम् ॥

[1]यदगादि—गोत्वमात्रस्य गोशब्दवाच्यत्वे तद्व्यक्तिप्रतीतिर्न स्यात्—इति, तदचारु; गोत्वमभिधाय तद्व्यक्तेर्लक्ष्यमाणत्वात्। अस्ति च लक्षणाबीजमनुपपत्तिः; आकृतिमात्रस्य पदार्थान्तरसंसृष्टतया व्यवहारायोगात्। अस्ति च शाबलेयादिव्यक्तीनां गोत्वेनाविनाभावः। [2]एवं च सति कः खल्वयमाक्षेपो नामेत्यारभ्य यदभिहितम्, तत् सर्वमस्मद्रहस्यापरिज्ञानविजृम्भितमित्युपहसन्ति सन्तः ॥

॥ व्यक्तेर्लक्षणयैव बोधः, न त्वविनाभावात्, न वाऽर्थापत्तेरित्युपपादनम् ॥

[3]यदपि—अविनाभावस्य ग्रहीतुमशक्यत्वात्—इत्युदितम्, तदसत्; अनुमानानङ्गीकारात्, लक्षणावृत्तौ तदनपेक्षणात्। अविनाभावग्रहनिरसनमिष्टप्रसञ्जनतयाऽऽभासं भवेत्।

[4]यत्पुनः व्यक्तित्वसामान्याभावात्—इति तदभद्रम्; इयं व्यक्तिरियं व्यक्तिरित्यनुवृत्तप्रत्ययनिरालम्बनतापातात्। तदेव तर्हि लक्ष्यतामिति चेत्, न; लक्षितेऽपि तस्मिन्ननुपपत्तेरनुपरतेः। [5]यदप्याक्षेपस्यार्थापत्तित्वमशङ्क्य निरसनम्, तदपि तुषखण्डन[6]समम्; अर्थापत्तित्वानिष्टेः ॥

---

रित्यर्थः। वाच्यत्वमात्रं साध्यम्, गोशब्दवाच्यत्वं वेति विकल्प्य, आद्यं दूषयति—**इदंतदादिपदेति** ॥ द्वितीयेऽपि प्रमेयत्वसत्त्वादिकं हेतुः, उत गोव्यक्तित्वसास्नादिमत्त्वादिकमिति विकल्प्यापाकरोति—**गोव्यक्तय इत्यादिना** ॥ **असाधारणत्वादिति** ॥ गोशब्दवाच्ये गोत्वे सपक्षे हेतोरवृत्तेरित्यर्थः। व्यक्तेर्लक्ष्यमाणत्वमयुक्तम्; मुख्यार्थमात्रपरत्वे प्रमाणविरोधाभावादित्याशङ्क्य, संसृष्टव्यवहारार्थं संसृष्टार्थप्रत्यायनार्थं प्रयोगानुपपत्तिरेवात्र लक्षणाप्रयोजिकेत्याह—**अस्ति च लक्षणेति** ॥ मुख्यार्थविनाभावस्य लक्षणाहेतोरभावः, अत्राह—**अस्तीति** ॥ **अनुप-**

---

1. पृ. 334 प. 11
2. पृ. 334 प. 12
3. पृ. 335 प. 1
4. पृ. 335 प. 1
5. पृ. 335 प. 6
6. खण्डनमर्थापत्ति

[1]यत्पुनर्गदितम्—प्रतीतेऽप्यन्वये तदन्यथानुपपत्त्या व्यक्तिः प्रतीयेत, प्रतीतायाञ्च व्यक्तौ तदन्वयप्रतीतिः, इतीतरेतराश्रयमिति, तदपेशलम्; मध्यमनरव्यापाराव[2] गतान्यमात्रान्वितसामर्थ्यादेवाकृतेरन्यमात्रान्वितत्वेनावगमात् ॥

॥ व्यक्तिप्रतीतिमन्तरेण जातिप्रतीतिसम्भवान्नान्योन्याश्रयः ॥

[3]यद[4]प्यपरमीरितम्—जातिप्रतीतौ सत्यां तदन्वयानुपपत्त्या व्यक्तिप्रतीतिः, प्रतीतायाञ्च व्यक्तौ जातिप्रतीतिः—इति, तदप्यचारु; व्यक्तिप्रतीतिमन्तरेण जातिप्रतीत्यनङ्गीकरणे निर्विकल्पकविलयापातात्। [5]स्यादेतदित्यारभ्य कृतं तर्हि शब्दशक्तिकल्पनयेत्यन्तमस्मदनङ्गीकृतमेवोपन्यस्य निराकरणपरं न परिहारमर्हति ॥

॥ व्यक्त्यनालम्बनजातिप्रतीतिर्निर्विकल्पिका संभवति ॥

[6]यदपि—व्यक्त्यनालम्बनाया जातिप्रतीतेरेवासम्भवादित्युक्तत्वात्—इत्युदितम्, तदहृद्यम्; विपरीतवस्तुमात्रग्राहकनिर्विकल्पकमिच्छताऽवधीरितव्यक्तिप्रतीतिजातिप्रत्ययस्यापलपितुमशक्यत्वमित्युक्तत्वात् ॥

॥ शब्दस्यैव जात्युपस्थापनद्वारा लक्षणया व्यक्त्युपस्थापकत्वम्,
अतो जातिज्ञानस्य न सप्तमप्रमाणत्वम् ॥

[7]यदभाषि—व्यक्तिज्ञानजनकं जातिज्ञानं सप्तमप्रमाणमापद्येत—इति, तदुद्भ्रान्त-

---

**पत्तेरिति** ॥ विशिष्टार्थप्रयुक्तसमभिव्याहारानुपपत्तितादवस्थ्यादित्यर्थः । **अन्यमात्रान्वितत्वेनेति** ॥ योग्येतरान्वितस्वार्थे पदसामर्थ्यं वृद्धव्यवहारेऽध्यवसीयत इत्यभिहितत्वात् शब्दसामर्थ्यादेवान्यान्वितजातिप्रतीतिर्व्यक्तिप्रतीतिनिरपेक्षा प्रतीयत इत्यर्थः ॥

व्यक्तिप्रतीतिनिरपेक्षजातिप्रतीतेरेव चोद्यान्तरमयुक्तमित्याह—**तदप्यसारमि[चार्वि]ति** ॥ **निर्विकल्पकेति** ॥ वस्तुमात्रावभासकनिर्विकल्पकमित्यत्र मात्रशब्देन सामान्यवाचिना विशेषग्राहकत्वं व्यावर्तनीयम्; इतरथा तद्वैयर्थ्यात्, तत्त्यागे

---

1. पृ. 335 प. 13
2. व्यापाराद्गता (क)
3. पृ. 336 प. 1
4. यद्यप्य
5. पृ. 336 प. 5
6. पृ. 336 प. 14
7. पृ. 337 प. 4

मनसो भाषितम्; शब्द एव जातिं प्रत्याय्य तन्मात्र एव पर्यवसानानुपपत्त्या व्यक्तिं लक्षयतीति भाषितत्वात्। अतः परं यच्छङ्कान्तरमुत्थाप्य प्रतिक्षिप्तमु **द य नेन,** तदसदनङ्गीकृतगोचरमित्युपे[1]क्ष्यते ॥

॥ सामान्यवति शब्दस्य सङ्केते विशेषाणामनन्तानामपि तत एवोपलम्भः, न तु जातिमात्रं शब्दार्थ इति **व्यो म शि वा चा र्य** शङ्का ॥

**व्यो म शि वः** पुनराह—न जातिमात्रं शब्दार्थः; अभिन्ननिमित्तोपादाने सति सामान्यवति सङ्केतकरणात्। यद्यप्यानन्त्येनावस्थिता विशेषाः; तथाप्येकं तेष्वभिन्नं सामा[2]न्यं तत्रोपलब्धम्। तदुपलम्भादनुपलभ्यमानविशेषा अपि सामान्यावष्टम्भात् सङ्केतविषयाः। शब्दाश्चानित्यत्वेऽपि विशिष्टानुपूर्वीसचिवा इति। तथा हि—यत्र यत्रेदृशं सामान्यम्, तत्र तत्रेदृशः शब्दः प्रयोक्तव्यः। इत्थम्भूताच्च शब्दादीदृशोऽर्थः प्रतिपत्तव्य इति सङ्केतग्रहणं विशेषाणामानन्त्य एव घटत इति। तथा च शब्दग्रहणात् सामान्यवत्यर्थे प्रतिपत्तिर्दृष्टा। सा च सङ्केतप्रतिपत्तिमाक्षिपति। सङ्केतश्चोक्तेनैव प्रकारेण घटते, नान्यथा—इति सर्वमेतदयुक्तम्;

---

सविकल्पेऽतिव्याप्तिरित्यर्थः। **अतः परमिति** ॥ शब्दप्रतीता जातिः साहचर्याद् व्यक्तिं स्मारयतीत्यादिकम् ॥

लाघवाव्यभिचाराभ्यां सङ्केतस्य जातिमात्रगोचरत्वात् कथं न जातिमात्रं शब्दार्थः? अत्राह—**अभिन्ननिमित्तोपादान इति** ॥ विशेषाणामनन्तानां कार्त्स्न्येनो[नानु]पलम्भात् कथं तेषु सम्बन्धाध्यवसानम्? अत्राह—**यद्यपीति** ॥ धूमत्वादिसामान्ये[न्यो]पाधावनुपलभ्यमानतद्विशेषाणां व्याप्तिग्रहवदत्रापि प्रतीतगोत्वादिसामान्योपाधावप्रतीतविशेषाणां सङ्केतगोचरत्वमित्यर्थः। शब्दानां क्षणिकत्वाद् गृहीतसङ्गतिकास्तदैव नष्टाः, इति कथमगृहीतसङ्गतिकानां शब्दानामर्थप्रत्यायकत्वम्? अत्राह—**शब्दाश्चेति** ॥ विशिष्टानुपूर्वीसचिवाः क्रमविशेषावच्छिन्ना इति तदवष्टम्भात् सङ्केतविषया इति पूर्वेण सम्बन्धः। एकत्रोपलब्धसामान्यावष्टम्भाद् विशेषाणां सङ्केतविषयत्वम्, शब्दानां चैकत्रोपलब्धक्रमोपाधौ तद्गोचरत्वमुक्तं स्फोरयति—**तथा हीति** ॥ सङ्केतस्य न विशिष्टविषयत्वम्; प्रमाणाभावात्, अत्राह—**तथा**

---

1. मित्युपलक्ष्यते।
2. सामान्यमेकत्रोपलब्धं

॥ सामान्यवतीव विशेषसमवायादिमत्यपि सङ्केतापत्त्या गौरवादुक्तशङ्कापरिहारः ॥

सामान्यवति सङ्केतकरणे सामान्ये समवाये विशेषे चैकस्य शब्दस्य शक्तिकल्पनागौरवप्रसङ्गात्, विशेषाणाश्चानन्त्येन युगशतेनापि कार्त्स्न्येनो[1]पलम्भासम्भवात्, अनुपलब्धेषु सङ्केतग्रहायोगाच्च ॥

॥ विशेषेष्वनुगतत्वात्सामान्यस्य तदुपलम्भे सर्वेषामुपलम्भ इत्यस्य द्वेधा विकल्प्य निरासः ॥

[2]विशेषाणामशेषाणामनुपलम्भेऽपि तेष्वभिन्नं सामान्यमेकत्रोपलब्धमिति यदभिहितम्, तदभद्रम्। यदेकत्रोपलब्धं सामान्यम्, तदनुपलब्धेषु प्रमितम्, न वा। नाद्यः; व्याघातात्। द्वितीये यत्र तदुपलब्धम्, तत्रैव सङ्केतग्रहः, नान्यत्र। तस्य च व्यभिचाराद्विशेषान्तरे व्यवहारो न स्यात्। अनुपलभ्यमानविशेषा अपि सामान्यावष्टम्भात् सङ्केतविषया इति चेत्, न; सामान्यावष्टम्भस्य प्रमित्यप्रमित्योर्दोषस्य भाषितत्वात् ॥

॥ यत्र यत्र सामान्यं पश्यसीत्यादौ लडर्थविवक्षाऽविवक्षयोः कालविशेषे समयग्रहायोगः ॥

[3]यदप्यपरमीरितम्—यत्र यत्रेदृशं सामान्यं पश्यसीति, तत्र लडर्थो विवक्षितः,

---

**चेति** ॥ सङ्केतप्रतिपत्तिराक्षिप्यताम्, सा तु सामान्यमात्रगोचरत्वेनाप्युपपन्ना, अत्राह—**सङ्केतश्चेति** ॥ व्यक्त्यनालम्बनजातिज्ञानासम्भवादिति भावः ॥

**व्याघातादिति** ॥ अनुपलब्धविशेषाश्रितं सामान्यं प्रतीतमिति व्याहन्यते; विशेषणविशेष्यानतिरेकाद् विशिष्टस्येत्यर्थः ॥

**लडर्थ इति** ॥ पश्यसीति यः प्रयोगः, तस्य चार्थो वर्तमानत्वम्। आद्यं दूषयति—**आद्य इति** ॥ एकफलावच्छिन्नक्रियाप्रवाहः प्रारब्धोऽपरिसमाप्तौ वर्तमानः। तत्र वर्तमानाद्धातोः लट्प्रत्ययो विहितः। एवं च सामान्यगोचरे दर्शनक्रियायां वर्तमानायामेव सङ्केतग्रहः स्यादित्यर्थः। द्वितीयेऽपि द्रक्ष्यसीति लकारान्तरपरिणामो

---

1. कार्त्स्न्येतोपलम्भात्
2. पृ. 341 प. 8
3. पृ. 341 प. 10

अविवक्षितो वा। आद्ये कालान्तरभाविविशेषे समयग्रहो न स्यात्। लडर्थस्याविवक्षितत्वे द्रक्ष्यसीति विवक्षायां दृश्यमान[[1]विशेषे समयग्रहो न स्यात्।] लडर्थस्य विवक्षितत्वे द्रक्ष्यसीति विवक्षायां वाक्यस्यानन्वितार्थत्वाद् न क्वापि समयसंवेदनं स्यात्। शब्दश्रवणात् सामान्यवत्यर्थे प्रतिपत्तिरन्यथाऽप्युपपन्ना। पदानां विशेषे लक्षणावृत्तेर्दर्शितत्वात् ॥

॥ सामान्यवत्यर्थे शब्दबुद्धिकार्याणां विरम्य व्यापाराभावेन प्रतिपत्त्ययोगः ॥

न च सामान्यवत्यर्थे प्रतिपत्तिः शब्दशक्तिकृता; विशेषणसंवेदनकार्यत्वाद् विशिष्टवेदनस्य, विशेषणविशेष्ययोर[योः]ः, पर्यायप्रतीतेर्विशेषणज्ञानोपक्षीणशब्दस्य विशेष[ष्य]पर्यन्तगमनायोगात्। यथाऽऽहुः—

'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे।'

इति। विशेषणं प्रतिपाद्य विशेष्यप्रतिपादने वा "शब्दबुद्धिकर्मादीनां विरम्य व्यापारासम्भवात्" इति सूत्रविरोधः ॥

॥ शब्दानुबुद्धकार्याणामिति न्यायेन विशेष्यस्य पुनरनभिधाने तात्पर्यम्, न तु विशेषणमभिधाय विशेष्यानभिधान इत्यादिप्रकारोन्तरेणोक्तन्यायतात्पर्यविवरणम्, शब्दादिस्थिरत्वापत्त्या तन्निरासश्च ॥

यत्पुनर्विरोधपरिहारार्थं सूत्रविवरणम्—शब्दो ह्येकदा विशेष्यं प्रतिपाद्य

---

विवक्षितः, उत लकारार्थ एवाविवक्षित इति विकल्प्याद्यं प्रत्याह—**लडर्थस्येति** ॥ द्वितीयं दूषयति—**कालेति** ॥

न च—कालमात्रसम्बन्धिसामान्यदर्शनं विवक्षितमिति—वक्तव्यम्; कालसामान्येन गोत्वादिसामान्यस्य सम्बन्धासम्भवात्, शब्दशक्तेरेव विशिष्टार्थप्रतिपत्त्युपपत्तौ न लक्षणा; कल्पकाभावात्, अत्राह—**न चेति** ॥ विशेषणम्=सामान्यम्= विशेष्यः=विशेषश्च युगपत्प्रतीयेत, क्रमेण वा। आद्यं प्रत्याह—**विशेषणेति** ॥ चरमं प्रत्याह—**विशेषणज्ञानेति** ॥ एकेन व्यापारेण विशेषणप्रतिपादकत्वमपरेण विशेष्यप्रतिपादकत्वम्, अतोऽविरोधः, अत्राह—**विशेषणमिति** ॥

विरम्य व्यापारासम्भवादित्यस्यान्याभिप्रायत्वान्न विरोध इत्याशङ्क्य तदीयव्याख्यानमनुवदति—**यत्पुनरिति** ॥ उत्तरसंयोगं न करोतीति विरम्य व्यापारो न

---

1. "विशेषे न समयं परिच्छिन्द्यात् कालमानपरिच्छेदाविवक्षायां" कुण्डलान्तर्गतस्य स्थाने पूर्वलिखितवद्वर्तते।

पुनर्विशेष्यं न प्रतिपादयतीति विरम्य व्यापारो विरुद्धः, न पुनर्विशेषणं प्रतिपाद्य विशेष्यं नाभिधत्ते इति, तथा कर्म, विभागं कृत्वोत्तरसंयोगं न करोतीति; अकृतसंयोगस्य विनाशाभावात्, न तु संयोगं कृत्वा संयोगं करोतीति विरम्य व्यापारप्रति[1]षेधः, तथा विशेषणबुद्धिर्विशेष्यबुद्धिं कृत्वा न कार्यान्तरमारभते — इति, एवं सुखादिष्वपि प्रतिषेध इति, तदसारम्; शब्दस्य स्थिरत्वप्रसक्तेः। शब्ददर्शनानन्तरमात्ममनस्संयोगः, ततो विशेषज्ञानम्, ततो मनसि क्रिया, ततो विभागः, ततः पुरातनसंयोगनिवृत्तिः, ततश्चोत्तरसंयोगाद्विशेष्य[2]दर्शनम्, इति तत्पर्यन्तशब्दावस्थानस्यावश्यस्वीकार्यत्वात् ॥

॥ विशेषादिपदानां सामान्यवाचित्वे नियते गवादिपदानामपि सर्वानुगतसामान्यवाचित्वमेव, न तु जातिवाचित्वमिति न्यायमञ्जरीकाराणां शङ्का ॥

यदपि **न्यायमञ्जर्यामीरितम्**—किं विशेषपिण्डव्यक्ता[ क्त्या ]दिपदानामपि सामान्यवाचकत्वम्, किं वा तदाधाराभिधायकत्वम्? तत्र यदि तावदाद्यः पक्षः, तदा विशेषाः, व्यक्तयो वा शब्दार्था न भवन्ति, इत्यनेन सामान्यं शब्दार्थ इत्युक्तं स्यात्। एवञ्च सति स्वमतस्यैव निषेधः, न परपक्षस्य। द्वितीयोऽनुपपन्नः; भवन्मते गवादिपदानामिव विशेषपिण्डव्यक्त्यादिपदानामानन्त्यव्यभिचाराभ्यां सङ्केतग्रहणासम्भवेन सामान्याधारनिरूपकत्वानुपपत्तेः ॥

अथ यथा कथञ्चिद् विशेषादिपदानां तदभिधायकत्वम्, तदा तद्दृष्टान्ता-

---

प्रतिषिद्ध इति सम्बन्धः। **न कार्यान्तरमारभत इति** ॥ विरम्य व्यापारः प्रतिषिद्ध इति। **एवं सुखादिष्विति** ॥ सुखमिच्छां कृत्वा प्रवृत्तिं न करोतीति व्यापारो न प्रतिषिद्धः, किन्तु प्रवृत्तिं कृत्वा न पुनःप्रवृत्तिं करोतीति विरम्य व्यापारप्रतिषेध इत्येवं सर्वत्र योजनीयम्। शब्दादीनां जन्मातिरिक्तव्यापारस्य गुणात्मनः कर्मात्मनो वाऽनिरूपणाज्जातस्य पुनर्जन्मायोगाद्विरम्य व्यापारमात्रप्रतिषेधपरं सूत्रमिति दूषयति—**तदसारमिति** ॥ दोषान्तरमाह—**शब्दस्येति** ॥ **इत्युक्तं स्यादिति** ॥ विशेषादिशब्दानां सामान्यवचनत्वादित्यर्थः। विशेषाणामानन्त्यव्यभिचारेऽपि तदनुगतविशेषत्वादिधर्मोपाधौ विशेषादिशब्दानां तत्र सङ्गतिग्रहोपपत्तेस्तद्वाचकत्वमित्याह—**अथेति** ॥ पदत्वादित्युक्ते प्रादेशमात्रश्चन्द्र इत्यादिपदे व्यभिचारो

---

1. प्रतिबोधका    2. विशेष्यवेदनं

वष्टम्भेन गवादिपदानामपि तद्वाचकत्वं साध्यते । विमत्यधिकरणभावापन्नानि पदानि, विशेषप्रतिपादकानि, उभयवादिसम्प्रतिपन्नजातिमात्रवाचकपदान्यत्वे सत्यबाध्यमानपदत्वात्; विशेषादिपदवत्—इति ॥

॥ पिण्डादिपदानामपि पिण्डत्वाद्यनुगतधर्मपरत्वमेव, विशेषाणां तु लक्षणयैव बोध इति तत्समाधानम् ॥

तदयुक्तम्; पिण्डादिपदानामपि पिण्डत्वाद्यनुगतधर्मप्रतिपादकत्वात् । नैतावता स्वमतप्रतिक्षेपः; विशेषादिशब्दैर्लक्षणया तदाधारत्वं प्रतिपाद्य तत्र वाच्यत्वप्रतिषेधात् ॥

॥ विशेषादिशब्दानां व्यक्तिपरत्वेऽपि, गवादिशब्दानां न तद्वाचकत्वम्; तेषां गोत्वादिमात्रपरत्वात् । तत्र च प्रयोगः ॥

अस्तु वा पिण्डादिशब्दानां तदाधारवाचकत्वमिति द्वितीयः पक्षः; तथापि न गवादिपदानां तद्वाचकत्वम् । तथा हि—गोत्वाश्वत्वादिशब्दानां सामान्यमात्रवचनत्वमिति विपरीतनिदर्शनस्यापि दर्शनात् सामान्यमात्रवचनत्वमेवेति किं न स्यात्? प्रयोगोऽप्यत्र सुकरः—विमतिपदानि पदा[1नि, सामान्यमात्रवचनानि, विशेषमात्रवाचकतया सम्प्रतिन्नपदान्यत्वे सत्यबाध्यमानपदत्वात्]गोत्वादिपदवदिति ॥

॥ विशेषशब्दानां विशेषवाचकत्वम्, गवादिशब्दानां सामान्यवाचकत्वमिति व्यवस्था ॥

कस्तर्हि निर्णयः? उभयथा दर्शनात् गवादिपदेषु सन्देहे सामान्यवतोऽर्थस्य वाच्यत्वे, सामान्ये, मतुबर्थे विशेषे च शक्तिकल्पनागौरवात् सामान्यमात्रवाचकत्वं गवादिपदानामिति निश्चिनुमः ॥

---

मा भूदित्युक्तम्—**अबाध्यमानेति** ॥ गोत्वाश्वत्वादिपदे व्यभिचारं वारयति—**जातिमात्रवाचकपदान्यत्वे सतीति** ॥ अन्यतरासिद्धिं परिहरति—**उभयवादिसम्प्रतिपन्नेति** ॥

गवादिशब्दानां जातिमात्रवाचित्वे, तदाधारवाचित्वे च युक्तेस्तुल्यत्वात् सन्देह एव पर्यवस्यति, न त्वेकतरपक्षनिर्णय इत्याह—**कस्तर्हीति** ॥ सामान्यवाचकत्वे निर्णय इत्याह—**उभयथेति** ॥

---

1. कुण्डलान्तर्गतं नास्ति

॥ गोशब्दादपि गोत्वविशेषस्यैवाभिधानात् कथं सामान्यवाचकत्वमिति शङ्का ॥

अथ गोशब्दात् प्रतिभासमानं सामान्यं केन रूपेण प्रतीयत[1] इति वाच्यम्— किं सामान्यरूपेण, किं गोत्वरूपेणेति । यदि सामान्यरूपेण, तदा गोशब्दात् सामान्यमात्रं प्रतिपद्य तदन्यथानुपपत्त्या विशेषमात्राध्यवसाये त[य]त्र क्वापि विशेषे प्रवृत्तिः स्यात्, न साक्षादिमति । यदि गोत्वरूपेण, तदा गोत्वरूपता नाम विशेषः सामान्यस्य किं गोशब्दादेव प्रतीयते, किं वा प्रमाणान्तरादिति । यदि गोशब्दादेव, तदा कथं सामान्यमेव शब्दार्थः? गोत्वरूपताविशेषस्यापि शब्दार्थत्वेनाभ्युपगमात् । अथ प्रमाणान्तरात्, तदपि न साधीयः; तद्व्यापारानुपलम्भादिति चेत्, नैतदतिशोभनम् ॥

॥ गोत्वं तु सामान्यमेव, न विशेषः; अनुगतत्वात् ।
विशेषपदार्थस्तु खण्डमुण्डादिव्यक्तिरेवेति शङ्कापरिहारः ॥

किं गोत्वशब्दस्य विशेषशब्दस्य चैकार्थत्वम्, उतानेकार्थत्वम्? आद्ये गोत्वपदमुपादाय विशेषपदोपादानवैयर्थ्यात्, अश्वत्वरूपता विशेष इत्यप्रयोगप्रसङ्गाच्च । द्वितीये गोत्वसम्बन्धिविशेषः खण्डादिपिण्ड एव; तस्य च प्रकृतविवादपदत्वादेवंविधविकल्पानवसरात् ॥

॥ शब्दस्य तत्तत्स्थले सामान्यविशेषवाचकत्वव्यवस्थानिष्कर्षः ॥

तदेवं गवादिशब्दाः सामान्यमभिधाय विशेषान् द्योतयन्ति । दण्ड्यादिशब्दा दण्डित्वाद्यौपाधिकधर्मवचनाः, गोत्वादिशब्दाः सामान्यवचनास्तन्मात्रपराश्च ।

---

केनेत्युक्ते विकल्पं विशदयति—**किं सामान्येति** ॥ गोत्वरूपता विशेष इति यदुक्तम्, तत्र गोत्वविशेषशब्दयोः पर्यायत्वम्, अपर्यायत्वं वेति विकल्पयति—**किं गोत्वशब्दस्येति** ॥ न केवलं सह प्रयोगः, अश्वत्वादिशब्दसमभिव्याहारोऽपि न भवेदित्याह—**अश्वत्वेति** ॥ चरमे कल्पे पर्यवसितमर्थमाह—**द्वितीय इति** ।

'दण्डी' 'कुण्डलिनी 'त्यादिपदेषु का वार्ता ? तत्राह—**दण्ड्यादीति** ॥ आकाशादिशब्दानां न जातिवचनत्वम्, नाप्यौपाधिकधर्मवचनत्वम्; तदभावात्,

---

1. प्रतीयत वाच्यम् । (क)

आकाशादिशब्दाः साक्षाद् व्यक्तिवचनाः, इदं तत्कारणमित्यादिशब्दाः साक्षात्त्वपरोक्षत्वादितटस्थोपाधौ विशेषान् प्रतिपादयन्तीति निर्णय इति सिद्धम् ॥

॥ सौगताभिमतापोहपदार्थत्वपक्षोपन्यासः ॥

अथ भावानां क्षणभङ्गित्वाद् नित्यानुगतभावासम्भवाद् न भावरूपसामान्यं वाच्यम्, अपि त्वपोह एवाभिधेय इत्यभिधत्से, न सोऽपि निरूपणसरणिमधिरोढुमर्हति ॥

॥ शब्दस्य भावरूपस्याभावरूपापोहेन स्वतन्त्रतया
लिङ्गविधया वाऽगमकत्वेनापोहवादनिरासः ॥

तथा हि—शब्दः किमपोहस्य स्वतन्त्रतया गमकः, लिङ्गतया वा? नाद्यः; मानमेयव[1]द् द्वैविध्याभ्युपगात्। द्वितीयेऽपोहेन नादस्य तादात्म्यानुपलब्धिनिबन्धनो न प्रतिबन्धः सिध्यति; शब्दस्य भावत्वात्। नापि धूमधूमध्वजयोरिव कार्यकारणभावनिबन्धनः; अपोहस्यावस्तुनः कारणत्वानुपपत्तेः, अर्थक्रियाकारित्वस्य भावलक्षणत्वात्, [अ]भावस्य भावसामान्यानभ्युपगमे न क्वापि लिङ्गलिङ्गिभावः सम्भवति,

---

अतस्ते निरर्थकाः प्राप्ताः, तत्राह—**आकाशेति** ॥ **व्यक्तिवचना इति** ॥ स्वरूपमात्रवचना इत्यर्थः। **कारणमित्यादीति**कार्यादिसङ्ग्रहः। **परोक्षत्वादीति** जनकत्वादिग्रहणम् ॥

गवादिशब्दानां गोत्वादिसामान्यवचनत्वमिति यदुक्तम्, तदसहमानः सौगतः प्रत्यवतिष्ठते—**अथेति** ॥ न भावानां क्षणिकत्वम्; प्रमाणाभावात्, यत् सत्, तत् क्षणिकम्; यथा जलधरः, सन्तश्चामी भावा इत्यादेः प्रत्यभिज्ञाविरुद्धत्वादित्याह—**न सोऽपीति** ॥ स्वभावानुपलब्धिकार्यलिङ्गकमनुमानं त्रिविधमेव; त्रिष्वेवाविनाभावादिति तदीयनियमः। तत्र स्वभावनिबन्धनः, अनुपलब्धिनिबन्धनो वा, कार्यकारणभावनिबन्धनो वेति विकल्प्य कल्पद्वयं निराकरोति—**द्वितीय इति**। चरमं प्रत्याचष्टे—**नापीति** ॥ एवं शब्दस्यापोहलिङ्गत्वानुपपत्तिमुक्त्वा क्षणिकपक्षे लिङ्गमात्रानुपपत्तिमाह—**भावेति** ॥ कुत एतत्? अत्राह—**लिङ्गेति** ॥ धूमव्यक्तीनां वह्निविशेषैः सामस्त्येन व्याप्तिग्रहायोगात् तेषामानन्त्यात् कतिपयव्यक्तीनां व्याप्तिग्रहे गृहीतव्याप्तिकानां नष्टत्वाद् धूमदर्शने वह्न्यनुमानं न स्यादित्यर्थः ॥

---

1. "यद्वैवि" (ख)

लिङ्गस्वलक्षणानामवनितलगोचराणां कार्त्स्न्येन लिङ्गिस्वलक्षणैरसर्वज्ञेन प्रतिबन्धस्य दुरवधारणत्वात्, अनवधृतप्रतिबन्धानां गमकभावासम्भवात् ॥

॥ अधूमव्यावृत्त्याऽनग्निव्यावृत्त्यनुमानशङ्काव्यावृत्तेरनुपसङ्ग्राहकत्वेन व्याप्तिग्रहासम्भवादिना तन्निरासः, जातिवाचकत्वव्यवस्था च ॥

अथाधूमव्यावृत्त्युपगृहीतानामनग्निव्यावृत्त्यु[1]पहितैः प्रतिबन्धावधारणमभिधीयते, तदपि न चारु ; व्यावृत्तेरवस्तुतयोपसङ्ग्राहकत्वानुपपत्तेः । उपसङ्ग्राहकं हि तदुच्यते — यदुत भिन्नेष्वभिन्नव्यवहारकारणम् । अपोहस्य तु सर्वोपाधिविनिर्मुक्तस्य कथं [ न ? ] नामाभिन्नव्यवहारकारणत्वसम्भवः ? तस्मादेतज्जातीयमेतज्जातीयेन प्रतिबद्धमस्य गमकमित्युपेयम् । एवञ्चास्मदभ्युपगतजातिसिद्धिः ॥

॥ भावरूपतया प्रतिभासमानगोत्वानामपोहरूपत्वासम्भवः, गोत्वस्येतरव्यावृत्तिरूपत्वासम्भवश्च ॥

किञ्च नियमेन विधिरूपतया भासमानगोत्वादीनां कथमपोहरूपत्ववाचोयुक्तिर्युक्तिमती ? स्वलक्षणानामप्यपोहत्वेन तुच्छत्वप्रसङ्गात् । अपि चागोव्यावृत्तिरेव गोत्वम्, उतागोत्वव्यावृत्तिः,येषां तेषु गोत्वमिति विवक्षितम् । अन्त्येऽसदिष्टसिद्धिः ।

---

भावसामान्यानभ्युपगमेऽप्यधूमव्यावृत्तिर्धूमत्वम्, अनग्निव्यावृत्तिरग्नित्वमनुगतभावरूपमविनाभावग्रहोपायोऽस्तीत्याह — **अथेति** ॥ येनाविनाभावोऽनुभूतः, तस्य तदानीमेव नष्टत्वात्, अननुभूताविनाभावस्यानुमातृत्वायोगात्, सन्तानस्य क्षणिकत्वे दोषतादवस्थ्यात्, अक्षणिकत्वेऽर्थक्रियाकारित्वे च स्थिरात्मवादप्रसङ्गाद् नैवमित्याह — **तदपीति** ॥ अवस्तुन उपसङ्ग्राहकत्वानुपपत्तिप्रकटनाय तत्स्वरूपमाह — **उपसङ्ग्राहकं हीति** ॥

गोत्वादीनामपोहत्वकल्पनमबाधितभावत्वानुभवविरुद्धमित्याह — **किञ्चेति** ॥ अगोव्यावृत्तिर्गोत्वमिति किं मुख्यमेकत्वम्, उत उपचरितमिति विकल्पयति — **अपि चेति** ॥ उपचारे निमित्तमगोव्यावृत्तेर्गोत्वस्य चैकाश्रयत्वमित्याह — **येषामिति** ॥

गोत्वादेरेकव्यक्तिसमाप्तत्वे व्यक्त्यन्तरे तद्बुद्धिर्न स्यात्, असमाप्तत्वे सांशत्वम् । तथा भेदेनाभेदेन च दुर्निरूपतया कल्पितत्वान्नेतरेतराश्रयादिदोषः,

---

1. उपगृहीतैः

प्रथमे स्पष्टः परस्पराश्रयः---[अ]गोप्रतिपत्तौ तन्निरूपणीया गोप्रतिपत्तिः, ततश्च तन्निषेधरूपगोप्रतिपत्तिरिति। न च—वचनीयम्; अपोहस्य कल्पनास्पदत्वाद् न च परस्पराश्रयादि दूषणम् - इति ॥

॥ स्वलक्षणस्य स्वरूपस्येव गोत्वादेरपि निर्विकल्पकावसेयत्वेन वस्तुत्वान्नापोहरूपत्वम् ॥

येन न्यायेन स्वलक्षणस्य वस्तुत्वमुच्यते, तन्न्यायस्य गोत्वादावपि तुल्यत्वाच्च। स्वलक्षणं निर्विकल्पकावसेयत्वादकल्पितमिति चेत्, तुल्यं[1] गोत्वादावपि; दूरे निर्विकल्पकगृहीतसामान्यस्य विशेषजिज्ञासादर्शनात् ॥

॥ अपोहस्य स्वतः, अनपोहापोहरूपेणवा न वाच्यत्वमित्युपसंहारः ॥

किञ्चापोहस्यापि स्वशब्दप्रतिपाद्यत्वमनपोहापोहरूपेण, रूपान्तरेण वा? अन्त्येऽन्यापोहवाचकत्वनियमः शब्दानां विशीर्येत; अपोहशब्दे व्यभिचारात्। आद्येऽप्यनपोहस्य रूपादिरूपेणानपोहशब्दप्रतिपाद्यत्वे शब्दानामपोहार्थत्वनियमभङ्गः, अपोहापोहरूपेण प्रतिपाद्यत्वे व्याघातः—अनपोहप्रतिषेधोऽप्यपोह इति। न हि अनीलव्यावृत्तिमनीलात्मतया लौकिकाः समालोचयन्ति। तस्माद् गौर्गौरित्यनुगताभिलापविकल्पालम्बनत्वमपोहस्यार्थक्रियासामर्थ्यविरहिणोऽनुपपन्नम्, इति भावरूपमेव गोत्वादिसामान्यं स्वीकरणीयमित्यलं कलकलेन ॥

---

अत्राह—**न चेति** ॥ व्यावृत्तम् = स्वलक्षणम्, व्यावृत्तिश्चान्योन्याभावरूपो भेदः, स न स्वप्रतियोगिकः; वस्त्वभावप्रसङ्गात्, न परप्रतियोगिकः; परस्यैव भेदसिद्धेः पूर्वमसिद्धेः, इतरस्वलक्षणं विकल्पितमिति प्रसक्तौ विधिरूपत्वानुभवेन तस्य वस्तुत्वं वाच्यम्, तत् प्रकृतेऽपि सममित्याह—**येनेति** ॥ निर्विकल्पकस्यैव प्रत्यक्षस्य सुगतसमये प्रमाणत्वात् तद्विषयस्वलक्षणस्य परमार्थतेत्याह—**स्वलक्षणमिति** ॥

**रूपान्तरेणेति** ॥ अनुवृत्तस्वरूपेणेत्यर्थः। अनपोहापोहतयाऽपोहः स्वशब्देनोच्यत इत्यत्रानपोहस्य स्वशब्दवाच्यत्वं रूपादिरूपेण, अपोहापोहरूपेण वेति विकल्प्याद्यं प्रत्याह—**आद्य इति** ॥ **नियमभङ्ग इति** ॥ अनपोहशब्दे व्यभिचारात्। द्वितीयं दूषयति—**अपोहापोहेति** ॥ अपोहप्रतिषेधस्यापोहत्वव्याघातं दृष्टान्तेन स्पष्टयति—**न हीति** ॥ अनुवृत्तव्यवहारकारणत्वमवस्तुनोऽनुपपन्नं यस्मात्, तस्मादित्युपसंहरति ॥

---

1. तुल्या (क)।

शब्दाः शक्त्याऽभिधेये विदधति धिषणां लिङ्गभावानपेक्षा-
स्तत्राप्यानन्त्यदोषाद्व्यभिचरणकृतो वर्जयित्वा विशेषान् ।
एकस्मिन् जातिमात्रे प्रतिदधति धियं कर्मयोगाद्धि मुक्ता
ब्रह्माद्वैतं भजन्ते विगलितविषया लक्षणावर्त्मनैव ॥ ४३ ॥

॥ वेदान्तानां संसृष्टार्थपरत्वनियमेनाखण्डार्थत्वाक्षेपः ॥

ननु—कथमखण्डैकरसे त्रय्यन्तवचसां प्रामाण्यम्? यावता संसृष्टपदार्थे, पदार्थसंसृष्टे वा वाक्यप्रामाण्यं प्रामाणिकैरङ्गीकृतम् । अभिहितं चैतत् **भवनाथेन**—वाक्यात्मनो[1]ऽनेकपदार्थात्मनि वाक्यार्थे धीजननात् । ततो नाद्वैतम् ॥

॥ 'नेति नेती'ति निषेधमुखेनाद्वैतप्रतिपादने व्याघातः ॥

अथ "एष नेति नेति" इति सर्वोपाधिनिषेधान्नानावस्त्वन्तरवारणादद्वैतम्, तन्न;

---

वृत्तवर्तिष्यमाणवादार्थसङ्गतिं कुर्वन् वृत्तमर्थं सङ्गृह्णाति—**शब्दा इति** ॥ **व्यभिचरणकृत इति** ॥ आनन्त्यव्यभिचाराभ्यामित्यर्थः—**एकस्मिन्निति** ॥ लाघवाव्यभिचाराभ्यामिति यावत् । वर्तिष्यमाणवादार्थं सङ्गृह्णाति—**कर्मयोगादिति** ॥ कर्मयोगः = साध्यसाधनसम्बन्धः । ततोऽपि मुक्ताः = अविद्यावस्थायां कर्मकलापं प्रतिपाद्य, नित्यकर्मानुष्ठानेन ब्रह्मार्पणतया कृतेन शुद्धबुद्धिः = विगलितविषया = परित्यक्तसाध्यसाधनादिसंसर्गगोचरा, अविषयं ब्रह्माद्वैतं भजन्त इत्यर्थः ॥

अद्वैतं भजन्त इत्युपनिषत्पदवृन्दस्याखण्डे प्रामाण्यं ध्वनितम्, तद्व्याप्तिविरोधेन विघटयति—**नन्विति** ॥ उपक्रमादिलिङ्गावगतत्वात् तात्पर्य[स्य,] त्रय्यन्तानामखण्डगोचरत्वमेव प्रामाणिकैरूरीक्रियते, न विपरीतम्, अत्राह—**अभिहितं चेति** ॥ पदस्य स्मारकत्वेन, अनुवादकत्वेन वाऽप्रमाणत्वाद् वाक्यात्मनः शब्दस्य प्रमाणत्वं तस्यानेकपदरूपस्यानेकपदार्थात्मनि परस्परसंसृष्टेऽर्थे धीजनकत्वात् । ततो वाक्यान्नाद्वैतं सेत्स्यतीत्याशयः ॥

द्विविधानि वेदान्तवाक्यानि—विधायकानि, निषेधकानि च । तत्र विधायकानामखण्डबोधकत्वासिद्धावपि निषेधकानामतद्व्यावृत्तिद्वाराऽखण्डबोधकत्वमिति शङ्कते—**अथेति** ॥ पराहत्या पराकरोति—**तन्नेति** ॥ सद्रूपतया = भावात्मना ।

---

1. त्मका (क)

"यो ह्येषः" इति [1]सद्रूपतया पदार्थः, सोऽसद्रूपतया नेत्यनेन सह सम्बन्धुमयोग्यः; अस्ति नास्तीति तदन्वयायोग्ययोश्च न वाक्यार्थभवनम्। निषेधवाक्ये हि नात्यन्तिको निषेधः, किन्तु क्वचित् कस्यचिद्। अद्वैतवादे चात्यन्तनिषेधः, स स्वोक्तिहतः—

"लब्धरूपे क्वचित् किञ्चित्तादृगेव निषिध्यते"

इति हि स्वोक्तिरिति॥

॥ वेदान्तानामखण्डार्थत्वाभावेऽनुमानम्, तत्र विपक्षे पदान्तरवैयर्थ्यस्य बाधकत्वं च॥

अत्र प्रयोगः— सत्यज्ञानादिवाक्यम्, संसृष्टार्थपरम्, नाखण्डनिष्ठमिति वा, वाक्यत्वात्; 'गामनय' इति वाक्यवत्; सत्यादिवाक्यार्थो वा, पदार्थसंसर्गात्मकः, नाखण्डो वा, वाक्यार्थत्वात्; 'गामानय' इत्यादिवाक्यार्थवत्—इति। विपर्यये पुनरेकस्मादेव पदादखण्डप्रतिपत्तौ पदान्तरोपादानवैयर्थ्यप्रसङ्गो बाधकः। पदानामपर्यायाणामेकप्रातिपदिकार्थे पर्यवसानमखण्डार्थत्वम्। क्रियाकारकादिसंसर्गाभावोपलक्षितश्च प्रातिपदिकार्थोऽखण्ड इति हि ते मतम्। तत्रैकेनैव पदेन तदवगमे कथं पदान्तरानर्थक्यं न स्यात्?

---

**एष इति** पदार्थः = अपरोक्षतया बुद्धिस्थवाचिना सर्वनाम्ना प्रत्यवदृष्टः, सोऽसद्वाचिना नेत्यनेनासद्रूपतया संसर्गं नार्हति; एकत्र 'अस्ति नास्ति' इति धियोर्विरोधादित्यर्थः। 'नेह घटः' 'नेदं रजतम्' इत्यादिवाक्यमपि तर्ह्यनन्वितार्थं स्यात्, अत्राह—**निषेधेति**॥ "एष नेति" इत्यादिवाक्येऽपि नायं विधिर्दण्डवारितः, अत्राह—**अद्वैतेति**॥ अन्यत्र सतोऽन्यत्र निषेधेऽद्वैतासिद्धेरित्यर्थः। एतद्घटे तद्भूतलसंसर्गस्येवात्यन्तिको निषेधः किं न स्यात्? अत्राह—**स स्वोक्तीति**॥

कथितमेतन्न प्रमितमिति चेत्, अत्राह—**अत्रेति**॥ बाधकमेव द्रढयितुं पदानामखण्डार्थत्वम्, अखण्डं च लक्षयति—**पदानामिति**॥ पदार्थसंसर्गे गवानयनादिवाक्यवृत्तिं व्यावर्तयति—**प्रातिपदिकार्थ इति**॥ पर्यवसानम्=तात्पर्येण धीजननम्। संसर्गाभावविशिष्टस्य वाक्यगम्यत्वेऽखण्डत्वासम्भवः, अत उक्तम्—**उपलक्षित इति**॥ एवमखण्डरूपमुदीर्य पर्यवसितमनिष्टमाह—**तत्रेति**॥

---

1. यद्रू (ख)

॥ व्यवच्छेद्यभेदेनापर्यायत्वावैयर्थ्ययोरखण्डार्थत्वेऽपि सम्भव इति परमसिद्धान्तिनोऽवान्तरशङ्का ॥

स्यादेतत्—"विज्ञानमानन्दं ब्रह्म" इति श्रुतिरात्मनो विज्ञानानन्दरूपतां समर्थयते। न चैकार्थनिष्ठत्वेन पर्यायतया विज्ञानानन्दपदयोराम्नानवैयर्थ्यम्; ऐकार्थ्येऽपि व्यवच्छेद्यभेदादेव पर्यायत्ववैयर्थ्ययोरभावात्; "प्रकृष्टप्रकाशश्चन्द्रः" इतिवत् ॥

॥ प्रकृष्टप्रकाशश्चन्द्र इत्यत्राखण्डार्थत्वोपपादनप्रकारः। विज्ञानमानन्दमित्यादिवाक्यानामखण्डार्थत्वानुमानं च ॥

तत्र हि प्रकृष्टप्रकाशपदयोर्मिथश्चन्द्रपदेन चाभिन्नार्थत्वमङ्गीकरणीयम्; अन्यथा चन्द्रप्रातिपदिकार्थस्य पृष्टत्वात् तदितरस्य कथनेन प्रश्नोत्तरयोरसङ्गतिप्रसङ्गात्। अतस्तत्रैकार्थ्येऽपि यथा प्रकृष्टपदस्याप्रकृष्टखद्योतादि व्यवच्छेद्यम्, प्रकाशपदस्याप्रकाशतिमिरादिव्यवच्छेद्यभेदादवैयर्थ्यम्, एवं विज्ञानानन्दपदयोरर्थभेदाभावेऽप्यविज्ञानानानन्दरूपव्यवच्छेद्यभेदादवैयर्थ्यम्। तथा च प्रयोगः—विज्ञानादिवाक्यम्, अखण्डार्थनिष्ठम्, लक्षणवाक्यत्वात्; प्रकृष्टप्रकाशश्चन्द्र इतिवदिति ॥

॥ व्यवच्छेद्यभेदेनापर्यायत्वादिनिरासेन, प्रकृष्टप्रकाशवाक्यस्यापि संज्ञासंज्ञिसम्बन्धबोधकत्वेन सखण्डार्थत्वोपपादनेन च महापूर्वपक्षोपसंहारः ॥

---

व्यवच्छेद्यभेदमात्रेणापर्यायत्व-सहप्रयोगयोरुपपत्तेर्विपक्षबाधकस्यासिद्धिरित्याह—**स्यादेतदिति** ॥ एकार्थत्वे घटकलशादिशब्दवत् पर्यायत्वापत्त्या सहोच्चारणानर्थक्यम्, अत्राह – **न चेति** ॥

प्रकृष्टप्रकाशादिशब्दानामपर्यायानेकशब्दतया घटपटादिशब्दवदनेकार्थत्वाद् दृष्टान्तासिद्धिः, अत्राह—**तत्र हीति** ॥ प्रकर्षगुणप्रकाशत्वसामानाधिकरण्ययोः प्रकृष्टप्रकाशशब्दाभ्यां प्रतीतेः कथमेवमङ्गीकरणीयम्? अत्राह—**अन्यथेति**। कथं तर्हि प्रकृष्टप्रकाशपदयोरपर्यायत्वसहप्रयोगयोरुपपत्तिः? अत्राह—**अत इति** ॥ प्रकृष्टप्रकाशवाक्यस्याखण्डार्थत्वेऽपि न विज्ञानादिवाक्यस्य तथात्वम्; प्रमाणाभावात्, अत्राह – **तथा चेति** ॥

वाक्यत्वस्य संसर्गविषयत्वेन व्याप्त्याऽखण्डार्थत्वे व्यवच्छेद्यभेदानुपपत्त्या सहप्रयोगानुपपत्त्या च दूषयति—**तदेतदिति** ॥ प्रतिपदमर्थभेदकल्पनागौरवाद्वर-

तदेतदचतुरश्रम्—

संसर्गविषयं वाक्यं नाखण्डविषयं क्वचित् ।
ऐकार्थ्ये न व्यवच्छेद्यभेदोऽपि पदयोर्यतः ॥ ४४ ॥

सर्वमेव हि वाक्यं पदार्थसंसर्गविषयम्, न त्वखण्डैकपदार्थमात्र[1]विषयम्; एकेनैव पदेन तत्प्रतिपत्तेरितरपदानां वैयर्थ्यस्य दुष्परिहरत्वात्। न च व्यवच्छेद्यभेदाद-वैयर्थ्यम्; ऐकार्थ्ये पर्याययोरिव व्यवच्छेद्यभेदस्यैवानुपपत्तेः। न हि कुम्भकरीरपदयो-रेकार्थयोर्व्यवच्छेद्यभेदो नाम। [2]यत्पुनः प्रकृष्टप्रकाशश्चन्द्र इति वाक्यमखण्डार्थनिष्ठ-तयाऽवश्याभ्युपगमनीयमित्युक्तम्, तद् दुरुक्तम्; तस्यापि संज्ञासंज्ञिसम्बन्धपरत्वात्। न चैवं प्रश्नोत्तरयोरसङ्गतिः; प्रश्नस्यापि कस्यात्र चन्द्रशब्दः संज्ञेति संज्ञासंज्ञि-संसर्गविषयत्वात्, अन्यथा चन्द्रस्वलक्षणस्य प्रत्यक्षत्वादस्मिन् ज्योतिर्मण्डले कतम-श्चन्द्र इति प्रश्नस्य तन्मात्रविषयत्वेनानुत्थानात्। अतश्चन्द्रपदस्य स्वार्थेन संज्ञा-संज्ञिसम्बन्धप्रतिपादनं तदर्थमनुपलक्ष्य न शक्यमिति तदर्थोपलक्षकप्रकृष्ट[ष्ट]विशिष्ट-प्रकाशप्रतिपादनाय प्रकृष्टप्रकाशपदयोराम्नानस्यापि प्रश्नोपयोगित्वान्न प्रागुक्तदोषा-वकाशः; अतल्लक्षणवाक्यत्वात्। तस्माद्विज्ञानादिवाक्यमपि विज्ञानादिविशेषण-विशिष्टविषयम् ॥

---

मेकार्थपर्यवसायित्वं पदानामित्याशङ्कां निराकुर्वन् कारिकां व्याकरोति—**सर्व-मेवेति** ॥ **संज्ञासंज्ञिसंबन्धपरत्वादिति** ॥ चन्द्रशब्दः संज्ञा, प्रकृष्टप्रकाश-गुणाधारः संज्ञीति नामनामिसम्बन्धप्रतिपादकत्वादित्यर्थः। संज्ञासंज्ञिसंसर्गगोचरत्वं प्रश्नस्य स्वीकुर्वता चन्द्रस्वलक्षणविषयत्वं स्वीकृतम्, इति तदेवोभयप्रतिपन्नत्वादङ्गी-क्रियताम्, अत्राह—**अन्यथेति** ॥

एवमपि संसर्गप्रश्ने प्रकृष्टप्रकाशविशिष्ट उत्तरवाक्येनोच्यत इति कर्णे स्पृष्टः कटिं चालयतीतिप[व]दसङ्गतिरेव, अत्राह—**अत इति** ॥ लक्षणवाक्यत्वादिति प्रयोगे दृष्टान्ताभावेनाप्रसिद्धविशेषणत्वं प्रतिपाद्य का तर्हि विज्ञानादिवाक्यस्य गतिरिति। तामाह—**तस्मादिति** ॥

---

1. पदार्थमात्रम् (क) 2. पृ. 352 प 9

॥ "विज्ञानमानन्दं ब्रह्म" इति सामानाधिकरण्यस्य भेदसहिष्ण्व-
भेदपरत्वेन संसृष्टार्थपरत्वेऽप्युपपत्तिरिति तत्त्वाविर्भावकाररीत्याऽऽक्षेपोपसंहारः ॥

कथं तर्हि "विज्ञानमानन्दं ब्रह्म" इति सामानाधिकरण्यमिति चेत्, मैवम्; मधुरो गुड इतिवद् भेदे[द]सहिष्णोरभेदात्, समवायाद्वा तदुपपत्तेः। [किञ्च] श्रुतिरपि "स एको ब्रह्मण आनन्दः", "आनन्दं ब्रह्मणो विद्वान्" इत्यादि-रानन्दात्मनो भेदमापादयन्ती तदैक्यस्याप्यावाधिनी। तत् सिद्धं विज्ञानानन्दात्मानः परस्परं भिन्ना इति **तत्त्वाविर्भावकारो**ऽभिदधे ॥

॥ माननमनोहरदृष्ट्या सत्यादिवाक्याखण्डार्थस्याक्षेपः, ज्ञानानन्दादि-
पदानामपर्यायतया ब्रह्मणोऽन्यत्र लोकेऽप्रयोगादिति महापूर्वपक्षोपसंहारः ॥

**माननमनोहरकारो**ऽप्यस्यवत्त—न चाद्वैतपक्षे सत्यज्ञानानन्दादिशब्दानां सह प्रयोगो घटेत; पर्यायत्वात्, अपर्यायत्वेऽद्वैतहानिः। न च—प्रकृष्टः प्रकाशः सवितेतिवत् शब्दद्वयोपाय एकार्थ एव प्रतिपाद्यत इति—साम्प्रतम्; दृष्टान्तासिद्धेः, प्रकृष्टशब्दस्येतरेतराभावादिनिमित्तसव्यपेक्षप्रवृत्तेः, प्रकाशशब्दस्य प्रकाशत्वबलात्;

---

विज्ञानानन्दविशिष्टस्य ब्रह्मणो वाक्यार्थत्वे विज्ञानादिपदानां सामानाधिकरण्यं न स्यात्; भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकार्थवृत्तेः सामानाधिकरण्यलक्षणस्यावृत्ते-रित्याह—**कथं तर्हीति** ॥ गुणगुणिनोस्तादात्म्यात् सर्वत्र सामानाधिकरण्यस्य तादात्म्यविषयत्वादिति परिहरति—**मैवमिति** ॥ एवं भट्टदृष्ट्या सामानाधिकरण्यं प्रतिपाद्य गुरुदृष्ट्या प्रतिपादयति—**समवायाद्वेति** ॥ विज्ञानादिवाक्यस्याखण्डार्थ-त्वानुमाने दृष्टान्तस्य साध्यवैकल्यमुक्तम्, इदानीं श्रुतिविरुद्धकालात्ययापदिष्टतामाह—**किञ्चेति** ॥ जाड्यदुःखताव्यावृत्तिद्वारा विज्ञानानन्दशब्दाभ्यामखण्डः प्रतिपाद्यत इति, अत्राह—**न चेति** ॥

तार्किकसमये प्रकाशस्य गुणतया तत्र प्रकर्षरूपगुणान्तरायोगात् प्रकृष्टपदमितर-व्यवच्छेदद्वारा प्रकाशपर्यवसायीति कथं दृष्टान्तासिद्धिः? अत्राह—**प्रकृष्टशब्द-स्येति** ॥ अपकृष्टादन्यत्वम् = इतरेतराभावः। आदिपदेनाप्रकर्षात्यन्ताभावसङ्ग्रहः।

अन्यथा तत्रापि पर्यनुयोगस्य तुल्यत्वात् । किञ्च, लोके प्रकृष्टप्रकाशशब्दयोर्यथा परस्परार्थव्यभिचारेण प्रयोगः—'प्रकृष्टः पुमान्' 'प्रदीपः प्रकाशः' इति, तयोश्चैकत्र मयूखमालिनि प्रयुक्तयोरर्थविशेषबोधकत्वम् । न चैवं ज्ञानानन्दादिशब्दयोरस्ति; लौकिकज्ञानानन्द[1]स्याब्रह्मस्वरूपत्वात्, भेदेन व्युत्पत्तौ भग्नोऽद्वैतवादः—इति ॥

किञ्च ज्ञानानन्दादिपदानामख[2]ण्डवस्तुनि न तावद्रूढिः; अप्रसिद्धेः, अनभ्युपगमाच्च। अत एव न योगः। नापि गौणी; मुख्यार्थगुणसम्बन्धस्य निर्गुणेऽसम्भवात्। नापि लक्षणा; जहत्स्वार्थायां तस्यां ब्रह्मणोऽज्ञानानन्दादित्वप्रसङ्गात्। नाप्यजहत्स्वार्था; तथा सति ज्ञानादिवैशिष्ट्यप्रसङ्गात्। न च स्वार्थभागत्यागलक्षणा लोकवादिप्रसिद्धा, नापि साऽत्र सम्भवति; ज्ञानादेरभागत्वात्, अनयैव नीत्या तत्त्वमस्यादिमहावाक्यानामप्यखण्डार्थनिष्ठता निराकरणीया। तस्मात् सर्वं वाक्यं पदार्थसंसर्गपरम्, इति न वेदान्तवाक्यादखण्डार्थसिद्धिरिति सिद्धम् ॥

---

अपकृष्टप्रतियोगिकेतरेतराभावविशिष्टः, [अ]प्रकर्षात्यन्ताभावविशिष्टो वा प्रकृष्टपदार्थ इत्यर्थः। प्रकृष्टप्रकाशशब्दाभ्यां प्रकर्षगुणप्रकाशत्वसामान्याभिधानद्वारा तदाधारव्यक्तिरेकैव प्रतिपाद्यताम्, का नाम वस्तुक्षतिः? अत्राह—**अन्यथेति** ॥ एवं विज्ञानानन्दपदयोरखण्डार्थत्वे प्रकृष्टादिवाक्यं नोदाहरणम्, विशिष्टविषयत्वादित्युक्तम्। इदानीं प्रकृष्टप्रकाशशब्दयोरपर्यायत्वेऽपि न विज्ञानानन्दपदयोरपर्यायत्वम्; अर्थभेदस्य दर्शयितुमशक्यत्वादित्याशयेनाह—**किञ्चेति** ॥ घटज्ञानम्, देवदत्तस्यानन्दः, सुखम् चैत्रस्येति ज्ञानानन्दशब्दयोरपि परस्परव्यभिचार्यर्थयोरेकत्र ब्रह्मणि प्रयुक्तयोरर्थविशेषप्रतिपादकता, अत्राह—**लौकिकेति** ॥ ननु ज्ञानसुखे मुख्यामुख्यभेदेन द्विविधे। तत्र मुख्ययोरेव ब्रह्मरूपत्वम्, अमुख्ययोरब्रह्मरूपत्वाद्भवति भेदेन व्युत्पत्तिः, अत्राह—**भेदेनेति** ॥ शब्दस्य चतस्रो वृत्तयः—रूढिः, योगः, गौणी, लक्षणा चेति। तत्र न तावत् प्रथमेत्याह—**किञ्चेति** ॥ अखण्डाशब्दशक्ती रूढिः। **अत एवेति** ॥ अप्रसिद्ध्यादेरेव। अवयवशक्त्यनुगमेन विशिष्टार्थे वृत्तिर्योगः; मुख्यार्थगुणयोगिन्यर्थान्तरे वृत्तिर्गौणी, सेह न सम्भवतीत्याह—**नापि गौणीति**। 'सोऽयं देवदत्तः' इत्यादौ भागत्यागलक्षणा प्रसिद्धेति, अत्राह—**नापि साऽत्रेति** ॥ किमिदमखण्डत्वम्—निरवयवत्वम्? अभिन्नत्वम्?

---

1. ज्ञानानन्दस्यापि ब्रह्म    2. ण्डे

॥ सत्यादिवाक्यानां तत्त्वमस्यादिमहावाक्यानां चाखण्डार्थत्वप्रतिज्ञा महासिद्धान्तिनः ॥

अत्र ब्रूमो भवेल्लोके वेदे चाखण्डनिष्ठता ।
वाक्यस्य लक्षणाऽर्थस्य नान्यथा तत् प्रसिध्यति ॥ ४५ ॥

पदार्थान्तरभेदाभावोपलक्षितः प्रातिपदिकार्थः, पदार्थान्तरसंसर्गाभावोपलक्षितो वाऽखण्डः, तन्निष्ठत्वं पदानामखण्डार्थत्वम् । यथाऽऽहुः—पदानां परस्परा[न]वच्छिन्नार्थानामनन्याकाङ्क्षाणामव्यतिरिक्तैकरसप्रातिपदिकार्थानुगमः—इति । यद्यपि वेदान्तेषूपासनावाक्यानां संसृष्टार्थगोचरत्वमविशिष्टं कर्मकाण्डेन ; तथापि ब्रह्मवाक्यमखण्डार्थम् । तद् द्वेधा—किञ्चित्पदार्थप्रतिपादकम् , किञ्चिद्वाक्यार्थप्रतिपादकम् । तत्राद्यं "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म"इत्यादिरूपं तदर्थविषयमवान्तरविषयमवान्तरवाक्यमित्युच्यते । द्वितीयं "तत्त्वमसि" "अयमात्मा ब्रह्म"इत्यादिरूपं महावाक्यसंज्ञम् । तत्र पदार्थज्ञानसाध्यत्वाद्वाक्यार्थधियः प्रथमं सत्यादिब्रह्मलक्षणवाक्यवृत्तिरुच्यते ॥

---

निस्सम्बन्धत्वं वा । नाद्यः ; रूपादौ गुणत्वसमवाय इति वाक्यार्थेन व्यभिचारात् । अत एव[न]द्वितीयः । नाप्यस्ति ; मत् [नाप्यन्तिमम् ,] समवायो नित्य इत्यादिवाक्यार्थेन व्यभिचारात् , अत्राह—**पदार्थान्तरभेदेति** ॥ अखण्डस्यैव लक्षणत्वे पञ्चपादिकाचार्यवचनमुदाहरति—**यथाहुरिति** ॥ अनन्याकाङ्क्षाणामित्यन्तं शब्दस्याखण्डनिष्ठत्वलक्षणम् , इतरदखण्डस्य लक्षणम् । मात्रेति लिङ्गसङ्ख्यादिव्यवच्छेदः । **अव्यतिरिक्तेति** गामानयेत्यादिवाक्यार्थं व्यवच्छिनत्ति । **एकरसमिति** "उद्भिदा यजेते"ति वाक्यार्थम् । पदानामनुगम इत्युक्ते गामानयेत्यादिपदानामन्वयेऽतिव्याप्तिः, तां व्यावर्तयति—**परस्परानवच्छिन्नार्थानामिति** । "उद्भिदा यजेत"इत्यत्रोद्भिद्यागशब्दयोर्यागमात्रवाचिनोर्नियोगसाकाङ्क्षयोरन्वयं वारयति – **अनन्याकाङ्क्षाणामिति** ॥ विमतिपदम् , पदार्थसंसर्गपरम् , वेदान्तत्वात् ; उपासनवाक्यवदिति, अत्राह—**यद्यपीति** ॥ विपक्षबाधवैधुर्यात् सन्दिग्धोपाधित्वमित्यर्थः । **तदर्थविषयमिति** ॥ तत्पदार्थब्रह्मलक्षणप्रतिपादकमित्यर्थः । सत्यादिपदलक्ष्यस्वरूपस्य निर्भागत्वेऽपि वाच्यं विशिष्टरूपत्वात् सभागमित्युपपादयति—**तथा हीति** ॥ प्रथमं सत्य-

॥ सत्यज्ञानादिलक्षणवाक्याखण्डार्थत्वोपपादनम् ॥

तथा हि—गुणक्रियाजातिरूढीनां पदप्रवृत्तिनिमित्तानां ब्रह्मण्यभावाल्लक्षणा वृत्तिराश्रीयते। सा त्रेधा—स्वार्थं विहायार्थान्तरे वृत्तिर्जहत्स्वार्था; यथा गङ्गापदस्य तीरे। स्वार्थमादायार्थान्तरे वृत्तिरजहत्स्वार्था; यथा शोणस्तिष्ठतीति। शोणशब्दस्य शोणादिगुणयुतेऽश्वादौ स्वार्थैकदेशं विहायाविरुद्धांशे वृत्तिः[1]। [अपरा]जहदजहत्स्वार्था। न चेयमप्रसिद्धा; "सोऽयं चैत्रः" इत्यत्र तत्प्रसिद्धेर्वक्ष्यमाणत्वात्॥

॥ सत्यज्ञानानन्दपदानां मुख्यामुख्यार्थविवेकः ॥

न च सत्यादिपदार्थानां निर्भागत्वादत्र तदसम्भवः। तथा हि—सत्यशब्दस्य परमार्थसत्याभासे वृद्धव्यवहारात् सत्याकाशादिशबले ब्रह्मणि शक्तिः। यथाहुः—

"आकाशादौ सत्यता तावदेका
प्रत्यङ्मात्रे सत्यता काचिदन्या॥
तत्सम्पर्कात् सत्यता तत्र चान्या
व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र॥"

इति मुख्यज्ञानाभासेद्धा[[2]मुख्यज्ञानरूपान्तःकरणवृत्ति][3]शबले ज्ञानशब्दशक्तिः। आहुश्च

"बुद्धेर्वृत्तौ ज्ञानता तावदेका
प्रत्यग्बोधे ज्ञानता काचिदन्या।

---

पदवाच्यस्य सभागतामाह—**सत्यशब्दस्येति**॥ परमार्थसत्यं ब्रह्म, तस्याभासमज्ञानशबलमाकाशादौ कारणतयाऽनुगतम्, तेनेत्थं[द्ध]सत्त्वेन व्यवह्रियमाणम्, व्यवहारसत्यमाकाशादि, तच्छबले विशिष्टरूपे सतीत्यर्थः। नेदं स्वोत्प्रेक्षामात्रम्; सम्प्रदायविद्भिः स ङ्क्षे प शा री काचार्यैरुक्तत्वादित्याह—**यथेति**॥ **मुख्यज्ञानेति**॥ मुख्यं ज्ञानम्=स्वप्रकाशप्रत्यक्चैतन्यम्, तस्याभासेन=प्रतिबिम्बेन यदित्थ[द्ध]म् अन्तःकरणपरिणामरूपममुख्यज्ञानं घटादिगोचरा वृत्तिः, तेन विशिष्टे ज्ञानशब्दस्य व्युत्पत्तिरित्यर्थः। **अन्ताभाववतीति**॥ देशतः कालतो वस्तुतश्च परिच्छेदाभावविशिष्ट इत्यर्थः।

---

1. वृत्तिर्जहत्स्वार्था न चेय। 2. कुण्डलान्तर्गतं नास्ति
3. वृनिः शबले

तत्सम्पर्काज्ज्ञानता तत्र चान्या
व्युत्पन्नोऽयं ज्ञानशब्दस्तु तत्र ॥"

इति अन्ताभाववत्यनन्तशब्दस्य शक्तिः । शुभकर्मोपस्थापितान्तःकरणवृत्तिविशिष्टाभासे शक्तिरानन्दशब्दस्य। यथाहुः—

"ब्रह्मण्यानन्दशब्दोऽयं प्रवृत्तः सुखवाचकः ।
संवेद्ये च सुखे लोक आनन्दाख्या प्रयुज्यते ॥"

इति । तत्र ब्रह्मशब्दो विशेष्यसमर्पकः, इतराणि विशेषणानां विशेषणानि । विशेष्येण सम्बन्ध्य पश्चात् परस्परमपि सम्बन्धः—अरुणादीनामिव क्रयणभावनान्वितानां पार्ष्ठिकोऽन्वयः । यथाहु :—

"वेद्यत्वेन यतो ब्रह्म प्राधान्येन विवक्षितम् ।
तस्माद्विशेष्यं तज्ज्ञेयं ततोऽन्यत् स्याद्विशेषणम् ॥"

इति ॥

॥ सत्यादिपदानां सन्मात्रादिपरत्वं सामानाधिकरण्यानुपपत्त्या ॥

तत्र सामानाधिकरण्येन प्रयुक्तानां विशेषणविशेष्यभावमापन्नानां विरोधः स्फुरति ; भिन्नप्रवृत्तिनिमित्तानामेकार्थवृत्तित्वव्यतिरेकेण सामानाधिकरण्यलक्षणस्यानु-

---

"विज्ञानमानन्दमि" त्यत्रानन्दपदवाच्यं दर्शयति—**शुभेति** ॥ मुख्यं सुखमात्मा, तद्व्यञ्जकान्तःकरणपरिणामोऽमुख्यम् , तच्छबलानन्दाभासे शक्तिरानन्दपदस्येत्यर्थः । अत्रापि सुरेश्वराचार्यवचनमुदाहरति—**यथेति** ॥ एवं वाच्यस्य सभागत्वं प्रदर्श्य विशेषणविशेष्यभावेन शब्दानामन्वयं दर्शयति—**तत्रेति** ॥ इतराणि = सत्यज्ञानानन्तानन्दपदानि । ननु नोपसर्जनमुपसर्जनान्तरेणान्वयमर्हति ; समत्वात् , अतश्च सच्चिदानन्दात्मकं वस्तु न सिध्येत्, अत्राह — **विशेषणानामिति** ॥

सत्यादिपदानां विशिष्टार्थानां विशेष्यसम्बन्धद्वारा परस्परमप्यन्वयश्चेद्विशिष्ट एव वाक्यार्थः स्यात् , अरुणादिगुणकद्रव्यविशिष्टक्रयणभावने[ वे ]त्याशङ्क्याह— **तत्र सामानाधिकरण्येनेति** ॥ गुणगुण्यादिसम्बन्धात्=तादात्म्यात् , समवायाद्वा सामानाधिकरण्यसिद्धेर्नास्ति मुख्यार्थे विरोधः, तत्राह — **भिन्नेति** ॥ सोऽयं चैत्र

गतस्य निर्वक्तुमशक्यत्वात् । तत्रोपक्रमादिलिङ्गावगततात्पर्याणामन्यपरत्वोपचरितार्थत्वासम्भवाद् मुख्यार्थे च विरोधे भागत्यागलक्षणया सत्यपदं ब्रह्मपदेनान्वितं स्ववाक्ये व्यावहारिकसत्यांशं प्रहाय परमार्थसन्मात्रं गमयति । ज्ञानशब्दोऽपि जडसम्बधांशं विहाय चैतन्यमात्रम्, अनन्तशब्दोऽपि त्रिविधान्ताभावं विशेषणांशं विहाय व्यापकमात्रम्, आनन्दपदमपि जन्यवृत्तितत्सम्बन्धांशं परित्यज्य केवलानन्दरूपतां द्योतयति । ततश्चानृतजडान्तत्रयदुःखताव्यावृत्तौ ब्रह्मप्रातिपदिकार्थः सत्यज्ञानादिलक्षणवाक्येन बोध्यते ॥

॥ सत्यादिवाक्येन पार्ष्ठिकबोधवशाद् जडादिव्यावृत्त्युपलक्षित-
ब्रह्मसिद्धिः, व्यावृत्तेरन्यलभ्यत्वेनाशब्दार्थत्वात् ॥

न चैवम्—व्यावृत्तिविशिष्टो वाक्यार्थ इति—वाच्यम्; सत्यादिपदकदम्बकेन परमार्थस्वप्रकाशव्यापकानन्दरूपप्रतीतौ तद्विरुद्धव्यावृत्तेरर्थसिद्धाया न शब्दार्थत्वम्; अन्यलभ्यत्वात् । यथाहुः—

"प्रतिपद्य यथार्थं हि विरोधात्तद्विरोधिनः ।
पश्चादभावं जानाति वध्यघातकवत् पदात् ॥"

इति । ननु—तत्तदभावानामुपलक्षणानां भेदात् तदुपलक्षिताकारभेदोऽपि ब्रह्मणो भवेत्,

---

इत्यादिसामानाधिकरण्यख्यापनादित्यर्थः । मुख्यार्थग्रहे विरोधश्च[श्चे]दध्यारोपितरूपेण ज्ञाननियोगपरता स्यात्, चिच्छक्तियोगेन ज्ञानत्वस्य दुःखाभावेनानन्दत्वस्य वोपचारः स्यात् तत्राह—**तत्रेति** ॥

एवं सत्यादिपदानां विशेष्यब्रह्मपदान्वयेन स्वार्थभागत्यागेन लक्षकत्वे बाधाभावोपलक्षितं ब्रह्म जाड्याभावोपलक्षितं चेत्यादिप्रतीतिः स्यात्, न तु सच्चिदानन्दाद्यात्मकमिति प्रतीतिः स्यादित्याशङ्क्यापि विशेषणानां परस्परमप्यन्वयात् साऽपि स्यादित्याह—**ततश्चेति** ॥ अनृतजडादिव्यावृत्तस्वरूपेण ब्रह्मणो बोधितत्वाद्विशिष्ट एव वाक्यर्थः, नाखण्डः, अत्राह — **न चेति** ॥

विरोधिव्यावृत्तेरर्थसिद्धत्वादशाब्दत्वे तत्र भगवतो वार्तिककारस्य वाक्यमुदीरयति—**यथेति** ॥ पदात्=सत्यज्ञानादिलक्षणात्, पदार्थम्=परमार्थसच्चिन्मात्रादिरूपं प्रतिपद्य, पश्चात् प्रतिपत्तिसामर्थ्याद् विरोधिनः=अनृतादेः, अभावम्

बुद्धीनामनेकाकारत्वात्—इति, मैवम् ; उपलक्षणानामनन्तर्गतानामेव धीसाधनत्वात् । बुद्ध्याकारभेदोऽप्युपलक्षणभेदनिबन्धनो न लक्ष्याकारभेदमपेक्षेत ॥

॥ तत्त्वमसिमहावाक्याखण्डार्थत्वोपपादनम् ॥

तथा 'तत्त्वमसि'इत्यादिमहावाक्ये त्वम्पदमन्तःकरणावच्छिन्नचैतन्यवाचकम् । तत्पदमज्ञानशबलजगत्कारणवाचकम् । अनयोः सामानाधिकरण्यविशेषणविशेष्य-भावसमधिगमानन्तरं विरोधः स्फुरति ; सद्वितीयसंसार्यपरोक्षत्वम्पदार्थस्याद्वितीया-संसारिपरोक्षब्रह्मैक्यायोगात् । अतश्च त्वमर्थस्तदर्थेन विशेष्यमाणस्तद्विरुद्धसद्वितीयत्व-संसारित्वमुपाधिकृतमुपाधिसम्बन्धव्युदासेन व्युदस्य शुद्धबोधोऽवतिष्ठते । तदर्थोऽपि त्वमर्थेन विशेष्यमाणः कारणत्वपारोक्ष्यादिकमज्ञानसम्पर्ककृतमज्ञानपरित्यागेन परित्यज्य शुद्धचैतन्यमवतिष्ठते । तदेवं विरुद्धांशपरित्यागेन तत्त्वमादिवाक्यमात्मब्रह्मणोरैक्यं गमयतीत्यखण्डार्थपरम् । तदयं प्रयोगः—तत्त्वमादिवाक्यम्, अखण्डार्थपरम्, अकार्यकरणद्रव्यमात्रविषयसमानाधिकृतवाक्यत्वात्, सोऽयं चैत्र इति वाक्यवत् —इति ॥

---

=व्यावृत्तिं जानाति । यथा घातकस्य मार्जारादेरस्तित्वावगमे तद्वध्यस्य मूषिकादेरभावमर्थादवगच्छतीत्यर्थः । "अर्थेनैव विशेषो हि निराकारकारतया धियाम्" ॥ अतश्च ज्ञानाकारभेदाद् ज्ञेयाकारभेदेऽखण्डत्वासिद्धिरित्याह— **नन्विति** ॥ विशेषणभेदे विशिष्टभेदो भवति ; तस्य व्यावर्त्यप्रतीत्यालिङ्गितस्य व्यावर्तकत्वात्, तदुपलक्षणभेदे पुनर्नोपलक्ष्यभेदः ; तस्य तद्बुद्ध्यनालिङ्गितस्यैव व्यावर्तकत्वात्, इतरथा विशेषणोपलक्षणयोरभेदापत्तेरित्याह—**मैवमिति** ॥ उपलक्षणस्य लक्ष्या-नन्तर्गतस्य गमकत्वेऽपि ज्ञानाकारभेदाय ज्ञेयाकारभेदोऽपेक्षितः, अत्राह— **बुद्ध्याकारेति** ॥ यथा घटस्य द्रव्यस्य ज्ञेयस्यैक्येऽपि द्रव्यं सत् पृथिवी घट इति प्रतीतिवैलक्षण्यं गुणाधिकरणत्वाद्युपलक्षणभेदमात्रनिबन्धनमित्यर्थः ॥

एवमवान्तरवाक्यवृत्तिरुक्ता, सम्प्रति महावाक्यवृत्तिमाह— **तथेति** ॥ एवं वाच्यमभिधाय लक्षणाबीजं विरोधमाह—**अनयोरिति** ॥ उपक्रमादिलिङ्गावगत-तात्पर्यावष्टम्भेन वेदान्तानामखण्डार्थत्वं यद्यपि सिद्धम् ; तथापि कुतर्ककर्कशमनसां विनाऽनुमानं न परितोषः, इति तदनुकम्पयाऽऽह—**तदयमिति** ॥ तत्=तत्रार्थे । मृद् घटः, नीलमुत्पलम्, गामानयेत्यादिवाक्येषु व्यभिचारवारणार्थं क्रमेण हेतु

॥ सोऽयं चैत्र इति दृष्टान्तेऽखण्डार्थत्वायोगशङ्का ॥

ननु—साध्यविकलो दृष्टान्तः; "सोऽयं चैत्रः" इत्येकस्य कालद्वयसम्बन्धबोधनात्—इति, तदसत्; कालद्वयसम्बन्धादर्वागेकत्वासिद्धेः, सिद्धौ वा कालद्वयसम्बन्धवैयर्थ्यात्। नापि कालद्वयसम्बन्धमात्रं बोध्यम्; चैत्रभेदेऽपि तदविरोधात्। तत्ताविशिष्टस्येदन्ताविशिष्टैक्यं बोध्यमिति चेत्, न; विरोधात्॥

॥ 'सोऽयं चैत्रः' 'तत्त्वमसि' इत्यादौ चैकपदलक्षणया सामानाधिकरण्यनिर्वाहशङ्का-तत्परिहारौ ॥

तत्तोपलक्षितस्येदन्ताविशिष्टैक्यं बोध्यमिति चेत्, न; विकल्पासहत्वात्। किं यस्येदन्तावैशिष्ट्यम्, तद्धर्मिमात्रेणैक्यं बोध्यम्? किं वाऽतर्गतेदन्ताविशेषणेन? आद्ये वाक्यमखण्डार्थं स्यात्; इदन्तावैशिष्ट्यस्य वाक्यार्थबहिर्भावात्। द्वितीयेऽपि तत्तोपलक्षितस्येदन्ताविशिष्टेनैक्यम्, इदन्ताविशिष्टस्य वा तत्तोपलक्षितेनैक्यम्। आद्ये तत्तोपलक्षितस्वरूपस्यैकस्य विभिन्नदेशकालभेदप्रसङ्गविरोधः। चरमे पुरोदेशवर्तमानकालतत्सम्बन्धानामेकचैत्रस्वरूपातिरेके परस्परव्यतिरेको न स्यात्। तस्मात् सोऽयमिति पदाभ्यां समानाधिकृताभ्यां तत्तेदन्ताविशिष्टयोरभेदो मुख्यवृत्त्याऽभिधीयते।

---

विशेषणम्। एकस्य=चैत्रस्यैतत्कालद्वयसम्बन्ध इति बोधकत्वं प्रत्यभिज्ञावाक्यस्य न सम्भवतीत्याह—**तदसदिति**॥ चैत्रस्वरूपभेदग्राहिप्रमाणाभावादेकत्वं सिद्धम्, अत्राह—**सिद्धौ वेति**॥ एकत्वसिद्धौ कालद्वयसम्बन्धसिद्धिः, ततश्चैकत्वसिद्धिरिति परस्पराश्रयादेकस्य कालद्वयसम्बन्धो दुर्बोधो यद्यपि; तथापि प्रत्यभिज्ञावाक्यं नाखण्डार्थम्; कालद्वयसंबन्धांशबोधकत्वात, अत्राह—**नापीति**॥ प्रत्यभिज्ञावाक्यस्य मुख्यवृत्त्यैवैकत्वबोधकत्वाद् दृष्टान्ते साध्यविरह इत्याह—**तत्ताविशिष्टस्येति**॥ परोक्षदेशकालविशिष्टस्य सन्निहितदेशकालविशिष्टैनैक्यं व्याहतम्; विशेषणांशे विरोधादिति दूषयति—**नेति**॥ द्वयोरपि पदयोर्लक्षणास्वीकारे गौरवादेकत्र तत्स्वीकारेण विरोधपरिहाराद्विशिष्टविषयं तद्वाक्यमिति शङ्कते—**तत्तेति**॥ द्वयोरसाधारणरूपेण[णोप]स्थितयो रूपरसयोरिवैकत्वविरोधादेकस्यान्यतरपर्यवसानं वाच्यम्। एवं च तत्तोपलक्षितस्येदन्ताविशिष्टेऽन्तर्भावः, इदन्ताविशिष्टस्य तत्तोपलक्षिते वेति विकल्पयति—**द्वितीयेऽपीति**॥ परिशेषात् प्रत्यभिज्ञावाक्यमखण्डार्थं सिद्धमित्याह—**तस्मादिति**॥

तत्र च विरोधात् तदर्थे तत्तांशमपहायेदमर्थेऽपीदन्तां परिहाय चैत्रस्वरूपमात्रं स्वीकृत्य भागत्यागलक्षणया तदैक्यं बोध्यमित्यवश्याभ्युपेयत्वात् ॥

॥ अप्रमेयस्यापि प्रसिद्धिमात्रेण ब्रह्मणो लक्ष्यत्वोपपत्तिः ॥

तथापि पदान्तरगोचरस्य प्रमेयस्य चैत्रस्य लक्ष्यत्वम्, न ब्रह्मात्मनः; तदभावादिति चेत्, नैतत्; प्रसिद्धमात्रस्य लक्ष्यत्वोपपत्तौ पदान्तरादिगोचरतया प्रसिद्धत्वं न प्रयोजकम्, अव्यतिरेकात्, इतरथा वह्निपैङ्गल्यमपि धूमोत्पत्तिप्रयोजकमिति धूमात् तदनुमानप्रसङ्गात्। तस्मात् तत्त्वमादिवाक्यमखण्डार्थमास्थेयम् ॥

॥ अनेकपदात्मनो वाक्यस्य संसृष्टार्थत्वं न नियतम् ॥

[1]यदभ्यधायि — वाक्यात्मनोऽनेकपदार्थात्मनि वाक्यार्थे धीजननम् — इति, तत्र किं वाक्यमात्रस्य संसर्गधीहेतुत्वं विवक्षितम्, उत ब्रह्मवाक्यव्यतिरिक्तस्य, किं वा ब्रह्मवाक्यस्यैव ? न प्रथमः; अंशत इष्टापादनात्। द्वितीयोऽपीष्टप्रसङ्गादेव दुष्टः। न तृतीयः; आपाद्यापादकयोर्व्याप्तेरप्रमितत्वेन मूलशैथिल्यात् ॥

॥ वाक्यस्य संसृष्टार्थधीजनकत्वं न नियतम्; भेदो भिन्न इत्यादिवाक्ये व्यभिचारात् ॥

ननु — वाक्यत्वमापादकं संसृष्टपदार्थधीजनकत्वेनापाद्येन व्याप्तमेव प्रसिद्धं गामानयेत्यादिवाक्यकलापे, तत् कथं व्याप्त्यनवधारणम् — इति, मैवम्; भिन्नो घटः, भेदो भिन्नः, भिन्नाभिन्नो घट इत्यादिवाक्येषु व्याप्तिभङ्गात् ॥

---

प्रत्यभिज्ञावाक्यस्य लक्षणयाऽखण्डार्थत्वेऽपि तत्त्वमादिवाक्यस्य न तत् सम्भवति; प्रयोजकाभावेन ब्रह्मात्मनो लक्ष्यत्वायोगादित्याह — **तथापीति** ॥ ज्ञानमात्रं प्रसिद्धिः, तद्विशेषप्रमाणविषयत्वं मेयत्वम्। शब्दजन्यज्ञानविषयत्वं वाच्यत्वम्। तत्रानुगताकारमात्रस्य प्रयोजकत्वसम्भवे न विशेषस्य प्रयोजकत्वम्; व्यतिरेकविरहादित्याह — **नैतदिति** ॥ व्यतिरेकविरहिणोऽन्वयमात्रेण प्रयोजकत्वे दण्डमाह — **इतरथेति** ॥

स्वमतमुपसंहृत्य परोक्तमनुवदति — **यदिति** ॥ वाक्यत्वं न संसृष्टार्थधीजनकत्वेन व्याप्तम्; व्यभिचारोपलम्भादित्याह — **मैवमिति** ॥ व्यभिचारमेवे ष्ट सि द्धि का रा चार्यवचनेन द्रढयितुं तदीयाशङ्कानुवादपुरस्सरं तत्परिहारग्रन्थं पठति — **तदाहुरिति** ॥

---

1. पृ. 340 प. 8

"तदाहुः—अपर्यायशब्दानामभिन्नार्थताद्दृष्टेर्भेदोऽनयोर्न्याय्यः, अमुख्यार्थता वाऽनन्दशब्दस्येति चेत्, न; भेदभेदिशब्दाभ्यां व्यभिचारात्। न हि भिन्नो घट इति पर्यायौ; भिन्नः पट इति दर्शनात्। न च भिन्नार्थौ; भेदस्य भेदेनावस्थानात्। अत एव भेदाभेदयोरप्यभेदात्। अतः शब्दावप्यभिन्नार्थत्वेन भिन्नो भिन्नश्च घट इत्यत्रे"ति ॥

॥ एकत्र निषिद्धस्यान्यत्र सत्त्वानियमात् ब्रह्मणि सर्वदा सर्वनिषेधेनाखण्डार्थत्वे न दोषः ॥

[1]यदप्यपरमीरितम्—"यो ह्येषः" इति सद्रूपतया नेत्यनेन सह सम्बन्धुमयोग्यः—इति, तदचातुरीं प्रयोक्तुः प्रकटयति—भूतले कलशो नास्तीत्यत्रापि कलश इति सद्रूपतया प्रतिपन्नपदार्थस्यासद्रूपतया नेत्यनेन सम्बन्धायोग्यत्वात् कलशनिषेधासिद्धेः कदाचित् प्रमितः कलशोऽनन्त एव स्यादिति कार्यस्यानन्तत्वप्रसङ्गात् ॥

[2]यदप्युक्तमद्वैतवादेऽत्यन्तनिषेध इति, तत्र किमिदं निषेधस्यात्यन्तिकत्वम्—किं निरधिष्ठानत्वम्, उत प्रतियोगिरहितत्वम्, उत प्रतिषेध्यव्य[स्य]प्रदेशान्तरेऽवस्थाराहित्यम्? नाद्यौ; अस्तीति त [स] द्रूपब्रह्मणि प्रतिपन्नस्थूलादिप्रपञ्चस्य तत्रैव प्रतिषेधात्। न चरमोऽपि चतुरश्रः; इह निषिद्धभग्नघटस्य देशान्तरेऽनवस्थानात्, अप्रसक्तप्रतिषेधप्रसक्तेः। कालान्तरे सोऽवस्थित इति चेत्, न; कालनिषेधाव्यापनात्। प्रयोगावपि 'भिन्नो घटः' इत्यादिवाक्यतदर्थाभ्यां व्यभिचारेण पराकरणीयौ ॥

॥ अखण्डार्थत्वेऽपि व्यवच्छेद्यभेदाद् नानेकपदवैयर्थ्यदोषः ॥

नाप्येकस्मादेव पदादखण्डप्रतिपत्तौ पदान्तरोपादानवैयर्थ्यम्; सत्यादिपदलक्ष्याभेदेऽपि व्यवच्छेद्यभेदस्य दर्शितत्वात्। [3]यत्पुनर्गदितम्—ऐकार्थ्यपर्याययोरिव

---

**कालनिषेधाव्यापनादिति** ॥ अतीतः कालो नेदानीमस्तीति कालो निषिध्यते। न तस्य कालान्तरेऽवस्थानम्; अनवस्थानात्, देशान्तरे सोऽवस्थित इति चेत्, न; देशान्तरमिह नास्तीति निषेधाव्यापनात्। सर्वत्र निषेध्यं नान्यत्र सम्भवति; इह मेदिनीतले कलशो नास्तीत्येतन्मेदिनीतलैतत्कलशसंसर्गस्यान्यत्र सत्तायोगादित्याशयः ॥ ब्रह्मवाक्यतदर्थपक्षीकरणेन प्रयुक्तमनुमानद्वयं व्यभिचारेण पराकरोति—**प्रयोगावपीति** ॥ एवं **भ व ना था** भिहितं पराभूय, **तत्त्वा वि र्भा वकारा**भिहितमभिभवितुमनुभणति—**यत्पुनरिति** ॥ "अर्थी समर्थो विद्वान्

---

1. पृ. 351 प. 1  2. पृ. 351 प. 3  3. पृ. 353 प. 6

व्यवच्छेद्यभेदस्यैवानुपपत्तिः कुम्भकरीरशब्दयोरिव—इति, त[देत]दचतुरम्, अधिकारितद्विशेषे[ष]णसामर्थ्ययोस्तादात्म्यमङ्गीकृत्य **कौमारि**लैस्तच्छब्दस्य व्यवच्छेद्यभेदोपगमात्। भेदोऽप्यस्तीति चेत्, अभेदोऽप्यस्तीति व्यवच्छेद्यभेदोऽपि न स्यात्। 'सोऽयमित्येकार्थपरयोर्व्यवच्छेद्यभेदस्य' दर्शितत्वाच्च ॥

॥ प्रकृष्टप्रकाशवाक्यस्य संज्ञासंज्ञिपरत्वाभावादखण्डार्थत्वोपपादनम् ॥

[1]यदवादि—प्रकृष्टप्रकाशश्चन्द्र इति, नाखण्डनिष्ठम्, संज्ञासंज्ञिसम्बन्धपरत्वात्—इति, तदात्मनोऽत्यन्तन्यायानभिज्ञताप्रकटनम्। चन्द्रप्रातिपदिकार्थप्रश्ने संज्ञासंज्ञिसम्बन्धेनोत्तरस्य कर्णे स्पृष्टः कटिञ्चालयतीतिवदसङ्गतत्वात्। [2]प्रश्नोऽपि कस्यात्र चन्द्रशब्दः संज्ञेति संज्ञासंज्ञिसंसर्गविषयः; अन्यथा चन्द्रस्वलक्षणस्य प्रत्यक्षत्वादस्मिन् ज्योतिर्मण्डले कतमश्चन्द्र इति प्रश्नस्य तन्मात्रविषयत्वेनानुत्थानात्। अतो नासङ्गतमुत्तरमिति चेत्, तदतिमन्दम्; प्रश्नवाक्ये संज्ञासंज्ञिसम्बन्धप्रतिपादकपदाश्रवणात्, अध्याहारकल्पनायोगाच्च। तथोत्तरमपि 'प्रकृष्टप्रकाशश्चन्द्रः' इति चन्द्रस्य लक्षणमात्रोपक्षीणं न संज्ञासंज्ञिसंसर्गगोचरः। तस्य प्रत्यक्षत्वाद् न प्रश्नार्हत्वमित्युक्तमिति चेत्, न; किं निर्विकल्पकगोचरत्वम्? सविकल्पकगोचरत्वं वा? आद्ये विशेषादर्शनप्रसूतसन्देहात् प्रश्नो युक्ततर एव। दूरे निर्विकल्पकगृहीतगवादौ विशेषजिज्ञासादर्शनात्। न द्वितीयः; चन्द्रपदस्य तेन सङ्गतिसंवेदनादर्वाक् तद्विषयसविकल्पकायोगात्, सङ्गतिसंवेदनादूर्ध्वं संज्ञासंज्ञिसम्बन्धप्रश्नासिद्धेः ॥

---

शास्त्रेऽपर्युदस्तोऽधिकारी" इति विशिष्टस्यैवाधिकारित्वात्। तत्र सामर्थ्यस्याधिकारिविशेषणस्याधिकारिणा तादात्म्येऽप्यसमर्थव्यावर्तकत्वान्नेदं युक्तमित्याह—**तदेतदिति** ॥ तादात्म्याद्वैषामपर्यायाणां सामानाधिकरण्यम्, तेषामेव व्यवच्छेद्यभेदो नान्येषाम्, अत्राह—**सोऽयमिति** ॥

प्रश्नस्य संज्ञासंज्ञिसंसर्गगोचरत्वं तद्वाक्यसामार्थ्यादुच्यते, न्यायाद्वेति विकल्प्याद्यं दूषयति—**तदतिमन्दमिति** ॥ न द्वितीय इत्याह—**अध्याहारेति** ॥ उत्तरस्य तत्संसर्गगोचरत्वात्, तदनुसारेण प्रश्नवाक्येऽपि तदध्याहार इति, अत आह—**तथेति** ॥ तद्वदत्रापि तत्प्रत्यायकपदाश्रवणादित्यर्थः। **सविकल्पकायोगादिति** ॥ वाचकशब्दसञ्जल्पितप्रत्ययस्य सविकल्पकत्वादित्यर्थः। **प्रश्नासिद्धेरिति** ॥

---

1. पृ. 353 प. 8    2. पृ. 353 प. 9

॥ विज्ञानानन्दादौ न भेदसहिष्णुरभेदः, किन्त्वत्यन्ताभेद एव ।
अत एव सामानाधिकरण्यम् ॥

[1]यदपि—विज्ञानानन्दपदयोरेकार्थपर्यवसानाभावे मधुरो गुड इतिवद् भेदसहिष्णोरभेदात् समवायाद्वा सामानाधिकरण्यमिति—उदितम्, तदसत्; भेदं सहतेऽभेद इति व्याघातात्, अव्याघाते वा 'अयं सर्पः' 'द्वौ चन्द्रमसौ' इति च पूर्वयोर्बाधो न स्यात्; रज्जुसर्पयोरभेदस्य भेदसहत्वाच्चन्द्रभेदस्य चाभेदसहत्वात्। भ्रान्तत्वाद् बाध इति चेत्, कुतो भ्रान्तत्वम्? बाधादिति चेत्, परस्पराश्रयान्न बिभेषि? तस्माद् भ्रमबाधावभ्युपगम्य भेदाभेदवचनं न प्रमादेनापि वदितव्यम्। नापि समवायः सामानाधिकरण्यप्रयोजकः; सोऽयमित्यत्राव्यापकत्वात्, तत्सत्त्वे प्रमाणाभावाच्च ॥

॥ 'आनन्दं ब्रह्मणो विद्वान्' इत्यस्योपक्रमादिमहिम्ना
ब्रह्मण आनन्दस्वरूपतायामेव पर्यवसानम् ॥

[2]यदपि—"स एको ब्रह्मण आनन्दः" इत्याद्या श्रुतिरानन्दात्मनो भेदमापादयन्ती—इत्युदितम्, तदपि प्रक्रमोपसंहारादितात्पर्यलिङ्गप्रतिबन्धानां सामर्थ्यंकृतम्। तथाहि—"सत्यं ज्ञानमनन्तं ब्रह्म" इति त्रिविधान्ताभावोपलक्षितं ब्रह्मेत्युपक्रमे श्रुतम्। मध्ये च "यतो वा इमानि भूतानि जायन्ते" इति जगज्जन्मादिकारणत्वं ब्रह्मलक्षणमाख्याय "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिना ब्रह्मलक्षणमानन्दस्याचचक्षे। तथा—"आनन्दो ब्रह्मेति व्यजानात्" इति ब्रह्मानन्दयोरेकत्वेनोपसंहारः। तस्मात्—"आनन्दं ब्रह्मणो विद्वान्" इति श्रुतिरात्मनः स्वरूपमिति व्याख्येयम् [य] ॥

---

विशेषतोऽवगते जिज्ञासानुपपत्तेरिति। अर्थभेदाभावो नाभेदः, नापि तद्विरुद्धः, किन्तु ततोऽन्यः कश्चिद्धर्मः, तेन सहासनार्हः, ततो न व्याघात इति, अत आह—**अव्याघाते वेति। प्रमाणाभावाच्चेति।** न तावदिहप्रत्ययमात्रं तत्र प्रमाणम्; इह कुण्डे बदराणीत्यत्र व्यभिचारात्, नाप्ययुतसिद्धयोरिहप्रत्ययस्तथा; भूतले घटाभाव इत्यत्र व्यभिचारात्, नाप्ययुतसिद्धभावमात्रविषय इहप्रत्ययो मानम्; तस्यासिद्धेः। न हि घटे शौक्ल्यमिति कस्यचित् प्रतीतिः; शुक्लो घट इति तादात्म्येनैवोपादानात् ॥

---

1. पृ. 354 प. 4    2. पृ. 354 प. 5

॥ प्रपञ्चस्यानिर्वचनीयत्वात् सत्यादिपदानामद्वितीयपरत्वे नाद्वैतहानिः ॥

[1]यदपि—मा न म नो ह र कारेण—न चाद्वैतपक्षे सत्यादिशब्दानां सह प्रयोगः स्यात्; पर्यायत्वात्; अपर्यायत्वेऽद्वैतव्याघातः—इत्युक्तम्, तदपि तदीयमानहरम्, न तु मनोहरम्; व्यावर्त्यभेदेनापर्यायत्वस्य दर्शितत्वात्। न चाद्वैतहानिः; प्रपञ्चानिर्वचनीयताया निवेदयिष्यमाणत्वात् ॥

॥ प्रकृष्टप्रकाश इत्यत्रापि नाप्रकृष्टादिव्यावृत्तं पृष्टम्,
प्रतिपित्सितं च, किन्तु चन्द्रस्वरूपमेवेति न दृष्टान्तासिद्धिः
सत्यादिलक्षणवाक्याखण्डार्थत्वे ॥

[2]यत्पुनरुक्तम्—प्रकृष्टशब्दस्य इतरेतरभावादिनिमित्तसव्यपेक्षप्रवृत्तेः प्रकाशशब्दस्य प्रकाशत्वबलादिति दृष्टान्तासिद्धिः—इति, तदसमीक्षितवचनम्। प्रतिपित्सितं पृष्टं च चन्द्रप्रातिपदिकार्थमात्रम्, तदतिरेकेणाप्रतिपित्सितमपृष्टञ्च [1]प्रकर्षव्यावृत्त्यादिमत्त्वम्, प्रकाशत्वसामान्यसंसर्गञ्च प्रतिपादयन् अलौकिको नापि परीक्षक इति प्रेक्षावतामुपेक्ष्यपक्षे निक्षिप्येत ॥

[3]यत्पुनः—अन्यथाऽत्रापि पर्यनुयोगस्य तुल्यत्वादिति गदितम्—तदयुक्तम्, प्रकृष्टप्रकाशशब्दाभ्यां प्रकर्ष[4]धर्मप्रकाशत्वसामान्यवाचिभ्यां स्वाभिधेयत्यागेन तदाधारव्यक्तिमात्रलक्षणायां पर्यनुयोगायोगात्, ज्ञानानन्दादीनामखण्डब्रह्मस्वरूपत्वेऽपि व्यञ्जकवृत्तिभेदेन व्यवहारदशायां भिन्नत्वाद्भेदेन व्युत्पत्तावपि नाद्वैतभङ्गः, इति किमपरमवशिष्यते? एतेन सर्वलक्षणवाक्यानामखण्डनिष्ठत्वं निष्टङ्कितव्यम् ॥

॥ लक्षणवाक्यानां व्यावृत्त्यादिविशिष्टपराणां नाखण्डार्थत्वमित्याक्षेपः ॥

---

न चाविसंवादिसाकाङ्क्षरूपरूपिप्रत्ययो लिङ्गम्; अविसंवादि [प्रत्य]यस्य तात्कालिकस्य शुक्तिरूप्यादिप्रत्यये व्यभिचारात्, सार्वकालिकाविसंवादस्य दुरवधारणतयाऽसिद्धेरित्यर्थः ॥

लोके वेदे च लक्षणार्थस्य वाक्यस्याखण्डनिष्ठत्वमित्येतदेवं सत् प्रकृष्टप्रकाश इति लक्षणवाक्यदृष्टान्तेन सिद्धमित्याह—**एतेनेति** ॥ नान्यथा तत् प्रसिद्ध्यतीत्ये-

---

1. पृ. 354 प. 11
2. पृ. 354 प. 14
3. पृ. 355 प. 1
4. कर्षादि

ननु—लक्षणं व्यतिरेक्यनुमानमाचक्ष्महे । तेन [1]चालक्ष्याद्भेदविशिष्टम्, व्यवहारविशेषविशिष्टं वा साध्यम् । तद्यथा—पृथिवी, अबादिभ्यो भिद्यते, पृथिवीति व्यवहर्तव्या वा, गन्धवत्त्वात्, यन्नोक्तसाध्यम्, न तदुक्तसाधनम्; यथा अबादि, इयमुक्तसाधना, तत उक्तसाध्येति । तत् कुतोऽखण्डार्थत्वं लक्षणवाक्यानामिति—चेत्, न[नै] तदपि चतुरचेतसां वचनम्; विचारासहत्वात् ॥

॥ विपक्षव्यावृत्तपक्षधर्मतया लक्षणज्ञाने व्यावृत्तिप्रयोजनत्वं न लक्षणस्य, किन्त्वसंकीर्णस्वरूपज्ञापकत्वमेवेति न लक्षणवाक्याखण्डार्थत्वहानिः ॥

तथा हि—विपक्षाद् व्यावृत्तपक्षधर्मो हेतुः प्रमितः, न वा । न चेदसिद्धिः । सन्दिग्धव्यतिरेकतया चाभासस्य न साध्यनिश्चयहेतुत्वम् । आद्ये लिङ्गोपन्यासात् प्रागेवालक्ष्यव्यावृत्तलक्ष्यस्वरूपावगममन्तरेण विवक्षा[पक्ष]व्यावृत्तपक्षनिष्ठहेत्व[2]वगमायोगात्, प्रागेव ततो व्यावृत्तस्य व्यवहारविशेषार्हधर्मिस्वरूपस्य प्रमाणान्तरप्रसिद्धत्वात् तदुपजीवितया पश्चात् प्रवृत्तिसिद्धसाधनहेत्वाभासोपन्यासोऽनर्थायैवोपन्यसितुः पर्यवस्येत् । न च प्रसिद्धिमात्रं हेतोः पक्षविपक्षसत्त्वासत्त्वसिद्ध्यै प्रभवति; सिद्धेर्निश्चायकत्वानिश्चायकत्वयोरुक्तबाधानिस्तारात् ॥

---

तद्व्यावर्त्य पूर्वपक्षमाह—**नन्विति** ॥ गन्धवत्त्वं गन्धसम्बन्धित्वं चेत्, गन्धत्वादिसामान्ये व्यभिचारः, गन्धाधारत्वं चेत्, तदपि गन्धव्यावृत्तसमवायत्वं चेत्, अत्रैव व्यभिचारः । गन्धापेक्षयाधःस्थितत्वं तु न सम्भवति; गन्धस्य व्याप्यवृत्तित्वात् ॥

नापि पतनप्रतिबन्धकत्वं तदाधारत्वम्; गन्धस्य निष्क्रियस्य पतनाभावादित्यभिसन्धाय दूषयति—**नैतदपीति** ॥ ततो व्यावृत्तस्य = विपक्षाद् व्यावृत्तस्य । **प्रमाणान्तरप्रसिद्धत्वादिति** ॥ व्याप्तिपक्षधर्मताग्राहिप्रमाणसिद्धत्वादित्यर्थः ॥

विपक्षव्यावृत्तिपक्षधर्मताविशिष्टहेतोः प्रसिद्धिमात्रसिद्धित्वान्नोक्तदोषः, अत्राह—**न चेति** ॥ **उक्तबाधानिस्तारादिति** ॥ निश्चायकत्वे विपक्षाद् व्यावृत्तस्य व्यवहारविशेषार्हधर्मिस्वरूपस्य निश्चितत्वात् । सिद्धसाधनत्वम् = निश्चायकत्वे सन्दिग्धासिद्धमित्यर्थः ॥

---

1. चलक्ष्यात् 2. हेत्वपगम

तदेवं लक्षणवाक्यं सकलमपि मुख्यवृत्त्याऽमुख्यवृत्त्या वा लक्ष्यप्रातिपदिकार्थमात्रपर्यवसायीति स्वीकरणीयमिति युक्तमुत्पश्यामः । तस्माद् उपक्रमादिलिङ्गावगततात्पर्यत्रय्यन्तसन्दोहस्याद्वयानन्दप्रत्यग्ब्रह्मणोऽन्यत्रापर्यवसानात् सत्यज्ञानानन्दानन्तप्रत्यगद्वयं ब्रह्म वेदान्तसमन्वयादवगम्यत इत्यशेषमतिमङ्गलम् ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दा भ या न न्द-

पूज्यपादशिष्येण भगवता आ न न्द पू र्ण मु नी न्द्रेण

वि द्या सा ग रापरनामधेयेन विरचितायां

**न्यायचन्द्रिकायां समन्वयपरिच्छेदाख्यः**

**प्रथमः परिच्छेदः ॥**

---

**मुख्यवृत्त्या, अमुख्यवृत्त्या वेति** ॥ बुद्धिर्ज्ञानमित्यादि स्वरूपलक्षणवाक्यं मुख्यवृत्त्या गन्धवतीत्यादितटस्थलक्षणवाक्यं स्वाभिधेयत्यागलक्षणावृत्त्येत्यर्थः । सत्यादिवाक्यम्, अखण्डार्थम्, लक्षणवाक्यत्वात्; गन्धवती पृथिवीत्यादिवाक्यवदिति प्रयोगं हृदि निधाय परिच्छेदार्थमेव निगमयति—**तस्मादिति** ॥ **समन्वयादवगम्यत इति** समन्वयाध्यायसङ्गतोऽयं परिच्छेद इति दर्शयति ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य-

गो वि न्दा न न्द पूज्यपादशिष्येण

स्व रू पा न न्द मु नी न्द्रेण विरचितायां

**न्यायचन्द्रिकाव्याख्यायां प्रकाशिकायां**

**समन्वयाख्यः**

**प्रथमः परिच्छेदः ॥**



# ॥ न्यायचन्द्रिकायाम् ॥

## ॥ अविरोधाख्यः द्वितीयः परिच्छेदः ॥

॥ तत्राख्यात्यसत्ख्यात्यात्मख्यात्यन्यथाख्यातीनां

निरासात्मकं प्रथमं प्रकरणम् ॥

प्रामाण्यस्य स्वतस्त्वं तदनु निजसतीं शक्तिमापाद्य वेदे
कर्तॄ राहित्यमुक्तं पदनिकरगता शक्तिरन्यानुषक्ते ।
शक्तिः कार्यानपेक्षे पदनिकरगता वर्णमात्रात्मशब्दः
प्रत्यक्षादिश्च [1]शाब्दः प्रगलितवितथे[2] वाक्यवृत्तिस्तथोक्ता ॥ ४६ ॥

---

# ॥ न्यायचन्द्रिकाविवरणम् ॥

प्रतिपादिते समन्वयपरिच्छेदे कश्चिन्मन्दमतिः प्रक्षिपति, प्रोद्धरति वा, तत्परिहारायेयन्तो वादा अतिवृत्ता इति दर्शयन् द्वितीयपरिच्छेदमारभमाणः पूर्वोत्तरपरिच्छेदयोः सङ्गतिप्रदर्शनाय, प्रतिपत्तिसौकर्याय चातिवृत्तमर्थं सङ्क्षिपति—**प्रामाण्यस्येति** ॥ **पदनिकरगतेति** ॥ **कार्येति** ॥ [कार्य] पदानां कार्यानपेक्षे शक्तिः प्राभाकरैरप्यङ्गीक्रियते, तद्दृष्टान्तेन सर्वपदानां कार्यानन्विते स्वार्थे शक्तिरापादितेत्यर्थः ॥ **वर्णमात्रात्मेति** ॥ वर्णातिरिक्तस्फोटनिरासेनेत्यर्थः । **प्रत्यक्षादिश्चेति** ॥ षट्प्रमाणी । ईक्षणतोऽन्तर्भावनिराकरणतश्चेत्यर्थः ॥

**शाब्दः** = शब्दार्थो बाहुल्येन जातिरूपः । **प्रगलितवितथे**=कल्पितद्वैतनिर्मुक्तेऽखण्डे, **वाक्यवृत्तिः**=वेदान्तानां लक्षणारूपा वृत्तिरित्यर्थः ॥ ४६ ॥

---

1. शब्दः क    2. विदथे वाक्य

॥ भेदग्राहिप्रत्यक्षविरोधादद्वितीयादिवाक्यानामीश्वरस्तुतिपरत्वेनार्थ-
वादत्वाच्च वेदान्तानामद्वितीये न पर्यवसानम् ॥

अथ कथं प्रगलितवितथे ब्रह्मणि त्रय्यन्तसन्दर्भः प्रामाण्यमवलम्बितुमलम् ? प्राचीन-निरवकाश-प्रतिष्ठितप्रामाण्यभेदग्राहिप्रत्यक्षादिविरोधात् प्रमाणवृत्तनिरूपणे तपस्विन एव भवन्तः। तथा हि—भेदप्रमाणं बाधित्वा किमयमभेदाभ्युपगमो भवताम्, उतस्विदभेदस्यैव प्रमाणसिद्धत्वादिति। न तदुभयमपि; प्रत्यक्षादि भेद-प्रतिष्ठितं प्रमाणमेव। भेदस्य परापेक्षत्वाद् नाक्षादिप्रमाणगम्यत्वमिति चेत्, तद-युक्तम्; अभेदस्य [1]सुतरामपरापेक्षत्वात्। मृत्पिण्डात् प्रभृति घटक[2]पररचूर्णपर्यन्त-कार्यपरम्परापरिच्छेदे तदनुगतमृद्रूपताग्रहणे च सति मृदस्तदभिन्नताऽ[3]वधार्यते, नान्यथा। नाप्यभेदग्राहि किञ्चन प्रमाणमस्ति। "एकमेवाद्वितीयम्" "नेह

---

ब्रह्मणि त्रय्यन्तसमन्वयस्वरूपविषयप्रदर्शनसमुत्थविरोधशङ्कापाकरणाय द्वितीय-परिच्छेदारम्भ इति प्रसज्यप्रसञ्जकभावसम्बन्धमभिसन्धाय समन्वयमाक्षिपति—**अथेति**॥ **प्राचीनेति** उपजीव्यत्वप्राबल्यकारणम्, **निरवकाशेति** वेदान्तानामुपासनाद्य-र्थान्तरे सावकाशत्वम्, प्रत्यक्षादेः स्वगोचरादन्यत्र निरवकाशत्वम्, **प्रतिष्ठितेति** असञ्जातविरोधित्वमुक्तम्। यत् प्रामाणिकम्, तदभ्युपगन्तव्यमिति नियमादभेदः प्रमाणसिद्धत्वादभ्युपगम्यते; अन्यथा न किञ्चिदभ्युपगम्यं स्यात्, अत्राह— **प्रमाणेति**॥ **न तदुभयमपीति**॥ सामान्यतः प्रतिज्ञातं क्रमेण विशदयति— **प्रत्यक्षादि[दी]ति**॥ **प्रमाणमेवेति**॥ प्रत्यक्षादिसिद्धपदपदार्थतत्सङ्गतिसापेक्ष-त्वाद् वेदान्तानां तदप्रामाण्ये स्यादप्रामाण्यम्, अतो वेदान्तप्रामाण्यार्थं प्रत्यक्षादि-प्रामाण्यस्योरीकारान्न तद्बाधा युक्तेति भावम[ः। अ]भेदप्रतीतिमात्रं सङ्गतिसंवेदनाय वेदान्तैरपेक्ष्यते, न तु तत्प्रामाण्यम्; भेदस्य प्रतियोगिनिरूपणस्य परस्पराश्रयिणः प्रमाणगोचरत्वायोगादित्याह—**भेदस्येति**॥ प्रतियोगिनः प्रतियोगित्वेनाप्रतीतौ धर्मिप्रतीतिः, धर्मिणो धर्मित्वेनाप्रतीतौ प्रतियोगिस्मृतिश्च भेदप्रतीतिकारणम्, अतः क्वेतरेतराश्रयतेत्याह—**तदयुक्तमिति**॥ प्रतिवन्द्याऽप्येतद् व्यनक्ति—**अभेदस्येति**॥ द्वितीयकल्पानुपपत्तिं प्रथयति—**नापीति**॥ **अर्थवादत्वादिति**॥

---

1. सुतरापपरा (क) 2. कर्पूरचूर्ण (क)
3. तदभिगता वार्यते।

नानास्ति किञ्चन" इति श्रुतमद्वैतमित्यपि न; अद्वैतश्रुतेरर्थवादत्वाद् यथाश्रुतेऽर्थे तात्पर्यविरहात् ॥

॥ अविद्यायाः सदसत्सदसद्विलक्षणत्वेन दुर्निरूपत्वाद्भेदस्य नाविद्याविलसितत्वम् ॥

अथ भेदोऽयमविद्याविलसितश्चन्द्रभेदवदिति, तन्न; केयमविद्या? न तावदसती; तस्याः शशविषाणवदनुच्छेद्यत्वात्, सतामेव वृक्षादीनामनित्यानामुच्छेददर्शनात्, तदियमुच्छेद्यत्वादविद्या नित्या मा भूत्, सती तु भवत्येव। यदाह—

"नित्यं न शक्यमुच्छेत्तुं सदनित्यं तु शक्यते।
असत्यमन्यदन्या तु यदर्थानामनित्यता॥"

---

"विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥"

इति। अद्वैतवाक्यस्य मानान्तरविरोधाद् गुणवादत्वम्। यथा—अस्मिन् ग्रामेऽयमद्वितीय इति श्रैष्ठ्यमात्रविवक्षया स्तुतिः, एवमीश्वरश्चेतनेषु श्रेष्ठतया स्तूयत इत्यर्थः॥

विगीतो भेदः, अविद्याविलसितः, भेदत्वात्; चन्द्रभेदवत्, विगीता भेदप्रतीतिः, भ्रान्तिः, भेदप्रतीतित्वात्; चन्द्रभेदप्रतीतिवत्। अतश्च नाद्वैतश्रुतेरर्थवादत्वमित्याह—**अथेति**॥ विवादपदमभेदः, मिथ्या, तत्प्रतीतिः, भ्रान्तिः, अभेदत्वात्; तत्प्रतीतित्वात्; शुक्तिरूप्याभेदतत्प्रतीतिभेद[भेद?]वदिति विपरीतं किं न स्यादित्याह—**तन्नेति**; अभेदतत्प्रतीतिमात्रपक्षीकरणे घटादिप्रातिस्विकाभेदासिद्धौ भेदोऽपि न सिध्येत्, ब्रह्माभेदतत्प्रतीतिमात्रपक्षीकरणे घटादिप्रातिस्विकभेदतत्प्रतीतिभ्यां व्यभिचार इत्याशङ्क्याह—**केयमिति**॥ असती, सती, सदसद्विलक्षणा वा। नाद्य इत्याह—**न तावदिति**॥ "अविद्यास्तमयो मोक्षः" इति स्वीकुर्वतामविद्याया उच्छेद्यत्वं स्वीकार्यम्। अतः सा, सती, उच्छेद्यत्वात्; वृक्षादिवदित्याह—**तदियमिति**॥ उक्तेऽर्थे **भट्टजयन्त**भणितिं भणति—**यदाहेति**॥

इति । सती चेत्, अद्वैतव्याहतिः । सदसद्विलक्षणा तु दुष्प्रापा ; भावाभावयोरेकतरप्रतिषेधस्यान्यतरविधित्वात् । आह च—

असत्त्वे च निषिद्धेऽस्यात् [ऽस्याः] सत्त्वमेव बलाद्भवेत् ।
सदसद्व्यतिरिक्तो हि राशिरत्यन्तदुर्लभः ॥

इति ॥

॥ अनिर्वचनीयख्यातिमादाय शङ्काया अख्यातिवादेन निरासः ॥

सदसद्विलक्षणं शुक्तिकाकलधौतादिकार्थं परिदृश्यमानमात्मानुरूपं कारणं परिकल्पयतीति चेत्, नैतत् सारम्; शुक्तिकायां कलधौतबोधसद्भावे प्रमाणाभावात् । ननु—रजतार्थप्रवृत्तिरन्यथाऽनुपपद्यमाना पुरोवर्तिविषयं रजतज्ञानं कल्पयतीति—चेत्, मैवम्; अन्यथोपपन्नत्वात् । भेदा[1]ग्रहादपि प्रवृत्तिरुपपद्यते ॥

॥ ग्रहणस्मरणात्मकज्ञानद्वयाद् भेदाग्रहाद् दोषनिबन्धनात्
'इदं रजतम्' इत्यादौ प्रवृत्तिरित्यख्यातिवादोपक्षेपः ॥

तथा हि—शुक्तिद्रव्यग्रहणे शुक्तित्वादयो रजतोद्भेदका मनोदोषाद[2]गृहीताः। अनन्तरञ्च रजते तदंशरहिता [3]स्मृतिरुपजायते । तत्रागृहीतभे(दे)[4]दं रजतप्रतिभासात् सत्येदंरजतप्रतिभासतुल्याद् रजतार्थिप्रवृत्तिरुपपद्यते । इयांस्तु भेदः—

---

शुक्तिरूप्यादिभाव[न]मुपादानापेक्षम् । सदसदुपादानत्वे[त्वं] सदसद्विलक्षणस्यानुपपन्नमित्यनाद्यनिर्विचनीयं किञ्चित् कल्पयति, तदज्ञानमिति शङ्कते—**सदसद्विलक्षणमिति** ॥ प्राप्तावसरः प्रा भा क रः प्राह—**नैतदिति** ॥

यदि ग्रहणस्मरणरूपानेकज्ञानमिदम्, तर्हि[ तर्हि ]ग्रहणं स्मर्यमाणात् स्वार्थम्, स्मरणं च गृह्यमाणात् स्वार्थं विविच्य दर्शयेदिति भेदाग्रहोऽनुपपन्नः, तत्राह—**तथा हीति** ॥ मनोदोषाद् रजतरागाद् भेदकाप्रतिभासाद्भेदाप्रतिभासेऽपि न तावन्मात्रात् प्रवृत्तिः ; चेतनप्रवृत्तेर्ज्ञानकार्यत्वनियमविरोधात्, अत्राह—**तत्रेति** ॥ अगृहीतभेदयोरिदंरजतयोः प्रतिभासात् प्रवृत्तेः । अतश्च प्रवृत्तेर्ज्ञानकार्यत्वमविरुद्धमित्याशयः । अगृहीतभेदयोरिदंरजतयोः प्रतिभासात् सर्वत्र प्रवृत्तौ भ्रान्त्य-

---

1. भेदग्रहणादपि प्रवृ
2. दोषादभिहिताः
3. वृत्तिरुपजायते
4. "दे" नास्ति

सत्यरजते भेदाभावाद् भेदाग्रहः, इह दोषात् तदग्रहः। तत्र भेदग्रहात् रजतार्थी निवर्तते ॥

॥ इदं रजतमिति ज्ञाने भेदाग्रहस्य प्रवृत्तिकारणत्वम्,
रजतेऽरजतभ्रमस्थलेऽसतो भेदस्य भानादन्यथाख्यात्यनुपपत्तिः,
शुक्तिरजतरजतारजतभ्रमभेदेन भेदाग्रहस्य प्रवर्तकत्वनिवर्तकत्वोभयापत्तिश्च ॥

अथ मतम्— यदि भेदग्रहान्निवृत्तिः, तदा सत्यरजते यत्र नेदं रजतमिति भ्रान्त्या ततो निवर्तते, तत्र चेद्भेदग्रहः, अन्यथाभानमायातम्। अविद्यमानस्य ([1]भेदस्य) ग्रहात्। अथ तत्र भेदाग्रहो निवृत्तिकारणम्, तर्हि भेदाग्रहः प्रवृत्तिकारणं निवृत्तिकारणं च, इति युगपत् प्रवृत्तिनिवृत्ती स्याताम् ॥

॥ सत्यरजतस्थले भेदग्रहस्य निवृत्तिप्रयोजकत्वम्, अथवाऽनिष्टभेदग्रहस्य
तदिति शुक्तिरजतस्थलसाधारणम्, रजतभेदस्मरणे
भेदाग्रहोऽपि वर्तत इति प्रवृत्त्यापत्तिश्च ॥

अथा[थ]भेदग्रहात् सत्यरजतान्निवृत्तिः, तर्हि मिथ्यारजतादपि प्रवृत्तिसमयेऽपि

---

भ्रान्तिविभागो न भवेत्, अत्राह—**इयांस्त्विति** ॥ नेदं रूप्यमिति तादात्म्याभावग्रहस्य निवर्तकत्वात् तादात्म्यग्रहस्य प्रवर्तकत्वं वाच्यम्, अत्राह—**तत्रेति** ॥

भेदग्रहस्य निवृत्तिप्रयोजकत्वमयुक्तम्; अव्यापकत्वादिति शङ्कते—**त[अ]थेति** ॥ शुक्तौ रजतभ्रान्तिवत् कलधौतेऽप्यकलधौतभ्रान्तिः कदाचिद्भवति, तत्रासतो भेदस्य ग्रहे स्यादन्यथाख्यातिरित्यर्थः। एकस्मिन् स्पर्श[सदृश]भ्रान्तौ भेदग्रहो निवृत्तेः प्रयोजकः, तस्मिन्नतद्भ्रान्तौ भेदाग्रहः, अतो नान्यथाहा[भा]नमित्याह—**अथ तत्रेति** ॥

प्रयोजकवैरूप्यगौरवं स्पष्टमिति प्रसङ्गान्तरमाह—**तर्हीति** ॥ प्रयोजकान्तरमाह—**अथेति** ॥ अतिप्रसङ्गेन दूषयति—**तर्हि मिथ्येति** ॥ मिथ्यारजतान्निवृत्तिप्रसङ्गोऽपीत्येकोऽपिः प्रवृत्तिनिवृत्त्योः समुच्चयार्थः। मिथ्यारजतभेदग्रहस्य निवर्तकत्वे, तदग्रहस्य [निवर्तकत्वे ?] प्रवर्तकत्वमभेदग्रहस्येति स्यात्। ततश्च भ्रान्तित्वाव्याहतिरित्यपरोऽपिशब्दार्थः ॥

---

1. कुण्डलान्तर्गतं नास्ति

निवृत्तिप्रसङ्गः ; भेदाग्रहसमयेऽभेदाग्रहस्यापि विद्यमानत्वात् । अथेष्टभेदाग्रहात् प्रवृत्तिः, अनिष्टभेदा[द]ग्रहान्निवृत्तिरिति चेत्, तन्न ; अनिष्टशुक्तिभेदाग्रहसमयेऽपि सत्यरजते भ्रान्तस्येष्टरजतभेदा[?]दग्रहस्य विद्यमानत्वात् प्रवृत्तिनिवृत्तिप्रसङ्गात् । अथ—तत्र भेदं स्मृत्वा तद्भेदग्रहाद् निवृत्तिरिति—चेत्, न ; भेदाग्रहस्यापि तादवस्थ्याद् रजतभेदाग्रहात् प्रवृत्तिरपि स्यात् ॥

॥ शुक्तिरजतयोर्नैरन्तर्यभानात्प्रवृत्तिः, अन्तरितभानान्निवृत्तिरिति शङ्का, 'गवाश्वौ' इत्यादौ निरन्तरभानान्निवृत्त्यापत्त्या तत्परिहारश्च, सम्बन्धापेक्षायां त्वन्यथाख्यात्यापत्तिरिति ॥

अथ न शुक्तिरजतव्यक्त्योर्भेदाग्रहात् प्रवृत्तिः, अपि तु शुक्तिरजतजात्योः = शुक्तिव्यक्तिरपि निजरूपरूपितया न प्रतीयते, रजतजातिरपि निजरूपरूपितया न प्रतीयते, तदेवमगृहीतभेदयो रूपरूपिणोर्निरन्तरभानात् प्रवृत्तिः, अन्तरितभानान्निवृत्तिरिति

---

भेदाग्रहभेदाग्रहयोः प्रयोजकयोर्यौगपद्यात् प्रवृत्तिनिवृत्तियौगपद्यं स्यादित्युक्तम्, तत्र प्रयोजकयौगपद्यमसिद्धमित्याह—**अथेति** ॥ शुक्तौ रूप्यार्थिनः प्रवृत्तिरिष्टाद् रूप्याच्छुक्तेर्भेदाग्रहात्, तस्य रूप्ये नेदं रूप्यमिति भ्रान्तस्यानिष्टशुक्तिशकलाद् रूप्यस्य भेदाग्रहान्निवृत्तिरित्यर्थः । प्रवृत्तिनिवृत्ती यौगपद्येनैव दूषयति—**तन्नेति** ॥ **इष्टरजतभेदाग्रहस्येति** । रजतात् = रजतस्य भेदाभावात् तदग्रहस्य विद्यमानत्वम् ; अन्यथा हानप्रसङ्गादित्यर्थः । सत्यरजते भ्रान्तस्य निवृत्तिसमये प्रवृत्तिप्रसक्तिपरिहारमाह—**अथ तत्रेति** ॥ सत्यरजते नेदं रजतमिति भ्रान्तिकाले पुरोवर्तिद्रव्यस्य रजताद्भेदाग्रहेऽपि यः पूर्वं रजताद्रजतस्य भेदोऽनुभूतः, तमिदानीं स्मृत्वा स्मर्यमाणभेदग्रहाद् निवृत्तिरित्यर्थः । स्मर्यमाणभेदग्रहस्य निवर्तकत्वे गृह्यमाणपुरोवर्तिद्रव्यस्य रूप्याद्भेदाग्रहः प्रवर्तकः स्यादित्याह—**नेति** ॥

एवं तावच्छुक्तिरूप्यभ्रान्तौ भेदाग्रहस्य प्रवर्तकत्वम्, तद्ग्रहस्य निवर्तकत्वमित्येतदतिप्रसङ्गादिना दूषितम्, इदानीं मतान्तरमुत्थापयति—**अथ नेति** ॥ शुक्तेः शुक्तित्वधर्मितया, रजतत्वस्य रजतधर्मतया प्रतीतौ कथं भेदाग्रहस्तयोः? अत्राह—**शुक्तीति** ॥ **रूपम्** = धर्मः, **रूपी** = धर्मी । दोषवशाच्छुक्तित्वधर्मवत्तया शुक्तिर्न प्रतीयते, रजतत्वं च रजतधर्मतयेत्यर्थः । **निरन्तरहा[भा]नादिति** ॥ धर्मिप्रतीत्यनन्तरमेव धर्मप्रतीतेरित्यर्थः । कुतस्तर्हि निवृत्तिः? अत्राह—**अन्तरितेति** ॥ मध्ये

मतम्, तदप्यचतुरम्; किमर्थनैरन्तर्यभानं प्रवृत्तिहेतुः, आहोस्वित् प्रतिपत्तिनैरन्तर्यम्? न तावदाद्यः; मिथ्यारजतेऽर्थनैरन्तर्याभानात्, नापि द्वितीयः; गवाश्वौ शुक्तिरजते इत्यत्र सजातीयरूपान्तरस्य भानान्निवृत्तिप्रसङ्गाद् गवार्थी रजतार्थी च गवि रजते च नियोगतो न प्रवर्तेत; निरन्तरभानस्याप्यन्येनाप्यविशिष्टत्वात्। पूर्वापरदेशसम्बन्धितया प्रकाशमानौ गवाश्वाकारौ तथा प्रतीताभ्यामेव व्यक्तिभ्यां सम्बध्येते, इति न व्यक्तिव्यतिकर इति चेत्, मैवम्; देशेनाप्याकारस्य संयोगसमवाययोरनभ्युपगमात् सम्बन्धो न प्रतीयते। सम्बन्ध[न्धा]प्रतीतावपि सम्बन्धसम्बन्धिनोर्नैरन्तर्यप्रतिभास एव सम्बन्धिव्यवहारहेतुः। स च नैरन्तर्यप्रतिभास आकारद्वयस्याकारिणोश्च देशयोश्च सम्बन्धयोश्चाविशिष्टः, इति पूर्ववद्गवाश्वादौ साङ्कर्यप्रसङ्गः॥

---

धर्मान्तरप्रतीत्या व्यवहितादित्यर्थः। **अर्थनैरन्तर्याभानादिति**॥ शुक्तित्वरजतत्वजात्योर्वैशिष्ट्यस्वभावात् तद्भानेऽन्यथाभानापातादिति भावः। **निवृत्तिप्रसङ्गादिति**॥ गवाश्वावित्येकज्ञाने गोव्यक्तितज्जातितुरगतज्जातीनां प्रतीतेः, शुक्तिरजते इत्यत्रापि शुक्तित्वरजतत्वादीनां प्रतीतेः, तुल्यधर्मान्तरस्य तत्र भासमानतया निरन्तरप्रतीत्यभावान्निवृत्तिः स्यादित्यर्थः॥

ननु --- गवाश्वावित्यादौ रूपरूपिणोरन्तराले न रूपान्तरप्रतीतिः, अपितु एकप्रतीतिगोचरतामात्रम्, अतो न गवाद्यर्थिनो गवादेर्निवृत्तिः, अत्राह—**गवार्थीति**॥ गोव्यक्तितज्जातिप्रतीत्यन्तराले धर्मान्तरप्रतीत्यभाववदश्वत्वगोव्यक्तिप्रतीत्यन्तराले धर्मान्तरप्रतीतेरभावः; सर्वेषामेकप्रतीतित्वात्। अतो नियोगतो नियमेन गवार्थी गवि न प्रवर्तेत; तुरगेऽपि प्रवर्तेतेत्यर्थः। यद्यप्येकप्रतीतिगोचरत्वाद् गोत्वस्य गोव्यक्त्यै[क्त्ये]व तुरगव्यक्त्यापि प्रतीतिनैरन्तर्यमविशिष्टम्, तथापि न प्रवृत्तिसङ्करः; तुरगत्वगोत्वयोरसङ्कीर्णव्यक्तिगततया प्रतीतेरित्याह – **पूर्वेति**॥ आकारयोस्तुरगत्वगोत्वयोः स्वव्यक्तिमात्रसमवेतयोर्न देशविशेषसंसर्गितया प्रकाशमानतेत्याह—**मैवमिति**॥ पूर्वापरदेशाभ्यां संयुक्तौ गोतुरगौ तयोस्समवेतौ तदाकारावित्यस्ति परम्परसंसर्गः, अत्राह—**संबन्धेति**॥ प्रतीतिनैरन्तर्यस्य व्यवहारप्रयोजकस्योक्तत्वादित्याशयः। किमतः? अत्राह—**स चेति**॥ इमौ गवाश्वाविति पुरोदेशसंसृष्टतया तेषां प्रतीतेरित्यर्थः। अर्थनैरन्तर्यविशिष्टं प्रतिपत्तिनैरन्तर्यं प्रवृत्तिप्रयोजकम्, अतो न गवार्थिनोऽश्वादौ प्रवृत्तिरित्याह—**अथेति**॥ अव्याप्त्या दूषयति —**हन्तेति**॥ अनुमतौ। यद्येवं भवतामनुमतम्, तर्हीत्यर्थः॥

॥ विषयसत्त्वस्य प्रवृत्तिप्रयोजकत्वे भ्रमात् प्रवृत्त्यनुपपत्तिरित्यख्याति-
वादोपक्षेपोपसंहारः ॥

अथ यत्र विषयोऽस्ति, तत्र तदर्थी प्रवर्तत इति ; हन्त तर्हि रजतार्थी न शुक्तिकायां प्रवर्तेत । तस्मान्न निरन्तरभानं प्रवृत्तिहेतुरिति ॥

॥ अख्यातिवादेऽपीदन्त्वविशिष्टरजतभानादेव प्रवृत्तिः, वैशिष्ट्यं त्वत्र
प्रतीतिधर्मः, नैव पदार्थधर्मः । स च बुद्धिभेदेऽप्युपपद्यते ।
विशेषणविशेष्यभावोऽपि तदनुगुणमेव स्वीक्रियते ।
सर्वथा तु नान्यथाख्यातिरिति महापूर्वपक्षः ॥

अत्रोच्यते—रूपप्रयुक्तकार्यार्थी रूपावच्छिन्नरूपिणि चेष्टते । सत्यमिथ्यात्वसाधारण([1]गतिस्त्वियम्—रजतत्वविशिष्टेदंभानादेव) समीचीनरजतेऽपि प्रवृत्तिः, तद् मिथ्यारजतेऽपि समानम् । न च—परकीयाकारविशिष्टत्वादन्यथाख्यातिप्रसङ्ग इति—साम्प्रतम् ; यतो न विशिष्टत्वं नाम वस्तुधर्मः । प्रतिपत्तिधर्मो ह्यसौ प्रतिपत्तिसमये पदार्थावस्थाभेदः । तथाहि—

आकारो हि परतन्त्रः परान्तर्भावघटितमूर्तिः कस्यचित् द्रव्यस्य विशेषण-

---

एवमख्यातिपक्षमाक्षिप्य समाधत्ते—**अत्रेति** ॥ रजतत्वप्रयुक्तकटकादिकार्यकामो रजतत्वविशिष्टे सत्यमिथ्यारजतसाधारणे चेष्टत इति सङ्ग्रहार्थः । रजतत्वस्य रजतधर्मत्वात् तद्विशिष्टतया शुक्तीदमंशभानेऽन्यथाख्यातिः, अत्राह—**न चेति** ॥ रजतत्ववैशिष्ट्यस्येदमंशधर्मत्वाभावो वा कुतः? अत्राह —**प्रतिपत्तिधर्मो हीति** ॥ विशिष्टिर्भेदोऽन्योन्याभावः । स च ते फलम् , धर्मिज्ञानमित्यर्थः । वैशिष्ट्यं प्रतिपत्तिधर्मं परिकल्प्य बाह्यस्य तस्य निरासे रजतादिकमपि प्रतिपत्तिधर्म एवेति विज्ञानवादप्रसङ्गः, अत्राह—**प्रतिपत्तीति** ॥ अवस्थाभेदो विशेषणविशेष्यभावः, तं विशदयति—**तथा हीति** ॥ पारतन्त्र्यं व्यनक्ति—**परान्तर्भावेति** ॥ परस्मिन्नन्तर्भावः=उपसर्जनतयाऽवस्थानम् , तेन घटितमूर्तिः नित्यसंसक्तरूपः । स्वतन्त्रम् = प्रधानम् । आकारितया=हेतुना । तर्हि शुक्तिद्रव्यं शुक्तित्वेन विशेष्यताम् , रजतत्वं स्वव्यक्तिं विशेष-

---

1. कुण्डलान्तर्गतस्थाने एवं वर्तते "इति स्वयं रजतत्व विशिष्टोद्भावना यदेवं"

स्वभावः । द्रव्यमपि स्वतन्त्रं केनचिदाकारेणाकारि[तया[1] विशेष्यतया प्रतीयते । एवं च तयोराकाराकारिणोर्गुणप्रधानभूतयोः साकाङ्क्षयोर्निरन्तरं प्रतीतयोर्विशेषणत्वेन विशेष्यत्वेन वाऽ]वस्थानं भवति । विशेषणत्वं नामावच्छेदकत्वम्, विशिष्टिर्भेदः । स च बुद्धिभेदः, तद्विषयत्वं विशेष्यत्वम् । आकाराकारिणाम[व]-पीतराकारिभ्य इतराकारेभ्यश्चात्माना[नम]वच्छिद्यैकव्यवहारसामग्रीभूतौ गुणप्रधानभावेनावतिष्ठेते । अयं तयोरेकः स्वभावः । द्वितीयोऽपि स्वभावोऽस्ति । ययोरेव समवायः, तावेव स्वतो विशिष्टत्वं भजेते, इति समवायस्वभावोऽसौ, परतो

---

येदिति न शुक्तिव्यक्तिरजतत्वयोरवस्थाभेदसिद्धिः, अत्राह—**एवं चेति** ॥ तदसम्बद्धस्य तद्विशेषणत्वमतिप्रसङ्गीति, तत्सम्बन्धे वाच्ये सैवान्यथाख्यातिः, अत्राह—**विशेषणत्वमिति** ॥ विशेष्यते = व्यवच्छिद्यतेऽनेनेति विशेषणम्, करणे ल्युट् । तत्र क्रियमाणा विशिष्टिर्नाम का ? अत्राह—**विशिष्टिरिति** ॥ भेदकं विशेषणमित्युक्तं भवति । तत्संसर्गितया प्रतीयमानस्य तद्भेदकत्वमिति बलादन्यथाख्यातिसिद्धिः, अत्राह—**स चेति** ॥ अनवच्छिन्नबुद्धिभ्यो विलक्षणबुद्धिस्वरूपमित्यर्थः । न तर्हि शुक्तिव्यक्तेर्विशेष्यत्वम्, विशेष्यत्वस्य बुद्धिधर्मत्वात्, अत्राह—**तद्विषयत्वमिति** ॥ अयमेवाकार एतद्विषयबुद्धिभेदं जनयति, तद्विषयत्वमस्यैवाकारिण इति नियमो नोपपद्यते ; तत्संसर्गित्वेन प्रतीयमानत्वस्य नियामकस्यानङ्गीकारात्, अत्राह—**आकारेति** ॥ इतराकारेभ्यः = शुक्तीदमंशसमानाधिकृतव्यवहारानर्हेभ्यः आत्मानम् रूप्यत्वं स्वयमेव व्यवच्छिनत्ति । आकारिधर्म्यपीतराकारिभ्यो रूप्यत्वसमानाधिकृतव्यवहारानर्हधर्म्यन्तरेभ्य आत्मानं व्यवच्छिनत्ति । ततः समानाधिकृतव्यवहारयोग्यौ विशेषणविशेष्यभावेनावतिष्ठत इत्यर्थः । पुरोवर्तिसितोपलादिद्रव्यान्तरमितराकारिभ्य आत्मानं व्यवच्छिद्य रूप्यत्वेनैकव्यवहारार्हमवतिष्ठते, रूप्यत्वमपि इतराकारेभ्य आत्मानमवच्छिद्य तदेकव्यवहारार्हमिति रूप्यार्थी सितोपलादौ प्रवर्तते, अत्राह—**अयमिति** ॥ पदार्थानां स्वभावो न पर्यनुयोगमर्हति ; जगद्वैचित्र्यभङ्गप्रसङ्गादित्याशयः । आकाराकारिणोः स्वभावादेव विशिष्टव्यवहारप्रवर्तकत्वे समवायासिद्धिः ; प्रमाणाभावात्, अत्राह—**द्वितीयोऽपीति** ॥ रूपरूपिणोर्वैशिष्ट्ये समवायः प्रयोजकः इत्युक्तः स्यात् । एवं च न शुक्तिव्यक्तिरजतत्वयोर्विशेषणविशेष्य-

---

1. कुण्डलान्तर्गतं क पुस्तके नास्ति ।

दोषवशात् तत्स्वभावप्रतिबन्धादन्यथात्वमिति । अत एव गवाश्वादिषु बहूनां नैरन्तर्येऽपि दोषाभावे समवायस्वभावात्, जातिस्वभावाद्वा समवायिनोरेव विशिष्टत्वम् । तत्रापि यदि दोषः स्यात्, स्याद् व्यतिकरः तस्मान्निरन्तरभानं विशिष्टप्रतीतिमुखेन प्रवृत्तिहेतुरिति युक्तम् । विशिष्टप्रतीतिप्रहाणेन विशिष्टान्तरप्रत्यये च निवृत्तिर्भवति । तत्रैव बाधकव्यवहारोऽपि भवति । बाधार्हविशिष्टप्रत्ययस्य भ्रान्तत्वम्, अतथाभूतस्य सत्यत्वं समवायिलिङ्गत्वञ्च सर्वमुपपन्नम् । तस्मादर्थापत्तेरन्यथोपपन्नत्वान्न प्रमाणता सम्भवति ॥

॥ अख्यातिवादे सामानाधिकरण्यस्य न तादात्म्यादिविषयकत्वम्, किन्तु पर्यवसिते द्रव्य एवाकारबुद्धिविषयत्वम् । अतो नान्यथाख्यातिः ॥

---

भावः, अत्राह—**समवायेति** ॥ 'परतः' इत्यस्य विवरणम्—**दोषवशादिति** ॥ **तत्स्वभावप्रतिबन्धात्** = आकाराकारिणोः स्वभावस्य समवायिनोरेव वैशिष्ट्यभजनमित्यस्य प्रतिबन्धात् । **अन्यथात्वम्** = असमवायिनोस्तद्भजनं समवायस्वभाव इत्यर्थः । मिथ्याव्यवहारजनकत्वं दोषसहकृतसमवायस्वभाव इत्यत्र लिङ्गमाह—**अत एवेति** ॥ 'इमौ गवाश्वौ' 'इमे शुक्तिरजते' इत्यादौ गोत्वतद्व्यक्त्योरश्वत्वतद्व्यक्त्योर्वैशिष्ट्यम्, न विपर्ययेण । किं [तु] नियम इत्यर्थः । व्यतिरेकमुक्त्वाऽन्वयमाह—**तत्रापीति** ॥ सङ्ग्रहश्लोकार्थमुपपादितमुपसंहरति—**तस्मादिति** ॥ निरन्तरदा[भा]नस्य प्रवर्तकत्वे न कदाचिन्निवृत्तिः स्यात्, तत्कृतवैशिष्ट्यावस्थानात्, अत्राह—**विशिष्टेति** ॥ **विशिष्टान्तरप्रत्यय इति** ॥ शुक्तित्वविशिष्टप्रत्यये= नेदंरूप्यमियं शुक्तिरित्येवंरूप इत्यर्थ इति भावः । अप्रसक्तप्रतिषेधरूपबाधानुपपत्त्याऽन्यथाख्यातिसिद्धिः, अत्राह—**तत्रेति** ॥ कस्याप्याकारस्य मिथ्याभूतस्याप्रतिभासे भ्रान्तिप्रसिद्धिर्न स्यात्, अत्राह—**बाधेति** ॥ विशिष्टव्यवहारहेतुप्रत्ययस्य भ्रमत्वे सत्यरजते रजतव्यवहारहेतुप्रत्ययोऽपि भ्रमः स्यात्, विशिष्टव्यवहारत्वात्, अत्राह—**अतथाभूतस्येति** ॥ **बाधार्हविशिष्टप्रत्ययस्य** भ्रमत्वम्, अतादृशस्य तु सत्यत्वमित्यर्थः । असमवायिनोरपि दोषाद्वैशिष्ट्यप्रतीतौ साकाङ्क्षरूपरूपिप्रत्ययो न समवायिलिङ्गः स्यात्; व्यभिचारात्, अत्राह—**समवायीति** ॥ अविसंवादित्वविशिष्टोऽसौ समवाय[यि]लिङ्गमित्यर्थः ॥

तादात्म्यमेव सामानाधिकरण्यप्रयोजकमिति मन्वान आह—**नन्विति** ॥ भिन्नयोरभिन्नयोर्वा तदात्म्यस्याप्रामाणिकत्वान्न तत्सामानाधिकरण्यप्रयोजकमित्याह—

ननु — कथमिदमेव रजतमिति सामानाधिकरण्यप्रतीतेर्निर्वाहः? उच्यते— आकाराकारिणोरिदमेव सामानाधिकरण्यम्— यदाकारेऽपर्यवसिते द्रव्य एवाकारबुद्धिविषयत्वमिति, न पुनरेकत्वम्; धारावाहिकत्वप्रसङ्गात्। नापि तादात्म्यम्; इदमेव रजतमन्यच्चैकं नैकञ्चेति प्रसङ्गात्। तस्मादुक्तया दिशा सामाधिकरण्यमुपपद्यते। अपर्यवसानञ्च तत्क्षणे, अनन्तरक्षणे वा रूपिबुद्धिनियमः। तस्मात् सर्वमवदातम्॥

॥ प्रवृत्तेः पुरोवर्तिविषयकत्वस्य प्रवृत्तिप्रयोजकत्वं व्यभिचारादिना बाधितम्।
अतो न तदनुपपत्त्याऽन्यथाख्यातिः। अत्र प्रवृत्तेः समीचीन-
रजतज्ञानपूर्वकत्वेन प्रकरणसमोऽपि॥

ननु — विवादाध्यासिता प्रवृत्तिः, पुरोवर्तिविषयरजतज्ञानपूर्विका, रजतेच्छाधीनपुरोवर्तिप्रवृत्तित्वात्; समीचीनप्रवृत्तिवत्। न च साधनप्रवृत्तौ व्यभिचारः; साधनेच्छानधीनत्वात् साधनप्रवृत्तेरिति—चेत्, मैवम्; पुरोवर्तिव्यक्तिविषयत्वे साध्ये साध्यवैकल्यात्, पुरोवर्तिजातिविषयत्वे बाधितविषयत्वात्। किञ्च विवदाध्यसिता प्रवृत्तिः, समीचीनरजतज्ञानपूर्विका, रजतेच्छाधीनप्रवृत्तित्वात्; समीचीनप्रवृत्तिवदित्यपि साधनाद्विशेषविरोधः, प्रकरणसमत्वञ्च स्यात्॥

---

**उच्यत इति**॥ आकारे रूपेऽपर्यवसिते साकाङ्क्षद्रव्य एव रूपिण्येवाकार इति तद्विशिष्टप्रतीतिविषयत्वम्। न चैवमन्यथाख्यातिरित्युपपादितमित्यर्थः॥

आकाराकारिणोरभेदः सामानाधिकरण्यप्रत्ययस्य गोचरः, न वैशिष्ट्यमात्रम्; वैयधिकरण्येऽपि प्रसङ्गादित्यत्राह—**न पुनरिति**॥ अभेद एकत्वम्, तादात्म्यं वा। नाद्यः; इदंरूप्यशब्दयोः पर्यायत्वप्रसङ्गात्, तत्प्रतीत्योश्च धारावाहित्वप्रसङ्गादित्यर्थः। द्वितीयं दूषयति—**नापीति**॥ भेदसहिष्णोरभेदस्य तादात्म्यशब्दार्थत्वादिदमंशस्यैव रूप्यत्वम् ततोऽन्यत्वमित्येकानेकप्रतीत्योरेकत्र व्याघातप्रसङ्गात्, रूप्याभिन्नतया तदर्थिव्यवहारगोचरत्वमरूप्यतया तदगोचरत्वमिति प्रसङ्गाच्चेत्यर्थः॥

आकारापर्यवसानं द्रव्ये तद्बुद्धिविषयत्वं चेत्, वा[व]चोभङ्गः [ङ्ग्याऽ]न्यथाख्यात्यभ्युपगमः, अत्राह—**अपर्यवसानं चेति**॥ निरन्तरभानमात्रमित्यर्थः॥

अनुमानादन्यथाख्यातिं शङ्कते—**नन्विति**॥ **साध्यवैकल्यादिति**॥ पुरोवर्तिव्यक्तिः शुक्तिरेव। तद्विषयत्वं शुक्तिरूप्यज्ञाने नास्तीत्यर्थः। **बाधितविषय-**

॥ रजतनिरूप्यपुरोवृत्तिज्ञानस्यैव प्रवृत्तिप्रयोजकत्वादन्यथाख्यातिवादापत्तिशङ्का, रजतनिरूप्यत्वं बुद्धिधर्म इति पूर्वोक्तविधया तत्परिहारश्च ॥

ननु रजतनिरूप्यत्वस्य पुरोवर्तिन्यसत्त्वात् तद्भानमन्यथा भानं स्यात्, तन्न; तन्निरूप्यत्वं नाम निरूपणधर्मः, न वस्तुधर्मः; सहप्रतीतावित्यत्र सहत्ववत्। वस्तुधर्मत्वेऽप्याकार्यन्तरस्याकारान्तरनिरूपकत्वदर्शनादाकार्याकारमात्रधर्मोऽयं निश्चीयते। अथवा परविशेषणत्वेन परविशेष्यत्वेना[न वाऽ]गृहीतभेदयो रूपरूपिणोर्निरन्तरभानात् प्रवृत्तिः, गवाश्वादौ तु दोषाभावात् स्वभावाप्रतिबन्धात् समवायिनोरेव विशिष्टत्वान्न व्यतिकरः, अन्तरितभानान्निवृत्तिः। एवमन्यथासिद्धिरस्तु ॥

॥ सान्तरालप्रवृत्तिस्वरूपनिष्कर्षः, तत्र भाट्ट मतनिरासश्च ॥

---

**त्वादिति** ॥ पुरोवर्तिव्यक्तिसमवेता जातिः शुक्तित्वम्, तद्विषयत्वसाधनं तदाकारानुभवबाधितमित्यर्थः। **विशेषविरोध इति** ॥ रजतार्थिप्रवृत्तिः, सत्यरजतधीपूर्विकेति विशेषव्याप्तिः; रजतेच्छाधीनपुरोवर्तिप्रवृत्तित्वं पुरोवृत्तिविषयरजतज्ञानपूर्वकमिति सामान्योपाधौ प्रमाणम्। पुरोवर्तिव्यक्तिः शुक्तिरेवेति परिशेषादन्यथाख्यातिरिति विलम्बितप्रतिपत्तित्वात् सामान्यव्यक्तिरित्यर्थः। मिथ्याधीसाधनस्य सत्यधीसाधनं प्रतिहेतुरित्याह—**प्रकरणसमत्वमिति** ॥

शुक्तिव्यक्तिरजतत्वयो रूपरूपित्वमिच्छता रजतत्वेन निरूप्यत्वं शुक्तेरिष्टम्। रूप्यते ज्ञायते येन, तद् रूपम्, रूपयतीति वा रूपम्, रूप्यत्वेन शुक्तावसमवेतेन निरूप्यत्वं तत्र नास्तीत्यन्यथाख्यातिः स्यादित्याह—**नन्विति** ॥ यादृशबुद्धिविषयत्वं तादृशबुद्धेरेवायं धर्म इत्याह—**तेनेति** ॥ उदाहरति—**सहेति** ॥ साहित्यमेककालत्वं प्रतीतेरेव, वस्तुनोर्भिन्नकालयोरपि सहप्रतीतेरिति यावत्। वस्तुनोरपि प्रतीतिकालेनैकेन संसर्गात्सहत्वं वस्तुधर्म एव, अतो निरूप्यत्वस्यापि वस्तुधर्मत्वमित्याशङ्क्याह—**वस्तुधर्मत्वेऽपीति** ॥ आकार्यन्तरस्य गोव्यक्त्यादेर्गोत्वाद्याकारनिरूपकत्वदर्शनात्। अयम्=निरूप्यनिरूपकभावो वस्तुमात्रधर्मो न; विशेष्याननुगमात्। वस्तुत्वमन्यत्राप्यस्तीत्याशयः ॥

एवं तावद् रूपरूपिणोर्निरन्तरभानं विशिष्टप्रतीतिमुखेन प्रवर्तकमित्यन्यथासिद्धिरुक्ता, सम्प्रति प्रकारान्तरेण तामाह—**अथवेति** ॥ इमौ गवाश्वावित्यादौ गवाद्यर्थिनोऽश्वादावपि प्रवृत्तिः स्यात्; उक्तरूपनिरन्तरभानभावात्, अत्राह—

ननु किमियं सान्तरालप्रवृत्तिः? उच्यते — विशिष्टप्रत्यया[1]गमः, विशिष्ट[प्रत्यया]न्तरोदयः, समीचीने विशिष्टाविनाशः, तस्मादन्यथोपपन्ने प्रवृत्तिनिवृत्ती। एतेनेदमपास्तम्—यदाहुरेके—विवेकाग्रहात् प्रवृत्तौ प्रयोज्यवृद्धप्रवृत्तेर्नान्वयज्ञानानुमा सम्भवति, इति नान्विताभिधानसिद्धिः, इति शाब्दप्रमाणमुच्छिद्येत—इति; यतो दोषाभावे सम्यग्ज्ञानानुमानवत् प्रवृत्तितो विशिष्टज्ञानमेवानुमीयत इत्यन्वयज्ञानानुमानात् शब्दप्रमाणसम्भवः ॥

॥ अगृहीतभेदयोर्ग्रहणस्मरणयोरेव प्रवर्तकत्वमैकरूप्यार्थं स्वीकर्तव्यम्,
न तु तादात्म्यादिज्ञानस्य; अन्यथा भेदसहिष्णुत्वादभेदस्य
भेदप्रतिभासान्निवृत्तिरपि स्यात् ॥

किञ्च तादात्म्यज्ञानाद् न प्रवृत्तिः, एकरूपायाः प्रवृत्तेरेकमेव करणं वाच्यम्। न च विषयैक्यादृते ज्ञानैक्यं सम्भवति। न च सम्यग्रजतज्ञाने, मिथ्या

---

**गवाश्वेति** ॥ निरन्तरभानानां प्रवृत्तौ कुतो निवृत्तिः? अत्राह — **अन्तरितेति** ॥

भानस्यान्तरितत्वं स्फुटयितुं चोदयति—**नन्विति** ॥ विशिष्टान्तरप्रतीतेर्निवर्तकत्वम्, तस्मिन् विषये पूर्वविशिष्टावगमस्य वा तस्मिन्, इत्यतस्तद् विभजते —**मिथ्येति** ॥ **विशिष्टान्तरोदय इति** ॥ 'शुक्तिरियम्' इति धीः। अगृहीतभेदयोर्निरन्तरभानात् संसृष्टव्यवहारे मध्यमवृद्धव्यवहारस्यापि तथोपपत्तौ संसर्गज्ञानानुमानं न स्यादिति यद् भट्टानां चोद्यम्, तदपाकरोति—**एतेनेति** ॥ वक्ष्यमाणो हेतुः; बुद्धिस्थत्वात् परामृष्टः, तं स्पष्टयति—**यत इति** ॥ विशिष्टव्यवहारस्य मिथ्यारजते मिथ्याधीपूर्वकत्वेऽपि प्रयोज्यनरचेष्टया दोषाभावसहकृतया संसर्गज्ञानं सत्यं यथा शब्दप्रमाणसिद्धये भवताऽनुमीयत इत्यर्थः ॥

सत्यरूप्ये, मिथ्यारूप्ये च प्रवृत्तिरूपभेदयो रूपरूपिणोर्निरन्तरभानमेकरूपं कारणं वाच्यमित्याह—**किञ्चेति** ॥ संसृष्टज्ञानमेवानुगतमेकरूपं कारणं किं न स्यात्? अत्राह—**न चेति** ॥ विषयोऽपि तादात्म्यलक्षण उभयत्रापि[वि]लक्षण एव, अत्राह—**न च सम्यगिति** ॥

---

1. प्रत्ययावगमो

रजतज्ञाने च विषयैक्यमस्ति; वस्तुतो रजततादात्म्याभवात्। न च प्रकारैक्यं सम्भवति; आश्रयैक्याधीनत्वात् तदैक्यस्य। अपि चाभेदप्रतिभासवद् भेदप्रतिभासस्यापि तदैव विद्यमानत्वाद् युगपत् प्रवृत्तिनिवृत्ती स्याताम्॥

॥ अख्यातिपक्षोपसंहारः॥

तदेवम्—

यथार्था विमता बुद्धिर्बुद्धित्वाद् घटबुद्धिवत्।
नायथार्थमतो ज्ञानमहेतुत्वादिति स्थितम्॥ ४७॥

॥ अख्यातिवादनिरासेनानिर्वचनीयख्यात्युपक्षेपः॥

अत्राभिधीयते—

मिथ्यावबोधतो मिथ्याव्यवहारः प्रसिध्यति।
अपर्यायप्रयोगश्च न भेदावगमं विना॥ ४८॥

॥ सर्वज्ञानयाथार्थ्यानुमाने याथार्थ्यस्य नवधा विकल्पः॥

यदत्र विमतिपदं[द] वेदनं [न] यथार्थत्वानुमानम्, तत्रेदं सम्प्रधार्यम्—किं यथार्थत्वमबाधितविषयत्वम्? अबाधितत्वं वा, प्रतिभासमानार्थवत्त्वं वा? [ज्ञानत्वं[1] वा?]

---

आत्मपरिणामरूपज्ञानस्य विषयैक्यमन्तरेणैक्यायोगेऽपि तत्कृतमर्थप्राकट्यं प्रकाशापरपर्यायमेकरूपमेव प्रवृत्तिकारणम्, अत्राह—**नच प्रकाशे[रे]ति**॥ मिथ्यारूप्ये तदात्म्याभावान्न तद्धीः प्रवर्तिकेत्युक्तम्, इदानीमभ्युपगम्यापि दोषान्तरं भाषते—**अपि चेति**॥ **तदैवेति**। अभेदप्रतिभासवत् भेदोऽपि प्रतिभासते; भेदाभेदरूपत्वात्तादात्म्यस्येत्यर्थः॥

**अहेतुत्वादिति**॥ सम्यग्धीहेतूनामिन्द्रियादीनां मिथ्याधीहेतुत्वासिद्धेः, दोषस्य प्राप्तकार्यप्रतिबन्धकमात्रस्य विपरीतकार्यकरत्वस्यायोगादित्याशयः॥

अन्यार्थिनोऽन्यत्र प्रवृत्त्यन्यथानुपपत्त्यान्यथाप्रतीतिरङ्गीकार्येत्याह—**मिथ्येति**॥ अगृहीतभेदयो रूपरूपिणोर्निरन्तरभानात् प्रवृत्त्युपपत्तिरिति यदुदितम्, तत् प्रत्याह—**अपर्यायेति**॥

विमतिपदवेदनयथार्थत्वसाधननिरसने निरस्तप्रायमेव प्रमाणाभावेनाख्यातिमतमिति मत्वा प्रथमं तन्निराकर्तुमुपक्रमते—**यदत्रेति**॥

---

1. कुण्डलान्तर्गतं नास्ति।

अनुभवत्वं वा, स्मृतित्वं वा ? प्रमात्वं वा ? किञ्चिज्ज्ञानव्यावृत्त[1]धर्मान्तरं वा ? अज्ञानावृत्तिसकलज्ञानवृत्तिधर्मान्तरं वा ?

॥ अबाधितार्थविषयत्वम्, अबाधितत्वं वा न याथार्थ्यमिति प्रथमद्वितीयकल्पनिरासः ॥

न तावदाद्यः; 'नेदं रजतम्' इति बाधकप्रत्ययविरोधात्, व्यवहारनिवारणादिना बाधकासम्भवस्य वक्ष्यमाणत्वात्। अत एव न द्वितीयः; ज्ञानस्याबाध्यत्वे भ्रान्तित्व-बाध्यार्थत्वयोरसम्भवात्। किञ्च शुक्तिरजतभेदग्रहबाधकत्वाभावसाधने बाधः, अपसिद्धान्तश्च। शुक्तौ रजतत्वाभावानुभवविरहसाधनेऽपि बाध एव। शुक्तिरजतज्ञानमिथ्यात्वसाधकानुभवविरहसाधने चाप्रसिद्धविशेषणता[2] ॥

॥ प्रतिभासमात्रशरीरत्व-ज्ञानत्वानुभवत्व-स्मृतित्व-प्रमात्वादि-तृतीयाद्यष्टमान्तपक्षनिरासः ॥

न तृतीयः; सिद्धसाधनात्, अविद्याविवर्तरजतस्य प्रतिभासानुरूपस्याभ्युपगमात्। नापि तुरीयः; तत एव, साध्याविशिष्टत्वाच्च। नापि पञ्चमः; स्मृतौ व्यभिचारात्। नापि षष्ठः; अनुभवे व्यभिचारात्। नापि सप्तमः, अप्रसिद्धविशे-

---

व्यवहारनिवृत्तिम्, अविवेकनिवृत्तिं वा कुर्वतो बाधकस्य प्राचीनप्रत्ययगोचरापहारमन्तरेणोपपत्तेर्न तद्विरोधः, तत्राह—**व्यवहारेति** ॥ अबाध्यत्वं यथार्थत्वमिति कल्पे अबाध्यत्वं बाधविधुरत्वम्। तत्र भेदग्रहरूपबाधवैधुर्यं साध्यम्, उत शुक्तौ रजतत्वं नास्तीत्यनुभवरूपबाधराहित्यम्, उत शुक्तौ रजतात्मताज्ञानमिथ्यात्वसाधकानुभवरूपबाधवैकल्यमिति विकल्प्य प्रथमं प्रत्याह—**किञ्चेति** ॥ द्वितीयं दूषयति—**शुक्ताविति** ॥ **बाध एवेति** ॥ 'नेह रजतम्' इत्यनुभवादिति भावः। चरमं प्रत्याचष्टे—**शुक्तीति** ॥ शुक्तिरूप्यज्ञानस्याप्रसिद्धतया तन्मिथ्यात्वसाधकानुभवोऽप्यप्रसिद्धः, इति प्रतियोगिप्रतिषेधसाधनेऽप्रसिद्धविशेषणत्वमित्यर्थः ॥

---

1. "त्वं" अधिकं
2. विशेषता (क)

षणत्वात्, अनुभवत्वव्यतिरिक्तप्रमात्वस्यायुष्मतोऽप्रसिद्धेः। नाप्यष्टमः, यत एव ज्ञानात् तद् व्यावर्तेत, तत्र व्यभिचारात् ॥

॥ अज्ञानावृत्तिसकलज्ञानवृत्तिधर्मान्तरं न याथार्थ्यमिति
नवमपक्षनिरासः; गु रु मते ज्ञानस्वतःप्रामाण्येन तदसम्भवात्,
अनुमानसिद्धभ्रान्तिज्ञाने व्यभिचारः, च बाधाभाससाम्यादिना ॥

नापि नवमः; भवतोऽप्रसिद्धेः। इदं यथार्थमिदमयथार्थमिति व्यवहारात् तत्सिद्धिरिति चेत्, न यथार्थत्वाभिज्ञानं विषयः; स्वसंवेदनत्वविरोधात्। न च [1]तदविषयीकृत्य तद्धर्मयथार्थत्वं शक्यग्रहम्। न च स्वेनैव स्वीययथार्थत्वसिद्धिः। स्वस्य घटादिविषयत्वेन स्वध[2]र्माविषयत्वात्, (यथार्थमि[3]दमिति व्यवहारस्यायुष्मतो मते ज्ञानादेव सिद्धेश्च। इयं शुक्तिः, एतद्गोचरयथार्थत्वरहितज्ञानगोचरः, मेयत्वात्)

---

यथार्थत्वमनुभवत्वमिति पञ्चमं पराकरोति—**नापीति**॥ प्रमात्वस्य घटादिप्रतीतौ प्रसिद्धत्वात् कथमप्रसिद्धविशेषणत्वम्? अत्राह—**अनुभवत्वव्यतिरिक्तेति**॥

अनुभूतिः प्रमाणं सा स्मृतेरन्या स्मृतिः पुनः।
पूर्वानुभवसंस्कारमात्रजं ज्ञानमुच्यते ॥

इति ना थ गाथादर्शनादित्याशयः ॥

ज्ञानादन्यत्र वृत्तिरहितत्वे सति सकलज्ञाननिष्ठधर्मान्तरमिति परिशिष्टं प्रतिषेधति—**नापीति**॥ ज्ञानत्वानुभवत्वस्मृतित्वातिरिक्तयथार्थत्वप्रसिद्धिं परस्साधयति—**इदमिति**॥ व्यवहारादावपि यथार्थत्वानुभवाद् नाभिहितधर्मसिद्धिरिति दूषयति—**नेति**॥ यथार्थत्वं ज्ञानान्तरेण गृह्यते, स्वेन वा। नाद्य इत्याह—**यथार्थत्वेति**॥ न द्वितीय इत्याह—**न च स्वेनेति**॥ यथार्थमिदमिति व्यवहारस्य ज्ञानाकारादेवोपपत्तौ न तदतिरिक्तयथार्थत्वसिद्धिरित्याह—**यथार्थमिति**॥

एवं यथार्थत्वसाधनानुमाने साध्यासिद्धिमभिधाय हेतुदोषं दर्शयति—**इयं शुक्तिरिति**॥ एतद्गोचरत्वे सति यथार्थत्वरहितं ज्ञानम्, एतद्गोचरयथार्थरहितज्ञानम्, तस्य गोचरम्। शुक्त्यन्तरे सिद्धसाध्यत्वं वारयितुमुक्तम्—**इयमिति**॥

---

1. तद्विषयीकृत
2. धर्मविषयम् (क)
3. कुण्डलान्तर्गतं नास्ति।

घटवदिति सिद्धेनैतद्गोचरायथार्थज्ञानेन व्यभिचारश्च, यदेतावन्तं कालं रूप्यमित्यभात्, सैषा शुक्तिरित्यनुसन्धानप्रत्ययविरुद्धकालात्ययापदिष्टश्च । विमतो व्यवहारः, यथार्थः, व्यवहारत्वात्; घटव्यवहारवदि[1]त्याभाससमानत्वञ्च ॥

॥ शुक्तिनिरूप्यधीनिरूप्यत्वादित्यनुमानेनाख्यातिवादसमर्थनमरूप्यत्वदुर्वचत्वेन ॥

शुक्तिः, न रूप्यधीगोचरः, अरूप्यत्वात्; घटवदिति चेत्, न; कान्ताकरावलम्बिरूप्येण व्यभिचारात् । न हि तद् रूप्यान्तरादन्यद् न भवति, तद्रूपेणैव वाऽस्ति । रूप्यं घट इति शाब्दज्ञाने घटस्य रूप्यत्वप्रतीतेः, साध्यहीनत्वाच्च दृष्टान्तस्य । शुक्तिः, न[2] रजतव्यवहारगोचरः, तद्रूपेणासत्त्वात्; घटवदित्याभाससमत्वाच्च ॥

॥ इदङ्काराभिमुखप्रवृत्त्यनुपपत्त्याऽनिर्वचनीयज्ञानवादसमर्थनम्;
मिथ्यासत्यरजतसाधारणरजतत्वस्वीकारेणाबाधनिर्वाहात् ॥

विमता प्रवृत्तिः, पुरोवर्तिरजतज्ञानपूर्विका, रजतेच्छाधीनपुरोवर्तिप्रवृत्तित्वात्; समीचीनरजतप्रवृत्तिवदिति मिथ्याधीसिद्धिः । पुरोवर्तिनिरूप्यव्यक्तिविषयत्वे

---

अप्रसिद्धविशेषणत्वं वारयति—**एतद्गोचरेति** ॥ एतद्गोचरयथार्थत्वरहितमनेतद्गोचरं वा, यथार्थत्वरहितं वा । अनेतद्गोचरज्ञानगोचरत्वं व्याहतमिति यथार्थत्वरहितज्ञानसिद्धिरित्याशयः ॥

एवं म हा वि द्या नुसारिणां मतानुसारेण दूषणमुदितम्, इदानीं स्वमतानुसारेणाह—**यदेतावन्तमिति** ॥

भ्रान्तेरयथार्थत्वानभ्युपगमे तन्मूलव्यवहारस्य तदभावप्रसङ्गविरोध इत्यभिसन्धायाह—**विमत इति** ॥ शुक्तिरूप्यतादात्म्यज्ञानाभावस्य प्रामाणिकत्वाज्ज्ञानयाथात्म्यनियमसिद्धिरित्याशयवानख्यातिवादी शङ्कते—**शुक्तिरिति** ॥ विमतेति विशेषणं द्रष्टव्यम्; इतरथा शुक्त्यन्तरेण सिद्धसाधनात् । अरूप्यत्वं रूप्याभावत्वञ्चेदसिद्धिः । रूप्यादन्यत्वं रूप्यरूपेणासत्त्वं वा हेतुर्वाच्यः । तथा च स्फुटो व्यभि-

---

1. इत्याभाससमानत्वं च (क)
2. "न" नास्ति

साध्येऽननुगमः, रूप्यत्वजातिविषयत्वे बाध इति चेत्, न; पुरोवर्तिरजतजातीयविषयत्वसाधनात्। न च बाधः; शुक्तौ मिथ्यारजतव्यक्तिस्वीकारात्। नापि समीचीनरूप्यधीसाधनसम्भवः; पुरोवर्तिरजतार्थिप्रवृत्तेः पुरोवर्तिरजतधीमात्रेण व्याप्तिग्रहे समीचीनत्वविशेषणस्याव्यापकस्यानु[1]मातुमशक्यत्वात्, अन्यथा धूमादग्निपैङ्गल्यानुमाप्रसङ्गात्॥

यद्वा—इदं रूप्यज्ञानम्, शुक्तिविषयम्, तत्र प्रवृत्तिज्ञानहेतुत्वात्; शुक्तिज्ञानवदिति प्रयोगः। न चैवमपराद्धम्[न्तः]; तच्छुक्तेरपि मिथ्यारूपरूप्यत्वस्वीकरणात्॥

॥ इदं रजतमित्यत्र शुक्तेराधारमात्रत्वम्, नाधिष्ठानत्वम्; अतो न रूप्यनिरूप्यत्वानुपपत्तिरिति सिद्धान्तरहस्योद्बोधनेनाख्यातिवादिनां शुक्ते रूप्यनिरूप्यत्वायोगशङ्कानिरासः॥

---

चार इत्याह—**न हीति**॥ न च—रूप्यमात्रात्मनाऽसत्त्वं हेतुरिति – वाच्यम्; मात्रशब्दार्थस्यानुगतसामान्यातिरिक्तस्याभावात्। तदात्मनाऽसत्त्वं रूप्ये स्पष्टम्। रूप्यत्वसामान्यानधिकरणत्वमरूप्यत्वमिति चेत्, अत्रापि तदधिकरणाभावत्वं चेदसिद्धिः, तदन्यत्वतद्रूपासत्त्वविवक्षायां कान्ताकरावलम्बिरूप्ये व्यभिचार एवेत्यलम्। पुरोवर्तिव्यक्तेश्शुक्तित्वात्तद्विषयत्वं साध्यं सत्यरजतज्ञाने नास्ति, पुरोवर्तिजातिस्तु शुक्तित्वमेव, तद्विषयत्वं तु बाधितमित्येवमननुगमबाधौ विवक्षिताविल्याशङ्क्याह—**न च बाध इति**॥ चशब्दोऽननुगमोऽपि नास्तीत्येवमर्थः। कुत एतत्? अत्राह—**शुक्ताविति**॥ पुरोवर्तिरजतजातीयज्ञानमात्रं साध्यम्; अविद्याविलासरूपरूप्यस्वीकारान्न किञ्चिदवद्यमित्यर्थः॥ रूप्यार्थिप्रवृत्त्या सत्यरूप्यधीसाधनाद्विशेषणविरोधः प्रकरणसमत्वं वेत्युक्तं दूषयति—**नापीति**॥ व्यतिरेकविरहिणः साधने व्याप्यत्वासिद्धिप्रसङ्गादित्यर्थः॥

इदमिति विशेषणं सत्यरूप्यज्ञाने बाधपरिहारार्थम्। घटादिज्ञाने व्यभिचारं वारयति—**तत्र**=शुक्तौ **प्रवृत्तिहेतुत्वादि[त्वि]ति**॥ अदृष्टादौ व्यभिचारं वारयति—**ज्ञानत्वादिति**॥ रूप्यज्ञानं शुक्तिविषयमिति बाधः, अपसिद्धान्तश्चानिर्वचनीयवादिनः, अत्राह—**न चेति**॥

---

1. व्यापकस्यामातु (क)

ननु—एतदनुपपन्नम् ; प्रतिभासपराहतत्वात् , यथोक्तम्—

अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते ।
वेद्यः स एव [[1] नान्यद्धि वेद्यावेद्यस्य[स्य]लक्षणम् ॥

इदं रजतमित्यत्र रजतं चावभासते ।
तदेव तेन वेद्यं स्याद् न तु शुक्तिरवेदनात् ॥

अतोऽन्यस्यान्यथा भानं प्रतीत्यैव पराहतम् ।
परस्मिन् भासमाने हि न परं भासते यतः ॥

इति,] तदयुक्तम् ; प्रतिभासानुरूपमिथ्यारूप्यतादाम्यस्याधिष्ठानेदमंशस्याभ्युपगमात् । किञ्च , शुक्त्याकारो रूप्यत्वसम्भेदी किं प्रतीयते, सितभास्वररूपं वा, पौरस्त्यम् रजताकृति न [वा]भासते । न पौरस्त्यः पक्षोऽस्माभिरुपेयते । पश्चिमे भवतामेव प्रतिभासपराहतिः ॥

भाति रूप्यमिदंरूपसमानाधिकृतं यतः ।
सामानाधिकरण्यस्य नान्यथा वक्ष्यते गतिः ॥ ४९ ॥

॥ इदं रूप्यमित्याकारद्वयप्रतीतिपराहतो भेदाग्रह इति भेदाग्रहमात्रेण प्रवृत्तिरिति शङ्कानिरासः ॥

[2]अथ यदुक्तम्—भेदाग्रहात् प्रवृत्तिः—इति, तदयुक्तम् , इदंरूप्ययोर्भेदग्रहात् । [3]तथा हि—इदंरूप्यपदयोः पर्यायत्वम् ? अपर्यायत्वं वा ? नाद्यः ; इदं

रूप्यरूपेणापि शुक्ते रूप्यप्रतीतिगोचरत्वे प्रतीतिविरोधं चोदयति—**नन्विति** ॥ उक्तेऽर्थे **शालिकनाथ** वचनमुदाहरति—**यथोक्तमिति** ॥ **रजतं चेति** । रजतमवभासते, शुक्तिश्च नावभासत इत्यर्थः । अत इति परामृष्टं स्पष्टयति—**परस्मिन्निति** ॥ रूप्य इत्यर्थः । अधिष्ठानम् , आधारश्चेति द्वयम् । तत्राज्ञातविशेषाकारोऽधिष्ठानम् , अध्यस्तसामानाधिकरण्येन भासमानेदमंश आधारः । तत्राधारस्याध्यस्तात्मना धीसाधनान्नानुभवविरोध इति परिहरति—**तदयुक्तमिति** ॥ एवं सुहृद्भावेन तात्त्विकपरिहारमभिधाय प्रकारान्तरेण विरोधपरिहारमाह—**किञ्चेति** ॥

1. कुण्डलान्तर्गतम् क पुस्तके नास्ति । 2. पृ. 372 प. 10
3. तथहि (क)

नीलमित्यपि प्रयोगात् । द्वितीये किं प्रतिपाद्यभेदश्चकास्ति? नो वा? आद्ये कथं भेदाग्रहः? अन्त्ये कथं पर्यायपदयोः सहप्रयोगः? तस्मादपर्यायानेकपदप्रतिपाद्यतया भेदग्रहात् तदग्रहान्न प्रवृत्तिः ॥

॥ अख्यातिवादे प्रवृत्तिकारणभेदाग्रहस्य दुर्वचत्वम्, तस्य प्रवृत्तिप्रयोजकत्वाभावादावनुमानप्रयोगः, रजतांशे स्मृतिप्रमोषानुपपत्तिश्च ॥

किञ्चाग्रहोऽपि ग्रहाभावः । ग्रहस्य चात्मधर्मत्वात् तदभावोऽपि धर्मिस्वरूपं वा? तद्धीर्वा स्यात्? आद्ये सदैव प्रवृत्तिः स्यात्; आत्मनः सदा सत्त्वात् । द्वितीये भेदग्रहेऽपि तदाधारस्यात्मनः प्रकाशात् प्रवृत्तिः स्यात् । प्रतियोगिविशेषापेक्षभावमात्रधीरभाव इति चेत्, न; भावस्वरूपविषयत्वे प्रतियोगिविशेषापेक्षायोगात्, मात्रशब्दार्थानिरूपणाच्च । प्रयोगोऽपि—नेयं प्रवृत्तिः, एतच्छुक्तिरजता[1]भेदग्रहजन्या, प्रवृत्तित्वात्; घटप्रवृत्तिवदिति । एतच्छुक्तिरजतभेदाग्रहः, नैतत्प्रवृत्तिजनकः, अग्रहत्वात्; सम्प्रतिपन्नवदिति च । यदपि च—

रजते तदंशरहिता स्मृतिः—इत्युक्तम्, तदयुक्तम्, स्मृतित्वे प्रसिद्धस्मृतिवत् भ्रान्तित्वाग्रहात्, अविविक्तत्वञ्च यतो न स्यात् ॥

॥ भेदग्रहस्याननुगमान्निवर्तकत्वानुपपत्तिः ॥

---

स्वमतं प्रतिष्ठाप्य परोक्तमनूद्य दूषयितुमुपक्रमते—**अथेति** ॥ **प्रतिपाद्यभेद इति** ॥ शब्देन प्रतिपाद्यस्याभिधेयस्य भेद इत्यर्थः ॥

असाधारणाभिधेयावगममन्तरेणार्थान्तरवाचकशब्दान्तरपरिभाषणेनैतच्छब्दोपादानानुपपत्त्यादिव [भेदवे]दनस्य व्यवहारविशेषत्वात्तस्य व्यवह्रियमाणार्थधीपुरस्सरत्वादिदंरूप्ययोर्भेदो भातीत्युक्तम् । इदानीं परकीयमतपर्यालोचनयाऽऽह—**किञ्चेति** ॥ धर्मितद्धीमात्रम्, नाभावः, किन्तु जिघृक्षिते स्मर्यमाणे वा प्रतियोगिनि केवलधर्मिधीरभावः, अतो नोक्तावद्यमिति शङ्कते—**प्रतियोगीति** ॥ **मात्रशब्देति** ॥ मात्रशब्देन धर्मिस्वरूपाभिधाने भेदग्रहेऽपि प्रवृत्तिः स्यात् ।

---

1. रजताभेदा (क)

नापि भेदग्रहो निवर्तकः; अननुग[1]तत्वात्। यत्र रूप्ये शुक्तिरिति भ्रमः, तत्र 'नेदं रूप्यम्' इति भेदग्रहस्वीकारेऽन्यथाभानप्रसङ्गेन भेदग्रहाभावेऽपि निवृत्तेर्दर्शनात्, सत्यरजते भ्रान्तस्य शुक्तिशकलाद् भेदाग्रहस्य निवर्तकत्वम् अथ तत्र भेदाग्रहो निवृत्तिकारणम्" इत्यादिना [2]प्रागेव निरस्तम्;

॥ असंसर्गाग्रहस्य प्रवृत्तिप्रयोजकत्वनिरासः ॥

एतेन—असंसर्गाग्रहस्य प्रवर्तकत्वमपि तत्र तत्र पूर्वोक्तव्यभिचारैरेव निवृत्तिहेतुत्वेनान्यस्य निरूपयितुमशक्यत्वात् संसर्गाग्रहस्य निवृत्तिहेतुत्वमापाद्य पूर्ववद्युगपत् प्रवृत्तिनिवृत्ती इति चोद्यप्रसक्तेः—अपास्तम् ॥

॥ रजतविशिष्टेदंभानात् प्रवृत्तिनिर्वाहस्तु रजतत्वविशिष्टतया शुक्तीदमंशभानेऽन्यथाख्यात्यापत्तिः, वैशिष्ट्यं हि न बुद्धिधर्मः, किन्तु वस्तुधर्मः, अन्यथाऽऽत्मख्यातिप्रसङ्गात् ॥

[3]यत्पुनरीरितम्—रजत[त्व]विशिष्टेदंभानादेव समीचीनरजतेऽपि प्रवृत्तिः,

---

तद्धर्माभिधाने भाषान्तरेणाभावाभ्युपगम इति भावः। उक्ततर्कानुग्राह्यप्रमाणमाह—**प्रयोगोऽपीति** ॥

एवं भेदाग्रहस्य प्रवर्तकत्वं निरस्य, भेदग्रहस्य निवर्तकत्वं निरस्यति—**नापीति** ॥ अनिष्टभेदाग्रहस्तत्र निवर्तकः, प्रयोजकैकरूप्यासम्भवे तद्भेदकल्पनं न गौरवाय; ना[अन]न्यथासिद्धकार्यकल्प्यत्वात्, अत आह—**सत्यरजत इति** ॥ भेदाग्रहस्य प्रवर्तकत्वासिद्धावपि नान्यथाधीसिद्धिः; इदंरूप्ययोरसंसर्गाग्रहात् प्रवृत्तिसिद्धेः, अत्राह—**एतेनेति** ॥ असंसर्गाग्रहस्य प्रवर्तकत्वमपास्तमिति सम्बन्धः ॥ कुतः? तत्राह—**युगपत्प्रवृत्तीति** ॥ तदुपपादयति—**संसर्गेति** ॥ एतदेव कुतः? तत्राह—**तत्र तत्रेति** ॥ असंसर्गाग्रहस्य प्रवर्तकत्वे सत्यसंसर्गग्रहो निवर्तकः स्यात, न तत्सम्भवति; सत्यरजते "नेदं रूप्यम्" इति भ्रान्त्या निवर्तमानस्यासंसर्गग्रहस्वीकारेऽन्यथाभानप्रसङ्गादनिष्टशुक्तिशकलेन संसर्गाग्रहान्निवृत्तिरिति वाच्यम्।

---

1. मतत्वात् (क)
2. इत्यादिनो प्रागेव
3. पृ. 376 प. 10

तन्मिथ्यारजतेऽपि समानम्—इति, तद् दुराशामात्रम् ; रजतत्वजातिविशिष्टतया शुक्तीदमंशभानेऽन्यथाभानप्रसङ्गात् ॥

[1]ननु—उक्तं विशिष्टत्वं नाम [2]न वस्तुधर्मः, प्रतिपत्तिधर्मत्वात्, नान्यथाभानम्—इति, तदुक्तम् । विशिष्टं व्यावृत्तम्, व्यावृत्तिश्च दृश्ये प्रतियोगिनि धर्मिमात्राकारधीरिति वैशिष्ट्यं बुद्धिधर्मो[3]ऽभिधीयते—इति, नैतत् सम्भवति ; अभावस्य तन्मात्रत्वासम्भवस्याभिहितत्वात्, शुक्लः पट इतिवदर्थधर्मतयाऽनुभूयमानवैशिष्ट्यस्य बुद्धिधर्मत्वेन बहिरपलापे शौक्ल्याद्यपलापोऽपि स्यादिति सुगतबन्धुत्वप्रसङ्गः । [4]अथ—विशेषणं भेदकम्, विशिष्टिः भेदः । स च प्रतियोगिसाकाङ्क्षबुद्धिः, तद्विषयत्वं विशिष्टत्वमिति—मतम्, तदपि भेदस्य शौक्ल्यादिवदर्थधर्मत्वानुभवविरोधादपध्वस्तम् ॥

॥ साकाङ्क्षयोराकाराकारिणोर्निरन्तरभानेन विशेषणत्वं विशेष्यत्वं वा पूर्वोक्तविधयेति शङ्काया अख्यातिवादे परस्परसाकाङ्क्षत्वस्य दुर्वचत्वेन निरासः ॥

[5]यदप्यवादि—तयोराकाराकरिणोर्गुणप्रधानभूतयोः साकाङ्क्षयोर्नि[6]रन्तरप्रती-

---

एवं च संसर्गाग्रहान्निवृत्तिः, असंसर्गाग्रहात् प्रवृत्तिरिति प्रवृत्तिनिवृत्तियौगपद्यं स्यात् । भेदाग्रहस्य निवर्तकत्वे यथा तद्यौगपद्यम्, असंसर्गोऽपि संसर्गाभावत्वादिदंरूप्ययोः स्वरूपम्, तन्मात्रधीर्वा स्यात् ; उभयथापि प्रवृत्तिसमये निवृत्तिप्रसक्तिरित्यर्थः ॥

विशेषणविशेष्यातिरिक्तं वैशिष्ट्यं द्रव्यगुणकर्मरूपं न ज्ञाने गुणे सम्भवति । सङ्ख्यादिरूपत्वं वैशिष्ट्यस्य न शङ्कनीयम् ; तद्विलक्षणप्रतीतित्वात् । द्रव्यगुणकर्मसामान्यसमवायसङ्ख्यासादृश्यशक्तिव्यतिरिक्तपदार्थानङ्गीकारान्न वैशिष्ट्यं बुद्धिधर्मः सम्भवतीत्याह—**तदु[दयु]क्तमिति** ॥ वैशिष्ट्यस्याभावरूपतया बुद्धिरूपस्य तद्धर्मत्वोपचार इति शङ्कते—**विशिष्टमिति** ॥ **अभिधीयत इति** । चेदित्यध्याहारः । वस्त्वन्तरबुद्धिभ्यो विलक्षणबुद्धित्वं वैशिष्ट्यं बुद्धिस्तद्विषयेऽर्थे व्यवह्रियत इति, अत आह—**शुक्ल इति** ॥ वैशिष्ट्यस्य भेदरूपतया बुद्धिधर्मत्वं शङ्कते—**अथेति** ॥ **अनुभवविरोधादिति** ॥ भिन्नो घट इति भेदधर्मितयाऽनुभवविरोधात्, भेदस्य [धी]धर्मत्वस्वीकारे सिद्धान्तविरोधाच्चेत्यर्थः ॥

---

1. पृ. 376 प. 12
2. "न" इति नास्ति
3. धर्मोऽनिधीयते
4. पृ. 377 प. 4
5. पृ. 377 प. 5
6. निरस्तप्रतीतयो ;

तयोर्विशेषणत्वेन विशेष्यत्वेन [1]वाऽवस्थानम्—इति, तदपेशलम्; किं शुक्तिरजतज्ञाने परस्परसाकाङ्क्षत्वं नाम? किं रजतजातेः शुक्तिव्यक्तेश्च [2]शुक्तिव्यक्तिं रजतजातिश्चानवगम्य स्वावगमाभावः, किं वा व्यक्तिमात्रं जातिमात्रश्चानवगम्य, आहोस्वित् स्वसम्बन्धितया व्यक्तिं स्वसम्बन्धितया जातिश्चानवगम्य? इति। न प्रथमः; न हि रजतजातिशुक्तिव्यक्ती शुक्तिव्यक्तिं रजतजातिश्चानवगम्य नावगम्येते। तथा सति सत्ययोरपि शुक्तिरजतयोः परस्परानवगमेऽनवगमप्रसङ्गात्। नापि द्वितीयः; शुक्तिरजते इत्युभयालम्बनज्ञानेऽपि रजत[त्व]जातेः, शुक्तिव्यक्तेश्च व्यक्तिमात्रं जातिमात्रश्चानवगम्यावगमाभावेन परस्परसाकाङ्क्षत्वं निरन्तरभानञ्चास्तीति शुक्तावपि प्रवृत्तिप्रसङ्गात्। नापि तृतीयः; न हि रजतज्ञाने रजतजातिः शुक्तिव्यक्तिश्च स्वसम्बन्धितया व्यक्तिः[म्,] स्वसम्बन्धितया जातिश्चानवगम्य(नाव[3]गम्ये)ते भवताम्; तथासत्यन्यथाख्यातिप्रसङ्गात्॥

॥ ययोः समवायः, तयोरेव वैशिष्ट्यम्, अतो न दोष इति शङ्कायां ययोरिति षष्ठ्यर्थो न स्वस्वामिभावः॥

[1]यदप्युदितम्—ययोरेव समवायः, तावेव स्वतो विशिष्टत्वं भजेते—इति,

---

सामान्येनोक्तं विकल्पं विशदयति—**किं रजतजातेरिति**॥ रजतजातेः शुक्ति-व्यक्तिमनवगम्य स्वरूपानवगमः, शुक्तिव्यक्तेश्च रजतजातिमनवगम्य स्वावगमाभावः साकाङ्क्षार्थ[त्व]मिति विकल्पं निराकरोति—**न प्रथम इति**॥ व्यक्तिमात्रमनवगम्य रजतजातेरनवगमः, जातिमात्रमनवगम्यशुक्तिव्यक्तेरनवगम इति द्वितीयं दूषयति—**नापीति**॥

इमे शुक्तिरजते इत्युभयालम्बनैकज्ञानेऽपि रजतार्थिनः शुक्तौ प्रवृत्तिः स्यात्; साकाङ्क्षरूपरूपिनिरन्तरभानभावात्। न च—ज्ञानस्यैकत्वान्निरन्तरभावान्ना[नं ना]स्तीति—वाच्यम्; सत्यरूप्यज्ञानादप्रवृत्तिसङ्गादिति भावः। रजतजातेः स्वसम्बन्धितया व्यक्तिमनवगम्यावगमाभावः, शुक्तिव्यक्तेः स्वसम्बन्धितया जातिमनवगम्यावगमाभाव इति चरमं निरस्यति—**नापीति**॥

सम्बन्धे कर्मणि च षष्ठीविधानादिह तस्याः कोऽर्थ इति विकल्पयति—

---

1. वाऽनवस्थानमिति
2. शुक्र (क)
3. कुण्डलान्तर्गतं नास्ति।

तदसत्, ययोरिति षष्ठी किं वा सम्बन्धे? किं वा कर्मणि? प्रथमेऽपि समवायस्य समवायिभ्यां स्वस्वामिसम्बन्धः, शेषशेषिभावो वा, समवायान्तरं वा, संयोगो वा, तादात्म्यं वा? नाद्यः; तस्य चेतनविषयत्वात्। न द्वितीयः; सम्बन्धान्तरमन्तरेण शेषशेषिभावस्यातिप्रसङ्गित्वात्॥

॥ समवायस्यान्येन सम्बन्धो न शेषशेषिभावः; शेषत्वादेर्दुर्वचत्वात्,
न वा समवायसंयोगतादात्म्यानि; बाधात्॥

किञ्च, शेषत्वं शेषे शेषित्वञ्च शेषिणि। न च तयोर्नियतपदार्थवर्तिनोः सम्बन्धत्वम्, गन्धादेरपि सम्बन्धत्वप्रसङ्गात्॥

न तृतीयोऽनवस्थानात्। न तुरीयः; संयोगस्य द्रव्यमात्रवृत्तित्वात्। न पञ्चमः; अनङ्गीकारात्॥

॥ समवायस्य समवायी न कर्म, किन्त्वधिकरणम्॥

नापि कर्मणि षष्ठी, समवायिनोरधिकरणयोरकर्मत्वात्। तस्मात् समवायितया न स्वाभाविकवैशिष्ट्यसम्भवः॥

॥ समवायस्य सम्बन्धितया नियामकत्वे दूषणानि।
गवाश्वावित्यादावपि निरन्तरभानात् प्रवृत्तिप्रसङ्गश्च॥

समवायस्यापि न सम्बन्धितया नियामकत्वम्; उक्तनीत्यापिस्वरूपेण नियामकत्वे स्वरूपस्य सर्वान् प्रत्यविशेषात् सन्निहितगवाश्वादाविमौ गवाश्वा-

---

**ययोरिति षष्ठीति**॥ **अतिप्रसङ्गित्वादिति**॥ असम्बन्धित्वाविशेषात् सर्वः सर्वस्य शेषी, सर्वः सर्वस्य शेष इति प्रसङ्गादित्यर्थः। **गन्धादेरपीति**॥ नियतपदार्थवर्तिनः सम्बन्धत्वे गन्धादेरपि सम्बन्धतम[त्व]सम्भवात् समवायासिद्धिरित्यर्थः॥

**अधिकरणयोरिति**॥ परसमवेतक्रियाफलशालित्वं कर्मत्वमाधारे नास्तीत्यर्थः। समवायस्वभावोऽसाविति यदुक्तम्[1], तद् दूषयति— **समवायस्यापीति**॥ समवायः समवायिनौ नियमयंस्तत्सम्बन्धवत्तया नियमयति, स्वरूपेणैव वा। नाद्यः;

---

1. पृ. 377 प. 6

विमे शुक्तिरजते इत्यादौ गोत्वस्याश्वव्यक्त्या, अश्वत्वस्य गोव्यक्त्या[च] विशेषण-विशेष्यभावप्रसक्तौ निरन्तरभानाच्च गवार्थिनोऽश्वादावपि प्रवृत्तिः स्यात् ॥

॥ विशिष्टान्तरप्रतीतेर्निवृत्तिप्रयोजकत्वनिरासः ॥

[1]यत्तूक्तम्—विशिष्टप्रतीतिप्रहाणेन विशिष्टान्तरप्रत्यये च निवृत्तिर्भवति, तत्रैव बाधकव्यवहारोऽपि—इति, तद[प्य]युक्तम्; पूर्वतनविशिष्टप्रत्ययस्य यथार्थत्वे बाध्यत्वानुपपत्तावुत्तरविशिष्टप्रत्ययस्य बाधकत्वानुपपत्तेः। [2]यदपि—बाधानर्हसाकाङ्क्षरूपरूपिविशिष्टप्रत्ययस्य समवायलिङ्गत्वमुक्तम्, तदप्ययुक्तम्; बाधानर्हत्वस्य प्रतीतिसमये दुरवधारणतया समवायानुमानायोगात् ॥

॥ अपर्यवसिताकारे द्रव्य आकारान्तरभानविवक्षायामन्यथाख्यातिः,
पुरोवर्तिन आकारित्वानुपपत्तिश्च ॥

[3]यच्चावाचि—आकाराकारिणोरिदमेव सामानाधिकरण्यं यदाकारेऽपर्यवसिते द्रव्य एवाकारबुद्धिविषयत्वम्—इति, तत्र किमाकारबुद्धिविषयत्व पुरोवर्तिद्रव्ये? द्रव्यमात्रे वा? आद्ये स्पष्टमन्यथा भानम्, द्वितीये त्विदं सितं रूप्यमित्यङ्गुल्या निर्दिश्य पुरोवर्तिद्रव्यस्याकारित्वानुभवविरोधः। किञ्च रजतनिरूप्य[त्व]स्य पुरोवर्तिन्यसत्त्वात् तद्भानमन्यथा भानं स्यात् ॥

॥ निरूप्यत्वं वस्तुधर्मः, न निरूपणधर्मः, तेनेदं रजतमिति
रजतनिरूप्यत्वेन भ्रमनिर्वाहः ॥

---

समवायस्य समवायिभ्यां स्वस्वामिभावादिसम्बन्धाभावस्याभिहितत्वात्, इति स्वरूपेणैव नियामकत्वे वाच्ये स्यादतिप्रसङ्ग इत्याह—**इहेति** ॥ **स्वरूपेणेति** ॥

इदं रूप्यमिति विशिष्टप्रत्ययस्यायथार्थत्वम्, यथार्थत्वं वा। आद्येऽपराद्धान्तः। द्वितीये सत्येदंरूप्यज्ञानप[व]द्बाध्यत्वमित्याह—**पूर्वतनेति** ॥ बाधानर्हत्वं प्रतीतिसमये, समयान्तरे वा। प्रथमे शुक्तिरूप्यज्ञानस्यापि समवायलिङ्गत्वप्रसङ्ग इत्याह—**तदप्ययुक्तमिति** ॥ द्वितीयं विशेषणासिद्ध्या निषेधति—**बाधानर्हेति** ॥

**स्पष्टमिति** ॥ रजतत्वरूपवत्तया पुरोवर्तिशुक्तिद्रव्यस्य प्रतीतेः, आकारमात्रवत्तया पुरोवर्तिप्रतीतौ रजतार्थिप्रवृत्त्यनुपपत्तेरित्यर्थः ॥

---

1. पृ. 378 प. 4
2. पृ. 378 प. 6
3. पृ. 379 प. 2

[1]ननु—तर्हि निरूप्यत्वं नाम निरूपणधर्मः, सहप्रतीतावित्यत्र सहत्ववदित्युक्तमिति—चेत्, न; निरूप्यत्वं हि निरूपणविषयत्वम्। न च तद् ज्ञानस्य सम्भवति; स्वसंवेदनताभङ्गप्रसङ्गात्, सहप्रतीतावित्यत्रापि साहित्यं ज्ञानविषयार्थगतमिति दृष्टान्ते[2] साध्याभावात्॥

॥ आकारेणाकारिणो न निरूप्यत्वम्, अतः सामानाधिकरण्यनिर्वाहोऽनिर्वचनीयख्यात्यैव॥

[3]यदपि—वस्तुधर्मत्वेऽप्याकार्यन्तरस्याकारान्तरनिरूपकत्वदर्शनादाकार्याकारमात्रधर्मोऽयं निश्चीयते—इत्युक्तम्, तदयुक्तम्; गोत्वेनाकारेणाकारिणोऽश्वस्य निरूपणादर्शनाद् आकार्यन्तरमात्रधर्मत्वानुपपत्तौ, ययोः सामानाधिकरण्यम्, तयोरेव निरूप्यनिरूपकभावे रूप्याकारेण पुरोवर्तिनो निरूप्यत्वमसदेव भातीति विपरीतभानस्यावर्जनीयत्वात्॥

॥ परविशेषणत्वेन परविशेष्यत्वेन चागृहीतभेदज्ञानद्वयेन निर्वाहनिरासः॥

[4]यत्त्विदं गदितम्—परविशेषणत्वेन परविशेष्यत्वेन वाऽगृहीतभेदयोरित्यादि—एवमन्यथासिद्धिरस्तु—इत्यन्तम्, तदपि समवायस्य समवायिभ्यां संसर्गनिराकरणेन समवायिनोरेव विशिष्टत्वमिति वक्तुमशक्यतया गवाश्वावित्यादौ निरन्तरभाने गवार्थिनोऽश्वादौ प्रवृत्तिप्रसङ्गेनापाकरणीयम्॥

[5]यदपि—विशिष्टप्रत्ययावगमस्य विशिष्टप्रत्ययान्तरोदयस्य वा सान्तरालप्रतिपत्तित्वम्—उदितम्, तदपि स्थवीयः; अर्थगतवैशिष्ट्याभावे बुद्धिगतवैशिष्ट्यासम्भवस्याभिहितत्वात्॥

॥ अख्यातिवादेऽन्वयबोधासम्भवाच्छब्दप्रामाण्योच्छेदापत्तिः॥

[6]यदप्यभ्यधायि—दोषाभावे सम्यग्ज्ञानानुमानवत् प्रवृत्तितो विशिष्टज्ञान-

---

**गोत्वेनाकारेणेति॥** निरूप्यनिरूपकभावस्याकाराकारिमात्रधर्मत्वे गोत्वेनाश्वस्य निरूपणप्रसङ्गः, तदभावात् [स]समानाधिकृततया प्रतीयमानयोरेवेति वाच्यम्। एवञ्चान्यथा भानमिति भावः॥

---

1. पृ. 380 प. 4 2. दृष्टान्तेऽपि 3. पृ. 380 प. 5
4. पृ. 380 प. 6 5. पृ. 381 प. 1 6. पृ. 381 प. 5

मेवानुमीयते, इत्यन्वयज्ञानानुमानाद् शब्दप्रमाणसम्भवः—इति, तदप्यभद्रम् ; यतो दोषादसमीचीनज्ञानस्वीकारे तदभावे समीचीनज्ञानानुमानं स्यात्, दोषात् सत एव भेदस्याग्रहे तदभावे पुनरसत एव भेदस्याग्रहानुमानं स्यात्। ततश्चासतो भेदस्य, असंसर्गस्य वाऽग्रहात् समीचीनप्रवृत्तिः, सत एव भेदस्यासंसर्गस्य वा ग्रहादसमीचीनप्रवृत्तिरिति संसर्गधीमात्रस्य प्रवृत्तिहेतुत्वासिद्धौ वृद्धव्यवहारे तामनुमायान्विते शक्तिग्रहणायोगाच्छब्दप्रामाण्यमख्यातिवादिनो दत्तजलाञ्जलि स्यात् ॥

॥ मिथ्यासम्यग्रजतज्ञानयोः सिद्धान्ते विषयैक्यस्य मिथ्याज्ञानहेतोश्च निर्वाहः, इत्यख्यातिवादनिरासेनानिर्वचनीयख्यातिसमर्थनोपसंहारः अन्यथाख्यातिवादोपक्षेपश्च ॥

[1]यत्त्विदं गदितम्—न च सम्यग्रजतज्ञाने विषयैक्यमस्ति—इति, तदसत् ; अस्मन्मते मिथ्यारजततादात्म्यमस्तीत्युक्तत्वात्। नापि—अभेदप्रतिभासवद् भेदप्रतिभासस्यापि तदैव विद्यमानत्वाद् युगपत् प्रवृत्तिनिवृत्ती स्यातामिति—युक्तम् ; यतो न भेदग्रहस्य निवर्तकत्वम्, सत्यरजते भ्रान्तस्य निवृत्तावव्यापकत्वादित्युक्तम्। नापि मिथ्याधियः कारणाभावः ; दुष्टज्ञानहेतूनां तत्त्वात्। न च समीचीनज्ञानहेतोरसमीचीनहेतुत्वमनुपपन्नम् ; भवन्मतेऽपि भेदाग्रहस्य समीचीनप्रवृत्तिहेतोर्दोषे सति मिथ्याप्रवृत्तिहेतुत्वात्। तस्मादस्ति धीरयथार्था, इति लोकसिद्धेऽपि [प्य]यथार्थत्वे दुर्निवाराऽन्यथामतिरिति स्थितम् ॥

---

स्वपरपक्षयोर्वैषम्यादिति हेतुमाह—**यत इति** ॥ दोषस्य मिथ्याधीजनकत्वे दोषाभावे तत्कार्यमिथ्यज्ञानाभावनिश्चयात् समीचीनं ज्ञानमित्यनुमानं सम्भवति। दोषात् सतो भेदस्याग्रहे[हः,] दोषाभावे त्वसत एव भेदस्याग्रहानुमानं स्यात्, अख्यातिमते प्रवर्तकैकरूप्यसिद्ध्यर्थमसतो भेदस्याग्रहस्यत[स्त] त्रेष्टः स्यादित्यर्थः। परमार्थस्थलेऽप्यसतो भेदा[दस्या]ग्रहस्य प्रवर्तकत्वेऽपि संसर्गज्ञानसत्त्वाद् वृद्धव्यवहारे तदनुमानं किं न स्यात्, अत्राह—**ततश्चेति** ॥ प्रवृत्त्या कार्यलिङ्गेन तदकारणसंसर्गज्ञानानुमानायोगादित्यर्थः ॥

**अव्यापकत्वादिति** ॥ भेदग्रहस्याव्यापकस्य निवृत्तिकारणत्वाभावात् सत्यपि तस्मिन्निवृत्तिप्रसङ्गचोद्यस्यायुक्तत्वादित्यर्थः। उत्तरवादिप्रसङ्गं कुर्वन्नख्यातिनिराकरणं निगमयति—**तस्मादिति** ॥

---

1. पृ. 382 प. 1

॥ भेदाग्रहस्य प्रवृत्तिकारणत्वाभावेऽख्यात्यसत्ख्यात्यात्मख्यात्यनिर्वचनीयख्यातीनां मध्येऽन्यथाख्यातिपक्षस्यैव सम्भवः ॥

ननु—अन्यथामतिप्रसिद्धावन्यथाख्यातिरेव स्यात्, नानिर्वचनीयख्यातिः। तथाऽऽह सो द य नः किरणावल्याम्—इह विभ्रमे प्रवृत्तिनिवृत्तियोग्योऽर्थः परिस्फुरतीत्यनुभवसिद्धम्। न चासतोऽसत्तया स्फुरणे प्रवृत्तिरस्ति। न ह्यसदिदं रजतमित्यवगम्य रजतार्थी प्रवर्तत इति सम्भवति। एवं ज्ञानाकारप्रवेदनेऽपि प्रवृत्त्यनुपपत्तिः। न हि ([1]ज्ञानात्मनो रजतस्य बहिर्व्यवहारसामर्थ्यमस्ति। न चासमर्थस्य, अनवगतसामर्थ्यस्य वा प्रवृत्तिविषयत्वम् ॥

ततोऽसतः सत्त्वेन, असमर्थस्य समर्थत्वेन वाऽवभासनं) तद्भेदाग्रहो वेति द्वयमेवावशिष्यते। विचारासहलक्षणानिर्वचनख्यातावपि तथा। न हि विचारासहमेतद्रजतमित्यवधार्य कश्चित् प्रवर्तते। तस्मात् तत्रापि विचारासहत्वेनावभासनं तद्भेदाग्रहो वेति द्वयमेवावशिष्यते। तत्र प्रथमे विपरीतख्यातिपक्षपात एव। द्वितीये तु चिन्त्यते

---

अत्र प्राप्तावसरोऽन्यथाख्यातिवादी प्रत्यवतिष्ठते—**नन्विति** ॥ **प्रवृत्ति-[निवृत्ति]योग्य इति** ॥ अन्यथा प्रवृत्तिनिवृत्त्योर्भ्रमबाधकालेऽनुपपत्तेरित्यर्थः। परिशेषादन्यथामतिमापादयितुं प्रसक्तप्रतिषेधमारभते। तत्रासत एव रूप्यस्यासत्प्रकाशनशक्तिरूपाविद्यया प्रतीतिरित्याशङ्क्याह—**न चेति** ॥ असदसत्तया भाति, सत्त्वेन वा। नाद्यो निरवद्य इत्यर्थः। धीरूप्यं[पं] तर्हि रूप्यं प्रतीयमानं प्रवृत्तियोग्यं स्यात्, इति नान्यथामतिसिद्धिः, अत्राह—**एवमिति** ॥ धीरूपमपि धीरूपतया प्रतीयते, बहिष्ठतया वा। आद्ये बहिः प्रवृत्तिर्न स्यादित्यर्थः। आन्तररूप्यस्य बाह्यप्रवृत्तिसामर्थ्यविरहिणोऽपि स्वरूपप्रवृत्त्या प्रवर्तकत्वम्, अत आह—**न चेति** ॥ व्याघातादित्यर्थः। **अनवगतसामर्थ्यस्येति** दृष्टान्ततयोपादानम्। अतः सत्तया ज्ञानाकारस्य बहिरसमर्थस्य बहिः समर्थतया प्रवेदनमिति मतद्वयेऽपि परिशिष्टकल्पमख्यातिमतेन सह परिशेषयन्नाह—**तत इति** ॥

तथाप्यनिर्वचनीयरूप्यप्रतीत्या प्रवृत्तिः, अत्राह—**विचारेति** ॥ **तथेति** ॥ अनिर्वचनीयस्यानिर्वचनीयतया प्रतीतावप्रवृत्तिरित्यर्थः। **तत्रापि** = अनिर्वचनीय-

---

1. कुण्डलान्तर्गतं नास्ति। "न हि ज्ञानं तद्भेदाग्रहोवे"ति वर्तते

—अन्यज्ञानादन्यत्र प्रवृत्तावतिप्रसङ्गे कः प्रतीकार इत्यादिना। भेदाग्रहस्य तेनैव प्रतिक्षिप्तत्वाद्विपरीतख्यातिपक्षः परिशिष्यत इति ॥

॥ असत्ख्यातिवादेनान्यथाख्यातिपक्षस्याक्षेपः ; तत्रासतः संसर्गस्य भानाभ्युपगमात् तद्वदेव रजतस्याप्यसत एव भानाविरोधादिति ॥

नैतत् सारम् ; तथा हि—भ्रान्तौ यद्रूप्यं भाति, तत्किमन्यत्र सत् ? उतात्रैव ? आद्येऽपि किमन्यत्रास्तीति भाति ? किं वाऽत्रास्तीति ? प्रथमे[1] न भ्रान्तिबाधौ। नापि पुरोवर्तिनि रजतार्थिप्रवृत्तिः स्यात्। द्वितीये त्वसत्ख्यातिः, नान्यथाख्यातिः। रूप्यस्य स्वरूपेणान्यत्र सत्त्वान्नासत्ख्यातिरिति चेत्, न; रूप्ये[प्यस्ये]दंरूप्य संसर्गस्य वाऽन्यत्रासत एव ख्यातिबाधसम्भवात्। नान्यत्र सत्ता ; प्रमाणाभावात्। इदंरूप्ययोः संसर्गस्ताभ्यामभिन्नश्चेत्, सन्नेवेति न भ्रमबाधौ। भिन्नश्चेत्, तस्याप्यस्तित्वे भ्रमबाधासम्भवः। नास्तित्वे नासत्ख्यातिविमोक्षः। असत्ख्यातिरपि नैता-

---

पक्षेऽपि। **तद्भेदाग्रहो वेति** ॥ अनिर्वचनीयस्य निर्वचनीयाद् भेदाग्रहोऽत्र प्रवृत्तौ कारणमवशिष्यत इत्यर्थः। तथापि कुतोऽन्यथामतिः ? अत्राह—**तत्रेति** ॥ **प्रथम इति**। भेदाग्रहापेक्षया आद्ये पक्षेऽसतः सत्तया, ज्ञानाकारस्य बहिः, [असमर्थस्य] समर्थतया, विचारासहस्य विचारसहतया प्रतीतावित्यर्थः ॥

एवमपीदंरूप्ययोर्भेदाग्रहाद् उभयसिद्धात् प्रवृत्त्युपपत्तौ कुतोऽन्यथाख्यातिपरिशेषः ? तत्राह—**द्वितीये त्विति**। **तेनैवेति** ॥ अतिप्रसङ्ग ए[ङ्गेनै]वेत्यर्थः। **असत्ख्यातिरिति** ॥ अत्रासत एव ख्यानादित्यर्थः। सर्वथैवासतः ख्यातिः=असत्ख्यातिः, अस्य पुनः स्वरूपेण सत्त्वान्नासत्ख्यातिरित्याह—**रूप्यस्येति** ॥ **नेति** ॥ विमतम्, नान्यत्र सत्, भ्रमविषयत्वात्; शुक्तिरूप्यसंसर्गवदिति परिहरति—**नेति** ॥ संसर्गमात्रासत्त्वेन भ्रमबाधोपपत्तौ संसर्गिस्वरूपासत्त्वकल्पनागौरवविरोधः, अत्राह—**इदंरूप्येति** ॥ सदुपश्लिष्टमर्यादमसत्ख्यातिस्वीकारादिष्टापत्तिरित्याह—**असत्ख्यातिरिति** ॥

संसर्गस्यान्यत्रासतो भ्रान्तिगोचरत्वे रूप्यस्यापि तदुपपत्तौ सदुपश्लिष्टमेवेति नियमोऽपि न सिद्ध्येत्, वन्ध्यासुताच्छशशृङ्गमन्यदित्यादिप्रतिभासे व्यभिचारादिति

---

1. प्रथमे भ्रान्ति (क)

दृशी ; दूषणम[स्या]भ्युपगमादिति चेत् , न ; निरुपाख्यरूप्येदंसंसर्गस्य भाने तद्वदेव रूप्यस्याप्यसतो भ्रमबाधसम्भवेनान्यत्र सत्त्वासिद्धावनिष्टपर्यवसानस्योक्तत्वात् । अत्रैवास्तित्वे भ्रमबाधासम्भवः, अपराद्धान्तश्च ॥

॥ अन्याकारेऽनुभूयमानेऽन्याकारकल्पनं प्रतीतिविरुद्धम् , अतोऽपि नान्यथाख्यातिः, कारणाभावाच्च । अतः साकारवाद एव युक्त इति सौगतानां शङ्का ॥

किञ्चान्यथाख्यातौ प्रतीतिविरोधो दुष्परिहरः—'रूप्यं भाति' 'शुक्तिकागोचरः' इति[1] । तिरोहितनिजाकारपौरस्त्यसितभास्वरद्रव्यं रूप्याकाररूषितं चकास्तीति न प्रतीतिविरोध इति चेत् , नैतत् ; पौरस्त्यस्य प्रतीयमानरूप्याकारत्वमस्ति वा ? नो वा ? अस्ति चेत् , भ्रमाद्यसम्भवः । नो चेत् , रूप्यप्रतीतेररूप्यं गोचर इति वदतः कथं प्रतीतिविरोधो न स्यात् ? अन्यथाख्यातेः कारणासम्भवाच्चासम्भवः ॥

॥ दोषस्य ज्ञानजनकत्वे गुणत्वापत्त्या भ्रमासिद्धिः, अतः कारणाभावतादवस्थ्यम् ॥

यत्पुनरुच्यते -

उत्पत्तिरिन्द्रियादस्याः कामिलादिकलङ्कितात् ।
लिङ्गाभासादितः कापि विभ्रान्तिरुपजायते ॥

---

परिहरति—**नेति** ॥ रूप्यमन्यत्र सदिति कल्पं निरस्यात्रैव सदिति कल्पं निराकुरुते —**अत्रैवेति** ॥ अन्यत्र सत्त्वं प्रमाणाभावेन निरस्यान्याकारेऽनुभूयमानेऽन्याकारालम्बनत्वकल्पनं प्रमाणविरुद्धमित्याह—**किञ्चेति** ॥ रूप्यप्रतीतेः शुक्तिकाकारालम्बनत्वे प्रतीतिविरोधः ? सितभास्वरद्रव्यमात्रालम्बनत्वे वा ? नाद्यः ; अनभ्युपगमात् , नेतरः ; प्रतीत्यनुसारित्वादित्याह—**तिरोहितेति** ॥

कारणाभावममृष्यमाणस्य **न्या य मु क्ता व ली कारस्य** मतमुत्थापयति—**यत्पुनरिति** ॥ **लिङ्गाभावासादित** इति वाक्याभासादिसङ्ग्रहः । कारणाभावेनानुपपत्तिमुक्त्वा, इदानीमेवं ज्ञानाकारप्रवेदनेऽपि प्रवृत्त्यनुपपत्तिरिति स्वोक्तिपराहत्यप-

---

1. इति रोहित (क)

इति, तदपि न चारु ; यतो दोषस्य ज्ञानजनकत्वे चक्षुरादिवद् गुणत्वमेव स्यात्, गुणत्वे च तदधीनं प्रमाणमेव स्यात् ॥

॥ यथाप्रतिभासमर्थाकारानभ्युपगमे निरालम्बनवादापत्तिः, इति ज्ञानाकारवादिनामन्यथाख्यात्यनिर्वचनीयख्यात्योराक्षेपः ॥

किञ्च कथं यथाप्रतिभासमर्थाकारापह्नवे साकारवेदनवादो न भवेत् ? उक्तं हि—

"विपरीतख्यातिपक्षे ज्ञानं साकारमापतेत् ।"

इति ॥

॥ रजतस्य ज्ञानाकारत्वे व्यवहारानुपपत्तिशङ्कापरिहारौ ॥

ननु—तर्हि तदाकारेण [णा] सन्तमर्थं तथा गोचरयतीति स्वयं तदाकारं भवेत्, अन्यथा तदाकारेणा सन्तमर्थं तथा गोचरीकुर्वन् व्यवहारोऽपि तदाकारः स्यादिति —चेत्, तदप्यनुचितम् ; साक्षाद्भासमानाकारस्य बहिरपलापे गत्यन्तराभावेनावश्यं प्रतीतावुपगन्तव्यत्वात् । व्यवहारस्यार्थान्तरतापातोऽपि भवत एव, न पुनरस्माकम् । यथाप्रतिभासव्यवहारमर्थाभ्युपगमाद् मायामयरूप्यस्य सत्त्वेन प्रतिभासेन विपरीतख्यातिप्रसक्तिः स्वावसरे निरसिष्यते । अतः परं यद् आशङ्कान्तरम्, तत्—

---

त्योष्ट्रलगुडन्यायापात इत्याह—**किञ्चेति** ॥ अत्र **नाथवचनं** प्रमाणयति —**उक्तं हीति** ॥

प्रतीयमानसदाकारस्य प्रतीतिरूपत्वाभावान्न साकारवाद इति चोदयति— **नन्विति** ॥ **तदाकारेणासन्तमिति** ॥ इदंरूपेणाविद्यमानम् । तथा गोचरयतः, तदाकारत्वाभावं प्रतिबन्द्या द्रढयति—**अन्यथेति** ॥ विकल्पप्रत्ययस्य वस्तुशून्यत्वेऽपि साक्षात्कारिज्ञानस्य तदनुपपत्तेः पौरस्त्यस्य रजताकृतित्वं प्रतीतिगतमवश्योपेयमिति परिहरति—**तदपीति** ॥ प्रतिबन्दीमुन्मोचयति—**व्यवहारस्येति** ॥ विचारासहस्य तत्सहत्वेन प्रतीतौ विपरीतख्यातिरिति यदुक्तम्, तत्राह—**मायेति** ॥ विमतम्, क्वचिदस्ति, संसर्गान्यत्वे सत्यपरोक्षत्वात् ; अपरोक्षव्यवहारगोचरत्वाद्वा ; घटवत्, इत्याशङ्क्याह— **अतः परमिति** ॥ भ्रान्तिगोचरस्यान्यत्वानङ्गीकाराद्विशेषणासिद्धिरित्याशयः ॥

"सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधकौ ।"
इत्याचार्यवचनोदाहरणमात्रेण निराकरणीयम् ॥

॥ विपरीतं मयाऽवगतमिति प्रसिद्धान्यथाऽनुपपत्त्याऽन्यथाख्यातिरिति शङ्कानिरासः ॥

यदपि—[1]बो[बौ]द्धा[धि]कारेऽन्यथाख्यातिसमर्थनं विपरीतमवगतं मयेति लौकिकी प्रतिपत्तिः, अन्यथाख्यातिरिति च वैनयिकी यथार्था? न वा? उभयथाप्युत्तरणे न सर्वयाथार्थ्यसिद्धिः—इति, तत्र विपरीतपदार्थस्यान्यथापदार्थस्य सत्त्वमसत्त्वं वेति विकल्प्य 'सत्त्वे न भ्रान्तिबाधौ स्तामि'त्यादि पठितव्यम् ॥

॥ अन्यथाख्यातौ लो च ना नुमानस्य विशेषणाप्रसिद्धिख्यातिबाधप्रसङ्गादिना दूषणम् ॥

प्रमाणाभावाच्च नान्यथाख्यातिः । विप्रतिपन्ना प्रवृत्तिः, एतद्रजतस्मरणैतत्पुरोवर्तिग्रहणातिरिक्तजन्यज्ञानजन्या, प्रवृत्तित्वात्; अन्यप्रवृत्तिवदिति लो च ना नुमानं मानमिति चेत्, न; अन्यथाख्यातिपक्षे रजतस्मरणाभावादेतद्रजतस्मरणातिरिक्तविशेषणस्याप्रसिद्धत्वात्, एतद्ग्रहणातिरिक्तजन्यज्ञानजन्यत्वसाधने प्रा भा क रा भिमतरजतस्मरणेनार्थान्तरत्वात् । न च वाच्यम्—अन्यथाख्यातिवादिनापि रजत-

---

**वैनयिकीति** ॥ विशेषेण नयो न्यायो विनयः, तत्र भवा वैनयिकाः, तेषामियं वैनायिकी = परीक्षकप्रसिद्धिरित्यर्थः । **उभयथेति** ॥ यथार्था सेत्युत्तरे तद्विषयत्वेनायथार्थप्रत्ययसिद्धेः, अयथार्थेत्युत्तरे तस्या एवायथार्थत्वादित्यर्थः । विपरीतमन्यथेति तद्बाध्यत्वमुच्यते, न पुनः प्रतीयमानाकारस्य रूपान्तरमित्याशयेन परिहरति—**तत्रेति** ॥

विप्रतिपन्नेति विशेषणं दृष्टान्तभागे सिद्धसाधनत्वपरिहारार्थम् । **ज्ञानजन्ये**त्युक्ते नित्येश्वरज्ञानसिद्ध्याऽर्थान्तरम्, अत उक्तम्—**जन्येति** ॥ इदमंशग्रहणेन रजतस्मरणेन चाख्यातिवादिनं प्रति सिद्धसाधनत्वं वारयितुमुक्तम्—**एतद्रजतस्मरणैतत्पुरोवर्तिग्रहणातिरिक्तेति** ॥ अप्रसिद्धविशेषणः पक्षः, दृष्टान्तश्च साध्य-

---

1. बोधाधिकारे

स्मरणमङ्गीकर्तव्यम् ; स्मर्यमाणस्यैवारोपात्—इति ; रजतस्मरणस्य रजतविपर्ययकारणत्वानङ्गीकारात्, रजतसंस्कारादेव तदुपपत्तेः, "संस्काराच्चाविद्ये"ति कणादसूत्रात्, अभिप्रेताप्रमात्वविरुद्धप्रमात्वसाधकत्वेन विशेषविरोधाच्च, प्रवृत्तित्वस्यैतद्रजतस्मरणैतद्ग्रहणातिरिक्तजन्यप्रमाजन्यत्वेनैव व्याप्तेरपसिद्धान्ताच्च, एतद्ग्रहणस्य विपर्ययत्वाभ्युपगमाद् बाधाच्च, एतद्ग्रहणजन्यैतत्प्रवृत्तिजनकज्ञानस्य योग्यानुपलम्भनिरस्तत्वात्, एतत्प्रवृत्तेश्चैतस्मादेवोपपत्तेः ॥

॥ अन्यथाख्यातिसाधकवादीन्द्रानुमानस्य सिद्धसाधनादिना निरासः ;
रजतप्रवृत्तिजनकत्वमिदंज्ञानस्य मायामयरजतविषयकत्वेन
निर्वहतीत्यादिप्रकारेण ॥

एतत्प्रवृत्तिजनकं, ज्ञानम्, पुरोवर्तिविषयम्, पुरोवर्तिनि रजतप्रवृत्तिजनकत्वात् ; सम्मतवदित्यपि न ; एतत्प्रवृत्तिजनकेश्वरज्ञानधर्मित्वे भवतां सिद्धसाधनात्, अस्माकमर्थान्तरात्, एतत्प्रवृत्तिजनकपुरोवर्तिविषयास्मदादिज्ञानधर्मित्वेऽपि सिद्धसाधनात्,

---

विकल इत्याह—**नेति** ॥ रजतस्मरणस्य तदारोपाकारणत्वेऽननुभूतरजतानामपि तदारोपप्रसङ्गः, अत्राह—**संस्कारादिति** ॥ यतः संस्कारात् स्मृतिरुच्यते, तत एव भ्रमसंभवे परमर्षिवचनमुदाहरति—**संस्काराच्चेति** ॥ विमता प्रवृत्तिः, एतद्रजतस्मरणैतत्पुरोवर्तिग्रहणातिरिक्तजन्यप्रमाणजन्या, प्रवृत्तित्वात् ; अन्यप्रवृत्तिवदिति ज्ञानविशेषसाधकेन तत्सामान्यसाधकस्य बाध इत्याह—**अभिप्रेतेति** ॥ हेतुमाह—**प्रवृत्तित्वस्येति** ॥ प्रमाणत्वं यथार्थज्ञानत्वं विवक्षितम्, अतोऽभिमतस्मृतिपुरस्सरप्रवृत्तौ न व्यभिचारः । योग्यानुपलम्भे विरुद्धकालात्ययापदिष्टत्वमाह—**बाधाच्चेति** ॥ तदुपपादयति—**एतद्ग्रहणेति** ॥ न च—एतत् सर्वं विशेषविरोधापादकानुमाने तुल्यमिति—वाच्यम् ; तस्य प्रसङ्गमात्रत्वात्, बाधितस्यैव प्रसञ्जनीयत्वात्, अन्यथा पर्वतस्यानग्नित्वेऽधूमवत्त्वप्रसङ्ग[ा]योगात् । न च विपक्षे बाधकमस्ति ; प्रवृत्तेरिदमंशज्ञानविशेषादुपपत्तेरित्याह—**प्रवृत्तेश्चेति** ॥

वादीन्द्रानुमानमाशङ्क्य निषेधति—**एतत्प्रवृत्तिजनकमिति** ॥ **पुरोवर्तिविषयमिति** ॥ पुरोवर्तिरजताकारविषयमित्यर्थः । ज्ञानमात्रस्य पक्षत्वे घटादिज्ञाने बाधः, अत उक्तम्—**एतत्प्रवृत्तिजनकेति** ॥ एतत्प्रवृत्तिजनकेच्छाव्यावृत्त्यर्थमुक्तम्—**ज्ञानमिति** ॥ अन्यत्र सद्विषयत्वेन सिद्धसाधनत्वं प्राभाकरं प्रति स्यात्, वेदान्तिनं प्रति तेनार्थान्तरत्वम्, अत उक्तम्—**पुरोवर्तीति** ॥ पुरोवर्तिसत्ताद्याकारविषयत्वे-

मायामयपुरोवर्तिरजतविषयकत्वावगमात् । इदं रजतज्ञानम्, शुक्तिविषयशुक्तिप्रवृत्ति जनकम्, ज्ञानत्वात्; शुक्तिज्ञानवदिति चेत्, न; रजतज्ञानं शुक्तिविषयमिति व्याघातात् ॥

॥ इदं रजतमिति ज्ञानस्य रजतात्मना शुक्तिविषयत्वे दृष्टान्ते
साध्यवैकल्यम्, एकत्वे रूप्यांशेऽपि याथार्थ्यापत्तिरित्यादि-
प्रकारेणान्यथाख्यातिनिरासः, प्रमात्वाप्रमात्वयोः संकरश्च ॥

रजतज्ञानमित्युक्त्यैव तदविषयत्वप्रतीतेस्तदात्मना शुक्तिविषयत्वं विवक्षितमिति चेत्, न; दृष्टान्ते साध्यवैकल्यात् । इदं रजतज्ञानम्, एतच्छुक्तिविषयम्, एतद्विषयप्रवृत्तिजनकज्ञानत्वात्; एतच्छुक्तिज्ञानवत् । इदं रजतज्ञानम्, शुक्तिविषयम्, एतत्प्रवृत्तिजनकमज्ज्ञानत्वात्; इदमिति ज्ञानवदित्यनुमानद्वयमपि प्रागुदीरितदूषणग्रस्तम् इदं रजतज्ञानम्, एतस्मादिदमिति ज्ञानान्न भिद्यते, एतत्प्रवृत्तिजनककार्यज्ञानत्वात्,

---

ऽपि नान्यथाख्यातिः स्फुटा स्यात्; सत्ताद्याकारस्य सर्ववस्तुसाधारणत्वात्, अतो रजताकारविशेषणम् । **अस्माकमर्थान्तरादिति** ॥

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥

इत्यादिस्मृतिसिद्धमीश्वरज्ञानस्य सर्वपुरुषप्रवृत्तिहेतुत्वम्; अज्ञस्य प्रेरकत्वायोगात् तस्यैतद्विषयत्वमाक्षिप्यानुमानपर्यवसानादित्यर्थः । सिद्धस्य साध्यत्वाभावात् तद्विशिष्टस्यापक्षत्वात् सिद्धसाधनं पक्षधर्मत्वविरहादसिद्ध[द्धि]भेद इति मत्वाह—**सिद्धसाधनादिति** ॥ घटादिज्ञानेऽदृष्टादौ च व्यभिचारवारणाय शुक्तिविषयप्रवृत्तिजनकज्ञानत्वादिति हेतुविशेषणम् । ईश्वरो न कर्तेतिवद् व्याहतमिति दूषयति—**नेति** । पूर्वं सामान्येन रूप्यभ्रमस्य शुक्तिविषयत्वानुमानं निरस्तम्, संप्रति रूप्यप्रतीतिविशेषस्य शुक्तिविशेषविषयत्वानुमानमपाकरोति—**इदं रजतज्ञानमेतच्छुक्तिविषयमिति** ॥ **प्रागुदीरितेति** ॥ रूप्यज्ञानं शुक्तिविषयमिति व्याघातात् रूप्यरूपेण शुक्तिविषयत्वे दृष्टान्ते साध्यवैकल्यादित्यर्थः । **इदमिति ज्ञानान्न भिद्यत इति** ॥ घटादीदंज्ञानान्न भिद्यत इति भागे बाधपरिहारायोक्तम्—**एतस्मादिति** ॥ **मज्ज्ञानत्वादिति** विशेषणमीश्वर-

एतत्प्रवृत्तिजनकमद्ज्ञानत्वाच्च, एतत्प्रवृत्तिजनक[1]मन्निष्ठेदमितिज्ञानवदित्यपि न; रजतज्ञानस्येदंज्ञानादभिन्नत्वम्—एकफलत्वं वा ? स्वरूपैक्यं वा ? आद्ये सिद्धसाधनात्। द्वितीये रूप्यवेदनस्येदंवेदनस्येव याथार्थ्यप्रसङ्गे कुतस्त्वदीयान्यथाख्यातिः ? किञ्च पारमार्थिकभेदप्रतिषेधेऽप्रसिद्धविशेषणता ; अस्माभिस्तस्यानभ्युपगमात्, अलीकभेदप्रतिषेधे भवतोऽपराद्धान्तः, भ्रमबाधकानुपपत्तिविरोधश्च। रूप्यप्रतीतेरिदंज्ञानाभेदे धर्म्यंशे प्रमात्वं रूप्यांशेऽप्रमात्वमिति प्रमात्वाप्रमात्वसङ्करश्च ॥

प्रमितित्वावान्तरत्वादप्रमितित्वस्य न सङ्कर इत्यभिहितमस्माभिः—"प्रसिद्धा इन्द्रियार्था" इति सूत्रस्य—अर्थ्येते = प्रमितिसाधनत्वेनाभिलप्येते भगवता परमेश्वरेणेत्यर्थौ लिङ्गागमौ, इन्द्रियञ्चार्थौ चेन्द्रियार्थाः, ते प्रसिद्धाः प्रमाणत्वेन प्रमिताः, तेन प्रत्यक्षानुमानागमाः प्रमाणानि" इति व्याख्यानावसर इति—चेत्, मैवम्; स्मृतौ प्रमात्वरहितायामप्रमितित्वसमवायात् तस्य प्रमितित्वावान्तरत्वासम्भवात्। इदं रजतमिति ज्ञानम्, एतस्मादिदमिति ज्ञानान्न भिद्यते, एतत्वात्, न यदेवम्, न तदेवम्; यथा घट इति—चेत्, न; अप्रसिद्धविशेषणत्वात्। एतस्मिन्निदमिति ज्ञाने विशेषणप्रसिद्धेर्नेति चेत्, न; विद्यमानसपक्षत्वेन व्यतिरेकित्वभङ्गेनासाधारणत्वात्, सपक्षसत्त्वेऽपि ततो व्यावृत्त्यनिश्चयात् निश्चितसपक्षव्यावृत्तेश्चासाधारणत्वान्नासाधारणत्वमिति चेत्, न; सपक्षव्यावृत्तिसन्देहे सन्दिग्धासाधारणत्ववद् विपक्षव्यावृत्तिसन्देहेऽपि सन्दिग्धासाधारणत्वात्, अन्यथा सन्दिग्धानैकान्तिकोच्छेदे विपक्षबाधवैधु[2]र्यापातात् ॥

---

ज्ञाने व्यभिचारवारणार्थम्। इदमंशज्ञानस्यान्तःकरणपरिणामस्य रूप्यज्ञान[स्याज्ञान]परिणामसंवलितस्याध्यस्ताधारविशिष्टविषयफलं स्फुरणरूपमेकमिति स्वीकारात् सिद्धसाधनमित्याह—**आद्य इति** ॥ घटादिप्रमायाम्, स्मृतौ च परस्परपरिहारेण स्थितयोः प्रमात्वाप्रमात्वयो रूप्यादिप्रतीतौ सङ्करः स्यादित्यभिसन्धिनोक्तम्, अगृहीताभिसन्धिः शङ्कते—**प्रमितित्वावान्तरत्वादिति** ॥ सूत्रस्य व्याख्यानावसरेऽभिहितमिति संबन्धः। अभिसन्धिमुद्घाट्य स परिहरति—**मैवमिति** ॥ सपक्षप्रवेशादसाधारणानैकान्तिकत्वं यदुक्तम्, तत्परिहारं शङ्कते—**सपक्षसत्त्वेऽपीति** ॥ **व्यावृत्त्यनिश्चयादिति** ॥ रजतज्ञानस्येदंज्ञानाभेदस्य साध्यस्य सन्दिग्धत्वादेतत्त्वं तस्मिन्न वर्तत इति निश्चेतुमशक्यत्वादित्यर्थः। विपक्षवृत्तिनिश्चय एवासाधारणोऽप्यनैकान्तिकः, न तत्सन्देहे, अत

---

1. जनकं मन्निष्ठेदमिति। (क) 2. वैयर्थ्यापातात्

॥ इदं रजतमिति ज्ञाने देशान्तरस्थरजतस्यैव भानम्,
न तु तत्रैव रजतविशेषस्येत्यन्यथाख्यातिवादेनां शङ्का, तत्परिहारश्च ॥

अथ—इयं शुक्तिः, एतद्रजतविषयत्वरहितरजतज्ञानविषयः, मेयत्वात्; रजतवत्। न चास्य घटादौ तद्व्यभिचारः; तस्याप्येतद्विषयत्वरहितघटादिविषयरजतज्ञानविषयत्वात्। न चापेक्षितासिद्धिः। एतद्रजतविषयत्वरहितमेतद्विषयत्वरहितं वा स्यात् रजतविषयत्वरहितं वा? आद्यस्य तावदेतद्विषयत्वं न सिध्यति; व्याघातात्। तस्माद्रजतविषयत्वरहितज्ञानविषयत्वमस्याः शुक्तेः सिध्यतीत्यपेक्षितसिद्धेरिति—मतम्, तन्न; रजतविषयत्वरहितत्वरजतज्ञानत्वयोर्व्याघातात्, रजतविषयज्ञानस्यैव रजतज्ञानत्वात्॥

न व्याघातः; रजतविषयज्ञानत्वरजतज्ञानत्वयोर्भेदात्, रजतविषयत्वे सति

---

आह—**अन्यथेति**॥ साध्यव्यतिरेके साधनान्वयसन्देहनिरासाय बाधकतर्क उपन्यस्यते व्याप्तिं द्रढयितुं तार्किकैः। स एवं सति नोपन्यसनीयः स्यादित्यर्थः। अन्यथाख्यातिसिद्धौ वा दी न्द्र पथमाश्रित्य प्रवर्तते—**अथेति**॥

शुक्त्यन्तरस्य सिद्धं साध्यमितीयद[?]मित्युक्तम्। ज्ञानविषय इत्युक्ते शुक्तिज्ञानविषयत्वं सिद्धम्, अत आह—**रजतज्ञानेति**॥ रजतज्ञानविषय इत्युक्तौ व्याप्त्यसिद्धिः; पटादौ साध्याननुगमात्, अत आह—**रजतविषयत्वरहितेति**॥ तथापि रजत एव साध्याभावाद् व्याप्त्यभाव इत्यभिहितम्—**एतदिति**॥ एतद्विषयत्वरहितरजतज्ञानविषयत्वे साध्ये बाधो मा भूदित्याह—**रजतविषयत्वरहितेति**॥ घटादौ रजतज्ञानविषयत्वाभावाद् व्यभिचारः, तत्राह—**न चेति**॥ कुत एतत्? अत आह—**तस्यापीति**॥ एतच्छुक्तिविषयत्वरहितं यद्रजतं घटः पटो रजतमित्यादि शाब्दरजतज्ञानम्, तस्य विषयतया सपक्षत्वादित्यर्थः। एतद्रजतविषयत्वरहितज्ञानविषयत्वे साध्ये न शुक्ते रजतज्ञानविषयत्वसिद्धिः, अत्राह—**न चेति**॥ **ज्ञानविषयत्वमस्या इति**॥ रजतज्ञानविषयत्वमस्याः सिध्यदपेक्षितमन्तर्भाव्यैव प्रसिध्यतीति भावः॥

एकस्यैकदैकत्र सत्त्वासत्त्वसंसर्गे व्याघातः, स चेह नास्तीति शङ्कते—**न व्याघात इति**॥ तयोर्भेदं लक्षणतो विशदयति—**रजतविषयत्वे सतीति**॥ रजतज्ञानत्वं नाम कश्चिद्धर्मः, तदधिकरणत्वे सति ज्ञानत्वम् = रजतज्ञानत्वम्, रजत-

ज्ञानत्वस्य रजतविषयज्ञानत्वाद् रजतज्ञानत्वाक्रान्तस्य रजतज्ञानत्वादिति चेत्, न; रजतविशिष्टज्ञानत्वस्य ज्ञानवृत्तित्वे रजतस्यापि ज्ञानंसमवायप्रसङ्गात्। रजतस्योपलक्षणत्वविवक्षायामपि कदाचिद् ज्ञातसम्बन्धस्यैवोपलक्षणत्वात् रजतस्य ज्ञानेन विषयविषयिभावातिरिक्तसम्बन्धानिरूपणाद् रजतविषयत्वरहितत्वरजतज्ञानत्वव्याघाततादवस्थ्यात्॥

॥ अन्यथाख्यातिवादिनामपरेऽनुमानप्रयोगाः, तेषां सिद्धसाधनसत्प्रतिपक्षादिना निरासश्च ॥

इयं शुक्तिः, एतद्विषययथार्थज्ञान[1]व्यतिरिक्तनिश्चयविषयः, मेयत्वात्, घटवदिति (चेत् [2]न; इयं शुक्तिः, एतत्त्वे सति नैतद्विषययथार्थज्ञानातिरिक्तनिश्चयविषयः, मेयत्वात्; घटवदिति) सत्प्रतिहेतुत्वात्। यद्वा इयं शुक्तिः, नैतद्विषययथार्थज्ञानातिरिक्तनिश्चयविषयः, एतदनन्यत्वात्; व्यतिरेकेण घटवदिति सत्प्रतिपक्षता॥

नन्वेवम्—अयं गिरिः, एक[त]त्त्वे सति न कृशानुमान्, तद्भूजवत्त्वात्;

---

विषयज्ञानत्वं तु रजताकारवदाभासिज्ञानत्वमित्यनयोरवान्तरभेद इत्यर्थः। रजतज्ञानत्वमित्यत्र रजतं विशेषणम्, उपलक्षणं वेति विकल्प्याद्यं दूषयति—**नेति**॥ द्वितीयमपवदति—**रजतस्येति**॥ गुरुटीका कुरुक्षेत्रमित्यादौ ज्ञातसंवन्धेन गुरुप्रभृतिना टीकादेरुपलक्षणदर्शनाद् रजतस्यापि संवन्धेऽभिधेये संयोगादेरसिद्धौ विषयविषयिभावपरिशेषे व्याघात एवेत्यर्थः॥

**एतद्विषयेति**॥ पक्षीकृतशुक्तिविषयत्वे सति यथार्थज्ञानम्, तस्मादतिरिक्तो निश्चयो वा? यथार्थत्वरहितो वा स्यात्, आद्यः पक्षे व्याहत इति यथार्थज्ञानातिरिक्तनिश्चयविषयत्वसिद्धिरित्यर्थः। प्रतिप्रयोग एक[त]त्त्वे सतीति विशेषणमप्रसिद्धविशेषणत्वसाध्याननुगमपरिहारार्थम्। पूर्वं महाविद्यायां सत्प्रतिहेतुमहाविद्येत्युदितम्, इदानीं केवलव्यतिरेकिणा सत्प्रतिपक्षतामाह—**यद्वेति**॥ अनन्यत्वादित्युक्ते घटादौ विपक्षे वृत्तेर्विरुद्धः स्यात्, अत उक्तम्—**एतदनन्यत्वादिति**॥

साध्यं पक्षेण विशेष्य सत्प्रतिपक्षीकरणेऽनुमानकथैवोच्छिद्येतेति स्वक्रियाव्याघातं शङ्कते—**नन्विति**॥ गिरित्वविशेषिताकृशानुमत्त्वं न गिरौ सुबोधम्; स्वप्रवृत्तिविरोधादित्याह—**मैवमिति**॥

---

1. ज्ञानातिरिक्तनिश्चय  2. कुण्डलन्तर्गतं क पुस्तके नास्ति।

महानसवदित्यनुमानकुलमाकुलं स्यादिति—चेत्, मैवम्; स्वविशिष्टसाध्यस्य स्वात्मनि साधनेंऽशतः स्वप्रवृत्ति[1] विरोधात् ॥

तुल्यं प्रकृतेऽपीति चेत्, नैतत्; इयं शुक्तिरेतद्विषययथार्थज्ञानव्यतिरिक्त-निश्चयविषय इति प्रयोगे भवता स्वविशिष्टसाध्यं स्वात्मनि साधयतैवमभिधातुमनुचि-तत्वात् ॥

शुक्तिः, शुक्तिविषययथार्थज्ञानव्यतिरिक्तनिश्चयविषयः, मेयत्वात्; घटवदित्यपि न; सिद्धसाधनात्। शुक्त्यन्तरविषययथार्थज्ञानव्यतिरिक्तत्वादेतच्छुक्तिनिश्चयस्य। शुक्तिविषयोऽपीति चेत्, न; शुक्तिविषययथार्थज्ञानादन्योऽपीति तत्प्रयुक्तसिद्धसाधन-त्वस्य दुष्परिहरत्वात् ॥

इयं शुक्तिः, एतद्विषययथार्थव्यतिरिक्तरजतज्ञानविषयः, मेयत्वात्; घटवदिति चेत्, न; अरूप्याकारशुक्ते रूप्याकारप्रतीतिगोचरत्वसाधने प्रतीतिविरोधात्, इयं शुक्तिरेतत्त्वे सति नोक्तसाध्या, मेयत्वात्; घटवदिति सत्प्रतिसाधनत्वाच्च ॥

---

इयं शुक्तिः, एतच्छुक्तित्वे सत्येतद्विषययथार्थज्ञानातिरिक्तज्ञानविषयो न भवतीत्यत्रापि नायं पन्था दण्डवारित इत्याह—**तुल्यमिति** ॥ स्ववृत्तिविरोधेन प्रति[प्र]योगनिवारणे प्रथमोऽपि प्रयोगो निवारितः स्यात्, इत्याह—**नैतदिति** ॥

शुक्तिविशेषं पक्षीकृत्य प्रवर्तमा[ना]महाविद्यापोदिता, शुक्तिमात्रपक्षीकरणेन[प्र]वर्तमानामपवदति—**शुक्तिरिति** ॥ सिद्धसाधनत्वं व्यनक्ति—**शुक्त्यन्तरेति** ॥

महाविद्यान्तरमाह—**इयं शुक्तिरिति** ॥ एतद्विषययथार्थव्यतिरिक्तं रजत-ज्ञानम्, तद्विषयत्वं घटादावनुगतमेव; एतद्विषयत्वरहितरजतघटादिज्ञानविषयत्वात्। एतद्विषययथार्थव्यतिरिक्तत्वमनैतद्विषयस्य वा स्यात्, अयथार्थस्य वा? आद्यः पक्षे नोपसंहार्यः, इति मिथ्यारजतज्ञानविषयत्वसिद्धिरित्याशयः ॥

सामान्यतः शुक्तिपक्षीकरणेन प्रयोगान्तरं पराचष्टे—**शुक्तिरिति** ॥ लङ्घना-जङ्घालम् = नातिवेगि ॥

---

1. "प्र" नास्ति।

शुक्तिः, शुक्तिविषययथार्थव्यतिरिक्तरजतज्ञानविषयः, मेयत्वात्, घटवदित्यपि कथितदूषणलङ्घानाजङ्घलमेव ॥

इयं शुक्तिः, एतद्रजतभेदानालम्बनरजतालम्बनज्ञानविषयः,मेयत्वात्; घटवदिति चेत्, नैतत्; शुक्तेरारोपितरूप्यरूपत्वस्वीकारेण सिद्धसाधनतयाऽन्यथाख्यातिपर्यवसानानुपपत्तेः, एतद्रजतयोर्भेदे व्यभिचाराच्च ॥

देवदत्तः, देवदत्तनिष्ठयथार्थव्यतिरिक्तनिश्चयवान्, आत्मत्वात्; यज्ञदत्तवदिति चेत्, न; सिद्धसाधनत्वात्; देवदत्तनिष्ठो घटोऽयमिति यो यथार्थनिश्चयः, तदतिरिक्तपद[ट]निश्चयवत्त्वाद् देवदत्तस्य। सोऽपि देवदत्तनिष्ठ इति चेत्, तन्निष्ठयथार्थव्यतिरिक्तोऽपीति कथं नोक्तदूषणम्? तन्निष्ठसर्वयथार्थव्यतिरिक्तनिश्चयः साध्य इति चेत्, न; एकस्य सर्वज्ञानाभेदाभावेन तथापि भाषितदोषतादवस्थ्यात् ॥

अयं कालः, इदानीन्तनयथार्थव्यतिरिक्तनिश्चयवान्, कालत्वात्, अन्यकालवदित्यपि न; देवदत्तनिष्ठेदानीन्तनयथार्थातिरिक्तयज्ञदत्तनिष्ठनिश्चयवत्त्वेन सिद्धसाधनात् ॥

---

**एतद्रजतभेदेति** ॥ एतस्या शुक्तेः, रजतस्य च भेद एतद्रजतभेदः, तदनालम्बनत्वे सति रजतालम्बनज्ञानस्य विषय इत्यर्थः। भेदेन गृह्यमाणरजतालम्बनज्ञानविषयत्वे बाधपरिहारार्थं शुक्तिरजततादात्म्यज्ञानं साध्यं च विशदयितुमेतद्रजतभेदानालम्बनेत्युक्तम्। **व्यभिचाराच्चेति** ॥ एतद्रजतभेदस्य मेयस्य एतद्रजतभेदानालम्बनरजतज्ञानाविषयत्वादित्यर्थः ॥

**देवदत्तेति** ॥ देवदत्ते निश्चयेन स्थितिरिति यस्य, स देवदत्तनिष्ठः, स च यथार्थश्चेति देवदत्तनिष्ठयथार्थः, तस्माद् व्यतिरिक्तो निश्चयः, देवदत्तनिष्ठत्वरहितो वा यथार्थत्वरहितो वेति पूर्ववत् साध्यपर्यवसानमूह्यम्। देवदत्तनिष्ठैकैकयथार्थव्यतिरिक्तनिश्चयः साध्यते, न[उत]तन्निष्ठसकलयथार्थव्यतिरिक्तनिश्चय इति विकल्प्याद्यं दूषयति—**नेति** ॥ द्वितीयं शङ्कते—**तन्निष्ठेति** ॥ देवदत्तनिष्ठपटज्ञानस्य तन्निष्ठसकलज्ञानानात्मत्वात् सिद्धसाधनत्वमेवेत्याह—**नेति** ॥

दृष्टान्तभागे सिद्धसाधनत्वं परिहर्तुमयमित्युक्तम्। अप्रसिद्धविशेषणतापरिहारायेदानीन्तनविशेषणम् ॥

एतच्चक्षुः, एतज्जन्यसम्यग्ज्ञानातिरिक्तज्ञानजनकम्, चक्षुष्ट्वात्; अन्यचक्षुर्वदित्यपि न; एतच्चक्षुर्जन्यघटगोचरयथार्थज्ञानातिरिक्तपटज्ञानजनकत्वेन सिद्धसाधनादित्यल[1]मतिकोलाहलेन ॥

॥ तत्त्वविभावकारानुमानस्याप्यनिर्वचनीयख्यातिवादेन सिद्धसाधनादिना दूषणेनान्यथाख्यातिवादनिरासोपसंहारः ॥

भवतु तर्हि तत्त्वविभावकाराभिहितमनुमानमन्यथाख्यातिसाधकम्—विवादाध्यासिता [प्र]वृत्तिः, स्वविषयरजतज्ञानपूर्विका, रजतसाधनज्ञानानधीनत्वे सति रजतार्थिप्रवृत्तित्वात्, योक्तसाधना, सोक्तसाध्या; यथा सत्यरजतज्ञानपूर्विका प्रवृत्तिः—इति, नैतदपि पेशलम्; पुरोवर्तिरजतज्ञानमात्रसाधने मिथ्यारजतोपगमेनास्माकं सिद्धसाधनात्। पुरोवर्तिन्यसद्रूप्यज्ञानसाधने दृष्टान्ते साध्यवैकल्यात्। एवमन्यथाख्यातिसाधनाय प्रयुज्यमानेषु दूषणमुन्नेयमिति ॥

तदेवं—

व्यवहारप्रसिद्ध्यर्थं रूप्यबुद्धिमुपेयता ।
शुक्तौ मायामयं रूप्यमुपेतव्यमिति स्थितम् ॥ ५० ॥

---

**एतच्चक्षुरिति** दृष्टान्तभागव्यावृत्त्यर्थमुक्तम्। सिद्धसाधनत्वं परिहरति—**सम्यक्ज्ञानातिरिक्तेति** ॥ स्वगतरूपादिजनकत्वेन सिद्धसाधनत्वं व्यावर्तयति—**ज्ञानेति** ॥ अप्रसिद्धविशेषणत्वं परिहरति—**एतज्जन्येति** ॥ एतज्जन्यसकलसम्यज्ज्ञानातिरिक्तज्ञानजनकत्वं साध्यमिति चेत्, न; एकैकज्ञानस्य सकलज्ञानात्मत्वाभावेन तथापि सिद्धसाधनात्। एतज्जन्यसम्यज्ज्ञानमात्रातिरिक्तज्ञानजनकत्वं साध्यमिति चेत्, न; मात्रशब्दार्थज्ञानत्वसामान्यादतिरिक्तपटज्ञानजनकत्वेन सिद्धसाधनादेवेत्याह—**इत्यलमिति** ॥

**स्वविषयरजतज्ञानेति** ॥ पुरोवर्तिरजतज्ञानमित्यर्थः। घटप्रवृत्तौ रजतसाधनप्रवृत्तौ च व्यभिचारवारणाय हेतुविशेषणम्। विवादपदं रजतम्, सत्यम्; अनन्यथासिद्धरजतव्यवहारपदत्वात्, सत्यरजतवदित्याशङ्क्याह—**एवमिति** ॥

मायामयत्वमाक्षिपति—**अथेति** ॥ धीरूपत्वेऽपि रूप्यस्यानिन्द्रियगोचरस्यापरोक्ष्यानुपपत्तिरेव, अत्राह—**तथा चेति** ॥ धी रूप्यमित्येतदात्मख्यातिशब्दार्थ-

---

1. मिति

॥ आत्मख्यातिवादेनानिर्वचनीयख्यातेराक्षेपः ॥

अथ—कथं मायामयं रूप्यम्? यावता तस्य देशकालान्तरगतस्यानिन्द्रियसंप्रयुक्तस्यापरोक्षत्वे [1]दुष्टाक्षस्य सर्वज्ञत्वप्रसङ्गेन व्यवहितदेशादिस्थत्वानुपपत्तौ रजतमिदं नेति पुरोवर्तित्वनिषेधे परिशेषा[2]दान्तरसत्यधीरूपमवतिष्ठते। तथाचानिन्द्रियगोचररूप्यस्य स्वसंविदितसंविदभिन्नतयाऽपरोक्षसिद्धिरात्मनो बुद्धेर्बहिरिव ख्यातिरात्मख्यातिरिति सुगतरहस्यमिति—चेत्, नैतत् सारम्॥

॥ रजतस्यान्तरत्वे नेदं रजतमिति बाधानुपपत्तिः, अनिन्द्रियत्वेऽपि प्रत्यक्षोपपत्तिश्चेत्यात्मख्यातिनिरासः॥

रजतस्य धीरूपत्वे प्रा[प्र]माण्या[णा]भावात्। अनिन्द्रियगोचरस्यापरोक्ष्यानुपपत्तिर्मानमिति चेत्, न; बहिष्ट्ववदुपपत्तेः। बहिष्ट्वेतरस्य न तदुपपन्नमिति चेत्, किं रूप्यबहिष्ट्वेतरस्य न तदुपपन्नम्? बहिष्ट्वमात्रेतरस्य वा? नाद्यः; घटबहिष्ट्ववदुपपत्तेः। न द्वितीयः; [3]बहिष्ट्वस्यासत्त्वेन तदनुगतसामान्यमात्रार्थस्याभावात्, भावे वा तदितरस्य रूप्यबहिष्ट्ववदेवोपपत्तेः। बाधोऽपि किमिदन्तामात्रं निषेधति? रूप्येदन्तां वा? नाद्यः; नेदं रूप्यमिति बाधे शुक्तिकेदन्ताप्रतीतेः, द्वितीये विशिष्टेदन्ताप्रतिषेधे विशेषणतया रूप्यप्रतिषेधात् कथं तत् धीरूपमवतिष्ठते?

॥ आत्मख्यातौ बहिष्ट्वस्यापि सदसद्रूपत्वेनानिर्वाच्यत्वम्॥

किञ्च बहिष्ट्वमपि सत्, असद्वा? आद्ये भ्रमाद्यसम्भवः। द्वितीयेऽसत्ख्यातिप्रसङ्गः। तस्माद् नात्मख्यातिरपि युक्तिमती॥

---

प्रतीत्यैव पराहतम्, अत्राह—**आत्मन इति**॥ तर्हि भ्रान्तिर्न भवेत्; परमार्थगोचरत्वात्, अत्राह—**बहिरिवेति**॥ इदमिति बहिर्देशसंसर्गतया बहिष्ट्वं भासते, ततश्चेदंबुद्धेरनुगमादेव बहिष्ट्वमनुगतं गोत्वादिवदस्तीत्याशङ्क्याह—**भावे वेति**॥ बहिष्ट्वमात्रादितरस्य रूप्यस्यान्तरेण धीरूपत्वं रूप्यबहिष्ट्वस्येवापरोक्ष्योपपत्तिरित्यर्थः॥ यदुक्तमिदं नेतीदन्ताप्रतिषेधाद् अनिदंरूप्यमवतिष्ठत इति, तत्राह—**बाधोऽपीति**॥ यद् अधीरूपम्, तन्न प्रकाशत इति व्यतिरेकबुद्धावधीरूपं प्रकाशते चेद् व्याघाताद् व्याप्त्यसिद्धिः, न प्रकाशते चेत्, तथापि व्यतिरेकासिद्ध्या प्रकाशमानत्वं न धीरूपत्वापादकमित्युपसंहरति—**तस्मादिति**॥ यथाऽसतो नृश्रृङ्गादेरविद्याविलासविकल्प-

---

1. दृष्टान्तस्य (क)  2. "दा" नास्ति।
3. बहिष्ट्वस्या

॥ आत्मख्यात्यसंभवेऽप्यसत्ख्यातिरेव युक्तेति शङ्का, असतो भानायोगात्तन्निरासश्च ॥

स्यादेतत्—तथापि नानिर्वचनीयं रूप्यम्; असत एव भ्रमालम्बनत्वात्, भ्रमभातस्य चासत्त्वं 'नेदं रजतमस्ती'ति बाधकेन समा[अ]सदेव रूप्यं प्रतिभातमित्यनुसन्धानेन चावसीयते—इति, तदिदमसङ्गतम्; असतो भानायोगात्। यथाहुः—"न हि नरि शृङ्गं भाति गवीवे"ति ॥ नृशृङ्गमपि तच्छब्दाद्भातीति चेत्, न; तस्य विकल्पमात्रत्वात्। शब्दज्ञानानुपाती [हि]वस्तुशून्यो विकल्पः ॥

॥ विकल्पप्रत्ययात् साधिष्ठानभ्रमप्रत्यक्षस्य विशेषः, असत्ख्यातिपक्षनिरासश्च ॥

ननु—विकल्पोऽपि प्रत्ययः, अप्रत्ययो वा? आद्ये स्ववचनविरोधः, द्वितीयेऽनुभवविरोध[1]:—इति, न; विकल्पस्याविद्याविलासत्वात्, रूप्यस्य पुनरसत्त्वेऽपरोक्षप्रतिभासव्यवहारभेदव्याघातात्। नाप्यधिष्ठानमसदेव, भ्रमोपादानाज्ञानतन्निवर्तकज्ञानालम्बनशुक्तिशकलस्यैवाधिष्ठानत्वात्। 'नेदं रूप्यमि'तिज्ञानस्य लौकिकरजताभावविषयत्वं वक्ष्यते। अनुसन्धानमपि—मिथ्यैव रजतमभादिति। तस्माद् नासत्ख्यातिः ॥

॥ भ्रमस्य सदसद्रूपत्वख्यातिवादशङ्कातत्परिहारः, अनिर्वचनीयख्यात्युपसंहारश्च ॥

अस्तु तर्हि भ्रमगोचरस्य सदसद्रूपत्वमिति, मैवम्; सदसतोर्भिन्नत्वम्,

---

प्रत्ययाभासविषयत्वम्, एवं रजतस्यापीति, अत आह—**रूप्यस्य पुनरिति** ॥ **व्यवहारभेदः**=उपादानलक्षणः। असत एवासत्प्रकाशनशक्तिस्वरूपस्वाविद्यावशादस्तीति प्रतिभासनाद् नार्थसत्त्वमधिष्ठानस्यापीति, अत आह—**नापीति** ॥ बाधावगतमसत्त्वमिति यदुक्तम्, तदन्यथोपपत्त्या दूषयति—**नेदमिति** ॥ भ्रमबाधानुपपत्त्या सत्त्वे ख्यातिबाधानुपपत्त्या चासत्त्वे निरस्ते तदुभयोपपत्तये सदसदात्मकं स्यादिति शङ्कते—**अस्तु तर्हीति** ॥ स्वासाधारणाकारेण स्थितयोरेकत्वं तमःप्रकाशवदयुक्तम्,

---

1. अनुभवविरोधः न (क)

अभिन्नत्वम्, भिन्नाभिन्नत्वं वा । आद्ये नैकस्य सदसत्त्वम्; तयोर्भेदादेकरूपत्वविरोधात्। द्वितीयेऽपि (सच्छब्द[2]ज्ञानालम्बनस्य)सच्छब्दज्ञानालम्बनान्तर्भावे तु असत्ख्यातिरेव स्यात्, असच्छब्दज्ञानालम्बनस्य सच्छब्दज्ञानालम्बनान्तर्भावे तु सत्ख्यातिरेव स्यात्। द्वयमप्येतदपहस्तितम्। तृतीयेऽपि येन रूपेण भेदः, न तेनैवाभेदः; विरोधात्। रूपान्तरेण तथात्वे यस्य भेदः, न तस्याभेदः, यस्याभेदो न तस्य भेद इति नैतद् द्विरूपं स्यात्। यस्य ते रूपे, तस्य द्विरूपत्वमिति चेत्, न; तत्राप्येवं पर्यनुयोगे रूपान्तरकल्पनानवस्थादौस्थ्यात्। तस्मादेतद् न सदसदात्मकम्, इति न तत्ख्यातिरपि भ्रान्तिः। तदेवम् ॥

शुक्तौ चकास्ति यद्रूप्यं भ्रान्तं तदुपगच्छता ।
अनिर्वाच्यमुपेतव्यमन्यथा तदयोगतः ॥ ५१ ॥

**॥ इति न्यायचन्द्रिकायामख्यात्यन्यथाख्यात्यात्मख्यातिसदसत्ख्यातिवाद निरासेनानिर्वचनीयख्यातिसमर्थनं प्रथमं प्रकरणम् ॥**

---

इत्येकाकारपर्यवसाने वाच्ये सद्रूपस्यासद्रूपेऽन्तर्भावः, असद्रूपस्य वा सद्रूपे? इति विकल्प्य दूषयति — **द्वितीयेऽपीति** ॥ **एवं पर्यनुयोग इति** ॥ रूपिणोऽपि रूपद्वारा भिन्नाभिन्नत्वं किमेकेन रूपेण, रूपान्तरेण वा? नाद्यः; व्याघातात्, भेदाभेदशब्दयोः पर्यायत्वापाताच्च। द्वितीये यस्याभेदः, न तस्य भेदः, यस्य भेदो न तस्याभेद इति नैकं द्विरूपं स्यादिति पर्यनुयोगे तत्रापि रूपान्तरकल्पनाऽनवस्थेत्यर्थः। सदसद्रूपत्वे भ्रान्तिरपि न भवेत्, यथाप्रतीति रूप्यसत्त्वात्। सदसद्रूपस्य सत्वेनैव ग्रहो भ्रान्तिरिति चेत्, नेदं रूप्यमित्यसत्त्वेनैव ग्रहाद् बाधकोऽपि भ्रमः स्यादित्युपसंहरति—**तस्मादिति** ॥ द्विरूपस्यैकरूपेणैव ग्रहस्योभयत्राविशेषादित्यर्थः ॥ परपक्षप्रतिक्षेपेण परिशिष्टं स्वपक्षमुपक्षिपति — **तदेवमिति** ॥

**॥ इति न्यायचन्द्रिकाविवरणेऽख्यात्यन्यथाख्यात्यात्मख्यात्यसत्ख्यातिसदसत्ख्यातिनिरासेनानिर्वचनीयख्यातिसमर्थनं नाम प्रथमं प्रकरणम् ॥**

---

1. कुण्डलान्तर्गतस्य स्थाने "शब्दज्ञानालंबनस्य इत्येव वर्तते ।

## ॥ अथ न्यायचन्द्रिकायामनिर्वाच्यत्वनिरुक्तिर्नाम द्वितीयं प्रकरणम् ॥

॥ अनिर्वचनीयत्वस्य षोढा विकल्पः ॥

आह केयमनिर्वाच्यता नाम ? किं वक्तुमशक्यता ? सदसद्रूपाभ्यां निर्वक्तुमशक्यता वा ? सत्त्वेन, असत्त्वेन, सदसत्त्वेन च निश्चित्य वक्तुमशक्यता वा ? सदसदन्यता वा ? सदसद्व्यावृत्तधर्मवत्ता वा ? सत्त्वासत्त्वात्यन्ताभाववत्ता वा ?

॥ वक्तुमशक्यत्वस्य सदसद्रूपाभ्यामवक्तव्यत्वस्य च
प्रथमद्वितीयविकल्पविषयस्यानिर्वचनीयत्वस्य प्रतिषेधः ॥

न तावदाद्यः ; रूप्यादिशब्दैरेव वक्तुं शक्यत्वात् । नापि द्वितीयः ; भ्रान्तिकाले सत्त्वेन, बाधकाले चासत्त्वेन पौरस्त्यस्य रूप्यात्मनो निरूप्यमाणत्वात् ॥

॥ सत्त्वेनासत्त्वेन सदसत्त्वेन च वक्तुमशक्यत्वमिति तृतीयकल्पस्य निरासः ॥

नापि तृतीयः ; सत्त्वादिरूपेण निश्चये बाधकानुपलम्भात् ॥

॥ ख्यातिबाधानुपपत्त्या सदसद्विलक्षणत्वं तदिति सिद्धान्तिनां शङ्का ॥

स्याद् मतिः—सच्चेद् द्रव्यम् , तत्प्रतिभासो न मिथ्येति न बाध्येत ; सत्यरूपान्तरप्रतिभासवत् , असत्त्वेऽपि तथाविधप्रतिभासप्रवृत्तिगोचरभावो न भवेत् । न चैकस्य सदसद्रूपता ; विरोधात् । अतो न सत् , नासत् , नापि सदसत् , किन्त्वनाद्यनिर्वाच्याविद्याक्रीडितं रजतम्—इति, तदेतदनुचितम् ॥

---

## ॥ न्यायचन्द्रिकाविवरणेऽनिर्वाच्यत्वनिरुक्तिर्नाम द्वितीयं प्रकरणम् ॥

लक्षणानिर्वचनेनानिर्वचनीयत्त्वमाक्षिपति—**आहेति** ॥ लक्षणानिरुक्तिमुपपादयितुं विकल्पयति—**किमिति** ॥

नाद्योऽनवद्यः ; उच्यते, अनिर्वचनीयञ्चेति व्याघातादित्याह—**न तावदिति** ॥ लक्षणासंभवेन द्वितीयं दूषयति—**नापीति** ॥ **निरूप्यमाणत्वात्** । चेति शेषः ।

सदेवेदमसदेवेदं सदसदेवेति युक्त्या व्यवस्थाप्य निर्वचनानर्हत्वमनिर्वचनीयत्वमिति तृतीयं दूषयति—**नापि तृतीय इति** ॥

प्रागुक्तं बाधकं स्मारयति—**स्याद्मतिरिति** ॥ **तथाविधेति** ॥ अपरोक्षप्रतीतिव्यवहारगोचरमित्यर्थः । बाधकमुद्धरति—**तदेतदिति** ॥

॥ स्वरूपपररूपाभ्यां सर्वस्य सदसदात्मत्वेन सदसद्विलक्षणत्वं बाधितम् ॥

[1]तथाहि— यत्तावत्सत्त्वे न भ्रमः स्यात्, नापि बाध इत्युदितम्, तत्र किमिदं सत्त्वमभिप्रेतम्—आरोपणीयस्य रजतस्य किं स्वरूपेण सत्त्वम्? किं वा पौरस्त्यवस्तुसम्भेदेन? आद्ये कुतो न विभ्रमः? कुतश्च न बाधः? स्वरूपसतोऽपि रूप्यस्य पौरस्त्यवस्तुसम्भेदेन प्रतिभासमानस्यातथात्वाद् भ्रान्तिबाधव्यवस्थोपपत्तेः। द्वितीये त्वनङ्गीकार एव परिहारः। न हि वयमपि पौरस्त्यरूपेण [2]तात्त्विकमङ्गीकुर्मः। यदपि—असतस्तथाविधप्रतिभासादिगोचरभावो न भवेत्—इति, सत्यमेतत्; अत एव पौरस्त्यसतः सदन्तररूप्यात्मना प्रतिभासप्रवृत्तिगोचरभावमभ्युपगच्छामः॥

॥ सदसदन्यत्वं न भावाभावविलक्षणत्वम् ॥

नापि तुरीयः; सदसदन्यता यदि भावाभावान्यत्वम्, तदाऽतिव्याप्तिः; सत्यरूप्यस्य घटादिभावप्रध्वंसाद्यभावान्यत्वाभ्युपगमात्॥

॥ सत्ताश्रयानाश्रयान्यत्वं न सदसदन्यत्वम् ॥

अथ सकलभावाभावान्यत्वं विवक्षितम्, तदाऽसम्भवः; सकलभावाभावाप्रसिद्धौ तदन्यत्वस्याप्यसम्भवात्, व्याघाताच्च, सकलभावान्यत्वस्याभावलक्षणत्वात्, सकलाभावान्यत्वस्य च भावलक्षणत्वात्॥

---

सत्पक्षोक्तबाधकासिद्धिं साधयितुमनुपठति—**यत्तावदिति**॥ **तत्रेति**॥ आद्ये स्वरूपसत्त्वात् ख्यातेः ख्यायमानरूपेणासत्त्वाद् भ्रमबाधयोरुपपत्तिरित्याह—**आद्य इति**॥

सदसदन्यत्वं भावाभावान्यत्वं वा, सत्ताश्रयानाश्रयान्यत्वं वा, प्रमेयाप्रमेयान्यत्वं वा, ब्रह्मतदितरान्यत्वं वा। यद्याद्यः, तदपि भावाभावमात्रान्यत्वम्? सकलभावाभावान्यत्वं वेति विकल्प्याद्यमनुवदति—**सदसदन्यतेति**। दूषयति—**तदेति**॥ प्रथमकल्पस्य द्वितीयकल्पमालम्बते—**अथेति**॥ सर्वेषां प्रतियोगिनामप्रसिद्धौ तदन्यत्वस्य प्रमातुमयोग्यतयाऽसंभवोऽभिहितः, संप्रति व्याहतं चैतल्लक्षणमित्याह—**व्याघाताच्चेति**॥ विरुद्धयोरेकधर्मिसंबन्धो व्याघातः। तमाविष्करोति—**सकलेति**॥

---

1. पृ. 412 प. 13 2. रूपेण रूप्यं तात्विकमङ्गी-

अथ सदसदन्यता सत्ताश्रयानाश्रयान्यता, तथापि पूर्ववदतिव्याप्तिः, सकलविशेषणोपादाने च पूर्ववदसम्भवव्याघातौ ॥

॥ प्रमेयाप्रमेयान्यत्वं न सदसदन्यत्वम् ॥

अथ सदसदन्यता प्रमेयाप्रमेयान्यता, तदाऽसम्भवः; प्रमेयाप्रमेयासिद्धौ तदन्यताया अप्यसम्भवात्, कतिपयप्रमेयाप्रमेयान्यत्वसिद्धावतिव्याप्तेश्च, सकलविशेषणोपादाने प्राचीनदोषानुषङ्गात् ॥

॥ ब्रह्मतदितरान्यत्वं न सदसदन्यत्वम्। अत एव न सदसद्व्यावृत्तधर्मवत्त्वमनिर्वचनीयत्वम् ॥

अथ सदसदन्यता ब्रह्मतदिरान्यता, तदाऽप्यतिव्याप्तिः; सत्यरूप्यस्य सत्यरूपस्य ब्रह्मतदितरघटाद्यन्यत्वाभ्युपगमात्, ब्रह्मेतरसकलविवक्षायां प्राचीनदोषानिस्तारात्। नापि पञ्चमः; किञ्चित्सदसद्व्यावृत्तधर्मवत्त्वेऽतिव्याप्तेः, सकलविशेषणोपादाने चासम्भवित्वात् ॥

---

द्वितीयमुत्थापयति—**अथेति** ॥ अत्रापि सत्ताश्रयानाश्रयान्यत्वमात्रम्, उत सकलतदन्यत्वमिति विकल्प्याद्यमपवदति—**तदाऽपीति** ॥ **पूर्ववदिति** ॥ सत्यरूप्यस्य सत्ताश्रयघटादेः, तदनाश्रयतत्प्रध्वंसादेश्चान्यत्वादित्यर्थः। द्वितीयं दूषयति—**सकलेति** ॥ न च—सकलमनवगम्य सकलानवगमप्रतिपादनं तवाप्ययुक्तमिति—वाच्यम्; सकलानवगमप्रतिपादनस्य मच्चेतसि विपरिवर्तमानपदार्थानवगमपर्यवसायित्वात् ॥

सदसच्छब्दयोः प्रमेयाप्रमेयार्थत्वमिति तृतीयकल्पमाशङ्कते—**अथेति** ॥ अप्रमेयम्-प्रमितम्, न वा? आद्ये व्याघातः, द्वितीये लक्षणासिद्धिरित्याह—**अप्रमेयासिद्धाविति** ॥ **प्राचीनेति** ॥ असंभवव्याघातप्रसङ्गादित्यर्थः। सच्छब्दं ब्रह्म, तदितरदसच्छब्दम्, तदन्यत्वमनिर्वचनीयलक्षणमिति परिशिष्टपक्षमाह—**अथेति** ॥ सदसदन्यत्वमनिर्वाच्यलक्षणमिति तुरीयकल्पं निरस्य सदसद्व्यावृत्तधर्मवत्त्वं तदिति पञ्चमं पराचष्टे—**नापीति** ॥ यतः कुतश्चित्सतोऽसतश्च व्यावृत्तधर्मवत्त्वम्, उत सकलसदसद्व्यावृत्तधर्मवत्त्वम्? न तावदाद्य इत्याह—**किञ्चिदिति** ॥ सत्यरजते रजतत्वधर्मस्य पटादेः सतोऽसतश्च ध्वंसादेः व्यावृत्तत्वादित्याशयः ॥

॥ सत्त्वासत्त्वयोः परस्परविरुद्धरूपत्वेन न सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावोऽनिर्वचनीयत्वम्। शुक्तिरूप्यस्य सत्त्वाभाववत्त्वे प्रमाणाभावः ॥

नापि षष्ठः; व्याघातात्। सत्त्वासत्त्वात्यन्ताभावयोः परस्परपरिहारनियमात्, असम्भवाच्च। शुक्तिमस्तकोत्पन्नरूप्यस्यैवंरूपतयाऽवश्यस्वीकार्यत्वाद् नासम्भवो लक्षणस्येति चेत्, न; तत्र रजतसत्त्वे प्रमाणाभावात्। 'इदं रजतमि'ति ज्ञानं प्रमाणमिति चेत्, न; तस्य भ्रान्तित्वात्। भ्रान्तिरपि रजतं साधयति; [[1]स्वगोचरशूरत्वात्] सर्वज्ञानानामिति चेत्, न; भ्रान्तेरपि साधकत्वे रजतस्य सत्त्वापत्तेः, सद्रजतमित्येव भ्रान्त्युदयप्रसङ्गात् भ्रान्तिः साधिका चेति व्याघाताच्च, प्रमात्वस्यैव साधकत्वशब्दार्थत्वात्, तस्य च भ्रान्तित्वसहानवस्थायित्वात्, भ्रान्तिकाले पुरोवर्तिनि रजताभावस्य पुरुषान्तरेणावगमाच्च ॥

---

व्याघाते हेतुमाह—**सत्त्वेति** ॥ सत्त्वस्यात्यन्ताभावो यत्र शशशृङ्गादौ, तत्रासत्त्वमेव; यत्र घटादौ चासत्त्वात्यन्ताभावः, तत्र सत्त्वमेवेति सत्त्वासत्त्वात्यन्ताभावयोः सहावस्थितयोरेकत्र रूप्ये संबन्धे व्याघात इत्याशयः ॥ रूप्यस्यैवंरूपत्वे प्रमाणाभावादसंभवो लक्षणस्येत्याह—**असंभवाच्चेति** ॥ अर्थापत्तिसिद्धत्वाल्लक्षणस्य नासिद्धिरित्याह—**शुक्तीति** ॥ **एवंरूपतयेति** ॥ सत्त्वासत्त्वात्यन्ताभावाधिकरणतयेत्यर्थः ॥ इत्थंभावे तृतीयेयम्। शुक्तिसंसृष्टरूप्यस्य पक्षत्वे लक्षणमाश्रयासिद्धं स्यादिति परिहरति—**नेति** ॥ शुक्तीदमंशसामानाधिकरण्येन जायमानं ज्ञानमेव तत्र रजतसत्त्वे प्रमाणमित्याह—**इदमिति** ॥ गूढाभिसन्धिः परिहरति—**नेति** ॥ अगृहीतपराभिसन्धिः परः परिचोदयति—**भ्रान्तिरपीति** ॥ अभिसन्धिं विभिन्दन्नाह—**नेति** ॥ रजतस्य सत्त्वप्रसक्तावसंभवो लक्षणस्येति भावः। भ्रान्तेः साधकभावमभ्युपगम्याभिहितम्, स एव पुनर्न संभवतीत्याह- **भ्रान्तिरिति** ॥ न प्रमात्वं साधकत्वम्, येन भ्रान्तौ साधकत्वव्याघातः, किन्तु तत्प्रतिबन्ध[द्ध]व्यवहारजनकत्वं तत्साधकत्वम्। अतो न व्याघातः, अत्राह—**भ्रान्तिकाल इति** ॥ पुरोवर्तिनि रूप्यसत्त्वे शुक्तिरिव रूप्यं पुरुषान्तरैरपि गृह्येतेत्यर्थः ॥

पुरुषान्तरनिष्ठरूप्याभाववेदनस्य, भ्रान्तिवेदनस्य च भिन्नविषयत्वाद् न विरोध

---

1. कुण्डलान्तर्गतं नास्ति

॥ भ्रान्तिगोचरस्य रजतस्य पुरुषान्तरेणानवगमात्, प्रत्युत तदभावस्य तत्रावगमान्न भ्रान्तेरनिर्वाच्यरजतसाधकत्वम् ॥

अथ—गृहादिगतरजताभावः पुरोवर्ति (नि) [[2]पुरुषान्तरेणावगम्यते, न तु भ्रमावगतरजताभावः। भ्रमावगतरजतस्य प्रतिनियतपुरुषवेद्यत्वेन पुरुषान्तरप्रत्यक्षायोग्यतया तदभावस्य न] पुरुषान्तरेणावधारणमिति—मन्यसे, तन्न; तस्य प्रतिनियतपुरुषवेद्यत्वे मानाभावात्। भ्रमगोचरो रजतम्, न प्रतिनियतपुरुषवेद्यम्, रजतत्वात्; संप्रतिपन्नवदित्यनुमानाच्च। न चाश्रयासिद्धिः; भ्रमगोचररजतस्योभयवादिसिद्धत्वात्, यन्मया रजततयाऽधिगतम्, तदेवेयमिति प्रत्यभिज्ञानेन भ्रान्तेः शुक्तिशकलमात्रगोचरत्वग्रहणाच्च, अनिर्वाच्यत्वे प्रमाणाभावाच्च। प्रत्यक्षेण तदनुल्लेखात्, अर्थापत्त्यनुमानयोश्च धर्मिग्राहकप्रमाणबाधात्, सदिदं रजतमिति धर्मिग्राहिणा तस्य सत्त्वग्रहणात्। अन्यथेदम्, न रजतम्, मेयत्वादित्यादेर्दुर्वारत्वात् ॥

॥ रजतेऽनिर्वचनीयेऽनुमानार्थापत्तिप्रमाणयोरभावः ॥

नाप्यनुमानम्; इदमनिर्वाच्यमित्यादेरप्रसिद्धविशेषणत्वात्। नाप्यर्थापत्तिः; अनुपपद्यमानाभावात्। सत्त्वे भ्रान्तिबाधावसति च ख्यातिबाधावनुपपद्यमानावनिर्वाच्यत्वं कल्पयत इति चेत्, न; अन्यथाऽप्युपपत्तेः ॥

---

इति शङ्कते—**अथेति**। पुरुषान्तरैरनुमीयमानरूप्याभावस्य सन्निहितरूप्यपरित्यागेनासन्निहितरूप्यप्रतियोगित्वं कुतः? अत आह—**भ्रमावगतेति** ॥ यदीयाज्ञानविलसितं रूप्यम्, तस्यैवापरोक्षमिति चेदा[चोद्या]न्तररहस्यं प्रमाणाभावेनाक्षिपति—**तन्नेति** ॥ न केवलं मानाभावः, तद्विरोधोऽपीत्याह—**भ्रमगोचर इति** ॥ रूप्यवेदनस्य निरालम्बनत्वपरिहाराय शुक्तौ रूप्यमुपेतव्यम्, अत्राह—**यन्मयेति** ॥ एवं लक्षणानिरुक्त्याऽनिर्वचनीयत्वं प्रत्युक्तम्, संप्रति प्रमाणाभावेन प्रत्याह—**अनिर्वाच्यत्व इति** ॥

अर्थापत्त्या, व्यतिरेक्यनुमानेन वाऽनिर्वाच्यत्वग्रहः, तत्राह—**अर्थापत्तीति** ॥ 'सदिदं रूप्यमि'ति धर्मिग्रहविरोधेऽप्यर्थापत्तिस्वीकारे बाधमाह—**अन्यथेति** ॥ वाच्यत्वादिरादिपदार्थः। अनुमानादिकमङ्गीकृत्योक्तम्, तदपि न संभवतीत्याह—**नापीति** ॥ अनिर्वचनीयं सदसद्विलक्षणं वेति साध्येऽप्रसिद्धविशेषणत्वादित्यर्थः।

---

1. कुण्डलान्तर्गतं नास्ति 2. कुण्डलान्तर्गतं नास्ति

॥ इदं रजतमिति ज्ञानस्य रजतानिर्वचनीयत्वं विनोपपत्तिः ॥

तथा हि – भ्रान्तिः किं कारणं विनाऽनुपपन्ना ? विषयं विना वा ? नाद्यः ; दुष्टेन्द्रियादेरेव कारणत्वात् । न द्वितीयः ; रजतादे[रि]व विषयत्वात् । सत्त्वे रजतादेर्भ्रान्तिविषयत्वं न स्यादिति चेत्, न ; बाधकाभावात् । यत् सत्, न तद् भ्रान्तिविषयः ; यथा ब्रह्मेति चेत्, न ; ब्रह्मणो भ्रान्तिविषयत्वाभावे प्रमाणाभावात् । ब्रह्म, भ्रान्तिविषयः, ज्ञेयत्वात् ; घटवदित्यनुमानाच्च ॥

॥ रजतानिर्वचनीयत्वानुमाननिरासः ॥

किञ्च यत् सत्, न तद् भ्रान्तिविषयः, सच्च शुक्तिरजतम् ; तस्माद् न भ्रान्तिविषय इत्यनुमानं विवक्षितम्, किं वा यदि[दी]दं रजतं सत्, तर्हि भ्रान्तिविषयो न स्यादिति तर्को विवक्षितः ? नाद्यः ; भवतोऽसिद्धेः ; बाधाच्च । न द्वितीयः ; विपर्ययापर्यवसानात्, नेदं सत्, भ्रान्तिविषयत्वादित्यादेर्व्याप्यत्वासिद्धत्वात्, भ्रान्तिविषयत्वस्य सत्त्वाभावेन क्वचिदपि व्याप्त्यनवगमात्, सर्वस्यापि भ्रान्तिविषयस्य [संसर्गस्य] सत्त्वाभ्युपगमात् ॥

---

सत्यस्यापि रूप्यस्य भ्रान्तिविषयत्वे विरोधाभावाद् रजतादिविषया भ्रान्तिरित्याह—**न बाधकाभावादिति** ॥ विमतम्, न भ्रान्तिविषयः, सत्त्वात् ; ब्रह्मवदिति बाधकमाह—**यदिति** ॥ दृष्टन्ते साध्यवैकल्येन दूषयति—**नेति** ॥ ब्रह्मणो भ्रान्तिविषयत्वेऽपि प्रमाणाभावः तुल्यः, अत्राह—**ब्रह्मेति** ॥ यत् सत्, न तद् भ्रान्तिविषय इति साधारणोक्तिर्विकल्पयति—**किञ्चेति** ॥ **असिद्धेरिति** ॥ अनिर्वचनवादिनः सत्त्वहेतोरसिद्धिरित्यर्थः । अनिर्वाच्यत्वं प्रतिज्ञाय सत्त्वादिति हेतूक्तौ प्रतिज्ञाहेत्वोर्विरोधादित्यर्थः । नेदम्, सत्, भ्रान्तिविषयत्वात्, बाधविषयत्वाद्वा ; व्यतिरेकेण घटवदित्यनुग्राह्यप्रमाणसत्त्वाद् न विपर्ययपर्यवसानम्, अत्राह—**नेदमिति** ॥ व्याप्त्यसिद्धिमुपपादयति—**भ्रान्तीति** ॥ शुक्तिरजतसंसर्गे भ्रान्तिरस्[ति,]तस्य सत्त्वमित्यस्ति व्याप्तिः, अत्राह—**सर्वस्येति** ॥ **संसर्गस्य**=समवायस्य । सोऽन्यत्रास्त्येव । तादात्म्यरूपत्वे तस्य शुक्तिरजतस्वरूपाभेदात् सत्त्वमित्याशयः ॥

भ्रमानुपपत्तिं परिहृत्य बाधानुपपत्तिं परिहर्तुमाह—**एवमिति** ॥ 'नेदंरूप्यम्' इति बाधे रूप्यमपि प्रतीयते, तस्य सत्त्वे बाधविषयत्वानुपपत्तिरिति शङ्कते—

॥ बाधानुपपत्त्या रजतानिर्वचनीयत्वनिरासः ॥

एवं बाधोऽपि किं कारणं विनाऽनुपपन्नः? विषयं विना वा? नाद्यः; इन्द्रियादेरेव कारणत्वात्। न द्वितीयः; रजताभावादेरेव नेदं रजतमित्यादिबाधविषयत्वात्। सतो बाधविषयत्वं न स्यादिति चेत्, न; सच्छब्देन ब्रह्माभिधाने विपर्ययापर्यवसानात्, इदं रजतम्, न ब्रह्म; बाधविषयत्वादित्यादेः सिद्धसाधनत्वात्, शरीरं न ब्रह्मेत्यादिबाधगोचरे ब्रह्मणि व्यभिचाराच्च। सच्छब्देन भावाभिधानेऽपि विपर्ययापर्यवसानात्, इदं रजतम्; न भावः, बाध्यत्वादित्यादेर्भावपक्षीकरणे बाधात्, अभावपक्षीकरणे सिद्धसाधनत्वात्, सच्छब्देन सत्ताश्रयाभिधाने विपर्ययापर्यवसानात्, इदं रजतम्, न सः, बाध्यत्वादित्यादेः सत्ताश्रयपक्षीकरणे बाधात्, सत्तानाश्रयपक्षीकरणे सिद्धसाधनत्वात्, ब्रह्मणि व्यभिचाराच्चेति। तदेवं लक्षणप्रमाणानिरूपणाद् नानिर्वचनीयमारोपितमिति प्राप्तम् ॥

॥ रूप्यस्य भासमानरूपेण सत्त्वाभावात् सदसद्विलक्षणत्व-
मनिर्वचनीयत्वमिति सिद्धान्तोपक्षेपः ॥

अत्र ब्रूमो न सन्नासत् सदसच्च न यद्भवेत्।
वदा[1]मस्तदनिर्वाच्यं निर्वाच्ये भ्रान्त्यसम्भवात् ॥ ५२ ॥

---

**सत इति** ॥ सच्छब्देन ब्रह्मोच्यते, भावो वा, सत्ताश्रयो वा, तत्राद्यं प्रत्याह—**नेति** ॥ अ[मि?]त्रैवंविपर्यये पर्यवसानं दर्शनीयम्— रूप्यस्यास्य ब्रह्मत्वे बाध्यता न स्यात्, बाध्यते च; तस्मान्न ब्रह्मतेति। मम न तत् सम्भवति; प्रमाणाभावादित्यर्थः। इदम्, न ब्रह्म, बाध्यत्वात्; भ्रान्तिविषयत्वाद्वा; घटवदित्यस्ति प्रमाणम्, अत आह—**इदमिति** ॥ 'शरीरमेव ब्रह्मे'ति **लोकायत** भ्रान्तिगोचरस्य ब्रह्मणस्तेन रूपेण बाध्यत्वात् तत्र व्यभिचार इत्याह—**शरीरमिति** ॥ द्वितीयं दूषयति—**सच्छब्देनेति** ॥ इदं न भावः, बाध्यत्वात्, भ्रान्तिविषयत्वाद्वा; घटवदित्यस्ति विपर्यये प्रमाणम्, अत्राह—**ने[इ]दं रजतमिति** ॥ उक्तरीत्या तृतीयं निरस्यति—**सच्छब्देन सत्तेति** ॥

---

1. वदम (क)

वक्तुमशक्यताऽनिर्वाच्यतेति प्रथमः कल्पोऽनङ्गीकारपराकृतः। द्वितीयोऽपि तत एव निरस्तः। सद्विलक्षणत्वासद्विलक्षणत्वावच्छिन्नसदसद्विलक्षणत्वमनिर्वाच्यलक्षणम्, सद्विलक्षणत्वे सत्यसद्विलक्षणत्वं वा। न च सदसत्यतिव्याप्तिः; तस्यैव व्याहतरूपस्यासम्भवात्। न च मानाभावः; भ्रमाद्यनुपपत्तेस्तत्त्वात्। न च किं स्वरूपेण सत्त्वम्? किं वा पौरस्त्यवस्तुसम्भेदेनेति विकल्पनीयम्, भ्रान्तौ भासमानरूपेण सत्त्वस्य विवक्षितत्वात्। न च वाच्यम्—पौरस्त्यस्य सतः सदन्तररूप्यात्म[1]ना प्रतिभास[सात्] प्रवृत्तिगोचरभावः—इति; सदन्तरात्मत्वस्य सत्त्वे भ्रमबाधयोरसत्त्वे ख्यानबाधयोरयोगात्॥

॥ भावाभावयोर्दुर्लक्ष्यत्वेन परस्परविरहरूपत्वाभावाद्
भावाभावान्यत्वस्य सदसदन्यत्वस्य न विरोधः॥

[2]नापि सदसदन्यता—किं भावाभावान्यतेत्यादिविकल्पावकाशः; षडेव भावाः, चतुर्विधा एवाभावा इति भवता ये [3]व्यवस्थाप्यन्ते, तद्वैलक्षण्यस्य लक्षणत्वात्। न च सकलभावान्यत्वमभावलक्षणम्; अस्याभावत्वे स्वात्मनि वृत्तौ विरोधात्, अवृत्तावव्याप्तेः। भावत्वे "परस्परविरोधे हि न प्रकारान्तरस्थितिः" इति नियम-

---

कारिकार्थं विवृणोति—**वक्तुमशक्यतेत्यादिना**॥ सदसतः सदसदुभयरूपत्वादेकैकविलक्षणमस्तीति द्वितीयलक्षणस्य तत्रातिव्याप्तिः, अत्राह—**न चेति**॥ निर्वाच्ये भ्रान्त्यसम्भवादित्येतद्विभजते—**न च मानेति**॥

यदुदीरितं पुरस्तात्पौरस्त्यस्य सतः सदन्तररूप्यात्मना भ्रान्त्यादिगोचरत्वमिति, तद् निराकरोति—**न च वाच्यमिति**॥

सदसदन्यत्वम्—भावाभावान्यत्वं वा, सत्ताश्रयानाश्रयान्यत्वं वा, प्रमेयाप्रमेयान्यत्वं वा, ब्रह्मतदितरान्यत्वं वेति विकल्पं निराकरोति—**नापीति**॥ सदसद्वैलक्षण्यं व्याहतम्; भाववैलक्षण्यस्याभावलक्षणत्वात्, अभाववैलक्षण्यस्य भावलक्षणत्वादित्युक्तं दूषयति—**न चेति**॥ सकलभाववैलक्षण्यमभावः, भावो वा। आद्ये स्वात्मनि स्वयं वर्तते, न वेति विकल्प्य दूषयति—**अस्येति**॥ द्वितीयमपवदति—**भावत्व इति**॥ **नियमविरोध इति**॥ भावत्वप्रतिषेधस्याभावत्व-

---

1. रूप्यात्मन्यप्रतिभास (क)
2. पृ. 413 प. 10
3. योऽप्य (क)

विरोधः। एवं सकलाभावान्यत्वमपि भावलक्षणं विकल्प्य निराकरणीयम् ॥

[1]न च—भावत्वाभावत्वात्यन्ताभाववत्त्वासम्भवः; सत्त्वासत्त्वात्यन्ताभावयोः परस्परपरिहारनियमादिति—वाच्यम्; सत्त्वे तावन्न सत्त्वमस्ति; वृत्तिविरोधात्, न चासत्त्वम्; तथा सति सर्वशून्यतापातात्। एवमसत्त्वे नासत्त्वम्; वृत्तिविरोधात्, न सत्त्वम्; विरोधादेवेति सदसतोरेकतरनिषेधस्येतरविधित्वनियमासिद्धेः ॥

॥ भ्रान्तेरप्यनिर्वचनीयरजतसाधकत्वम् ॥

[2]यदपि—तत्र रजतसत्त्वे प्रमाणाभावात्—इत्युक्तम्, तत्र सत्त्वं तुच्छव्यावृत्तत्वम्? अबाध्यत्वं वा? आद्ये सदिदं रूप्यमिति तुच्छव्यावृत्तिमनुभवतो न युक्तमिदं वचनम्। द्वितीये त्विष्टापत्तिः। भ्रान्तिः साधिका चेति व्याहतमित्येतदेव व्याहतम्। भ्रान्तप्रवृत्तेरप्युपलम्भात्। [3]प्रमात्वमेव साधकत्वमित्यपि न; साधकत्वस्य कुठारादेरपि दर्शनात्। ज्ञापकत्वं साधकत्वमिति चेत्, न; प्रमाया ज्ञापकत्वाभावात्। व्यवहार-

---

विधित्वनियमभङ्ग इति भावः। **एवमिति** ॥ भावलक्षणम्—भावः, अभावो वा। आद्ये स्वात्मनि वृत्तौ विरोधः, अवृत्तावव्याप्तिः, अभावत्वे नियमविरोध इत्यर्थः। कुतोऽनिर्वचनीयम्? अत आह—**सत्त्व इति** ॥ **सर्वशून्यतेति** ॥ असत्त्वाधिकरणस्य निःस्वरूपत्वात्, सत्त्वस्यैव शून्यतापत्तौ तदधिकरणव्यक्तीनामसत्त्वापातादित्यर्थः। **विरोधादेवेति** ॥ असत्त्वे न सत्त्वं वर्तितुमर्हति; सत्त्वासत्त्वयोर्विरोधात्; अन्यथा स्वाभावारूढो घटः स्यात्, सत्त्वाधिकरणत्वे वा सत्त्वस्यापि घटादिवत् सद्व्यक्तित्वादसदाश्रयत्वविरोधाच्चेत्यर्थः ॥

इदं रूप्यमिति धियो भ्रान्तित्वात् स्वविषयस्य तुच्छव्यावृत्तिसाधकत्वं व्याहतम्, अत्राह—**भ्रान्तिरिति**। **प्रवृत्तेरपीति** ॥ प्रवृत्तिजनकत्वं ज्ञानस्य साधकत्वम्, अर्थप्राकट्यजनकत्वं वा। उभयम[त्रापि]पि घटादिज्ञानेनावशिष्टमिदंरूप्यज्ञानमित्यर्थः। सिद्धिः उत्पत्तिः, ज्ञप्तिर्वा? [त]त्कारणत्वं साधकत्वम्। तत्राद्यमव्यापकत्वान्न प्रमाणत्वमित्युक्तम्। द्वितीयं शङ्कते—**ज्ञापकत्वमिति** ॥ घटप्रमायाः स्वयं ज्ञानरूपतया घटविषयज्ञानान्तरजनकत्वाभावादसम्भवो लक्षणस्येत्याह—**नेति** ॥ ज्ञानस्य स्वविषयप्रतिबद्धव्यवहारजनकत्वं साधकत्वं चेत्, अत्राह—**व्यवहारेति** ॥

---

1. पृ. 415 प. 3
2. पृ. 415 प. 5
3. प्रमाणत्वमेव

जनकत्वं भ्रान्तेरविशिष्टम् । प्रमात्वभ्रान्तित्वयोरसहावस्थानमयुक्तम् ; इदं रूप्यमित्येकज्ञानव्यक्तौ धर्म्यंशे प्रमात्वम्, रूप्यसम्भेदांशे भ्रमत्वमिति भवताऽभ्युपगमात् ॥

॥ शुक्तिरूप्यस्य मायामयस्य प्रतिनियतपुरुषवेद्यत्वमविरुद्धम् ॥

नापि तदैव शुक्तौ पुरुषान्तरेण रजताभावानुभवविरोधः; प्रतिनियतपुरुषवेद्यत्वावधारणन्यायस्यात्रापि तुल्यत्वात् । भ्रमगोचरो रजतम्, न प्रतिनियत[1]पुरुषवेद्यम्, रजतत्वादित्यत्र मायामयरूप्यस्य धर्मित्वे तवाश्रयासिद्धिसिद्धान्तविरोधौ । तदितरस्य, रूप्यसामान्यस्य वा धर्मित्वे सिद्धसाधनात् । न च तदतिरिक्तमुभयसंप्रतिपन्नमस्ति ; यन्मया रजततयाधिगतं तदेवेदमित्यनुसन्धानं [2]न भ्रान्तेः शुक्तिमात्रगोचरत्वसाधकम् ; यन्मायाकाकाधिकरणतयाऽवगतम्, तदेवेदं गृहमित्यनेन तुल्यत्वात् । न चानिर्वचनीयत्वे मानाभावः ; सत्त्वे भ्रमबाधानुपपत्त्याऽसत्त्वेऽपरोक्षख्यानबाधानुपपत्त्या तत्सिद्धेः । न च सदिदं रूप्यमित्यनुभवविरोधः ; भ्रमस्य प्रमाणबाध्यत्वात् ; अन्यथा[3]ऽतिप्रसङ्गात् ॥

---

भवतु वा प्रमात्वमेव साधकत्वम्, तथापि भ्रान्तिः साधिकेति न व्याघातः ; एकस्मिन्निरंशे ज्ञाने भ्रान्तित्वप्रमात्वयोर्भवताऽभ्युपगमादित्याह—**प्रमात्वेति** । **अत्रापि तुल्यत्वादिति** ॥ सुखादयः, न प्रतिनियतपुरुषप्रत्यक्षाः, प्रत्यक्षत्वात्, घटादिवदित्यत्र स्वानुभवविरोधो वाच्यः । तथा सुखादयः संयुक्तसमवायात् स्वेनैवानुभूयन्ते, नान्येन ; असम्बन्धादिति च वाच्यम् । त[द]त्रापि तुल्यम् । यदविद्याविलसितं रूप्यम्, तत् तेनैव वेद्यम् ; तत्रैवाध्याससम्बन्धादित्यर्थः ॥ **आश्रयासिद्धिसिद्धान्तविरोधाविति** ॥ प्रामाणिकस्यैवाश्रयत्वनियमादप्रामाणिकत्व आश्रयासिद्धिः, प्रामाणिकत्वे सिद्धान्त[विरोध] इत्यर्थः । उभयसम्प्रतिपन्नभ्रान्तिगोचररूप्यस्य पक्षत्वान्नैकोऽपि दोषः, तत्राह---**न चेति** ॥ एवमनुभवविरोधं परिहृत्यानुसन्धानविरोधं परिहरति—**यन्मयेति** ॥ पूर्वावगतमिथ्यारजतात्मकस्योत्तरकालमुपलक्षणतया बोधकत्वादिति दृष्टान्तगर्भं हेतुमाह—**यन्मायाकाकेति** ॥ **प्रमाणबाध्यत्वादिति** ॥ भ्रान्तेर्वास्तवसत्त्वसाधकत्वे यथार्थत्वापत्तौ घटादिप्रत्ययवन्न बाधः स्यात्, बाध्यते च । तस्मान्न वास्तवसत्त्वसाधकत्वम् । वास्तवसद्वैलक्षण्यमनि-

---

1. प्रतिनियपुरुषः (क)
2. न "नास्ति"
3. अन्यथाख्यातिप्रसङ्गात् ।

॥ ख्यात्यनुपपत्त्युपपादनम् ॥

[1]यदपि—भ्रान्तिः किं कारणं विनाऽनुपपन्ना ? विषयं विना वा ? नाद्यः ; दुष्टेन्द्रियादेरेव कारणत्वात् । न द्वितीयः ; रजतादेरेव विषयत्वात्—इत्युक्तम्, [तन्न;] ज्ञानहेतोश्चक्षुरादिवददोषत्वात्, इन्द्रियस्य चासन्निकृष्टे [2]ज्ञानाहेतुत्वात्, रजतादेरिहासत इदंकारास्पदधीगोचरत्वानुपपत्तेरिह सत्त्वे तज्ज्ञानस्य भ्रमत्वायोगात् ॥

विमता, न भ्रान्तिः ; यथार्थधीत्वात् ; प्रमाणज्ञानवदिति विरोधात् । तत एव न बाध्यत्वमपि स्यात् ॥

[3]ब्रह्म, भ्रान्तिविषयः, ज्ञेयत्वात् ; घटवदिति यदुक्तम्, तदुत्पन्नमात्रप्रमितनष्टेनैकान्तिकम् । सतोऽपि भ्रमगोचरत्वे सम्यज्ज्ञानासम्यज्ज्ञानविभागो न स्यात् । विषयाभेदात् सत एवासद्रूपेण भ्रान्तत्वमिति चेत्, तर्हि न सद्रूपं भ्रमगोचरः; सति रूपान्तरस्यासत्त्वात् । यदीदं रजतं सत्, तर्हि भ्रान्तिविषयो न भवेदिति तर्कस्य न विपर्यये पर्यवसानमित्ययुक्तम् । नेदं सत्, भ्रान्तिविषयत्वात् ; शुक्तिरजतसंसर्गवदिति पर्यवसानात् । न दृष्टान्ते साध्यविरहः ; संसर्गस्यान्यत्र सत्त्वेऽपि भ्रमगोचरशुक्तिरजतसंसर्गस्यासत्त्वात् । असत्त्वपक्षे बाध्याभावाद् बाधोऽनुपपन्नः । रजताद्यभावो

---

र्वाच्यत्वमिति[न]विरोध इति भावः । दोषस्य धीहेतुत्वम्, इन्द्रियस्यासन्निकृष्टज्ञानहेतुत्वं[च]निरस्य, यदुक्तं रजतादेरेव भ्रमगोचरत्वमिति, तद् निरस्यति—**रजतादेरिति** ॥ तदिहासत् ? सद्वा ? नाद्यः ; इदंकारधीगोचरत्वायोगादित्युक्तम् । द्वितीयं दूषयति —**इहेति** ॥ एवं सत्त्वे प्रमानुपपत्तिमापाद्य बाधानुपपत्तिमापादयति—**तत एवेति** ॥ इह सत्त्वे तज्ज्ञानस्य शुक्तिज्ञानवत् प्रमाणता । प्रमितत्वादेव शुक्तिवन्न बाध्येतेत्यर्थः । **विषयाभेदादिति** । हेतोरसिद्धिं शङ्कते —**सत एवेति** । **रूपान्तरस्य तत्त्वादिति** ॥ असद्रूपस्य भ्रान्तिगोचरत्वादित्यर्थः । इदंरजतयोः संसर्गस्तादात्म्यम्, समवायो वाऽन्यत्रास्त्येवेति साध्यविकलो दृष्टान्तः, अत्राह —**न दृष्टान्त इति** ॥ विपक्षबाधकाभावाद् व्याप्यत्वासिद्धो हेतुः, अत्राह — **तत्त्वेति** ॥ भ्रमगोचरस्य सत्त्वेऽपि न बाधोऽनुपपन्नः ; रजताद्यभावस्य तद्विषयत्वात्, अत्राह—**रजतेति** ॥ किं हट्टादिगतरजताद्यभावो बाधविषयः ? शुक्तिमस्तकादि-

---

1. पृ. 417 प. 2
2. ज्ञानहेतु
3. पृ. 417 प. 5

न बाधविषयः; हट्टादिगतरूप्यस्यात्राप्राप्तत्वान्निषेधायोगात्, शुक्तौ रूप्यानङ्गीकारात्। नेदं रूप्यमितीतरेतराभावज्ञानं च न बाधकम्; इतरेतराश्रयात्—इदंरूप्ययोर्भेदेन प्रतिपन्नयोरेकं धर्मि विधायापरप्रतियोग्यात्मत्वं निषिध्येत, ततश्च भेदसिद्धिरिति। सतः शुक्त्यादिवद् बाधायोगाच्च। उक्तञ्चाचार्यवर्यैः—

"सतोऽपि बाध्यता चेत् स्याच्छुक्तिः कस्मान्न बाध्यते।
बाध्येतरांशयोः सत्त्वे समे भ्रान्तिः समा न किम्॥"

इति॥

॥ सच्छब्दार्थो भावः, तत्त्वं च शुक्तिरूप्ये बाधितम्॥

यदत्र प्रलपितम्—सच्छब्देन ब्रह्मोच्यते भावो वा? सत्ताश्रयो [1]वा—इति, तदतिस्थवीयः, सत एव भ्रान्तिगोचरत्वमुररीकुर्वताऽपि सच्छब्दार्थस्य वक्तव्यत्वात्, भावस्य सच्छब्दार्थत्वाच्च। न विपर्ययापर्यवसानम्; इदं रजतं न भावः; बाध्यत्वात्, शुक्तिरूप्यसंसर्गवदित्यनुमानात्। भावपक्षीकरणे बाधोऽभावपक्षीकरणे सिद्धसाधनमिति चेत् न; शुक्तिसम्भिन्नापरोक्षरूप्यस्य विमतिपदस्य धर्मित्वात्। अन्यथा शब्दोऽनित्य इत्यादौ नित्यस्य पक्षीकरणे बाधः, अनित्यस्य पक्षीकरणे सिद्धसाधनमित्यनुमानकथैवोच्छिद्येत। शरीरं न ब्रह्मेति बाधगोचरे ब्रह्मणि व्यभिचार इति

---

जनितरजताद्यभावः? नाग्रिमः; अप्रसक्तप्रतिषेधासिद्धेरित्याह—**हट्टादीति**॥ न चरम इत्याह—**शुक्ताविति**॥ न चरम इत्याह—**शुक्ताविति**॥ इतरेतराभावप्रत्ययस्य बाधकत्वमूरीकृत्य रूप्याद्यभावान्न बाधगोचर इति ईरितम्, सम्प्रति तदपि न चातुर्यं प्राञ्चतीत्याह—**नेदमिति**॥ इतरेतराभावज्ञानपर्यालोचनया न तस्य बाधकत्वमित्युक्तम्, इदानीं तदीयगोचरपर्यालोचनयाऽऽह—**सत इति**॥

प्रतिबन्द्या सच्छब्दं निरूप्य, प्रकारान्तरेण तन्निर्वचनमाह—**भावस्येति**॥ सच्छब्देन भावाभिधानेऽपि विपर्ययापर्यवसानादिति यदुदितम्, तद् दूषयति—**न चेति**॥ भावाभावातिरिक्तं विमतिपदं न सम्भवतीति भावितदोषानुषङ्गः, तत्राह—**अन्यथेति**॥ नेदं ब्रह्मेति बाधके शरीरवद् ब्रह्मणोऽपि प्रतिभासमानत्वाद् बाध्यत्वमित्याशङ्क्याह—**अन्यथा नेदंरूप्यमिति**॥

---

1. वेत्यादि

चेत्, न; आरोपितशरीरस्यैव बाधात्, अधिष्ठानब्रह्मणोऽबाध्यत्वात्, "तत् सत्यम्" इति श्रुतेः। अन्यथा नेदं रूप्यमिति बाधे शुक्तेरपि बाध्यतया साधु शैन्यवादः साधितः स्यात्॥

॥ रूप्यस्यासत्त्वे ख्यातिबाधानुपपत्तिः ॥

[1]यदप्युच्यते—असत्त्वे ख्यातिबाधानुपपत्तिरित्यपि न युक्तम्; किं तौ कारणं विनाऽनुपपन्नौ? विषयं विना वा? नाद्यः; इन्द्रियादेरेव[2] तत्कारणत्वात्; न द्वितीयः, रजताभावादेरेव विषयत्वात्—इति, तदसत्; ख्याने कारणानुपपत्तेः, इन्द्रियस्यासम्प्रयुक्ते ज्ञानाहेतुत्वात्। सम्प्रयोगे तदधिकरणस्य घटादिवदसत्त्वविरोधात्। विषयोऽपि नापरोक्षख्यानस्यासद्भवितुमर्हति। निस्स्वरूपत्वं ह्यसत्त्वं तदपरोक्षख्यानालम्बनत्वे न स्यात्॥

॥ असच्चेन्न प्रतीयेतेत्यत्र शशशृङ्गं दृष्टान्तः, अभ्रान्तविषयस्यैव दृष्टान्तत्वात् शशशृङ्गस्वप्नो न विरुध्यते ॥

यदसत्, तन्न साक्षात् प्रतीयत इत्यत्र शशशृङ्गं न दृष्टान्तः, तस्यापि स्वप्नसाक्षात्कारगोचरत्वात्। 'शृङ्गवन्तः शशा धावन्ति' इति स्वप्नोपलम्भादिति चेत्,

---

एवं तावत् सत्त्वपक्षे भ्रमबाधानुपपत्तिमापाद्यासत्त्वपक्षे ख्यातिबाधनानुपपत्तिमापादयितुं परकीयचोद्यमनुवदति—**यदप्युच्यत इति**॥ **वादीन्द्र** वार्तिक इति शेषः। यद् निस्स्वरूपम्, न तत् साक्षात्कारगोचरः; यथा शशशृङ्गमिति वेदितव्यम्। तत्र वादीन्द्रश्चोदयति—**यदसदिति**॥ सन्दिग्धसाध्यतया तस्य पक्षनिक्षेपाद् न साध्यवैकल्यचोद्यावकाश इत्याह—**नेति**॥ कस्तर्हि दृष्टान्तीकृतः? तत्राह—**भ्रान्तीति**॥ स्वप्नेतरप्रत्ययप्रतिपन्नस्य दृष्टान्तत्वेऽपि साध्यवैकल्यतादवस्थ्यमित्याह—**दूरेति**॥ शृङ्गवद्भ्यो गवादिभ्यो व्यावर्तकस्य शशत्वादेर्धर्मस्यानुपलम्भे शृङ्गवानिति साक्षात् प्रतीयत इत्यर्थः। **शृङ्गवद्व्यावर्तकधर्मासिद्धेरिति**॥ शृङ्गवानिति प्रतीतेर्यथार्थत्वेन शशादेरपि शृङ्गवत्त्वात् ततो व्यावर्तकधर्मत्वं शशत्वादेर्नास्तीति तदसिद्धौ सदा शृङ्गवत्त्वं प्रतीयादित्यर्थः। शशशृङ्गमसदित्यत्र शशो वा? शृङ्गं वा? संसर्गो वा? तद्व्यतिरिक्तं वा? नाद्यौ; तयोः सत्त्वात्। तत एव न तृतीयोऽपि।

---

1 पृ. 118 प. 2    2, इन्द्रियादेरेव तदधिकरणस्य तत्कारणत्वात्।

न; स्वप्नस्यापि भ्रान्तित्वात्, भ्रान्तिगोचरस्य प्रकृतविवादास्पदत्वात्, तस्यासाभिरदृष्टान्तितत्वात्, अभ्रान्तिविषयस्य दृष्टान्तत्वात्। दूरस्थेन शृङ्गवद् व्यावर्तकधर्मानुपलम्भे शृङ्गवानयमिति चक्षुषोपलभ्यत इति चेत्, न; सा भ्रान्तिः? अभ्रान्तिर्वा? आद्ये प्रकृतविवादास्पदत्वमेव। द्वितीये शृङ्गवद् व्यावर्तकधर्मासिद्धेः, शृङ्गवानयमिति सर्वदोपलम्भप्रसङ्गात्, शशशृङ्गमिति शशमस्तकोत्पन्नशृङ्गस्य विवक्षितत्वात्॥

॥ शशशृङ्गमसदित्यत्र शशशृङ्गपदार्थस्य दुर्निरूपत्वम्॥

'शशशृङ्ग[सम?]म्' इति शशो वा, शृङ्गं वा, तत्संसर्गो वा, तद्व्यतिरिक्तं वेति विकल्पनावकाशात्, अन्यथा भूतले घटो नास्तीति भूतलं वा? घटो वा? तत्संसर्गो वाऽन्यद्वा? नाद्यौ; तयोः सत्त्वात्, न तृतीयः; संयोगस्यापि सत्त्वात्, अन्यस्य निषेधे घटभूतलसंसर्गो न निषिद्धः स्यात्, इति न क्वचित् क[कि]ञ्चिदेव निषेद्धुं शक्यम्, इति भावाभावसाङ्कर्यं स्यात्॥

॥ सत्त्वेन सदसत्त्वेन वा भ्रान्तिबाधोपपत्तिशङ्का वादीन्द्रपद्येन॥

[1]ननु—किं भ्रान्तिबाधानुपपत्तिः सदसद्विलक्षणत्वे प्रमाणम्? ख्यातिबा[बाधा]नुपपत्तिर्वा? भ्रान्तिबाधान्यथाऽनुपपत्ति-ख्यातिबाधान्यथानुपपत्ती वा? नाद्यः; भ्रान्तिबाधयोः सत्त्वाभावेनैवोपपत्तेः। (न द्वितीयः[2]; ख्यातिबाधयोः सत्त्वेनैवोपपत्तेः) नापि तृतीयः; सदसत्त्वाभ्यामेवोपपत्तेः। एकस्य सत्त्वाभावसत्त्वे व्याहते इति चेत्,

---

नापि तुरीयः; अन्यस्य सत्त्वनिषेधे शशशृङ्गस्य तदनिषेधादित्याशङ्क्याह— **शशशृङ्गमिति**॥ शशमस्तकोत्पन्नशृङ्गमित्यत्रापि शशो वा, शृङ्गमित्यत्रापि शशो वा, शृङ्गं वा, उत्पत्तिर्वा, तदन्यद्वेत्यादिविकल्पितदोषा निरस्ता इति, अत आह— **अन्यथेति**॥

पुनरपि वादीन्द्रवार्तिकेऽभिहितचोद्यान्तरमनुभणति—**नन्विति**॥ **सत्त्वाभावेनैवेति**। भ्रान्तौ प्रतीयमानरूपस्य सत्त्वाभावेनैव भ्रान्तिबाधयोरुपपत्तेरन्यथोपपत्तिरित्यर्थः। **ख्यातिबाधयोरिति**॥ सत्त्वादपरोक्षख्यातेः, बाधस्य तत्प्रतियोगिकनिषेधविषयत्वेनोपपत्तेरित्यर्थः। भ्रान्तिबाधानुपपत्तिख्यातिसमुच्चिते प्रमाण-

---

1. पृ. 423 प. 5 2. कुण्डलान्तर्गतं नास्ति।

न; एकस्य सत्त्वाभावासत्त्वाभावयोरपि व्याहतत्वात्। सत्त्वाभावस्यैवासत्त्वपदार्थत्वात्, असत्त्वाभावस्य च सत्त्वपदार्थत्वात्, तन्नियतत्वाच्चे[द्वे]ति [चेत्, न;]

॥ सत्त्वाभावेन बाधोपपत्तिः, असत्त्वाभावस्तु प्रत्यक्षभ्रमानुपपत्त्येति पूर्वोक्तशङ्कापरिहारः ॥

त्रिधापि नावद्यमिति वदामः। सत्त्वाभावेन बाधोपपत्तावप्यसत्त्वाभावमन्तरेणापरोक्षभ्रमासम्भवात्, तथा सत्त्वाभावे ख्यानोपपत्तावपि सत्त्वाभावमन्तरेण बाधायोगात्। न चैकस्य सत्त्वभावासत्त्वाभावयोर्व्याहतत्वम्, [1]सत्त्वे वृत्तिविरोधात्, [असत्त्वे] [2]अनवस्थानाच्च न सत्त्वमस्ति, नाप्यसत्त्वम्; असत्त्वाधिकरणत्वेऽसत्त्वस्यैवाभावत्वेन तदधिकरणानामपि शून्यत्वप्रसङ्गादिति सत्त्वासत्त्वाभावयोः सत्त्व एव दर्शनात्। न चासत्त्वाभावः सत्त्वपदार्थः; तथा सति प्रतीतावितरेतराश्रयप्रसङ्गात्॥

भ्रान्तिबाधानुपपत्ति-ख्यातिबाधानुपपत्ती तुल्यबले? न्यूनाधिकबले वा? नाद्यः; सप्रतिपक्षत्वेनोभयोरप्रामाण्यात्। न द्वितीयः; अधिकबलबाधेन न्यूनबलाया अप्रमाणत्वादिति चेत्, न; भ्रान्तिबाधा[3]नुपपत्तेः। सद्वैलक्षण्यविषयत्वेन ख्याति-

---

मिति तृतीयं दूषयति—**नापीति**। **तन्नियतत्वाद्वेति**॥ सत्त्वाभावासत्त्वाभावाभ्यां सत्त्वासत्त्वयोरविनाभूतत्वाद्वेत्यर्थः॥

परिहरति—**त्रिधेति**॥ प्रथमकल्पमुपपादयति — **सत्त्वाभावेनेति**॥ द्वितीयेनापि नावद्यमित्याह—**तथेति**॥ सत्त्वासत्त्वाभावभावयोरेकत्राव्याघाते प्रागुक्तं हेतुं स्मारयति—**सत्त्वे वृत्तीति**॥ **इतरेतराश्रयेति**॥ सत्त्वप्रतीतौ तत्प्रतिषेधरूपमसत्त्वं प्रतीयेत, तत्प्रतीतौ तन्निरूप्यं सत्त्वमितीतरेतराश्रय इत्यर्थः। समुच्चितयोस्तयोः प्रामाण्यमित्येतत्पराकर्तुं परो विकल्पयति—**भ्रान्तीति**॥ **सप्रतिपक्षत्वेनेति**॥ अर्थापत्तेर्लिङ्गान्तर्गमाद् विरुद्धयोस्तुल्यबलयोः प्रकरणसमत्वेनाभासः स्यादित्यर्थः। **अधिकबलेति**॥ भ्रान्तिबाधानुपपत्तिः सद्वैलक्षण्यसाधिकाऽधिकबला चेदनया ख्यातिबाधानुपपत्तिरसद्वैलक्षण्यसाधिका न्यूनबला बाध्येत, ख्यातिबाधानुपपत्तेरधिकबलत्वे भ्रान्तिबाधानुपपत्तिर्बाध्येत, इति नोभयोः समुच्चितयोः प्रामाण्यमित्यर्थः। भिन्नविषयत्वादविरुद्धयोर्न बाध्यबाधकभाव इति परिहरति—

---

1. "अ" सत्त्वे (क)
2. अवस्थानाच्च।
3. भ्रान्तिभाधत्वानुपपत्तेः

बाधानुपपत्तेरसद्वैलक्षण्यविषयत्वेन व्यवस्थितयोरधिक[1]समबलविकल्पेन निराकरणे शब्दस्य नित्यत्वगुणत्वग्राहिप्रमाणयोरप्येवमपलापप्रसङ्गात् । तत्र विरोध इति चेत्, न ; तुल्यत्वात् ॥

॥ बाधानुपपत्तिमात्रमनिर्वचनीयत्वे प्रमाणम्,
भ्रमख्यात्योरप्यनुपपत्तिवादस्तु परदृष्टिमवष्टभ्य ॥

बाधानुपपत्तिर्वाऽनिर्वाच्यत्वे मानमस्तु ; सतो बाधे सत एव विलोपप्रसक्तेः । न चैतावता भ्रान्तिख्यातीति पूर्वतनविशेषणवैयर्थ्यम् ; बाधोऽनिर्वचनीयासदंशयोः साधारण इति परभ्रान्तिमनपाकृत्यैवाभिहितत्वात् ॥

॥ प्रतीयमानत्वेन शुक्तिरूप्यसत्त्वानुमाननिरासः ॥

इदं रजतम्, सत्, प्रतीयमानत्वात् ; आत्मवदिति चेत्, न ; शुक्तिरजतसंसर्गे व्यभिचारात्, शशशृङ्गे व्यभिचाराच्च । शशशृङ्गतत्संसर्गतद्व्यतिरिक्तानां सत्त्वात् सपक्षतेति चेत्, न; शशशृङ्गयोः सत्त्वेऽपि शशसंसृष्टशृङ्गस्यासत्त्वात् ; अन्यथाऽग्निमानित्यादौ विशेषणविशेष्यसम्बन्धानां स्वरूपेण सिद्धतया सिद्धसाधनत्वेनानुमानाप्रामाण्यप्रसङ्गात् ॥

॥ अनिर्वचनीयत्वे रजतस्य तत्र सत्त्वप्रतिभासेऽन्यथाख्यात्यापत्तिशङ्का,
सत्तात्रैविध्येन तत्परिहारश्च ॥

---

—**नेति** ॥ कृतकत्वाद् नित्यत्वग्राहि प्रमाणम्—शब्दः, गुणः, बहिरिन्द्रियव्यवस्थाहेतुत्वात्, रूपवदिति गुणत्वग्राहिप्रमाणयोर्विरोधो नास्तीति शङ्कते— **तत्रेति** ॥

"सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधकौ"

इत्याचार्याभिहितप्रमाणमुपपाद्य, लाघवावष्टम्भेन मानान्तरमाह—**बाधेति** ॥ असतश्च नापरोक्षबाधः ; अपरोक्षप्रसक्तेरभावादित्यर्थः । बाधानुपपत्तेरेवानिर्वचनीयसाधकत्वे भ्रान्तिबाधानुपपत्तिः, ख्यातिबाधानुपपत्तिरिति गुरूक्तविशेषणवैयर्थ्यम्, अत्राह—**न चेति** ॥ कुत इति? अत आह—**बाध इति** ॥ बाधस्यासत्त्वेऽप्युपपत्तिरिति परभ्रान्तिं स्वीकृत्य बाधानुपपत्त्या सद्वैलक्षण्ये सिद्धेऽपरोक्षख्यातिभ्रान्त्यनुपपत्त्याऽसद्वैलक्षण्यं साधयितुस्तद्विशेषणमित्यर्थः ॥

एवं वादीन्द्रोदितदूषणव्रातमपनूद्य **न्यायमुक्तावली**कारेणोक्तम-

---

1. अधिकसमबल

ननु—अलौकिकमिदमनिर्वचनीयं चेद् रजतम्, अस्य सत्त्वप्रतिभासेऽन्यथाख्यातिः स्यात्, अनुभवविरोधश्च इति, मैवम्; प्रातीतिकस्य सत्त्वस्य रूप्येऽपि स्वीकारात्। यथाहुः—"त्रिविधं सत्त्वम्—परमार्थसत्त्वं ब्रह्मणः, अर्थक्रियासामर्थ्यसत्त्वं मायोपाधिकमाकाशादेः, अविद्योपाधिकं सत्त्वं रजतादेरिति परमार्थसत्त्वापेक्षयाऽनिर्वचनीयमिति नानुभवविरोध इति ॥

॥ प्रतीतिव्यवहारकालाबाध्यत्वस्य सत्त्वस्य सच्छब्दार्थत्वान्न संगतिसंवेदनभेदः ॥

यदत्र कश्चिदवोचत्—न सत्तात्रैविध्यम्, एकनिमित्ताभावे सर्वत्र [1]सच्छब्दस्य प्रतिनिमित्तं सङ्गतिसंवेदनभेदप्रसक्तेः। न चैवं [2]दृष्टमिष्टं वा—इति, तदसत्; अबाध्यत्वस्य सत्पदप्रवृत्तिनिमित्तत्वात्। तच्च रजतादौ प्रतीतिकालिकम्, (आकाशादौ [3]व्यवहारकालिकम्,) ब्रह्मणि तु सार्वकालिकमिति सत्तात्रैविध्येऽपि सङ्गतिसंवेदनभेदाप्रसक्तेः ॥

॥ अलौकिकेऽपि रजते लौकिकजातीयतयेष्टसाधनत्वमनुमाय प्रवृत्तिनिर्वाहः ॥

ननु—([4]कथं लौकिकरजतसलिलाद्यर्थिनः तत्र) तत्र विश्रान्तिगोचरेऽलौकिके प्रवर्तेरन्? न खलु लोकोत्तरमेवार्थं ते कामयन्ते। किन्तर्हि? पूर्वावसितसमी-

---

पवदितुं चोदयति—**नन्विति** ॥ उक्तमर्थं **विवरणाचार्य**वचनेन द्रढयति—**यथाहुरिति** ॥ **एकनिमित्ताभाव इति** ॥ ब्रह्मण्याकाशादौ रजतादौ च सच्छब्दप्रवृत्तावनुगतं सामान्यं निमित्तत्वेन न सम्भवति;

यथाहुः—

"सत्यत्वं न हि सामान्यं मृषार्थपरमार्थयोः।
विरोधान्न हि सामान्यं वृक्षत्वं वृक्षसिंहयोः ॥"

इति। ततश्च प्रत्यर्थं शक्तिकल्पनागौरवप्रसङ्ग इत्यर्थः। सत्पदप्रवृत्तिनिमित्तमनुगतं दर्शयन् परिहरति—**तदसदिति** ॥ कथं तर्हि सत्तात्रैविध्यम्? अत्राह—**तच्चेति** ॥

रजताद्यर्थिप्रवृत्तिगोचरत्वानुपपत्त्या न रजतादेरलौकिकत्वमिति चोदयति—

---

1. सर्वत्रशब्दस्य प्रति
2. दृष्टमिदं वेति (क)
3. कुण्डलान्तर्गतं नास्ति।
4. कुण्डलान्तर्गतस्थाने तथा लौकिकरजतार्थिनः

हितसाधनभावमनुस्मृत्य सम्प्रत्युपलभ्य[1]मानस्यापि तज्जातीयतया तमनुमाय तत्कामनया तत्र प्रवर्तन्त इति युक्तम्। न चालौकिके तज्जातीयता, तथा सत्यलौकिकत्वव्याघातात्—इति, नैतदपि चतुरश्रम्, यद्यलौकिके तज्जातीयता न प्रतीता, कथं तर्हि नालौलिकस्य तज्जातीयतेति तावकप्रतिषेधो युज्येत? अप्रसक्तप्रतिषेधेऽतिप्रसङ्गात्। तज्जातीयत्वमारोपितं प्रतिषिध्यत इति चेत्, तर्हि, आरोपिततज्जातीयत्वादेव समीहितहेतुतानुमानेन प्रवृत्तेरप्युपपत्तिः। तथापि कथमर्थक्रियासामर्थ्यविरहिणि प्रवृत्तिरिति चेत्, न; तुल्यत्वात्। न [2]ह्यन्यथाख्यातावपि शुक्तीदमंशसंभिन्नतया प्रतीतरजतस्यार्थक्रियासामर्थ्यमस्ति ॥

॥ एकसत्तावादेन वा रजते सत्प्रतीत्युपपत्तिः सत्तादात्म्यमात्रमादाय,
सत्त्वैक्यवादेऽप्यनिर्वचनीयख्यात्यावश्यकता च ॥

यद्वा—अधिष्ठानेदमंशसंसर्गवत् तत्सत्तासंसर्गोऽप्यविद्यामये रजते समारोप्यते, ततस्तन्निमित्तः सच्छब्दः, तदनुविद्धश्च प्रत्ययस्तत्रोपपद्यते। ननु—यद्यधिष्ठानगतैव तात्त्विकी सत्ता [3]रजतादिष्वारोपिता सद्व्यवहारं प्रवर्तयेत्, रजतरूपमपि तर्हि लौकिकं प्रागवसितमिदमंशसम्भेदेनारोप्यताम्। यथा च सत्ताया रूप्यसंसर्गमात्रं भवन्मते साध्यम्, तथा रूप्यस्यापि पौरस्त्यसम्भेदमात्रं [1]साध्यं भविष्यतीत्येवमप्युप-

---

**नन्विति** ॥ **तमनुमायेति** ॥ विमतम्, हितसाधनम्, रजतजातीयत्वात्; पूर्वानुभूतरजतवदिति हितसाधनभावमनुमायेत्यर्थः। अलौकिके रजतादौ रजतादिजातीयत्वमप्रतीतम्? प्रतीतं वेति विकल्प्याद्यं दूषयति—**यदीति** ॥ द्वितीयं शङ्कते—**तज्जातीयत्वमिति** ॥ तज्जातीयत्वमात्रं हेतूकृतं नासिद्धमित्याह—**तर्हीति** ॥ कटकादिकार्यार्थिप्रवृत्तिगोचरत्वमलौकिकरजतादेरनुपपन्नमित्याह—**तथापीति** ॥

पूर्वं सत्तात्रैविध्यं स्वीकृत्यानुभवविरोधं पर्यहार्षीत्, सम्प्रति प्रकारान्तरेण परिहरन्नाह—**यद्वेति** ॥ अलौकिकं रूप्यं परिकल्प्यापि संसर्गारोप ऊरीक्रियते चेत्, विपरीतख्यातिरेवास्तु, लाघवादिति शङ्कते—**ननु यदीति** ॥ नेदं रूप्यमिति स्वरूपेण बाधगोचररूप्यस्य नान्यत्र सत्ता कल्पनीयेत्यलौकिकमेव रूप्यं कल्पयामः, तत्राह—**यथा चेति** ॥ **एवमप्युपपत्तेः** ॥ भ्रमबाधयोरिति शेषः। अपरोक्षत्वानुपपत्ति-

---

1. उपपद्यमानस्यापि (क) 2. नन्वन्यथा
3. रज्ज्वादिष्वारोपिता

पत्तेः किमलौकिकाधिष्ठानाविद्याजनितरजतान्तरपरिकल्पनव्यसनेन ?[2] तद[3]युक्तम् ; इन्द्रियासन्निकृष्टलौकिकरजतस्यापरोक्षभावासम्भवस्याभिहितत्वात् , पौरस्त्यरजतसम्भेदमात्रबाधे बाधबोधादूर्ध्वमुभयोरप्यत्रैव बाधितसम्भेदयोरिव वनस्पत्योरुपलम्भप्रसङ्गाच्च ॥

॥ असन्निहितस्य रजतस्य संनिहितेदन्तादात्म्येन प्रत्यक्षानुपपत्त्याऽप्य-
निर्वचनीयख्यातिः ॥

स्यादेतत्—यत्र हि सन्निहितयोरेव वनस्पत्योरेकतारोपः, तत्र तद्बाधे सत्युत्तरकालं तयोरुपलम्भः, यत्र त्वसन्निहितमेव रूप्यं पौरस्त्यसम्भेदनारोप्यते, तत्र नेदं रजतमिति रूप्यरूपनिषेधेन पौरस्त्यवद्रजतमत्रानुभवगोचरो भविष्यत्य[4]सन्निहितत्वात् —इति, तर्हि सन्निहितयोरेव तादात्म्यारोपः, न सन्निहितासन्निहितयोः; असन्निहितस्य साक्षाद्भावानुपपत्तेः । अतो रूप्यं स्वरूपेणैव पौरस्त्यविशेषानवगमपरिकल्पितमित्यस्तु व्यवस्था ॥

॥ नेदं रजतमिति कालविशेषानवच्छेदेन प्रतिषेधोपपत्तिः,
अत्र निषेधस्य बाधरूपत्वात् ॥

तथाप्येतावन्तं कालमिहासीद् रजतम् , नाधुना तदिति प्रतिभासेत — यथा खलु—मुद्गराभिघातादनन्तरमेतावन्तं कालमिहासीत् कुम्भः, नाधुनेति प्रतीतिः । न पुनर्नेदं रजतमित्यविशेषेण पौरस्त्यरजतसम्भेदप्रतिषेधो भवेदिति चेत् , न ; यत्र

---

सिद्धत्वादलौकिकत्वकल्पना न गौरवायेति परिहरति— **तदयुक्तमिति** ॥ यदुक्तं रजतस्य पौरस्त्यतादात्म्यमात्रं बाध्यमिति, तद् दूषयति—**पौरस्त्येति** ॥

बाधितसम्भेदयोरिव वनस्पत्योरित्युक्तदृष्टान्तं विघटयति—**स्यादेतदिति** ॥ असन्निकृष्टस्य सन्निकृष्टेन सम्भेदारोपोऽपि तत एव न स्यादित्याह — **तर्हीति** ॥

अविशेषेण नेदं रूप्यमिति पौरस्त्यसंभिन्नरूप्यप्रतिषेधविरोधं शङ्कते — **तथापीति** ॥ द्विविधो लयः कार्यस्य—कारणापत्तिः, सकारणस्य निवृत्तिश्चेति । तत्र प्रथमे नाविशेषनिषेध इत्याह—**नेति** ॥ द्वितीये तु तत्त्वज्ञानमेव निवर्तकम् ,

---

1. बाध्यं
2. व्यसनेन इति
3. तदुक्तमिन्द्रिया
4. भविष्यसन्निहित (क)

कार्यस्य कारणसंसर्गो लयः, तत्र तथा प्रतीतिः, यत्र त्वधिष्ठानतत्त्वज्ञानात् सनिदानकार्यनिवृत्तिः, तत्राविशेषेण प्रतिषेधप्रतीतिरनुवादो जायत इत्यविरोधात् । नायं प्रतिपन्नरजतनिषेधो नेदं रजतमिति, किन्तर्हि ? लौकिकपरमार्थरजताविशेषेण निषेध इति **केचिदाचार्याः** ॥

॥ व्यावहारिकरजततादात्म्यापन्नप्रातिभासिकरजतमिदं
रजतमित्यत्र भासते । तच्च नान्यथाख्यातौ ॥

यः पुनराह—तस्य किं पौरस्त्यसम्भेदेनासतोऽपि तथा प्रसक्तस्य प्रतिषेधः ? [1]किमत्राप्रसक्तस्य ? पूर्वस्मिन्नन्यथाख्यातिः, उत्तरस्मिन्नप्यनुभवविरोधः । प्रसक्तप्रतिषेधरूपो हि प्रत्ययो नेदं रजतमिति प्रतिषेधोऽनुभूयते—इति, स इत्थं [2]शिक्षणीयः—तस्य पौरस्त्यरजततादात्म्यमपौरस्त्यरजतस्य रजतार्थिप्रवृत्तिगोचरत्वेन [3]परिकल्पितमविद्याविलसितं सदसद्विलक्षणमेवेति कुतोऽन्यथाख्यातिप्रसक्तिरिति ? सन्निहितासन्निहितयोस्तर्हि तादात्म्यारोपोऽङ्गीकृत इति चेत् , सत्यम्; तथापि [स]नान्यथाख्यातौ

---

तत्सिद्धानुवादमात्रं नेदं रूप्यमित्यादिज्ञानमित्याह—**यत्र त्विति** ॥ अलौकिकरूप्यस्य लौकिकरूप्यसम्भेदविषयोऽयमविशेषप्रतिषेध इति **विवरणकृतां** मतमाह—**नायमिति** ॥

अत्र **न्यायमुक्तावलीकारः** प्रत्यवतिष्ठत इत्याह—**यः पुनरिति** ॥ **तस्येति** ॥ लौकिकपरमार्थरूप्यस्य तथा प्रसक्तस्य पौरस्त्यसम्भेदेन प्रतीतस्यानुभवविरोधं स्पष्टयति—**प्रसक्तप्रतिषेधेति** ॥ अपौरस्त्यस्य पौरस्त्यतादात्म्यं सदसद्विलक्षणं प्रतीतिसच्चेति नानुभवविरोधः, नाप्यन्यथाख्यातिरित्याह—**स इति** ॥ तादात्म्ये सदसद्विलक्षणत्वेऽपि सन्निहितासन्निहितयोर्नैक्तारोप इति यदुदीरितं पुरस्तात् , तदेवं सति भज्यत इत्याह—**सन्निहितेति** ॥ सन्निकृष्टयोस्तादात्म्यारोपप्रतिषेधस्यान्यथाख्यातिनिषेधे तात्पर्यमिति परिहरति—**सत्यमिति** ॥ अविद्याविलसितरूप्यस्याप्यनिन्द्रियसन्निकृष्टस्यापरोक्षत्वानुपपत्तिः तुल्या, अत्राह—**अस्माकं त्विति** ॥

---

1. किमत्रासक्तस्य 2. विशेषणीयः
3. परिकल्प्य तमविद्या (क)

युज्यते, असन्निहितस्यासतश्चापरोक्षत्वानुपपत्तेः । अस्माकं त्वविद्याविलसितमारोपितमिदमंशावच्छिन्नचैतन्यसम्भेदादपरोक्षधीगोचरतामाचरति, इति न विरोधः । तस्मात् ख्यातिबाधानुपपत्त्या सिद्धमनिर्वाच्यत्वम् ॥

॥ अविवेक-व्यवहार-तद्योग्यताविच्छेदस्य न बाधत्वमिति तस्य दुर्निरूपत्वम् ॥

ननु—कोऽयं बाधो नाम ? न तावदविवेकनिवृत्तिः ; विवेकज्ञानमात्रस्य बाधकत्वप्रसङ्गात् । नापि व्यवहारनिवृत्तिः ; अतदर्थिनां व्यवहारानुदये बाधप्रसङ्गात् । नापि तद्योग्यताविच्छेदः ; कालान्तरे तत्रैव भ्रान्तव्यवहारदर्शनात् । नाप्यसन्निहितस्य सन्निहिततादात्म्यं बाध्यम् ; तदभावबोधो[1] बाधः ; भिन्नविषयत्वे च तदयोगात् ॥

यथाहुः—

अस्तिनास्तिधियोरेकमेयत्वे सुदृढाऽस्तिधीः ।
तथैव भिन्नमेयत्वे नातो बाध्यास्तिधीर्धिया ॥

इति । सति विरोधे बाध्यबाधकत्वं विषयभेदेऽपीति चेत्, न ; [2]वित्ती चेदुभयमावेदयतः, को नाम विरोधः ? रूपरसवदित्याचार्यवचनात् ॥

॥ उपादानरूपाविद्यानिवृत्तिर्बाध इति तन्निरूपणद्वारा रूप्यस्याविद्याविलसितत्वोपसंहारः ॥

उच्यते— कार्याकारपरिणताज्ञाननिवृत्तिर्बाधः । तन्निवर्तकमधिष्ठानतत्त्वज्ञानं

---

बाधस्यैव दुर्विवेकत्वात् कथं तदनुपपत्तिरनिर्वचनीयसाधिकेत्याह—**नन्विति** ॥ अविवेकनिवृत्तिः, व्यवहारनिवृत्तिर्वा, व्यवहारयोग्यतानिवृत्तिर्वा, सन्निहितासन्निहिततादात्म्यनिवृत्तिर्वेति विकल्पः ॥

बाध्यबाधकयोर्भिन्नविषयत्वमादाय शङ्कते -- **सति विरोध इति** ॥

मतान्तरे दुर्निरूपोऽपि बाधोऽस्मन्मते सुनिरूप इत्याह—**उच्यत इति** ॥ ज्ञानाज्ञानयोरेकविषयत्वे, अनेकविषयत्वे च बाध्यबाधकभावो न भवेत्, प्रमाणाभावाच्चेति, अत आह—**ज्ञानस्येति** ॥ प्रकाशात्मनो ज्ञानस्य प्रदीपस्येव स्वविषया-

---

1. तदभावबाधो बोधः 2. वृत्ति

बाधकम् । ज्ञानस्याज्ञाननिवर्तकत्वं च लोकप्रसिद्धं न प्रमाणमपेक्षते । तदेवं पक्षान्तरे बाधासिद्धेः, सदसद्गोचरविज्ञानयोर्मिथ्यात्वासिद्धेश्च बाधानुपपत्त्या ज्ञानसमवायिमिथ्यात्वानुपपत्त्या च सदसद्विलक्षणं रूप्यमानाद्यविद्याक्रीडितमिति सिद्धम् ॥

**॥ इति न्यायचन्द्रिकायामनिर्वाच्यत्वनिरुक्तिप्रकरणं द्वितीयम् ॥**

—: * :—

---

वरणतमोनिवर्तकत्वं प्रसिद्धमित्याशयः । रजतादिगोचरमिथ्याज्ञानमिति लौकिकपरीक्षकसम्मतम्, तदेतज्ज्ञानगतं मिथ्यात्वं ज्ञेयस्य भावत्वेऽभावत्वे चानुपपन्नं भावाभावविलक्षणं ज्ञेयं कल्पयतीति प्रमाणान्तरं दर्शयन् प्रकृतं निगमयति—**तदेवमिति** ॥

**॥ इति न्यायचन्द्रिकाविवरणेऽनिर्वचयत्वनिरुक्तिप्रकरणं द्वितीयम् ॥**

—: * :—

## ॥ अथ न्यायचन्द्रिकायामविद्याया भावरूपत्वोपादानत्वप्रकरणं तृतीयम् ॥

॥ रजतस्यासत्यस्य सत्योपादानकत्वासम्भवादसत्यमेवाज्ञानमुपादानं कार्यानुपपत्त्या स्वीकरणीयम् ॥

अथोच्येत—अविद्याया विद्याऽभावत्वादनुपादानत्वम्; अन्यस्या मिथ्याज्ञान-संशयस्वप्नानध्यवसायव्यतिरेकिण्या अप्रमाणत्वात् [इति,] तदयुक्तम्; भावरूपानाद्यज्ञानस्याविद्यापदवेदनीयस्य[1] कार्यतस्सिद्धेः। तथा हि—पौरस्त्यसम्भेदेन प्रतिभासमानं रजतम्, तज्ज्ञानं च कादाचित्कत्वात् कारणसापेक्षम्। न च निमित्तकारणमात्रात् कार्यसिद्धिः; ध्वंसातिरेकिणः कार्यस्योपादानाविनाभावात्। न चात्यन्तासतो गगनकमलिनीकल्पस्योपादानभावः सम्भवी। न च सदेव साक्षादुपादानम्; सदुपादानत्वे वस्त्वन्तरवत् सत्यत्वापत्तेः, एकेन चानादिनोपपत्तौ तद्बहुत्वायोगाल्लाघवतर्क[2]-साहाय्यानुसरणेनानाद्यनिर्वाच्यं रजताद्युपादानं कार्यतः कल्पितम्॥

तच्च ज्ञानविरोधित्वादज्ञानमिति[3] गीयते। सत्योपादानस्य सत्यत्वमिति कुत्रावसितेयं व्याप्तिः? घटादाविति चेत्, न; तर्हि सदद्वैतम्; सत्योपादानस्य घटादेः

---

## ॥ अथ न्यायचन्द्रिकाविवरणेऽविद्याया भावरूपत्वोपादनत्वप्रकरणं तृतीयम् ॥

अविद्याविलसितं रजतादीत्युपश्रुत्यासहमानः शङ्कते—**अथेति**॥ विद्याभावत्वादितरस्या एवाविद्याया भ्रान्त्युपादानत्वं ब्रूमः, अत आह—**अन्यस्या इति**॥ प्रमाणत्वहेतोरसिद्ध्या परिहरति—**तदिति**॥ भ्रान्तितद्विषयौ, सोपादानौ, ध्वंसातिरेकिकार्यत्वात; घटवदिति सिद्धेऽप्युपादाने तदनिर्वाच्यं कुतः? असतः, सतो वा तदुपादानत्वसम्भवात्, अत्राह—**न चेति**॥ अनिर्वाच्यत्वमुपपाद्यानादित्वमुपपादयति—**एकेनेति**॥ भ्रमाद्युपादानमनाद्यनिर्वचनीयं किञ्चिदस्तु, तदज्ञानत्वं कुतस्त्यम्? अत्राह—**तच्चेति**॥ सदुपादानत्व इत्यादि यदुदितम्, तच्चिदानन्देऽपि घटयति—**सत्येति**॥ यत् सत्योपादानम् तत् सत्यमिति व्याप्तिर्नास्ति? किमस्ति? प्रथमे मूलशैथिल्यादित्यर्थः। द्वितीयं शङ्कते—**घटेति**॥ व्यावहारिकसत्ययो-

---

1. स्या
2. तर्कस्याऽऽहार्यानुस
3. मिति सत्यो (क)

सत्यत्वात्—इति, तद् मन्दम्; सति प्रमातरि बाधाभावस्यात्र सत्यत्वेनोपादानात् ॥

॥ ज्ञानस्यात्मपरिणामत्वासम्भवाद् भाट्टदृष्ट्या ज्ञानाभावो नाज्ञानम् ॥

ज्ञानाभावोऽज्ञानमिति कौमारिलैः कथ्यते ? तार्किकैर्वा(?) न तावदाद्यश्चतुरः । तथा हि—ज्ञानमात्मनः परिणामः, तदभावोऽज्ञानमिति तत्स्थितिः । यत उक्तम्—

"प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव इष्यते ।
सात्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनि ॥"

—इति । तदपेशलम्; आत्मनो नित्यनिरवयवसर्वगतस्य गगनादिवत् परिणामानुपपत्तेः, अपरिणामस्य [1]ज्ञानत्वे सदा ज्ञत्वप्रसङ्गात् । आत्मा हि किमेकदेशेनैव परिणमते ? सामस्त्येन वा ? नाद्यः; अनवयत्वात् । द्वितीये [2]सामस्त्येनैकज्ञानरूपेण परिणतत्वे तदतिरिक्तापरिणतरूपाभावात्, तस्य च क्षणिकत्वात् क्षणिकज्ञानात्मवादप्रसङ्गः । किञ्च परिणामोऽपि किमपरिणतस्य ? परिणतस्य वा ? परिणिनमिषोर्वा ? आद्ये पूर्वरूपे स्थिते ? नष्टे वा ? न पूर्वः; पूर्वरूपविरोधात् । नोत्तरः; परिणमितुरभावात् । न द्वितीयः; अनवस्थानात् । परिणिनमिषाऽपि न तद्रहितस्य; विरोधात् । नापि तद्वतः; अनवस्थानात् । तस्माद् नात्मनः परिणामो ज्ञानम् ॥

॥ गुरुतार्किकदृष्ट्या ज्ञानाभावस्य नाज्ञानत्वम् ॥

प्रभाकरीयदर्शनेऽपि दर्शनाभावस्यादृष्टस्वरूपत्वात् तस्य च नित्यत्वात् सदैवादृष्टं[3] प्रसिद्धम् । तार्किकमतेऽपि ज्ञानाभावानां सुलभत्वात् सदैवाज्ञत्वप्रसङ्गः ।

---

व्याप्यव्यापकयोः सत्त्वेऽपि न परमार्थसदद्वैतव्याकोप इत्याह—**तन्मन्दमिति** ॥

उभयसिद्धज्ञानाभावस्यैवाज्ञानत्वसिद्धौ तदतिरिक्ताज्ञानकल्पनागौरवबाधमाशङ्क्याह—**ज्ञानाभाव इति** ॥ तदनुपपत्तिं प्रथयितुं भाट्टमतमाह – **तथा हीति** ॥ सर्वप्रमाणानर्थक्यप्रसङ्गेन दूषयति—**तदिति** ॥ परिणिनमिषोरिति पक्षे परिणिनमिषारहितस्य सा, तद्वतो वेति विकल्प्य, आद्यं दूषयति—**परिणिनमिषाऽपीति** ॥ द्वितीयमपवदति—**नापीति** ॥

कौमारिलमते प्रतीतिव्यतिरेकस्याज्ञानत्वानुपपत्तावपि गुरुनीतौ तद्भविष्य-

---

1. अपरिणामस्याज्ञानत्वे (क)
2. द्वितीये सादृश्येनैक (क)
3. सदेवादृष्टत्वं प्रसिद्धम्

॥ अनेकाज्ञानकल्पनापत्त्या, एकस्मिन् ज्ञान उदिते सदा ज्ञत्वापत्त्या च न ज्ञानाभावस्याज्ञानत्वम् , अद्वैतमते त्ववस्थामात्रविनाशात् सर्वनिर्वाहः ॥

अथ—एकस्मिन् ज्ञान उदिते तदभावस्वरूपाज्ञानाभावादर्थप्रकाश इति—मतम् , न ; भाविज्ञानाभावानामनेकत्वात् । विरोधिविरहिणामेव तेषामज्ञानत्वमिति चेत् , न ; सत्सु विरोधिषु ज्ञानोत्पत्त्ययोगात् , उत्पत्तौ वा तेषां निवृत्तिप्रसङ्गात् । अस्माकं तु तत्तत्कालीनार्थावरणभूताज्ञानावस्थानामनन्तत्वादेकज्ञानोत्पत्तौ तत्तत्कालार्थप्रकाशो[1]पपत्तिः । न च गौरवम् ; प्रामाणिकत्वात् ॥

॥ अज्ञानस्य चतुर्विधज्ञानाभावत्वानुपपत्तिः ॥

किञ्च, नाज्ञानं ज्ञानाभावः ; इतरेतराभावादिविकल्पासहत्वात् । न हि तावदितरेतराभावस्याज्ञानता ; तस्य विषयेऽपि भावात् , ज्ञानानिवर्त्यत्वाच्च, आज्ञानस्य चात्मैकाश्रयत्वात् , ज्ञाननिवर्त्यत्वाच्च । न च प्रध्वंसस्याज्ञानता ; तस्योत्पत्तिसम्भवात् , अज्ञानमुत्पन्नं ममेति च प्रतीत्यभावात् , अज्ञानस्य च निवृत्तिप्रतीतेः, प्रध्वंसस्य च तदसिद्धेः । अत एव नात्यन्ताभावस्याज्ञानता । नापि ज्ञानप्रागभावोऽज्ञानम् , अभावत्वात् ; प्रध्वंसवत् ॥

---

तीति, अत्राह—**प्राभाकरीयेति** । भावमात्रत्वादभावस्येति भावः । सर्वज्ञानाभावानां समुदितरूपाणामज्ञानत्वादेकस्मिन् विज्ञाने सति तदसत्त्वाद् नोक्तावद्यमित्याह—**अथेति** ॥ एकस्मिन् सति विज्ञाने तदभाव एव न भवति, न तु सर्वज्ञानाभावा न भवन्ति ; तथा सति सर्वज्ञानाभावप्रसङ्गात् । तस्मादावरणबाहुल्यादणुमात्रप्रकाशो न स्यादित्याह—**नेति** ॥ भाविनां ज्ञानानां येऽभावाः, तेषां सुलभत्वेऽपि नाज्ञानत्वमिति शङ्कते—**विरोधीति** ॥

भावाभावान्तरभावयोर्विरोध एव न सम्भवतीति दूषयति—**नेति** ॥ विरोध्यभावकारणत्वस्य निरस्तत्वात् स्वसामग्रीसामर्थ्याद् ज्ञानं जायत इत्याशङ्क्याह—**उत्पत्तौ वेति** । भावाज्ञानराद्धान्ते स्वविषयासिद्धिस्तदवस्था ; न ह्येकज्ञानेनाज्ञाननिवृत्तिः, तथा सति घटज्ञानान्मुक्तिप्रसङ्गात् , अत्राह—**अस्माकं त्विति** । तर्हि प्रतिज्ञानमज्ञानावस्थाभेदकल्पनागौरवम्, अत्राह—**न चेति** ॥ ज्ञानादज्ञाननिवृत्तेरनुभवसिद्धत्वात् , ज्ञानप्रामाण्यानुपपत्तिसिद्धत्वाच्च निवर्त्याज्ञानावस्थाभेदस्येति भावः ॥

---

1. प्रकाशोत्पत्तिः (क)

॥ अज्ञानं न ज्ञानप्रागभावः, न ज्ञानभिन्नम्, न ज्ञानविरोधीत्यर्थत्रये न ज्ञानविरोधीत्यर्थस्वीकार इति न्या य मु क्ता व ली का र शङ्का ॥

यदत्र न्या य मु क्ता व ल्या मुक्तम्—नञस्तावदर्थत्रयमाश्रीयते—तदभावः, ततोऽन्यः, तद्विरुद्धश्चेति। तत्र न तावदज्ञानपदमभावार्थम्; प्रकृते ज्ञानप्रागभावस्य ज्ञानाभावरूपताप्रतिषेधानुपपत्तेः। प्रतिज्ञापदयोर्व्याघातेनेतरेतराभावेन च हेतोरनैकान्तिकत्वात्, प्रध्वंसवदिति दृष्टान्तस्य साध्यविकलत्वात्। अन्यार्थत्वे नञः, नाज्ञानमित्यस्य न ज्ञानादन्य इत्यर्थः स्यात्, तथा सत्यत्रापि प्रागुक्तदोषत्रयानुषङ्गः। ज्ञानप्रागभावस्य ज्ञानादन्यत्राविरोधात्, इतरेतराभावस्य चाभावत्वेऽपि ज्ञानादन्यत्वात्, प्रध्वंसस्य च तथाभावात्। विरुद्धार्थत्वेऽपि [न?] ज्ञानप्रागभावो ज्ञानविरुद्ध इत्यर्थः स्यात्। नैवमपि प्रागुक्तदोषान्निवृत्तिः; प्रागभावाद्यभावत्रयस्यापि प्रतियोगिविरोधित्वात्। ज्ञानविरोधि भावान्तरमस्मदभिप्रेतं चाज्ञानं न भवतीति साध्यार्थश्चेत्, सिद्धसाधनता—इति ॥

॥ आवरणशक्तिमतोऽज्ञानस्य प्रागभावादिरूपत्वनिरासात्, तस्य च भावरूपत्वनैयत्यात्, अज्ञानं न प्रागभावादीत्यनुमानं न दुष्टमिति सिद्धान्तोपक्षेपः ॥

तदप्यविचारितरमणीयम्; 'न किञ्चिदवेदिषम्'इति विषयावरणतयाऽनुभूयमानाज्ञानस्य ज्ञानप्रागभावाद्भेदस्य साध्यत्वात् ॥

---

परोदीरितनिरसनपुरस्सरं स्वकीयहेतुं साधयितुं तच्चोद्यमनुधावति—**यदत्र न्यायेति** ॥ अज्ञानमिति नञोऽभावार्थत्वम्? तद्विरुद्धार्थत्वं, वा? न प्रथम इत्याह—**तत्रेति** ॥ हेतुमाह—**प्रकृत इति** ॥ ज्ञानप्रागभावो नाज्ञानमिति प्रयोग इत्यर्थः ॥

द्वितीयं दूषयितुं पर्यवसितमर्थमाह—**अन्येति**। किमतः? अत्राह—**तथा सतीति** ॥ प्रतिज्ञापदयोर्व्याघातः, इतरेतराभावेऽनैकान्त्यम्, प्रध्वंसवदिति दृष्टान्ते साध्यवैकल्यं चेति दोषत्रयानुषङ्गादित्यर्थः। प्रागुक्तदोषत्रयानुषङ्गेणैव पश्चिमं पराचष्टे—**विरुद्धार्थत्वेऽपीति** ॥ ज्ञाननिवर्त्यभावरूपाज्ञानस्य भावत्वमत्र प्रतिषिध्यते। ततोऽपि नैकोऽपि दोष इत्यशङ्क्याह—**ज्ञानविरोधीति** ॥

किञ्च, ज्ञानविशेषितप्रागभावस्य तदभावत्वतदन्यत्वतद्विरुद्धत्वानि न सम्भवन्ति; ज्ञानस्यापि तत्प्रसङ्गात्, ज्ञानोपलक्षितस्य तथात्वे ज्ञानोपलक्षितत्वमपि विशेषणम्? उपलक्षणं वा? आद्ये भाषितदोषानुषङ्गः, द्वितीये तदुपलक्षितत्वस्याप्युपलक्षणत्वे स्यादनवस्थाप्रसक्तिः। अतो ज्ञानप्रागभावस्य ज्ञानाभावत्वतदन्यत्वतद्विरुद्धत्वाभावसाधनेऽपि न तार्किकपशुकस्य क्रन्दनमत्र युक्ततरमित्यस्मदीया उपहसन्ति ॥

॥ आवरणविक्षेपशक्तिद्वयवदज्ञाने श्रुतिस्मृत्याद्यवलम्बः;
भावरूपाज्ञानवादोपसंहारश्च ॥

अपि च "त इमे सत्याः कामा अनृतामिधानाः" इति छन्दोगश्रुतावनृतमावरणं[णम्]ज्ञानमवगतम्। तथा "नासदासीन्नो सदासीत्"इत्युपक्रम्य "तम आसीत्"इति—**नास[1]दासीये सूक्ते** सदसद्विलक्षणं तमश्शब्दवाच्यमज्ञानमवगतम्। "मायां तु प्रकृतिं विद्यात्"इति च जडोपादानमज्ञानं मायाशब्दवाच्यमन्यत्रावसितम्; प्रकृतिपदस्योपादानवाचित्वात्। मायेति प्रज्ञोच्यत इति चेत्, न;

"तरत्यविद्यां विततां हृदि यस्मिन् निवेशिते।
योगी मायाममेयाय तस्मै विद्यात्मने नमः॥"

इति स्मृतौ मायाऽविद्ययोरेकत्वावगमात्, "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" इति ज्ञानावरणमज्ञानं स्मर्यमाणं न तावदभावो भवितुमुत्सहते।

---

भावानवबोधविजृम्भितमेतत् चोद्यमिति दूषयति—**तदपीति** ॥ एवं प्रामाणिकं परिहारमुदीर्य, प्रौढ्यवलम्बनेन परमुखपिधानायाह—**किञ्चेति** ॥ ज्ञानविशेषितस्याभावस्य ज्ञानाभावत्वादिकम्? उत तदुपलक्षितस्य? नाद्यिमश्चतुर इत्याह—**ज्ञानविशेषितेति** ॥ द्वितीयं कल्पमादाय विकल्प्य दूषयति—**ज्ञानोपलक्षितस्येति** ॥

---

1. नासदीये

अज्ञानम्, नाभावः, आवरणत्वात्; कुड्यादिवदिति प्रयोगाच्च। तस्मात् सदसद्विलक्षणानाद्यविद्या मायादिपदवेदनीया शुक्तिरजतादेरुपादानमिति सिद्धम्॥

॥ इति न्यायचन्द्रिकायामविद्याया भावरूपत्वोपादानत्वप्रकरणं तृतीयम्॥

—:*:—

---

एवं तर्ककलापावष्टम्भेन भावरूपमज्ञानमभिधायागमावष्टम्भेनाह—**अपि चेति**॥ प्रक्रियतेऽनयेति प्रकृतिरिति निमित्तमुच्यत इत्याह—**प्रकृतिपदस्येति**॥

॥ इति न्यायचन्द्रिकाविवरणेऽविद्याया भावरूपत्वोपादानत्वप्रकरणं तृतीयम्॥

---

## ॥ अथ न्यायचन्द्रिकायां ब्रह्मव्यतिरिक्तमिथ्यात्वसाधनप्रकरणं तुरीयम् ॥

अथैवमपि नाद्वैतं प्रसिध्येत्; गगनादिना सत्येन सद्वितीयत्वात्, मैवम्; तस्य [1]मृषात्वात् । विवादपदम्, मिथ्या, अनात्मत्वात्, जडत्वात्, दृश्यत्वच्च; शुक्तिरजतवत् ॥

॥ मिथ्यात्वस्य षोडशधा विकल्पः ॥

आह — किमिदं मिथ्यात्वं नाम? भ्रान्तिविषयत्वं [2]वा? बाधविषयत्वं वा? प्रमाविषयत्वाभावो वा? अनिर्वाच्यत्वं वा? अभावत्वं वा? अभावप्रतियोगित्वं वा? सत्तारहितत्वं वा? अकारणत्वं वा? अप्रमाविषयत्वं वा? सर्वनिष्ठात्यन्ताभावप्रतियोगित्वं वा? कालत्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा? [3](कालानाश्रितत्वं वा?) अलौकिकत्वं वा? ज्ञानातिरिक्ताभावो वा? ज्ञानव्यतिरिक्तविषयाभावो वा? प्रमाविषयत्वात्यन्ताभावो वा?

॥ भ्रान्तिविषयत्व-बाधविषयत्व-प्रमाविषयत्वाभावानिर्वाच्यत्वाभावत्वाभावप्रतियोगित्वानां षण्णां न मिथ्यात्वरूपत्वम् ॥

न तावदाद्यः; [ब्रह्मणि व्यभिचारात्, असिद्धेश्च ;] सर्वस्यास्माभिर्भ्रान्तिविष-

---

## ॥ अथ न्यायचन्द्रिकाविवरणे ब्रह्मव्यतिरिक्तमिथ्यात्वसाधनं तुरीयं प्रकरणम् ॥

भ्रमगोचररूप्यादेरनिर्वचनीयत्वेऽपि नाद्वैते त्रय्यन्तसमन्वयः प्रतिष्ठां लभते; भेदग्राहिप्रत्यक्षादिविरोधादित्याह—**अथेति** ॥ प्रपञ्चमिथ्यात्वमागमिकमपि तार्किकाननुमानरुचीन् प्रत्यनुमानेनैवा[वो]पगमयितुमाह—**विवादपदमिति** ॥

साध्य[ा]निरुक्त्या साधनं दूषयितुं वा दी न्द्रः प्रत्यवतिष्ठत इति दर्शयति—**आहेति** ॥ सत्यस्य ब्रह्मणो भ्रान्तिविषयत्वेन तत्र व्यभिचाराद् न प्रथमश्चतुर इत्याह —**न तावदिति** ॥ सा[ बा ]ध्यत्वस्य पक्षनिक्षेपे तत्र बाध्यत्ववृत्तौ स्ववृत्तिविरोधात, बाध्यत्वान्तरा[र]वृत्तावनवस्थानात्, पक्षबहिर्भावे तेन व्यभिचाराच्चेति स्थिते

---

1. दृष्टान्तत्वं । (क)
2. भ्रान्तिविषयत्वं वा बाधाविषयत्वं वा प्रमाविषय
3. कुण्डलान्तर्गतं नास्ति

यत्वानङ्गीकारात् । न द्वितीयः ; तत एव, सर्वभ्रान्तीनां बाधकानङ्गीकारात् । न तृतीयः ; प्रमाविषयत्वाभावस्याप्रसिद्धत्वेनाप्रसिद्धविशेषणत्वात् । न चतुर्थः ; पञ्चमप्रकाराज्ञाननिवृत्तेः पक्षान्तर्भावे तस्मिन् भागेऽनिर्वाच्यत्वसाधने बाधात्, पक्षानन्तर्भावे तत्रैव व्यभिचारात् । नापि पञ्चमः ; अभावप्रपञ्चधर्मित्वे सिद्धसाधनात्, भावप्रपञ्चधर्मित्वे बाधात्, अभावाभावत्वेन सिद्धसाधनाच्च । नापि षष्ठः ; अविवादात् ॥

॥ सत्तारहितत्वाकारणत्वाप्रमाविषयत्वानां सप्तमादिनवमान्तानां
मिथ्यात्वानां निरासः ॥

नापि सप्तमः ; सामान्यादिधर्मित्वे सिद्धसाधनात्, द्रव्यादिधर्मित्वे सत्तायाः क्वचि[1]दसिद्धौ तदभावस्याप्रसिद्धत्वात्, द्रव्यादावेव तत्सिद्धौ बाधात् । नाप्यष्टमः ; अन्त्यमुक्तिव्यतिरिक्तप्रपञ्चधर्मित्वे बाधात्, [2]अन्त्यमुक्तिधर्मित्वे सिद्धसाधनात् । नापि नवमः ; सर्वस्यापि भ्रम[प्रमा]विषयत्वाङ्गीकारात् ।

॥ सर्वदेशकालान्यतरनिष्ठात्यन्ताभावप्रतियोगित्वं न मिथ्यात्वम् ;
कतिपयाश्रितत्वानाश्रितत्वादिसिद्ध्याऽर्थान्तरात् ॥

---

दोषान्तरादपि न द्वितीय इत्याह — **नेति** ॥ ब्रह्मणि व्यभिचाराच्चेत्याह— **तत एवेति** ॥ अभावत्वं मिथ्यात्वमिति पञ्चमं परास्यति— **नापीति** । भावाभावभेदेन द्विधा प्रपञ्चः । तत्राभावस्य धर्मित्वम्, भावस्य वा । आद्यं प्रत्याह— **अभावेति** ॥ भावधर्मित्व एवाधिकमाह— **अभावेति** । भावस्याभावाभावत्वादभावत्वसाधकं सिद्धसाधनमिति भावः । अभावप्रतियोगित्वं मिथ्यात्वमिति पक्षं प्रतिक्षिपति— **नापीति** ॥ सर्वस्यापि स्वदेशेतरदेशनिष्ठाभावप्रतियोगित्वेन सिद्धसाधनादित्यर्थः ॥

सत्तारहितत्वं मिथ्यात्वं सामान्यादौ साध्यते ? द्रव्यादौ वा ? प्रथमं प्रत्याह — **सामान्यादीति** ॥ द्वितीये सत्ता किमप्रसिद्धा ? द्रव्यादावेव सिद्धा ? आद्यं प्रत्याह— **द्रव्यादीति** । अर्थक्रियाकारित्वं सत्त्वं तदभिमतं [ तद्रहितत्वं ] मिथ्यात्वमित्यत्रापि किमन्त्यमुक्तिव्यतिरिक्तस्य धर्मित्वम्, अन्त्यमुक्तेर्वेति विकल्प्य दूषयति— **अन्त्यमुक्तीति** ॥

---

1. क्वचित्सिद्धौ    2. कुण्डलान्तर्गतं नास्ति ।

नापि दशमः ; कतिपयाश्रितत्वसिद्ध्याऽर्थान्तरत्वात् । नाप्येकादशः ; कालत्रयव्यतिरिक्ताश्रयत्वसिद्ध्याऽर्थान्तरत्वात् । नापि द्वादशः ; कालत्रयातिरिक्तमात्राश्रितत्वसिद्ध्याऽर्थान्तरत्वात्, पक्षत्रयेऽप्यनाश्रितत्वसिद्ध्याऽर्थान्तरत्वाच्च, अनाश्रितत्वेऽपि कालवत् सत्त्वोपपत्तेः । कालोऽपि, कालाश्रितः, प्रमेयत्वात्; कालगुणवदिति चेत्; पृथिव्यादिरूपादौ व्यभिचारात् । तान्यपि कालाश्रितानीति चेत्, न; कालस्य प्रत्यक्षत्वापत्तेः । रूपादिसमवायः काले नास्तीति चेत्, न; तत्रैव व्यभिचारस्य दुर्वारत्वात् ॥

॥ अलौकिकत्व-ज्ञानाभावत्व-ज्ञानव्यतिरिक्तविषयाभाव-प्रमाविषयत्वात्यन्ताभावानां न मिथ्यात्वम्, इति मिथ्यात्वनिर्वचनासम्भवोपसंहारः ॥

नापि त्रयोदशः ; [1]अलौकिकत्वानिरुक्तेः । अलौकिकत्वं किं प्रमाविषत्वात्यन्ताभावः? कार्याजनकत्वं वा? नाद्यः; दूष्यत्वात् । न द्वितीयः; बाधात् । नापि चतुर्दशः; अप्रसिद्धविशेषणत्वात् । नापि पञ्चदशः; पूर्वोक्तदोषात् ।

---

**कतिपयेति** ॥ सर्वनिष्ठात्यन्ताभावः=सर्वस्मिन् वृत्तेरभावः । स च कतिपयवृत्तित्वमाक्षिप्यापि पर्यवस्यतीत्यर्थान्तरमित्यर्थः । **कालेति** ॥ कालत्रयान्यस्मिन्नेव यद् वर्तते, तस्यापि कालत्रयनिष्ठात्यन्ताभावप्रतियोगित्वं सत्यत्वेऽपीप्यर्थान्तरमित्यर्थः ॥ एवमसाधारणभङ्गमभिधाय पक्षत्रयसाधारणं भणति—**पक्षत्रयेऽपीति** । समनन्तरपक्षत्रय इत्याशयः । अनाश्रितत्वं मिथ्यात्वाविनाभूतमिति तत्सिद्धौ मिथ्यात्वसिद्धेर्नार्थान्तरत्वम्, अत्राह—**अनाश्रितत्वेऽपीति** । **कालवदिति** दृष्टान्ते साध्यवैकल्यं शङ्कते—**कालोऽपीति** । रूपादीनामपि पक्षैकदेशत्वान्न तत्र व्यभिचार इत्याह—**तानीति** ॥ उद्भूतरूपादिविशेषगुणसम्बद्धे द्रव्ये चक्षुरादेः प्रवृत्तत्वात् कालस्य चाक्षुषत्वादिप्रसङ्ग इत्याह – **नेति** ॥ प्रसङ्गपरिहारं शङ्कते—**रूपादीति** ॥

**अप्रसिद्धविशेषणत्वादिति** ॥ ज्ञानव्यतिरिक्तस्य प्रसिद्धत्वे बाधात्, अप्रसिद्धत्वे तदभावसाध्यस्याप्यप्रसिद्धत्वादिति भावः । **पूर्वोक्तदोषादिति** ॥ ज्ञानव्यतिरिक्तस्य विषयत्वं व्यवहारपदत्वम्, तस्य प्रसिद्धत्वे बाधात्, अप्रसिद्धत्वे तदभावस्याप्रसिद्धत्वादित्यर्थः । प्रमाविषयत्वात्यन्ताभावस्य किमप्रमितत्वम्?

---

1. त्रयोदशः शब्दलौकिकत्वानिरुक्ते

नापि षोडशः ; तस्याप्रमितावप्रसिद्धविशेषणत्वात्, पक्षादन्यत्र प्रमेयेऽप्रमेये वा तत्प्रसिद्धौ व्याघातात्, पक्ष एव तत्सिद्धौ साधनवैयर्थ्यात्, पक्षस्य वाप्रमितावाश्रयासिद्धेः, प्रमितौ च व्याघातात्, पक्षनिष्ठप्रमितत्वाभावानुमितेश्च प्रमात्वे व्याघातात्, अप्रमात्वे[च]तदसिद्धेः—इति । तदेवं मिथ्यापदार्थानिरुक्तेर्न द्वैतमिथ्यात्वानुमानमिति ॥

॥ बाध्यत्वं मिथ्यात्वम् । सर्वस्य पररूपेण बाध्यत्वमिति
सत्ख्यातिवादस्तु न युक्तः ॥

अत्रोच्यते—

मिथ्यात्वं नाम बाध्यत्वं सङ्गिरन्ते विपश्चितः ।
बाधाभावोपलक्ष्यं यत् तत् सत्यमिति हि स्थितिः ॥ ५३ ॥

बाधगोचरत्वं मिथ्यात्वमिह साध्यते । न चैवम्—सर्वस्यापि स्वरूपेण सतः पररूपेण भ्रान्तिगोचरस्य ताद्रूप्येण बाध्यत्वोपगमात् सिद्धसाधनतेति—वाच्यम्; विकल्पासहत्वात् । तथाहि—सतः पररूपमात्रं भ्रान्तिगोचरः? बाध्यस्वरूपमपि वा ? आद्ये तत्पर[1]रूपं स्वरूपाद्भिन्नम्? अभिन्नम्? भिन्नाभिन्नं वा? आद्ये कथं सर्वस्य भ्रान्तिगोचरतया बाध्यत्वेन सिद्धसाधनत्वम्? स्वरूपस्याबाध्यत्वात् । न द्वितीयोऽपि;

---

प्रमितत्वं वा? प्रथमं पराकरोति—**तस्येति** ॥ प्रमितत्वमपि पक्षादन्यत्र, पक्ष एव वा? नाद्योऽनवद्य इत्याह—**पक्षादिति** ॥ द्वितीये साध्यस्य प्रमाणान्तरसिद्धत्वात् सिद्धसाधनतेत्याह—**पक्ष एवेति** । पक्षोऽपि प्रमितः, न वा । चरमं प्रत्याह—**पक्षस्येति** ॥ प्रमाविषयत्वात्यन्ताभावस्य पक्षनिष्ठत्वेन यत्साधनमनुमानज्ञानम्, तत् प्रमा, न वा । प्रथमस्यैवानुमानस्य गोचरे धर्मिणि प्रमिते प्रमाविषयत्वात्यन्ताभावो व्याहन्यत इत्याह—**पक्षनिष्ठेति** ॥ द्वितीयं दूषयति—**अप्रमात्वे चेति । तदसिद्धेरिति** ॥ प्रमाविषयत्वात्यन्ताभावासिद्धेरित्यर्थः ॥

बाधाभावोपलक्षितस्वरूपस्य सत्यत्वात् तद्विपरीतं बाध्यत्वं मिथ्यात्वमिह साध्यमिति सिद्धान्तयति—**अत्रेति** ॥ स्वरूपविभ्रमगोचरतया बाध्यमिति द्वितीयः कल्पः, तं पररूपं स्वरूपादभिन्नमिति कल्पेऽन्तर्भाव्य समानन्यायतया दूषयति—**न द्वितीय इति** ॥ स्वपररूपयोरेकत्वे स्वपरशब्दयोः पर्यायत्वप्रसङ्गात् । सर्वस्य बाध्यत्वे प्रमाणतदाभासविवेकासम्भावात् सर्वं भ्रमगोचरो बाध्यमित्यपि न सम्भवति;

---

1. तत्पररूपाद्भिन्न

[वि]भ्रमगोचरपररूपस्य दृष्टान्तभागस्य विवादपदेन व्यवच्छेदात् । न तृतीयः ; भेदाभेदयोर्विरुद्धरूपयोरेकोपाधावसम्भवात्, दृष्टत्वादविरोधे द्वौ चन्द्रावेकश्चन्द्र इति दृष्टत्वात् चन्द्रद्वित्वमपि वास्तवं स्यात् ॥

॥ ज्ञाननिवर्त्यत्वं बाध्यत्वं वा मिथ्यात्वमनिर्वचनीयख्यातौ ॥

कः पुनरयं बाधो विवक्षितः ? यद्यत्यन्तासत्त्वबोधनम्, संसर्गमात्रासत्त्वबोधनं वा, तर्हि तादृश[ग्]बाधगोचरभावे प्रपञ्चस्यासत्त्वम्, अन्यथाख्यातिगोचरभावो वा साध्य इत्यपसिद्धान्तापात इति चेत्, न; ज्ञाननिवर्त्यत्वस्य बाध्यत्वात् ॥

॥ मिथ्यात्वानुमानस्य मिथ्यात्वे व्यभिचारशङ्का
सत्यत्वानुमानेऽपि समाना ॥

अथ तादृशमपि बाध्यत्वं धर्म्यन्तर्गतम्, अनन्तर्गतं वा । आद्ये तस्मिन्नेव भागे तत्साधने बाधः, बाध्यत्वान्तरसाधनेऽनवस्था । द्वितीये सा[बा]ध्यत्वेन व्यभिचारो हेतुकलापस्येति चेत्, न प्रपञ्चसत्यत्वमपि भवताम्, प्रतिज्ञासाध्यम्[असत्य]त्वे मिथ्यात्व-

---

कस्यापि प्रमाणासाध्यत्वादिति भावः । तस्मात् पररूपं स्वरूपादतिरिक्तमुपेतव्यम्, तस्य च विवादपदविशेषणेन व्यवच्छेदात् कुतः सिद्धसाधनतेत्याह— **विभ्रमेति** ॥ सर्वस्य सत्ताद्यनुगतरूपेणाभिन्नत्वं प्रातिस्विकव्यावृत्तरूपेण भिन्नत्वं च दृष्टत्वादविरुद्धम्, अत आह— **दृष्टत्वादिति** ॥

बाधस्य भवतो दुर्निरूपत्वाद् बाध्यत्वं नाम साध्यं न सम्भवतीति भावेनाक्षिपति— **कः पुनरिति** ॥ सत्त्वेन सम्पन्नस्यात्यन्तासत्त्वसंवेदने शून्यत्वं साध्यं स्यात् । संसृष्टतया प्रतीतस्य संसर्गमात्रासत्त्वज्ञानगोचरत्वेऽबाध इत्युक्तशङ्कामनुवदति— **यदीति** ॥ अपसिद्धान्तं नाम निग्रहं प्रसञ्जयन् परास्यति— **तर्हीति** ॥ **तादृगिति** ॥ अत्यन्तासत्त्वसंवेदनविषयत्वे शून्यत्वं साध्यं स्यात्, संसर्गमात्रासत्त्वज्ञानगोचरत्वेऽन्यथाख्यातिगोचरत्वं साध्यं स्यात्, उभयमपि सिद्धान्तविरुद्धमनिर्वचनवादिन इत्याशयः । विवक्षितं बाध्यत्वं दर्शयन् परिहरति— **नेति** ॥

सविलासाज्ञाननिवर्तकज्ञानं बाधः, तद्विषयत्वं बाध्यत्वमित्येतदपि साध्यं दुर्घटमित्याह— **अथेति** ॥ निरनुयोज्यानुयोगो नाम निग्रहः स्यादिति दूषयति— **नेति** ॥ **दूषण-**

स्यापि तत्त्वापत्तेरिति हेतूपन्यासस्थितौ सत्यत्वरूपसाध्यमादाय विकल्पदूषणगणप्रत्यावृत्त्या जात्युत्तरत्वात्। नाप्रसिद्धविशेषणतापि; शुक्तिरूप्यादौ साध्यप्रसिद्धेः॥

॥ मिथ्यात्वस्य पक्षानन्तर्गमेऽपि मिथ्यात्वे मिथ्यात्वाभावाभावान्न व्यभिचारः॥

किञ्च, साध्याभाववति हेतोर्वृत्तिरनैकान्तिकता। न च साध्यं साध्याभाववत्; भावाभावयोर्विरुद्धस्वभावयोराधाराधेयभावासम्भवात्। यथा न साध्याभावे साध्यम्, नापि तदभावः, इति कुतो व्यभिचारवेदनावकाशः? तुच्छव्यावृत्ततया प्रतीतस्य प्रतिबिम्बादिवत् प्रयोगाङ्गत्वोपपत्तेर्नाप्रसिद्धविशेष्यता। नापि धर्म्यादिग्रहविरोधः। प्रतिबिम्बज्ञानं सत्यमेव तत्राङ्गमिति चेत्, न; विषयविशेषितस्य तथात्वे विषयस्याप्यङ्गत्वात्, केवलस्य गमकत्वेऽतिप्रसङ्गात्॥

॥ मिथ्यात्वानुमानस्य भ्रान्तिगोचरत्वेन सोपाधिकत्वशङ्कानिरासः॥

भ्रान्तिगोचरत्वमुपाधिरिति चेत्, न; साधनव्यापकत्वात्। तथापि कथं

---

**गणप्रत्यावृत्त्येति**॥ धर्म्यन्तर्गतम्, अनन्तर्गतं वा। आद्ये तस्यैव तत्र साधने स्ववृत्तिविरोधः, सत्यत्वान्तरसाधनेऽनवस्था, चरमे तेनैव व्यभिचार इति दोषप्रसक्तेरित्यर्थः। एवं तावद् बाध्यत्वस्य पक्षान्तर्गमेऽपि सत्त्वस्येव स्वपरनिर्वाहकत्वाद् न दोष इत्युक्तम्, इदानीमनन्तर्गमेऽपि न किञ्चिदनिष्टमिति प्रतिपादनायाह—**किञ्चेति**॥ साध्ये साध्याभावानभ्युपगमे साध्याभ्युपगमप्रसङ्गात् साध्यं साध्याभावानधिकरणमित्याशङ्क्याह—**यथेति**॥ **साध्याभाव इति**॥ घटाद्यभावस्याप्युपलक्षणम्। प्रपञ्चो धर्मी न प्रमितः, प्रमितो वा। प्रथमेऽप्रसिद्धविशेष्यः पक्षाभासः, चरमे धर्मिग्राहकप्रमाणेन तत्सत्त्वग्राहिणा बाधः, अत्राह—**तुच्छेति**॥ एवं प्रतिज्ञादोषं परिहृत्य हेतुदोषं परिजिहीर्षुः व्याप्यत्वासिद्धिं शङ्कते—**भ्रान्तिगोचरत्वमिति**॥ न निरुपाधिसम्बन्धो व्याप्तिः सिध्येदित्याह—**तथापीति**॥ अग्निमत्त्वे साध्ये तत्पुष्कलकारणवत्त्वम्, तस्मिन्नपि साध्ये तत्पुष्कलकारणवत्त्वम्, तत्र चाग्निमत्त्वम्। एवं बुद्धिमत्पूर्वकत्वे साध्ये प्रयत्नजत्वम्, तस्मिन्नदृष्टजत्वम्, तत्र च बुद्धिमत्पूर्वकत्वमिति विश्वमनुमानमाकुलं स्यादित्याह—**सम इति**। परिगणितेतरेतरोपाधिव्यतिरेकेण सम्भावितविविधोपास्यत[ध्यन्त]रविरहविनिश्चयाभावेन [स]दहनानुमाने सम एवेति भावः॥

विविधोपाधिविरहविनिश्चयः सम्भवतीति चेत्, समः पर्यनुयोगो दहनानुमानेऽपि।

॥ उपाधिलक्षणम्, उपाधिस्थाननिर्णयश्च ॥

[1]यदि मतम्—दृश्यादृश्या अनुपलम्भनिरसनीयाः। अत्यन्तादृष्टास्त्वदृष्टत्वादेव स्मृतिपथमतिपतन्तो न सन्देहगोचरभावमेवाचरन्ति। प्रमाणान्तरपरिदृष्टानामप्यतीन्द्रियाणां व्यापकानामुपाधित्वे वह्नेः सार्वत्रिकत्वप्रसङ्गः; व्यापकानामपि नित्यानामुपाधित्वे वह्नेः सर्वदा वृत्त्यापत्तिः। अनित्यास्तु विविधाः—उभयाव्यभिचारिणः, उभयव्यभिचारिणः, अन्यतराव्यभिचारिणश्चेति। तत्र प्रथमद्वितीया उपाधिलक्षणा[2]भावाद् नोपाधयः। उपाधिलक्षणं हि—साधनाव्यापकत्वे सति साध्यसमव्याप्तिकत्वम्। अन्यतराव्यभिचारिणस्तु द्विविधाः—धूममात्राव्यभिचारिणः, वह्निमात्राव्यभिचारिणश्चेति।

---

तत्र विशेषं शङ्कते-**यदीति**॥ त्रयी गतिः-दृश्यत्वम्, अत्यन्तादृश्यत्वम्, प्रमाणान्तरदृश्यत्वं चेति। तत्र प्रथमो योग्यानुपलम्भनिराकार्यः। द्वितीयो बुद्ध्यनारोहेण शङ्कितुमप्यशक्यत्वाद् निराकार्य इत्यर्थः। तृतीयेऽपि सर्वगतत्वम्, असर्वगतत्वं वोपाधीनामिति द्वयी। तत्राद्यं प्रत्याह-**प्रमाणान्तरेति**॥ उपाधेः साध्यसमव्याप्तिकत्वादित्याशयः। असर्वगतत्वेऽपि नित्यत्वम्, अनित्यत्वं चेति द्वयी, तत्रापि प्रथमं प्रत्याह—**व्यापकानामिति**॥ **प्रथमद्वितीया इति**॥ साध्यसाधनद्वयाव्यभिचारिणः, तद्व्यभिचारिणश्च। लक्षणाभावं दर्शयितुं तल्लक्षणमाह—**उपाधीति**॥ साध्यव्यापक उपाधिरित्युक्ते पक्षेतरत्वेऽतिव्याप्तिः, तन्निरासायाह—**समेति**॥ अन्वयव्यतिरेकवतो धर्मभेदस्योपाधित्वात् पक्षेतरत्वस्य नोपाधित्वम्; व्यतिरेकविरहात्—यत्र पक्षेतरत्वाभावः, तत्र साध्याभाव इति। पक्ष एव व्यतिरेकवत्त्वनिश्चय इति चेत्, न; उपाध्यभावनिश्चयेऽपि तत्र साध्यसन्देहेन व्यतिरेकासिद्धेः, अतः समव्याप्तित्वविशेषणं व्यर्थमिति चेत्, न; पक्षे साध्यसन्देहेऽपि साधनसत्त्वनिश्चयो यथा साधनस्य सन्दिग्धानैकान्तिकत्वमापादयन् अन्वयव्याप्तिभङ्गं न करोति, तथा व्यतिरेकभङ्गमप्युपाधेः पक्षे साध्यसन्देहो नापादयति; अविशेषात्। पक्षादन्यत्र साधनस्य साध्येनान्वयो निश्चित इति चेत्, पक्षेतरत्वे वृत्तिविरोधात् पक्षेतरत्वं नास्ति, साध्यं च तत्र नास्तीति व्यतिरेकसिद्धिरपि तुल्या। तस्मात् साधूक्तम्—**समव्याप्तिकत्वमिति**॥ अग्निमत्त्वानुमाने तत्पुष्कल-

---

1. अथ

2. .भावदेव नोपा

तत्र पूर्वे लक्षणाभावादेव नोपाधयः । वह्निमात्राव्यभिचारिणोऽपि द्विविधाः—व्याप्यमात्ररूपाः, उभयरूपाश्चेति । पूर्वे पूर्ववत् । उभयरूपास्तु सामग्रीतो नापरे विद्यन्ते । सा च न क्वचिदुपाधिः ; धूमस्य धूमध्वजेनेव तयापि स्वभावसम्बन्धात् , वह्निजननसामग्र्यां वह्नेरप्यन्तर्भावाच्च—इति, हन्त ! अनयैव नीत्या मिथ्यात्वानुमानेऽपि नाशक्यमुपाधिविधूननमिति परितोषं भजत भ्रातरः । तथापि विपक्षे किं बाधकमिति चेत् , स्वभावसम्बन्धस्य तत्परित्यागे स्वभावपरित्यागप्रसङ्गो बाधक इति ब्रूमः ॥

॥ वस्तुत्वस्येव स्वस्मिन्ननात्मत्वादेरपि वृत्तेर्न हेतुव्रातस्यापि मिथ्यात्वविरोधः ॥

अथ—अनात्मत्वादिहेतुव्रातस्य धर्म्यन्तर्भावः ? अनन्तर्भावो वा ? आद्ये तस्मिन्नेव भागेऽसिद्धिः, द्वितीये न सर्वमिथ्यात्वसिद्धिरिति—चेत् , न ;- संवेदनम् , परवेद्यम् , वस्तुत्वात् , घटवदित्यादौ वस्तुत्ववत् , अन्योन्याभावस्य चान्योन्याभावं विनाऽन्यत्ववच्च सम्भवात् , शङ्कान्तरं सर्वस्य सत्यत्वप्रतिज्ञायामपि तुल्यत्वान्न जात्युत्तरतामतिपतेत् ॥

॥ दृश्यत्वस्य फलव्याप्यत्ववृत्तिव्याप्यत्वरूपस्य परैरनङ्गीकारः,
सिद्धान्ते तु दृगवच्छिन्नत्वं तदिति न कुत्रापि दोषः ॥

---

कारणत्वस्योपाधित्वं व्यासेधति—**साधनाव्यापकत्वे सतीति** ॥ उभयाव्यभिचारिणः साधनव्यापकत्वात् , उभयव्यभिचारिणः सध्याव्यापकत्वादनुपाधित्वमिति भावः । **लक्षणाभावादेवेति** ॥ धूमस्य धूमध्वजाव्यापकत्वात् साधनव्यापकत्वाच्चेत्यर्थः । **पूर्ववदिति** ॥ वह्निना व्याप्यमात्रस्य वह्निव्यापकत्वाभावात् , धूमाव्यापकत्वाभावाच्चेत्यर्थः । व्याप्यत्वं व्यापकत्वं च येषाम् , तेषामुभयरूपाणामुपाधित्वमस्तु, अत आह—**उभयरूपास्त्विति** ॥ साध्यसामग्र्यपि किं नोपाधिः, अत्राह—**सा चेति** ॥ साधनव्यापकत्वादिति हेतुमाह —**धूमस्येति** ॥ एवं साध्यसामग्री साधनव्यापकत्वादनुपाधिरित्युक्तम् , अधुना साध्याव्यापकत्वादपीत्याह —**वह्निजननेति** ॥ [ न ]वह्निविशिष्टसामग्र्या वह्निव्यापकत्वम् , वह्नेरपि वह्निव्यापकत्वप्रसङ्गादित्याशयः । तुल्यं प्रकृतेरि[पी]त्याह —**हन्तेति** ॥

हेतुकलापस्य धर्म्यन्तर्गमेऽपि न भागासिद्धिः, अनन्यापेक्षया स्वात्मनि स्वव्यवहारहेतुत्वेन स्वनिर्वाहकत्वादिति सदृष्टान्तमाह—**संवेदनमिति** ॥ हेतुदृष्टान्तयोरमिथ्यात्वे तत्र व्यभिचारः, मिथ्यात्वे न साधनाङ्गत्वम् , अत आह—**शङ्कान्तरमिति** ॥

ननु — दृश्यत्वं नाम फलव्याप्यत्वम्? वृत्तिव्याप्यत्वं वा? साधारणं वा? नाद्यः; अतीन्द्रियेषु तदभावेन भागासिद्धत्वात्। न द्वितीयः; ब्रह्मणोऽपि वेदान्तिभिर्वृत्ति[1]व्याप्यत्वाभ्युपगमादनैकान्तिकत्वात्। न तृतीयः; ब्रह्मण्यनैकान्तिकत्वादेव —इति, अयुक्तमेतत्; वृत्तिज्ञानमनभ्युपगच्छतामित्थं विकल्पानुत्थानात, तदभ्युपगमे तेषामपसिद्धान्तनिग्रहात। शिष्यश्चोदयतीति चेत्, स इत्थं शिक्षणीयः— दृश्यत्वपदार्थ एव त्वया नावगतः। दृश्यत्वं हि दृगवच्छिन्नत्वम्, दृक् = आत्मा सर्वं त्वज्ञाततया, ज्ञातततया च साक्षिवेद्यम्। अतो न [2]दृश्यत्वस्यानात्मनि क्वचिदप्यसिद्धिः—इति। आत्मनश्च स्वसंवेदनात्मतायाः प्रतिपादनीयत्वाद् नानैकान्तिकतापि। तथापि घटपटादिसत्त्वग्राहि[3]प्रत्यक्षेणापहृतो विषय इति चेत्, न; विकल्पासहत्वात्।

॥ घटः सन्नित्यादिप्रत्यक्षस्य घटाद्यबाध्यत्वमात्रग्राहकत्वम्,
न तु तदन्यस्वरूपमानयोग्यत्वादिविषयकत्वमिति
प्रत्यक्षबाधितमनुमानमिति शङ्का ॥

तथा हि—किमिदं सत्त्वम्—स्वरूपं वा? मानयोग्यत्वं वा? तत्सम्बन्धो वा? सत्ताश्रयत्वं वा? सत्तैकार्थसमवायो वा? भावत्वं वा? विधिप्रत्ययवेद्यत्वं वा? अर्थक्रियाकारित्वं वा? अन्यद्वा? न तावदाद्यः; घटस्वरूपस्य सत्त्वे पटादेरसत्त्वप्रसङ्गात्, [4]पटादिस्वरूपस्य सत्पदार्थत्वे घटस्यासत्त्वप्रसङ्गात्, सर्वस्वरूपस्य तथात्वे प्रत्येकं सर्वेषामसत्त्वप्रसङ्गात्, सत्पदसङ्केतानन्त्यानुगतव्यवहारनिरालम्बनत्वप्रसङ्गाच्च। न द्वितीयः; मानयोग्यतायां योग्यतान्तरस्वीकारेऽनवस्थानात्, तदस्वीकारे तदसत्त्वे

---

जडत्वमचिद्रूपत्वम्, तत्र न विकल्पावकाश इति दृश्यत्वमेव विकल्पयति—**नन्विति** ॥ प्रतिवादिनश्चोद्यमिदम्? विनेयस्य वेति विकल्प्याद्यं दूषयति—**अयुक्तमिति** ॥ द्वितीयमवलम्बते—**शिष्य इति** ॥ दृगवच्छिन्नत्वं दृश्यत्वमित्येतावता कथं भागासिद्धिपरिहारः? अत्राह—**दृगात्मेति** ॥

स्वरूपपक्षसत्त्वे भङ्गान्तरं भणति—**सत्पदेति** ॥ एकस्यैव सच्छब्दस्यानन्तस्वरूपेषु शक्तिकल्पनागौरवम्, सत्पदसङ्केतानन्त्यम्, व्यावृत्तस्वरूपाणामनुवृत्त-

---

1. वेदान्तिभिर्वृत्तित्वमभ्युपगमात्। 2. दृश्यत्वस्याऽऽत्मनि
3. प्रत्यक्षेणोपहृतो 4. घटादि (क)

सर्वासत्त्वप्रसक्तेः, सत्त्वस्यातीन्द्रियत्वप्रसङ्गाच्च[2]। तत एव न तृतीयोऽपि। न तुरीयः; सामा[1]न्यादेरसत्त्वापातात्। न पञ्चमः; द्रव्यस्याकारणवतः सत्तासमवाययोश्चासत्त्वापातात्। नापि सत्तासम्बन्धित्वम्; सत्तातत्सम्बन्धयोरसत्त्वप्रसङ्गात्। नापि षष्ठः; भावत्वं सामान्यम्, औपाधिकं वा। आद्ये सामान्यादेस्तदभावप्रसङ्गात्। द्वितीयेऽपि द्रव्यादिभ्यस्तस्य भेदेऽपराद्धान्तः, गुणादेः सामान्येतरानाश्रयस्य तदभाव[2]प्रसङ्गश्च। द्रव्याद्यन्तर्भावे पूर्वत्रिकरूपत्वे सामान्यादौ न स्यात्। सामान्याद्यन्तर्भावेऽपि सामान्यादौ न स्यात्॥ नापि सप्तमः; गगनकुसुमादेरपि सत्त्वप्रसङ्गात्, अस्ति गगनकुसुममिति शब्दप्रत्ययोत्पत्तेः। प्रत्यक्षविधिप्रत्ययविवक्षायामप्रत्यक्षाणामसत्त्वं स्यात्। नाप्यष्टमः; [3](अर्थक्रियाकारित्वेऽ)र्थक्रियाकारित्वस्वीकारेऽनवस्थानात्, अस्वीकारे सर्वासत्त्वप्रसङ्गात्। न चरमः; अनिरुक्तेः। असत्त्वव्यावृत्तत्वं तदिति चेत्, न; प्रतीतावितरेतराश्रयात्। तस्माद् नाध्यक्षेण बाधितविषयत्वम्। नाप्यनुमानेन; प्रबलप्रयोगानिरूपणात्॥

॥ प्रपञ्चमिथ्यात्वानुमाने—अत्यन्ताभावरहितत्व-कारणवत्त्व-
व्यवहारपदत्वहेतुकानुमानत्रयेण सत्प्रतिपक्षशङ्कातत्परिहारौ॥

विवादपदम्, अबाध्यम्, अत्यन्ताभावरहितत्वात्; आत्मवत्। कारणवान् प्रपञ्चः, न बाध्यः, कारणवत्त्वात्; अविद्यानिवृत्तिवत्। विवादपदम्, अनिर्वचनीयं न भवति, व्यवहारपदत्वात्; आत्मवत्, अप्रामाणिकनिषेधस्याप्रामाणिकत्वस्वी-

---

व्यवहारानालम्बनत्वादनुगतसद्व्यवहारनिरालम्बनत्वम्। **तत एवेति**॥ मानसम्बन्धे सम्बन्धान्तरस्वीकारेऽनवस्थानात्, अस्वीकारे तदसत्त्वेन सर्वासत्त्वप्रसक्तेः, अप्रत्यक्षत्वप्रसङ्गाच्चेत्यर्थः। **अनिरुक्तेरिति**॥ हेतोरसिद्धिं शङ्कते—**असत्त्वव्यावृत्तत्वमिति**॥

प्रमाणमणिमालायामुक्तानुमानमालां शङ्कते—**विवादपदमिति**॥ **कारणवानिति** पक्षविशेषणं भागासिद्धिं हेतोः परिहर्तुम्, पक्षस्यान्यतराप्रसिद्धविशेषणत्वं दृष्टान्तस्याप्यन्यतरसाध्यविकल[त्व]मिति। तृतीयप्रयोगं शङ्कते—**अप्रामाणिकनिषेधस्येति**॥ एतद्भूतले तद्घटसंसर्गस्याप्रामाणिकस्यापि प्रतिषेधः प्रामाणिक इति प्रतियोगिप्रामाणिकत्वमन्तरेणापि प्रतिषेधस्य प्रामाणिकत्वं श्रीधरपण्डितवादीन्द्रा-

---

1. न्यादेसत्वापातात् (क) 2. प्रसङ्गाच्च (क)
3. कुण्डलान्तर्गतं नास्ति।

कारात् । स्वमते नाप्रसिद्धविशेषणतेति चेत्, न; श्रीधरादिमते तस्यापि प्रामाणिकत्वात् । मतान्तरेऽपि पदार्थस्यैवाप्रामाणिकस्य प्रतिषेधो न प्रामाणिकः, वाक्यार्थस्य तु तादृशोऽपि निषेधः प्रामाणिक एवेत्यवश्याश्रयणीयम्; अपरथा शुक्तिरूप्यतादात्म्यस्यापि प्रतिषेधो न प्रामाणिकः स्यादिति चेत्, मैवम्; अत्यन्ताभावरहितत्वं किं शून्यविलक्षणत्वम्? अत्यन्ता[1]भावाप्रतियोगित्वं वा? आद्ये शुक्तिरजततादात्म्यादौ व्यभिचारात्, द्वितीये हेतोरसिद्धेः, सर्वस्यापि स्वात्मनि कदाचिदप्यसत्त्वेन स्वनिष्ठात्यन्ताभावप्रतियोगित्वात् । द्वितीयेऽपि प्रयोगे कारणवानिति विशेषणं व्यर्थम्; दृष्टान्ते साध्यवैकल्यम्, अविद्यानिवृत्तेः—'नेह नानास्ति' इति श्रौतबाधविषयत्वात् । तृतीयेऽपि प्रपञ्चमात्रस्य [2]धर्मित्वे शुक्तिरजतादिभागे बाधः । तदितरस्य धर्मित्वे तत्रैव व्यभिचारः । सुखाद्यधिकरणस्यात्मनो दृष्टान्तत्वे साध्यवैकल्यम् । साक्षिणस्त्वासिद्धत्वादाश्रयहीनं निदर्शनम् । तस्माद् नानुमानविरोधः ॥

॥ मृत्तिकेत्येव सत्यमिति श्रुतेरपि सांव्यवहारिकमृत्तिकासत्यतानुवादद्वारा सर्वस्य ब्रह्मोपादेयतायामेव तात्पर्याद् नाद्वैतविरोधः ॥

नापि "मृत्तिकेत्येव सत्यम्" इत्यादिश्रुतिविरोधः; तस्या ब्रह्मविकाराणां तद्व्यतिरेकेणासत्त्वात् तज्ज्ञाने सर्वज्ञानं स्यादिति प्रतिज्ञासिद्धये सांव्यवहारिकमृत्तिकासत्यतानुवादेन तद्विकाराणां तद्व्यतिरेकाभावप्रतिपादनपरत्वात्, इतरथोपक्रमादिव्याकोपात् । एवमागमान्तरं योजनीयम् ॥

॥ उपमानार्थापत्त्यादेरपि न प्रपञ्चमिथ्यात्वानुमानेन विरोधः, न वाऽनुमानबाधकत्वमिति मिथ्यात्वानुमानोपसंहारः ॥

---

दिभिरङ्गीकृतमिति परिहरति—**नेति** ॥ उदयनादिमतावलम्बने का गतिः? अत्राह—**मतान्तरेऽपीति** ॥ यत्र पदार्थमात्रं प्रतिषेध्यम्, तत्र प्रतियोगिप्रामाणिकत्वं प्रयोजकमित्यर्थः । "नेह नाना" इत्यागमविरोधेन दूषयति—**मैवमिति** ॥ सुखादिपरिणामिनोऽहंकारस्य दृष्टान्तत्वम्? तत्साक्षिणो वेति विकल्प्य, क्रमेण दूषयति—**सुखादीति** ॥

मिथ्यार्थानुमानस्य श्रुतिविरोधं परिहर्तुं तस्या अन्यपरत्वादिति हेतुमाह—**तस्या इति** ॥ "प्राणा वै सत्यम्" इत्याद्यागमान्तरेऽप्युक्तन्यायमतिदिशति—**एव-**

---

1. भावप्रति 2. धर्मत्वे

नोपमानं बाधकम्; नियतविषयत्वात्। नार्थापत्तिरपि बाधिका; मिथ्याभूतेनापि स्वप्नसम्भोगादिवदर्थक्रियाद्युपपत्तेः। नाभावोऽपि; देशकालपुरुषान्तरभाविबाधकस्यायोग्यतया [1](योग्यानुपलम्भाभावात्)। तदेवं न कालातीतः,। नापि सत्प्रतिपक्षता; मिथो विरुद्धयोर्वास्तवतुल्यबलत्वाभावादेकतमस्यान्यतमाङ्गवैकल्यचिन्तायामस्य वैकल्यस्यैव बाध्यत्वात्, अवैकल्ये त्वदीयेनैव विकल्पेनैव भवितव्यमिति हीनस्य न प्रतिपक्षता। श्रुतिविरोधं परिहृत्य सत्यत्वानुमानायोगाच्च दृष्टान्तस्य साधितत्वाच्च न साध्यवैकल्यादिदोष इत्यशेषमतिमङ्गलम्॥

तस्माद् विश्वस्य मिथ्यात्वमनात्मत्वादिहेतुभिः।
भेदसम्बन्धसम्बन्धाद् भेदवच्च प्रसिध्यति॥ ५४॥

**॥ इति न्यायचन्द्रिकायां ब्रह्मव्यतिरिक्तमिथ्यात्वसाधनप्रकरणं तुरीयम्॥**

---

**मिति॥ मिथो विरुद्धयोरिति॥** तुल्यबलहेतुबोधितसाध्यव्यतिरेकत्वं वैकल्यम्। न च तत् सम्भवति; एकस्मिन् धर्मिणि विरुद्धधर्माध्यासप्रसङ्गादिति भावः। अतोऽन्यतरस्य पक्षधर्मत्व-सपक्षसत्त्व-विपक्षव्यावृत्तत्वाबाधितविषयत्वानामन्यतमवैकल्यं भवितुं युक्तम्। तत् कस्य? मदीयस्य वा? इति चिन्तायां यदि मदीयस्यैव हेतोः, तत्राह — **एकतमस्येति॥** अगृह्यमाणविशेषत्वदशायां सत्प्रतिपक्षत्ववादिभिरिष्यते। तत्र कः परिहारः? अत आह — **श्रुतीति॥** उत्तरवादपातनिकां कुर्वन् प्रकृतं निगमयति— **तस्मादिति॥**

**॥ इति न्यायचन्द्रिकाविवरणे-**
**ब्रह्मव्यतिरिक्तमिथ्यात्वसाधनप्रकरणं तुरीयम्॥**

---

1. "अनुपलम्भासम्भवात्" इत्येष कुण्डलान्तर्गतस्थाने वर्तते।

## ॥ अथ न्यायचन्द्रिकायां भेददुर्निरूपत्वं पञ्चमं प्रकरणम् ॥

अत्र केचिदूचिरे—

प्रतीतो वा न वा भेदो न चेत् कीदृग् निषिध्यताम् ।
प्रतीतश्चेदबाध्यस्य कुतस्सत्त्वमपोद्यताम् ॥ ५५ ॥

॥ भेदस्य प्रतीतस्य प्रत्यक्षेणानुमानेन वाऽबाधादेर्न विरुद्धत्वम् ॥

अत्रेदमद्वैतवादी प्रष्टव्यः—किं स्तम्भकुम्भौ, वादिप्रतिवादिनौ, साध्यसाधने दूषणभूषणे चेत्येवमादीनां मिथो भेदः परमार्थरूपो विद्यते? न वा? — इति। यदि विद्यते, तर्हि जितमस्मन्मनोरथेन। अथ न विद्यते, तर्हि [1]तत्रापि प्रष्टव्यम्—किमविद्यमानो भेदः क्वचित्कदाचित् [2](कस्यचित्) प्रतिभासते? न वा? — इति। यदि न प्रतिभासते, तर्हि, न, विद्यत इति शक्यं वक्तुम्; अप्रतिभासमानस्य निषेधप्रतियोगित्वानुपपत्तेः। अथ प्रतिभासते, तर्हि प्रतिभासमानस्य बाधाभावे परमार्थसत्त्वमनपोदितम्, इति कथं सदद्वैतसिद्धिः? न च—बाधाभावोऽसिद्ध इति—वाच्यम्; बाधो हि भवन् प्रमाणेन, अप्रमाणेन वा भवेत्। न तावदप्रमाणेन; तस्य बाधकत्वानुपपत्तेः, उपपत्तौ वा द्वैतप्रतिभासेनाद्वैतश्रुतेरपि बाधप्रसङ्गात्। नापि

---

## ॥ अथ न्यायचन्द्रिकाविवरणे भेददुर्निरूपत्वप्रकरणं पञ्चमम् ॥

विवादपदम्, मिथ्या, भेदसम्बन्धाधारत्वात्; भेदवदित्युक्तम्, तत्र दृष्टान्तस्य साध्यवैकल्यशङ्कामुत्थापयति—**अत्रेति** ॥

कारिकार्थं विवृणोति—**अत्रेदमिति** ॥ भेदस्य बाध्यत्वोपगमाद् बाधाभाव इत्यसिद्धो हेतुः, अत्राह—**न चेति** ॥ तदुपपादनाय विकल्पयति—**बाधो हीति** ॥ बाधकत्वे न प्रमाणत्वं प्रयोजकम्; पटप्रमाणेन घटादेरबाधनात्, किन्तु विरुद्धार्थत्वमेव बाधकत्वप्रयोजकम्। अतोऽप्रमाणस्यापि बाधकत्वोपपत्तिः, अत्राह—**उपपत्तौ वेति** ॥ प्रमाकरणत्वं प्रामाण्यप्रयोजकम्, न तु प्रत्यक्षादिष्वन्तर्भावः, अत्राह—**अन्तर्भावे वेति** ॥ प्रामाण्यस्य प्रत्यक्षाद्यन्यतमत्वेन व्याप्तेरित्यर्थः। **प्रत्यक्षाद्यन्तर्भावेति** ॥

---

1. विद्यते कक तत्रापि
2. कुण्डलान्तर्गतं नास्ति।

प्रमाणेन ; प्रामाण्य[ण]स्य सतः [1]प्रत्यक्षादिष्वन्तर्भावे, अनन्तर्भावे वा, प्रमाणत्वानुपपत्तेः । न च प्रत्यक्षं बाधकम् । तद्धि बाधकं [2]भवद् भेदाभावम्, अभेदं वा गृह्णीयात् । न तावद् भेदाभावं गृह्णाति ; प्रत्यक्षस्य विधिमात्रनिष्ठत्वेन भेदनिषेधकत्वानुपपत्तेः । यथाऽऽहुः—

"आहुर्विधातृप्रत्यक्षं न निषेद्धृ विपश्चितः ॥"

इति । नापि भेदविरुद्धमभेदं गृह्णीयात् ; [3]बाधकाप्रतिभासनात् । न हि कश्चिदपि स्तम्भकुम्भादीनां परस्पर[ा]भेदमध्यक्षेणाकलयामीत्याचक्षाणो दरीदृश्यते । नाप्यनुमानं बाधकम् ; पक्षसपक्षादिभेदानवसाये पक्षधर्मतया, सपक्षसत्तया, विपक्षव्यावृत्ततया वाऽनुसन्धानविधुरस्य साधनविधुरस्य साधनधर्मस्य साध्यधर्मविषयबुद्धिजनकत्वानुपपत्तेः । अथ — अनुमानोत्पत्तये नामीषां परस्परभेदो न प्रतिभासते, तर्हि तद्विरुद्धत्वाद् भेदाभावमभावं [भेदं] वाऽविषयीकृत्यानुमानमेव नोदेतुमुत्सहते । न च भेदप्रतिभासस्य भ्रान्तत्वात् तद्विरोधेऽप्यनुमानोत्थानम् ; अनुमानोत्थाने सति तद्बाधाद् भेदप्रतिभासस्य भ्रान्तत्वे सति तद्विरोधेऽप्यनुमानोत्थानमिति परस्पराश्रयचक्रकयोरापत्तेः ॥

॥ प्रत्यक्षविरुद्धा अद्वैतश्रुतयस्तु—आनन्दैकत्वनानात्वनेतिनेतिसर्वात्मैकविज्ञानप्रतिज्ञादिश्रुतयो गौण्या लक्षणया वाऽन्यार्थपरा इति पूर्वपक्षोपसंहारः ॥

---

किं प्रत्यक्षं बाधकम्? उतागमः? इति विकल्प्य, प्रथमं पराकरोति – **न चेति** ॥ द्वितीयमपवदति—**नापीति** ॥ पक्षसपक्षविपक्षाणां परस्परवैलक्षण्यमप्रतीतम्, न वा । नाग्निमश्चतुरश्र इत्याह – **पक्षेति** ॥ **साधनधर्मस्येति** ॥ व्याप्तस्य पक्षधर्मस्य हेतोः साध्यरूपव्यापकधर्मगोचरज्ञानजनकत्वायोगादित्यर्थः । पक्षादिभेदः प्रतीत इति मतान्तरमालम्बते—**अथेति** ॥ धर्मिग्रहविरोधाद् लिङ्गाभासत्वमित्याह—**तर्हीति** ॥ पक्षादिभेदप्रतिभासस्य भ्रान्तित्वात् परमार्थतो भेदानुमानस्य न धर्मिग्रहविरोधः, तत्राह—**न च भेदेति** ॥ **परस्पराश्रयचक्रकयोरिति** ॥ अनुमानोत्थाने सति बाध्यतया भेदप्रतिभासस्य भ्रान्तत्वम्, अतश्चानुमानोत्थानमिति परस्पराश्रयः ।

---

1. प्रत्यतादिषु अन्तर्भावानन्तर्भावे वा प्रमाणत्वानुपपत्तेः ।
2. बाधकमप्रतिभा .
3. भवेत्

न चाद्वैतश्रुतिस्तत्प्रतिसाधनी ; तस्या अपि परस्परविलक्षणक्रियाकारकादि-पदार्थ स्वरूपावगमतात्पर्यभेद निर्धारणाद्यनेकभेदप्रतिभाससव्यपेक्षाभिधानायास्तद्विरोधे-प्रवृत्त्यनुपपत्तेस्तत्प्रतिभासस्य भ्रान्तत्वात् । प्रवृत्तिस्तु पूर्ववदितरेतराश्रयापत्तेरयुक्तेति भ व ना थे न पुनरभिहितम् ॥

प्रत्यक्षादिविरुद्धश्चाद्वैतबोधक आम्नायो न यथाश्रुति युक्तः । अतः प्रत्यक्षादि-विरोधादाम्नाये गौणी, लाक्षणिकी वा वृत्तिः । तत्रानन्दश्रुतयः स्वाभाविकदुःखा-भावपराः । एकत्वश्रुतयः—एकदेह एक एव स्वामीत्येवम्पराः । नानात्वश्रुतिरने-कदेहग्रहेऽप्येक एवात्मेत्येवं पराः । "एष नेति नेति" इति देहादीनामात्मत्वनिषेधः । विज्ञानश्रुतयश्चिच्छक्तियोगपराः व्योमादिभ्यो भेदफलाः सर्वात्मश्रुतयः ; सर्वस्यात्मार्थ-त्वेनोपचारात् । "आत्मनि ज्ञाते सर्वं ज्ञातं भवति" इत्यात्मज्ञानं परमपुरुषार्थ-मोक्षफलम्, तदन्यत् सर्वमज्ञानमकृतार्थमित्येवम्परेति दिगिति ॥

॥ अप्रसिद्धप्रतिषेधो नास्तीति व्याहतम्, तदैव तस्यैव बाध इति न युक्तम् ;
रज्जुसर्पादिपारमार्थिकत्वात्, भेदस्यापारमार्थिकस्य निषेधो न विरुध्यते ॥

---

अनुमानोत्थानसिद्धौ भेदप्रतिभासस्य बाध्यत्वम्, अतश्च भ्रान्तत्वम्, तत्सिद्धावनुमानो-त्थानमिति चक्रकमिति विवेकः । आगमो भेदबाधक इति परिशिष्टं कल्पं शिथि-लयति—**न चेति** ॥ पदतदर्थस्वरूपभेदतात्पर्यादिभेदावधारणस्य भ्रान्तत्वादद्वैत-श्रुतेर्नोपजीव्यविरोधः, तत्राह—**तत्प्रतिभासस्येति** ॥ अध्ययनविध्यासवर्णमात्र-स्यापि निर्विषयत्वे कर्मवाक्यमपि निर्विषयमप्रमाणं भवेत्, अत्राह—**अतः प्रत्यक्षा-दिति** ॥ आनन्दशब्दस्य भावरूपसुखं मुख्योऽर्थः, तस्य प्रेमगोचरत्वं गुणः, तद्योगात् दुःखाभावे वृत्तिर्गौणीत्याह—**आनन्देति** ॥ "नेह नानास्ति किञ्चन" इति श्रुतेर्गतिमाह—**नानात्वेति** ॥ क्रमभाव्यनेकशरीरेषु भोक्तुरेकत्वप्रतिपादनेन तन्नित्यत्वपरेत्यर्थः । विज्ञानशब्दाभिधेयविज्ञानाविनाभूतचिच्छक्तौ लक्षणावृत्तिरित्याह—**विज्ञानश्रुतय इति** ॥ **उपचारादिति** ॥ अत्यन्तहितकारिणि भद्रसेने ममात्मा भद्रसेन इत्युपचारवत् सर्वस्यात्मभोगशेषतया सर्वमात्मेत्युपचारात् सर्वात्मश्रुतय इत्यर्थः ॥

यदि न प्रतिभासते, न तर्हि क्वचिद् विद्यत इति शक्यं वक्तुमित्येतत् तावद-प्रसक्तप्रतिषेधप्रतिपादनेन पराकरोति—**अप्रसिद्धनिषेधस्येति** ॥ अप्रसक्तस्य प्रति-

अत्रोच्यते—

अप्रसिद्धनिषेधस्य प्रमितत्वे पराहतिः ।
व्याघातोऽप्रमितत्वेऽपि तन्निषेधपराहतेः ॥ ५५ ॥

अप्रसिद्धप्रतियोगिकप्रतिषेधस्य प्रमितत्वाप्रमितत्वयोः स नास्तीति वचनं व्याहतार्थम् । [1]प्रतिभासमानत्वे बाधाभावात् परमार्थसत्त्वमिति यदुक्तम्, तदयुक्तम्; बाधाभावोऽपि तदैव, तस्यैव किम्? आहोस्वित् सदापि, सर्वेषामपि? नाद्यः; रज्जुभुजङ्गादेरपि परमार्थत्वप्रसङ्गात् । नेतरः; सकलकालपुरुषगोचरबाधस्य योग्यस्याभावनिश्चया-सम्भवात् ॥

॥ सन् घट इत्यादिप्रत्यक्षं घटादिभेदबाधकम्, प्रत्यक्षस्य भेदवदभेदस्यापि ग्राहकत्वात् ॥

[2]यदपि बाधो [3]भवन्नित्यादि, तत्र प्रत्यक्षं बाधकमिति ब्रूमः । तद्धि भेदाभावं गृह्णाति । भेदो हीतरेतराभावः । तदभावश्च घटादिस्वरूपम्; भावाभाव-योरन्यतरनिषेधस्यान्यतरविधित्वेन भवताऽभ्युपगमात् । एवं च घटादिग्राहिप्रत्यक्षं भेदाभावं गृह्णाति, तेनैव बाधितो भेदप्रतिभासः । घटग्राहिप्रत्यक्षं घटस्वरूपं गृह्णाति, न पटादिस्वरूपमिति चेत्, न; अभेदप्रतीतिमन्तरेण पटादिकं न गृह्णातीति वक्तुमशक्य-

---

षेधः प्रमितः, न वा । प्रमितत्वे पराहतिः अप्रसक्तप्रतिषेधो नास्तीति तत्प्रतिषेधस्य तत्प्रमया व्याघातः । द्वितीयेऽप्याह—**व्याघात इति** ॥ अप्रमितत्वेऽपि स नास्तीति वचनार्थस्य व्याघातः । कुतः? तन्निषेधपराहतेः = अप्रसक्तनिषेधस्य तस्य, निषेधः = स नास्तीति, अस्यैव निषेधस्य प्रसक्तप्रतियोगित्वेन व्याघातादित्यर्थः । श्लोकार्थं सङ्गृह्णाति—**अप्रसिद्धेति** ॥ अन्यत्र सतो रूप्यादेः, इहाप्रसक्तस्य प्रतिषेधो न सम्भवतीति पराभ्युपगमेन पुरस्तादीरितत्वाद् न पूर्वापरविरोधः । तद्धि बाधकं भवद् भेदाभावमभेदं गृह्णीयादिति यदुदितम्, तत्राद्यमूरीकुरुते—**तद्धीति** ॥ तदुप-पादनाय भेदं दर्शयति—**भेदो हीति** ॥ भेदाभावस्य भावरूपत्वमभिधाय फलित-माह —**एवं चेति** ॥ भेदाभावस्य भावस्वभावत्वेऽपि न कुम्भगोचराध्यक्षस्य तद्गो-चरत्वम्; भेदाभावस्यानेकभावस्वभावत्वादिति शङ्कते—**घटग्राहीति** ॥ अभेदमुल्लिखद्धा

---

1. पृ. 457. प. 11 2. पृ. 457. प. 13
3. बाधोभवन्नि

त्वात् । अभेदोऽपि प्रत्यक्षेण प्रतिभासते । तथा हि—'सन् घटः' 'सन् पटः' इति सदेकाकारता घटादेरवसीयते ॥

॥ घटपटादीनां सदात्मानैक्यम्, घटाद्यात्मना भेद
इति प्रत्यक्षस्योभयग्राहकत्वम् ॥

सदित्येकसामान्यरूपयोगित्वं गृह्यते विशेषाणाम्, न तु स्वरूपैक्यमिति चेत्, न; सदाकारात्ते विशेषा भिद्यन्ते? न वा? आद्ये शशविषाणवदसतां कथं सत्तासामान्ययोगित्वम्? सतो भिन्नाः, सन्तश्चेति व्याघातात् । अथ न भिद्यन्ते, तर्हि तेषामेतस्मात् सदाकारादभिन्नानां परस्परव्यतिरेकः सम्भवी । एकस्य [1]स्वरूपं [2](परस्परं) भिन्नाश्चेति व्याघातात् । अव्याघाते वा न किञ्चिदेकमिति शून्यतैव स्यात् ॥

॥ अनुमानमपि भेदबाधकम्, स्वरूपेण गृहीतस्य भेदस्य बाध्यत्वे
सन्दिग्धेऽनुमानोदयविरोधात् ॥

अनुमानमपि बाधकम्; विगीतः, मिथ्या, भेदत्वात्; चन्द्ररूपवत् । विगीतज्ञानम्, बाध्यार्थम्, भेदज्ञानत्वात्; चन्द्रभेदज्ञानवत् ॥

[3]यत्तु—पक्षसपक्षादिभेदानवसाय इति—समीरितम्, तत्रैतद्वचनीयम्—पर्वतोऽग्निमानित्यत्र धर्मी प्रतीतः? न वा? इति । न चेत्, पक्षधर्मतानुसन्धानविधुरस्यानुमानं स्यात् । आद्येऽनग्निमत्तया प्रतीतौ धर्मिग्रहविरोधात्, अग्निमत्तया प्रतीतौ सिद्धसाधनादनुमानं नोत्पत्तुमलम् । अथ स्वरूपेण प्रतिपन्ने सन्दिग्धसाध्येऽनुमानप्रवृत्तिः, तर्हीहापि स्वरूपेण प्रतिपन्ने भेदे बाध्यत्वाबाध्यत्वे सन्दिग्धे बाध्यत्वानुमानाद् नेतरेतराश्रयादिप्रसङ्ग इति सन्तोष्टव्यम् ।

---

प्रत्यक्षं भेदप्रतिभासबाधकमित्याह—**अभेदोऽपीति** ॥ अध्यक्षस्य सत्तासंसर्गगोचरत्वम्, न तु स्वरूपाभेदगोचरत्वमिति शङ्कते—**सदित्येकेति** ॥ एकाकारादभिन्नानां परस्परव्यतिरेके न व्याघातः; प्रतीतिसिद्धत्वात्, अत्राह—**अव्याघाते वेति** ॥

भेदज्ञानस्य भ्रान्तत्वानुमानं भेदबाधकत्वेनोपन्यस्तम्, तत्र प्रसङ्गाद् दूषण-

---

1. स्वरूपाः 2. "परस्परं" नास्ति
3. पृ. 458. प. 9

॥ भूषणाभिमतं भेदज्ञानभ्रान्तत्वानुमानायोगं निरस्यति ॥

यत्पुनर्भूषणे दूषणंभाषितम्—भेदज्ञानस्य न युक्तं भ्रान्तत्वानुमानम्; विद्याविद्ययोर्भेदज्ञानेनैवानैकान्तिकत्वात्—इति, तदसत्; तस्यापि पक्षनिक्षेपात्। अथ विद्याविद्ययोर्भेद[1]ज्ञानस्य भ्रान्तत्वे केवलमविद्यैव स्यात्। तथा चाविद्यया[ऽ]द्वैतसिद्धौ द्वैत[ा ?]सिद्धिरपि स्यादविशेषादिति—मतम्, तदप्यनुचितम्; भ्रान्तिगोचरानिर्वचनीयभेदेन विद्याविद्ययोर्व्यवस्थितत्वात्। एतेन—साध्यहेतुदृष्टान्तानामपि पुनरुक्तिः—परिहृता ॥

॥ पुनरुक्तेः पारमार्थिकभेदसाधनत्वायोगः ॥

यदि च परमार्थभेदमन्तरेण साध्यहेतुवचनपुनरुक्तेरपरिहारः, तर्हि तस्याद्यापि निरूप्यमाणस्यासिद्धत्वात् त्वदीयवचनजातमेवार्थपुनरुक्तं किं न स्यात्?

॥ भेदप्रतिभासस्याद्वैतश्रुतिबाध्यत्वमपि । प्रत्यक्षप्राबल्ये तु देहातिरिक्तात्मस्वर्गाद्यसिद्धिः ॥

अद्वैतश्रुतिरपि भेदप्रतिभासबाधिका भ्रान्तिप्राप्तपदपदार्थभेदमूरीकृत्य प्रवृत्ता परमार्थाद्वैतं बोधयतीति न व्याघातः; अन्यथा 'अहं मनुष्यः' इति देहात्मावगमविरोधादनुमानेनागमेन वा तदतिरिक्तचेतनासिद्धौ स्वर्गापवर्गसाधनगमकमागमवाक्यमप्रमाणं स्यात्। किञ्च, पदपदार्थादिभेदाभावेऽद्वैतश्रुतिरेव व्याहतेत्यापाद्यापादकयोर्भेदस्यासिद्धत्वात् कथमापाद्यादभिन्नमापादकमापाद्यमापादयेत्?

---

भाषितमनुभाषते—**यत्पुनरिति** ॥ विद्याविद्ययोर्भेदज्ञानस्य भ्रान्तत्वे स्वाभिप्रेतमनिष्टं पर आह—**अथेति** ॥ पक्षादिभेदज्ञानस्य प्रमाणत्वे तत्र व्यभिचारः, अप्रमाणत्वे भेदासिद्धौ प्रतिज्ञादिवचनपौनरुक्त्यम्, अत्राह—**एतेनेति** ॥ अनिर्वचनीयभेदेन पुनरुक्तिपरिहारं व्यतिरेकद्वारा स्थिरीकरोति—**यदि चेति** ॥ पदपदार्थादिभेदप्रतिभासमुपजीव्य प्रवृत्तानामद्वैतप्रमाणानां न प्रामाण्यम्; उपजीव्यविरोधात्, अत्राह—**भ्रान्तीति** ॥ आगमप्रवृत्तौ तद्बाधितभेदप्रतिभासस्य भ्रान्तत्वम्, अतश्चागमप्रवृत्तिरितीतरेतराश्रयः, अत्राह—**अन्यथेति** ॥ पदादिभेदाभाव आपादकः; व्याघात आपाद्यः, तयोर्भेदस्यासिद्धत्वाद् नापाद्यापादकभाव इत्याह—**किञ्चेति** ॥

---

1. भेदस्य भ्रा (क)

॥ सर्वाद्वैतश्रुत्या द्वैतप्रत्यक्षाद्वैतागमयोरप्यभेदबोधनाद् न प्रत्यक्षागमयोर्बाध्यबाधकभावः ॥

[1]यत्तूक्तम्—प्रत्यक्षादिविरोधादद्वयाम्नायो न यथाश्रुति युक्तः—इति, तदयुक्तम्; बाधकाभिमतप्रत्यक्षादेर्बाध्याभिमताद्वैतबुद्धेश्च सर्वाद्वैतश्रुत्याऽभेदबोधनाद् बाध्यबाध्यकभावासिद्धेः। न ह्यद्वैतबुद्धेः, प्रत्यक्षादेश्च केनचिद्भेदो गृह्यते, ग्रहणे वा तस्यापि प्राक्तननीत्याऽद्वैतबुद्ध्याऽद्वैतबोधनाद् विरोधासिद्धेरद्वैताम्नायस्य गौणी वा लाक्षणिकी वा वृत्तिरित्यसाम्प्रतम्, मुख्यार्थबाधमन्तरेणोपचरितार्थपरिकल्पने न क्वचिद् मुख्यसम्प्रत्यय इत्यप्रामाण्यभङ्गप्रसङ्गात् ॥

॥ अभावेष्विव द्रव्यादित्रिके सामान्यादौ च स्वरूपस्यैव भेदत्वं बौद्धाधिकाररीत्याऽपि युक्तम्; लाघवात् ॥

यदपि—बौद्धाधिकारे द्रव्यादिषु त्रिषु वैधर्म्यम्, अन्योन्याभावः, स्वरूपञ्चेति त्रितयमपि, सामान्यादौ वैधर्म्यभेदाभावादन्योन्याभावः, स्वरूपञ्चेति द्वयम्, [2]अभावेषु वैधर्म्यान्योन्याभावयोरभावात् स्वरूपमेव भेद इति महता प्रबन्धेन स्थापितम्, तदपि स्वरूपभेदेनैवाभावेष्विव—भेदप्रतीतिव्यवहारोपपत्तौ भेदान्तरपरिकल्पनायां प्रमाणाभावात्, गौरवाच्चा[3]युक्तम् ॥

॥ द्रव्यादित्रिके सामान्यादित्रिके च स्वरूपातिरिक्तभेदाभावेऽनुमानोपपादनम्, तत्रोपाध्यादिनिरासश्च ॥

प्रयोगोऽपि—द्रव्यादयः, न वैधर्म्यभेदवन्तः, ज्ञेयत्वात्; सामान्यवत्। न च निस्सामान्यत्वमुपाधिः; सत्सामान्यम्; सन् समवायः, सन्तो विशेषा इति सामान्यादौ

---

प्रत्यक्षादिबुद्धेरद्वैतबुद्धेश्चाभेदबोधनमद्वैतश्रुतेर्न सम्भवति; तद्भेदग्राहिमानान्तरविरोधात्, अत्राह—**न हीति** ॥ प्रत्यक्षादिधीः, अद्वैतधियो भिन्ना, तत्सामग्रीतो विलक्षणसामग्रीजन्यत्वात्; घटवत्, अत्राह—**ग्रहणे वेति** ॥ **प्राक्तननीत्येति** ॥ प्रत्यक्षादिबुद्धेरद्वैतबुद्धितो भेदबुद्धेर्बाधकाभिमताया बाध्याभिमताद्वैतबुद्ध्या सहाद्वैतं सर्वाद्वैतश्रुत्या बोध्यत इत्यर्थः ॥

इत्थं भेदमात्रं प्रतिषिध्य, तद्विभागं पराकर्तुं परमतमनुवदति—**यदिति** ॥ बौद्धाधिकारे स्थापितमिति सम्बन्धः ॥

---

1. पृ. 454 प. 5
2. भावाभावेषु
3. गौरवाच्च युक्तम्

सत्तासामान्यावसायादनवस्थितेः। सामान्यादयो निस्सामान्या इति न स्थितिरिति चेत्, हन्त, वैधर्म्यभेदस्यापि भेदिनो भिन्नत्वेऽनवस्थितिसाम्यात्, भेदान्तरानुपगमे धर्मिण्येवान्तर्भावाद् भेदव्यवहारः सामान्यादौ सत्ताव्यवहारवत् स्वरूपमात्रनिबन्धन एव स्यात्; अन्यथा सामान्यादावपि सत्तासामान्यसमवायप्रसङ्गात् घटत्वपटत्वादि-सामान्यस्यैव वैधर्म्यरूपत्वात् तदभावे साध्ये तस्यैवोपाधित्वायोगाच्च। नापि प्रत्यक्ष-विरोधोऽनुमानस्य; सन्निहितासन्निहितसकलव्यक्तिनिष्ठसामान्यग्राहित्वयोगात्। नापि सन्निहिते वैधर्म्यं प्रत्यक्षम्, वैधर्म्यस्य तु विरोधो लक्षणम्। स चैकधर्म्यसमावेशरूप—इति हि तत्रैवोक्तम्। न च धर्मिभेदानवगमे तादृशवैधर्म्यावगमः, इति, धर्मिभेदसिद्धौ वैधर्म्यसिद्धिः, ततश्च धर्मिभेदसिद्धिरिति दुरुत्तरेतरेतराश्रयप्रसङ्गात्॥

॥ अन्योन्याश्रयात् स्वरूपातिरिक्तान्योन्याभावनिरासः॥

इतरेतराभावभेदेन धर्मिभेदसिद्धौ वैधर्म्यभेदबुद्धिस्वीकारेऽपि परस्पराश्रय एव—वैधर्म्यसिद्धावितरेतराभावसिद्धिः, इतरेतराभावसिद्धौ वैधर्म्यसिद्धिः—इति॥

॥ स्वरूपभेदपक्षे चक्रकनिरासः॥

स्वरूपभेदेन धर्मिभेदसिद्धौ भेदान्तरसिद्धिस्वीकारे त्रयाणां परस्परसाकाङ्क्ष-त्वात् चक्रकापत्तिः; धर्मिप्रतियोगिभेदानपेक्षभेदोपगमे स्वात्मन्यपि तत्प्रसक्तेरनिवार्य-त्वात्। भिन्नयोरनवगतभेदयोर्भेदग्रहः, अतो नैकस्मिन् प्रसङ्ग इति चेत्, न; अनवगतसत्त्वे प्रमाणाभावात्। यत्र भेदो गृह्यते, तत्रासौ पूर्वमासीदिति कल्प्यत इति चेत्, न; द्वौ चन्द्रावित्यत्रापि तत्कल्पनापत्तेः। न च निर्विकल्पकं भेद-गोचरमावयोः सम्प्रतिपन्नमस्ति। तथा द्रव्यादयो वास्तवान्योन्योन्याभावहीनाः, ज्ञेयत्वात्; अभाववत्॥

---

अनुमानात् प्रमाणाभावोऽसिद्ध इत्याह—**यत्रेति**॥ व्यभिचारितया लिङ्गं दूषयति—**नेति**॥ निर्विकल्पकगृहीतेषु धर्मिप्रतियोगिभेदेषु तदुपजीविसविकल्पक-भेदप्रत्यक्षोदयाद् नेतरेतराश्रयादि, तत्राह—**न चेति**॥ नापि सम्भवति; भेदगोचरत्वे वस्तुमात्रगोचरनिर्विकल्पकासम्भवादिति भावः॥

एवं वैधर्म्यभेदाभावमुक्त्वाऽन्योन्याभावभेदाभावमाह—**तथेति**॥ लब्धावसरः

॥ स्वरूपस्यापि भेदत्वासम्भवेन भेदस्य दुर्निरूपत्वम् ॥

अस्तु तर्हि सर्वत्र स्वरूपं भेद इति चेत्, स्वरूपमात्रं भेदः, स्वरूपविशेषो वा। आद्ये भेद[1]स्यापरापेक्षा न स्यात्, द्वितीये स्वरूपमेव विशेषः, स्वरूपस्य विशेषो वा। आद्ये विशेषपदोपादानवैयर्थ्यम्, उक्तदोषश्च। द्वितीये सम्बन्धस्य भेदगर्भत्वात्, स्वरूपविशेषयोर्भेदसिद्धौ स्वरूपसम्बन्धी विशेषः सिध्येत्, अतश्च भेदसिद्धिरिति दुरुत्तरः परस्पराश्रयः। भेदपक्षश्च सर्वप्रकारस्तिलशः खण्डितः ख ण्ड न टी का यामिति नेह प्रतन्यते ॥

॥ सुखादिभेदेनाप्यभेदायोगः; तेषामनात्माहङ्कारधर्मत्वादिति
नात्माद्वैतागमस्यान्यथानयनं युक्तम् ॥

सुखादीनां दृश्यत्वाद् रूपादिवदनात्मधर्मत्वात् तद्धर्मिणाञ्च दृश्यत्वाद् घटादिवदनात्मत्वात्,

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥
त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत॥

---

प्र भा क र आह—अस्त्विति॥ **उक्तदोषश्चेति**॥ न केवलं विशेषपदस्य स्वरूपपदेन सह प्रयोगायोगः, किन्तु स्वरूपस्य परानपेक्षप्रतीतिकत्वात्, तन्मात्रभेदस्य प्रतियोग्यनपेक्षदृष्टिप्रसङ्ग इत्यर्थः। **सम्बन्धस्येति**॥ स्वरूपस्येति षष्ठीनिर्दिष्टस्येति यावत्। स्वरूपादित्रयातिरिक्तः पृथक्त्वापरपर्यायो गुण एव भेद आस्ताम्; अनवद्यत्वात्, अत्राह—**भेदपक्षश्चेति**॥ पृथक्त्वगुणस्य भेदत्वे गुणादीनां निर्गुणानामभिन्नत्वापत्तौ द्रव्यादपि तेषामभेदे सिद्धे द्वैतमनोरथ इत्यादि ख ण्ड न उक्तमित्यर्थः॥

सुखादिव्यवस्थानुपपत्त्या, विरुद्धधर्माध्यासलिङ्गेन वा क्षेत्रज्ञभेदसिद्धावद्वैतागमस्य महात्मनो अभेदगौणार्थत्वमिति द्वैतिभिरुच्यमानं निराकरोति—**सुखादीनामिति**॥ सुखाद्याश्रयस्य भेदः साध्यते, तत्साक्षिणो वा। नाद्यः; तस्यात्मनो भेदप्रमाणेनात्माद्वैतागमस्याविरोधादित्याशयेन तस्यानात्मत्वं साधयति—

---

1. भेदस्य परापेक्षा

इत्यादिस्मृतेश्चाहङ्कारस्यानात्मत्वात्, तत्साक्षिणश्च लौकिकप्रमाणाविषयत्वात् तद्भेदोऽपि न मानगोचरः, इति नात्माद्वैतागमस्यान्यार्थत्ववर्णनोपपन्ना ॥

यज्ञदत्तः, देवदत्ताद् भिन्नः, संस्काराद्यनुवृत्तावपि तद्गतसुखासन्धातृत्वात्; घटवदिति चेत्, [न;] वास्तवभेदे साध्ये दृष्टान्त स्यसाध्यवैकल्यात्, भेदमात्रसाधने सिद्धसाधनात् ॥

[1]एतेन—आत्मा, आत्मनो भिद्यते, द्रव्यत्वात्, घटवदित्यादिप्रयोगान्तरम् निरस्तम्। "एकमेवाद्वितीयम्" इत्यादिश्रुतिविरोधश्च ॥

॥ एकशब्दार्थनिष्कर्षः, चिदात्मैक एव। एवमपि कल्पितभेदमवलम्ब्य कर्मकाण्डादिप्रामाण्यम्, वस्तुगत्या तु निर्भेदं ब्रह्मैवेत्युपसंहारश्च ॥

यत्तु—कश्चिदवोचत्—'एकम्' इति च द्वैरूप्यनिराकरणपरम्, एकत्वसङ्ख्यां

---

**अहङ्कारस्यानात्मत्वादित्यन्तेन** ॥ त्रिविधः—सात्त्विकादिभेदेन। द्वितीयमपवदति—**तत्साक्षिणश्चेति** ॥ आत्मा, न लौकिकमानगम्यः, भूतभौतिकविलक्षणत्वात्; शशशृङ्गवदित्यर्थः ॥

अस्यैवानुमानस्यात्मविषयत्वे व्याघातः, तदविषयत्वे लौकिकप्रमाणाविषयत्वासिद्धिः, कालादौ व्यभिचारश्च, निदर्शनं चाश्रयहीनम्, अत आत्मभेदोऽनुमानगम्य इति वैशेषिकः शङ्कते—**यज्ञदत्त इति** ॥ यत्किञ्चिदसन्धातृत्वं देवदत्तस्यास्तीति तेन व्यभिचारं वारयति—**तद्गतेति** ॥ तद्गतसुखाद्यसन्धातृत्वं तस्यैव कदाचित् तत्संस्कारापाटवात्, तदनुरोधाद्, विपरीतसंस्कारप्राबल्यात्मनोऽनवधानाद्वा भवति, इति तेन व्यभिचारः, तत उक्तम्—**संस्काराद्यनुवृत्ताविति** ॥ परिहरति—**नेति** ॥ अयमाशयः—आत्मनो लौकिकप्रमाणगम्यत्वसाधकप्रमाणस्यात्मा गोचरः? न वा? न चेत्, साध्यव्याघातः। प्रथमेऽप्येतद्गोचरत्वमनेनैव सिद्धं चेत्, आत्माश्रयः। मानान्तरेण चेत्, अनवस्था। तेन तुल्यगतित्वाद् नैकस्यैव पर्यनुयोगः। न च कालादौ व्यभिचारः; तस्यापि विभक्तत्वेन भूतभौतिकान्यतरत्वानुमानात्। नाप्याश्रयहीनं निदर्शनम्; एतन्निषेधव्यवहारं प्रत्याश्रयत्वानाश्रयत्वयोर्व्याघातादिति। अद्वैतानुमानस्यार्थान्तरपरत्वाद् न तद्विरोधोऽनुमानस्येति वा दि वा गी श्व र चोद्यमनुवदति—**यत्त्विति** ॥ ब्रह्मणोऽनेकत्वशङ्का निर्मूला न सम्भवतीति प्रथमव्याख्यानं दूषयति

---

1. एतेनात्मानात्मनो

वाऽऽचष्टे ; तथैव लोकव्युत्पत्तेः, लोकावगतशक्तेश्च वेदे बोधकत्वात्—इति, तदसत् ; एकस्मिन् द्वैरूप्यप्रसक्त्यभावात् , अप्रसक्तनिषेधानभ्युपगमात् , एकमेवा[का]द्वितीय-पदाभ्यामभ्यासरूपाभ्यां सर्वप्रकारभेदनिराकरणप्रतीतिविरोधाच्च । एकशब्दस्यैकत्व-सङ्ख्यावति व्युत्पत्तिरप्ययुक्ता ; गुणादयो निर्गुणा इति सिद्धान्ते रूपमिदकमेको रस इति प्रयोगाभावप्रसङ्गात् । तस्मादेक एव चिदात्मा मायावेशवशाच्छुक्तिरिव रूप्यरूपेण, द्वैतप्रपञ्चाकारेण विवर्तते । तदालम्बनप्रत्यक्षादि प्रमाणम् , कर्मकाण्डं च देवतोपासनापरमपि काण्डमिति मूकीभव ॥

॥ इति न्यायचन्द्रिकायां भेददुर्निरूपत्वंनाम पञ्चमं प्रकरणम् ॥

---

---

—तदिति ॥ एकशब्दस्य सङ्ख्यामात्रेऽपि व्युत्पत्तिः ? तद्वति वा ? नाद्यः ; द्रव्यशब्देन सामानाधिकरण्यविरोधात् , न द्वितीय इत्याह—एकशब्दस्येति ॥ लौकिकप्रमाणस्यारोपितद्वैतालम्बनस्य व्यावहारिकं प्रामाण्यम् , अनारोपितगोचरागम-वाक्यस्य तत्त्वावेदनरूपमिति व्यवस्थितविषयत्वाद् न समन्वयस्याद्वैतविषयस्य विरोध इत्युपसंहरति—तस्मादिति ॥

॥ इति न्यायचन्द्रिकाविवरणे भेददुर्निरूपत्वप्रकरणं पञ्चमम् ॥

---

## ॥ अथ न्यायचन्द्रिकायामात्मस्वप्रकाशत्वप्रकरणं षष्ठम् ॥

॥ आत्मनश्चित्स्वभावत्वेन स्वप्रकाशत्वप्रतिज्ञा ॥

अथ—कथमस्वप्रभस्यात्मनः कुम्भवत् चित्स्वभावत्वम्? अस्वप्रभद्रव्यत्वस्याचित्स्वभावत्वेनाविनाभावात्; अतः स्वप्रभोऽयमभ्युपगम्यते, तन्न; प्रमाणाभावात् ॥

॥ आत्मस्वप्रकाशत्वेऽनुमानप्रमाणनिरास उदयनानुसारेण ॥

तथा हि—किमनुमानं स्वप्रभत्वे मानम्? आगमो वा? न तावदाद्यः; हेतुदृष्टान्ताभावात्। अथास्ति तावद्—ममेदमनुकूलम्, प्रतिकूलमिति वा विज्ञायानुकूले प्रवर्तते, प्रतिकूलाच्च निवर्तत इति लौकिकपरीक्षकाणां सम्प्रतिपत्तिः। तच्चास्य विज्ञानम्, अवच्छेदकात्मप्रकाशाधीनम्, अवच्छिन्नप्रकाशत्वात्; य उक्तसाधनः, स उक्तसाध्यः; यथा दण्डप्रकाशाधीनो दण्डिप्रकाशः। स चायमात्मा प्रकाशपराधीनतया न निरूपणगोचरतामाचरति, इति प्रसक्तमतिनिषेधे परिशेषतः स्वयम्प्रकाशतासिद्धिरिति—मतिः, तन्न; 'अघटं भूतलम्' इति विशिष्टप्रकाशे व्यभिचारात्। तदुदितमुदयने—"स ह्यर्थो विशेषणीभविष्यन् केवलोऽपि स्फुरेत्, यस्य व्यवच्छेदकं विज्ञानम्, व्यञ्जकम्" इति। अस्यार्थः—येषां हि दण्डकुण्डलादीनामर्थानामर्थान्तरज्ञाननिरपेक्षैः स्वविषयैरेव ज्ञानैरितरव्यवच्छेदः सिध्यति, त एव विशेषणीभवन्ति, केवला अपि स्फुरेयुः, येषां त[1]ज्ज्ञानसमवायाभावादीनां स्वगोचरं ज्ञानं व्यञ्जकमात्रम्, न तु व्यवच्छेदकम्, न हि ते प्रतियोगिज्ञाननिरपेक्षैरेव स्वविषयैर्ज्ञानैः स्वेतरव्यवच्छिन्नाः प्रतीयन्ते, तेषां केवलस्फुरणमन्तरेणैव विशिष्टज्ञानगोचरभावः, इति प्रसक्तप्रतिषेधासिद्धेश्चाहं सुखीत्यहम्प्रत्ययवेद्यत्वेनोपपत्तेः ॥

---

## ॥ अथ न्यायचन्द्रिकाविवरणे आत्मस्वप्रकाशत्वप्रकरणं षष्ठम् ॥

चिद्रूपत्वमुपक्षिप्तमाक्षिपति—**अथेति** ॥ स्वप्रभद्रव्यत्वहेतोः प्रसिद्धिमाह—**अथेति** ॥ 'अघटमवनितलम्' इति विशिष्टप्रकाशस्य विशेषणीभूतकुम्भाभावभासनमन्तरेण जायमानत्वात् तेन व्यभिचार इति दूषयति—**तन्नेति** ॥ अर्थान्तरग्रस्तत्वादपि नेदं स्वप्रकाशत्वसाधकमित्याह—**प्रसक्तेति** ॥

---

1. येषामपि ज्ञानसमवाया (क)

॥ अस्वप्रकाशत्वेऽप्यात्मनो ज्ञानकर्तृकर्मभावाविरोधः ; संविदि भासमानत्वस्यैव ज्ञानकर्मत्वात् ॥

एकस्य कर्मकर्तृत्वं यद्यप्यन्यत्र नेष्यते ।
तथाप्यत्रैव दृष्टत्वाद् न विरोधपदं भवेत् ॥ ५६ ॥

योऽपि ग्राहकरूपेण सिद्धिं सर्वासु वृत्तिषु ।
ब्रुवाणः, कर्मभावेन नेमं प्रत्यक्षमिच्छति ॥ ५७ ॥

कर्मत्वं किमभिप्रेतं तस्ययन्नात्मनीक्ष्यते ।
पराश्रयक्रियाजन्यफलभाजनतेति चेत् ॥ ५८ ॥

अस्माभिरपि नैवेष्टं कर्मत्वमिदमात्मनि ।
तस्य स्वाधारविज्ञप्तिव्यवहार्यत्वदर्शनात् ॥ ५९ ॥

यत्र ज्ञाने तु यद् भाति, तत् त[1]त्कर्मेति लक्षणात् ।
आत्मापि ज्ञानकर्मेति गीयते न्यायवेदिभिः ॥ ६० ॥

॥ आत्मनः प्रमेयत्वे घटादिवदनात्मत्वप्रसङ्गः ; आत्मवद् घटादेरप्यात्मत्वापत्त्या निरस्यते ॥

यस्त्वात्मनः प्रमेयत्वादनात्मत्वं प्रस[2]ञ्जयेत् ।
घटस्याप्यघटात्मत्वं स कस्मात् न प्रसञ्जयेत् ॥ ६१ ॥

---

अहम्प्रत्ययवेद्यत्वमनुपपन्नम् ; एकस्यां क्रियायामेकदैवैकस्यैव कर्तृत्वेन प्रविष्टस्य तद्विपरीतकर्मत्वविरोधात्, अत्राह—**एकस्येति** ॥ संविदाश्रयत्वेनैवात्मनः प्रत्यक्षत्वम्, न तु कर्मत्वम्, कर्मकर्तृभावस्य भिन्नाश्रयत्वनियमात्, अत आह—**योऽपीति** ॥ **इम**[म्=]आत्मानम्, कर्मभावेन प्रत्यक्षं नेच्छति । तस्य कर्मत्वं किमभिप्रेतम्—परसमवेतक्रियाफलशालित्वम्, उत संविदि भासमानत्वमिति विकल्पः । प्रथमं शङ्कते—**परेति** ॥ एवं प्रथमकल्पमिष्टापत्त्या निरस्य, परिशिष्टकल्पमङ्गीकरोति—**यत्रेति** ॥ संवित्कर्मतया तदाश्रयतया वाऽऽत्मनः प्रमेयत्वे घटादिवदनात्मत्वप्रसङ्गादप्रमेयत्वमङ्गीकार्यम्, अत्राह—**यस्त्विति** ॥ आत्मा, न संविदाश्रय-

---

1. तत्तकर्मे (क) 2. प्रसजयेत् (क)

तत्राध्यक्षविरोधश्चेत् समानः प्रकृतेऽपि सः ।
प्रत्यक्षगोचरीभावो यस्मादात्मनि वर्णितः ॥ ६२ ॥

तस्माज्जात्युत्तरत्वेन नैवम्प्रायाणि सूरिभिः ।
प्रयोज्यानि सभामध्यमध्यासीनैः कथञ्चन ॥ ६३ ॥

तस्मादात्मनि सम्भूतमहमित्यात्मगोचरम् ।
प्रत्यक्षमभ्युपेतव्यं युक्तिमार्गानुगामिनाम् ॥ ६४ ॥

॥ अत्रायं पुरुषः स्वयं ज्योतिरित्यागमोऽप्यात्मस्वप्रकाशत्वे न मानम् ;
तस्यान्यार्थत्वात् , स्वप्रकाशत्वे चात्मनः कथं शब्दबोध्यत्वमपि ॥

अथ—" अत्रायं पुरुषः स्वयञ्ज्योतिः " इत्यागमः प्रमाणम् , न ; अन्यार्थत्वात् । तथा हि -- घटकण्टकादिवत् परेणैव प्रतिपत्त्रा[ न ]प्रकाशनीय आत्मा, किं तर्हि ? स्वयमेव=स्वात्मनो ज्योतिः=प्रकाशकः=स्वयमेव स्वात्मानं जानातीत्यर्थः । इतरथेदमेव वाक्यम् , न[वा] शब्दोऽर्थप्रत्यायक इति । तथा हि—यदीदमात्मानं स्वप्रकाशं बोधयति, कथं तर्हि प्रमाणान्तरप्रमेयता न भवेत् ? अथ न प्रकाशयति, तथापि कथमेतेनात्मनः स्वप्रकाशता सिद्ध्येत् ? आत्मा[1] वा प्रकाश्यः,

॥ अवच्छेदकात्मप्रकाशेनैव ज्ञानप्रकाशो न कुत्रापि व्यभिचारः ;
अभावस्याप्यवच्छेदकस्य प्रकाशेनैव भूतलादिप्रकाशात् ॥

अत्रोच्यते — अवच्छेदकविज्ञानादवच्छिन्नप्रकाशनं नियतं चेत् , अभावादौ तत् कस्माद् नाभ्युपेयते ? ' दण्डी देवदत्तः ' 'कुण्डली कुलटः' इत्यादिविशिष्टदर्शनं विशेषणदर्शनपुरस्सरनियतं दृष्टं चेत् , अभावेऽपि योग्यानुपलब्धिलभ्ये स्वरूपेणोपलब्धेः पश्चात् ' अघटं भूतलम् ' इति विशिष्टा दृष्टिरिष्यताम् ; व्याप्ति[2]सामर्थ्यात् ।

---

तथाऽपरोक्षः, अपरोक्षत्वात् ; घटवत् , नापि स्वप्रकाशतया ; प्रमाणाभावात् , तस्मादहम्प्रत्ययवेद्य इत्युपसंहरति—**तस्मादात्मनीति** ॥ अवच्छिन्नप्रकाशत्वहेतोरघटं भूतलमिति विशिष्टप्रकाशे न व्यभिचारः ; तत्राप्युक्तहेतुनैव साध्यसम्प्रतिपत्तेः सुकरत्वादिति सिद्धान्तयति—**अत्रोच्यत इति** ॥ **व्याप्तिसामर्थ्यादिति** ॥ 'अघटं' भूतलमिति ज्ञानम्, विशेषणज्ञानपूर्वकम्, विशिष्टज्ञानत्वात्, दण्डीति ज्ञानवदि-

---

1. आत्मा पर प्रकाश्यः (क) 2. भाविसामर्थ्यात्

ज्ञानस्य च स्वप्रकाशत्वेन प्रकृतेऽपि प्रतिपत्तिगोचरस्य पक्षतुल्यत्वाद् न तेनानैकान्तः। समवा[1]यो यद्यस्ति, यदि च विशिष्टः प्रकाशते, तत्रापि व्याप्तिबलादेव विशेषणप्रकाशपुरस्सरत्वमनुमेयमिति न क्वापि व्यभिचारावसरः ॥

॥ ममेदमनुकूलमित्यात्मावच्छेदकतया भासमान आत्मा
प्रत्यगात्मन्यध्यस्ततत्तादात्म्यापन्नोऽहमर्थः। तस्य प्रकाशमानत्वमपि
तदधिष्ठानसंविन्मात्राधीनमिति व्यवस्था ॥

स्यान्मतिः—साभासाहङ्कारस्यानुकूलाद्यन्वयिनोऽत्र स्वप्रकाशत्वं साध्यम्? तत्साक्षिणो वा? आद्ये अपराद्धान्तः। न द्वितीयः; असङ्गस्यानुकूलाद्यन्वयायोगात्—इति, तदसत्; असङ्गत्वस्य वास्तवसङ्गविरोधेऽपि प्रतिकूलाद्यन्वयिनोऽहङ्कारस्य प्रतीच्यैक्येनाध्यासात् प्रतीचोऽपि प्रतिकूला[2]न्वयित्वं प्रतीयते। भगवताप्यभिहितम्—"अन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य" इति ॥

"यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति सः।"

इत्यज्ञानसंसारभ्रमे[3]मज्ञानानामेकाश्रयत्वाश्रयणाच्च। तस्मादनुकूलादिविशेषणामात्मप्रकाशत्वप्रसाधने न किञ्चिदवद्यं पश्यामः ॥

॥ साक्षिस्वप्रकाशतायां ममेदमनुकूलमित्यादिविज्ञानस्य प्रामाण्यम् ॥

अस्तु वाऽनुकूलाद्यन्वयिनोऽहङ्कारस्य प्रतीतिरत्र साध्या, सैव स्वप्रकाशात्म-

---

त्यर्थः। विषयविशेषावच्छेदकं विदित्वा घट इत्यादौ ज्ञानम्, तत्र विशेषणज्ञानस्फुरणमन्तरेण तद्विशिष्टार्थप्रकाशे व्यभिचारः, अत्राह—**ज्ञानस्येति** ॥ समवेतं रूपमित्यादौ विशेषणसमवायप्रकाशनिरपेक्षविशिष्टप्रकाशदर्शनात् तत्र व्यभिचारो दुर्वारः, तत्राह—**समवाय इति** ॥ प्रतीचो वास्तवमनुकूलाद्यन्वयित्वं व्याहतमुच्यते? उतारोपितमपि? नाद्यः; वास्तवावच्छेदकप्रकाशपुरस्सरत्वस्यात्र साध्यत्वाभावात्। न द्वितीयोऽपि; विरोधाभावादित्याह—**तदसदिति** ॥ अहङ्कारैक्याध्यासेन प्रत्यगात्मनि तद्धर्माध्यासेऽस्मदाराध्यपादसंवादमाह—**भगवतेति** ॥ अहङ्कारसाक्षिण्यनुकूलत्वादिधर्माध्यासे भगवत इष्टसिद्धिकारस्यापि वचनमुदाहरति—**यस्येति** ॥ सभासाहङ्कारस्यानुकूलाद्यवच्छेदकस्य प्रकाशोऽत्र साध्यत इति प्रथमकल्पेऽपि न

---

1. समवायो
2. कूल्या
3. संसारभ्रमसंम्यज्ञानानां

प्रसादमन्तरेणानुपपद्यमाना तात्साक्षिणः स्वप्रकाशतामाक्षिपेत् । तथा हि—सिद्धा तावत्प्रतीचः प्रसिद्धिः । न सा भ्रान्तिः ; अबाधात्, न संशयः ; वाकारार्थानिर्देशात्, अपरोक्षत्वात् ॥

॥ आत्ममनःसंयोगस्यात्मज्ञानसाधनत्वनिरासः ॥

अत एव न लिङ्गादिजन्या । प्रत्यक्षत्वेऽपि न चक्षुरादिजन्या ; अन्धादेरपि भावात् । आत्मान्तःकरणसंयोगादात्मज्ञानमिष्टं कणभक्षाक्षचरणपक्षकक्षीकारिणामिति चेत्, न ; तस्यौपनिषदपक्षाक्षमामात्रत्वात् । तथा हि—किमात्मैकदेशेन मनसा युज्यते, सामस्त्येन वा ? अग्रिमे सांशत्वकार्यत्वानित्यत्वादिदोषाः प्रादुष्युः । द्वितीये कृत्स्नात्मवृत्तिसंयोगाश्रयत्वे मनसो यावदात्मव्यापितया विभुत्वं भवेत् । आत्ममनस्संयोगाद् आत्मज्ञाने सुप्तिमुक्तिप्रलयानां प्रलय एव स्यात् ; तत्संयोगसातत्यात् । अदृष्टाभावाद् नैवमिति चेत्, न ; दृष्टकारणपौष्कल्ये सत्यदृष्टस्याप्रयोजकत्वात्, अन्यथा कर्मण्यपि कदाचिद् विभागो न स्यात् ॥

॥ आत्मन आत्मवेद्यत्वायोगः ॥

किञ्च, किमात्माऽऽत्मान्तरेण वेद्यते ? स्वात्मना वा ? नाद्यः ; अनभ्युपगमात्, आत्मान्तरासम्भवाच्च । द्वितीये किमेकदैव [ द्रष्टृत्वम् ] दृश्यत्वं च, क्रमेण वा ? यौगपद्येऽपि किमंशाभ्याम्, उत सामस्त्येन ? नाद्यः ; अनंशत्वात् । द्वितीये [1]द्रष्टृत्वेन समाप्तेर्न दृश्यत्वम् । दृश्यत्वे तथैव समाप्तेर्न द्रष्टृत्वं स्यात् । एकस्मिन्नेव रूपे द्रष्टृत्वम् दृश्यत्वं च स्यादिति चेत्, न ; द्रष्टृदृश्यरूपैक्ये तच्छब्दपर्यायतापत्तेः, विलक्षणव्यवहारस्य भ्रान्ततापत्तेश्च । नापि क्रमेण ; द्रष्टृभावे दृश्या-

---

विरोध इत्याह — **अस्तु वेति** ॥ साभासाहङ्कारप्रतीतौ सिद्धायामपि तत्साक्षिणः स्वप्रकाशत्वं कथमत्र सिध्येत् ? अत आह — **सैवेति** ॥ स्वप्रकाशे साक्षिण्यैक्याध्यासव्यतिरेकेण साभासाहङ्कारप्रतीतेरनुपपत्तिं प्रकटयति— **तथा हीति** ॥ अस्यैवात्मत्वेन परैरभ्युपगमात् पराभ्युपगमरीत्यैव तस्य प्रकारान्तरं वारयितुं प्रतीच इत्युक्तम् ॥

**मनसो यावदात्मव्यापितयेति** ॥ मनः, विभु, ज्ञानासमवायिकारणाश्रयत्वात् ; आत्मवत्, अन्यथा कृत्स्नात्मवृत्तिसंयोगस्य स्वातन्त्र्यप्रसङ्ग इत्यर्थः ॥

करणपर्यालोचनया न मानान्तरगोचरत्वमित्युदितम्, इदानीं कर्तृस्वरूपपर्या-

---

1. दृष्टृ (क)

भावात्, दृश्याभावे द्रष्टुरभावात्। विमतम्, न स्वाश्रयविषयम्, ज्ञानत्वात्, घटज्ञानवत्। विमतः, स्वव्यतिरिक्तदृश्यः, दृश्यत्वात्; घटवत्, आत्मा, नास्मदादिमानसप्रत्यक्षः, आत्मत्वात्; परमात्मवत्। आत्मत्वं च मेयत्वादिवदौपाधिको धर्मः॥

॥ आत्मनो ज्ञानकर्तुर्न तत्कर्मकर्तृत्वम्॥

न चाध्यक्षबाधः; तस्यैवासिद्धेः, विपक्षे कर्तृकर्मभावविरोधप्रसङ्गो बाधः; परसमवेतक्रियाफलशालित्वेन व्याप्तत्वात् कर्मभावस्य। न चाकर्मकं प्रत्यक्षमस्ति; जानातेः सकर्मकत्वात्। 'घटः क्रियते', 'वृक्षश्छिद्यते' स्वयमेव'इत्यादावस्मदादिकर्तृके कर्मणि सौकर्यापेक्षया कर्तृत्वोपचारात्, ईश्वरकर्तृकेऽस्मदादिकर्तृविरहविवक्षया कर्तृत्वोपचाराद् नैकस्य कर्मकर्तृत्वं वास्तवम्॥

॥ स्वप्रकाशत्वनिर्वचनम्। तत्र कर्तृकर्मभावाविरोधश्च॥

स्वप्रकाशत्वेऽपि कर्तृकर्म[भाव]विरोध इति चेत्, न; स्वयमेव व्यवहारहेतुः प्रकाशः, नान्यो यस्य, स स्वप्रकाश इति व्युत्पत्त्या स्वातिरेकिदर्शनप्रयुक्तव्यव-

---

लोचनयाऽप्याह — **किञ्चेति**॥ **वेद्यते**॥ मानसज्ञानेनेति शेषः। उक्ततर्कस्यानुग्राह्यप्रमाणमाह—**विमतमिति**॥ औपनिषदानामात्मत्वजातेरभावादसिद्धो हेतुः, अत्राह—**आत्मत्वं चेति**॥

अहंप्रत्यक्षविरोधोऽनुमानकलापस्येति, अत आह—**न चेति**॥ वित्तौ भासमानत्वं कर्मत्वम्, न परसमवेतक्रियाफलभागित्वम्, अतो न कर्तृकर्मभावविरोधः, तत्राह—**परसमवेतेति**॥ कर्मैव कर्तृत्वेन विवक्ष्यते, यत्र स कर्मकर्ता। तत्र कर्तृकर्मणोरेकत्वदर्शनाद् न कर्मभावस्य परसमवेतक्रियाफलभागित्वेनापि नाभावः, अत्राह—**घट इति**॥ अस्मदादिकर्तृके कर्मणि घटादौ, ईश्वरकर्तृके कर्मणि वृक्षादौ॥

किमिदं स्वप्रकाशत्वम्— स्वस्य स्वयमेव प्रकाश इति वा? स्वस्मिन् प्रकाशः स्वयमिति वा? स्वयं च प्रकाशश्चेति वा? नान्तिमः; अविवादात्। ज्ञानं स्वयम्, घटादेः प्रकाशश्चेत्यभ्युपगमात्। प्रथमयोः कर्तृकर्मविरोधतादवस्थ्यमित्याह—**स्वप्रकाशत्वेऽपीति**॥ अस्मत्प्रत्ययप्रयुक्तव्यवहारगोचरत्वमात्मन इष्टम्— यत आह—

हारागोचरत्वस्य स्वप्रकाशार्थत्वेन विवक्षितत्वात्। अस्मत्प्रत्ययाहङ्कारस्यात्मव्यवहारहेतोः स्वरूपदर्शनव्यञ्जकोपाधेरदर्शनत्वाद् न लक्षणासम्भवः ॥

॥ आत्मनः संविदाश्रयत्वमेव, न संविद्रूपत्वमिति शङ्का,
संविदन्यत्वे तस्य चाक्षुपत्वाद्यापत्त्या तत्परिहारश्च ॥

नापि संवित्, आश्रयतयाऽपरोक्षा, अपरोक्षत्वात्; घटवत्। न चाद्रष्टृत्वमुपाधिः; तस्य पक्षेतरत्वात्, उपाधावेव तस्य साध्यव्यापकत्वाच्च, स्वातिरेकिदर्शनप्रयुक्तापरोक्षव्यवहारगोचरस्य घटादिवत् संवित्कर्मत्वप्रसङ्गाच्च, सर्वार्थवृत्तिषु ग्राहकत्वेन प्रकाशे चाक्षुषत्वप्रसङ्गाच्च, तज्जनितज्ञाने भासमानत्वस्यैव तत्त्वात्। नीरूपद्रव्यस्य चाक्षुषत्वं चेत्, आकाशादीनामपि चाक्षुषत्वप्रसङ्गः। न, आत्मा, चाक्षुषज्ञाने प्रकाशते, अरूपिद्रव्यत्वात्, आकाशवत्। तस्मात् परिशेषसिद्धमात्मनः स्वप्रकाशत्वम्। प्रमेयत्वे घटादिवदनात्मत्वप्रसङ्गाच्च। न च प्रमेयत्वे घटस्याघटत्वप्रसङ्गात् घटः स्वप्रकाश इति प्रसङ्गः; प्रत्यक्षसिद्धस्य घटस्याघटत्वप्रसञ्जने प्रत्यक्षविरोधात्, अन्यस्य तत्प्रसञ्जनस्येष्टत्वात्। आत्मनः प्रत्यक्षत्वासिद्धेर्न प्रकृते तद्विरोधः ॥

---

"अस्मत्प्रत्ययविषयत्वात्" इति, ततो लक्षणासम्भव इत्याशङ्क्याह—**अस्मत्प्रत्ययेति** ॥

आत्मा, संवित्सम्बन्धितयाऽपरोक्षः, संविदन्यत्वे सत्यपरोक्षत्वात्; घटवत्, तच्च न कर्मत्वेनेति परिशेषादाश्रयत्वेनेति, अत्राह—**स्वातिरेकीति** ॥ 'अहं घटं जानामि' इत्यत्रात्मनोऽपि प्रसिद्धिर्वाच्या; अन्यथा स्वपरसंवेद्ययोरविशेषापातात्। न चैतज्ज्ञानकर्मतया सिद्धिः; अस्य घटाद्यनाकारत्वात्। अतो ग्रहणाधिकरणत्वेनैवापरोक्ष्यम्, अत्राह—**सर्वार्थेति** ॥ **तत्त्वादिति** ॥ चाक्षुषत्वादित्यर्थः। चक्षुर्जनितज्ञानाश्रयतया भासमानस्य चाक्षुषत्वमपीष्टम्, अत आह—**नीरूपेति** ॥ प्रसङ्गस्य विपर्ययपर्यवसानायाऽनुग्राह्यमाह—**न, आत्मेति** ॥ एवं परैरात्मत्वेनाभ्युपगतस्य साभासाहङ्कारस्य प्रकारान्तरेण प्रकाशानुपपत्तिं प्रतिपाद्य, स्वप्रकाशे साक्षिण्यैक्याध्यासादेव सिद्धिरित्युपसंहरति—**तस्मादिति** ॥ प्रत्यक्षेण यस्य घटत्वं गृह्यते, तस्याघटत्वप्रसञ्जनम्, उत ततोऽन्यस्य यस्य कस्यचिद् द्रव्यमात्रस्य? आद्यं दूषयति—**प्रत्यक्षसिद्धेति** ॥ द्वितीयमपवदति—**अन्यस्येति** ॥ आत्मनोऽपि प्रत्यक्षप्रमाणसिद्धस्यानात्मत्वप्रसञ्जने प्रत्यक्षविरोधस्तुल्यः, तत्राह—**आत्मन इति** ॥

॥ "अत्रायं पुरुषः" इति श्रुतेः स्वयमेवात्मानं जानातीतिनार्थः, किन्तु स्वयमेव प्रकाशत इति ॥

"अत्रायं पुरुषः स्वयं ज्योतिः" इति श्रुतेश्च, 'स्वयमेव स्वात्मानं जानाति' इति व्याख्यानं ज्योतिर्ब्राह्मणपौर्वापर्यप्रतिसन्धानविरुद्धम् । तत्र हि चन्द्रादित्याग्न्यादीनां व्यवहारहेतुप्रकाशानां ज्योतिश्शब्देन प्रकृतानां स्वप्नावस्थायामुपरमे सत्यात्मव्यवहारहेतुप्रकाशः को नामेति जनकप्रश्ने "अत्रायं पुरुषः स्वयं ज्योतिः" इति याज्ञवल्क्यप्रतिवचनमात्मनः स्वव्यवहारहेतुप्रकाशत्वमाह; इतरथा प्रश्नप्रति-वचनयोरसाङ्गत्यप्रसङ्गात् ।

॥ स्वप्रकाशस्याप्यज्ञाननिवर्तनार्थं वाक्यजन्यवृत्तिज्ञानपेक्षा न विरुध्यते ॥

एतद्वाक्यधीगोचरत्वागोचरत्वयोर्व्याघात इत्यपि न; वाक्येन लक्षणया तद्विषयमनोवृत्तिजननात् । विज्ञानरूपोऽयमात्मा कृत्स्नः प्रज्ञानघन एवेत्यवगतः ॥

॥ विज्ञानस्य स्वप्रकाशत्वात् तद्रूपस्यात्मनोऽपि स्वप्रकाशत्वम् ॥

ज्ञानं च स्वप्रकाशमिति तद्रूपस्यात्मनः कथमतथात्वम्? तथा हि— विज्ञानमर्थप्रकाशनसमये न प्रकाशते? [1](प्रत्यक्षेण वा प्रकाशते), फललिङ्गेन वाऽनुमीयते, स्वतो वा प्रकाशत इति चतुष्टयी गतिः । तत्र नाद्यः; मयेदं विदितमित्यनुसन्धानविरोधात्, अप्रतिपन्नस्यानुसन्धातुमनर्हत्वात् । न द्वितीयः; ज्ञानम्, न समानजातीयकर्म, गुणत्वात्; अग्नेरौष्ण्यवत् । व्यवसायत्वानुव्यवसायत्वजातिभेदात् सिद्धसाधनमिति चेत्, न; गुणत्वापरजात्या समानजातीयत्वस्य विवक्षितत्वात् ।

---

पूर्वापरविरोधं प्रकटयितुं पौर्वापर्यमनुसन्धत्ते—**तत्र हीति** ॥ जनकप्रश्नस्यात्मव्यवहारहेतुप्रकाशविषयत्वेऽपि प्रतिवचनं ज्ञानकर्तृगोचरं किं न स्यात्? अत्राह— **इतरथेति** ॥

इतरथेदमेव वाक्यं व्याहन्येतेत्यादि चोद्यमुन्मूलयति—**एतद्वाक्येति** ॥

आत्मा, स्वप्रकाशः, विज्ञानाद् भेदहीनत्वात्; विज्ञानवदित्याशयेनाह— **विज्ञानेति** ॥ दृष्टान्तमुपपादयितुं विमृशति—**तथा हीति** ॥ ज्ञानमज्ञायमानं सत्तयाऽर्थव्यवहारकमिति प्रथमं पराकरोति—**तत्रेति** ॥ संयुक्तसमवायाद् मनसा ज्ञान-

---

1. कुण्डलान्तर्गतं नास्ति

ज्ञानस्यास्वप्रतिपत्तिरूपत्वे नियत एवार्थो गोचरः, न सर्वोऽपीति कथं स्यात्? नियतस्यैव तस्य प्रतिभासमानत्वादिति चेत्, कुत इदमवगन्तव्यम्? न तावत् तत एव; [1]स्वप्रतिपत्तिवैकल्यात्॥ न हि [2]स्वप्रतिपत्तिविकलादेव ज्ञानात्तत्र नियतार्थप्रतिभासनमन्यदा [3]शक्यावबोधम्। मा भूत् ततस्तव बोधः, तद्विषयात्तु ज्ञानान्तरात् भवत्येवेति चेत्, न; तस्यापि स्वप्रतिपत्तिवैकल्ये तत्रापि तद्विषयस्य ज्ञानस्य नियतार्थगोचरत्वमेव प्रतिभाति, न निरवशेषवस्तुगोचरत्वम्, इति [4]तत एवावगन्तुमशक्यत्वात्। तस्यापि नियतविषयत्वमन्यतस्तद्विषयादेव ज्ञानादवगम्यत इति चेत्, न; अनवस्थाप्रसङ्गात्। सत्येवं परापरज्ञानपरिकल्पनस्यावश्यम्भावात्, त[अ]तस्तद् दूरमपि गत्वा क्वचिन्नियतविषयमध्यवसातुकामेन तद्विषयस्य ज्ञानस्य स्वप्रतिपत्तिरूपत्वमभ्युपगन्तव्यम्; अन्यथा तद्विषयज्ञाननियतार्थगोचरत्वप्रतिपत्तेर्दुरुपपादत्वात्। तथा च सिद्धमर्थज्ञानस्यापि तद्वत् स्वप्रतिपत्तिरूपत्वम्; अविशेषात्॥

---

मवसीयत इति द्वितीये दूषयति—**नेति**॥ **गमनादिकर्मत्वाभावेन** सिद्धसाधनत्वं वारयति—**समानजातीयेति**॥ गुणत्वस्य या साक्षादपरजातिः, तया समानजातीयकर्मत्वनिषेधः साध्यते, व्यवसायत्वादिकन्तु ज्ञानत्वापरजातिः, अतो न सिद्धसाधनतेत्याह—**न गुणत्वेति**॥ ज्ञानस्य स्वप्रकाशत्वसम्भवे प्रकाशान्तरकल्पनागौरवं विपक्षे बाधकं बाधकान्तरमप्यस्तीत्याह—**ज्ञानस्येति**॥ घटज्ञानस्य घट एव गोचरः, न सर्व इति विषयनियमो न स्यादित्युक्तम्, तत्र विषयनियमसिद्धिं शङ्कते—**नियतस्यैवेति**॥ घटज्ञाने घट एव प्रकाशत इत्येतत् घटज्ञानादवगम्यते? तद्विषयज्ञानान्तराद्वेति पृच्छति—**कुत इति**॥ प्रथमं पराचष्टे —**न तावदिति**॥ विशेषणावगमाधीनत्वाद् विशिष्टावगमस्येति भावः। द्वितीयमुत्थापयति—**मा भूदिति**॥ ज्ञानान्तरे प्रमेयज्ञानस्य नियतविषयत्वमेव प्रकाशते, नाशेषं वस्त्वित्येतत् तेनैव ज्ञानेन गम्यते? तद्विशिष्टज्ञानान्तरेण वेति विकल्प्याद्यं दूषयति —**नेति**॥ द्वितीयं शङ्कते—**तस्यापीति**॥ अनवस्थामुपपादयति—**सतीति**॥ द्वितीयज्ञानस्य विषयनियमस्तृतीयज्ञानादवसीयत इत्येवं सति तन्न्यायेन तृतीयस्यापि नियतविषयत्वं तुरीयावसेयमिति ज्ञानपरम्पराया आवश्यकत्वादित्यर्थः। नानवस्था, कस्यांचिद् ज्ञानकक्षायां नियतविषयत्वस्य सत एव प्रतीतेः, अत्राह—**अत इति**॥ अतःशब्दपरामृष्टमेव स्पष्टयति—**अन्यथेति**॥ विमतम्, स्वप्रकाशम्, ज्ञानत्वात्; अन्तिम-

---

1. स्वप्रवृत्तिवैकल्यात्
2. स्वप्रवृत्ति
3. शङ्क्या
4. ततए वागन्तु

॥ ईश्वरज्ञानस्य स्वप्रकाशत्वसाधनं तद्दृष्टान्तेनानीश्वरज्ञानस्वप्रकाशत्वसमर्थनं च ॥

किञ्च, ईश्वरज्ञानमस्वविषयम्? स्वविषयं वा? आद्ये कथमीश्वरस्य सार्वज्ञम्? तेन सकलतदन्याकलनादिति चेत्, न; 'मज्ज्ञानस्य सकलमपि गोचरः' 'विदितञ्चेदं मया' इति न जानाति चेत्, कथं सार्वज्ञम्? जानाति चेत्, तेनैव? अन्येन वा? आद्ये तज्ज्ञानस्य सिद्धं स्वप्रकाशत्वम्। न [1]द्वितीयः; ज्ञानान्तरोत्पत्तिसाधन इन्द्रियादेरभावात् ॥

॥ अनवस्थापत्त्या ज्ञानस्य ज्ञानान्तरावेद्यत्वम्; अन्यथा घटादिवदननुभूतित्वप्रसङ्गात् ॥

किञ्च न ज्ञानस्य ज्ञानान्तरेण प्रत्यक्षत्वम्; अनवस्थानात्। अवश्यवेद्यत्वानभ्युपगमाद् नानवस्थेति चेत्, नानभ्युगममात्रेण किञ्चिद् निवर्तते, अभ्युपगमेन वा प्रवर्तते; प्रमाणाधीनत्वादर्थसिद्धेः। यदेव ज्ञानमनवस्थाभयाद् न ज्ञायते, न तस्य सत्त्वम्, प्रमाणाभावात्। जिज्ञासायां तदपि ज्ञास्यत इति चेत्, न; अज्ञातगोचरजिज्ञासानुपपत्तेः। ज्ञानम्, स्वव्यवहारे दर्शनान्तरानपेक्षम्, ज्ञानत्वात्, घटवदिति व्यतिरेकी। विपक्षे बाधकमाचार्यैरुदितम्—"अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गात्" इति ॥

॥ ज्ञानस्यैन्द्रियकत्वेऽप्यनवस्था, ज्ञानान्तरानुपपत्तिश्च ॥

किञ्च, ऐन्द्रियकत्वे ज्ञानस्य, ज्ञानमात्रमेव मनसा सम्बन्धं[द्धं]योग्यञ्चेति तद्विषयं ज्ञानान्तरमुत्पद्येत, तस्यापि ज्ञानत्वात्तद्विषयं ज्ञानान्तरम्, एवं तस्यापीति ज्ञान-

---

ज्ञानवदित्याह—**तथा चेति** ॥ अनीश्वरज्ञानम्, स्वप्रकाशम्, ज्ञानत्वात्; ईश्वरज्ञानवदित्याशयवानाह —**किञ्चेति** ॥ ईश्वरज्ञानातिरिक्तस्य सकलस्येश्वरज्ञानेन विषयीकरणादीश्वरस्य सर्वज्ञत्वमिति शङ्कते—**तेनेति** ॥

ज्ञानम्, न मानसप्रत्यक्षम्, गुणत्वात्; रूपादिवत्; मनो वा ज्ञानप्रतीतौ नासाधारणकारणम्; इन्द्रियत्वात्; चक्षुर्वत्। न च सुखादौ व्यभिचारः; तस्य पक्षतुल्यत्वादित्यभिसन्धायाह—**किञ्च न ज्ञानस्येति** ॥ विपक्षे बाधकमाह—**अनवस्थानादिति** ॥ तर्कितमेतत्, न प्र[मि]तमिति चेत्; अत्राह—**ज्ञानं स्वव्यवहार इति** ॥ ज्ञानव्यवहारस्यादानादेरयोगाद् तद्विषयशब्दरूप एव व्यवहारः, तस्य स्वस्मरणसापेक्षत्वात् बाधितविषयमिति चेत्, न; व्यवह्रियमाणगोचरप्रकाशान्तर-

---

1. द्वितीयेः (क)

परम्परायामेव व्यापकत्वान्मनसो विषयान्तरसञ्चारो न स्यात्। न च जिज्ञासा-नियमात् तन्नियमः; तस्याः संशयपूर्वकत्वात्, तस्य च [1]धर्मिज्ञानपूर्वकत्वात्, धर्मिणश्च सन्निधिमात्रेण ज्ञाने, जिज्ञासापेक्षणे वोभयत्रानवस्थानात् ॥

॥ अनुभाव्यत्वव्याप्यानुभूतित्वस्यासत्त्वापादकत्वशङ्कानिवारणम् ॥

यत्तु कश्चिदवोचत्—अनुभाव्यतामात्रेणासाधारणस्वभावाद् निवृत्तिः, घटादिवत्, तन्निवृत्तौ वा विश्वशून्यतापत्तिः—इति, तदसत्; किमनुभाव्यत्वस्याननुभूतित्वेन व्याप्तिरस्ति? किं वा नास्ति? प्रथमे व्या[प्या]रोपेण व्यापकप्रसञ्जनं तर्को न क्वापि भवेत्। न द्वितीयः; व्यभिचारानुपलम्भात्। तदनुपलम्भेऽपि व्याप्तिभङ्गाभि-धानेऽतिप्रसङ्गात् ॥

व्यभिचारानुपलम्भमात्रं न व्याप्तिसिद्धावङ्गम्; तस्य मैत्रतनयत्वादावपि श्याम-

---

विरहस्य साध्यत्वात्, स्मरणस्याविद्याविवर्तस्य दर्शनाभावत्वाच्च बाधकान्तरमाह—**किञ्चेति** ॥ जिज्ञासितमेव ज्ञानं ज्ञायत इति नियमाद् न ज्ञानपरम्परापातः, तत्राह—**न चेति** ॥ ज्ञानजिज्ञासाप्रयोजकज्ञानसंशयार्थं ज्ञानरूपस्य धर्मिणो ज्ञानं वाच्यम्। एवं च धर्मिणः सत्तामात्रेण ज्ञानं स्यात्? जिज्ञासापुरस्सरं वा? उभयत्र दूषण-माह—**धर्मिणश्चेति** ॥ **अनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गादित्युक्तमति** प्रसङ्गेनाह—**असत्त्वप्रसङ्गं न्यायमुक्तावलीकारेणोक्तमनुपठति यत्त्विति** ॥ **प्रथम इति** ॥ अनुभाव्यत्वस्याननुभूतित्वेन सत्यप्यविनाभावे यद्यननुभूतित्व-प्रसङ्गस्याभासत्वम्, तर्हि, अनग्निमत्त्वे धूमवत्त्वं न स्यादित्यादिप्रसङ्गोऽपि न स्यादि-त्यनुमानुदय इत्यर्थः ॥

श्रीवल्लभः शङ्कते—**व्यभिचारानुपलम्भमात्रमिति**। तस्य=व्यभिचारानु-पलम्भस्य। नियमानियमसाधारणत्वात्=व्याप्तितदभावयोस्तुल्यत्वात्। तत्र हेतुः—सः, श्यामः, मैत्रतनयत्वात्; सम्प्रतिपन्नवत्, वज्रादिकम्, लोहलेख्यम्, पार्थि-वत्वात्; घटवदित्यादौ मैत्रतनयत्वादेः श्यामत्वादिना व्याप्त्यभावेऽपि व्यभि-चारानुपलम्भेन हेतुनेति भावः। उपाध्यनुपलम्भसहकृतव्यभिचारानुपलम्भो न

---

1. धर्मिमात्रपूर्वकत्वात्।

त्वादिव्यभिचारानुपलम्भेन नियमानियमसाधारणत्वादिति चेत्, न; निरुपाधिक-सम्बन्धरूपप्रतिबन्धस्योपाधेरनुपलम्भे सति व्यभिचारानुपलम्भात् सिद्धेः। तत्र[च] शाकाद्याहारपरिणतिपारम्पर्यपूर्वकत्वोपाधेः प्रतिबन्धासिद्धेः बाधकात् व्या[प्ति]प्त्यसिद्धौ तस्यापि तदर्थं बाधकान्तरगवेषणेऽनवस्थानात्। व्याप्यस्य पक्षधर्मत्वावगमेऽपि व्यापकानवगमेऽनुमानविलयाच्च। संयुक्तसमवायात् ज्ञानस्य प्रत्यक्षत्वे धर्मादेरपि तत् स्यात्। नापि फललिङ्गानुमेयत्वम्; तद्विषयगतम्? आत्मगतं वा? आद्येऽतीतादि-ज्ञानानुमानस्याप्रत्युत्पन्नधर्मिविरोधात्, द्वितीये ज्ञानमेव संज्ञान्तरेणोक्तं स्यात्। फलमपि

---

नियमानियमसाधारण इति परिहरति—**नेति**॥ उपाध्यनुपलम्भे व्यभिचारानु-पलम्भो नैतत्तनयत्वादावस्तीति, नेत्याह—**तत्र चेति**। च शब्दात् प्रशिथिलाव-यवत्वं लोहमेद्यत्व उपाधिरित्यर्थः। तात्कालिकस्य व्यभिचारानुलम्भस्यातिप्रसङ्गात् सार्वकालिकस्य दुरवधारणत्वाद् व्यभिचारानुपलम्भो न व्याप्तिनिश्चयहेतुः, अपि तु विपक्ष[या]बाधकादेव प्रतिबन्धसिद्धिरिति श्री व ल्ल भो द य न योरभिनिवेशश्चेत्, तत्राह—**बाधकादिति**॥ व्याप्तिसाधकबाधकं प्रमाणं वा? तर्को वा? प्रमाणमपि नानुमानम्; इतरेतराश्रयात्। नापि प्रत्यक्षम् हेतोः सकलविपक्षवृत्त्यभावगोचरमस्म-दादेः सम्भवति। तर्कश्चेत्, तद[तत्रा]पि व्याप्तिसिद्ध्यर्थम्, तर्कान्तरस्वीकारेऽनवस्था; अन्यथा प्रशिथिलमूलत्वेन तस्यैवाभासत्वमिति भावः। अनुभाव्यत्वस्याननुभूतित्वेना-विनाभावेनानुभूतेरननुभूतित्वमभ्युपगच्छामः, अत्राह—**व्याप्यस्येति**॥ प्रत्यक्ष-सिद्धघटस्याघटत्वप्रसञ्जनं प्रत्यक्षविरुद्धमिति प्रागेवोक्तम्; बाधकादेव नियमसिद्धि-रिति नियमेऽपि न विरोधः; ज्ञानस्य मानसत्वे बाधकदर्शनादित्याह—**संयुक्तेति**॥ योग्यत्वं तु स्वरूपातिरिक्तं तार्किकस्य न सम्भवतीति बाधकसिद्धौ प्रयुज्यते—ज्ञानम्, न मानसम्, आत्मसमवेतत्वात्; धर्मादिवत्। सुखादेः पक्षतुल्यत्वाद् न व्यभिचारः। अतीताद्यर्थस्यावर्तमानत्वेऽपि तद्गतसत्त्वादिसामान्यनिष्ठं प्राकट्यं कार्यतया स्वजनकज्ञानमनुमापयतीत्याशङ्क्यातीताद्यर्थस्य विशेषरूपेणासिद्धिप्रसङ्गाद् विशेषनिष्ठमेव तद् वाच्यम्। तच्च न सम्भवतीत्याह—**अप्रत्युत्पन्नेति**॥ **ज्ञान-मेवेति**॥ उभयसिद्धज्ञानातिरेकेण तज्जन्यप्रकाशस्यात्मनि सत्त्वे प्रमाणाभावादित्यर्थः। ज्ञातरि ज्ञेये च ज्ञानातिरिक्तप्रकाशासिद्धिरुक्ता, सम्प्रति तस्य लिङ्गत्वानुपपत्तिमाह—**फलमपीति**॥ घटः प्रकट इति घटनिष्ठप्राकट्यं संयुक्ततादात्म्याच्चक्षुरादिना प्रतीयत इति चेत्; घटज्ञानेन घटे प्राकट्याधानवत् प्राकट्ये प्राकट्यं तज्ज्ञानेन [न]क्रियते

नाज्ञातं लिङ्गमिति तज्ज्ञानस्थितौ तस्यापि फलानुमेयत्वेऽनवस्था, अननुमेयत्वे तदसिद्धौ फलसिद्धेराद्यज्ञानानुमापि न स्यात्, इति परिशेषात् स्वतोऽपरोक्षत्वम्। एवं च स्वतस्सिद्धस्य प्रागभावभेदादयः स्वतोऽन्यतो वा न सिध्यन्तीत्यनाद्यनन्ताद्वितीयबोधरूपमात्मतत्त्वं सिद्धम् ॥

कस्तर्हि साधनोपालम्भयोर्वचनावकाशः? तस्य परसंवेदनफलत्वादिति चेत्, तदाकारान्तःकरणवृत्त्यर्थत्वादिति ब्रूमः ॥

॥ संविदतिरिक्तवृत्तिः प्रमाणसिद्धा, न कल्पनामात्रम्,
न वा तत्कल्पनावैयर्थ्यम् ॥

न; संविदोऽन्यस्याश्चित्तवृत्तेः प्रक्रियामात्रसिद्धत्वात्, तस्या अर्थप्रकाशात्मकत्वे संवित्त्वात्, अतद्रूपत्वे तु व्यवहारानङ्गत्वात् तत्कल्पनावैयर्थ्यादिति—चेत्, न;

"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च नेङ्गते तत्र परमात्मानमश्नुते ॥"

इति मनोव्यतिरेकेण बुद्धिरवगता—"बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि

---

चेत्, प्रकट्यज्ञानेनेव घटज्ञानेनापि स्वविषये प्राकट्यं न कार्यं स्यात्; अविशेषादिति प्राकट्यज्ञानमेव न सम्भवति। अङ्गीकृत्याप्याह—**तज्ज्ञानस्थिताविति** ॥ बोधस्य स्वतस्सिद्धत्वसिद्धावपि नात्मत्वसिद्धिः; प्रागभावादिमत्त्वात्, अत्राह—**एवं चेति** ॥ स्वभावादयं स्वतो न सिद्ध्यति; स्वकाले स्वाभावाभावात्, स्वाभावकाले स्वाभावात् न परतोऽपि सिद्ध्यति; प्रमाणान्तरागोचरत्वात्स्वतस्सिद्धस्येति भावः। कूटस्थोऽनुभव आत्मैव चेत्; स्वमतसाधनाय परमतप्रतिषेधाय वाक्यानर्थक्यमबोधकत्वादिति शङ्कते—**कस्तर्हीति** ॥ बोधस्यानाधेयत्वेऽपि तद्व्यञ्जकवृत्त्याधानेन वचनसाफल्यमित्याह—**तदिति** ॥

अनुभवातिरिक्तान्तःकरणवृत्तेः प्रमाणविकलत्वादयुक्तमेतदिति शङ्कते—**नेति** ॥ वृत्तिरप्यर्थप्रकाशरूपा? न वा? इति विकल्प्याद्यमपवदिति—**तस्या इति** ॥ द्वितीयं दूषयति—**अतद्रूपत्व इति** ॥ अनुभवाभिव्यञ्जकबुद्धिवृत्तिं प्रतिपादयितुं मनोव्यतिरिक्तमन्तःकरणं बुद्धिपदाभिधेयं साधयति—**नेति** ॥ आत्ममनोयोगादुत्पाद्यमानोऽनुभव एव बुद्धिः, नान्येति, अत्राह—**बुद्धेरिति** ॥ अणुत्वं बौद्धो

दृष्टः" इति गुणवत्त्वाद् द्रव्यम्। अवगता बुद्धिः "विज्ञानं यज्ञं तनुते [1]कर्माणि तनुतेऽपि च" इति व्यापारवती। "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति बुद्धेरात्मव्यञ्जकत्वमवगतम्। अतो दृगात्मव्यञ्जकत्वेन बुद्धिवृत्तौ ज्ञानत्वव्यपदेशाद् न तत्कल्पनवैयर्थ्यम्, इति न किञ्चिदौपनिषदसिद्धान्तेऽपरसिद्धान्त इव स्वबुद्धिमात्रनिबन्धनमस्ति। नित्यसर्वगते संवेदने विषयाणां क्रमवदवभासनिर्वाहकार्थत्वाच्च न तत्कल्पनवैयर्थ्यम्। तर्हि यत्क्रमात् क्रमवदवभासनिर्वाहः, सैवास्तु विषयसंविदिति चेत्, न; तस्या जडत्वादजडबोधसम्बन्धमवधूय विषयसाधकत्वासिद्धेः॥

॥ वादीन्द्रमत आत्मन इव सिद्धान्ते जन्यज्ञानस्यान्तःकरणपरिणामनिष्ठत्वं न विरुद्धम्, नथा वृत्तेर्विषयसंयोगविशेषत्वपक्षेऽपि दुष्यति॥

ननु शब्दलिङ्गादिजन्यान्तःकरणवृत्तिरन्तःकरणक्रिया? किं वाऽन्तःकरणसंयोगादिः? नाद्यः; तस्य नोदनादिजन्याया इन्द्रियादिजन्यत्वाभावात्। नापि द्वितीयः; अन्तःकरणकर्मजन्यसंयोगादेरिन्द्रियाद्यजन्यत्वात्—इति, नैतत् सारम्; आत्मगुणस्थज्ञानस्याप्यात्ममनःसंयोगजन्यत्वादिन्द्रियादिवैयर्थ्यप्रसङ्गस्य समानत्वात्। मनस्संयोगस्य साधारणत्वादसाधारणं करणं चक्षुरादिरिति चेत्, तुल्यं

---

गुणः, स्वाच्छ्यमभिव्यङ्ग्यतारूपमात्मगुणः, क्रियावत्त्वाच्च बुद्धिर्द्रव्यमवगतेत्याह—**विज्ञानमिति**॥ एवं बुद्धिपदवेद्यमन्तःकरणं प्रसाध्य, तस्यात्माभिव्यञ्जकत्वे प्रमाणमाह—**दृश्यते त्विति**॥ नित्यसर्वगतात्मचैतन्येनानात्मनां सर्वेषां सर्वदोपरागेऽपि क्रमेण तदवभासानुपपत्तिरपि चित्तवृत्तिं साधयतीत्याह—**नित्येति**॥ प्राप्ताप्राप्तविवेकेन क्रमवद् विज्ञानमेव विषयानुभवत्वेन प्राप्तमित्याह—**तर्हीति**॥ जन्मनाशादिमत्त्वाद् घटलोष्टादितुल्याया न स्वतो विषयसाधकत्वमित्याह—**नेति**॥

एवमानन्दबोधे विध्वस्ते वादीन्द्रश्चोदयति— **नन्विति**॥ **नोदनादीति**॥ प्रेरणात्मकः संयोगविशेषः = नोदनम्। आदिपदेन विभागादिसङ्ग्रहः। प्रतिबन्द्या दूषयति—**नैतदिति**॥ स्वमते वैयर्थ्यपरिहारं शङ्कते—**मन इति**॥ इन्द्रिय-

---

1. कर्मणि (क)

प्रकृतेऽपि ; तदन्वयव्यतिरेकानुविधानस्य समानत्वात् । अन्तःकरणम् , नेन्द्रियादिव्यवहारजनकाधिकरणम् , इन्द्रियत्वाच्चक्षुर्वदिति चेत् , न ; आत्मा , नेन्द्रियादिव्यवहारजनकाधिकरणम् , द्रव्यत्वात् ; घटवदिति तुल्यम् । चक्षुरादयः, नान्तःकरणनिष्ठाद्विष्ठजनकाः,[1] चक्षुरादित्वात् ; भविष्यच्चक्षुरादिवदित्यपि वा दी न्द्रेण प्रयोक्तव्यत्वात् । घटाद्यनुभूतिः, अनित्या, घटादिविषयत्वात् ; इच्छावदिति चेत् , न ; ईश्वरज्ञानभागे बाधात् , तत्त्यागे तत्रैव व्यभिचारात् ॥

॥ ज्ञानपरप्रकाश्यत्वानुमाननिरासः ॥

यदपि व्यवहारपदत्वाद्वस्तुत्वाच्च परप्रकाश्यत्वानुमानम् , तत्र व्यवहारपदत्वं जातिः ? औपाधिकं वा ? आद्ये जात्यादेर्व्यवहारपदत्वं न स्यात् । द्वितीये द्रव्यादिपदार्थातिरिक्तम् ? अनतिरिक्तं वा ? नाद्यः ; पदार्थातिरेकप्रसङ्गात् । द्रव्यादिरूपत्वे हेतोरपक्षधर्मत्वेनासिद्धिः, दृष्टान्तेऽननुगमश्च । एवं वस्तुत्वादिकमपि प्राकरणीयम् । किञ्च यत् वस्तु , तत् परप्रकाश्यमिति व्याप्तिसंवेदनं न स्वविषयं चेत् , सर्वोपसंहाररूपव्याप्तेरसिद्धिः, स्वविषयं चेत् , तत्रैव व्यभिचारः । विपक्षे बाधकाभावः । पक्षबाधकश्चानवस्थाप्रसङ्ग उक्तः ॥

तदेवमात्मनोऽस्वप्रभत्वे प्रमाणाभावात् स्वप्रभत्वे च प्रमाणसद्भावात् स्वप्रभ आत्मेति सिद्धम् ॥

---

विषयादिव्यवहारहेतुभूतप्रकाशो ज्ञानम् । तस्यान्तःकरणनिष्ठत्वनिषेधेऽनुमानमाह— **अन्तःकरणमिति** ॥ तर्हि वर्तमानं चक्षुरादिकं पक्षीकृत्यान्तःकरणपरिणामजनकस्वाभावोऽनुमीयत इत्याशङ्क्याह— **चक्षुरादय इति** ॥ तद्गतसंयोगादिजनकत्वस्वीकारात् बाधपरिहारार्थतयोक्तम्— **अद्विष्ठेति** ॥ आत्मनिष्ठज्ञानस्य चक्षुरादिजन्यत्वयुक्तेरन्तःकरणपरिणामस्य तज्जन्यत्वेऽपि तुल्यत्वादन्तःकरणवृत्तिरनित्यज्ञानमित्युक्तम् । तत्र नित्यानुभवस्याभावादिदमेव मुख्यं ज्ञानमिति परिचोदयति— **घटाद्यनुभूतिरिति** ॥ **अपक्षधर्मत्वेनेति** ॥ पक्षस्वरूपभूतस्य हेतोः पक्षवृत्तिर्न सम्भवति ; स्ववृत्तिविरोधादित्यर्थः । नित्यबोधरूप आत्मा किमबोधविरोधी ? नो वा ? प्रथमे

---

1. जनाः

तस्मात्—

स्वसंवेदनरूपत्वादात्मविद्या तमोऽपनुत् ।
वृत्तिव्याप्तो यथाऽऽलोको वस्त्वन्तरतमोऽपनुत् ॥ ६५ ॥

**॥ इति न्यायचन्द्रिकायामात्मस्वप्रकाशत्वप्रकरणं षष्ठम् ॥**

---

नित्यमुक्तिप्रसङ्गः, शास्त्रानर्थक्यं च द्वितीये नित्यबन्धः शास्त्रानर्थक्यमपीति शङ्कां निराकुर्वन् उत्तरवादप्रसङ्गं च कुर्वन् उपसंहरति—**तस्मादिति** ॥

**॥ इति न्यायचन्द्रिकाविवरणे आत्मस्वप्रकाशत्वप्रकरणं षष्ठम् ॥**

—: * :—

## ॥ अथ न्यायचन्द्रिकायां तमोऽतिरिक्तपदार्थत्वप्रकरणं सप्तमम् ॥

॥ तमसः प्राग्प्रागभावत्वसाधनम्, तत्रोपाध्यादिनिरासश्च ॥

अथ कथं तमसो वस्त्वन्तरत्वम् ? तस्य भाऽ[1]भावमात्रत्वात् । तदाह भगवान् मुनिः — " द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद् भाऽभावस्तमः " इति । प्रयोगस्तु — तमः, भाऽभावः, आलोकनिरपेक्षचक्षुर्वेद्यत्वात्; द्रव्यगुणकर्मसामान्यविशेषसमवायतेजोव्यतिरिक्ताभाववैधर्म्याच्च; संप्रतिपन्नाऽऽलोकाभाववदिति । तमःपदेनाभावविवक्षायां सिद्धसाधनम्, तदतिरिक्तविवक्षायाञ्च बाध इति चेत्, न; आलोकाभावतदतिरिक्तत्वसन्देहविषयस्यैव धर्मित्वेनोपादानात् । न चात्र नीरूपत्वानीलत्वनिर्गुणत्वादय उपाधयः; साधनव्यापकत्वात् । न च नीरूपत्वानीलत्वादिसाधने प्रत्यक्षबाधः; रूप[व]त्त्वनील[व]त्त्वादेः प्रत्यक्षेणानवगमात्, आलोकनिरपेक्षेण चक्षुषा रूपादिसाक्षात्काराजननात्; अन्यथा घटादिकृष्णरूप[व]त्त्वादेरप्यन्धकारेऽनुभवप्रसङ्गात् ॥

---

## ॥ अथ न्यायचन्द्रिकाविवरणे तमोऽतिरिक्तपदार्थत्वप्रकरणं सप्तमम् ॥

तमसो भाऽभावत्वे कणपक्षभाषितं भाषते — **तदाहेति** ॥ निष्पत्तिशब्देन निष्पत्तेः सत्तासामान्यसमवायरूपत्वात् तद्वाचिना सामान्यविशेषसमवाया विवक्ष्यन्ते । द्रव्यादिषट्कविलक्षणत्वादिति सूत्रार्थः ॥

सूत्रवाक्यस्य पौरुषेयस्य, मूलसापेक्षस्य तदभावे न प्रामाण्यमित्याशङ्क्य शङ्करकिङ्करप्रयोगं दर्शयति — **प्रयोगस्त्विति** ॥ रूपादौ व्यभिचारवारणायाऽऽद्यविशेषणम् । द्रव्यादिभावेभ्यस्तेजोव्यरिक्तानामभावेभ्यश्च वैधर्म्यात्, आलोकानपेक्षचक्षुर्ग्राह्यत्वेन विलक्षणत्वादिति द्वितीयहेत्वर्थः । आलोकप्रागभावादेरालोकाभावत्वं नीरूपत्वादिभ्यः, न तूक्तहेतुबलात्, अतो व्याप्यत्वासिद्धं हेतुद्वयमपीति, अत्राह — **न चेति** ॥ आदिपदेन निष्क्रियत्वप्रसङ्गः[संग्रहः] । साध्यस्य व्यापकत्वेऽपि साधनाव्यापकत्वांशवैकल्यादित्याशयः । **प्रत्यक्षेणानवगमादिति** ॥ आलोकसहकृतस्यैव नेत्रस्य रूपप्रतीतिकरणत्वात्, अन्धकारे तदभावादिति भावः ॥

कृष्णरूपेतरप्रतीतौ चक्षुष आलोकापेक्षा, न तु रूपमात्रप्रतीतौ, अत्राह — **अन्यथेति** ॥ रूपवत्तया तमसश्चाक्षुषत्वानङ्गीकारे 'तमालश्यामलं तमः पश्यामी'त्यनु-

---

1. तस्य भावमात्रत्वात्

॥ नीलं तम इत्यादिप्रत्ययस्यारोपाधीनत्वम् ॥

कथं तर्हि—'कृष्णरूपमनुभवामी'त्यन्धकारे प्रत्यय इति—चेत्, न; आत्मनि (कृष्ण[1]रूपानुभवारोपात्) तस्य मनोजन्यत्वात्, मनसश्चालोकनिरपेक्षत्वात् ॥

॥ नीलं तम इति प्रत्ययस्य मानसत्वनिरासः ॥

केचित् पुनः—'नीलं तमः' इत्यारोपो मानसः—इत्याचक्षते, तदयुक्तम्; योगजधर्माद्यनपेक्षस्य मनसो बाह्यार्थानुभवाजनकत्वात्, अन्यथा अन्धादेरपि रूपादिसाक्षात्कारप्रसङ्गात् ॥

॥ नीलं तम इत्यनुभवस्यानुमानरूपत्वमेव, न प्रत्यक्षत्वम् ॥

अस्तु वा नीलं तम इत्यनुभवो लिङ्गाभासजन्यः; तमः, नीलम्, शुक्लादिमतो-[त्वया]ऽप्रतीयमानत्वादित्यादेः सम्भवात् । आलोकनिरपेक्षचक्षुर्वेद्यत्वं मन्दान्धकार-

---

भवविरोधः स्यादित्याह—**कथमिति** ॥ नीलानुभवरहित आत्मनि नीलानुभववत्त्वभ्रान्त्या तथाऽभिमान इत्याह—**आत्मनीति** ॥ आरोपितस्यापि धीरूपत्वाचक्षुर्जन्यत्वं वाच्यम्, एवं च तत्रापि पर्यनुयोगसाम्यम्, अत्राह—**तस्येति** ॥ अधिष्ठानस्यात्मनः, अध्यसनीयस्यानुभवस्य च मानसत्त्वात् तदारोपो मानस इत्यर्थः ॥

वैशेषिकैकदेशिनां मतमाह—**केचिदिति** ॥ आलोकानपेक्षचक्षुषा रूपग्रहणायोगाद् आलोकाभावे नीलरूपत्वं मनसैवारोप्यत इति तेषामाशयः । नीलं तम इति प्रतीतिः, न बाह्येन्द्रियानपेक्षमनोजन्या, योगजधर्माद्यजन्यबाह्यसाक्षात्कारत्वात्; सम्मतघटसाक्षात्कारवदिति दूषयति—**तदयुक्तमिति** ॥ मनसो बहिरस्वातन्त्र्यलक्षणविपक्षबाधकेनाप्रयोजकत्वशङ्कां परिहरति—**अन्यथेति** ॥ आत्मनि च नीलानुभवारोपे यत्किञ्चिन्नीलमनुभवामीति स्यात्, न तु नीलं तमोऽनुभवामीत्याशङ्क्य मतान्तरमाह—**अस्तु वेति** ॥ तमः, नीलम्, स्नेहौष्ण्यानधिकरणत्वे गुणान्यत्वे च सति चाक्षुषत्वात्; नीलोत्पलवदित्यादिपदार्थः ॥

---

1. "कृष्णरूप इति चेन्न । अनुभवारोपात् ।" इति वर्तते ।

छायादौ नास्तीति भागासिद्धिरिति—चेत्, न; आलोकनिरपेक्षचक्षुर्वेद्याकारस्यैव धर्मित्वेनोपादानात्। अभावत्व-प्रतियोग्यधिकरणज्ञानविषयत्वे उपाधी इति चेत्, न; तयोः साधनव्यापकत्वात्, रात्रावालोकस्मरणसम्भवात्, दिवा चालोकग्रहणस्यापि सम्भवात्, अननुभूतालोकानां गिरिदरीविवरमात्रनिवासानामन्धकारप्रत्ययस्याप्यभावात्, भावे वा पूर्वजन्मानुभूतालोकस्मरणस्वीकारात्॥

॥ तमसो जन्यस्य, अनादेर्गिरिगुहावर्तिनश्च प्रागभावादि-
रूपत्वमिति पूर्वपक्षोपसंहारः॥

तमः, नालोकप्रागभावः, जायमानत्वात्; नाप्यत्यन्ताभावः, अन्योन्याभावो वा; तत एव, नापि प्रध्वंसः; विनाशित्वादिति चेत्, न; जायमानस्य तमसः प्रध्वंसत्वात्, अनादेर्विनाशिनश्च प्रागभवत्वात्, उत्पत्तिविनाशरहितस्य च गिरिदरीविवरवर्तिनोऽत्यन्ताभावत्वात्, अनेवंविधस्य चान्योन्याभावत्वादिति॥

॥ तमोभावरूपत्वस्यानुमानम्। तस्य रूपित्वेऽपि न स्पर्शवत्त्वम्।
असाक्षात्कारस्तु सहकार्यालोकाभावात्। मार्जारचक्षुरादौ
व्यभिचाराद् न चक्षुष आलोकापेक्षानियमः। तमोरूपा-
तिरिक्तसाक्षात्कारे सहकार्यालोकापेक्षेति तत्र तमोऽभाऽ-
भावत्वानुमानस्य व्यभिचारादि च॥

---

एवमुपाधिविधूननेन व्याप्यत्वासिद्धिमवधूय भागासिद्धिमुद्धर्तुं शङ्कते—**आलोकेति**॥ प्रतियोगिज्ञानजन्यज्ञानविषयत्वं प्रतियोगिनिरूप्यत्वम्, अधिकरणज्ञानजन्यज्ञानविषयत्वमधिकरणनिरूप्यत्वम्, एतद्द्वयमुपाधिरित्याह—**अभावत्वेति**॥ भूभागादेरधिकरणस्य लिङ्गतोऽवगमेऽपि निशीथे प्रतियोगिन आलोकस्य प्रतीत्यसंभवाद् न प्रतियोगिनिरूप्यत्वं तमसः, तत्राह—**रात्राविति**॥ गिरिगुहानिवासानां तपस्विनामननुभूतालोकानां तत्स्मरणमपि न संभवति, भवति च तमसोऽनुभवः, तत्र का गतिः? अत्राह—**अननुभूतेति**॥ तेऽपि, तमोऽनुभववन्तः, पुरुषत्वादहमिवेति कदाचित् तमोऽनुभववत्त्वमनुमीयत इत्याशङ्क्याह—**भावे वेति**॥

तमः किमालोकस्य प्रागभावः? अत्यन्ताभावः? अन्योन्याभावः वा? प्रध्वंसाभावो वा? इति विकल्प्य क्रमेण दूषयति—**तम इति**॥ चतुर्विधतमसश्चतुर्विधेष्वालोकाभावेष्वन्तर्भाव इति परिहरति—**नेति**॥ **अनेवंविधस्येति**॥ संसर्गप्रतियोगिकतादात्म्यप्रतियोगिकस्येत्यर्थः॥

अत्रोच्यते—

अम्भस्सम्भारगम्भीरप्रावृडम्भोदसन्निभम् ।
भासमानं न भाऽभावो भवितुं क्षमते तमः ॥ ६६ ॥

तमः, नाभावः, रूपित्वात्, घटवत् । द्रव्यमपि तत एव । रूपित्वे स्पर्शवत्त्वप्रसङ्गः; रूपस्य स्पर्शवत्त्वव्याप्तत्वादिति चेत्, न; दीपप्रभायां व्यभिचारात् । तत्राप्यनुद्भूतस्पर्शोऽस्तीति चेत्, तमस्यपि तथाभूतस्पर्शो रूपवत्त्वेन किं नानुमीयते? न च रूपित्वमसिद्धम्; नीलोत्पलदलश्यामलं तमः पश्यामीत्यनुभवात् । रूपवत्त्वमालोकानपेक्षचक्षुषा[च]न गृह्यते; अन्यथाऽन्धकारे घटकृष्णरूप[व]त्त्वादेरनुभवप्रसङ्गात्, आलोकसहकारिण एव चक्षुषो रूपसाक्षात्कारसामर्थ्यात् । रूपवत्त्वे तमस आलोकविरोधासिद्धिरिति चेत्, न;—मार्जारोलूकादिचक्षुष आलोकानपेक्षस्य रूपसाक्षात्कारे सामर्थ्यात् । मनुष्यचक्षुषो नैवमिति चेत्, योगिचक्षुष आलोकानपेक्षस्यैव तत्सामर्थ्यात् । अयोगिचक्षुषो नैवमिति चेत्, न; अञ्जनगुलिकादिसिद्धायोगिचक्षुषोऽपि तन्निरपेक्षस्य निखातद्रव्यादिरूपसाक्षात्कारे सामर्थ्यात्, तदतिरिक्तायोगिचक्षुषस्तथापि तदनपेक्षस्य रूपसाक्षात्कारे न सामर्थ्यमिति चेत्, [न;]भवतो यद्यनुग्रहस्तमसि, ततस्तमोरूपातिरिक्तसाक्षात्कारे चक्षुष आलोकापेक्षेत्यपि विशेषणं नाशक्योपादानम् । विमतम्, अलोकानपेक्षं क्वचिद्रूपसाक्षात्कारजनकम्, चक्षुष्ट्वात्; उलूकादिचक्षुर्वदिति प्रयोगाच्च । रूपवत्त्वेऽपि तमसो भावस्वभावभेदादालोकविरुद्धमनुभवसिद्धं नापह्नोतुं

---

तमसो न भावत्वम्; द्रव्यादिष्वनन्तर्भावात्, अत आह—**द्रव्यमपीति** ॥ तमः पश्यामीत्यनुभवस्य न यथा[र्थ]त्वम्; क्लृप्तकारणसामर्थ्यमन्तरेण जायमानत्वादित्युक्तमनुवदति—**रूपवत्त्वमिति** ॥ तमसो रूपवतोऽप्यालोकानपेक्षचक्षुर्गोचरत्वमविरुद्धम्; अलोकविरोधित्वात्, अत्राह—**रूपवत्त्वे तमस इति** ॥ चक्षुर्मात्रस्यालोकानपेक्षस्य रूपप्रतीतावसामर्थ्यम्? उत मनुष्यचक्षुषः? उत योगिचक्षुषः? उताञ्जनादिनिरपेक्षायोगिमनुष्यचक्षुषः? इति विकल्प्याऽऽद्यं दूषयति—**नेति** ॥ विमतम्, आलोकानपेक्षकिञ्चिन्निष्ठरूपसाक्षात्कारकरणम्, चक्षुष्ट्वात्; उलूकादिचक्षुर्वदिति परिहरति—**न; भवत इति** ॥ तत्तदुक्तव्यभिचारवारणाय विशेषणमालपरिग्रहे—तमोरूपातिरिक्तेत्यपि विशेषणीयम्; अनुभवसिद्धत्वाविशेषात्,

शक्यम्; अन्यथाऽऽलोकाभावत्वेऽपि तदन्योन्याभाववत् तद्विरोधासिद्धिप्रसङ्गात्। [1]यदप्यालोकनिरपेक्षचक्षुर्वेद्यत्वादभावत्वानुमानम्, तदुलूकमार्जारादिचक्षुर्वेद्यघटादिषु व्यभिचरति। न चालोकनिरपेक्षमनुष्यचक्षुर्वेद्यत्वं हेतुः, आलोकनिरपेक्षयोगिचक्षुर्वेद्य-घटादिषु व्यभिचारात्। न चालोकनिरपेक्षायोगिमनुष्यचक्षुर्वेद्यत्वं हेतुः; अयं घटः, एतदन्यालोकनिरपेक्षाञ्जनगुलिकादिसिद्धव्यतिरिक्तायोगिमनुष्यचक्षुर्वेद्यव्यतिरिक्तत्व-रहितद्रव्यभिन्नः, द्रव्यत्वात्; घटवदिति सिद्धे व्यभिचारात।

---

प्रमाणसिद्धत्वाविशेषात्, प्रमाणसिद्धत्वाच्चेत्यर्थः। तमः, नालोकाविरोधि, रूपवत्त्वात्; घटवदित्याशङ्क्याह—**अन्यथेति** ॥ तमः, नालोकविरोधि, अभावत्वात्; अन्योन्याभाववत्, इत्यनेन समानयोगक्षेमत्वमित्यर्थः ॥

**अयं घट इति** ॥ एतस्मादन्यच्चालोकनिरपेक्षणाञ्जनगुटिकादिसिद्धव्यति-रिक्तायोगिमनुष्यचक्षुषा वेद्याद् व्यतिरिक्तत्वरहितं च द्रव्यं च तस्माद्भिन्न इत्यर्थः। घट उक्तसाध्य इत्युक्ते पक्षीकृतघटादेवम्भूतादन्यत्वं घटान्तरे सिद्धमिति भागे सिद्धसाधनत्वं परिहरति—**अयमिति** ॥ द्रव्यभिन्न इत्युक्ते घटादितोऽन्यत्वेन सिद्ध-साध्यत्वं वारयति—**चक्षुर्वेद्यव्यतिरिक्तत्वरहितेति** ॥ तथापि पटेनैवार्थान्तरम्; तस्य चक्षुर्वेद्यस्य ततो व्यतिरिक्तत्वाभावात्, अत उक्तम्—**अयोगीति** ॥ तथापि तेनैवार्थान्तरं मा भूदित्युक्तम्—**आलोकनिरपेक्षेत्यादि** ॥ तथाप्यप्रसिद्धविशेष-णत्वम्, अत उक्तम्—**एतदन्येति** ॥ एतस्य घटस्य एतदन्यत्वाभावादेतदन्यालोक-निरपेक्षाञ्जनगुलिकादिसिद्धव्यतिरिक्तायोगिमनुष्यचक्षुर्वेद्यव्यतिरिक्तत्वरहितद्रव्यत्वमस्ती-त्येतस्मादन्यत्वं सर्वत्र विद्यत इति साध्यानुगमः। एतदन्यालोकनिरपेक्षाञ्जनगुलि-कादिसिद्धव्यतिरिक्तायोगिमनुष्यचक्षुर्वेद्यव्यतिरिक्तत्वरहितोऽयं घट एव वा स्यात्, आलोकानपेक्षैवंविधचक्षुर्वेद्यो वा। प्रथमान्यत्वं पक्षे व्याहतमित्या**लोकनिरपेक्ष**विवक्षित-चक्षुर्वेद्यान्यत्वं सिद्ध्यतीति भावः ॥

अयं घटः, एतत्त्वे सत्येतदन्यालोकनिरपेक्षाञ्जनगुटिकादिसिद्धव्यतिरिक्ता-योगिमनुष्यचक्षुर्वेद्यव्यतिरिक्तरहितद्रव्यभिन्नो न भवति, द्रव्यत्त्वात्; घटवदिति सत्प्रति-पक्षमाशङ्क्य महाविद्यायां नास्तिकं प्रत्याह—**आलोक इति** ॥ येन चक्षुषा य

---

1. पृ. 479. प. 4

॥ आलोक आलोकान्तराभावादालोकानपेक्षचक्षुर्वेद्यत्वस्य तत्र व्यभिचारः, तत्समर्थनं च ॥

आलोके व्यभिचाराच्च। आलोकोऽपि विषयालोकतदवयवसापेक्षचक्षुर्जन्यज्ञानविषयः, चाक्षुषत्वात्; घटवदिति चेत्, न; अतेजस्त्वेन सोपाधिकत्वात्। न चास्य पक्षेतरत्वम्, चक्षुरादेर्विपक्षादपि व्यावृत्तेः।

॥ द्रव्यादिषट्क-तेजोव्यतिरिक्ताभाववैधर्म्यमपि प्रथमहेतुनाऽविशिष्टम्; अन्यत्वे शक्तौ व्यभिचारः ॥

[1]द्रव्यगुणकर्मसामान्यविशेषसमवायतेजोव्यतिरिक्ताभाववैधर्म्यमप्यालोकनिरपेक्षचक्षुर्वेद्यत्वं चेत्, पूर्ववदेव निरस्तम्। अन्यच्चेद् भावशक्त्याऽनैकान्तिकम्, विपक्षे बाधकरहितं च ॥

॥ संप्रतिपन्नाभावरूपत्वे तमसोऽतिप्रसङ्गः ॥

संप्रतिपन्नालोकाभावेन तमोव्यवहारोपपत्तौ नातिरिक्तकल्पनम्; गौरवादिति चेत्, न; तत्प्रागभावस्य तमस्त्वे तद्ध्वंसे तमोव्यवहारो न स्यात्, तद्ध्वंसस्य

---

आलोको गृह्यते, तस्य चक्षुषः स एवालोकः सहकारी, तदवयवो वा, अतो न व्यभिचार इत्याह—**आलोकोऽपीति**। सत्प्रतिपक्षत्वं शङ्कते—**म[विष]यालोकेति** ॥ निरुपाधिसंबन्धप्रतिबन्धासिद्ध्या दूषयति—**नेति**॥ अतेजस्त्वम् = अनालोकत्वमत्र विवक्षितम्, अतो न सुवर्णादौ साध्याव्याप्तिचोद्यावकाशः। पक्षेतरत्वाभावे हेतुमाह—**चक्षुरादेरिति** ॥ अत्रापि नायनरश्मेरेव चक्षुःशब्देन विवक्षितत्वाद् नकिञ्चिदवद्यम् ॥

विपक्षाद् व्यावृत्तिरहितः पक्षेतर इति हि तेऽभ्युपगमः। साधनाव्यापकसाध्यव्यापकधर्मस्योपाधित्वं पराभ्युपगतमिति परं प्रति तथाविधोपाध्युपन्यासः। आलोकानपेक्षायोगिचक्षुर्वेद्यपरमाण्वादौ परस्य व्यभिचार इत्यपि द्रष्टव्यम् ॥

सूत्रविनिस्सृतद्वितीयहेतुं विकल्प्य दूषयति—**द्रव्येति** ॥ **भावशक्त्येति** ॥

द्रव्यादिविलक्षणत्वेऽपि शक्तेरालोकाभावत्त्वाभावादिति भावः। विपक्षे बाधकं शङ्कते—**संप्रतिपन्नेति** ॥

---

1. पृ. 479. प. 5

तमस्त्वे तत्प्रागभावे न स्यात्, तदभावमात्रस्य तमस्त्वे सत्यप्यालोके तदन्योन्याभावे तमोव्यवहारः स्यात्, तत्संसर्गाभावस्य तमस्त्वे सत्यपि संसर्गे तदन्योन्याभावे तद्व्यवहारः स्यादि[1]त्यतिप्रसङ्गात् ॥

॥ तमोद्रव्यत्वनिषेधकानुमानस्य व्यभिचारव्याप्यत्वासिद्ध्यादिना निरासः ॥

तमः, न द्रव्यम्, द्रव्यत्वसमानाधिकरणद्रव्यत्वावान्तरजातिरहितत्वे सति चाक्षुषत्वात्, स्पर्शरहितत्वे सति चाक्षुषत्वाच्च ; रूपवदित्यपि न ; प्रथमस्य शरीरेण व्यभिचारात्, पृथिवीत्वादिना परापरभावानिरूपणेन शरीरत्वजातेरभावात् । सङ्करो न वादीन्द्रस्य जातिबाधक इति चेत्, तथापि निर्गुणत्वस्योपाधेः । न च साधनव्याप्तिः ; रूपस्य तमसि सर्वजनसंवेदनात्; द्वितीयस्य [2]विशेषणासिद्धेः, तमसोऽपि रूपवत्तया स्पर्शानुमानस्य दर्शितत्वात् । तमसि नीलबुद्धिरेवासिद्धेति वादिवागीश्वरः, तस्य पृथिव्यादावपि रूपवत्त्वासिद्धिः ; प्रतीतिकलहस्य तत्रापि शक्यत्वात् । अञ्जनपूर्णपुञ्जश्यामं शार्वरं तम इति [3]प्रतीतेरिति बाधकञ्च निरस्तम् ॥

---

तदेवं दशमद्रव्यं तम इति स्थिते वादीन्द्रः तन्निषेधानुमानं शङ्कते—**तम इति** ॥ गगनादौ व्यभिचारवारणाय चाक्षुषत्वादित्युक्तम् । घटादौ व्यभिचारं वारयति—**द्रव्यत्वेति** ॥ तमसोऽपि तमस्त्वरूपद्रव्यत्वावान्तरजातिमत्त्वमस्मदभिमतमित्यन्यतरासिद्धिः, अत आह—**द्रव्यत्वसमानाधिकरणेति** ॥ द्रव्यत्वसमानाधिकरणजातिरहितत्वे सति चाक्षुषत्वादित्युक्तेऽप्यन्यतरासिद्धिः ; द्रव्यत्वस्यापि द्रव्यत्वसमानाधिकरणत्वात्, अत आह—**द्रव्यत्वावान्तरेति** ॥ पृथिव्यादौ, गगनादौ च व्यभिचारवारणाय द्वितीयहेतुविशेषणम् । दूषयति—**अपिनेति** ॥ व्यभिचारं स्फुटयति—**पृथिवीत्वादिनेति** ॥ रूपवत्त्वेन स्पर्शानुमाने हेतोरसिद्धिं **मानमनोहरकार** श्चोदयतीत्याह—**तमसीति** ॥ अतिप्रसक्त्या दूषयति—**तस्येति** ॥ पृथिव्यादाविव तमसि रूपप्रतीतिरेव नास्तीति, अत आह—**अञ्जनेति** ॥ रूपवत्त्वे सत्यालोकानपेक्षचक्षुर्वेद्यत्वानुपपत्तिबाधाद् भ्रान्तिरसौ, अत्राह—**बाधकं चेति** ॥ आलोकाभावस्यान्योन्याभावेतरस्य तमोव्यवहारगोचरत्वे मानमनो-

---

1. स्यादिति प्रसङ्गात्
2. विशेषासिद्धेः
3. प्रतीतेर्बाधकं च (क)

॥ मा न म नो ह र कारणामालोकाभावस्य तमःशब्दवाच्य-
त्वानुमानस्य सत्प्रतिपक्षादिना बाधः ॥

विवादाध्यासित आलोकाभावः, तमश्शब्दवाच्यः, इतरेतराभावव्यतिरेकालोकाभावत्वात्, यदित्थं न भवति, तदित्थं न भवति ; यथाऽऽलोक इति चेत्, न; विवादाध्यासितः, न तमश्शब्दवाच्यः, अभावत्वात्; इतरेतराभाववदिति सत्प्रतिपक्षत्वात्। तमःपदम्, आलोकाभाववाचकम्, आलोकानपेक्षचक्षुर्ग्राह्यवाचकत्वात्। आलोकाभाववदिति चेत्, न; आलोकगुणवाचकपदे व्यभिचारात्। आलोकरूपादिग्रहणे स एवालोकः चक्षुस्सहकारीति चेत्, न; तस्य गुणित्वेनान्यथासिद्धसन्निधेरहेतुत्वात्। हेतुत्वे वा तदीयगुणाभावग्रहेऽप्यालोकसापेक्षत्वप्रसङ्गात्। सम्प्रतिपन्नालोकाभाववदिति चेत्, तदितरेतरज्ञापकसामग्र्या एव तदभावग्रहेऽपि सामग्रीत्वात् ॥

॥ तमस आलोकाभावसाधकानुमानान्तरतद्दूषणे ॥

तम एव आलोकाभावः, असति लिङ्गादावालोकानपेक्षचक्षुषि सत्येव गृह्य-

---

ह र कारोक्तं व्यतिरेकिणं शङ्कते—**विवादाध्यासित इति** ॥ रसादिपदे व्यभिचारं वारयति—**चक्षुर्ग्राह्येति** ॥ रूपादिपदे व्यभिचारवारणाय—**आलोकानपेक्षेति** ॥ आलोकरूपादिग्रहे चक्षुषस्तदालोकसापेक्षत्वाद् न व्यभिचार इत्याह—**आलोकरूपादीति** ॥

कार्यकारणभावस्यानन्यथासिद्धान्वयव्यतिरेकगम्यत्वादालोकरूपादिप्रतीतावालोकान्वयव्यतिरेकयोरन्यथासिद्धेर्नैवमित्याह—**नेति** ॥ आलोकरूपादिप्रतीतिः, आलोकसापेक्षचक्षुर्जन्या, चाक्षुषरूपादिप्रतीतित्वात्; घटरूपादिप्रतीतिवत्, अत्राह—**हेतुत्वे वेति** ॥ कुत एतत्? अत्राह—**तदितरेतरेति** ॥ तत्तदविनाभूतव्यतिरिक्ततत्प्रमाणकारणसाकल्यस्य तदभावप्रमाकारणत्वादित्यर्थः । तमः पक्षीकृत्यालोकाभावत्वानुमानं शङ्कते—**तम एवेति** ॥ **गृह्यमाणत्वादिति** ॥ सुखादौ व्यभिचारः, तत उक्तम्—**चक्षुषि सतीति** ॥ द्वीन्द्रियग्राह्यघटादौ व्यभिचारं वारयति—**एवेति** ॥ रूपे व्यभिचारः, अत उक्तम्—**आलोकानपेक्षेति** ॥ अनुमेयवह्न्यादौ व्यभिचारं वारयति—**असति लिङ्गादाविति** ॥ तमः शब्दस्या-

माणत्वात्, सम्प्रतिपन्नालोकाभाववदिति चेत्, न; पक्षसपक्षौ कौ? भिन्नाभिन्नाविति चिन्तनीयम्; योगिमानससङ्ग्राह्यत्वादवधारणासम्भवेन हेत्वसिद्धिश्चेति वा दिवा गी श्व रेणैव दूषितत्वात् ॥

॥ छायाया द्रव्यत्वस्य रूपादिगुणवत्त्वेन कर्मवत्त्वेन साधनम् ॥

तथास्ति प्रत्यक्षसिद्धा छत्रादिच्छाया। तत्र च कृष्णरूपं प्रत्यक्षसिद्धमेव। एकत्वादिसंख्यादीर्घत्वमहत्वादिपरिमाणपृथक्त्वसंयोगविभागवेगाश्च प्रत्यक्षसिद्धा एव। कर्मापि प्रत्यक्षसिद्धम्; छाया गच्छतीत्यनुभवात्, बाधकाभावाच्च। स्वाभाविक्यां गतावपवरकद्रव्यानुविधानं न स्यादिति चेत्, न; [1][इन्द्रनीलादिगमनानुविधानवदपवरकद्रव्यच्छायायास्तदनुविधानोपपत्तेः। संयोगिद्रव्यत्वेन प्रभाया इन्द्रनीलाद्यनुविधानमिति चेत्, न; छायायामपि तुल्यत्वात्। अथ—इन्द्रनीलच्छायेन्द्रनीलयोः सम्बन्धः इन्द्रनीलप्रभया छायायामपसरन्त्यां निवृत्त इति चेत्, न;] इन्द्रनीलप्रभाया इन्द्रनीलच्छायाव्यावर्तकत्वाभावात्। छायाप्रभयोः सहानवस्थानं विरोध

---

लोकाभावविषयत्वात्, शब्दातिरिक्तव्यवहारस्य तत्रासत्त्वात् तमःशब्देनालोकाभावं पक्षयित्वा तमेव सपक्षयतो विचित्रमनुमानकौशलमिति दूषयति—**नेति** ॥

इत्थं तमसो द्रव्यत्वं प्रतिपाद्य, छायाया अपि रूपवत्त्वादिभिर्हेतुभिर्द्रव्यत्वप्रतिपादनायाह—**तथेति** ॥ रूपवत्त्वादिहेतवोऽसिद्धाः; तदनुभवस्य भ्रमत्वात्, अत्राह—**बाधकाभावाच्चेति** ॥ छाया गच्छतीत्यनुभवस्य **कि र णा व ली का रो** बाधकमीरयति—**स्वाभाविक्यामिति** ॥ छत्राद्यावरकद्रव्यगमनानुविधायित्वाच्छायागमनस्यानुभूयमानं स्वाभाविकत्वेन न स्यादित्याशयः। नैसर्गिकगतिमतोऽपि द्रव्यस्य द्रव्यान्तरानुविधायित्वमविरुद्धम्; अन्यत्राप्युपलब्धेरिति परिहरति—**नेति** ॥ इन्द्रनीलादिगगनानुविधायित्वेऽपि प्रभायाः स्वाभाविकगतिमत्त्वं संभवति; तदनुविधानस्य नित्यसंयोगिद्रव्यतयाऽन्यथासिद्धेरित्याह - **संयोगीति** ॥ तुल्यत्वहेतोरसिद्धिं शङ्कते —**अथेति** ॥ ऊर्ध्वदेश इन्द्रनीले नीयमाने अधोदेशे छाया याति, मध्ये प्रभया छायेन्द्रनीलयोः संबन्धो विच्छिन्नः, इति न नित्यसंयोगितयाऽन्यानुविधानसामर्थ्यमित्यर्थः। मन्दप्रदीपस्यान्धकारनिवर्तकत्वाभाववत् प्रभाया [अ]निवर्तकत्वमविरोधादिति परिहरति —**नेति** ॥ अविरोधादित्यस्यासिद्धिमाह—**छायेति** ॥ विमता छाया,

---

1, कुण्डलान्तर्गतं क पुस्तके नास्ति

इति चेत्, न; अनभ्युपगमात्, प्रत्यक्षविरोधाच्च। आलोकनिरपेक्षचक्षुर्वेद्यत्वाद् छाया न गुणकर्मवती, किन्तु भाऽभाव इति चेत्, न; असिद्धेः; सत्यालोके छायोपलम्भात्, असति चानुपलम्भात् ॥

॥ छाया न द्रव्यम्, तमस्त्वादिति वा दी न्द्रशङ्कायां तमोद्रव्यत्व-
वादिनि न दूषकत्वम् ॥

छाया, न द्रव्यम्, तमस्त्वात्; महान्धकारवदिति चेत्, न; तमस्त्वं किमालोकाभावत्वम्, [1]द्रव्यत्वावान्तरजातिर्वा तमश्शब्दवाच्यत्वं वा? नाद्यः। असान् प्रत्यसिद्धेः। न द्वितीयः; भवतोऽसिद्धेः। न तृतीयः; असिद्धेः, बहुलान्धकारस्यैव तमश्शब्दवाच्यत्वात्। तस्माद् छाया [2]गुणवत्त्वात् क्रियावत्त्वाच्च द्रव्यम्। गन्धादिरहितत्त्वाच्च पृथिव्यादिव्यतिरिक्तेति दशमद्रव्यम् ॥

॥ तमसो गन्धादिहीनत्वे न पृथिवीत्वम्, अन्यथा सलिलतेजसोरपि रूपित्वेन
पृथिवीत्वापत्तिः छायापृथिवीत्वमप्यत एव व्याख्यातमित्यादि ॥

छाया, पृथिवी, कृष्णरूपत्वात्; अञ्जनवदिति चेत्, न; गन्धवत्त्वस्योपाधित्वात्। न च—साधनव्याप्तिः; गन्धानुपलम्भस्यानुद्भूतत्वेनोपपत्तेः, अन्यथा इन्द्रनीलेन्द्रनीलप्रभयोरपि द्रव्यान्तरत्वापत्तेरिति—साम्प्रतम्; सलिलतेजसी, पृथिवी,

---

स्वप्रतियोग्याकारकेण नित्यसंबन्धा, छायात्वात्, छत्रच्छायावत्। इन्द्रनीलप्रभाच्छाययोः सहावस्थानाद् मैवमित्याह—**नेति** ॥ इन्द्रनीलतत्प्रभयोरिव प्रभाच्छाययोरेकदेशकालसंसर्गानुभवविरोधाच्च सहानवस्थानमित्या[ति, अत आ]ह —**प्रत्यक्षेति** ॥ छाया, न गुणकर्मवती, आलोकानपेक्षचक्षुर्वेद्यत्वात्; आलोकाभाववदित्याह— **आलोकेति** ॥ अभावस्यानुपलब्धिगम्यत्वात् साधनविकलो दृष्टान्तः, विशेषणासिद्धश्च हेतुरित्याह— **नेति** ॥

इत्थं प्रसङ्गाद् मध्ये कि र णा व ली कारे निरस्ते पुनर्वा दी न्द्र एव चोदयति —**छायेति** ॥ द्रव्यत्वेऽपि पृथिव्याद्यन्यतमान्तर्भूतेति न द्रव्यान्तरत्वम्, अत आह —**गन्धादीति** ॥ छायां परः पृथिव्यामन्तर्भावयितुमाह—**छायेति** ॥ छाया, गन्धवती, कृष्णरूपत्वात्; अञ्जनवदिति। साधनव्याप्तिमाशङ्क्याह—**न चेति** ॥ इति

---

1. द्रव्यत्वं वा? अवान्तरजातिर्वा? 2. गुणवत्वक्रियावत्वाच्च

रूपित्वात्, गन्धश्चानुद्भूतो नोपलभ्यते; अन्यथेन्द्रनीलादेरपि द्रव्यान्तरत्वप्रसङ्गादित्यपि दीयतां दृष्टिः। छाया, न पृथिवी, पाकजगुणहीनत्वात्; सलिलवत्। न च कृष्णत्वराहित्यमुपाधिः; कालिन्दीजले साध्याव्यापकत्वात्। औपाधिकं तच्चन्द्रमसीव शैत्यम्, महतीव परिच्छेद इति चेत्, न; बाधकाभावात्, अन्यथा धर्मिधर्मव्यवहाराभावापत्तेः। वियति विक्षिप्तानामेव कालिन्दीजलानां धवलिमप्रतीतिर्बाधकमिति चेत्, न; तत्रापि तेजस एव धवलिम्न उपाधिभावसम्भवात्। नीलिमाऽपि तर्हि [1]तत्रापीति प्रतीयेत घटादाविव तेजोमध्यवर्तिनीति चेत्, न; पित्ताभिभूततेजसः शङ्खश्वैत्यवद् नीलिम्नोऽप्यप्रतीतेरुपपत्तेः। न तेजसा नीलिमाभिभवः;

---

च न साम्प्रतमित्युपरि सम्बन्धः। अयोग्यत्वे सत्य[नु]पलम्भाद् नास्त्येव गन्धश्छायायाम्, अत्राह—**गन्धेति**॥ गन्धस्यानुपलम्भोऽननुभूतत्वात्, न त्वसत्त्वादिति कुतो निर्णयः? अत्राह—**अन्यथेति**॥ कुतो न साम्प्रतमित्याशङ्क्यातिप्रसङ्गादित्याह—**सलिलेति**॥ सत्प्रतिपक्षं चाह—**छायेति**॥ कालिन्दीजलानां जलत्वेन जाह्नवीजलवद् धवलत्वानुमानात् कृष्णत्वमौपाधिकम्, अतो न साध्याव्याप्तिरिति ली ला व ती विलपति—**औपाधिकमिति**॥ चन्द्रमसस्तेजस्त्वेनोष्णस्पर्शस्य गगनगङ्गासयोगजशैत्यं यथेत्यर्थः। यद् यथा भाति, तत् तथेत्युत्सर्गाद् नासति बाधक इत्याह—**महतीति**॥ परिहरति—**नेति**॥

विपक्षबाधकेनैतद् द्रढयति—**अन्यथेति**॥ जाह्नवीजलस्य कालिन्दीजलदृष्टान्तेन कृष्णिमानमनुमाय धवलिमापरसंवर्तकृत इति प्रसङ्गात् कस्यचित् कश्चिदपि धर्मो नाध्यवसितुं शक्यः स्यादित्यर्थः। कालिन्दीजलकार्ष्ण्यस्य स्वाभाविकत्वे बाधकप्रमाणं शङ्कते—**वियतीति**॥ धवलतेजस्सम्बन्धाद् धवलिमप्रतीतिरौपाधिकीति परिहरति—**नेति**॥ वियति कालिन्दीजलधावल्यप्रतीतेरौपाधिकत्वे कार्ष्ण्यस्य प्रतीतिरपि कालिन्द्यामिव वियत्यपि स्यादिति शङ्कते—**नीलिमाऽपीति**॥ विपरीतरूपतेजसाऽऽक्रान्तत्वाद् नीलिम्नो न प्रतीतिः, अत्राह—**घटादाविति**॥ कालिन्दीजले नैल्यस्य विपरीतरूपाभिभूतस्याप्रतीतिं दृष्टान्तेनोपपादयन् परिहरति—**नेति**॥ पित्तपीतिम्ना शङ्खश्वैतिम्नोऽभिभवादप्रतीतिः, इह तु नीलिम्नस्तेजसाऽभिभवो न सम्भवतीति शङ्कते—**न तेजसेति**॥ न सम्भावनामात्रेणार्थसिद्धिः; प्रमाणाधीनत्वात्

---

1. तत्रापिप्रतीयेत

तेजोमध्यवर्तिनि[1] घटादावभावादिति चेत्, न; घटादेरस्वच्छतया तद्रूपानभिभवेऽपि स्फटिकवदतिस्वच्छानामपां रूपस्याभिभाव्यत्वसम्भवात्। जलम्, अन्यरूपाभिभाव्यरूपम्, इन्द्रनीलाद्यन्यत्वे सति स्वच्छत्वात्; स्फटिकवदिति प्रयोगात्। न च "यच्छुक्लं तदपाम्"इति श्रुतिविरोधः; जह्नुकन्याजलादेर्धवलिमप्राचुर्याभिप्रायत्वात्। यथा कतिपयोर्वरप्रदेशानां पयःपाण्डराणां परिलम्भेऽपि यत् कृष्णं [2](तदन्नस्येति) प्राचुर्याभिप्रायेण न विरुध्यते, तद्वत्। न च हेतोरसिद्धिः; छायायाः पाकानुपलम्भात्, अन्यथा सलिलादावपि तत्प्रसङ्गात्। तस्मात् तमः, छाया च द्रव्यान्तरम्। यथाहुः—

"तमः खलु चलन्नीलं परापरविभागवत्।
प्रसिद्धधर्मवैधर्म्याद् नवभ्यो भेत्तुमर्हति॥"

इति॥

तमसो न रूपिद्रव्यत्वम्, न वाऽनेकद्रव्यारब्धद्रव्यत्वम्, किन्तु
दशमद्रव्यत्वमेवेति तमोऽतिरिक्तपदार्थत्वोपसंहारः॥

न चेदमद्रव्यं रूपि द्रव्यम्; रूपवतो मूर्तिनान्तरीयकत्वेन निरवयवस्य परमाणुतयाऽतीन्द्रियत्वापत्तेः। नाप्यनेकद्रव्यम्; स्पर्शरहितद्रव्यत्वेनानारब्धत्वात् मनोवदिति चेत्, न; मनसोऽपि "अन्नमयं हि सोम्य मनः" "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" इत्यादिश्रुतेः, मनः, जन्मवत्, इन्द्रियत्वात्; चक्षुरादिवदित्यनु-

---

तस्या इति, अत आह—**जलमिति**॥ मुख्यपरित्यागेन प्राचुर्यपरत्वस्वीकारे किं कारणमित्याशङ्क्य, तत्प्रायप्रकरणे पाठ इत्याह—**यथेति**॥ व्याप्यत्वासिद्धिमुद्धरति—**न चेति**॥ उदाहृतेऽर्थे भट्ट वचनमुदाहरति—**यथेति**॥ द्रव्यम्=समवायिकारणम्, न विद्यते यस्य, तदद्रव्यम्। द्विविधमद्रव्यम्—सर्वगतम्, असर्वगतं चेति। तत्र न तावदाद्यमित्याह—**रूपि द्रव्यमिति**॥ हेतुमाह—**रूपवत इति**॥ परिच्छिन्नमपि—अणुपरिमाणम्, मध्यमपरिमाणं चेति द्वयमेव। तत्रापि नाद्यमित्याह—**निरवयस्येति**॥ द्वितीयं दूषयति—**नापीति**॥ अनेकान्यारम्भकद्रव्याणि यस्य, तदनेकद्रव्यम्। तमः, नारब्धम्, स्पर्शरहितद्रव्यत्वात्;

---

1, नी 2, तन्नस्यति

मानाच्च। कार्यत्वात् दृष्टान्तस्य साध्यवैकल्यात्। श्रवसोऽप्यत एव कार्यत्वाद् न व्यभिचारः; अतीन्द्रियपरमाण्वसिद्धेश्चेत्यलमतिकलहेन ॥

॥ इति न्यायचन्द्रिकायां तमोऽतिरिक्तपदार्थत्वप्रकरणं सप्तमम् ॥

---

---

मनोवदित्यर्थः ॥ **अत एवेति** ॥ "सर्वेन्द्रियाणि" इति श्रुतेः,इन्द्रियत्व—हेतोश्चेत्यर्थः। मध्यमपरिमाणमस्तु तमः, न चारम्भकद्रव्याभावः; अज्ञानस्य तदारम्भकत्वात्। न च परमाणूनामेव द्व्यणुकादिपरम्परया द्रव्यरम्भकत्वात् स्पर्शवत्परमाण्वारब्धत्वे तमसः स्पर्शप्रसङ्गात् स्पर्शरहितपरमाणूनामनारम्भकत्वं मनोवदिति—वाच्यम्; परमाणूनामेव प्रमाणविकलानामारम्भकत्वासम्भवादित्याह—**अतीन्द्रियेति** ॥

॥ इति न्यायचन्द्रिकाविवरणे तमोऽतिरिक्तपदार्थत्वप्रकरणं सप्तमम् ॥

---

## ।। अथ न्यायचन्द्रिकायां परमाणुनिरासप्रकरणमष्टमम् ।।

।। स्थूलकार्यकारणतयाऽल्पतमपरिमाणावयवरूपपरमाणुसाधनप्रकारः ।।

अथ कथमतीन्द्रियपरमाणोरसिद्धिः शक्यप्रतिज्ञा तार्किकेषु प्रणान् धारयत्सु? तथा हि किरणावलीकारो रणति स्म—स्थूलकार्यस्य लोष्टादेरवयवक्रियाविभागादिन्यायेन भज्यमानस्य तरतमादिभावाद् यतो नाल्पीयः, तं परमाणुमाचक्ष्महे। एष ह्यवयवावयविप्रवाहो न [1]तावद् निरवधिरेव; अनन्तावयवारब्धत्वाविशेषेण मेरुसर्षपादीनां परिमाणभेदानुपपत्तेः न च—कारणसङ्ख्याविशेषेऽपि परिमाणप्रचयविशेष इति—युक्तम्[2]; [तयोरपि सङ्ख्याविशेषाभावेऽनुपपत्तेः। नापि प्रलयावधिः; कस्य-

---

## ।। अथ न्यायचन्द्रिकविवरणे परमाणुनिरासप्रकरणमष्टमम् ।।

परमाणोः अप्रसिद्धत्वेऽप्रसिद्धप्रतियोगिकप्रतिषेधासिद्धिः, प्रसिद्धत्वे तस्यात्यन्तिकनिषेधासिद्धिरिति शङ्कते—**अथेति** ।। लक्षणाधीनाऽसन्दिग्धलक्ष्यसिद्धिः। न च परमाणोर्लक्षणं सम्भवति, तत्राह—**स्थूलेति** ।। यतो नाल्पीयः=यस्मादल्पतरो नास्ति, यतः परं विभागो न भवति, स परमाणुः, तदुपपादयति—**अवयवक्रियेति** ।।

आरम्भकावयवानां महेश्वरे[श्वरे?]च्छादिवशात् क्रिया भवति, तदनन्तरं परस्परं विभागः, तत आरम्भकसंयोगभङ्गादारब्धावयवविभङ्ग इत्येवं क्रमेण द्व्यणुकपर्यन्तकार्यभङ्गे यतो नाल्पीय इति सम्बन्धनीयम्। तत्रोपपत्तिमाह—**अल्पेति** ।। **तमिति** ।। ततोऽप्यल्पतरो नित्यः क्रियावत्परमाणुः, इति लक्षणमुक्तं भवति। तस्यासम्भवं परिहरति—**एष हीति** ।। अवयवावयविप्रवाहः किं निरवधिः? उत नाशावधिः? उत विभागावधिः? नाद्यिमः कल्पते, हेतुमाह—**अनन्तेति** ।। अवयवावयविप्रवाहस्य क्वचिदप्यविश्रान्तत्वे सर्षपस्य, सुमेरोश्चारम्भकावयवानामनन्तत्वात् तुल्यपरिमाणत्वापत्तिरित्यर्थः ।।

आरम्भकावयवानां सङ्ख्याभेदाभावेऽपि महत्परिमाणाद्वा, शिथिलसंयोगरूपप्रचयाद्वा कार्ये परिमाणवैचित्र्यम्, अत्राह—**न चेति** ।। द्वितीयं दूषयति—

---

1. न तन्निरवधिरेव

2. न तदेव तस्मादित्यत् तयोरपि सङ्ख्याविशेषभाव इत्यतः प्राक्तनो भागः कुण्डलितो विपरीतक्रमेण (ख) पुस्तके दृश्यते।

चिदन्त्यस्य निरवयवत्वे तदनुपपत्तेः? द्रव्यस्यावयवविभागाश्रयविना[शा]भ्यां विना विनाशाभावात्। नापि [वि]भागावधिः; तस्य विभज्यमानाश्रयतया तदभावेऽनुपपत्तेः। न च—एकाश्रय एव विभाग इति—युक्तम्; किञ्चित् कुतश्चित् विभज्यते।] न तदेव तस्माद् निरवयवावधिरयमवयवावयविप्रवाह इति विज्ञायते ॥

॥ परमाण्वाद्यनुमानप्रयोगः ॥

तर्कितमेतन्न तु प्रमितमिति चेत्, न; विवादाध्यासितः त्रसरेणुः, महान्, अनेकद्रव्यवांश्च, अस्मदादिचाक्षुषद्रव्यत्वात्, घटादिवत्—इति। नासौ परमाणुः। सन्तु तर्हि तदवयवाः कार्यानुमिताः परमाणवः। न हि तेऽपि महान्तः; रूपविशेषवतां चाक्षुषत्वप्रसङ्गात्, तथा च कार्यत्वे प्रमाणानवक्लृप्तौ तदवयवानुमानात्। यद्यपि चासत्त्वान्निरवयंत्वाच्च तेषां महत्परिमाणारम्भेण[न] [1]कारणमहत्त्वप्रचयौ;[2] तथापि

---

**नापीति** ॥ कश्चिदन्त्योऽवयवः सावयवः, निरवयवो वा। प्रथमे प्रवाहाविश्रान्तिः, द्वितीये प्रलयावधित्वानुपपत्तिः; अन्त्यस्य प्रलयाभावादित्याह—**कस्यचिदिति** ॥ चरमं पराचष्टे—**नापीति** ॥

एवं विभागाश्रयतया परिशिष्यमाणनिरवयवावधित्वं प्रवाहस्य प्रतिपाद्य, अवयवानेकत्वमाह—**न चैकेति** ॥ अनुग्राह्यप्रमाणाभावेन विपर्ययापर्यवसायित्वं शङ्कते—**तर्कितमिति** ॥ त्रसरेणुना कार्येण द्व्यणुकमनुमाय, तेन परमाणोरनुमानाद् नैवमित्याह—**नेति** ॥ विवादाध्यासितो, महान्, अस्मदादिचाक्षुषद्रव्यत्वात्; घटादिवदित्येकमनुमानम्, अपरम् विवादाध्यासितः, अनेकद्रव्यवान्=अनेकद्रव्याणि कारणानि विद्यन्ते, यस्य; स तथा; अस्मदादिचाक्षुषद्रव्यत्वात्; घटवदिति सावयवत्वानुमानम्। त्रिभिः परमाणुभिरेव त्र्यणुकारम्भसम्भवाद् न द्व्यणुकसिद्धिरिति शङ्कते—**सन्त्विति** ॥ त्र्यणुकावयवाः, अनेकद्रव्यवन्तः, महाकार्यत्वात्; घटवत्, अत्राह—**न हीति** ॥ रूपविशेषवतामुद्भूतरूपवतामित्यर्थः। फलितमाह **तथा चेति** ॥ त्र्यणुकारम्भकावयवानां निरवयवत्वे त्र्यणुकमहत्त्वानुपपत्तिः; कारणमहत्त्वप्रचयविशेषयोः तत्प्रयोजकयोरसम्भवात्, अत्राह—**यद्यपीति** ॥ उत्क्रमेणोत्तरं

---

1. "कारण" नास्ति
2. प्रचयौ स्तः।

बहुत्वसङ्ख्याऽस्तीति सर्वं समञ्जसम्, न; उक्तोत्तरत्वात्। अवश्यं हि त्रसरेणोरवयवैरनेकद्रव्यैर्भवितव्यम्; तस्य महत्त्वात्; महत्त्वं प्रति चावयवगतस्यानेकद्रव्यवत्वस्यापि कारणत्वात्, अन्यथा महत्त्वस्य तत्प्रकर्षानुविधानानुपपत्तेः। तस्मात् त्रसरेणोरवयवाः, सावयवाः, महाद्रव्यारम्भकत्वात्, तन्तुवत्। बहवश्च परिमाणप्रचयानुपपत्तौ महदारम्भकत्वात्तुल्यपरिमाणप्रचयापेक्षयाऽधिकसङ्ख्यास्तन्तुवत्। ते च भज्यन्ते, सावयवत्वात्; घटवत्, विपक्षे बाधकमुक्तम्। तदवयवानां त्ववयवकल्पनानवकाशः; प्रमाणाभावात्, बाधकाच्च, द्रव्यारम्भकत्वमूर्तत्वादीनामनुकूलतर्काभावात्। अनवस्थाप्रसङ्गस्य च प्रतिकूलस्य स्फुटत्वादिति ॥

॥ स्वकारणसत्तासमवायित्वरूपकार्यत्वेनाऽऽद्यकार्यसमवायिकारण-
जन्यत्वादिना परमाणुसाधनं व्योमशिवार्यस्य ॥

अपरोऽप्याह—आद्यं कार्यम्, समवायिकारणजन्यम्, यद् यत् कार्यम्,।

---

दर्शयति—**अवश्यं हीति** ॥ अवश्यशब्दसूचितयुक्तिमाह—**तस्येति** ॥ त्रसरेणोर्महत्त्वात् तदवयवाः सावयवा इति व्यधिकरणासिद्धिः, अत्राह—**महत्त्वं प्रतीति** ॥ अन्वयेनोक्तं व्यतिरेकेणाह—**अन्यथेति** ॥ कार्यमहत्त्वस्य कारणप्रकर्षानुविधानं न स्यादित्यर्थः। आरम्भकत्वहेतोः परमाणौ व्यभिचारं वारयति—**महदिति** ॥ त्र्यणुकमहत्त्वोपपत्तये तदवयवबहुत्वं साधयति—**बहवश्चेति** ॥ **परमाणुप्रचयानुपपत्ताविति** ॥ कार्यमहत्त्वप्रयोजकमहत्परिमाणप्रचययोरनुपपत्तावित्यर्थः। द्वितन्तुकपटारम्भकतन्तुद्वयेन तुल्यपरिमाणप्रचयत्वं त्रितन्तुकपटारम्भकतन्तुत्रयस्य तत एव परिमाणप्रचयानुपपत्तौ महदारम्भे स्वगतबहुत्वं प्रयोजकम्; तद्वदित्यर्थः। परमाणौ, द्वितन्तुपटारम्भकतन्तुद्वये च व्यभिचारवारणाय हेतुविशेषणम्। तेषां विभागादिपरम्परया प्रलयमाह—**ते चेति** ॥ त्र्यणुकावयवानां भवतु महद्द्रव्यारम्भकत्वम्, मा च भूदनेकद्रव्यत्वम्, किमत्रानिष्टम्? तत्राह—**विपक्ष इति** ॥ कार्यमहत्त्वस्य कारणप्रकर्षानुविधानानुपपत्तिर्बाधकमित्यर्थः। त्र्यणुकावयवानामिव तदवयवानामपि सावयवत्वाद् निरवयवासिद्धिः, अत्राह—**तदवयवानां त्विति**। **बाधकाच्चेति** ॥ अनवस्थाप्रसङ्गात्, मेरुसर्षपयोस्तुल्यपरिमाणप्रसङ्गात्, एकेनावयवेनानन्तावयवेन व्याप्ते जगति द्वितीयानारम्भप्रसङ्गाच्चेत्यर्थः। द्व्यणुकावयवाः, सावयवाः, द्रव्यारम्भकत्वात्, मूर्तत्वात्, संयोगित्वात्, विभागित्वात्; घटवत्, अत्राह—**द्रव्येति** ॥

तत् तत् समवायिकारणजन्यम्; यथा घटादिः। तथा[1] चैतत्। तस्मात्, समवायिकारणजन्यम्—इति। न च—कार्यत्वमभावेन व्यभिचारीति—वाच्यम्; स्वकारणसत्तासम्बन्धरूपत्वात्। तथा घटकारणेष्वल्पतरो भेदः क्वचिद्विश्रान्तस्तरतमशब्दवाच्यत्वाद् महत्परिमाणवत्, यत्र विश्रान्ताः; ते परमाणव इति॥

॥ वा दी न्द्र दृष्ट्या बहुतरानुमानैरुपाध्यादिनिरसनेन द्व्यणुकपरमाण्वोः साधनम्॥

अन्यः पुनराह—सत् अकारणवत्। तद् नित्यं द्विविधम्—पृथिव्यादिकारणवत्, तद्रहितञ्च। तत्र यदकारणवत् पृथिव्यादि, तद् नित्यम्। तथा च प्रयोगः—पृथिव्यादिपरमाणवः, नित्याः; सत्त्वे सत्यकारणवत्त्वात्; आत्मवत्। न च सत्त्वे सतीति विशेषणवैयर्थ्यम्, प्रागभवानिवृत्त्यर्थत्वात्। न चाकारणवत्त्वेति विशेष्यवैयर्थ्यम्; घटादिनिवृत्त्यर्थत्वात्। आश्रयासिद्धिपरिहारार्थं [2]सूत्रम्—"तस्य कार्यं लिङ्गम्। तस्य = नित्यस्य। कार्यस्य = पृथिव्यादेः, लिङ्गम् = द्व्यणुकादि लिङ्गम्। द्व्यणुकमप्य[3]प्रसिद्धम्। अत आह—"कारणाभावाद्धि कार्याभावः"।

---

**व्यो म शि वोऽपि** परमाणुमनुमितवानित्याह—**अपरोऽपीति॥ स्वकारणेति॥** स्वकारणसमवायस्य, प्रागसतः सत्तासमवायस्य वा कार्यत्वरूपत्वात् प्रध्वंसस्यैतदभावादित्यर्थः। आद्यं कार्यं पक्षीकृत्य, कार्य[कारण]रूपं परमाणुं प्रतिपाद्य, तन्निरवयवत्वसाधनायाह—**तथेति॥** महत्परिमाणतारतम्यवदित्यर्थः। तथापि कथं परमाणुसिद्धिः? अत्राह—**यत्रेति॥** विमताः; निरवयवाः, परिमाणतारतम्यविश्रमाधिकरणत्वात्; गगनवदित्यर्थः॥

**वा दी न्द्रोऽपि** वदतीत्याह—**अन्य इति॥** व्याकुरुते—**द्विविधमिति॥** परमाणूनामसिद्धत्वादाश्रयासिद्धिरिति सूत्रान्तरमवतारयति—**द्व्यणुकमपीति॥** त्र्यणुकं समवायिपुरस्सरम्, भावकार्यत्वात्; घटवदिति द्व्यणुके प्रमाणमुक्तम्, अत्राप्याश्रयासिद्धिः, **अत आह—न चेति॥** अप्रत्यक्षोऽवयवो यस्य, तस्येत्यर्थः। अप्रत्यक्षावयवत्वे त्रसरेणूनामेव परमाणुत्वं निरवयवत्वात् प्राप्तमित्याह—**त्रसरेणव**

---

1. तथा च तत् (क)
2. "सूत्रं" नास्ति।
3. "प्र" नास्ति।

अस्ति हि त्र्यणुकं कार्यम्, तच्च कारणाधीनम्, कारणाभावे कार्यानुत्पत्तेरिति। न च त्र्यणुके प्रमाणाभावः; जालसूर्यमरीचिष्वप्रत्यक्षावयवस्य पृथिव्यादेः प्रत्यक्षसिद्धत्वात्। त्रसरेणव एव परमाणवः; तदवयवसाधकप्रत्यक्षाभावात्, लिङ्गाभावेन तदवयवसाधकानुमानाभावाच्चेति चेत्, न; त्रसरेणुः, सावयवः, कार्यद्रव्यत्वात्; महत्कार्यत्वाच्च, घटवदित्यनुमानसम्भवात्। न चायमसिद्धो हेतुः; त्रसरेणुः, महान्, कार्यं च, चाक्षुषद्रव्यत्वात्; घटवदिति तत्सिद्धेः। न चानुकूलतर्काभावोऽत्र दोषाय; महतः सावयवत्वाभावे म[त]चाक्षुषप्रत्यक्षत्वानुपपत्तेः, अनुकूलतर्कस्यानुमाना[न]ङ्गत्वेन तदभावस्यादूषणत्वाच्च। न च महावयवत्वमुपाधिः; पक्षेतर[1]त्वात, तद्विशेषणव्यावर्त्यविपक्षाभावात्, निरवयवानामवयववत्त्वेनैव व्यावृत्तेः। तथा च त्रसरेण्ववयवः, सावयवः, कार्यद्रव्यत्वात्; महदवयवत्वाच्च; तन्तुवत्। न कार्यत्वमसिद्धम्; त्रसरेण्ववयवः, कार्यः, महदवयवत्वात्; तन्तुवत्, त्रसरेणुः, कार्यावयवः, महाकार्यत्वात्; पटवदिति तत्सिद्धेः। न च सावय[2]वत्वे महत्त्वमुपाधिः। अयं घटः; एतदन्यमहत्त्व-

---

इति ॥ त्रसरेणोः सावयवत्वमनुमानादित्याह—**नेति** ॥ रूपादौ, गगनादौ च व्यभिचारवारणाय—आद्यहेतुविशेषणम्। द्व्यणुके व्यभिचारवारणाय—महत्वविशेषणम्। हेतुद्वयं विशेषणासिद्धमित्याह—**न चेति** ॥ योगिचाक्षुषाकाशादावनैकान्त्यं परिहरति—**महदिति** ॥ सामान्यादौ व्यभिचारं वारयति—**द्रव्यत्वादिति** ॥ पक्षानुकूलविपक्षप्रतिकूलतर्काभावादप्रयोजकत्वम्, अत्राह—**न चानुकूलेति** ॥ [अनुकूलतर्कस्य] प्रयोगाङ्गत्वमङ्गीकृत्य द्रव्यस्यायोगिप्रत्यक्षानुपपत्तिर्बाध इत्युक्तम्, इदानीं तदपि नास्तीत्याह—**अनुकूलतर्कस्येति** ॥ घटादेः सावयवत्वे महावयवत्वं प्रयोजकम्, इति कार्यद्रव्यत्वादेर्व्याप्यत्वासिद्धिः, अत्राह—**न चेति** ॥ महानवयवो यस्य, स महावयवः, तत्त्वम्, महावयवत्वम्। पक्षेतरत्वमुपपादयति—**महदिति** ॥ निरवयवव्योमादिविपक्षव्यावृत्त्यर्थं महद्विशेषणं किं न स्यात्? अत्राह—**निरवयवानामिति** ॥ एवं द्व्यणुकमुपपाद्य परमाणुलिङ्गत्वं दर्शयति—**तथा चेति** ॥ **महदवयवत्वादिति** ॥ महद्द्रव्यारम्भकत्वादित्यर्थः। प्रथमस्य हेतोर्विशेषणासिद्धिमाशङ्क्याह—**न चेति** ॥ त्रसरेणुपक्षीकरणेनाप्याह

---

1. पक्षेतरत्वात् महद्विशेषण
2. सावयवत्वे

रहितसावयवान्यः, द्रव्यत्वात्; पटवदित्यादिसिद्धमहत्त्वरहितसावयवे साध्याव्यापकत्वात्। त्रसरेणुः, सावयवावयवं महत्, कार्यत्त्वात्; घटवदिति द्व्यणुकपरमाणुसिद्धेश्च। न चात्र महदवयवत्वमुपाधिः, (द्व्यणु[1]कादिसिद्धौ महद्विशेषणव्यावर्त्यविवक्षाभावात्, निरवयवानामवयवत्त्वेनैव व्यावृत्तत्वात्। न चात्र महत्समवेतत्वमुपाधिः। अयं घटः, एतदन्यमहत्समवेतत्वरहितसावयवान्यः, कार्यत्वात्, पटवदिति सिद्धे, महत्त्वसमवेतत्वरहितसावयवावयवे साध्या[2]व्यापकत्वात्॥

---

—**त्रसरेणुरिति**॥ द्व्यणुके व्यभिचारं वारयति—**महाकार्येति**॥ त्रसरेण्ववयवः, सावयव इत्यस्मिन्ननुमाने महत्त्वमुपाधिरित्याशङ्क्याह—**न चेति**॥ कुत इति? तत आह—**अयं घट इति**॥ घटान्तरभागे सिद्धसाधनत्वं व्यावर्तयति—**अयमिति**॥ एतस्मादन्यत्वे सति महत्त्वरहितः, एतदन्यमहत्त्वरहितः, स च सावयवश्च, तस्मादन्य इत्यर्थः। गुणादिभ्योऽन्यत्वं सिद्धमिति तद्व्यावृत्त्यर्थमाह—**सावयवेति**॥ तथापि वियदादेरन्यत्वं सिद्धम्, अत उक्तम्—**महत्त्वरहितेति**॥ महत्त्वरहितसावयवान्य इत्युक्ते द्व्यणुकसिद्धेः प्रागप्रसिद्धविशेषणत्वम्, अत आह—**एतदन्येति**॥ एतदन्यमहत्त्वरहितोऽयमेव वा स्यात्, महत्त्वरहितो वा स्यात्। प्रथमान्यत्वं पक्षे व्याहतमिति द्वितीयान्यत्वं पक्षे सिध्यत् द्व्यणुकं सावयवं साधयतीति भावः। अयं घटः, एतद्व्यतिरिक्तानणुसांशेतरेतराभाववान्, कार्यत्वात्; घटवदित्यादिपदार्थः। एतद्द्व्यणुकलिङ्गेन परमाणुरनुमितः। सम्प्रति त्र्यणुकमेव पक्षीकृत्य द्व्यणुकं परमाणुं च साधयितुं शक्यत इत्याह—**त्रसरेणुरिति**॥ सावयवोऽवयवो यस्य, स सावयवावयवः, सावयवावयवत्वे महति समवेतत्वं महत्समवेतत्वमुपाधिः, अत आह—**न चेति**॥ हेतुमाह—**अयं घट इति**॥ एतस्मादन्यो महत्समवेतत्वरहितोऽयमेव वा स्यात्, महत्समवेतत्वरहितो वा स्यात्, प्रथमान्यत्वं पक्षे व्याहतमिति महत्समवेतत्वरहितसावयवादन्यत्वं सिद्ध्यतीत्याशयः। एतदन्यत्वेन पक्षे साध्यानुगमो विशेषणकृत्यं च पूर्ववदूह्यम्॥

एवं तावत् सामान्येन द्व्यणुकम्, परमाणुं च प्रसाध्य पार्थिवद्व्यणुकम्,

---

1. कुण्डलान्तर्गतं नास्ति।
2. साध्य (क)

॥ पार्थिवादिपरमाणुसाधनम्, तत्र तत्सिद्धेः प्रागपि महापृथिवीत्वहेतौ महत्त्वविशेषणवैयर्थ्यसार्थक्ययोरुपपत्तिः ॥

पार्थिवपरमाणुद्व्यणुकादिसिद्धिस्तु—पार्थिवत्रसरेणुः, पार्थिवावयवः, महापृथिवीत्वात्; कार्यपृथिवीत्वात्; घटवत्, पार्थिवत्रसरेण्ववयवः, पार्थिवावयवावयवः, महापृथिव्यवयवत्वात, कार्यपृथिवीत्वाच्च; घटतदवयववत्। पार्थिवत्रसरेणुः, पार्थिवावयवः, महापृथिवीत्वात्; घटवत्। एवं जलत्रसरेण्वादिपक्षीकरणेन जलद्व्यणुकपरमाण्वादयः साधनीयाः—इति। न च परमाणुसिद्धेः पूर्वं महत्त्वविशेषणवैयर्थ्यम्; पार्थिव[1]परमाण्वाद्यभावनिश्चयात् पूर्वं विशेषणवैयर्थ्यस्य निश्चेतुमशक्यत्वात्। सार्थकत्वमपि तथेति चेत्, न; परमाणुसन्देहे तत्र व्यभिचारसन्देहनिवृत्त्यर्थत्वेन सार्थकत्वनिर्णयात्, सूत्रकारादिवचनावगतपरमाण्वादिनिवृत्त्यर्थत्वाच्च ॥

---

तत्परमाणुं च साधयितुमाह—**पार्थिवेति** ॥ द्व्यणुकादिसिद्धिस्तूच्यत इति शेषः। आदिपदेनाऽऽप्यद्व्यणुकादिग्रहः। पार्थिवोऽवयवो यस्य, स पार्थिवावयवः। परमाणौ व्यभिचारवारणाय हेतुविशेषणम्। पार्थिवद्व्यणुकमनुमाय तत्परमाणुसाधनायाऽऽह—**पार्थिवत्रसरेणुरिति ॥ पार्थिवत्रसरेण्ववयव इति ॥ घटतदवयववदिति ॥** कार्यपृथिवीत्वादित्यत्र घटो दृष्टान्तः। महापृथिव्यवयवत्वादित्यत्र घटावयवो दृष्टान्तः। एकेनैवानुमानेन द्व्यणुकपरमाणुसाधनायाह—**पार्थिवत्रसरेणुरिति** ॥ पार्थिवोऽवयवो यस्य सः=पार्थिवावयवः, सोऽवयवो यस्य स पार्थिवावयवावयव इति त्रसरेण्ववयवसिद्धिरित्यर्थः। उक्तनीतिमन्यत्रातिदिशति—**एवमिति** ॥ जलत्रसरेणुः, जलावयवः, महाजलत्वात्; कार्यजलत्वाद्वा; रूपजलवत्, जलत्रसरेण्ववयवः, जलावयवावयवः, महाजलत्वात्; रूपजलवत्। एवं तेजःपवनत्रसरेण्वादिपक्षीकरणेन तत्तद्द्व्यणुकादि साधनीयमिति भावः। महापृथिव्यवयवत्वादित्यादौ महत्त्वविशेषणं व्यर्थम्, तद्व्यावृत्त्यर्थपरमाणोरसिद्धेः, सिद्धावनुमानवैयर्थ्यात्, अत्राह—**न चेति** ॥ परमाण्वभावानिश्चयाद् वैयर्थ्यमशक्यनिश्चयश्चेत्, तद्भावानिश्चयात् सार्थकत्वमपि निश्चययोग्यमित्याह—**सार्थकत्वमपीति** ॥ सन्दिग्धानैकान्त्यपरिहारो विशेषणफलमिति परिहरति—**नेति** ॥ स्वमतानुसारेण फलवत्त्वनिर्णयमाह—**सूत्रेति** ॥

---

1, परमाण्वभाव (क)

॥ आकाशात्मत्वैतद्घटादिपक्षकानुमानैश्चतुर्विधपरमाणुसाधनम् ॥

यद्वा—आकाशम्, आकाशमनोव्यतिरिक्तनित्यसंयुक्तम्, द्रव्यत्वात्; घटवत्। न च कालादिनाऽर्थान्तरत्वम्; अजसंयोगायोगात्। यद्वा—आकाशम्, मनोव्यतिरिक्तनित्यमूर्तसंयोगाधिकरणम्, द्रव्यत्वात्; घटवत्। न चाकाशमनोव्यतिरिक्तनित्यमूर्तासिद्धेरप्रसिद्धविशेषणता; आकाशमनोव्यतिरिक्तनित्यवृत्तित्ववतः संयोगस्य[1] साधनात् तथाभूतस्य च कालघटादिसंयोगस्य प्रसिद्धेः। यद्वा—आत्मत्वम्, मनस्त्वव्यतिरिक्तनित्यवृत्तिद्रव्यत्वावान्तरजात्यन्यत्; मेयत्वात्; घटवत्। पार्थिवपरमाणुसाधनं

---

प्रकारान्तरेण परमाणुसाधनायाह—**यद्वेति** ॥ आकाशसंयुक्तमित्युक्ते घटसंयोगाधिकरणत्वं सिद्धम्, अत उक्तम्—**नित्येति** ॥ नित्यसंयुक्तमित्युक्ते मनस्संयोगं सिद्धं व्यावर्तयति— **मनोव्यतिरिक्तेति** ॥ मनोव्यतिरिक्तस्य नित्यस्य संयोगाधिकरणमित्युक्ते—**आकाशस्य घटेन यः** संयोगः, आकाशेऽपि वर्तते, तेन सिद्धसाधनत्वम्, अत उक्तम्—**अकाशमनोव्यतिरिक्तेति** ॥ कालादिसंयोगमाक्षिप्य साध्यपर्यवसानादर्थान्तरत्वम्, अत आह —**न चेति**। विभूनां क्रियाभावादजसंयोगो वाच्यः। स न संभवति; संयोगस्य कार्यत्वेनाविनाभावादिति भावः;

आकाशं मूर्तसंयोगाधिकरणमित्युक्ते घटादिसंयोगाधिकरणत्वं सिद्धमित्युक्तम्। **नित्येति**। मनस्संयोगं सिद्धं व्यावर्तयति—**मनोव्यतिरिक्तेति** ॥ मनोव्यतिरिक्त आकाशे नित्ये मूर्ते घटे च वर्तते घटाकाशसंयोगः, तत आह—**आकाशव्यतिरिक्तेति** ॥ नित्यस्य मूर्तस्यासिद्धावप्रसिद्धविशेषणत्वम्, अत आह—**न चेति** ॥

**आत्मत्वमिति**। मनस्त्वव्यतिरिक्ता चासौ नित्यवृत्तिश्च, द्रव्यत्वस्यावान्तरजातिश्च, ततोऽन्यत् व्यक्त्यन्यत्वं सिद्धमिति, अत उक्तम्—**जात्यन्यदिति** ॥ सत्तान्यत्वेन साध्यं सिद्धं परिहरति—**अवान्तरेति** ॥ द्रव्यत्वेनैवार्थान्तरं परिहर्तुमाह—**द्रव्यत्वावान्तरेति** ॥ घटत्वव्यावृत्त्यर्थम्—**नित्यवृत्तीति** ॥ मनस्त्वं व्यावर्तयति—**मनस्त्वव्यतिरिक्तेति** ॥ एवंविधजातिरात्मत्वम्, इति तदन्यत्वं

---

1 ख्य

च—आत्मत्वम्, मनस्त्वव्यतिरिक्तनित्यवृत्तिद्रव्यत्वावान्तरगन्धासहचरस्पर्शासमानाधिकरण[1]जात्यन्यत्, मेयत्वात्; वटवत्। गन्धासहचरपदस्थाने स्नेहासहचरादि[2]प्रक्षेपादुदकादिपरमाणुसिद्धिरपि द्रष्टव्या। यद्वा—अयं घटः, एतत्संयुक्तसमवाय[सावयव]-

---

सपक्षे सर्वत्रास्तीति साध्यानुगमः। पक्षे पुनः स्वव्यतिरिक्तत्वं न सम्भवतीति मनस्त्वातिरिक्तनित्यवृत्तिद्रव्यत्वावान्तरजातिः परिशेषात् परमाणुत्वमेवेति भावः॥

परमाणुमात्रप्रसिद्धावपि तद्विशेषसिद्धिः कुतः, तत्राह—**पार्थिवेति**॥ इदं तूच्यत इति शेषः॥ गन्धेनासहचरितस्पर्शो गन्धासहचरस्पर्शः, तेनासमानाधिकरणा = असमानाश्रया जातिः, ततोऽन्यत् = गन्धासहचरस्पर्शासमानाधिकरणजातिः अस्पर्शवद्वृत्तिर्वा, गन्धेनैकाश्रयस्पर्शासमानाधिकरणजातिर्वा। प्रथमजातिरात्मत्वमेवेति तदन्यत्वं पक्षे नोपसंहर्तुं शक्यम्, इति द्वितीयान्यत्वं सिद्ध्यत् पार्थिवपरमाणुत्वमादाय सिद्ध्यतीति भावः। सलिलपरमाणुत्वमाक्षिप्यापि साध्यपर्यवसानादर्थान्तरं परिहर्तुं—**गन्धासहचरस्पर्शासमानानिकरणे**त्युक्तम्। **स्नेहेति**॥ आत्मत्वम्, मनस्त्वव्यतिरिक्तनित्यवृत्तिद्रव्यत्वावान्तरस्नेहासहचरस्पर्शासमानाधिकरणजात्यन्यत्, मेयत्वात्; घटवदित्याप्यपरमाणुसिद्धिः। आत्मत्वम्, मनस्त्वव्यतिरिक्तनित्यवृत्तिद्रव्यत्वावान्तरभास्वररूपासहचरस्पर्शासमानाधिकरणजात्यन्यत्; मेयत्वादिति तैजसपरमाणुसिद्धिः। आत्मत्वम्, मनस्त्वव्यतिरिक्तनित्यवृत्तिद्रव्यत्वावान्तरवायुत्वासहचरस्पर्शासमानाधिकरणजात्यन्यत्, मेयत्वात्; घट[त्व]वदिति पवनपरमाणुसिद्धिः॥

**अयं घट इति**—एते संयुक्ताः एतत्संयुक्ताः, ते च, सावयवाश्चैतत्संयुक्तसावयवाः, तेभ्यो व्यतिरिक्ताः=पृथिव्युदकतेजोऽवयवाः, तैस्संयोगी। आत्मादिसंयोगं व्यावर्तयितुं चतुर्विधपरमाणुसिध्यर्थं च **पृथिवीत्याद्युक्तम्**। सावयवपृथिव्यादिसंयोगेन सिद्धसाधनत्वं निषेधति—**सावयवव्यतिरिक्तेति**॥ तथापि यत्किञ्चित्सावयवान्तरात् व्यतिरिक्तपृथिव्यादिसंयोगः सिद्धः, इति तद् व्यावर्तयति—**एतत्संयुक्तेति**॥ एतत्संयुक्तसावयवव्यतिरिक्ताः पृथिव्यादयः एतदसंयुक्तान्यनिरवयवाः। प्रथमसंयोगित्वमेतस्मिन् व्याहतमिति निरवयवपृथिव्यादिसंयोगसिद्धिरित्याशयः॥

---

1. करणं आत्मन्यन्मेयत्वात्। 2. पदप्रक्षेपात्

व्यतिरिक्तपृथिव्युदकतेजोवायुसंयोगी, द्रव्यत्वात्; आकाशवत्। यद्वा—अयं घटः, एतदन्यत्वकार्यत्वरहितपृथिव्यन्यत्, इदं तोयम्, एतदन्यकार्यत्वरहिततोयान्यत्; इदं तेजः, एतदन्यत्वकार्यत्वरहिततेजोऽन्यत्, अयं वायुः, एतदन्यत्वकार्यत्वरहितपवनान्यः, मेयत्वात्; सम्मतवदिति चतुर्विधपरमाणुसिद्धिः। यद्वा—पृथिवीत्वोदकत्वतेजस्त्ववायुत्वानि, निरवयववृत्तीनि, साक्षात् द्रव्यत्वावान्तरजातित्वाद्; आत्मत्ववत्। न चात्रापृथिव्यादिवृत्तित्वमुपाधिः, पूर्वानुमानसिद्धपृथिव्यादिगुणादौ साध्याव्यापकत्वात्॥

॥ आत्मनो व्यापकत्वेन तत्राणुत्वादिबाधेऽपि अणौ द्व्यणुके च
"अणोरणीयान्" इति श्रुतिप्रामाण्यम्। परमाणुसाधनोपसंहारश्च॥

आगमाच्च द्व्यणुकपरमाणुसिद्धिः। "अणोरणीयान् महतो महीयान्" "आत्मा गुहायां निहितोऽस्य जन्तोः" इत्यादेरात्मनोऽणोरणीयस्त्वप्रतिपादकेनाणोरणीयसश्च प्रतिपादनात्, अणोरणीयसि च बाधकाभावेनागमस्य तत्र प्रमाणत्वात्॥

अणोरणीयस्त्वमात्मनो बाधितम्; महतो महीयानिति [1]च महत्त्व[2]प्रतिपादनादिति चेत्, न; आत्मनोऽणीयस्त्वप्रतिपादकस्य बाह्येन्द्रियग्राह्यत्वविरहे तात्पर्यात्,

---

एतस्मादन्यत्वम्, एतदन्यत्वम्, कार्यत्वं चैतदन्यत्वकार्यत्वे, तद्रहितः=एतदन्यत्वरहितो वा, कार्यत्वरहितो वा, तत्राद्यान्यत्वं पक्षे व्याहतमिति कार्यत्वरहितपृथिव्यन्यत्वं घटस्य सिद्ध्यत् नित्यपृथिवीं साधयतीति भावः। एतदन्यत्वरहितपृथिवी=अयं घटः, एतस्मादन्यत्वं सर्वत्रास्तीति साध्यप्रसिद्धिः। मेयत्वाद् घटवदिति सर्वत्र हेतुदृष्टान्तौ। इदं तोयम्, इत्यादावेवं व्याख्यानं द्रष्टव्यम्॥

घटत्वादौ व्यभिचारं वारयितुं साक्षाद् द्रव्यत्वावान्तरेत्युक्तम्—**पूर्वानुमानेति**॥ अयं घटः, एतदन्यत्वकार्यत्वरहितपृथिव्याद्यन्य इत्याद्यनुमानसिद्धनित्यपृथिव्यादिवृत्तिगुणादौ साध्यव्यापकत्वादित्यर्थः॥

'**अणोरणीयांश्चे**'ति द्व्यणुकस्य, परमाणोश्चेत्यर्थः। अणीयस्त्वमुपचर्यते, न तु मुख्यम्, अतो न परमाणुसिद्धिः। अत्राणोरणीयसि चेति मुख्यार्थग्रहे बाधकमाह—**अणोरिति**॥ अणीयानिवायमात्मेत्युपमानार्थत्वाद् न विरोध इत्याह **नेति**॥

---

1, "च" नास्ति। 2, परममहत्त्व

आत्मनोऽणोरणीयस्त्वबाधेऽप्यणौ, अणीयसि च बाधा[1]भावादिति। तस्मात् कार्य-प्रपञ्चस्य[2] परमाणुसमुद्भवात् जगज्जन्मादिहेतुत्वं ब्रह्मणो लक्षणं न तदिति प्राप्तम् ॥

॥ त्रसरेणुः, महान्, अनेकद्रव्यवांश्च, अस्मदादिचाक्षुषद्रव्यत्वादित्यनुमानस्य द्रव्यत्वनिर्वचनाम्भवादिना परमाणुसाधकद्वारानुमाननिरासः ॥

अत्रोच्यते प्रमाणेन परमाणुर्न सिद्ध्यति।
स्पर्शादिमत्तया तस्य सांशत्वञ्चानुमीयते ॥ ६७ ॥

न खलु पराभिमतपरमाणौ प्रमाणमस्ति। [3]यत्तु प्रमाणम्—विवादाध्यासितः, त्रसरेणुः, महान्, अनेकद्रव्यवांश्च, अस्मदादिचाक्षुषद्रव्यत्वात्; [4]घटादिवत्—इति, तदसत्। तथा हि—द्रव्यत्वं किं गुणवत्त्वम्? असमवेतत्त्वं वा? आद्ये रूपादौ व्यभिचारः; तस्यापि सङ्ख्यागुणवत्त्वात्। [5](सङ्ख्यैकार्थसमवाया)द्गुणादौ सङ्ख्या-प्रतीतिव्यवहाराविति चेत्, न; तुल्यन्यायतया सत्ताया अपि निराकरणप्रसङ्गात्।

---

तथाप्यात्मनो नाणीयस्त्वसिद्धिः; "महतो महीयान्"इति वचनविरोधात्, अत्राह—**आत्मन इति** ॥ मुख्येऽणोरणीयसि सत्येवात्मन्यणोरणीयस्त्वोपचारसम्भवादिति भावः। एवं द्व्यणुकादिपरम्परया परमाणूनां जगदारम्भकत्वे किं हीयतेऽद्वैत-वादस्य? तत्राह—**तस्मादिति** ॥

कारिकार्थं व्याचष्टे—**न खल्विति** ॥ गुणाश्रयो द्रव्यम् इति स्वमतसिद्ध-द्रव्यत्वं हेतुः, उत सत्त्वं द्रव्यमिति पाणिनीयपरिभाषितमिति विकल्पयति—**तथा हीति** ॥ क्रियावत्त्व-समवायिकारणत्वयोर्गुणवत्त्वेन तुल्यगतित्वाद् न पृथगुक्तिः। **अन्यतरासिद्धेरिति** ॥ असमवेतत्वम् = समवायरूपवृत्तिरहितत्वं तवासिद्धम्, त्र्यणुकस्य द्व्यणुकेषु समवेतत्वात्। समवायमनिच्छतामस्माकं रूपादौ व्यभिचारः, द्वितीयप्रतिज्ञायामात्मनि व्यभिचार(रः), साधनविकलश्च दृष्टान्त इत्यर्थः। न च—द्रव्यत्वाधिकरणत्वं द्रव्यत्वमिति—वाच्यम्; 'तस्य भावस्त्वतलौ'इति भावार्थत्वात् प्रत्ययस्य। एवं च द्रव्यभावावगतौ तदधिकरणद्रव्यसिद्धिः, द्रव्यसिद्धौ द्रव्यभावो

---

1. बाधाभावा
2. प्रपञ्चस्य
3. पृ. 493, प. 3
4. घटवत् (क)
5. कुण्लान्डतर्गतं नास्ति।

द्वितीयेऽन्यतरासिद्धेः, प्रथमप्रतिज्ञायामस्मदादिविशेषणवैयर्थ्यञ्च ; मनसः कार्यत्वेनाणुत्वासिद्धेः, द्व्यणुकादेरप्यस्मादनुमानात् प्रागसिद्धेः । द्वितीयप्रतिज्ञायामप्यस्मदादिविशेषणवैयर्थ्यम् ; गगनादेः कार्यतया सपक्षत्वात्, आत्मनश्च "साक्षी चेता केवलो निर्गुणश्च" इति गुणानधिकरणस्याद्रव्यत्वात्, अस्मदादिविशेषणत्यागे तव मनोऽणुत्ववादिनस्तत्र व्यभिचारात् ॥

॥ त्रसरेणवः सावयवा इति परमाणुसाधकानुमानस्याश्रयासिद्ध्या निरासः ।
महद्द्रव्यारम्भकत्वहेतौ विशेषणवैयर्थ्यादिदोषश्च ।
अविद्योपादानत्वेन सिद्धसाधनं च ॥

[1]यदपि त्रसरेणोरवयवाः, सावयवाः, महद्द्रव्यारम्भकत्वात्, तन्तुवदिति, तदपि न हृद्यम् ; प्रमित एव धर्मी हेतोराश्रय इति नियमवादिनस्तवाश्रयासिद्धेः । द्रव्यारम्भकत्वादित्यस्य व्यभिचाराभावात् महदिति हेतुविशेषणवैयर्थ्याच्च । परमाणौ व्यभिचारवारणार्थं तदिति चेत्, तस्यान्यतः सिद्धावस्य वैयर्थ्यात्, अस्मादेव सिद्धावितरेतराश्रयात्, अस्माभिरारम्भवादानभ्युपगमाद् हेत्वसिद्धेश्च । उपादानस्यैवावयवत्वात् । अविद्यायाश्च कार्यप्रपञ्चोपादानतया सिद्धसाधनत्वाच्च ॥

॥ अविद्याया सावयवत्वनिरवयत्वविकल्पेन भानमात्रविवादादिना दूषणम् ।
अनिर्वचनीयत्वात् तत्र दूषणपरिहारश्च ॥

साऽपि सावयवा चेत्, अवयवानवस्था, निरवयवत्वे स एव परमाणुः ।

---

द्रव्यत्वं सिद्ध्यतीति परस्पराश्रयात् । योगिचाक्षुषेण मनसा, द्व्यणुकादिना वाऽनैकान्तिकत्वपरिहारार्थं तदिति, अत्राह—**मनस इति** ॥ गगनादेर्जडस्य सपक्षत्वेऽप्यात्मनोऽकार्यत्वात् तद्व्यावृत्त्यर्थं विशेषणम्, अत आह—**आत्मनश्चेति** ॥

प्रमितस्यैव धर्मित्वमिति नियमोऽभ्युपगम्यते ? न वा ? आद्यं प्रत्याह—**प्रमित एवेति** ॥ द्वितीये न चाभासप्रतिपन्नस्यैतदस्तीत्यादिस्ववचनविरोधः । दूषणान्तरमाह—**द्रव्येति** ॥ **इतरेतराश्रयादिति** ॥ परमाणुसिद्धौ व्यर्थविशेषणासिद्धिपरिहारेणैतदनुमानप्रामाण्यसिद्धिः, अतश्च परमाणुसिद्धिरिति यावत् । त्रसरेण्ववयवानां सावयवत्वानुमानं मानान्तरसिद्धार्थसाधकत्वेन पक्षधर्मत्वरहितमित्याह—**उपादानेति** ॥ अविद्यायास्त्रसरेण्ववयवायववत्वेन सिद्धसाधनत्वमुक्तम् । तत्र

---

1. पृ. 494, प. 4

महत्त्वे न न्यूनपरिमाणकार्यारम्भकत्वम्; सावयवस्य स्वतो न्यूनपरिमाणानेकसंयोगसचिवसजातीयद्रव्यारभ्यत्वनियमस्य [1]पटादौ दृष्टत्वादिति चेत्, तस्याः सांशत्वानंशत्वाभ्यामनिर्वाच्यतया विकल्पानवकाशात्। तन्मात्रोपादानत्वे मेरुसर्षपयोस्तुल्यपरिमाणत्वप्रसङ्ग इति चेत्, न; परमाणूपादानत्वेऽपि प्रसङ्गसाम्यात्, यावन्तो मेरुमारभन्ते, तावन्त एव सर्षपमपि नारभन्त इति चेत्, न; तेषामानन्त्ये नियमासिद्धेः। कार्यदर्शनोन्नेयमदृष्टं नियामकमिति चेत्, तर्हि कर्मसहकारिवैचित्र्याद‌विद्यापि विचित्रकार्यरूपेण विवर्तत इति किमनुपपन्नम्?

---

सावयवा, निरवयवा वेति विकल्प्य प्रथमं प्रत्याह—**साऽपीति**॥ अविद्याऽवयवानां सावयवत्वे तेषामपि सावयवत्वेऽनवस्था, ततोऽपि केषाञ्चिद् निरवयवत्वे, त एव परमाणव इति भावः॥

द्वितीयेऽपि मध्यमपरिमाणा? महत्परिमाणा वा? तत्र प्रथमे संज्ञायां विप्रतिपत्तिरित्याह—**निरवयवत्व इति**॥ मध्यमपरिमाणत्वं सावयवत्वेन व्याप्तमिति परममहत्त्वं परिशिष्यते, तत्र दूषणमाह—**महत्त्व इति**॥ कुत एतत्? अत्राह—**सावयवस्येति**॥ आद्यं सावयवं स्वतो न्यूनपरिमाणमारब्धम्, सावयवत्वात्; घटवदिति परमाण्वनुमानम्, संयोगसचिवारब्धमिति संयोगस्यासमवायिनोऽनुमानम्, सजातीयानेकद्रव्यारब्धमिति विजातीयानां सम्भूयानारम्भकानुमानं निरनुयोज्यानुयोगेन दूषयति—**नेति**॥ अविद्या केवलैवोपादानम्, उत द्रव्यान्तरसहिता। चरमे द्रव्यान्तरस्य सावयवत्वेऽवयववत्त्वानवस्था, निरवयवत्वे परमाणुः कारणम्। प्रथमेऽनिष्टमाह—**तन्मात्रेति**॥ प्रतिबन्द्याऽऽक्षिपति—**नेति**॥ अनन्तपरमाण्वारब्धत्वाविशेषादित्याशयः। न्यूनसङ्ख्यैरणुभिः सर्षपस्यारम्भाद् न मेरुसदृशपरमाणुत्वमिति शङ्कते—**यावन्त इति**॥ प्रमाणाभावेन दूषयति—**नेति**॥ यद्यप्यनन्ताः परमाणवः सर्वत्र सन्ति; तथापि न्यूनसङ्ख्यानां तेषां सर्षपारम्भकत्वे न दृष्टं नियामकम्, तत्र च कार्यवैचित्र्यमेव प्रमाणमित्याह—**कार्येति**॥ तुल्यं प्रकृतेऽपीत्याह—**तर्हीति**॥ [?]कोशवानसाध्यत्वे हेतुमाह—आरब्धेति। [?]

---

1, पदादौ

॥ सावयवस्य स्वतो न्यूनपरिमाणारभ्यत्वनियमस्य व्यभिचारेण निरासः ॥

नापि सावयवस्य स्वतो न्यूनपरिमाणद्रव्यारभ्यत्वनियमः ; दीर्घविस्तृतदुकूलारभ्यामणुह्रस्वरज्जुद्रव्यारम्भोपलम्भात्, दुकूलयोरन्त्यावयवित्वासिद्धेः। नाप्यनेकस्य कार्यद्रव्यारम्भकत्वनियमः ; एकस्यापि पटस्य रज्ज्वारम्भकत्वोपलम्भात् ॥

॥ आश्रयविनाशावयवविभागयोः कार्यद्रव्यविनाशकत्वनियमाभावः ॥

नाप्याश्रयविनाशावयवविभागाभ्यामेव कार्यद्रव्यविनाशनियमः ; तावन्तरेणापि घृतकाठिन्यविलयवत् तदुपपत्तेः, सावयवत्वे महत्त्वस्योपाधित्वाच्च न त्रसरेण्वयवानां सावयवत्वम् ॥

[1]यदपि—बह्वश्च, परिमाणप्रचयानुपपत्तौ महदारम्भकत्वात्, तुल्यपरिमाणप्रचयापेक्षयाप्यधिकसङ्ख्याः, [2]तन्तुवदित्यनुमानम्, तदपि महत्त्वविशेषणवैयर्थ्यपरास्तम्। दृढयुक्तरज्जुद्रव्यारम्भकैकपटे[3] व्यभिचारि ॥

[4]यदपि ते [वि]भज्यन्ते[5], सावयवत्वादित्यनुमानम्, तत् सिद्धसाधनम्, तव चाश्रयासिद्धम्, स्वरूपासिद्धञ्च। विपक्षे न किञ्चिद् बाधकम्; अनवस्थादेः परिहृतत्वात्। किञ्च, परमाणवः, सांशाः, द्रव्यारम्भकत्वात्; स्पर्शवत्त्वात्, मूर्तत्वात्;

---

आरब्धं रज्जुद्रव्यं याभ्यां दुकूलाभ्याम्, तयोरन्त्यावयवित्वमसिद्धम्; अन्त्यावयवित्वे द्रव्यानारम्भकत्वम्, द्रव्यानारम्भकत्वे चान्त्यावयवित्वमिति परस्पराश्रयादित्याशयः ॥

अविद्यामात्रोपादानत्वेऽपि नाशो न स्यात्; आश्रयनाशावयवविभागावन्तरेण द्रव्यनाशादर्शनात्, अत्राह—**नापीति** ॥ काठिन्यं दृढावयवसंयोगः, न द्रव्यमिति चेत्, न; संयोगगतस्य दार्ढ्यस्य द्रव्याद्यन्तर्भावासम्भवात्, सामान्यत्वमपि नियतव्यञ्जकानिरूपणाद् न सम्भवति। विशेषसमवायत्वमनाशङ्कनीयमिति काठिन्यद्रव्यान्तरस्योपेयत्वात्। **स्वरूपासिद्धं चेति** ॥

त्रसरेण्वयवानां सावयवत्वे प्रमाणाभावात् स्पर्शादिमत्तयेत्युत्तरभागं विभजते—**किञ्चेति** ॥

---

1. पृ. 494, प. 4 2. तन्तु· 3. पेटे
4. पृ. 494, प. 5 5. भज्यते (क)

संयोगित्वाद्विभागित्वात, परत्वात्, अपरत्वात्, क्रियावत्त्वात्, भूतत्वाच्च ; घटवत्।

॥ परमाणुसिद्ध्यसिद्धिभ्यां व्याघातशङ्कायाः धर्मिप्रतिपत्तिमात्रेण परिहारः, अविद्ययैव सर्वनिर्वाहात् परमाण्वसिद्धिश्च ॥

बौद्धाधिकारकारस्तु चक्षुषी निमील्य निर्भयीभवितुमिच्छन्नाह---परमाणुसिद्ध्यसिद्धिभ्यामेव मूर्तत्वादयो निरवकाशिताः---इति, तदसत्; प्रतिपन्नमात्रस्य प्रयोगाङ्गतोपपत्तौ धर्मिग्राहकविरोधासिद्धयोरसिद्धेः, इतरथा प्रतिवादिवचनार्थमवगम्यानूद्य (तद्व्य[1]वहार) [2]निषेधव्यवहारस्यैवासिद्धिप्रसङ्गात्। परमाणुः सावयव इति प्रतिज्ञापदयोर्व्याघात इति चेत्, निरवयवः स इति व्याघातः किं न स्यात्? यतः परमाणुः, नास्ति, तस्य परमाणुत्वादिति चेत्, [3]न; परमाण्ववयवस्य तदपेक्षया महत्त्वे व्याघाताभावात्। दुरुपपादोऽयम्। एवं सति कार्येषु गुरुत्वविशेषः; तदारम्भकगुर्ववयवानां सर्वत्र विशेषादिति चेत्, न; आरम्भकपरमाणूनां गुरुत्वस्नेहत्वादिविशेषाणां कार्यातिशयदर्शनेन तदनुरूपातिशयानुमानात्। सांशत्वेन स्वभाव-

---

**परमाणुसिद्ध्यसिद्धिभ्यामिति।** सिद्धौ धर्मिग्रहविरोधादसिद्धावाश्रयासिद्धेरित्यर्थः। धर्मित्वम्, व्याप्तधर्मं प्रत्याश्रयत्वं, तदाभासप्रतिपन्नस्य न सम्भवति, तत्राह-- **इतरथेति**॥ अणुत्वं द्व्यणुक एव, परमाणुत्वं तु तदारम्भकावयवे, तेन तत्सावयवत्वप्रतिज्ञा व्याहतेत्याह---**परमाणुरिति**॥ गूढाभिसन्धिरुत्तरमाह---**निरवयव इति**॥ गृहीतपराभिप्रायः परं पर्यनुयुङ्क्ते---**यत इति**॥ सावयवत्वेऽवयवस्यैव तदपेक्षाणुत्वात् परमाणुत्वव्याघातः, न निरवयवत्व इत्यर्थः। महद्दीर्घदुकूलाभ्यां ह्रस्वाणुरज्जुद्रव्यारम्भाद् आरब्धाद् आरम्भकस्याणुत्वं न नियतम्, इति गूढाभिसन्धिमुद्घाटयति-- **नेति**॥ सावयवस्य स्वतोऽन्यूनपरिमाणसंयोगसचिवानेकारभ्यत्वानभ्युपगमेऽनिष्टान्तरं शङ्कते-**दुरुपपाद इति**॥ कार्यसमवेतगुणवैचित्र्यस्याकस्मिकत्वानुपपत्त्या तत्कारणपरमाणुषु तद्वैचित्र्यं यथा भवतो लिङ्गगम्यम्, एवं भवद् अस्माकमपि न नोपपद्यत इत्याह---**नेति**॥ परमाणवः, न निरवयवाः, द्रव्योपादानत्वादित्यादि प्रकृतहेतुकलापस्य विपक्षबाधकाभावेनाप्रयोजकत्वशङ्कां परिहरति---**सांशत्वेनेति**॥

---

1. कुण्डलान्तर्गतं नास्ति
2. तन्निषेध
3. "न" नास्ति

प्रतिबन्धानां द्रव्यारम्भकत्वादीनां सांशत्वपरित्यागे स्वभावपरित्यागप्रसङ्गो विपक्षे बाधकः। संयोगित्वविभागित्वभूतत्वानि नभसा व्यभिचारन्तीति चेत्, न; तस्यापि—

"एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥"

इति कार्यद्रव्यत्वावगमात्॥

॥ संयोगस्याव्याप्यवृत्तेः परमाणावसम्भवः, व्याप्यवृत्तित्व आकाशवत् सर्वगतत्वापत्तिः॥

किञ्च, संयोगो व्याप्यवृत्तिः? अव्याप्यवृत्तिर्वा? आद्ये परमाण्वाकाशसंयोगस्याकाशव्याप्यवृत्तित्वात् [1]आकाशपरमाण्वोस्तुल्यपरिमाणतायामाकाशस्यासर्वगतत्वम्, परमाणोर्वा सर्वगतत्वं स्यात्। द्वितीये निरंशे भवन् संयोगस्तत्रैवास्ति नास्ति चेति व्याहन्येत॥

॥ परमाणुद्वयसंयोगः संयोगसांशत्वेन दुरुपपादः, अन्यथा द्व्यणुकादिकं परमाणुमात्रमेव स्यात्॥

ननु—संयोगस्यांशवृत्तित्वेंऽशयोरपि संयोगोंऽशवृत्तिरेवेत्यनवस्थायां परमाणुवृत्तिः संयोगोऽप्रत्यक्षः स्यात्, अतः स्वरूपेणैव परमाण्वोः संयोगः, इति न तद्बलात् सांशत्वसिद्धिः—इति, तर्हि व्याप्यवृत्तित्वेऽध्यक्षविरोधाद् आकाशपरमाण्वोस्तुल्यपरिमाणत्वप्रसङ्गाच्च, अव्याप्यवृत्तित्वे परमाणुवृत्तित्वेनाप्रत्यक्षत्वप्रसङ्गात्, प्रकारान्तरानिरूपणाच्च संयोगः कल्पितः स्यात्। अतश्चासमवायिकारणस्य कल्पितत्वात् कार्यमपि कल्पितं स्यात्। अण्वन्तरसंयुक्तस्याणोरसंयुक्तप्रदेशोऽस्ति? न वा? आद्ये सांशत्वम्, द्वितीये द्वयोरप्यण्वोरेकपरमाणुमात्रत्वप्रसक्तौ द्व्यणुकादिकार्यानुत्पत्तिप्रसङ्गः। तदुक्तम्—

---

संयोगस्य सांशत्वेन स्वभावप्रतिबन्धो न सम्भवति; प्रतिकूलतर्कपराहतत्वादिति चोदयति—**नन्विति**॥ संयोगकल्पितत्वप्रतिपादनस्य प्रकृतकार्यकल्पितत्वोपयोगमाह—**अत इति**॥ एवं संयोगित्वहेतोः तर्कविरोधं परास्य, तर्कानुकूलतामाह—**अण्वन्तरेति**॥ कीर्तितेऽर्थे कीर्तिवार्तिकं कीर्तयति—**तदुक्तमिति**॥ षड्भिः परमाणुभिर्द्व्यणुकत्रयारम्भद्वारा त्र्यणुकारम्भे, षण्णां परमाणूनां

---

1. आकाशपरमाण्वोः

"षट्केन युगपद् योगात् परमाणोः षडंशता ।
षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः ॥"

इति ॥

॥ अवयवपरिमाणादधिकपरिमाणत्वं कार्यस्य न नियतम् ।
अतो निरवयवसंयोगासम्भवाद् न परमाणुकारणसम्भवः ।
अज्ञानोपहितब्रह्मकारणतयैव सर्वनिर्वाहात् ॥

"पिण्डः स्यादणुमात्रकः" इत्ययुक्तम्, अवयवपरिमाणादधिकतरस्यावयविपरिमाणस्य स्वकारणमहिम्नैवोपपत्तेः । द्व्यणुकादिप्रक्रमपरम्पराप्रापितपिण्डस्य स्थवीयस्ताऽविरोध इति चेत्, न; अवयवपरिमाणाधिक्यनियमाभावस्याभिहितत्वात्, संयुक्तपरमाणूनामेकाणुमात्रत्वे तादृशमाहात्म्यस्यैकपरमाणाविवासम्भवाच्च । निरवयवस्यात्मनो विचित्रप्रपञ्चाकारतेवानवयवपरमाणोरपि स्वरूपेणैव षड्भिः संयोग इति चेत्, न; आत्मनः स्वरूपेण प्रपञ्चाकारत्वाभावात्, अविद्याविशिष्टस्यैव तदाकारत्वात् । विशिष्टस्य च सांशत्वानंशत्वेन दुर्निरूपत्वात् प्रतिबन्द्यनवकाशात् । एतेन—निरवयवसंयोगः सर्वत्र व्याख्यातः—वेदितव्यः ॥

॥ आद्यं कार्यं समवायिकारणजन्यमित्यनुमानमपि समवायाप्रसिद्ध्या
बाधितम्, अज्ञानेन निर्वाहश्च ॥

[1]यदपि आद्यं कार्यम्, समवायिकारणजन्यम्, कार्यत्वादित्यनुमानम्, तत्र

---

युगपद् मिथो योगे संयोगस्यांशवृत्तित्वे च परमाणोः षडंशत्वम्, षण्णां समानदेशत्वे संयुक्तातिरिक्तदेशाभावे पिण्डः त्र्यणुकाख्यः कार्यविशेष इत्यर्थः ॥

पिण्डाणुमात्रत्वप्रसङ्गपरिहारं **बौद्धाधिकारकारः** शङ्कते—**पिण्ड इति** ॥ तथापि महत्त्वं कुतः? अत्राह—**द्व्यणुकादीति** ॥ कारणमहिम्ना परिमाणप्रचयानुपपत्तौ सङ्ख्याविशेष एव स्यात् । सोऽपि न सम्भवतीत्याह—**संयुक्तेति** ॥ आत्मनो विविधकार्याकारपरिणामस्य रूपभेदेनोपगमे सांशत्वम्, स्वरूपेणोपगमे सत्येककार्याकारपरिणतस्य कार्यान्तरपरिणामो न स्यादित्यत्र यः परिहारः, सोऽस्माकमपीति भावेनाह—**निरवयवस्येति** ॥ निरवयवस्यात्मनः प्रकृतेः संयोगित्वाद् न सांशत्वेन संयोगित्वस्य प्रतिबन्धः, तत्राह—**एतेनेति** ॥

---

1. पृ. 495 प. 3

समवायस्यास्माकमसिद्धत्वादप्रसिद्धविशेषणम् । दृष्टान्तश्च साध्यविकलः । उपादानकारणपूर्वकत्वविवक्षायां सिद्धसाधनम्; अज्ञानस्य जगदुपादानस्य सिद्धत्वात् ॥

॥ अल्पपरिमाणविश्रान्त्यनुपपत्त्या परमाणुसाधनमल्पतरत्वनिर्वचनासम्भवाद् दुष्यति ॥

[1]यच्च घटादिकारणेष्वल्पतरो भेदः क्वचित् विश्रान्त इत्युदितम्, तत्राल्पतरो भेदः किमणुपरिमाणतारतम्यरूपः? किं वा महत्त्वापकर्षः? आहोस्विदणुव्यवहारास्पदमात्रम्? अनुपात्ताणुमहदादिवैचित्र्यं वा? नाद्यः; इतरेतराश्रयात्—सिद्धे परमाणौ द्व्यणुकमणुः, ततोऽप्यणुः परमाणुरित्यणुपरिमाणतारतम्यसिद्धिः; परमाणुद्व्यणुकव्यतिरेकेणाणुत्वाभावात्, अणुपरिमाणतारतम्यसिद्धौ च परमाणुसिद्धिः—इति । न द्वितीयः; त्रसरेणावेव महत्त्वापकर्षविश्रमात् परमाण्वसिद्धेः । नापि तृतीयः, अणुव्यवहारास्पदस्यापि प्रमाणसिद्धमहत्त्वापकर्षत्वात्, अप्रामाणिकाणुतारतम्यस्य व्यवहारानास्पदत्वात् ॥

॥ त्रसरेणुमहत्त्वमनित्यमित्यनुमानात् तत्कारणतया परमाणुसाधनमप्याश्रयासिद्धम् ॥

त्रसरेणुमहत्त्वम्, अनित्यम्; महत्त्वे सति चाक्षुषत्वात्; घटमहत्त्ववदिति चेत्, न, द्व्यणुकपरमाण्वोरसिद्धौ त्र्यणुके महत्त्वस्यैवासिद्धेः, अणुत्वापेक्षत्वाद् महत्त्वस्य। एवं सति द्व्यणुकादिसिद्धौ तदपेक्ष्य त्र्यणुके महत्त्वसिद्धिः, तत्सिद्धौ चास्मादनुमानात् द्व्यणुकादिसिद्धिरिति परस्पराश्रयात् ॥

॥ परमाण्वसिद्ध्या तत्पक्षकनित्यत्वानुमानं न युक्तम् ॥

यत्त्विदं गदितम्—पृथिव्यादिपरमाणवः, नित्याः, सत्त्वे सत्यकारणवत्त्वा-

---

महत्त्वापकर्षः, नाणुव्यवहारास्पदम्, अपि त्वणुतारतम्यमेवेति, अत आह—**अप्रामाणिकेति** ॥

त्र्यणुकमहत्त्वस्यानित्यत्वे तदारम्भकद्रव्यस्य बहुत्वसावयवत्वसिद्धौ तदवयवा निरवयवाः परमाणवः स्युरित्याशयेन **श्रीवल्लभोक्तमनुमानं** शङ्कते—

---

1 पृ. 495, प. 6

दात्मवत्—इति, तत्र विशेष्यासि[द्धो] हेतुः सावयवत्वानुमानस्य दर्शितत्वात्, अवयवानाञ्च कारणत्वात् ॥

॥ द्व्यणुकसाधकानुमानमप्यसिद्धम्; त्र्यणुकादेरविद्याकार्यत्वेनैव निर्वाहाद् न द्व्यणुकसाधकत्वम् ॥

[1]यदपि द्व्यणुकसाधनायोक्तम्—त्रसरेणुः, सावयवः, कार्यद्रव्यत्वात्, महत्कार्यत्वाच्च; घटवत्—इति, तत्र त्रसरेणुरेव परमाणुरिति वादिनं प्रति हेतुद्वयमप्यसिद्धम्। द्वितीयहेतौ प्रागुक्तनयेन द्व्यणुकादिसिद्धेः प्राङ्महत्त्वविशेषणासिद्धिरुक्ता, अस्मान् प्रति च सिद्धसाधनता; त्र्यणुकादेरविद्याविवर्तत्वात् ॥

॥ त्रसरेणुः, महान्, कार्यश्च, मच्चाक्षुषद्रव्यत्वादित्यनुमाने मच्चाक्षुषेति विशेषणवैयर्थ्यादिः, अन्योन्याश्रयश्च ॥

[2]यच्च हेत्वसिद्धिपरिहारायोक्तम्—त्रसरेणुः, महान्, कार्यश्च; मच्चाक्षुषद्रव्यत्वात्, घटवदिति, तदपि चाक्षुषद्रव्यत्वादित्युक्तेर्व्यभिचाराभावाद् हेतोर्व्यर्थविशेषणासिद्धिग्रस्तम्। योगिचाक्षुषगगनादिनिवारणार्थं तदिति चेत्, न; तादृशयोगिप्रत्यक्षस्यासिद्धेः, अन्यतरव्यर्थविशेषणासिद्धितादवस्थ्यात्। प्रथमानुमाने गगनादेः सपक्षत्वात्, योगिचाक्षुषद्व्यणुकादिव्यावृत्त्यर्थं मदिति विशेषणं वाच्यम्। तथा च

---

**त्रसरेण्विति** ॥ आश्रयासिद्ध्या, हेतोर्विशेषणासिध्या च दूषयति—**नेति** ॥ **प्रागुक्तनयेनेति** ॥ अणुत्वापेक्षत्वाद् महत्त्वस्येति युक्त्येत्यर्थः ॥

त्रसरेणुर्महानिति प्रतिज्ञायां दोषान्तरं भाषते—**प्रथमानुमान** इति ॥ किमतः? तत्राह—**तथाचेति** ॥

द्व्यणुकसिद्धौ हेतुविशेषणसिद्ध्याऽनुमानप्रामाण्यसिद्धिः, ततश्च द्व्यणुकसिद्धिरितीतरेतराश्रय इत्याशयः। चाक्षुषत्वानुपपत्तिरेव विपक्षे बाधकं प्रमाणम्, अत्राह—**महत्त्वानित्यत्वेऽपीति** ॥ घटादेः सावयवस्यैव चाक्षुषत्वदर्शनाद् न निरवयवद्रव्यस्य चाक्षुषत्वम्, अत्राह—**सावयवत्वस्येति** ॥ एवं विपक्षबाधकाभावेन सन्दिग्धोपाधित्वमभिधाय निश्चितोपाधिमाह—**सावयवत्व इति** ॥

---

1. पृ. 496 प, 5 2. पृ. 496 प. 6

कथमितरेतराश्रयाद् न बिभेषि ? न चात्र विपक्षे बाधः कश्चित्; महत्त्वनित्यत्वेऽपि चाक्षुषत्वोपपत्तेः । सावयवत्वस्य कार्यद्रव्यचाक्षुषत्वे प्रयोजकत्वाच्चाक्षुषत्वमात्रा[1]प्रयोजकत्वात्, अन्यथा रूपादेरचाक्षुषत्वप्रसङ्गात् । सावयवत्वे महावयवत्वञ्चोपाधिः ॥

॥ महावयवत्वस्य पक्षेतरत्वेनानुपाधित्वशङ्कातन्निरासौ ॥

नास्योपाधित्वम्; पक्षेतरत्वात्, महद्विशेषणव्यावर्त्यविपक्षाभावात्, निरवयवानामवयववत्त्वेनैव व्यावृत्तेरिति चेत्, न; तस्मिन्नुपाधिलक्षणमस्ति, न वा ? आद्ये कथमनुपाधित्वम् ? अनुपाधित्वे वा कथं तल्लक्षणमतिव्यापकं न स्यात् ? न द्वितीयः; साधनाव्यापकः साध्यव्यापक इति भवदभिमतलक्षणाभावात् । पक्षेतरत्त्वव्यतिरिक्तसाधनाव्यापकः स इति चेत्, न; तेजोद्रव्यम्; अनुष्णम्, रूपित्वात्; घटवदित्यत्र पक्षधर्महेतोर्व्याप्त्यर्हान्यत्वम् [त्वाय] अतेजस्त्वस्य पक्षेतरत्वस्योपाधित्वेन तदव्याप्तेः । निरुपाधिसम्बन्धित्वे बाधासिद्धेः । यदाह—"बाधेन[2] वोपाधिरुन्नीयताम्, अन्यथा वेति न कश्चिद्विशेषः—" इति ॥

॥ त्रसरेण्वयवः सावयवः कार्यद्रव्यत्वात्, महदवयवत्वाच्चेत्यनुमानस्याश्रयासिद्धिविशेषणासिद्धिव्याप्यत्वासिद्ध्यादिना दूषणम् ॥

[3]तथा च त्रसरेण्ववयवः सावयवः, कार्यद्रव्यत्वात्, महदवयवत्वाच्च; तन्तुवत्,

---

**तस्मिन्निति** ॥ महावयवत्व इत्यर्थः । दूषणाभावाद् विशिष्टमुपाधिलक्षणं माहावयवत्वे नास्तीति शङ्कते—**पक्षेतरत्वेति** ॥ व्याप्तिपक्षधर्मत्वयो र्हेतुरूपयोरन्यतरवैकल्यमेव हेतुदोषः । तत्र पक्षधर्मत्वस्य प्रत्यक्षादिसिद्धत्वाद् व्यप्तिभङ्गायातेजस्त्वं पक्षेतरत्वमुमाधिरित्याश्रयणात् पक्षेतरत्वव्यतिरिक्तत्वविशेषणं नोपादेयमित्याह—**नेति** ॥ प्रत्यक्षादिबाधादेव हेत्वाभासत्वसिद्धेर्नोपाधिरभिधेयः, तत्राह —**निरुपाधीति** ॥ इदमुदित **मुदयनेने**त्याह—**यदाहेति** ॥ प्रतीतिमात्रगोचरस्याश्रयत्वम्; इतरथाऽऽश्रयासिद्धिं प्रतिज्ञाय तत्साधनायोपन्यस्यमानहेतोरप्याश्रयासिद्धिप्रसङ्गात्, अत्राह—**अन्यथेति** ॥ नायं परिहारः तार्किकस्य

---

1. चाक्षुषत्वं अत्रप्रयोजकत्वात्
2. बोधो नवोपाधि (क)
3. पृ. 496 प. 10

इत्याश्रयासिद्धम्, अन्यथाऽऽ[1]श्रयासिद्धिविलोपापातात्। [2]त्रसरेणुः, कार्यावयवः, महाकार्यत्वात्, पटवदिति—त्रसरेण्ववयवस्य कार्यत्वसाधनमपि विशेषणासिद्धम्; त्रसरेणुकार्यत्वस्यैवासिद्धेः, सावयवत्वे महत्त्वस्योपाधित्वाच्च। न त्रसरेण्ववयवानां सावयवत्वानुमानं सम्भवति। [3]अयं घटः, एतदन्यसावयवान्यः, द्रव्यत्वात्; पटवदिति सिद्धे महत्त्वरहितसावयवे [4]साध्याव्यापकत्वमिति चेत्, न; महत्त्वरहित-सावयवस्त्रसरेण्ववयवः, अन्यो वा? आद्ये त्रसरेण्ववयवः सावयव इत्यनुमानं सिद्धसाधनत्वादाभासं स्यात्। न द्वितीयः; अपसिद्धान्तनिग्रहप्रसङ्गात्। एतद्घटान्यत्वञ्चात्रोपाधिः। [5]यदपि त्रसरेणुः, सावयवावयवं महत्, कार्यत्वात्; घटवदित्यनुमानम्, तदपि विशेष्यासिद्धम्, महत्समवेतत्वञ्च उपाधिः। [6]अयं घटः, एतदन्यमहत्समवेतत्वरहितसाव[7][यवान्यः, कार्यत्वात्;] पटवदिति सिद्धे (महत्[8]समवेतत्वरहितसावयवावयवे) साध्याव्याप्तिरिति चेत्, न; अत्राप्येतद्घटान्यत्वस्यो-पाधित्वात्॥

॥ केवलान्वयिन्यप्युपाधिसमर्थनम्॥

केवलान्वयिनि नोपाधिरस्ति; अन्वयव्यतिरेकवतो धर्मस्योपाधित्वात्, अतोऽन्वयव्यतिरेकिणमुपाधिग्रस्तं [9]मत्वा शि वा दि त्या दितार्किकैर्महाविद्या विवृतेति चेत्,

---

शोभत इत्यर्थः। **त्रसरेणुकार्यत्वस्यैवेति**॥ अनुमानादर्थसिद्धिप्रकल्पनायां त्रसरेणुकार्यत्वे प्रमाणाभावादित्यर्थः। **सिद्धसाधनत्वादिति**॥ अयं घट इति समनन्तरोक्तमहाविद्यासिद्धार्थस्य साधकत्वादित्यर्थः॥

एतदन्यत्वोपाधावेतदन्यत्वोपाधेरभावात् साध्याव्याप्तिरिति चेत्, न; अन्यत्वस्य देहान्तरमन्तरेण स्वरूपेणैवान्यत्वस्वीकारात्, इतरथा विश्वस्यान्यत्वादन्यत्वरहितत्वेनान्यत्वमद्वितीयं स्यात्। 'तदपी'त्यपिना महत्त्वविशेषणासिद्धिं समुच्चिनोति॥

---

1. श्रय (क)
2. पृ. 496 प. 12
3. पृ. 497 प. 1
4. ध्या
5. पृ. 497 प. 3
6. पृ. 497 प. 6
7. कुण्डलान्तर्गतं नास्ति।
8. कुण्डलान्तर्गतं नास्ति।
9. ग्रस्तं मत्वा निवादि

न ; केवलान्वयी हेतुर्नास्ति, तत्साध्ये साध्यान्तरस्योपगमेऽनवस्थानात्, अनुपगमे तेनैव हेतोर्व्यभिचारात्, किन्त्वन्वयव्यतिरेकिण एव हेतुत्वमिति वादिनं प्रति मूकताप्रसङ्गात् ॥

॥ पार्थिवादिपरमाणुसाधकविशेषानुमानामपि महापृथिवीत्वादित्यादौ महत्त्वविशेषणवैयर्थ्यात्, परमाणुनिश्चयस्यैतावताप्यसिद्धिः, पार्थिवमहावयवत्वादिना सोपाधिकत्वाच्च ॥

[1]यदपि पार्थिवत्रसरेणुः, पार्थिवावयवः, महापृथिवीत्वात्; कार्यपृथिवीत्वाच्च, घटवत्—इत्युक्तम्, तत्र प्रथमहेतोर्व्यर्थविशेषणासिद्धत्वम्, परमाणुसिद्धेः प्राग् महत्त्वविशेषणव्यावृत्त्यसिद्धेः । पार्थिवपरमाण्वभावनिश्चयात् पूर्वं विशेषणवैयर्थ्यं निश्चेतुमशक्यमिति चेत्, न ; सार्थकत्वस्यापि तथात्वापातात् । परमाणुसन्देहे तत्र व्यभिचारसन्देहनिवृत्त्यर्थत्वेन सार्थकत्वनिर्णय इति चेत्, न; कदाचिदप्यनिश्चितसत्त्वस्य सन्देहगोचरत्वानुपपत्तेः, निश्चयपुरस्सरत्वात् संशयस्य, प्रमाणान्तरेण तन्निश्चयेऽस्य वैयर्थ्यात्, अस्मादनुमानादेव तन्निश्चये परस्पराश्रयात्, सूत्रकारादिवचनात् परमाण्वाद्यभावनिश्चयेन विशेषणवैयर्थ्यनिश्चयापातात् । द्वितीयहेतोर्विशेषणासिद्धत्वम् ; त्रस[2]रेणुनित्यत्ववादिना तत्कार्यत्वानङ्गीकारात् । पार्थिवमहावयवत्वस्योपाधित्वञ्च । उत्तरानुमानानि कतिपयानि प्रागुक्तदिशा प्रत्यादिष्टानि वेदितव्यानि ॥

---

अन्वयव्यतिरेकिण्यन्वयव्यतिरेकिण उपाधित्वम्, केवलान्वयिनि केवलान्वयिनो धर्मस्य; अन्यथा केवलान्वयिहेतुरपि न स्यादिति दूषयति—**न केवलान्वयीति** ॥

त्रसरेणुसावयवत्वे सन्दिग्धसत्त्वे परमाणौ सन्दिग्धानैकान्तिकत्वपरिहारार्थं महत्त्वविशेषणमित्यपि न युक्तम्; अनिश्चितस्याण्वादेरन्यत्र सन्देहाभावात् परमाणुनिश्चयाभावे तत्सन्देहाभावादित्याह—**न; कदाचिदपीति । त्रसरेणुनित्यत्ववादिनेति** ॥ तदनित्यत्ववादिनं प्रति सिद्धसाधनत्वापातादिति भावः । पार्थिवावयवत्वे पार्थिवमहावयवत्वस्य प्रयोजकत्वाद् व्याप्यत्वासिद्धिरित्याह—**पार्थिवेति** ॥ एवं जलत्रसरेण्वादीयतिदिष्टानुमानकुले दूषणमतिदिशति—**उत्तरानुमानानीति** ॥ महत्त्वविशेषणवैयर्थ्य-कार्यत्वविशेषणासिद्धि-जलादिमहावयवत्वोपाधिभिरित्यर्थः ॥

---

1. पृ. 498 प. 4 2. ण्वनित्यत्व

॥ आकाशपक्षकानुमानद्वयात्मत्वपक्षकानुमानैतद्घटपक्षकानुमानान्यपि पूर्वोक्तान्यप्रसिद्धविशेषणत्वदृष्टान्तसाध्यविरहादिना न प्रसरन्ति ॥

[1]आकाशम्, आकाशमनोव्यतिरिक्तनित्यसंयुक्तम्, घटवदित्यत्राप्याकाशव्यतिरिक्तेति विशेषणवैयर्थ्यम्, आकाशस्याकाशेनासम्प्रयुक्तत्वात्, अकाशसंयोगाधिकरणत्वविवक्षायां द्वितीयानुमानवैयर्थ्यात् ॥

[2]अस्तु तर्हि—आकाशम्, मनोव्यतिरिक्तनित्यसंयुक्तमिति साध्यमिति चेत्, न; अस्माभिर्मनसो नित्यत्वानभ्युपगमाद्, मनोव्यतिरिक्तविशेषणवैयर्थ्यात्। अस्मन्मतेऽनवयवसंयोगानङ्गीकारेणाप्रसिद्धविशेषणत्वात्, दृष्टान्ते साध्यवैकल्याच्च। एतेन—आकाशम्, मनोव्यतिरिक्तनित्यमूर्तसंयोगाधिकरणमित्यनुमानम्—प्रत्युक्तम् ॥

[3]आत्मत्वम्, मनस्त्वव्यतिरिक्त[4]नित्यवृत्तिद्रव्यत्वावान्तरजात्यन्यत्, मेयत्वात्; घटवदिति चेत्, न; मनस्त्वव्यतिरिक्तेति विशेषणवैयर्थ्यात्। अस्माकमात्मत्वजातेरप्यसिद्धेरप्रसिद्धविशेषणत्वात्, दृष्टान्ते च साध्यविरहात् ॥

[5]यदप्यनुमितम्—अयं घटः, एतत्संयुक्तसावयवव्यतिरिक्तपृथिव्युदकतेजोवायुसंयोगी, द्रव्यत्वात्; अकाशवत्—इति, तदप्यप्रसिद्धविशेषणत्वदृष्टान्तसाध्यविर-

---

मनोव्यतिरिक्तनित्यसंयुक्तमित्युक्ते सिद्धसाधनम्, आकाशसंयोगस्य सिद्धत्वात्, अत्राह—**आकाशस्येति** ॥ यद्यप्यकाशो नाकाशेन संयुज्यते, संयोगस्य द्व्याश्रयत्वात्, तथापि गगनसंयोगो गगने वर्तते; संयोगस्य गुणस्य गुणिनि समवेतत्वात्, अत्राह—**आकाशसंयोगेति** ॥ आकाशमनोव्यतिरिक्तनित्यमूर्तसंयोगाधिकरणत्वस्य द्वितीयानुमानसाध्यस्यानेनैव सिद्धत्वात्, मूर्तस्याक्रियाकाशेनासंयोगादित्याशयः। आकाशव्यतिरिक्तित्वविशेषणपरिहारेण प्रयोगे को दोष इति, अत्राह—**अस्तु तर्हीति** ॥ **एतेनेति** ॥ नित्यनिरवयवस्य संयोगानङ्गीकारादप्रसिद्धविशेषणत्वं पक्षस्य, दृष्टान्तस्य साध्यवैकल्यम्। मनोव्यतिरिक्तविशेषणवैयर्थ्यमिति दोषव्रातेनेत्यर्थः। **अप्रसिद्धविशेषणत्वदृष्टान्तसाध्यविरहाभ्यामिति** ॥ एतत्संयुक्तसावयवव्यतिरिक्तः=एतदसंयुक्तः ? निरवयवो वा ? प्रथमे स्पष्टो व्याघातः। द्वितीये निरवयवसंयोगाप्रसिद्धेरप्रसिद्धविशेषणत्वादिकम्। न च वाच्यम्—तत्संयुक्त-

---

1. पृ. 499 प. 3  2. पृ. 499 प. 4  3. पृ. 499 प. 7
4. त्वनिवृत्ति  5. पृ. 500 प. 4

हाभ्यां ग्रस्तं न जीवति; आकाशस्य संयोगित्वानङ्गीकारात्। यदाहुः—"एतेन चात्ममनसोश्च संयोगो व्याख्यातः"—इति ॥

[1]अयं घटः, एतदन्यत्वकार्यत्वरहितपृथिव्यन्यः, मेयत्वात्; सम्मतवदित्यपि न, एतदन्यत्वस्यैवोपाधित्वात्, साध्यस्य साध्यान्तरवत्त्वेऽनवस्थानात्। तद्राहित्ये मेयत्वस्य तेन व्यभिचाराच्च। [2]पृथिवीत्वोदकत्वतेजस्त्ववायुत्वानि, निरवयववृत्तीनि, साक्षाद् द्रव्यत्वावान्तरजातित्वात्; आत्मत्ववदित्यपि न; दृष्टान्ते साधनवैकल्यात्। अपृथिव्यादिवृत्तित्वस्योपाधित्वाच्च ॥

॥ आगमस्य परमाण्डद्व्यणुकयोरप्रामाण्यम् ॥

न च—'अणोरणीयान्' इत्याद्यागमाद् द्व्यणुकपरमाणुसिद्धिः; आगमस्यात्मनोऽनिन्द्रियग्राह्यत्वे तात्पर्यात्, तदन्यस्य चाणीयसोऽप्रतिपादनात् ॥

॥ पृथिवीत्वं नित्यवृत्ति पृथिवीवृत्तिजातित्वात् सत्तावदित्यनुमाननिरासपूर्वकं चेतनोपादानसमर्थनम्। परमाणुवादनिरासोपसंहारश्च ॥

पृथिवीत्वम्, नित्यवृत्ति; पृथिवीवृत्तिजातित्वात्, सत्तावदिति चेत्, न; दृष्टान्ते साध्यवैकल्यात्। सत्तायामेव समस्तं जगद् वर्तते, न सत्ताऽन्यत्र; व्यावृत्तमनुवृत्ते कल्पितमित्यस्मदभ्युपगमात्। तस्मादज्ञातपरमात्मातिरिक्तकार्यप्रपञ्चोपादानानिरूपणात्, विमतिपदम्, चेतनोपादानकम्, कार्यत्वात्; सुखादिवदिति

---

सावयवव्यतिरिक्तसंयोगमात्रं साध्यम्, एतदसंयुक्तसंयोगितया दृष्टान्ते साध्यसिद्धिः, अस्मिंश्च निरवयवपृथिव्यादिसंयोगपर्यवसानम्—इति; एतदसंयुक्ते, पृथिव्यादौ चानुगतरूपस्य मात्रार्थस्यासिद्धिः, सिद्धौ वा तेनैतस्य व्याहतेः संयोगस्येति भावः ॥

आकाशस्यासंयोगित्वमिष्टसिद्धिकारैरुक्तमित्याह—**यदाहुरिति** ॥

**तदन्यस्य चेति** ॥ "यत्परः शब्दः स शब्दार्थः" इति शब्दप्रामाण्यस्य तात्पर्यनियतत्वात्। न चात्मन्यणीयस्त्वोपचाराद् मुख्याणीयसः सिद्धिः; "महतो महीयान्" इत्यत्रापि महीयस्त्वोपचारप्रसङ्गादात्मा न महीयानिति प्रसक्तेः। प्रकृतप्रमेयनिगमनव्याजेन परिच्छेदार्थं निगमयति—**तस्मादिति** ॥ अज्ञातं ब्रह्मैव विवर्तत

---

1. पृ. 501 प. 2     2. पृ. 501 प. 5

चेतनोपादानत्वानुमानात्, 'यतो वा इमानि भूतानि जायन्ते। येन जातानि-जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति' 'सदेव सोम्येदमग्र आसीत्' इत्यादि-श्रुतिशतेभ्यश्च ब्रह्मोपादानत्वावगमाद् अज्ञातं ब्रह्मैव नामरूपजगदाकारेण विवर्तते। तद्विषयाणि प्रत्यक्षादिलौकिकप्रमाणानि, कर्मकाण्डञ्च देहात्मप्रत्ययवद् व्यवहाराविसंवादरूपव्यावहारिकप्रमाणभावं भजन्ते। तत्त्वावेदनप्रमाणं तु वेदान्तवाक्यमिति व्यवस्थितविषयत्वादखण्डब्रह्मात्मनि त्र्यन्तसमन्वयस्य न विरोधगन्धोऽपीति सिद्धम्॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्या भ या न न्द-
पूज्यपादशिष्येण भगवता आ न न्द पू र्ण मु नी न्द्रेण
वि द्या सा ग रापरनामधेयेन विरचितायां
**न्यायचन्द्रिकायां अविरोधाख्यो**
**द्वितीयः परिच्छेदः॥**

---

इति पूर्वमन्वयः कार्यः। शुक्तिरूप्यादिवत् प्रपञ्चस्य विवर्तरूपत्वे तज्ज्ञानवदेव प्रत्यक्षादेरपि प्रामाण्यं न स्यात्, अत्राह—**तद्विषयाणीति**॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य-
गो वि न्दा न न्द पूज्यपादशिष्येण
स्व रू पा न न्द मु नी न्द्रेण विरचितायां
**न्यायचन्द्रिकाव्याख्यायां प्रकाशिकायां**
**अविरोधाख्यो**
**द्वितीयः परिच्छेदः॥**



## ॥ न्यायचन्द्रिकायाम् ॥

### ॥ साधनपरिच्छेदाख्यस्तृतीयः ॥

रूप्यं [1]न्यरूपमिह विभ्रमभातरूपं
विश्वं विचित्रमपि तादृशमेव युक्त्या ।
स्वात्मावभासवपुषं पुरुषं ततोऽपि
भावस्वभावतिमिरं परमाण्वभावम् ॥ ६८ ॥

मानान्तराविरोधेन त्र्यन्तपदसंहतिः ।
प्रमाणमिति तत् सिद्धं मय्येव परमेश्वरे ॥ ६९ ॥

॥ न्यायवैशेषिकभास्करमतमुक्तिसाधनसङ्ग्रहः ॥

अथ कथमखण्डगोचरत्र्यन्तसमन्वयाविरोधे तद्विज्ञानमेव मुक्तिबीजमिति निश्चित्य तत्र मुमुक्षवो निश्शङ्कं प्रवर्तेरन्, यावता वादिनो मुक्तिसाधनेऽनेकधा विप्रतिपद्यन्ते ॥

तथा हि—प्रमाणादीनां षोडशानां पदार्थानां तत्त्वज्ञानं निः[2]श्रेयसकरमिति नैयायिकाः । यदाह सूत्रकारः—“प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धा-

---

## ॥ न्यायचन्द्रिकाविवरणम् ॥

वृत्तवर्तिष्यमाणपरिच्छेदयोः सम्बन्धाभिधित्सया वृत्तमनुद्रवति—**रूप्यमिति** ॥ विश्वमिथ्यात्वप्रतिपादनफलमपि तृतीयपरिच्छेदपातनिकां कुर्वन्नुपगृह्णाति— **मानान्तरेति** ॥ समन्वयाविरोधमूरीकृत्य श्रुत्यन्तश्रवणादौ नियतप्रवृत्तिर्मुमुक्षमाणाना-

---

1. “इ” नास्ति 2. यकर

न्तावयवतर्कनिर्णयवादजल्पवित[3]ण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञाना-न्निःश्रेयसाधिगमः ''—इति ॥

द्रव्यादीनां षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसकरमिति वैशेषिकाः ॥

यदाह प्रशस्तपादः—'' द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्य-तत्त्वज्ञानं निःश्रेयसहेतुः ''—इति ॥

विद्याकर्मसमुच्चयो निःश्रेयसकर इति भास्करीयाः । यदाह गीताभाष्ये भास्करः—'प्रतिपाद्यं तावद् ज्ञानं कर्म चेत्थं कर्तव्यम्—इति, न स्वरूपतः; शास्त्रान्तरसिद्धत्वात्, ताभ्यां समुच्चिताभ्यां निःश्रेयसाधिगमः प्रयोजनम्'—इति ॥

तत् कथं केवलात्मज्ञानाद् [3]निःश्रेयसं निश्चित्य तत्साधनश्रवणादौ मुमुक्षूणां प्रवृत्तिः ? — इति ।

॥ भेददर्शनस्य मुक्तिसाधनत्वाभावात् सर्वपदार्थसाधर्म्यवैधर्म्यज्ञानस्या-सम्भवाच्च न न्यायवैशेषिकमतं युक्तम् ॥

अत्र ब्रूमो—भेदबुद्धेः शशाङ्क[ङ्के]भेदबुद्धिवत् ।
विभ्रमत्वान्न निर्वाणपथत्वमुपपद्यते ॥ ७० ॥

न तावत् कणभक्षाक्षचरणपक्षावष्टम्भभाषितवेदनस्य निर्वाणकारणत्वम्; प्रमाणा-भावात्, भेदबुद्धित्वेन चन्द्रभेदबुद्धिवद् विभ्रमत्वाच्च, '' मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति '' इति भेददर्शनापवादाच्च, द्वैतदर्शनस्य स्वाभाविकत्वेन शास्त्रो-पदेशवैयर्थ्यात्, निःशेषद्वैतप्रपञ्चस्य केनापि पुरुषायुषेणापि द्रष्टुमशक्यत्वात्,

---

मनुपपन्नेत्याक्षेपोत्थानात् प्रसज्यप्रसञ्जकाभावलक्षणः सम्बन्ध इत्यभिसन्धायाह—**अथेति** ॥ कथकानां प्रमाणपथानुपातित्वाद् नाप्रामाणिकेऽर्थे विकत्थनसम्भवः, तत्राह—**तथा हीति** ॥

अवैदिकवेदनस्य निर्वाणपदत्वं सावद्यमित्युपपादयन् पूर्वपक्षमपवदति—**अत्र ब्रूम इति** ॥ षोडशानां पदार्थानां सामान्यतो ज्ञानं निर्वाणसाधनम्? उता-शेषविशेषाकारज्ञानम्? आद्ये श्रुतशास्त्रस्य मुक्तिप्रसङ्गः, द्वितीये न कस्यापि मुक्तिः; अतीतानागतविशेषव्यक्तीनामशक्यदर्शनत्वादित्याह—**निश्शेषेति** ॥ काणाददर्शने-

---

1. ण्ड  2. सः (क)

साधर्म्यवैधर्म्ययोः साधर्म्यवैधर्म्यान्तरस्वीकारेऽनवस्थानात्, अस्वीकारे सर्वपदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वतो दर्शनासम्भवाच्च। तस्मादनाद्यज्ञानसमुत्थविश्वतत्त्वज्ञानमेव निःश्रेयसकरमास्थेयम्—"तमेव विदित्वाऽतिमृत्युमेति। नान्यः पन्था विद्यतेऽयनाय" "निचाय्य तं मृत्युमुखात् प्रमुच्यते" "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुतिशतेभ्यः॥

॥ सौगताभिमतक्षणिकशून्यविज्ञानवादाभिमतमुक्तिसाधननिरासः॥

क्षणिकस्वलक्षणदुःखशून्यभावनानां स्थायित्वानुसन्धानसुखपरमार्थत्वभ्रमनिवृत्तिद्वारेण निर्वाणहेतुत्वमिति चेत्, न; बाधितप्रत्यभिज्ञानसदपरोक्षानुभवविरोधेन क्षणिकत्वशून्यत्वयोरेवासम्भवात्, क्षणिकत्वेऽकृतागमकृतविप्रणाशप्रसङ्गात्, सन्तानोपाधौ तत्परिहारे वा सन्तानस्यार्थक्रियाकारित्वेन परमार्थत्वे 'यत् सत् तत् क्षणिकम्' इति व्याप्तिभङ्गप्रसङ्गात्, सन्तानस्यार्थक्रियाविरहे सन्तानिनां क्षणिकत्वाद् हितसाधनानुमानपूर्वजीवनार्थप्रवृत्तेरप्यनुपपत्तेः। तस्मात् सौगतसमयोऽपि विप्रलम्भमूल एव॥

॥ भास्कराभिमतज्ञानकर्मसमुच्चयवादायोगप्रतिज्ञा॥

नापि धीकर्मसमुच्चयो निःश्रेयसकरः; प्रमाणाभावात्॥

---

ऽधिकं दर्शयति—**साधर्म्येति**॥ एवं तर्हि निर्बीजा मुक्तिः प्रसजन्ती सर्वेषामेव प्रसज्जन्नेवा[जेदेव; आ]पातकस्य [कस्य]चिदविशेषात्, अत्राह—**तस्मादिति**॥

एवमपि न वैदिकवेदनमादरणीयम्; शाब्दवेदनप्रामाण्यस्याप्तोदितपदकदम्बकजन्यत्वनिबन्धनत्वात्, वेदस्य तदनङ्गीकरणात्, वेदनानां स्वतोऽप्रमाणत्वात्, अतस्सर्वज्ञतथागतमतमेव मुक्तिबीजमास्थेयमिति शङ्कते—**क्षणिकेति**॥ प्रत्यभिज्ञाविरोधाद् नाक्षणिकत्वम्; अपरोक्षसदाकारानुभवविरोधाद् न शून्यत्वमिति दूषयति—**नेति**॥ प्रत्यभिज्ञानम्, अप्रमाणम्, प्रत्यभिज्ञानत्वात्; ज्वालाप्रत्यभिज्ञानवदिति चेत्, न; अभिज्ञा, न प्रमाणम्, अभिज्ञात्वात्; रूप्याभिज्ञावदित्यपि प्रसङ्गात्, तस्माद् न क्षणिकत्वम्। तत्त्वे बाधकान्तरमाह—**क्षणिकत्व इति**॥ कर्तृभोक्तृसन्तानिनोरेकसन्ततित्वाद् नायं दोष इति, अत्राह—**सन्तानेति**॥ नियमनरूपार्थक्रियासामर्थ्यं सन्तानस्यास्ति? न वा? नाद्य इत्याह—**सन्तानस्येति**॥ द्वितीयमपवदति—**सान्तानस्यार्थक्रियाविरह इति**॥

॥ ज्ञानकर्मसमुच्चये गीताप्रमाणोपन्यासः ॥

ननु-भगवद्वचनमत्र प्रमाणम्—" नियतं कुरु कर्म त्वम् " " कर्मण्येवाधिकारस्ते " " मामनुस्मर युध्य च " इति तत्र तत्र श्रुतम् । अग्निहोत्रादि स्मार्तं सन्ध्याराधनयुद्धादि — यस्याश्रमिणो यद् यथा विहितं कर्म, तत् तस्य ज्ञानेन समुच्चीयते । स्मार्तमपि श्रौतमेव; श्रुतिमूलत्वात्, पुरुषस्मरणसम्बन्धात् स्मार्तमिति गीयते—इति ॥

॥ गीताया ज्ञानकर्मसमुच्चयेऽतात्पर्यस्य, प्रत्युत तद्विपरीत एव तात्पर्यस्य चोपपादनम् ॥

अहो बतास्य बहुवेणुभारपीडितस्य भास्करस्य पाण्डित्यम्—यदयमविदुषोऽर्जुनस्य कर्माधिकारप्रतिपादकवाक्यकुलं ज्ञानकर्मसमुच्चयप्रतिपादकत्वेनोदाजहार । न च तत्प्रतिपादकपदं श्रूयते । न च भगवतस्तत्र तात्पर्यम्—

" यस्त्वात्मरतिरेव स्याद् आत्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ "—इति ॥

[1][तु]शब्देनाविद्वत्प्रकरणात् विद्वांसं व्युत्थाप्य फलाभावेन कार्याभावाभिधानात्, ज्ञानकर्मनिष्ठयोर्विभागवचनेन भिन्नविषयत्वावगमाच्च,

" एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे [त्विमां शृणु ।

इत्यात्मप्रतिपादकप्रकरणपर्यालोचनया [2]यदाऽऽत्मज्ञानमुत्पद्यते, तत्] साङ्ख्यम्,

---

श्रौतस्य ज्ञानस्य स्मार्तं कर्माङ्गमिति न युज्यते, भिन्नप्रमाणगोचरयोरङ्गाङ्गिभावबा[सा]धकप्रमाणाभावात्, अत्राह—**स्मार्तमपीति** ॥ ज्ञानकर्मणोरधिकारिभेदात्, प्रकरणभेदाच्च तेन [तयो]र्नैकस्मिन् फले साधनभावेनान्वय इत्याह—**अहो बतेति** ॥ किं गीताशास्त्रे समुच्चयः श्रूयते ? किं वा तस्य तत्र तात्पर्यात् समुच्चयः कथ्य[ल्प्य]ते ? न प्रथम इत्याह—**न चेति** ॥ द्वितीयमपवदति—**न च भगवत इति** ॥ एवं प्रकरणभेदं विशदीकृत्याधिकारिभेदं विशदयति—**ज्ञानकर्मेति** ॥

---

1, नाविद्वत्  2, कुण्डलान्तर्गतं नास्ति

तद्विषया बुद्धि(रभिहिता, कर्मयोगविषय[1] बुद्धि)रिदानीं श्रूयतामिति वचनात्। तथा च वक्ष्यति—

"ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥"

इति ॥

॥ ज्ञानकर्मसमुच्चये "ज्यायसी चेत्" इत्यर्जुनप्रश्नानुपपत्तिः ॥

"ज्यायसी चेत्" इत्यादि चा[श्चा]र्जुनस्य प्रश्ना[श्नो]नुपपत्ति[न्नः]। यदि पुनरने[रे]कपुरुषविषयता ज्ञानकर्मणोः, सन्देहाभावात् प्रश्नोऽनुपपन्नः, भिन्नपुरुषविषयत्वे तु ज्ञानकर्मणोः प्रश्न उपपद्यते। "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" इत्यन्तेऽभिधानाच्च ॥

॥ गीताया समुच्चयपर्यवसायितया भास्करविवरणम् ॥

यदत्र भास्करतस्करो रुरोद—द्वयोरपि बुद्ध्योरेकपुरुषसम्बन्धात्—"एषा तेऽभिहिता साङ्ख्ये बुद्धिः" इत्यात्मविषयां बुद्धिमर्जुनस्योक्तामुपसंहृत्य, योगे बुद्धिमिदानीं शृण्विति तमेवानुकृष्य ब्रवीति; अन्यथा कथनायां प्रकृतहानम्, अप्रकृतप्रक्रिया च स्याताम्। "ज्यायसी चेत्" इति च विवेकानवधारणादुपपद्यतेऽर्जुनस्य प्रश्नः। कथमनवधारणम्—

"धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् [2]क्षत्रियस्य न विद्यते।"

---

साङ्ख्यशब्देन कापिलतन्त्रे प्रतिपाद्यं तत्रोक्तमित्याशङ्क्य व्याचष्टे—**आत्मप्रतिपादकेति** ॥ उक्तमर्थं वाक्यशेषेण द्रढयति—**तथा चेति** ॥

भिन्नाधिकारित्वे लिङ्गान्तरमाह—**ज्यायसीति** ॥ सङ्ग्रहवाक्यं विभजते—**यदीति** ॥ एकपुरुषानुष्ठेयत्वेनैकपुरुषाश्रयत्वे फलभेदाभावात् सन्देहाभाव इत्यर्थः ॥

ज्ञानकर्मनिष्ठयोर्भिन्नपुरुषविषयत्वमसिद्धम्; ज्ञानाधिकारिण एव कर्मनिष्ठाप्रतिपादनादिति भास्करचोद्यमनुवदति—**यदत्रेति** ॥ श्रोतुरर्जुनस्यैवैकत्वम्, भिन्नावेवाधिकारिणौ, अत्राह—**अन्यथेति** ॥ गुणप्रधानभावेन, समप्रधानभावेन वाऽनयोरेकाश्रमेऽसमप्रधानावधारणमेव न स्यादित्याह—**कथमिति** ॥ कस्याञ्चिदवस्थायां कस्यचित् प्राधान्यं भगवतोऽभिमतम्, तदनवगमादनवधारणमित्याह—**धर्म्याद्धीति** ॥ 'लोकेऽस्मिन् द्विविधा निष्ठा' इत्यादिप्रतिवचनपर्यालोचनयाऽप्ययमर्थो

---

1. कुण्डलान्तर्गतं नास्ति  2. कुण्डलान्तर्गतं नास्ति

इति क्वचित् कर्मप्राधान्याभिधानात्—" एषा ब्राह्मी स्थितिः पार्थ " इति च ज्ञानप्राधान्योपसंहारात्। तत्र चाविवेकनिराकरणायो)त्तरमुपपद्यते—पुरस्तात् द्वितीयेऽध्याये मया समुच्चय एवोक्तः—प्रकारमात्रं तु भिद्यते, क्वचित् ज्ञानप्राधान्यम्, क्वचित् कर्मप्रधान्यत्—इति। साङ्ख्यानां समदर्शिनां साक्षात्कृतात्मरूपाणां ज्ञानयोगेन निष्ठा स्थितिरुक्ता, कर्म गुणभूतं तेषाम्, कर्मयोगेन योगिनां सामान्यज्ञानवतामसाक्षात्कृतविशेषज्ञानानां तदर्थं यतमानानां कर्मप्राधान्येन स्थितिरिति ॥

कथमयमभिप्रायो गम्यते? "द्विविधा" इति धाप्रत्ययप्रयोगात्। प्रकारप्रवचने हि धाप्रत्ययः स्मर्यते। तत्र यदुक्तम्—तत्र द्वे निष्ठे परस्परनिरपेक्षे भिन्नपुरुषाश्रये भगवतोक्ते—इति, तदशाब्दत्वादपाकृतं भवति। यच्चोक्तम्—" सर्वधर्मान् परित्यज्य " इति, तदप्यादरार्थम्। सर्वधर्मान् परित्यज्यापि परमात्मपरो भवेत्यर्जन एवोच्यते। तस्य चानन्तरमेव कर्म कर्तव्यमुक्तम्—

" मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। "

इति। यागशब्देन कर्मोच्यते, तदर्थं कर्म कुर्वित्यर्थः। तत्र पूर्वाविरोधेनोत्तरं वाक्यं व्याख्येयम्; अन्यथा[1] सर्वमा मूलं विशीर्णं स्यात्—इति ॥

॥ एकमर्जुनं प्रति ज्ञानकर्मोभयविधानं न समुच्चयप्रयोजकम्,
अर्जुनं व्याजीकृत्य तत्तदधिकारिकतत्तत्साधनोपदेशपरत्वाद् गीतायाः ॥

तदिदं विद्वेषमात्रप्रकटनम्। तथा हि—क्रियाकारकफलनिर्मुक्ताद्वितीयब्रह्मबुद्धेः—अहं कर्ता, ममेदं कर्म, 'अस्य कर्मण इदं फलम्, इति' तद्भेदपुरस्सरकर्मयोग-

---

निश्चीयत इत्याह—**तत्र चेति** ॥ कुत्र कस्य प्राधान्यमिति? तद्दर्शयति—**साङ्ख्यानामिति** ॥ प्रकारभेदप्रतिपादकपदाश्रयणाद् नायं भगवतोऽभिप्राय इत्याह—**कथमयमिति** ॥ प्रकारभेदप्रतिपादकशब्दोऽस्तीत्याह—**द्विविधेति** ॥ यद्यपि पूर्वतनवाक्ये मदर्थं कर्म कर्तव्यमित्युक्तम्, तथाप्युपरितनवाक्ये सर्वकर्मत्यागप्रतिपादनाद् न समुच्चयावगतिः, अत्राह—**तत्रेति** ॥ उत्तराविरोधेन पूर्वं व्याख्येयमिति विपरीतं किं न स्यात्? अत्राह—**अन्यथेति** ॥ **आ मूलमिति** ॥ समूलच्छिन्नमित्यर्थः ॥

" योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ "

इति कर्मणामन्तःकरणशुद्ध्यर्थावगमाद् न समुच्चयो युक्त इति दूषयति—**तदिद-**

---

1, अन्था माननिस्तीर्णं स्यात्।

बुद्ध्या सहैकपुरुषसम्बन्धित्वं प्रमाणविकलम्, अर्थविरुद्धञ्च को नाम सलज्जो ब्रूयात्? न चार्जुनस्य श्रोतुरेकतामात्रेण बुद्ध्योरेकपुरुषसम्बन्धः सिद्ध्येत् ॥

"ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परन्तप ॥"

इत्यादौ भगवतोपदिष्टसर्वधर्माणामपि श्रोताऽर्जुन एवेति समुच्चित्यानुष्ठानप्रसङ्गात्। न च प्रकृतहानाप्रकृत[1]प्रक्रियाप्रसङ्गः; कर्माधिकारविरुद्धात्मज्ञानं प्रकृतमुपसंहृत्य (कर्माधि[2]कारिणां) तदनुष्ठाने कौशलस्योपदिश्यमानत्वात्। [3]यदपि प्रश्नस्याविवेकनिमित्तत्वमुक्तम्, तदपि मन्दम्; अविवेककारणाभावात् ॥

॥ प्रश्नस्याविवेकनिमित्तत्वाभावः, देहाभिमानिनः कर्मोपदेशः,
तद्विपरीतस्य ज्ञानोपदेश इति ज्ञानकर्मणोर्भिन्नाधिकारित्वमित्यादि ॥

"धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥"

इति देहात्माभिमानिन एव नित्यं कर्म श्रेयस्करमुक्तम्; क्षत्रियस्येति वचनात्। क्षत्रियायां क्षत्रियाज्जातः ([4]क्षत्रियः। न चात्मनो जन्म; "न जायते" इति विरोधात्, किन्तु जनिमद्देहा[मा]त्मत्वेन मन्यमानः क्षत्रिय उच्यते। "एषा ब्राह्मी स्थितिः पार्थ" इति ब्रह्मात्माभावेन स्थितेरेषेति विवेकेनाभिधानात्)। ज्यायसी चेदिति बुद्धेर्ज्यायस्त्वप्रश्नोऽपि ज्ञानकर्मणोः समुच्चितयोरेकफलत्वे नावकल्पते ॥

---

मिति ॥ **अर्थविरुद्धं चेति** ॥ ज्ञानफलमसाध्यं नित्यम्, कर्मफलं तु साध्यमनित्यमिति फलतो विरुद्धमित्यर्थः। तमेवानुकृष्य ब्रवीति—**अत** एकपुरुषविषयत्वमिति यदुक्तम्, तद् दूषयति—**न चेति** ॥ **कौशलस्योपदिश्यमानत्वादिति** ॥ आत्मज्ञानप्रकरणे प्राशस्त्याभिधानमविवेककारणमभिहितम्, अत्राह—**कर्मेति** ॥ धीप्रकरणं समाप्य कथमिदमात्मज्ञानं स्यात्? इति वीक्षापन्नस्य तत्साधनकर्मानुष्ठाने कौशलस्य तादर्थ्येनाभिधानादित्यर्थः ॥

क्वचित् कस्यचित् प्राशस्त्याभिधानमविवेककारणमभिहितम्, अत्राह—**धर्म्याद्धीति** ॥ ज्ञानकर्मणोरेकफलत्वेन फलतो विशेषाभावेऽपि फलसाधने गुणप्रधान-

---

1. "प्रक्रिया" नास्ति
2. कर्माधिकारिणां च इति कुण्डलान्तर्गतस्थाने विद्यते।
3. पृ. 521, प. 11
4. कुण्डलान्तर्गतं नास्ति।

ज्ञानस्याङ्गित्वादवकल्पत इति चेत्, न; "तत्किं कर्मणि" इत्यनुपपत्तेः, अङ्गस्यावश्यानुष्ठेयस्यानुमेयत्वात् ॥

॥ कर्मणो ज्ञानाङ्गत्वनिरासः, समुच्चयपरतया गीताव्याख्याया अयोगश्च ॥

न च कर्मणो ज्ञानाङ्गत्वे मानमस्ति । ज्ञानम्, सेतिकर्तव्यम्, करणत्वात्; दर्शपूर्णमासवदिति चेत्, न; शुक्तितत्त्वज्ञाने तदज्ञाननिवृत्तिकरणे व्यभिचारात् । ब्रह्मज्ञानम्, न कर्मापेक्षम्, ज्ञानत्वात्; शुक्तितत्त्वज्ञानवदिति ज्ञानस्य फले निरपेक्षत्वानुमानाच्च ॥

[1]यत्तु—पुरस्तात् द्वितीयेऽध्याये मया समुच्चय एवोक्त इति—व्याख्यानम्, तद्गीताक्षरबहिष्ठत्वात्, न्यायबहिष्कृतत्वाच्चोपेक्ष्यम् ॥

॥ "लोकेऽस्मिन्" इति गीतावाक्यस्य ज्ञानकर्मसमुच्चयपरतया व्याख्यानानौचित्यम् ॥

"लोकेऽस्मिन् द्विविधा निष्ठा मया प्रोक्ता पुराऽनघ ॥"

इति हि भागवतं प्रतिवचनम् । तत्र न समुच्चयवाची शब्दोऽस्ति, नापि न्यायः; तथा हि—ज्ञानकर्मणोः समप्राधान्येनाग्नेयादिवत् समुच्चयः? किं वा कर्म प्रधानम्, ज्ञानं गुणभूतम्? आहोस्वित् कर्म गुणभूतम्, ज्ञानं प्रधानम्? न तावदाद्यौ; कर्म गुणभूतं तेषामिति स्ववचनविरोधात् ॥

॥ कर्मणो ज्ञानाङ्गत्वनिराकरणोपयोगितयाऽङ्गविभागः ॥

चरमस्तु विचार्यते—

दृष्टादृष्टोभयार्थत्वात् त्रिधाऽङ्गानि प्रचक्षते ।
दृष्टार्थानि चतुर्धा स्युर्जातिद्रव्यगुणक्रियाः ॥ ७१ ॥

---

भावोऽस्ति, तत्राङ्गापेक्षयाऽङ्गिनः प्रधानत्वात् प्रश्नोपपत्तिं शङ्कते—**ज्ञानस्येति** ॥ वाक्यविरोधेन परिहरति—**नेति** । ज्ञानस्य सेतिकर्तव्यत्वेऽनुमानतस्सिद्धेऽन्येति कर्तव्यानुपपत्तौ कर्मैव तदिति कर्तव्यं स्यादिति मन्वान आह—**ज्ञानमिति** ॥ अक्षरबहिष्ठत्वं संस्फुटयितुं प्रतिवचनस्वरूपं दर्शयति—**लोक इति** ॥ न्यायबहिष्कृतत्वादित्युक्तं प्रपञ्चयति—**तथा हीति** ॥ कर्मणो ज्ञानाङ्गत्वेन विचारितत्वात् किमत्र विचारणीयम्, अत्राह—**दृष्टादृष्टेति** ॥

---

1. पृ. 522, प. 2

अदृष्टार्थं द्विधा कर्म द्वयार्थमपि तन्मतम् ।
दृष्टार्थेष्वपि सर्वत्र नियमाददृष्टमिष्यते ॥ ७२ ॥

त्रिविधमङ्गजातम्—दृष्टार्थम्, अदृष्टार्थम्, दृष्टादृष्टार्थम्—इति ॥

॥ जातिगुणयोर्द्रव्यपरिच्छेदद्वाराऽङ्गत्वोपपादनम् ॥

दृष्टार्थमपि जातिगुणद्रव्यात्मकम् । तत्र जातिगुणौ, "पशुना यजेत" "अरुणया क्रीणाति" इति क्रियासाधनत्वेन विनियुक्तौ तत्साधनद्रव्यपरिच्छेदेनैव दृष्टेनैवोपकारेण तस्य[1] शेषभावमनुभवतः । कथं पुनर्द्रव्यपरिच्छेदात् क्रियासाधनत्वमिति चेत्, विशिष्टस्य द्रव्यस्य क्रियासाधनत्वात्, तस्य च विशेषणाधीनप्रतिपत्तित्वात्, अप्रतिपन्नस्य च साधनभावासम्भवात् प्रतिपत्त्युपायभूतयोर्जातिगुणयोस्तद्द्वारेण क्रियासाधनत्वं श्रुतं यथोक्तेन प्रकारेणोपपादयितुं तद्विशिष्टद्रव्यस्य साधनत्वं कल्प्यते । तदेवं जातिगुणयोर्दृष्टार्थत्वम् । द्रव्यस्य तु साक्षादेव तु क्रियानिर्वृत्ति-दृष्टमेव । क्रियाऽपि चावघातादि दृष्टार्थैव, यां सन्निपत्योपकारकमाचक्षते ॥

---

दृष्टफलम्, अदृष्टफलम्, दृष्टसमवहितादृष्टफलमिति त्रिविधमङ्गमित्यर्थः । कारिकां व्याकुरुते—**त्रिविधमिति** ॥

दृष्टफलस्याङ्गस्य चातुर्विध्यमुदितम्, तदयुक्तम्; जातिगुणयोर्नित्यपरतन्त्रयोः क्रियान्वयानुपपत्तेः, विनियोजकप्रमाणाभावाच्च, अत आह—**तत्रेति** ॥ 'पशुना' 'अरुणये' इति तृतीयाश्रुत्या क्रियासाधनत्वेन बोधितौ दृष्टे सत्यदृष्टकल्पनाऽयोगात् क्रियासाधनद्रव्यव्यावर्तनरूपदृष्टोपकारेणैव क्रियासाधनत्वमनुभवत इत्यर्थः । जातिगुणाभ्यां व्यावृत्तद्रव्यस्यैव क्रियासाधनत्वम्, न पुनस्तयोरपि; गौरवादिति शङ्कते—**कथमिति** ॥ उत्तरम्—**विशिष्टस्येति** ॥ विशिष्टस्य साधनत्वेन विशेषणयोर्विशिष्टप्रतिपत्तावेवोपायत्वम् । विशिष्टं न प्रतिपन्नं सत्तामात्रेण साधनं भविष्यति, तत्राह—**अप्रतिपन्नस्येति** ॥ जात्यादेरुपलक्षणत्वेन बहिर्भूतस्यैव द्रव्यपरिच्छेदकत्वं किं नाश्रीयते ? अत्राह—**श्रुतमिति** ॥ तृतीयाऽवगतं जातिगुणयोः क्रियासाधनत्वमुपपादयितुं विशिष्टस्य क्रियान्वयः कल्प्यत इत्यर्थः । जातिगुणाश्रयस्य द्रव्यस्य क्रियासाधनत्वे नान्यापेक्षा, स्वयमेव समर्थत्वादित्याह—**द्रव्यस्येति** ॥ जातिगुणद्रव्याणां क्रियानिष्पत्तिदृष्टफलत्वेऽपि क्रिया पुनरदृष्टार्थैव,

---

1, तस्याऽशेष 2, साक्षे क्रियानिवृत्तिर्दृष्टमेव ।

॥ क्रियाया अङ्गत्वप्रकारः ॥

अदृष्टार्थत्वं तु क्रियाया एव। सा च द्वेधा—सन्निपत्योपकारकरूपा प्रोक्षणादिः, आरादुपकारकरूपा प्रयाजादिः। सन्निपत्योपकाररूपाणि च दृष्टानि कर्माणि स्वकारकाणां कर्मादीनामुत्पत्तिं प्राप्तिं विकारं वा कुर्वन्ति तत्साध्यप्रधानस्योपकुर्वन्ति; यथा—संयवनं पिण्डस्योत्पत्तिम्, दोहनं पयसः प्राप्तिम्, अवघातो व्रीहीणां विकारम्। अदृष्टार्थं तु सन्निपातिसंस्कारं स्वकारकस्य कुर्वन्[त्] प्रधानोपकारी[रि] भवति। तदेवं[दृष्टार्थम्-] उत्पत्त्यादिसाध्यभेदात् सन्निपातं चतुर्विधम्। तच्च कर्मादीनामन्यतमकारके यथायथमुत्पत्त्यादि करोति—कर्मण्यवघातः, कर्तरि व्रतम्, करणे प्रयाजशेषाभिघारणम्, सम्प्रदाने तु पशुपुरोडाशयागः, अपादानेऽग्नेस्तृणान्यपचिनोतीति, अधिकरणे

---

तत्राह—**क्रियाऽपि चेति** ॥ तण्डुलनिष्पत्त्यादिफलस्यान्वयव्यतिरेकसिद्धत्वादित्यर्थः ॥

अदृष्टार्थमपि जात्यादिरूपेण चतुर्विधमेव स्यादिति, अत्राह—**अदृष्टार्थत्वं त्विति** ॥ क्रियाया एवापूर्वनिष्पत्तेरित्यर्थः। अदृष्टार्थत्वेन स्वरूपोपकारित्वेन च द्वैविध्यमाह—**सा चेति** ॥ सन्निपातिनामपि कर्मणां दृष्टादृष्टार्थत्वेन द्वैविध्यम्, दृष्टार्थानां च त्रैविध्यमस्तीत्याह—**सन्निपत्येति** ॥ **कर्मादीनामिति** ॥ परसमवेतक्रियाफलशालि कर्म, साधकः करणमित्यादीनामित्यर्थः। प्रधानस्य कर्मण इति शेषः। उदाहरति—**यथेति** ॥ "पिष्टं संयोती"ति विहितं संयवनं पिण्डस्योत्पत्तिं करोति, गां दोग्धीति विहितं दोहनं सिद्धस्य पयसः प्राप्तिं करोति। 'व्रीहीनवहन्ती' इति विहितोऽवघातो व्रीहीणां विकारं तण्डुलभावं करोतीत्यर्थः। **अदृष्टार्थमिति** ॥ अदृष्टार्थं प्रोक्षणादि स्वकारकस्य व्रीह्यादेस्संस्कारं कुर्वदित्यर्थः। स्वकारकाणां कर्मादीनामिति पुरो यदुक्तम्, तद् विशदयति—**तच्चेति** ॥ **यथायथमिति** ॥ यस्य यस्मिन् कर्मणि यत् कर्तुं सामर्थ्यम्, तदनतिक्रमेणेत्यर्थः। उदाहरणेन स्पष्टयति—**कर्मणि व्रतम्**=दीक्षापरिग्रहः कर्तरि संस्कारं करोति। **प्रयाजेति** ॥ दर्शपूर्णमासप्रकरणविहितः प्रयाजयागो हविरवद्यावशिष्टेऽभिघारण[णं] करणे दर्शपूर्णमासकर्मणि फलजननानुकूलातिशयमाधत्त इत्यर्थः। **पशुपुरोडाशयाग इति** ॥ पशुयागशेषतया क्रियमाणः पुरोडाशयागो देवतायां सम्प्रदानकारकेऽतिशयं कुरुत इत्यर्थः। अपादानस्य किं संस्कारमित्याशङ्क्याह—**अपादान इति** ॥

दध्यानयनम् । आरादुपकारकं तु न कारकद्वारम्, अपूर्वद्वारं तु प्रधानस्योपकरोति । दृष्टादृष्टार्थञ्च किञ्चित् कर्म, यदाश्रयिशब्दाभिधानीयकं भजते, यथा—पशुपुरोडाशयागः । स हि त्यागांशेनादृष्टम्, उद्देशांशेन दृष्टं देवतास्मरणं करोतीत्युभयार्थम् । "एकं वा चोदनैकत्वात्" इत्येकेनैव विध्युपपत्तेः प्रयोजनद्वयमपि न युक्तमिति चेत्, न; दृष्टत्वेन तावत् प्रयोजनापेक्षायां स्मरणं प्रथमं स्वीक्रियते । स्वीकृते तस्मिन् त्यागांशस्य तत्रोपयोगमपश्यतः पुनरपेक्षा जायते । साऽदृष्टकल्पनयैव निवर्तते । तेनैवञ्जातीयकमुभयार्थम् ॥

॥ कर्मणां ज्ञानाङ्गत्वं पुरुषसंस्कारविधयाऽदृष्टार्थत्वेनेति सन्निपत्योपकारकत्वमेव, न तु फलोपयोगित्वेन ॥

---

नैस्तृण्यं विहितमपादानमाग्निं संस्कुरुत इत्यर्थः । **दध्यानयनमिति** ॥ "तप्ते पयसि दध्यानयति" इति विहितमानयनमधिकरणं श्रितमामिक्षामापादयतीति । सन्निपातिकर्मणः प्रधानोपकारे कर्मकारकारि[दि]द्वारभूतमस्ति । आरादुपकारकस्य किं द्वारम्? अत्राह—**आरादिति** ॥ कारकं द्वारं यस्य, तत् कारकद्वारम्। **द्वयार्थमपि तन्मतम्**' इत्येतद् व्याचष्टे—**दृष्टादृष्टार्थं चेति** ॥ कर्मैव, न जात्यादीत्यर्थः । उभयार्थत्वप्रयोजकमाह—**यदिति** ॥ य आश्रयो यस्य, यदाश्रयी स च शब्दश्च यदाश्रयिशब्दः । अभिधानीयकम्=विषयविशेषाभिधानं लभते । आग्नेय इत्यादिशब्दो हि "साऽस्य देवता" इत्यधिकृत्य विहिततद्धितान्तत्वाद् देवताया द्रव्यसम्बन्धमाश्रित्य द्रव्यविशेषाभिधानं भवतीत्यर्थः । उभयार्थत्वं प्रथयति—**स हीति** ॥ देवतोद्देशेन द्रव्यत्यागो यागस्तत्र त्यागांशेनादृष्टं करोति, स्मरणमन्तरेणोद्देशायोगादुद्दिश्यमानदेवतास्मरणमुद्देशांशेन करोतीत्युभयार्थ इत्यर्थः । एकस्योभयार्थत्वमाक्षिपति—**एकं वेति** ॥ वाशब्दोऽवधारणार्थः । एकमेव प्रयोजनमेकस्य कर्मणः, ततश्चोदनाया विधेरेकत्वादित्यर्थः । स्वतन्त्रफलभेद एव चोदनैक्यविरोधीति परिहरति—**नेति** ॥ पशुपुरोडाशयागस्य प्रयोजनाकाङ्क्षायां दृष्टे सत्यदृष्टस्वीकारायोगाद् दृष्टत्वेन स्मरणं प्रयोजनं स्वीक्रियत इत्यर्थः । तर्ह्यदृष्टं न कल्पनीयम्; दृष्टेनैवोपपत्तेः, अत्राह—**स्वीकृते चेति** ॥ त्यागांशस्योपयोगः फलमपश्यंस्तदाकाङ्क्षायामदृष्टकल्पनयैव सा निवर्तनीयेत्यर्थः । उद्देशांशस्य च पृथगुपयोगापेक्षा दृष्टादृष्टफलकल्पनया निवर्तते यस्मात्, तस्मादुभयार्थमेवंविधं कर्मेत्याह—**तेनेति** ॥

यदर्थमङ्गनिर्णयः कृतः, तदिदानीं दर्शयति—**तत्रेति** ॥ कर्मणो जात्यादिरूपत्वासम्भवादुभयार्थस्यानाशङ्कनीयत्वादारादुपकारकत्वं सन्निपत्योपकारकत्वं चेति

तत्र न तावत् कर्मणः प्रयाजातिवद् ज्ञानं प्रति फलोपकारित्वम्; ज्ञानफलस्याज्ञाननिवृत्तित्वात्। मोक्षः, कर्मानपेक्षज्ञानसाध्यः, अविद्यास्तमयत्वात्; रज्ज्वविद्यास्तमयवत्, संसारः, धीमात्रनिवर्त्यः, अविद्यमयत्वात्; रज्जुसर्पवदिति प्रयोगात्। नापि ब्रह्मभावः कर्मसाध्यः; स्वाभाविकत्वात्, कर्मसाध्यत्वे घटादिवदनित्यत्वापातात्। तस्मात् प्रोक्षणादिवत् स्वरूपोपकारित्वम्, "यस्यैतेऽष्टाचत्वारिंशत् संस्काराः" इति कर्मणां संस्कारत्वावगमात्। तत्राप्येतज्जन्मानुष्ठितानामेवेति न नियमः; 'ब्रह्मचर्यादेव प्रव्रजेत्' इति प्रथमाश्रम एव जन्मान्तरीयकर्मसंस्कृतानां पारिव्राज्यविधानात्, गर्भस्थ एव वामदेवः प्रतिपेदे इति लिङ्गाच्च,

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥"

इति मनुवचनस्याविरक्तविषयत्वात्, अन्यथा "तस्याश्रमविकल्पमेके ब्रुवते, यमिच्छेत्तमावसेदि" इति समासब्रह्मचर्यस्याश्रमविकल्पप्रतिपादकगौतमसूत्रविरोधात्॥

॥ शिखायज्ञोपवीतत्यागलक्षणसंन्यासविधिर्ज्ञानकर्मसमुच्चयविरोधी॥

किञ्च—

"बहिः सूत्रं त्यजेद् विद्वान् योगमुत्तममास्थितः।
शिखा ज्ञानमयी यस्य उपवीतञ्च तन्मयम्॥

---

द्वयमवशिष्यते। तत्र न प्रथमो युक्त इत्यर्थः। प्रमाणमाह—**यस्येत इति**॥ सप्त हविःसंस्थाः, सप्त होमसंस्थाः, सप्त पाकसंस्थाः, षोडश गर्भाधानादिसंस्काराः, पत्नीसंयोगोऽन्त्येष्टिरस्थिसञ्चयनं चेति चत्वारिंशत् संस्काराः। कर्मणां शुद्धिहेतुत्वोपगमेन पारिव्राज्यसिद्धिः, अत आह—**तत्रापीति**॥ एतज्जन्मानुष्ठितकर्मसंस्कृतानामेव मोक्षाश्रमाधिकारस्य मनुनाऽभिधानाद् न जन्मान्तरीयसंस्कारैरलमित्या[ति, अत्रा]ह—**ऋणानीति**॥

कर्मणां फलोपकारित्वेन ज्ञानेन समुच्चयाभावे हेत्वन्तरमाह—**किं चेति**॥ **बहिस्सूत्रं त्यजेदिति**॥

पारिव्राज्याङ्गतया पुरातनसूत्रत्याग उच्यते, अन्यदभिनवमुपादेयमेवेत्याशङ्क्याह—**अथेति**॥ बाह्यसूत्रपरित्यागे स्नानाचमनादिकर्माधिकारो न स्यादिति,

स शिखीत्युच्यते विद्वान् नेतरे केशधारिणः ।"

इति शिखायज्ञोपवीतत्यागपुरस्सरसर्वकर्मसंन्यासस्य ज्ञानसाधनत्वेन विधानाच्च न तयोः साक्षात् समुच्चयः ॥

॥ ज्ञानकर्मणोः क्रमसमुच्चयो हेतुहेतुमद्भावेन, न तु सहसमुच्चयः फलसाधनत्वेन ॥

"अथ परिव्राट् विवर्णवासा मुण्डोऽपरिग्रहः" इति च निरङ्कुशापरिग्रहशब्देन स्वशरीरातिरिक्तत्यागप्रतिपादनात्, तथा — यज्ञोपवीतादिसर्वत्यागमभिधाय "कथमयज्ञोपवीती ब्राह्मणः स्यात्" इति स्वयमेव प्रश्नमुत्थाप्य "एवमेवास्य तद् यज्ञोपवीतं य आत्मा" इत्येवकारेण बाह्ययज्ञोपवीतव्यावर्तनात् । तस्माद् ज्ञानकर्मणोः फलेऽसमुच्चयाद् [हेतु]हेतुमद्भावेन क्रमात् समुच्चय आश्रयितव्यः; "तमेतं वेदानुवचनेन ब्राह्मणा विविदषन्ति" इतीष्यमाणफलभूतज्ञाने वेदानुवचनादीनां विनियोगलिङ्गात् । अयं चार्थः सम्प्रदायविद्भिर्बृहद्वार्तिके प्रतिपादितः—

॥ ज्ञानकर्मसमुच्चयाभावे वृहद्वार्तिकवचनानि ॥

[1]समुच्चयोऽयमस्माभिर्यथाऽभाणि तथा यदि ।
व्याख्यायते न दोषः स्यात् तत्र मानस्य सम्भवात् ॥

---

अत आह — **अथेति** ॥ कर्मज्ञानयोस्तमःप्रकाशवद्विरुद्धरूपयोः, विरुद्धफलयोश्च नाक्रमसमुच्चयः,। न क्रमसमुच्चयोऽपि युक्तः; प्रमाणाभावात्, अत आह—**तस्मादिति** ॥ कर्मणामन्तःकरणशुद्धिद्वारेण ज्ञानजनकत्वात् क्रमसमुच्चय आचार्यवचनपरम्पराप्राप्तत्वात्, नोत्प्रेक्षामात्रसिद्ध इत्याह—**अयं चेति** । **मानस्य सम्भवादिति** ॥ इष्यमाणज्ञानसाधनत्वेन वेदानुवचनादीनां विनियोजकप्रमाणसम्भवादिति भावः ॥

"यथाऽन्नं मधुसंयुक्तं मधु त्वन्नेन संयुतम् ।
एवं तपश्च विद्या च संयुक्तं भेषजं महत् ॥"

---

1. समुच्चयो योऽस्माभिर्यथाऽभाणि

इतोऽन्यथा चेद् व्याख्यानं क्रियते बुद्धिलाघवात् ।
दुर्निवारेह साऽप्नोति नैषा दोषपरम्परा ॥

अपुण्यपुण्यो[1]परमे यं पुनर्भवनिर्भयाः ।
शान्ताः संन्यासिनो [2]यान्ति तस्मै मोक्षात्मने नमः ॥

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥

निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥

नैतादृशं ब्राह्मणस्यास्ति वित्तं
यथैकता समता सत्यता च ।

---

इति धीकर्मणोस्समप्राधान्येन गुणप्रधानभावेन वा मोक्षेसमुच्चयः श्रुत्यर्थः, अत आह —**इतोऽन्यथेति । दोषपरम्परेति** ॥ अकर्त्रभोक्तृब्रह्मवेदनविरुद्धकर्तृत्वभोक्तृत्वादिधीपुरस्सरकर्मानुष्ठानव्याघात इत्यादिरूपेत्यर्थः । मोक्षः, कर्मसाध्यः, वैदिकफलत्वात्; स्वर्गवदित्याशङ्क्य, स्मृतिविरुद्धकालात्ययापदिष्टतामाह —**अपुण्येति** ॥

"अकुर्वन् विहितं कर्म निन्दितानि समाचरन् ।
प्रसजंश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥"

इति स्मृत्यन्तरादनुष्ठेयमेव विहितमित्याशङ्क्य तस्याविद्याविषयत्वमित्यभिसन्धाय मोक्षधर्मवचनमुदाहरति—**त्यजेति** ॥ श्रौतानाम् = अग्निहोत्रादीनां त्यागेऽपि स्मार्तसन्ध्यावन्दनदेवताराधनादीनां कार्यत्वात् तैस्समुच्चयो भविष्यतीत्याशङ्क्य, तेषामपि मोक्षसाधनत्वाभावे स्मृतिमुदाहरति—**निराशिषमिति** ॥ **अक्षीणमिति** ॥ परमात्मभावादप्रच्युतमित्यर्थः । ब्राह्मणम्=ब्रह्म = परमात्मानम्, एति= प्राप्नोतीति, ब्रह्मप्रतियोग्य इत्यर्थः । विधिलिङ्गस्यार्थवादस्य दर्शनेन संन्यासस्य स्मृतौ भर्त्सितत्वाच्च न समुच्चय इत्या[ति, अत्रा]ह—**नैतादृशमिति** ॥ एकदा[ता=] सर्वात्मभावचिन्तनम् । समता=सर्वभूतेषु माध्यस्थ्यम् । सत्यता=अनृतपरित्यागः ।

---

1. "र" नास्ति । 2. यन्ति

शीलं स्थितिर्दण्डनिदानमार्जवम्
ततस्ततश्चोपरमः क्रियाभ्यः ॥

अर्थस्य मूलं निकृतिः क्षमा च
कामस्य रूपं च वयो वपुश्च ।
धर्मस्य यागादि दया दमश्च
मोक्षस्य सर्वोपरमः क्रियाभ्यः ॥

इत्येवं स्मृतिशास्त्राणि सर्वत्यागपुरस्सरम् ।
ज्ञानजन्माभिदधति तथा श्रुतिवचांसि च ॥

ऐकात्म्यदर्शनादुक्ताद् यदन्यद् दर्शनान्तरम् ।
"अन्धं तमः" इति श्रुत्या तदिहापोद्यतेऽखिलम् ॥

तमोमोहादिभेदेन तमोऽनेकत्वलक्षणम् ।
यतोऽतोऽन्धं तम इति विशिनष्टि श्रुतिस्तमः ॥

अन्धमूढं तमो यान्ति येऽविद्यां समुपासते ।
विरक्ता अपि संसाराद् नैकात्म्यं ये विदुर्नराः ॥

सम्भूतिवचसाऽपीयमविद्यैवाभिधीयते ।
अविद्यातो हि सम्भूतिः सर्वस्य जगतो यतः ॥

---

शीलम्=दाक्ष्यम् । स्थितिः=दृढव्रतत्वम् । दण्डनिदानम्=परपीडापरित्यागः । फलविशेषणत्वे साधनत्वे वा बाधेन कर्मत्यगस्य सदृष्टान्तं प्रतिपादनाच्च मुमुक्षुणा स एव कार्य इत्याह—**अर्थस्येति** ॥ **श्रुतिवचांसि चेति** । तस्मादेवमपि "शान्तो दान्तः" इत्यादीनि । "अन्धं तमः प्रविशन्ति" इत्यादिका श्रुतिर्धीकर्मणोरेकैक-निन्दया समुच्चयपरेत्याशङ्क्य तां व्याचष्टे—**ऐकात्म्येति** ॥ श्रौतविशेषणकृत्यं दर्शयति—**तम इति** ॥ इति तमोऽनेकस्वरूपमित्यर्थः । एवं विशेषणकृत्यमभिधाय वाक्यं योजयति—**अन्धमिति** ॥ ऐकात्म्यविद्यानुदय इहाविद्या विवक्षितेत्यर्थः "संभूतिं च विनाशं च यस्तद्वेदोभयं सह" इति समुच्चय उच्यते । जगन्निमित्त कर्मणः सम्भूतिशब्दवाच्यत्वाद्विनाशशब्देन विद्या प्रतिपाद्यते; विशेषेण संसार नाशहेतुत्वात्, अत्राह—**सम्भूतीति** ॥

ततो भूयस्तमो यन्ति येऽविद्यायां रता जनाः ।
अणिमादावविद्योत्थे पराक्चित्ततया रताः ॥

ग्राह्यग्राहकभेदेन याऽविद्यामात्रकारणा ।
विद्येति सेह विज्ञेया न त्वैकात्म्यसमीक्षणम् ॥

कर्मार्थद्योतिका चेह विद्या त्रय्यभिधीयते ।
तस्यामभिरता ये स्युर्वेदान्तार्थानपेक्षिणः ॥

विशन्त्यज्ञास्तु ते सन्तस्ततो भूयः परं तमः ।
मिथ्याज्ञानाधिकत्वेन भूयस्त्वं तमसो भवेत् ॥ "

इति ॥

॥ ज्ञानकर्मनिष्ठयोः प्रकारभेदमात्रनिरासः ॥

[1]यदुक्तम्—प्रकारवचनो हि धाप्रत्ययः स्मर्यते—इति, [2]तद् ज्ञानकर्मणोः फलसाधनत्वासाम्ये सति विद्वदविद्वद्विषयत्वप्रकारभेदेन सुतरामुपपद्यते ॥

---

" ततो भूय इव ते य उ विद्यायां रताः " इत्येतद् व्याचष्टे— **तत इति** ॥ अणिमाद्यैश्वर्यप्रापकं देवतादर्शनं विद्या विवक्षितेत्यर्थः । विद्यापदस्याद्वैतदर्शने मुख्यत्वात् तदेवोपादेयम्; प्रथमसम्प्रत्ययात्, अत्राह—**ग्राह्येति** ॥ या दृष्टिरिति शेषः । ग्राह्यग्राहकभावविनिर्मुक्ते वस्तुनि तद्भेददृष्टिः कुतः स्यात्? अत्राह— **अविद्यामात्रेति** ॥ ऐकात्म्यसाक्षात्कारवतः तमःप्रवेशासम्भवादित्याशयः । विद्यापदेन देवतादर्शनमुदीर्यत इत्युदितम्, इदानीं कर्मकाण्ड[म]परविद्यापदार्थ इत्याह—**कर्मार्थेति** ॥ तमोऽत्र मूलकारणमज्ञानम्, कथं तस्य भूयस्त्वम्? अत आह— **मिथ्याज्ञानेति** ॥

---

1. पृ. 522, प. 7
2. तज्ज्ञानकर्मणोः

॥ निष्ठाद्वयस्य भिन्नाश्रयत्वनिरासः ॥

[1]यदप्युक्तम्—द्वयोर्निष्ठयोः परस्परनिरपेक्षयोर्भिन्नपुरुषाश्रयत्वमशाब्दम्—इति, तदपि स्वाज्ञानप्रकटनमात्रम् । यतः—

"लोकेऽस्मिन् द्विविधा निष्ठा मया प्रोक्ता पुराऽनघ ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥"

इति स्पष्टं भिन्नपुरुषाश्रयत्वं श्रूयते ॥

॥ 'सर्वधर्मान् इति' श्लोकस्य परमात्मैकज्ञेयत्वतात्पर्यम् ॥

[2]यच्चावाचि—"सर्वधर्मान् परित्यज्य" इत्यादरार्थम्—इति, तदनुमोदामहे, आदरस्य तात्पर्यलिङ्गत्वात् । परमात्मपरत्वे भगवतस्तात्पर्यं गम्यते । [[3]सर्वविक्रिया] [4]रहितपरमात्मपरत्वं कर्मकरणेन विरुद्धमिति 'मन्मना भव' इत्यादिवाक्यं बाह्यकर्मपरित्यागपरं व्याख्येयम् ॥

तदेवमविक्रिया[5]शनायाद्यतीतापेतब्रह्मक्षत्रादिभेदब्रह्मात्मवेदनस्य कर्माधिकारविरोधित्वात्, कर्मणां मोक्षसाधनत्वप्रत्यायकवाक्यानां विविदिषावाक्यानुरोधेन ज्ञानोत्पत्तौ विनियोगपरत्वात् केवलादौपनिषदात्मविज्ञानात् [6]कैवल्यभाव इत्यशेषमतिमङ्गलम् ॥

---

"कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।"

इत्यादि स्मृतिवाक्यम्, "अपाम सोमममृता अभूम" "हिरण्यदा अमृतत्वं भजन्ते" इत्यादिश्रुतिवाक्यं च कर्मणो मुक्तिहेतुत्वं प्रतिपादयतीति शङ्कां निराकुर्वन् परिच्छेदार्थं निगमयति—**तदेवमिति** ॥

---

1. पृ. 522, प. 9
2. पृ. 522, प. 9
3. "वि" नास्ति
4. कुण्डलान्तर्गतं नास्ति
5. शनायाध
6. कैवल्यलामः इति

इति श्रीमत्परमहंसपरिव्राजकाचार्या भ या न न्द-
पूज्यपादशिष्येण भगवता आ न न्द पू र्ण मु नी न्द्रेण
वि द्या सा ग रापरनामधेयेन विरचितायां
**न्यायचन्द्रिकायां**
**॥ साधनपरिच्छेदाख्यस्तृतीयः ॥**

---

इति श्रीमत्परमहंसपरिव्राजकाचार्य-
गो वि न्दा न न्द पूज्यपादशिष्येण
स्व रू पा न न्द मु नी न्द्रेण विरचितायां
**न्यायचन्द्रिकाव्याख्यायां प्रकाशिकायां**
**साधनाख्यः**
**॥ तृतीयः परिच्छेदः ॥**

—:*:—



## ॥ न्यायचन्द्रिकायाम् ॥

### ॥ फलाख्यस्तुरीयः परिच्छेदः ॥

॥ चार्वाकार्हतसौगतन्यायवैशेषिकप्राभाकरकापिलकेवलाद्वैतसम्मतमोक्ष-स्वरूपम् ॥

त्र्यन्तवाक्यसन्दोहसमुत्पन्नापरोक्षधीः ।
समाप्नोति परानन्दं तस्मै मोक्षात्मने नमः ॥ ७७ ॥

अथ भोः क एष मोक्षो नाम ? शरीरमोक्ष एव मोक्ष इति बार्हस्पत्याः । अलोकाकाशे सततोर्ध्वगमनमित्यार्हताः । संसारि[ज्ञान]सन्तानोच्छेदश्चरमविशुद्धज्ञानोदयो वा स इति सौगताः । शून्यतावाप्तिरेव स इति सौगतविशेषाः । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनानामात्मविशेषगुणानामत्यन्तोच्छेद इति कणभक्षाक्षचरणपक्षावलम्बिनः । अत्यन्तदेहेन्द्रियोच्छेदः स इति प्राभाकराः । प्रकृतिपुरुषविवेकख्यात्या पुंसस्तदविवेकनिबन्धनशब्दादिविषयभोगराहित्येनावस्थानमिति कापिलाः । अविद्यास्तमयः स इति प्रमाणपथगामिनः ॥

॥ चार्वाकाभिमतशरीरात्मवादस्य शरीरमोक्षमोक्षवादस्य च निरासः ॥

न तावत् प्रथमः कल्पः कल्पते युक्तिगामिनाम्; देहस्यानात्मभूतत्वाद् भौतिकस्य घटादिवत् । देह एवात्मेति तदतिरिक्तस्य बन्धमोक्षगामिनोऽभावाद्

---

## ॥ न्यायचन्द्रिकाविवरणम् ॥

"आदौ, अन्ते, मध्ये च कृतमङ्गलानि शास्त्राणि प्रथन्ते" इति न्यायाद् मध्ये मङ्गलकरणच्छलेन तुरीयपरिच्छेदपातनिकां करोति—**त्र्यन्तेति** ॥ मोक्षात्मने नम इत्युक्तमोक्षस्य सामान्यतोऽवगतस्य वादिविप्रतिपत्त्या सन्दिग्धस्य तत्त्वं निर्णेतुकामः पृच्छति—**अथेति** ॥

स्थूलमतं प्रथममुपन्यस्य तदुपन्यासक्रमेण निरासमुपक्रमते—**न तावदिति** ॥

देहभस्मीभावो मोक्षः, नान्योऽस्तीति बार्हस्पत्यानामभिसन्धिः। स नोपपद्यते; देहः, स्वव्यतिरिक्तदृश्यः, दृश्यत्वात्; घटवत्। देहः, नात्मा, भौतिकत्वात्; रूपादिमत्त्वाच्च; घटवदित्यनुमानात्। प्रथमानुमानं सिद्धसाधनम्। देहान्तरदृश्यत्वादिति चेत्, न; अहम्प्रत्ययवेद्यस्य पक्षीकरणात्। न चाहं मनुष्य इत्यध्यक्षबाधः; मदीयमिदं कलेबरमिति भेदाध्यक्षेण बाधितस्याहमध्यक्षस्य सन्दिग्धप्रमाणभावस्य व्याप्तिबलप्रवृत्तानुमानेन बाध्यतावसायात्॥

॥ प्रत्यक्षातिरिक्तशब्दानुमानप्रामाण्यसमर्थनम्। शरीरेन्द्रियमनआत्मत्वनिरासश्च॥

शब्दानुमयोः प्रामाण्यमवश्योपेयम्; अन्यथा तन्निरासप्रतिज्ञाहेतूपन्यासायोगात्, इन्द्रियादेरपि दृश्यत्वात् सिद्धमनात्मत्वम्। यदाहुः—

"दृश्यत्वाद् घटवद् देहो देहवच्चेन्द्रियाण्यपि।
मनश्चेन्द्रियवद् ज्ञेयं मनोवद् निश्चयादिमत्॥"

इति। तस्माद् देहादेरिन्द्रियसङ्घातातिरेकिणो दुःखमयबन्धसम्बन्धाद् बन्धध्वंसरूपा बुद्धि[मुक्ति]रस्तीत्यकामेनाप्यूरीकरणीयम्॥

॥ आर्हतसम्मतमोक्षवादस्यात्मानित्यत्वापत्त्या निरासः॥

नापि सततोर्ध्वगमनं मोक्षः; विकल्पासहत्वात्। तथा हि—किमात्मनः स्वरूपेण गमनम्? किं वा देहवतः? नाद्यः; अपरिच्छिन्नस्याकाशवत् गमनायोगात्।

---

अहम्प्रत्ययवेद्यत्वेन रूपेण परदृश्यत्वानुमानं क्रियते। अहम्प्रत्ययवेद्यरूपं धर्मीकृत्य तस्य स्वव्यतिरिक्तदृश्यत्वानुमानादिति परिहरति —**नाहम्प्रत्ययेति**॥

प्रत्यक्षातिरिक्तिप्रमाणाभावात् कथमात्मत्वानुमानम्? अत्राह—**शब्देति**॥ स्थूलदेहस्यानात्मत्वेऽपि सूक्ष्मदेहस्यात्मत्वात् तन्नाशो मुक्तिः, अत्राह—**इन्द्रियादेरिति**॥ उक्तेऽर्थे सुरेश्वराचार्यवचनमाह —**यदाहुरिति**॥

आत्मा किमपरिच्छिन्नः? परिच्छिन्नो वा? इति विकल्प्याद्यमपवदति—**नाद्य इति**॥ द्वितीयमुत्थापयति—**देहेति**॥ देहवतो गमनमित्यत्रापि देहस्यानित्यत्वम्?

देहपरिमाणः स इति चेत्, न; अनात्मत्वानित्यत्वकार्यत्वप्रसङ्गात्, घटादिवत्। न द्वितीयः; देहस्य तस्यानित्यत्वे देहान्तरोपादाने च मुक्तावपि जननमरणप्रसङ्गाच, न चासौ देहः, अक्षयः, देहत्वात्; अस्मदादिदेहवदिति [1]प्रयोगविरोधात्। ऊर्ध्वगमनं च, न पुमर्थः, आरोहणत्वात्; पर्वतारोहणवदित्यपुमर्थत्वानुमानाच्च। तस्मादयमपि पक्षो न प्रेक्षावतां कक्षीकारार्हः॥

॥ संसारिज्ञानसन्तानोच्छेदो मोक्ष इति सौगतसमयनिरासः॥

नापि संसारिज्ञानसन्तानोच्छेदो मोक्षः फलम्; फलिनोऽनिरूपणात्, सन्तानिनां निवृत्तानां फलित्वानुपपत्तेः। सन्तानस्य च न फलित्वमत एव। किञ्च, यदि संसारिज्ञानसन्ततिरुच्छिद्यते, तर्हि यतः परं न विज्ञानं जायते, तस्यान्त्यक्षणस्यार्थक्रियाकारित्वलक्षणविरहादसत्त्वप्रसक्तौ तत्पूर्वस्यापि तत्तुल्यन्यायतया स्यादसत्त्वमित्यामूलमसत्त्वापत्तिरनिवार्या स्यात्॥

॥ चरमविशुद्धविज्ञानोदयो मोक्ष इति वादनिरासः॥

नापि चरमविशुद्धज्ञानोदयो मोक्षः; प्राक्तनसन्तानोच्छित्तेरनुपपत्तौ चरमत्वानुपपत्तेः। नापि विशुद्धज्ञानोदयहेतुरस्ति; निर्हेतुतदुदये नियामकाभावात् सदैव तत्प्रसङ्गः, न वा कदाचिदपि। स्यात् पूर्वविज्ञानमेव तद्धेतुरिति चेत्, न; हेतु-

---

नित्यत्वं वा? नाग्रिमो युक्त इत्याह—**न द्वितीय इति**। द्वितीयमपवदति—**न चेति**॥ **आरोहणत्वादिति**॥ उच्चतरनिरुपाधिकारोहणत्वादित्यर्थः॥

सन्तानिनां सन्तानोच्छेदः फलम्? सन्तानस्य वा? नाद्य इत्याह—**सन्तानिनामिति**॥ **अत एवेति**॥ वृत्तत्वादित्यर्थः। सन्तानोच्छेदमूरीकृत्य तदफलत्वमुदितम्, इदानीं स एव न सम्भवतीत्याह—**किञ्चेति**॥ **चरमत्वानुपपत्तेरिति**॥ चरमत्वं ह्यन्त्यत्वम्। तच्च यतः परं सजातीयकार्यं न सम्भवति, तस्यैव स्यादित्यर्थः। एवं चरमत्वानुपपत्तिमुक्त्वा तदुत्पत्तेरनुपपत्तिमाह—**नापीति**॥ समनन्तरप्रत्ययस्यैव चरमप्रत्ययहेतुत्वमिति शङ्कते—**पूर्वेति**॥ विरुद्धज्ञानस्य सन्तानान्तरत्वम्? उत पूर्वज्ञानेनैकसन्ततित्वम्? नाद्य इत्याह—**नेति**॥ द्वितीयं दूषयति—

---

1. प्रयोगात् विरोधात्

फलनैरन्तर्यस्यैव सन्तानतया सन्तानान्तरत्वानुपपत्तेः, एकसन्ततित्वे विशुद्धत्वानुपपत्तेः, अनेकसन्ततित्वे यज्ञदत्तदेवदत्तसन्तानयोरिव परस्परहेतुभावासम्भवात्। तस्मात् प्रमाणविकलत्वादयमपि पक्षो न समञ्जसपक्षनिक्षिप्त इत्युपेक्षामहे ॥

॥ शून्यतरः प्राप्तिमोक्षतानिरासः ॥

(नापि[1] शून्यताप्राप्तिर्मुक्तिः; आत्मोच्छेदस्यापुमर्थत्वात्। शून्यतापि मुक्तौ प्रकाशते ? न वा ? आद्ये न शून्यता; प्रकाशस्य) सत्त्वात्। द्वितीये शून्यतेति को ब्रूयात्? अशून्यतेति किं न स्यात्? साधकाभावाविशेषात् ॥

॥ न्यायवैशेषिकयोर्मोक्षस्वरूपस्यात्यान्तिकदुःखसन्तत्युच्छेदाख्यस्य आत्यन्तिकत्वदुर्वचत्वादिना निरासः ॥

नापि नात्मविशेषगुणानामत्यन्तोच्छेदो मोक्षः; प्रमाणाभावात्। दुःखसन्ततिः, अत्यन्तमुच्छिद्यते, सन्ततित्वात्; प्रदीपसन्ततिवदिति चेत्, न; दुःखसन्ततिरिति दुःखतो[?]धर्मः? दुःखमेव वा? आद्ये स किमविनाशी? विनाशी वा? प्रथमे बाधः। द्वितीयेऽर्थान्तरम्; [[2]दुःखधर्मात्यन्तोच्छेदसिद्धावपि मोक्षासिद्धेः। दुःखमेवेति पक्ष इदानीन्तनदुःखांशे सिद्धसाधनम्, सन्ततिपदवैयर्थ्यं च। सर्वं] दुःखसन्ततिरिति न वैयर्थ्यम्, नाप्यंशतः सिद्धसाधनमिति चेत्, न; सर्वदुःखपक्षीकारेऽपि सिद्धसाधनात, क्रमेण सकलदुःखविनाशाङ्गीकारात्। अत्यन्तमिति विशेषणमेतन्निवृत्त्यर्थमिति चेत्, न; अत्यन्तमिति युगपदिति यदि, तदा युगपदुच्छिद्यत इति किं युगपदुत्पन्नध्वंसप्रतियोगीति विवक्षितम्? युगपदुपस्थितध्वंसप्रति-

---

**एकेति** ॥ सिंहावलोकितन्यायेन प्रथमकल्प एव दोषान्तरं भाषते—**अनेकेति** ॥

किरणावलीकारोक्तमनुमानं शङ्कते—**दुःखसन्ततिरिति** ॥ अर्थान्तरत्वं प्रकटयति—**दुःखधर्मेति** ॥ अर्थान्तरत्वं प्रकटयति—**दुःखमेवेति** ॥ कल्पान्तरमालम्बते—**सर्वमिति**। क्रमभाविदुःखविनाशेन सिद्धसाधनता मा भूदित्यत्यन्तमित्युक्तमिति शङ्कते—**अत्यन्तमिति** ॥ किमिदमात्यन्तिकत्वम्—युगपदुच्छिद्यमानत्वम्? स्वसमानाधिकरणदुःखप्रागभावकालानवस्थायिध्वंसप्रतियोगित्वं वा; इति विकल्प्याद्यमनुवदति—**नेति**। आद्यं द्विधा विकल्पयति—**तदेति** ॥ **बाधादिति** ॥ क्रमभाविनां दुःखानां ध्वंसयौगपद्यस्य प्रमाणविरुद्धत्वादित्यर्थः। द्वितीयेऽपि केनचिका-

---

1. कुण्डलान्तर्गतं नास्ति। 2. कुण्डलितो भागो नास्ति।

योगीति वा ? नाद्यः ; बाधात् । द्वितीयेऽपि येन केनचिद् युगपद् [उप]स्थितध्वंस-[1]प्रतियोगित्वे सिद्धसाधनम् । युगपदुपस्थितसर्वदुःखप्रध्वंसप्रतियोगित्वसाधने चाप्रसिद्ध-विशेषणत्वम् ; मोक्षानङ्गीकारिभिः सर्वदुःखध्वंसयुगपदवस्था[2]नानङ्गीकारात । स्वसमानाधिकरणदुःखप्रागभावकालानवस्थायिध्वंसप्रतियोगित्वमत्यन्तोच्छिद्यमानत्वमित्यपि न; इदानीन्तनदुःखेषु बाधात्, तेषां भविष्यद्दुःखप्रागभावसमानकालीनोच्छेदप्रसङ्गित्वात्, अन्त्यदुःखपक्षीकारे वाऽऽश्रयासिद्धेः, यद्दुःखानन्तरं मुक्तिः, तस्यान्त्यदुःखत्वात ॥

॥ सन्ततित्वदुर्वचत्वम् ॥

सन्ततित्वं च[3] यदि दुःखत्वम्, [सर्व]दुःखत्वं वा, तदा साधनविकलो दीपादिदृष्टान्तः । अथ, कार्यत्वम् ? सर्वकार्यत्वं वा ? तदा साध्यविकलत्वादय इति ॥

---

कारेण युगपदुपस्थितध्वंसप्रतियोगित्वं साध्यम् ? उत युगपदुपस्थितसर्वदुःखध्वंसप्रतियोगित्वम् ? इति विकल्प्य, प्रथमं व्याचष्टे—**द्वितीयेऽपीति** ॥ युगपदुपस्थिता ये घटपटादीनां ध्वंसाः, देवदत्तयज्ञदत्तादिदुःखध्वंसा वा न भवन्ति चैत्रदुःखानि, इति तेषां चैत्रदुःखात्मत्वनिषेधे चैत्रदुःखादीनां युगपदुपस्थितध्वंसप्रतियोगित्वं सिद्धमित्यर्थः । द्वितीयं दूषयति—**युगपदिति** ॥ प्राथमिकविकल्पितद्वितीयविकल्पं दूषयति—**स्वसमानेति** ॥ स्वेन समानाधिकरणो दुःखप्रागभावः, तस्य कालः, तत्रानवस्थायी ध्वंसः, तत्प्रतियोगित्वम् । यतः परं दुःखं न जायते, तत्प्रतियोगित्वमित्यर्थः । इदानीन्तनदुःखानां पक्षत्वम् ? अन्त्यदुःखस्य वा ? नाद्यः ; बाधितविषयत्वादित्याह— **इदानीन्तनेति** ॥ द्वितीयं दूषयति —**अन्त्येति** ॥ मोक्षानङ्गीकारिभिरन्त्यदुःखानङ्गीकारादित्यर्थः । सन्ततित्वादिति हेतुरपि दुःखत्वं वा? सर्वदुःखत्वं वा ? [कार्यत्वम् ,] सर्वकार्यत्वं चेति विकल्प्य पराकरोति— **सन्ततित्वं चेति** ॥

**साध्यविकलत्वादय इति** ॥ स्वसमानाधिकरणप्रागभावकालानवस्थायिध्वंसप्रतियोगित्वरूपसाध्यस्य दृष्टान्तेऽभावात् साध्यवैकल्यम्, अप्रसिद्धविशेषणत्वम्, इदानीन्तनदुःखभागे बाधादयश्चेत्यर्थः । एवं स्थूलदृष्ट्यनुरोधेन दूषितम् ॥

---

1 कुण्डलान्तर्गतं नास्ति ।
2 अवस्थानङ्गी (क)
3. सन्ततित्वे यदि

॥ दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानां कार्यकारणभावापन्नानामत्यन्तोच्छेद-मुक्तिरूपत्वस्य मिथ्याज्ञानदुर्वचत्वेन निरासः ॥

सम्प्रदायविदस्तु—दुःखसन्ततिः=दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानि, कार्यकारणभावापन्नानि, अत्यन्तोच्छेदश्च मूलसहितानामुच्छेदः। मूलञ्च प्रकृतमात्मतत्त्वाज्ञानम्। सन्ततित्वं च कार्यकारणभावापन्नभावकार्यत्वम्। प्रदीपसन्ततिश्च प्रदीपतदवयवतदवयवादिद्व्यणुकपर्यन्त इति—वर्णयन्ति, तदपि न युक्तम्; मूलमिति कारणं यदि, तदा सिद्धसाधनम्; मिथ्याज्ञानकारणस्येन्द्रियसन्निकर्षादेरुच्छेदाङ्गीकारात्। अत एव परमकारणं मूलमित्यपि रिक्तम्। अथ सर्वकारणम्, तदा बाधापसिद्धान्तौ; ईश्वरादेर्नित्यत्वेनाङ्गीकारात्। अथात्मतत्त्वा[1]ज्ञानम्, तदा सिद्धसाधनम्; इदानीन्तनात्मसाक्षात्कारप्रागभावोच्छेदाङ्गीकारात्। अथ मोक्षजनकसाक्षात्कारप्रागभावः, तदाऽप्रसिद्धविशेषणत्वम्; मिथ्याज्ञानभावकार्यत्वप्रदीपैः पक्षहेतुदृष्टान्तैश्चरितार्थैः शेषविशेषणवैयर्थ्यञ्चेत्यादिदोषग्रासात्॥

---

इदानीं तत्त्वविद्व्याख्यानमपि दूषयितुमनुवदति—**सम्प्रदायविदस्त्विति**॥ मूलसहितानामित्यत्र मूलशब्देन कारणमात्रमुच्यते? परमकारणं वा? सर्वकारणं वा? आत्मतत्त्वाज्ञानं वेति विकल्प्य सर्वथाऽनुपपन्नमित्याह—**तदपीति**॥ यद्यपि मूलं चात्मतत्त्वाज्ञानं वेति विशेषेणोक्तम्; तथापि सम्भावितकल्पानां दोषो भाष्य इति तदविद्यमानवद्भावेन विकल्पितमिति द्रष्टव्यम्। सामान्येनानुपपत्तिं प्रतिज्ञाय विशेषतस्तां विशदयति—**मूलमिति**॥ **अत एवेति**॥ इन्द्रियसंयोगादेश्चरमस्योच्छेदस्वीकारादेवेत्यर्थः। मिथ्याज्ञानकारणमज्ञानं तार्किकमते तत्त्वसाक्षात्कारप्रागभाव एव, तस्य चेदानीन्तनसाक्षात्कारप्रतियोगिकस्य निवृत्तिस्वीकारात् सिद्धसाधनमित्याह—**तदेति**॥ साक्षात्कारमात्रस्य प्रागभावो नात्राज्ञानम्, अपि तु मोक्षहेतुसाक्षात्कारस्य, अतो न सिद्धसाधनमिति शङ्कते—**अथेति**॥ **अप्रसिद्धविशेषणत्वमिति**॥ मोक्षानङ्गीकारिणां तद्धेतुसाक्षात्कारतत्प्रागभावतन्निवृत्तीनामप्रसिद्धमित्यर्थः। मिथ्याज्ञानमात्रपक्षीकरणे सिद्धसाधनतादेरभावाद् दुःखजन्मेत्यादिपक्षविशेषणं व्यर्थम्। भावकार्यत्वस्य हेतुत्वे व्यभिचाराभावात् कार्यकारणभावापन्नेति हेतुविशेषणपर्यन्तम्, प्रदीपमात्रस्य दृष्टान्तत्वसम्भवे प्रदीपतदवयवेत्यादितद्विशेषणं च व्यर्थमित्याह—**मिथ्याज्ञानेति**॥

---

1. तत्त्वाज्ञा मे

॥ आत्मनः कदाचन ध्वस्ताशेषविशेषगुणवत्त्वानुमानस्यापि व्यर्थविशेषणत्वादिना निरासः ॥

आत्मा, कदाचिद् ध्वस्ताशेषविशेषगुणः, विभुत्वे सति कार्यविशेषगुणत्वात्; महाप्रलयावस्थायामाकाशवदित्यपि न ; आत्मनो निर्गुणत्वेन कदाचिदिति विशेषगुणेति प्रतिज्ञाविशेषणवैयर्थ्यात्, विशेषगुणवत्त्वस्य हेतुविशेषणांशस्य स्वरूपासिद्धत्वात्, कार्येति विशेषणांशस्य व्यर्थत्वाच्च ॥

॥ दुःखनिवृत्तेरपुमर्थत्वोपपादनम् ॥

किञ्च—अयं मोक्षोऽपुमर्थः स्यात् । दुःखाभावात् पुमर्थत्वे[1] सुखाभावादपुमर्थोऽपीति समव्ययफलत्वम् । दुःखप्राचुर्यादशेषदुःखनिवृत्तेर्नैवमिति चेत्, न; किमिदं दुःखस्य प्राचुर्यम्—सुखापेक्षयाऽधिकसङ्ख्यत्वम्? अधिकपरिमाणत्वं वा? नोभयथापि सम्भवः; सङ्ख्यापरिमाणयोर्गुणत्वेनाद्रव्ये दुःखादावयोगात् । तस्मात् दुःखस्य प्राचुर्यात् सुखस्य स्वल्पत्वादिति ब्रुवाणा कथं लीलावती लीलावती स्यात्?

॥ अधर्मसमकालतन्निष्ठदुःखध्वंसाधिकरत्वेन सोपाधिकत्वात् ॥

यदप्यपरेण समीरितम्—देवदत्तः, देवदत्ताधर्मसमानकालदेवदत्तगतत्वा-

---

कार्यत्वमपि न सामान्याधन्तर्भूतम्; द्रव्यत्वादिना परापरभावानिरूपणात् । नापि द्रव्यादावन्तर्भूतम; मिथ्याज्ञानादेर्गुणस्याकार्यत्वप्रसङ्गात् । नाप्यनन्तर्भूतम्; पदार्थातिरेकप्रसङ्गात् । नाप्यभावभूतम्; तदधिकरणस्य कार्यस्य भावत्वविरोधात्, प्रतियोग्यरूपणाच्चेति । आदिनाऽनित्यविशेषगुणवतः परमाण्वादेरनङ्गीकाराद् व्यावर्त्याभावेन व्यर्थविशेषणासिद्धो हेतुरित्याह—**कार्येति** ॥ **विशेषणांशस्येति** ॥

एवं प्रमाणदूषणं प्रदर्श्य प्रमेयं दूषयति—**किञ्चेति** ॥ सुखाभावादित्यर्थः । समव्ययफलत्वं परिहरन् लीलावतीकारः शङ्कते—**दुःखप्राचुर्यादिति** ॥

वादीन्द्रप्रयोगमनुवदति –**यदपीति** ॥ **देवदत्तस्याधर्मो देवदत्ताधर्मः, तेन**

---

1. पुमर्थत्व (क)

नधिकरणदुःखध्वंसाधिकरणम्, दुःखित्वात्; यज्ञदत्तवत्—इति, तदपेशलम्; अधर्मसमानकालदेवदत्तगतत्वानधिकरणत्वं दुःखध्वंसस्य विशेषणम्? दुःखस्य वा? आद्ये देवदत्ताधर्मसमानकालतन्निष्ठत्वरहितो यो दुःखध्वंसस्तदधिकरणमित्यर्थः स्यात्। तथा च स्पष्टो हेतुप्रतिज्ञयोर्विरोधः; धर्ममन्तरेणदुःखित्वासिद्धेः। द्वितीये प्रतिज्ञा-पदयोर्व्याघातः, देवदत्तदुःखस्य तदधर्मसमानकालं तद्गतत्वात्। न देवदत्तः, देवदत्ताधर्मसमानकालीनदेवदत्तगतत्वानधिकरणदुःखध्वंसाधिकरणम्, देवदत्तान्य-दुःखित्वानधिकरणत्वात्; घटव[1]दिति सत्प्रतिपक्षत्वाच्च। न च दुःखित्वानधिकरण-त्वेन सोपाधित्वम्; दुःखित्वानधिकरणे यज्ञदत्ते साध्याव्यापकत्वात्। न हि दुःखित्वविशिष्टे दुःखित्वं वर्तते; आत्माश्रयत्वप्रसङ्गात्, अनवस्थानाद्वा॥

॥ वादीन्द्राभिमतमुक्तिलक्षणनिरासः ॥

यदन्यदुदितम्—देवदत्तादृष्टकालीनत्वरहितदेवदत्तादृष्टविनाशस्य देवदत्तमुक्ति-

---

समानकालेदेवदत्तगतो यः पदार्थः, तत्र देवदत्ताधर्मसमानकालदेवदत्तगतत्वम्= धर्मः, तस्यासमाना[न]धिकरणम् तदा[ना]क्रान्तः, स च दुःखध्वंसश्च, तस्याधिकरण-माश्रयः; देवदत्ताधर्मासमानाधिकृतो देवदत्तदुःखध्वंसो देवदत्तमुक्तिरनेन सिद्ध्यतीति भावः। देवदत्तगतत्वानधिकरणदुःखध्वंसाधिकरणमित्युक्ते बाधो मा भूदित्याह—**देवदत्ताधर्मसमानकालेति**॥

अनिष्टं दर्शयितुं पर्यवसितमर्थमाह—**आद्य इति**॥ विरोधं विशदयति—**धर्ममिति**॥ देवदत्ताधर्मसमाकालदेवदत्तगतत्वरहितं यद् दुखम्, तस्य ध्वंसाधिकरणमिति चरमकल्पार्थः। तत्र दूषणमाह—**द्वितीय इति**॥ कुतो न सोपाधिकत्वम्? अत्राह—**दुःखित्वानधिकरण इति**॥ दुःखित्वविशिष्टयज्ञदत्ते दुःखित्वानधिकरणत्वमुपाधिरस्ति; न च साध्यमस्तीति। **साध्याव्यापकत्वात्**= साध्यसमव्याप्तिरहितत्वात्; समव्याप्तेरेवास्माकमुपाधित्वादित्यर्थः। दुःखित्वविशिष्टे तदेव दुःखित्वं वर्तते, दुःखित्वान्तरं वा? नोभयथापीत्याह—**न हीति**॥

तदीयमुक्तिलक्षणमनुवदति—**यदन्यदिति**॥ देवदत्तादृष्टकालीनत्वरहितो देवदत्तादृष्टविनाशो देवदत्तमुक्तिरिति लक्षणम्। घटनाशे, यज्ञदत्तादृष्टनाशे चाति-व्याप्तिं परिहरति—**देवदत्तादृष्टविनाश इ[स्ये]ति**॥ देवदत्तादृष्टान्तरकालीने,

---

1. घटवत् सत्प्रति (क)

त्वम्; यज्ञदत्तान्यादृष्टकालीनत्वरहितयज्ञदत्ताद्य[1]दृष्टध्वंसस्य यज्ञदत्तादिमुक्तित्वम्, अदृष्टकालीनत्वरहितादृष्टध्वंसस्य चान्त्यमुक्तित्वम्—इति, तदयुक्तम्; प्रमाणाभावात् ॥

॥ देवदत्तादिमुक्तावनुमानप्रमाणानामुपक्षेपः, तन्निरासश्च ॥

अयं देवदत्तादृष्टध्वंसः, एतदन्यदेवदत्तादृष्टकालीनत्वरहितदेवदत्तादृष्टध्वंसान्यः, मेयत्वात्, घटवदिति चेत्, न; अयं देवदत्तादृष्टध्वंसः, एतददृष्टध्वंसत्वे सत्येतदन्यदेवदत्तादृष्टकालीनत्वरहितदेवदत्तादृष्टध्वंसान्यो न भवति, मेयत्वात्, घटवदिति सत्प्रतिपक्षत्वात्, एतदन्यत्वस्योपाधित्वाच्च। देवदत्तः, देवदत्तादृष्टकालीनदेवदत्तनिष्ठत्वरहितादृष्टध्वंसवान्, अदृष्टवत्त्वात्; यज्ञदत्तवदित्यपि न; देवदत्तः, देवदत्तदुःखाधिकरणत्वे सति नोक्तसाध्यः, अदृष्टवत्त्वात्; यज्ञदत्तवदिति प्रकरणसमत्वात् ॥

---

मुक्तात्मान्तरादृष्टनाशकालीने च देवदत्तादृष्टनाशेऽतिव्याप्तिपरिहारायोक्तम् -**देवदत्तादृष्टकालीनत्वरहित** इति ॥

प्रमाणं शङ्कते—**अयमिति** ॥ अ(दृ)ष्टध्वंसान्तरभागे सिद्धसाधनत्वपरिहारायोक्तम्—**अयमिति** ॥ घटादन्यत्वं व्यावर्तयति—**अदृष्टध्वंसेति** ॥ यज्ञदत्तादृष्टध्वंसादन्यत्वं सिद्धं व्यावर्तयति—**देवदत्तेति** ॥ देवदत्तादृष्टकालीनतदीयादृष्टान्तरध्वंसान्यत्वं व्यावर्तयति—**देवदत्तादृष्टकालीनत्वरहितेति** ॥ अप्रसिद्धविशेषणत्वं परिहरति—**एतदन्येति** ॥ एतदन्यत्वे सति देवदत्तादृष्टकालीनत्वरहितदेवदत्तादृष्टध्वंसोऽयमेव वा, देवदत्तादृष्टकालीनत्वरहितो वा। प्रथमान्यत्वं पक्षे व्याहतम्, इति द्वितीयान्यत्वं सिद्धयतीत्यर्थः। प्रयोगान्तरं निराचष्टे—**देवदत्त इति** ॥ ध्वंसवानित्युक्ते दुःखादिध्वंसवत्त्वं सिद्धम्, अत उक्तम्—**अदृष्टेति** ॥ तथापि भुक्तफलादृष्टध्वंसवत्त्वमस्तीति, अत उक्तम्—**देवदत्तनिष्ठत्वरहितेति** ॥ व्याघातपरिहारायोक्तम्—**देवदत्तादृष्टकालीनेति** ॥ देवदत्तादृष्टकालीनदेवदत्तनिष्ठत्वरहितादृष्टध्वंसवत्त्वं व्याहतम्, इति देवदत्तादृष्टकालीनत्वहीनादृष्टध्वंसवत्त्वं सिद्धमित्यर्थ इति भावः ॥

एवं मुक्तिविशेषे परिभाषितं प्रमाणमदूदुषत्, इदानीमन्त्यमुक्तिप्रमाणं

---

1, यज्ञदत्तान्यदृष्ट

॥ अन्त्यमुक्तौ प्रमाणादिनिरासः ॥

अयमदृष्टध्वंसः, (एतदन्य[1]त्वानधिकरणत्वे सत्)येतदन्यादृष्टकालीनत्वरहिताऽदृष्टध्वंसान्यो न भवति, मेयत्वात्; घटवदिति सत्प्रतिपक्षत्वाच्च ॥

॥ संसारिपक्षकाशेषविशेषगुणशून्यत्वानुमानम्, तस्य साध्यदुर्वचत्व-
बाधाप्रसिद्धविशेषणत्वव्याप्यत्वासिद्ध्यादिना निरासश्च ॥

संसारी, कदाचिदशेषविशेषगुणशून्यः, द्रव्यत्वात्, कालवदिति चेत्, न; परमात्मना व्यभिचारात्, अस्माकमाकाशे व्यभिचाराच्च, प्रलयावस्थायामाकाशस्यापि प्रलयात्। किञ्चाशेषविशेषगुणशून्यत्वम्—किमशेष[2]विशेषगुणप्रागभाववत्त्वम्? आहोस्विदशेषविशेषगुण([3]प्रध्वंसवत्त्वम्? उताशेषविशेषगुणात्यन्ताभाववत्त्वम्? अशेषविशेषगुणवत्त्वात्यन्ताभाववत्त्वं वा? न तावदाद्यः कल्पः; पृथिव्यादिविशेषगुणप्रागभावस्य संसारिण्यभावात्, अप्रसिद्धविशेषण)त्वाच्च। नित्यविशेषगुणप्रागभाव[4][स्याप्रसिद्धेः। कार्यसर्वविशेषगुणप्रागभाव]वत्त्वं साध्यत इति चेत्, मैवं वोचः; बाधादेव, अन्यथा संसारिणि सकलकार्यविशेषगुणोदयप्रसङ्गात्। नापि द्वितीयः; पूर्वोक्तसर्वदोष[5]वत्त्वात्। नापि तृतीयः; बाधादेव, संसारिविशेषगुणात्यन्ताभावस्य संसारिण्यसम्भवात्। संसारिविशेषगुणानामव्याप्यवृत्तित्वेन संसारिण्यत्यन्ताभावः

---

दूषयति—**अयमदृष्टध्वंस इति** ॥ एतदन्यत्वे सत्यदृष्टकालीनत्वरहितो योऽदृष्टध्वंसः, यस्मादन्य इत्यर्थः ॥

व्योमशिवः शङ्कते—**संसारीति** ॥ बाधपरिहाराय कदाचिदित्युक्तम्। प्रलयावस्थायां विशेषगुणशून्यमाकाशम्, अतो न व्यभिचारः, तत्राह—**प्रलयेति** ॥ अप्रसिद्धविशेषणत्वे हेतुमाह—**नित्येति** ॥ **बाधादेवेति** ॥ पृथिव्यादिकार्यविशेषगुणप्रागभावस्य संसारिण्यसम्भवादिति भावः। **पूर्वोक्तेति** ॥ पृथिव्यादिविशेषगुणप्रध्वंसस्य संसारिण्यसम्भवाद् नित्यगुणप्रध्वंसाप्रसिद्धेः, अप्रसिद्धविशेषणत्वात, दृष्टान्ते साध्यवैकल्याच्चेत्यर्थः। बुद्ध्यादीनां देहावच्छिन्नात्मप्रदेशमात्रवृत्तीनामनवच्छिन्नात्मप्रदेशेऽत्यन्ताभावः सम्भवतीत्याह—**संसारिविशेषगुणानामिति** ॥ निरवयवस्यात्मनो वास्तवदेशभेदायोगाद् वस्तुतस्तत्र बुद्ध्यादेः, तदत्यन्ताभावस्य चा-

---

1. कुण्डलान्तर्गतं नास्ति
2. विशेष नास्ति।
3. कुण्डलान्तर्गतं नास्ति।
4. कुण्डतिलो भागो नास्ति।
5. दोषग्रासात्।

सम्भवतीति चेत्, न; तत्तदत्यन्ताभावयोरेकत्र विरोधात्, घटादौ द्रव्यत्वस्य व्यभिचाराच्च, घटादौ घटादिरूपात्यन्ताभावस्याभावात्। न चतुर्थः; अप्रसिद्धविशेषणत्वात्, सकलविशेषगुणवत्त्वासिद्धौ तदभावस्याप्रसिद्धेः, विशेषगुणरहितत्वेन सोपाधिकत्वाच्च।

॥ "अशरीरं वा वसन्तम्" इत्यागमो दुःखाभावमोक्षतायां प्रमाणमित्यात्रे या चा र्य शङ्कातन्निरासौ ॥

"अशरीरं वा वसन्तम्" इत्यागमो मोक्षे प्रमाणमित्यात्रेयाचार्यादयः; तदपि न हृदयङ्गमम्; अर्थान्तरग्रस्तत्वात्, संहारदशायामपि संसारिणामशरीरिणां सुखदुःखरहितत्वादीश्वरविषयत्वेनोपपत्तेश्च। पौर्वापर्यप्रतिसन्धाने तस्यागमस्य मुक्तिपरत्वं गम्यत इति चेत्, सत्यम्; अद्वितीयब्रह्मसाक्षात्कारेण तदज्ञाननिवृत्तौ तत्कार्यदेहाद्यध्यासनिवृत्तौ स्वाभाविकमशरीरत्वं तत्रोच्यते, इति न तावत्तदभिमतमुक्तौ श्रुतेर[:] पौर्वापर्यप्रतिसन्धाने प्रामाण्यसम्भवः, इति साधर्म्यवैधर्म्यनिरूपणक्षीणायुषां किमागमोपन्यासलालसतयेति ॥

॥ मुक्तौ सुखप्रकाशावश्यकता, अन्यथा मोहावस्थातो न विशेषः, तदर्थप्रवृत्त्यनुपपत्तिश्च ॥

किञ्च, मुक्तौ ज्ञानाभावाभ्युपगमे मोहावस्थातो न तस्या विशेषः, इति प्रेक्षावतां तदर्थप्रवृत्तेरनुपपत्तिः। तदुक्तम्—

"दुःखहानाय नो युक्ता सुखदुःखात्मकं परम्।
न हि कश्चित् पदार्थज्ञो मोहसिद्धौ प्रवर्तते ॥

---

वृत्तौ व्याघात इति परिहरति—**नेति** ॥ विशेषगुणात्यन्ताभावाधिकरणत्वं चोपाधिरित्याह—**विशेषगुणरहितत्वेनेति** ॥

अर्थान्तरत्वमेवी[वोदी]रयति—**संहारेति** ॥ अविशेषप्रवृत्तश्रुतेः कालविशेषविषयत्ववर्णनेन बाधविषयः स्यादित्याशङ्क्य प्रकारान्तरमाह—**ईश्वरेति** ॥ उपक्रमादितात्पर्यलिङ्गविरुद्धमन्यपरत्वकल्पनमिति शङ्कते—**पौर्वापर्येति** ॥ मुक्तौ दुःखाभावः प्रकाशते? न वा? आद्ये विशेषगुणविरोधः; न प्रकाशते चेत्, अपुमर्थत्वमुक्तमित्याशयेनाह—**किञ्चेति** ॥ उक्तमर्थं मीमांसाचार्यवचनेन स्थिरीकरोति—**तदुक्तमिति** ॥

वरं बृन्दावने रम्ये सृगालत्वं वृणोम्यहम् ।
न तु निर्विषयं मोक्षं गौतमो गन्तुमिच्छति ॥ "

इति । तथा —

" दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते ।
न हि मूर्छाद्यवस्थार्थं प्रवृत्तौ दृश्यते सुधीः ॥ "

इति ॥

अपरे पुनरेवमाहुः—प्रेक्षावतां प्रवृत्त्यनुपपत्त्या मुक्तौ नित्यानन्दसंवेदनमस्ति । सुखसंवेदनयोर्नित्यत्वाद् मुक्तिसंसारावस्थयोरविशेषप्रसङ्ग इति चेत्, न ; चक्षुर्घटयोः कुड्यादेरिव सुखसंवेदनयोर्विषयविषयिसम्बन्धप्रत्यनीकस्याधर्मादेः संसारावस्थयां सद्भावात्, तन्नाशे च मुक्तावस्थायां भवति सुखसंवेदनयोः सम्बन्धः ; कुड्यादीनां चक्षुर्घटसम्बन्धवत् सम्बन्धविरोधिमात्रेण कुड्याद्युदाहृतम्, न तु कुड्यादिवदधर्मादेर्व्यवधायकत्वमस्ति ; अमूर्तत्वात्, एकदेशयोर्व्यवधानासम्भवाच्च । किन्तु,

" आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते "

इति वचनात् समस्ताधर्मादिनिवृत्तौ सुखसंवेदनयोः सम्बन्धविशेषादभिव्यक्तिर्भवेदिति गम्यते । तेनोपचारेणाधर्मादेर्व्यवधायकत्वाभिधानेऽप्यदोषः । तस्मादभिव्यक्त्यनभिव्यक्तिविशेषाद् न मोक्षसंसारयोरविशेषः—इति, तदपि न पेशलम् ; सुखस्याभिव्यक्तेश्च

---

भूषण पक्षमुपन्यस्यति—**अपरे पुनरिति** ॥ नित्यानन्दसंवेदनस्वीकारेऽपि मुक्तेरपुमर्थत्वप्रसङ्गतादवस्थ्यमिति शङ्कते—**सुखेति** ॥ अभिव्यक्तानभिव्यक्तात्मविशेषमुपपादयन् परिहरति—**नेति** ॥ उदाहरति—**कुड्यादीनामिति** ॥ नाश इति शेषः । कुड्यादेर्मूर्तस्य भिन्नदेशस्य व्यवधायकत्ववदधर्मस्यापि व्यवधानहेतुत्वे मूर्तत्वम्, भिन्नदेशत्वं च प्रसज्येत, तत्राह—**सम्बन्धेति** ॥ एकदेशयोरानन्दसंवेदनयोरित्यर्थः । व्यवधायकत्वमन्तरेण सम्बन्धविरोधित्वं न सिद्ध्यति । न च नित्यानन्दस्य मुक्तावभिव्यक्तौ प्रमाणमस्तीत्याशङ्क्याह—**किन्त्विति** । **सम्बन्धविशेषादिति** ॥ विषयविषयिभावलक्षणादित्यर्थः । तथापि कथं व्यवधायकत्वम् ? अत्राह—**तेनेति** ॥ व्यवधायकापगमे व्यवहिताभिव्यक्तिरिवाधर्मापगमे नित्यानन्दाभिव्यक्तिरित्येतत्साम्यनिमित्तेनोपचारेणेत्यर्थः । आक्षिपति — **तदपीति** ।

नित्यत्वेऽसंसारप्रसङ्गात् । तयोः सम्बन्ध उत्पद्यत इति चेत्, न; भावस्योत्पत्तिमतो विनाशित्वेन मुक्तस्यापि सुखासंवेदनप्राप्तेः, संसारिमुख्यस्यापि तथात्वापत्तेः ॥

ननु भावत्वं वस्तुत्वम्? प्रमाणगोचरत्वं वा? सामान्यं वा? विधिप्रत्ययविषयत्वम्? अभावातिरेकित्वं वा? नाद्यः; वस्तुत्वस्य द्रव्यादिपदार्थषट्कस्यैव भूषणमते परिभाषितत्वात्, विषयविषयिभावसम्बन्धस्य द्रव्यादिभ्यो भिन्नत्वाद् वस्तुत्वासिद्धेः। तदन्तर्भावे सामान्यसमवायाभावैः सह तत्संवेदनस्य (सम्बन्धो न स्यात्)।

न द्वितीयः; प्राध्वंसेन व्यभिचारात्। न तृतीयः, सामान्यादेरभावत्वप्रसङ्गात्। नापि चतुर्थः; विधिभावपदयोः पर्यायत्वात्, तयोरेव प्रवृत्तिनिमित्तस्यै-

---

असंसारप्रसङ्गादिति ॥ संसारावस्थायामपि नित्यानन्दाभिव्यक्तिभावादिति भावः। सुखतत्प्रकाशयोर्नित्यत्वेऽपि तत्सम्बन्धस्य प्रागभावाद् नसदाऽभिव्यक्तावि [क्तिरि] ति शङ्कते—**तयोरिति** ॥ मुक्तस्य न पुनर्बन्धप्रसङ्गः; आनन्दसत्तयैव विशेषात्, अत्राह—**संसारीति** ॥ संसारित्वावस्थायामपि स्वरूपसतो नित्यानन्दस्य मुक्तित्वापत्तेरित्यर्थः।

नित्यानन्दसंवेदनयोः सम्बन्धः, विनाशी, भावकार्यत्वात्; घटवदित्युदितम्। तत्र न्यायमुक्तावलीकारश्चोदयति—**नन्विति** ॥ कस्मिन् किं स्यात्? इत्याशङ्क्य,प्रथमे हेतोरसिद्धिरित्याह—**नाद्य इति** ॥ विषयविषयिभावः, द्रव्याद्यन्यतमः; भावत्वात्; घटवादिवत्, इति, अत्राह—**अन्तर्भावे वेति** ॥ सामान्यादिषु द्रव्याद्यन्यतमस्यावृत्तेरित्याशयः। तृतीयेऽपि हेतोर्विशेषणासिद्धिः, भावत्वस्य सामान्यादेरभावत्वप्रसङ्गेन सामान्यत्वासम्भवादित्याह—**न तृतीय इति** ॥ तुरीयेऽपि हेतोरसिद्धिरेव; तेनैवासिद्धौ तन्निरूपणायोगादित्यभिसन्धायाह—**नापीति** ॥ यद् विधिपदप्रवृत्तिनिमित्तम्, तद् भावपदार्थ इति निर्वचनं किं न स्यात्? अत्राह—**तयोरिति** ॥ विधिपदप्रवृत्तिनिमित्तं सामान्यरूपम्, औपाधिकं वाऽनुगतम्; इदं तदिति विशेषतोऽनभिधानादित्यर्थः। द्रव्याद्यनुगतरूपस्य विधिपदप्रवृत्तिनिमित्तस्यान्यस्यासम्भवेऽपि 'इदं विधिपदवाच्यम्' इत्येकरूपशब्दवाच्यत्वमनुगतमस्तीत्या-

---

1. संवेदन 2. सम्बन्धे न

कस्यानुभवादर्शनात्—शब्दसाम्यादभेदिनश्चाहेतुत्वात्। नापि पञ्चमः; संसारप्रध्वंसेना, त्मसम्बन्धस्याभावातिरेकित्वेऽपि नित्यत्वात्, अन्यथा पुनरप्रवृत्तिप्रसङ्गादिति चेत् - न; इदं पृष्टो व्याचष्टाम्—किं [1]भावत्वस्य लक्षणानिरुक्त्या वास्तवखण्डनंविवक्षितम्? उत नित्यज्ञानसुखयोर्विषयविषयिभावो, विनाशी, भावकार्यत्वात्, घटादिवदिति हेतो[2]रसिद्धिः, संसारध्वंसात्मसम्बन्धे व्यभिचारः, तस्य भावत्वे ध्वंसवृत्तित्वविरोधादिति विवक्षितम्। आद्ये नास्माकं किञ्चिदनिष्टम्; अभावातिरेकस्यापि न भावलक्षणत्वम्; तस्यैव भावत्वे तत्रैवाव्याप्तेः॥

अभावत्वे तस्मादतिरेकोऽनवस्थानाद् न सम्भवतीति भावलक्षणासम्भवः; कतिपयाभावातिरेकस्याभावान्तरेष्वतिव्यापकत्वात्। न द्वितीयः; यादृशं तव भावत्वं कुम्भादौ, तादृशस्यैव हेतुविशेषणत्वात्। नापि संसारध्वंसात्मसम्बन्धे व्यभिचारः;

---

शङ्कयाह—**शब्देति**॥ विध्यादिपदवाच्यत्वं तत्प्रवृत्तिनिमित्तमित्युक्तं भवति, न च तद् युक्तम्; प्रवृत्तिनिमित्तावधारणेन तत्र सङ्गतिग्रहणमन्तरेण तद्वाच्यत्वस्यैवासिद्धेरिति भावः। कुतः? तत्राह—**संसारप्रध्वंसेनेति**॥ आत्मनः संसारनिवृत्त्या सम्बन्धस्य नाभावत्वम्; अभावत्वस्याभावे प्रवृत्त्यनुपपत्तेरिति तेन व्यभिचारादित्यर्थः। तस्यापि सपक्षत्वाद् न तेन व्यभिचारः, अत्राह—**अन्यथेति**॥ वास्तवभावत्वखण्डनमिष्टापत्त्या दूषयति—**आद्य इति**॥ अभावान्यत्वं भावलक्षणमस्ति, कथं तदनुक्तिः? अत्राह—**अभावेति**॥ अभावातिरेको भावः, अभावो वा? आद्ये तत्र तस्य वृत्तौ स्ववृत्तिविरोधः; अवृत्तावव्याप्ते[प्ति]रित्याह—**तस्यैवेति**॥ द्वितीयं दूषयति—**अभावत्व इति**॥ अभावातिरेकाद् भावलक्षणादभावादतिरेको भावानां न सम्भवति; अनवस्थानात्, अनतिरेके तस्याभावत्वासम्भवादित्याशयः। किञ्च, कतिपयाभावातिरेको भावलक्षणम्? सर्वाभावातिरेको वा? न चरमः; अभावातिरेकादभावरूपादतिरेकासिद्धेरुक्तत्वात्। न प्रथमः; अभावविशेषेऽतिव्याप्तेरित्याह—**कतिपयेति**॥ 'भावकार्यत्वात्' इति हेतोर्विशेषणासिद्धिरिति द्वितीयं दूषयति—**न द्वितीय इति**॥ अभावातिरेकित्वं भावत्वातिरिक्तं तव न सम्भवति। न च भावत्वं संसारनिवृत्त्याऽऽ-

---

1. लक्षणानिरुक्त्य
2. हेतोरप्रसिद्धिः

तस्य भावत्वे ध्वंसवृत्तित्वविरोधात् । न ह्यभावाश्रितो भावः कस्यचित् प्रमाणस्य गोचरः ; तदाश्रितस्य तत्सम्बन्धस्यासिद्धेः ॥

॥ सुखसंवेदनसम्बन्धस्य निमित्तमात्रजन्यस्य ध्वंसवदविनाशित्वशङ्का ॥

यदप्यपरमीर्यते—तस्य कृतकत्वेऽपि विनाशकारणाभावस्तु विषयविषयिभावस्य निमित्तकारणमात्रजन्यत्वात् प्रध्वंसवत् । न खलु वेदनवेदनीये एव तस्य समवायिकारणे ; वेदनस्य, सुखस्य च समवायिकारणत्वेन द्रव्यतापत्तेः । समवायिकारणासम्भवादेव च तत्प्रत्यासन्नमसममायिकारणं न सम्भवति । ततो निमित्तकारणमात्राधीनजन्मत्वात् ध्वंसवदविनाशो युक्तः । तथा च विनाशिनोरपि वेदनवेदनीययोर्विषयिविषय(भाव[1]स्यापि नाशो न युक्तः, किं पुनरविनाशिनोः प्रकृतयोरानन्दसंवेदनयोः—इति ।

॥ समवायिकारणत्वं न द्रव्यत्वम्, न च भावकार्यं निमित्तमात्रादित्यादिनोक्ताशङ्कापरिहारः ॥

तदतिस्थवीय एव ; समवायिकारणत्वस्य द्रव्यलक्षणत्वासिद्धेः, अपरथा सङ्ख्या)पृथक्त्वगुणसमवायितया गुणादेरपि द्रव्यत्वप्रसङ्गात् । भावकार्यस्य निमित्तमात्रसाध्यत्वे प्रथमकार्यस्यापि निमित्तमात्रादेवोपपत्तौ तत्समवायिकारणपरमाणुसाधकानुमानस्य विपक्षबाधकाभावादाभासत्वप्रसङ्गात् ॥

---

त्मनः सम्बन्धस्येत्याह—तस्येति ॥ संसारध्वंसमाश्रितोऽसौ भावः, तत्सम्बन्धो भविष्यतीति, अत आह—तदाश्रितस्येति ॥

विमतः, न विनाशी, निमित्तमात्रजन्यत्वात् ; ध्वंसवदिति प्रकृतहेतोः सत्प्रतिहेतुतां शङ्कते—यदपीति ॥ न खल्विति ॥ तथाप्यसमवायिपुरस्सरत्वाद्विशेषणासिद्धितादवस्थ्यमाह—समवायीति ॥ एवं विषयविषयिभावमात्रस्याविनाशित्वमापाद्य, प्रकृते किं पुनर्न्यायमाह—तथा चेति ॥

यदाश्रितो विषयविषयिभावो भवति, तयोरेव वेदनवेदनीययोः समवायिकारणत्वादसिद्धो हेतुरिति दूषयति—तदिति ॥ अतिव्याप्त्यादिदोषाभावे समवायिकारणत्वं द्रव्यलक्षणं कुतो न स्यात्? अत्राह—अपरथेति ॥ विमतः, समवायिकारणपुरस्सरः, भावकार्यत्वात् ; घटवत् । विपक्षे बाधकमाह—भावेति ॥

---

1. कुण्डलान्तर्गतं नास्ति ।

॥ सुखतज्ज्ञानयोर्मुक्तावुत्पन्नयोर्नित्यत्वमिति भाट्टमतनिरासः ॥

सुखतज्ज्ञानयोर्मुक्तावुत्पन्नयोर्ध्वंसवदविनाशित्वमिति केचित्, तदपि न चारु; भावस्योत्पत्तिमतो विनाशनियमात्। तयोरेव प्रवाहनित्यत्वमिति चेत्, न; तद्वदेव देहादेरपि तत्कारणस्य प्रवाहनित्यतास्वीकारप्रसङ्गात्, अन्यथा स्वर्गेऽपि देहविरहापत्तेः। तस्माद् नायं पन्थाः साधीयान् ॥

॥ ऐकभविकन्यायेनात्यन्तदेहोच्छेदो मोक्ष इति प्राभाकरमतनिरसनम् ॥

नाप्यत्यन्तदेहोच्छेदो मोक्षः; ब्रह्मदर्शनादविद्यास्तमयमन्तरेणात्यन्तदेहादिसमुच्छेदस्याशक्यत्वात्। अनादिदेहसन्ततिसञ्चितकर्मणामनन्तानामन्तरेण भोगं निवृत्त्ययोगात्, अकृतप्रायश्चित्तानां भोगेनैव क्षयात्, चरमदेहेऽनुष्ठानजनितायासबाहुल्यादशेषसुखदुःखोपभोगादार्जितानां निवृत्तौ तदधिकानुत्पादाद् निश्शेषकर्मक्षयादात्यन्तिको देहादिसमुच्छेद इति चेत्, न; एकैकस्य कर्मणोऽविरुद्धानेकशरीरारम्भेणैव हेतुत्वात्, ऐकभविकन्यायासिद्धेश्च ॥

"श्वसूकरखरोष्ट्राश्वगोऽजाविमृगपक्षिणाम् ॥
चण्डालपुल्कसानाञ्च ब्रह्महा योनिमृच्छति ॥"

इत्यादिस्मरणात्। नापि क्रमवदनेकदेहयोगेनाशेषकर्मभोगयोगः—

---

भट्टमतमुपन्यस्यति—**सुखेति** ॥ भावकार्यत्वाद् मुक्तावुत्पन्नसुखतज्ज्ञानव्यक्त्योरनित्यत्वेऽपि तत्प्रवाहनित्यत्वात् केवलस्य पुमर्थत्वमिति शङ्कते—**तयोरेवेति** ॥

प्राभाकरपक्षमाक्षिपति—**नापीति** ॥ भोगेनैव कर्मणां निवृत्तिनियमो नास्ति, प्रायश्चित्तेन तद्दर्शनात्, अत्राह—**अकृतेति** ॥ यस्मिन् देहे पतिते मुक्तिः, स चरमदेहः। तत्र योगाङ्गानुष्ठानायासबाहुल्यादायासस्य दुरितफलत्वात् पूर्वसञ्चितदुरितानां तदुपभोगेन निवृत्तिः, समाधिनैर्मल्यजनितमानससुखस्य पुरातनपुण्यसञ्चयफलत्वात् तस्यापि तदुपभोगेन निवृत्तिः, अपूर्वकर्मबृन्दानुपपादनात् कैवल्यसिद्धिरिति शङ्कते—**चरमेति** ॥ तर्हि क्रमवदनेकशरीरारम्भेण पुरातनकर्मव्रातस्य सामस्त्येन भोगो भविष्यतीति, तत्राह—**नापीति** ॥

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥"

इति तत्तदेकैकदेहयोगेनाभिनवानामनन्तानां कर्मणामुपचीयमानत्वात् ॥

॥ कापिलानां बन्धमुक्तिहेतुनिरासः ॥

नापि कापिलानां शिवः पन्थाः । प्रकृतिपुरुषयोरविवेकस्ताभ्यामभिन्नः ? भिन्नो वा ? आद्ये न तस्य निवृत्तिः ; प्रकृतिपुरुषयोर्नित्यत्वात्, भिन्नत्वे तस्य च सत्त्वे न निवृत्तिः ; सतो नाशानभ्युपगमात् । असत्त्वे न कदाचिद् बन्धः ; अविवेकाभावात् । तथा विवेकख्यातिरपि न सती चेत्, नोत्पद्येत ; असदुत्पत्त्यस्वीकरणात्, सती चेत्, न कदाचिदविवेकः, इति बन्धो न स्यात् । अविवेकविवेकख्यात्योरनभिव्यक्त्यभिव्यक्ती स्त इति चेत्, न ; तयोरपि सत्त्वासत्त्वविकल्पदोषग्रासात् ; तयोरप्यभिव्यक्त्यनभिव्यक्त्यन्तराभ्युपगमेऽनवस्थानात् । तस्मात्—

अविद्यास्तमयो मोक्षः सा संसार उदाहृता ।

इत्येव प्रामाणिको मार्गः ॥

॥ अविद्याया ज्ञानेन निवृत्यनुपपत्तिशङ्का । इदमाश्रयविषयानुपपत्त्योरप्युपलक्षणम् ॥

अथ नेदमभ्यु[प्यु]पपद्यते ; मानाभावात् । श्रुतिरत्र मानमिति चेत्, न ; बाधितत्वात्, ब्रह्मसंवेदनेऽपि प्रपञ्चस्य सत्त्वात् । ब्रह्मसंवेदनमिदानीं नास्तीति चेत्,

---

बन्धहेतुमविवेकं निराकृत्य, निर्वाणकारणविवेकख्यातिं निराकुरुते—**तथेति** ॥ यद्यप्यसतो नोत्पत्तिः, सतो न विनाशः ; तथापि विवेकस्याभिव्यक्तिर्मोक्षकारणमिति शङ्कते—**विवेकेति** ॥ अभिव्यक्त्यनभिव्यक्ती सती[त्यौ] चेत्, सदैव स्याताम्, असती[त्यौ] चेत्, न कदाचिदपीति दूषयति—**नेति** ॥ एवं पक्षान्तरं प्रतिक्षिप्य परिशिष्टं स्वपक्षमुपक्षिपति —**तस्मादिति** ॥

अविद्यास्तमयो मोक्ष इत्येतत्प्रमाणाभावेन श्री व ल्ल भो निर्भर्त्सयति—**अथेति** ॥ "यत्र त्वस्य सर्वमात्मैवाभूत्" इत्यादिवाक्यं प्रमाणमित्याह—**श्रुतिरिति** ॥ बाधितत्वमुपपादयति—**ब्रह्मेति** ॥ द्वैतानुभवसमये ब्रह्मसंवेदनस्यासत्त्वात कुतो बाध इति शङ्कते—**ब्रह्मसंवेदनमिति** ॥ ब्रह्मणः संवेदनम् ब्रह्मसंवेदनम् ? उत—

न; न हि ब्रह्म वेदनान्तरवेद्यम्। न च ब्रह्मरूपमिदानीं नास्ति। श्रुतिवाक्यजो विशिष्ट-ब्रह्मानुभवो नास्तीति चेत्, न; तस्याप्यनुभवविशेषस्य ब्रह्मरूपानतिरेकात्। ब्रह्मणो भिन्नत्वेन कल्पितोऽनुभवोऽस्तीति चेत्, न; कल्पितस्यासत्त्वेनाबाधकत्वात्। अद्वैतश्रुतेश्च द्वैतावभासिप्रत्यक्षविरोधेन ग्रावप्लवनश्रुतिवदुपचरितार्थत्वात्। अध्यक्ष-मविद्यात्वेन न तस्या बाधकमिति चेत्, तुल्यं प्लवनेऽपि॥

॥ ज्ञाननिवर्त्याविद्यास्वरूपानुपपत्तिशङ्का ॥

किञ्चास्या अविद्यात्वम्? अद्वैतानुभवविरोधित्वं चेत्, न; द्वैतानुभव-विरोधित्वात् तस्यैव किं नाविद्यात्वम्? अयत्नसिद्धत्वमिति चेत्, न; यत्नसिद्ध-स्यापि शोकातुरतनयसाक्षात्कारस्याविद्यात्वात्, अयत्नसिद्धस्य च तनयाभावसाक्षा-त्कारस्य विद्यात्वदर्शनात्। विचारासहत्वमविद्यात्वमिति चेत्, न; अनुभवेन विरोधिना विचारस्यैव कृशानोरनुष्णत्वानुमानवदाभासीकृतत्वादिति चेत्, मैवम्;

---

ब्रह्मैव संवेदनं ब्रह्मसंवेदनमिति विकल्प्य, नाग्रिमः कल्पः कल्पत इत्याह—**न हीति**॥ न द्वितीय इत्याह—**न चेति**॥ प्रथमकल्पावलम्बनेन शङ्कते—**श्रुतीति**॥ विमतः, न ब्रह्मरूपातिरिक्तः, अनुभवत्वात्; ब्रह्मस्वरूपवदिति परिहरति—**नेति**॥ वास्तवभेदाभावेऽपि कल्पितो भेदोऽस्त्येवेति शङ्कते—**ब्रह्मण इति**॥ **कल्पित इति** निष्ठाप्रत्ययोऽयं कर्मणि? भावे वा? उभयत्रापि न द्वैतनिवर्त-कत्वमिति दूषयति—**नेति**॥ ब्रह्मवेदनाद् द्वैतनिवृत्त्यनभ्युपगमेऽद्वैतश्रुतिविरोधः, तत्राह—**अद्वैतेति**॥ द्वैतप्रत्यक्षस्य चन्द्रद्वैतप्रत्यक्षवद् भ्रान्तित्वाद् नाद्वैतश्रुति-बाधकत्वमिति शङ्कते—**अध्यक्षमिति**॥ प्रतिबन्द्या दूषयति—**तुल्यमिति**॥

अविद्यात्वमङ्गीकृत्य प्रतिबन्दिरुदिता, सम्प्रति तदविद्यात्वम्—अद्वैतानुभव-विरोधित्वम्? अयत्नसिद्धत्वम्? विचारासहत्वं वा? इति विकल्पयति—**किञ्चेति**॥ अविद्यात्वं च किमित्यर्थः। अव्याप्त्या दूषयति—**न यत्नेति**॥ अतिव्याप्तिमाह—**अयत्नसिद्धस्येति**॥ भेदज्ञानं प्रकृतम्, असद्विषयम्, भेदज्ञानत्वात्; चन्द्रभेदज्ञानवदिति विचारस्यैवद्वैतानुभवेन बाधितत्वमित्याह—**नानुभवेनेति**॥ ब्रह्मज्ञानफलमज्ञानहानमित्यत्र निगम एव प्रमाणमिति परिहरति—**मैवमिति**॥

॥ ज्ञानेनाज्ञाननिवृत्त्युपपादनम् ॥

"तरति शोकमात्मवित्" "ब्रह्म वेद ब्रह्मैव भवति" "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः" इत्यादिश्रुतिस्मृतीनामविद्यानिवर्तकत्वे विद्यायाः प्रमाणत्वात्, तत्त्वज्ञानादज्ञाननिवृत्तेः शुक्तितत्त्वज्ञानवदन्वयव्यतिरेकसिद्धित्वाच्च ।

॥ श्रौतप्रत्ययस्य नासत्त्वम्, न वा कल्पनात्वम्, अतो न निवर्तकत्वानुपपत्तिः ॥

यदुक्तम्—श्रौतप्रत्ययस्यासत्त्वात् कल्पनात्वाद्वा नाविद्याबाधकत्वम्—इति; तदतिमन्दम्; हेतुद्वयस्याप्यसिद्धेः । न हि श्रौतसाक्षात्कारस्यासत्त्वमुपगच्छामः; अनिर्वचनीयत्वात्, कल्पनात्वमपि भ्रान्तित्वम्? बाध्यत्वं वा? नाद्यः; विषयापहाराभावात् । द्वितीयेऽपि विषयबाधद्वारकं बाध्यत्वम्, अत एवासिद्धम् । स्वरूपबाध्यत्वं चेत्, न; यत् स्वरूपेण बाध्यम्, तद् नाविद्याबाधकमिति व्याप्त्यसिद्धौ विपर्ययापर्यवसानात् ॥

॥ स्वरूपेण बाध्याया वृत्तेरविद्याबाधकत्वाभाव इति न व्याप्तिः, तत्त्वगोचरताया एव बाधकत्वप्रयोजकत्वादित्यादि ॥

शुक्तिरूप्यज्ञान एव व्याप्तिरिति चेत्, न; त्वन्मते तस्यापि स्वरूपेणाबाध्यत्वात्, अस्मन्मते च तस्य बाध्यत्वाद् नाबाधकत्वम्, अपि तु तत्त्वागोचरत्वात् । न च यत् तत्त्वविषयम्, तदज्ञाननिवर्तकमिति व्याप्तिश्च शुक्तितत्त्वज्ञान एव सिद्धा । न च

---

उदाहृतवाक्यस्यार्थवादत्वशङ्कापरिहारायानुग्राहकतर्कमाह — **तत्त्वज्ञानादिति** ॥ ब्रह्मज्ञानम्, अज्ञाननिवर्तकम्, तत्त्वज्ञानत्वात्; शुक्तितत्त्वज्ञानवदित्यर्थः ॥

यत् स्वरूपेण बाध्यम्, न तदविद्याबाधकमिति व्याप्तिः शुक्तिकलधौतबोधे प्रसिद्धेति शङ्कते—**शुक्तिरूप्येति** ॥ व्याप्यव्यापकनिष्ठा व्याप्तिः, व्याप्यं चान्यतरासिद्धमिति दूषयति—**नेति** । परप्रसिद्धव्याप्त्युपमानेन परं प्रत्युपपादानमत्र क्रियत इति, अत आह—**अस्मन्मत इति** ॥ तत्त्वगोचरत्वं बाधकत्वोपाधिरित्यर्थः । स्वरूपतत्त्वज्ञानस्याज्ञाननिवर्तकत्वेऽपि व्याप्त्यभावस्तुल्यः, तत्राह—**यदिति** ॥ स्वरूपसत एव बाधकत्वात् भवन्मते तत्त्वानुभवस्य तदभावान्नाविद्याबाधकत्वम्, अत्राह—**न चेति** ॥

स्वरूपसत्यत्वं बाधकत्वप्रयोजकम्; भवन्मते भ्रान्तिज्ञान एव व्यभिचारात्। न चाद्वैतश्रुतेरध्यक्षबाध इत्युदितमधस्तात् ॥

॥ विचारासहत्वमविद्यालक्षणम् ॥

[1]यदप्यविद्यात्वं किमस्येति विकल्प्य दूषितम्, तदपि न युक्तम्;

"न्यायाघातसहिष्णुत्वमविद्यालक्षणं यतः।"

इति तज्ज्ञैरुक्तत्वात् ॥

॥ प्रत्यक्षस्य विचारबाधकत्वे देहात्मवादनिराकरणानुपपत्तिः ॥

[2]यच्च विचारस्यैवाभासत्वमनुभवविरोधादित्यभाणि, तदभद्रम्; सन्दिग्धप्रमाणभावस्यानुभवस्य व्याप्तिबलवृत्तविचारबाधकत्वासिद्धेः, अन्यथा 'अहं मनुष्यः' इत्यध्यक्षबाधे देहानात्मत्वप्रतिपादकविचारस्याभासत्वप्रसक्तौ काणाददर्शनमेव दुर्दर्शनमापद्येत ॥

॥ सुखसाक्षात्कारस्य पुरुषार्थत्वात् तत्राकाङ्क्षोपपत्तिः ॥

तथापि दृष्टविविधविबुधाद्यानन्दसमुच्छेदादपुमर्थे मोक्षे न प्रेक्षावतां प्रवृत्तिरिति चेत्, न; आनन्दसाक्षात्काररूपतया परमपुरुषार्थत्वात्। स्वसमवेतसुखसाक्षात्कारः पुमर्थ इति चेत्, न; सुखसाक्षात्कारमात्रस्य व्यभिचाराभावे स्वसमवेतत्वविशेषणवैयर्थ्यात् ॥

स्यादेतत्—आत्मा, स्वप्रकाशसुखस्वभावः? अन्यथा चे[वे]ति पृच्छामः।

---

परपक्षप्रतिक्षेपेणाविद्यास्तमयो मोक्ष इति पक्षे स्थिते तस्य पुरुषाकाङ्क्षाविषयत्वानुपपत्तिमाशङ्कते—**तथापीति** ॥ वैषयिकसुखाभाससमुच्छेदेऽपि मुख्यसुखसाक्षात्काररूपत्वाद् नैवमित्याह—**नेति** ॥ विज्ञानानन्दादिश्रुतेः सुखरूपत्वेऽपि न पुमर्थत्वम्; तल्लक्षणवैकल्यात्, इत्याशयेनाह—**स्वेति** ॥ सुखसाक्षात्कारः पुमर्थ इत्युक्ते न क्वचिदतिव्याप्तिः। परसुखस्य परोक्षत्वाद् नाप्यव्याप्तिः। दुःखनिवृत्तेः सुखार्थत्वेनैव पुमर्थत्वात्, अतो विशेषणवैयर्थ्यमिति दूषयति—**नेति** ॥

आत्मनः स्वसंवेद्यानन्दस्वरूपत्वे मुक्तामुक्तयोरविशेषः स्यात्, अतद्रूपत्वे पुमर्थत्वं न स्यादित्यभिसन्धाय पर्यनुयुङ्क्ते—**स्यादेतदिति** ॥ अस्य चोद्यस्य

---

1. पृ. 552 प. 8 2. पृ. 552 प. 12

अत्र पर आह--श्राद्धोऽसि चेत्, उपनिषदं पृच्छ। मध्यस्थोऽसि चेत्, अनुभवं पृच्छ। नैयायिकोऽसि चेत्, न वैषयिकसुखज्ञानस्वभाव इति निश्चिनुयाः। तदतिरिक्ते सुखज्ञाने व्यवहारबीजाभावाद् व्यवहाराभावः॥

॥ सुखव्यवहारबीजत्वमनुग्रहादीनाम्, तदसम्भवश्च ॥

अनुग्रहाभिष्वङ्गेन्द्रियप्रसादादि कार्यं तद्व्यवहारबीजम्। अर्थप्रवणत्वं स्मृतिसंस्कारादिकार्यं ज्ञानव्यवहारबीजं लोके; तयोश्चाभाव आत्मनि—इति, तदेतदुपहसन्ति सन्तः श्राद्धा एव; "श्रद्धावान् लभते ज्ञानम्' इति श्रुतेः, श्राद्धानामेव मोक्षशास्त्रेऽधिकारात्, उपनिषदोऽपि "विज्ञानमानन्दं ब्रह्म" "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्याद्याः परमानन्दज्ञानब्रह्मस्वभावतां प्रत्यगात्मनः प्रतिपादयन्ति॥

॥ आत्मनो ज्ञानानन्दस्वरूपत्वे श्रुतिस्वारस्योपपादनम् ॥

अनुभवविरुद्धार्थतयाऽन्यपरा उपनिषदो नात्र प्रमाणमिति चेत्, न; आत्मनोऽनानन्दज्ञानस्वभावत्वानुभवाभावात्, "अहं दुःखी जानामि' इति दुःखित्वज्ञानाश्रयत्वानुभवोऽस्तीति चेत्, न; अहम्प्रत्ययग्राह्यस्यानात्मत्वात्, दृश्यानां

---

बौद्धाधिकारेऽभिहितं परिहारं दर्शयति—**अत्रेति**॥ वैषयिकसुखज्ञानयोरनित्ययोर्नित्यात्मस्वरूपत्वाभावेऽपि नित्यसुखज्ञानस्वरूपत्वमात्मनो भविष्यति, तत्राह—**तदतिरिक्त इति**॥

बीजाभावं दर्शयितुं तद्बीजमाह—**अनुग्रहेति**॥ आनुकूल्यज्ञानजननम् = अभिष्वङ्गः, इन्द्रियाणां प्रसादः = स्वस्थीभावः। आदिपदेन मुखप्रसादादिस्वीकारः। तद्व्यवहारबीजम् = सुखव्यवहारकारणमित्यर्थः। ज्ञानव्यवहारबीजं प्रदर्श्य प्रकृते तदभावमाह—**तयोश्चेति**॥

उदयन एवं चोदयति—**अनुभवविरुद्धार्थतयेति**॥ अहङ्कारसाक्षिणो नित्यानन्दज्ञानत्वमुपनिषदो वदन्ति, न तस्य मानान्तरवेद्यत्वमिति गूढाभिसन्धिः परिहरति—**नेति**॥ अविदिताभिसन्धिश्चोदयति—**अहमिति**॥ अभिप्रायमविष्करोति—**नाहमिति**॥ ज्ञानपरिणामतत्कर्तृत्वादेर्दृश्यस्यानात्मधर्मत्वे जानामीति

रूपादिवदनात्मधर्मत्वाच्च । जानामीति च स्वरूपसंवेदनव्यञ्जकवृत्तिकर्तृकस्याहङ्कारगतस्य प्रतिभासनात्, विप्रतिपन्नस्य सम्प्रतिपन्नप्रमाणेनैव प्रतिपादनीयत्वाच्च ॥

[1]यत्पुनर्गदितम्—न वैषयिकसुखज्ञानस्वभावः—इति, तदनुमोदामहे, वैषयिकसुखज्ञानयोरस्वभावत्वात्, नित्यज्ञानानन्दस्वभाव इत्यभ्युपगमात् ॥

॥ नित्येऽपि सुखे सुखत्वमेव सुखव्यवहारहेतुः, न तु रागजननादिकम् ॥

नित्ये सुखत्वादिव्यवहारो न युक्तः; बीजाभावादित्यपि न; सुखत्वज्ञानत्वयोरेव तद्बीजत्वात् । आनुकूल्यज्ञानजननम् = अनुग्रहः, रागजननम् = अभिषङ्गः, इन्द्रियप्रसादः = स्वस्थीभावः, एते सुखव्यवहारनिमित्तमित्युक्तमिति चेत्, न; तेषां मिलितानां सुखव्यवहारविषयत्वे सत्यानुकूल्यज्ञानजन्मरागेन्द्रियप्रसादानामनेकेषां सुखशब्दार्थत्वप्रसङ्गेन शक्तिकल्पनागौरवप्रसङ्गात् । आनुकूल्यमात्रस्य तद्व्यवहारबीजत्वोपपत्तौ व्यतिरेकविरहिणामितरेषां ज्ञेयत्ववाच्यत्वादिवदतद्बीजत्वनिश्चयाच्च । रागजननम्, सुखसाधनमतिव्यापकत्वादप्रयोजकम् । अर्थप्रवणत्वम्, स्वभावतोऽर्थनिरूप्यत्वं ज्ञानव्यवहारप्रयोजकमित्यपि न युक्तम्; इच्छादेरपि ज्ञानत्वप्रसङ्गात् । प्रकाशस्य सत इति चेत्, तर्हि प्रकाशत्वमेव प्रयोजकमस्तु; लाघवात् । नापि स्मृतिसंस्कारादिकार्यजनकत्वम्; चरमज्ञानेऽव्यापकत्वात् । न च चरमज्ञानस्यैवाभावः; मुक्त्यभावप्रसङ्गात् । नित्यस्येश्वरज्ञानस्य स्मृत्यादिकार्याभावादज्ञानत्वप्रसङ्गाच्च ॥

---

प्रतीतेः का गतिः? अत्राह—**जानामीति चेति** ॥ तार्किकमते नाहम्प्रत्ययस्य विषयत्वं सिद्धमिति तेन विरोधः स्यात्, अत्राह—**विप्रतिपन्नस्येति** ॥ रागजनकत्वस्य सुखव्यवहारप्रयोजकत्वमतिव्यापकत्वाच्चायुक्तमित्याह—**रागजनकत्वमिति** ॥ प्रकाशत्वे सत्यर्थप्रवणत्वं ज्ञानव्यवहारकारणम्, अतो नेच्छादावतिव्याप्तिरिति शङ्कते—**प्रकाशस्येति** ॥ ज्ञानेऽज्ञाननिवर्तकत्वम्, ज्ञानत्वं वा प्रकाशत्वाद् नान्यत् सम्भवति । तथा च तदेव प्रयोजकं स्यादिति परिहरति—**तर्हीति** ॥

एवमागमावष्टम्भेन सुखानुभवरूपत्वमात्मनः प्रतिपादितम्, इदानीमनुभवा-

---

1. पृ. 555 प. 3

॥ "सुखमहमस्वाप्सम्" इत्यस्य निर्दुःखोऽहमित्याकारत्वं बाधितम् ॥

किञ्च 'सुखमस्वाप्सम्' इति परामर्शपरिकल्पितस्वापसुखानुभवो नित्यानन्द-संवेदनमात्मनो गमयति। दुःखानुभवास्मरणलिङ्गेन दुःखानुभवाभावमनुमाय निर्दुःखोऽयमहमस्वाप्समित्यर्थे सुखमस्वाप्समित्युपचरतीति चेत्, न; मुख्ये बाधकाभावात्, स्मरणाभावस्यानुभवाभावेनाविनाभावाभावाच्च, बहुलमपटुप्रत्ययादौ व्यभिचारात्। ज्ञेयाभावो ज्ञानेन गृह्यताम्, सर्वज्ञानाभावः स्वापः केन गृह्यताम्—यदि नित्यात्मचैतन्यं तत्सामान्ये न स्यात्। अत एव स्वापेनाविनाभूतलिङ्गाग्रहादनुमानतोऽपि न तत्सिद्धिः। आत्मा, सुखम्, परप्रेमास्पदत्वात् ॥

॥ आत्मा, सुखम्, परमप्रेमास्पदत्वादित्यनुमानेन निर्दुष्टचरमत्व-दुर्वचत्वेन वादीन्द्राक्षेपः ॥

ननु यदि परप्रेमास्पदत्वम्—सुखाधिकरणत्वे सति प्रेमास्पदत्वम्, सुखसाक्षात्काराधिकरणत्वे सति प्रेमास्पदत्वम्, तदा साधनविकलता दृष्टान्तस्य, तवासिद्धिश्च। अथ सुखजनकत्वे सति प्रेमास्पदत्वम्, तदाऽसिद्धिः, दुःखाभावे व्यभिचारश्च। अथ दुःखाभावव्यतिरिक्तत्वे सति प्रेमास्पदत्वम्, तदाप्यङ्गनादौ व्यभिचारः। अथात्मसुखव्यतिरिक्तत्वे सति प्रेमास्पदत्वम्, तदा विशेष्यवैयर्थ्यम्। अथात्मसुखव्यतिरिक्तत्वानधिकरणत्वम्, तदापि यदात्मसुखप्रतियोगिकमेकं व्यतिरिक्तत्वं

---

वष्टम्भेन प्रतिपादयति—किञ्चेति॥ स्वापसुखानुभवस्यान्यथासिद्धिं शङ्कते—दुःखानुभवेति॥ नाहं स्वापे दुःखानुभववान्, नियमेनास्मर्यमाणतदानीन्तनदुःखानुभवत्वात्; कुम्भवदित्यनुमायेत्यर्थः। स्मरणाभावस्यानुभवाभावेनाविनाभावाभावमुपपादयति—बहुलमिति॥ स्वाप इति प्रतिज्ञावचनं चानुपपन्नम्, तत्साधकनित्यचैतन्यानङ्गीकार इत्याशयेनाह—ज्ञेयेति॥ स्वापस्यानध्यक्षत्वेऽपि लैङ्गिकत्वाद् न तु साधकनित्यचैतन्यसिद्धिः, अत्राह—अत एवेति॥ अप्रत्यक्षत्वादेवेत्यर्थः। अनुमानतोऽपि सुखरूपत्वमात्मनः साधयति—आत्मेति॥

किमिदं परप्रेमास्पदत्वम्—सुखाधिकरणत्वे सति प्रेमास्पदत्वं वा? सुखसाक्षात्काराधिकरणत्वे सति प्रेमास्पदत्वं वा? सुखजनकत्वे सति प्रेमास्पदत्वं वा? दुःखाभावव्यतिरिक्तत्वे सति प्रेमास्पदत्वं वा? आत्मसुखव्यतिरिक्तत्वाधिकरणत्वे सति प्रेमास्पदत्वं वा? आत्मसुखव्यतिरिक्तत्वं वेति विकल्पान् हृदि निधाय वादीन्द्रः प्रथमकल्पमनुवदति—नन्विति॥ विशेष्यवैयर्थ्यमिति॥ अत्र सुखव्यतिरिक्त-

तदधिकारणत्वं यदा, तदाऽसिद्धिः; उभयप्रतियोगिकैकव्यतिरिक्तत्वानङ्गीकारात्, अथात्मसुखप्रतियोगिकव्यतिरिक्तद्वयाधिकरणत्वम्, तदापि तवाऽसिद्धिः, आत्मसुखभेदाभावेन तद्व्यतिरिक्तत्वयोर्भेदाभावात्, आत्मदुःखव्यतिरिक्तत्वानधिकणरत्वादिना सत्प्रतिपक्षत्वाच्चेति ॥

तदिदं पांसुमुष्टिना पारावारपूरणमिव; परमप्रेमास्पदत्वस्यानन्यशेषत्वे सति प्रेमगोचरत्वस्य विवक्षितत्वात्। यथाऽऽहुः—

प्रेमानुपाधिरसुखात्मनि नोपलब्धः
स प्रत्यगात्मनि कृमेरपि नित्यसिद्धः।
प्रेयःश्रुतेरपि यतश्च सुखानुमानं
नैयायिकोऽपि न दृगात्मनि निह्नुवीत ॥

इति। आत्मा, दुःखस्वभावः, इतरथा दुःखस्यात्मसम्बन्धितया द्वेष्यतानुपपत्तेः। यदि दुःखम् स्वरूपतोद्वेष्यम्, शत्रुदुःखेऽपि द्वेषप्रसङ्गादित्याभाससमानमिति चेत्, न; "न लिप्यते लोकदुःखेन बाह्यः" "सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्"

---

त्वादित्युक्ते व्यभिचाराभावेन व्यावर्त्याभावाद् व्यर्थविशेष्यासिद्धो हेतुरित्यर्थः। अन्तिमे कल्पे सुखात्मप्रतियोगिकस्य व्यतिरिक्तत्वस्यैकस्यानधिकरणत्वम्, उतात्मसुखप्रतियोगिकस्य व्यतिरिक्तत्वद्वयस्यानधिकरणत्वमिति विकल्प्याऽऽद्यं दूषयति—**तदापीति** ॥ अन्यतरासिद्धिमुपपादयति—**उभयेति** ॥ प्रतियोगिभेदेनास्माभिर्व्यतिरिक्तत्वस्य भेदाभ्युपगमादिति भावः। द्वितीयमनुवदति—**अथेति** ॥ आत्मा, न सुखम्, आत्मदुःखव्यतिरिक्तत्वानधिकरणत्वात्; दुःखवत्, आत्मा, न सुखम्, प्रेमगोचरत्वे सति सुखत्वेनोभयानभ्युपगतत्वात्, सुखसाधनवदिति सत्प्रतिपक्षत्वमाह—**आत्मसुखेति** ॥ अनन्यार्थत्वे सति प्रेमगोचरत्वं परप्रेमास्पदत्वमित्येतत् स ङ्क्षे प क शा री र के कथितमित्याह—**यथाहुरिति** ॥ **प्रेयःश्रुतेरिति** ॥ "तदेतत् प्रेयःपुत्रात्" इत्यादि श्रुतेश्चात्मा निरुपाधिप्रेमासिद्ध इत्यर्थः। **सुखानुमानमिति** ॥ आत्मा, सुखम्, परमप्रेमास्पदत्वात्; व्यतिरेकेण घटवदित्यर्थः। आत्मा, दुःखस्वभावो, विपक्षबाधकोपपन्नत्वात्; व्यतिरेकेण सुखवदित्यभाससमानतामाह—**आत्मेति** ॥ हेतोरसिद्धं परिहरति—**इतरथेति** ॥ आत्मनो दुःखत्वसाधनमिदम्, परपक्षेऽनिष्टप्रसञ्जनं वा? नाद्यः; आगमविरुद्धकालात्ययापदिष्टत्वादिति परिहरति—

"तं वै मोक्षं विजानीयाद् यत्र गत्वा न शोचति" इत्यागमविरोधे दुःखात्मत्वप्रसङ्गस्याभासत्वात्, विपर्ययापर्यवसानाच्च। तदेवं सुखसंवित्स्वभाव आत्मेति स्थितम्॥

॥ सुखस्य काम्यत्वाद्यनुपपत्त्या नित्यत्वानुपपत्तिशङ्का ॥

अत्र कश्चिदाह—नित्यं तु सुखम् न सत्यम्; योग्यानुपलम्भबाधितत्वात्। श्रुतिस्तत्र प्रमाणमिति चेत्, न; योग्यानुपलम्भबाधिते तदनवकाशात्, अवकाशो वा ग्रावप्लवनेऽपि तथाभावप्रसङ्गात। नापि काम्यम्; सदा सत्त्वात्। न हि यद् यस्यास्ति, स तत् कामयते। भ्रान्तेरेवम्; कण्ठगतचामीकरवदिति चेत्, न; स्वसंवेद्ये तदभावात्। नापि शक्यम्। न हि तन्निर्वर्त्यम्; नित्यत्वात्। न विकार्यम्; अपरिणामित्वात्। न संस्कार्यम्; अनाधेयातिशयत्वात्। न प्राप्यम्; नित्यसम्बन्धित्वात्। न ज्ञेयम्; ज्ञानस्यापि नित्यत्वात्—इति॥

॥ मानान्तरायोग्यस्य सुखस्य नित्यात्मस्वरूपत्वम् ॥

न तत् साधु; स्वसंवेदनस्यात्मनो मानान्तरायोग्यत्वात्, सुखस्यात्म-

---

नेति॥ द्वितीयं दूषयति—**विपर्ययेति**॥ तस्मात्सुखत्वाभाव आत्मेति विपर्यये प्रमाणाभावेनापर्यवसानादित्यर्थः॥

अनित्यसुखस्यात्मत्वमनुपपन्नम्, नित्यं सुखं नास्त्येव, तेनात्मनो न सुखत्वमित्युद य नः प्रत्यवतिष्ठत इत्याह—**अत्रेति**॥ नित्यसुखस्यासिद्धत्वाद् नानुपलम्भबाधितत्वम्; अयोग्यत्वेनानुपलम्भसम्भवादित्याह—**श्रुतिरिति**॥ यत् सुखम्, तत् प्रत्यक्षयोग्यमेवेति नियमाद् मैवमित्याह—**नेति**॥ नित्यसुखस्वीकारेऽपि न तस्य पुमर्थत्वम्, इष्यमाणत्वानुपपत्तेरित्याह—**नापीति**॥ उपपादयति—**न हीति**॥ अप्राप्तः स्मरणविपरिवर्ती कामस्योद्बोधकः, प्राप्तस्तु तन्निवर्तक इति न्यायादित्यर्थः। प्राप्तस्यापि भ्रान्त्या अप्राप्ततया गृह्यमाणस्य काम्यत्वमिति सोदाहरणं शङ्कते—**भ्रान्तेरिति**॥ विशेषानवगमनिमित्तभ्रान्तिः स्वप्रकाशत्वेन विशेषतोऽपरोक्षे न सम्भवतीति परिहरति—**नेति**॥ स्वसंविदितेऽपि तस्मिन्नविद्यारूपा शक्तिरस्ति, तद्वशात् समुत्पत्स्यते, तत्राह—**नापीति**॥ शक्तिविषयत्वे शक्यत्वं स्यात्, शक्यं च द्विविधम्—कार्यम्, ज्ञाप्यं चेति। न तद्द्वयमपीत्यर्थः। कार्यं चतुर्विधम्—उत्पाद्यम् विकार्यम्, संस्कार्यम्, आ[प्रा]प्यं चेति। तत् क्रमेण दूषयति—**न हीति**॥ द्वितीयमपवदति—**नेति**॥

स्वरूपत्वेऽपि भ्रान्त्या तदप्राप्तं मन्वानस्य कण्ठगतचामीकरवद् भ्रान्त्यपोहेन प्राप्यम् । तथा हि वाचस्पतिमिश्राः प्रावोचन्—' तच्च प्राप्तमप्यनाद्यविद्यावशाद् अप्राप्तमिव प्रेप्सितं भवति, यथा स्वग्रीवागतमपि ग्रैवेयकं कश्चिद् भ्रमाद् नास्तीति मन्यमानः परेण प्रतिपादितमप्राप्तमिव प्राप्नोति । न च स्वसंवेदनेनाविद्याविरोधः ; तस्याविद्यासाधकत्वात्, प्रमाणज्ञानेनैवाविद्याविरोधात् ।

॥ ज्ञानस्याज्ञानाश्रयविषयोपपत्तिः ॥

ज्ञानमात्रस्यैवाविद्याविरोधित्वमिति चेत्, न ; अविद्याविषयज्ञानेन व्यभिचारात्, तथाप्यद्वितीयासङ्गे सा विरुद्धेति चेत्, न ; वास्तवासङ्गादेः कल्पितसङ्गाद्यविरोधित्वात्, अविद्यात्वाच्च । यदाहुः—

" दुर्घटत्वं त्वविद्याया भूषणम्, न तु दूषणम् ।
कथञ्चिद्घटमानत्वे[ऽ]विद्यात्वं दुर्घटं भवेत् ॥ "

इति । तस्माद् यत्किञ्चिदेतत् ॥

॥ अविद्यानिवृत्तेः पञ्चमप्रकारतयोपपत्तिः ॥

अथाज्ञाननिवृत्तिः—सती ? किमसती ? सदसती वा ? तद्विलक्षणा वा ? आद्येऽद्वैतविरोधः । द्वितीयेऽज्ञानस्य सत्त्वम् ; तन्निवृत्तेरसत्त्वात् । न तृतीयः ; विरोधात् । न तुरीयः ; अनिर्वचनीयनिवृत्तेरनिर्वचनीयत्वानुपपत्तेः । प्रतियोगिविलक्षणकारणाकारत्वाद् प्रध्वंसस्येति चेत्, न ; पञ्चमप्रकाराविद्यानिवृत्तिरितीष्टसिद्धौ प्रतिपादितत्वात् ॥

---

**नित्यात्मसुखस्य** नानुपलम्भबाधितत्वम् ; तस्य मानान्तरायोग्यत्वादिति सिद्धान्तयति—**न तदिति** ॥ प्राप्यं सुखमिति शेषः । ज्ञानमात्रस्याविद्याविरोधित्वसंभवे प्रमाणेतिविशेषणं गौरवाद् नोपादेयमिति शङ्कते—**ज्ञानमात्रस्येति** ॥ अविद्यासाधकज्ञानमात्रेण संप्रतिपन्नेन व्यभिचार इत्याह—**नेति** ॥

अज्ञाननिवृत्त्याऽऽक्षेपद्वाराऽनिर्वचनीयाज्ञानमेवाक्षिपति—**अथाज्ञाननिवृत्तिरिति** ॥

व्याप्तिर्वा विषयान्तर इति विषयान्तरव्यासेरपि पक्षान्तरकक्षीकारकारणत्वात्

॥ अज्ञाननिवृत्तेस्सद्रूपत्वं वा ॥

आत्मैव वाऽज्ञानहानिः। न चैतावताऽज्ञाननिवृत्तेः सदातनत्वप्रसङ्गः; यथा मृदो घटो न व्यतिरिच्यते; तदकार्यत्वप्रसङ्गात्, मृद् घट ति सामानाधिकरण्यभङ्गप्रसङ्गाच्च। नापि घटो[1] मृदोऽतिरिक्तः; तदनाश्रयत्वप्रसङ्गादेव, तथापि न तयोर्यावन्मृद्भाविभावित्वेन साधनवैयर्थ्यम्। तथाऽज्ञाननिवृत्तिरपि न यावदात्मभाविनीति को दोषः?

उक्तञ्चाचार्यवर्यैः—

"घटभावलयौ मृत्तु तथापि न सदैव तौ।" इति।

॥ तत्त्वज्ञानस्य स्वनिवर्त्यत्वम् ॥

तत्त्वज्ञानं च जडमत्र विरोधितया स्वात्मानमपि निवर्तयति—यथा कतकरजः सलिले प्रक्षिप्तं रजोऽन्तराणि संहरत् स्वयमपि संहृत्य निर्मलं सलिलमापादयति॥

यदपि कश्चिद् मीमांसकंमन्यो मन्यते—कतकचूर्णस्य चूर्णान्तरनाशकत्वं स्वरूपाभावकर्तृत्वम्? अधः पतनं वा? नाद्यः; रजोऽन्तरस्य कतकरजसश्चाधोऽवस्थानात्, न द्वितीयः; रजोऽन्तरस्याधःपाते न कतकरजो हेतुः, तस्याधःपाते तद्गुरुत्वम्—इति, तदयुक्तम्; गुरुत्वस्याधःपाते गुरुत्वान्तराभावात् स्वहेतुत्वात्। द्रव्यपातो निमित्तमिति चेत्, न; सहैव पतनात्। गुरुत्वस्य गुणत्वाद् न पतनक्रियेति

---

पक्षान्तरं कक्षीकरोति—**आत्मैवेति**॥ तर्ह्यज्ञाननिवृत्तेः सदातनत्वप्रसक्तौ साधनवैयर्थ्यम्; इतरथाऽऽत्मापि न सदातनः स्यात्, अत्राह—**न चेति**॥

तत्त्वज्ञानस्य निवर्तकान्तरमस्ति चेत्, अनवस्था, नास्ति चेत्, न निवर्तेतेति, तेनाद्वैतविरोधः, तत्राह—**तत्त्वज्ञानं चेति**॥

चिदानन्दचोद्यमुत्थापयति—**यदपीति**॥ **गुरुत्वं** स्वाधारं रजोऽधः पातयत् स्वयमपि स्वत एवाधः पतति, तदेव दृष्टान्तो भविष्यतीति परिहरति—**तदयुक्तमिति**॥ द्रव्यस्य पतनं यथा प्रत्यक्षमेवं गुरुत्वपतनस्यानुमानसिद्धत्वमिति प्रामाणिकत्वाविशेषाद् नैकतरापलापो युक्त इत्याह—**नूनमिति**॥ विद्योदयसमनन्तरमेवाविद्यानिवृत्तौ

---

1. घटध्वंसो मृदोऽतिरिक्तः।

चेत्, नूनं वैशेषिकैर्विप्रलब्धोऽसि। रजसः पतनं नास्ति द्रव्यत्वादिति ब्रुवाणः कथमपरथा वार्येत? तस्माद् ब्रह्मात्मतत्त्वसाक्षात्काराद् निखिलानर्थनिदानाज्ञाननिवृत्तौ परमानन्दसंवेदनप्राप्तिः कैवल्यमिति सकलमतिमङ्गलम् ॥

परापरस्वरूपेण परं यत् तत्प्रकाशितम्।
[1]श्रीमन्महाबलं देवं वन्दे गोकर्णमण्डनम् ॥

विद्यासागरसम्भूतन्यायचन्द्रस्य चन्द्रिका।
व्याप्य दिङ्मण्डलं जीयादियमाचन्द्रभास्करम् ॥

---

जीवन्मुक्त्यनुपपत्तेरुपदेष्टुरभावाद्विद्यैव नोदीयात्। अथ विद्योदयेऽपि नाविद्या निवर्त्येत, न काचिदपि तन्निवृत्तिः; अविशेषादिति विद्यानर्थक्यमिति शङ्कां निराकुर्वन् परिशेषादाद्यं निगमयति—**तस्मादिति** ॥ "तस्य तावदेव चिरमि"त्यादिश्रुतेः,

उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥

इत्यादिस्मृतेश्च प्रारब्धकर्मवेगवशात् कञ्चित्कालं विदुषो विदग्धाविद्यालेशवशेन देहानुवृत्तिरुपपन्नेति भावः ॥

इदानीं प्रकरणार्थमुपसंहरति—**सकलमिति** ॥ शास्त्रान्ते मङ्गलस्यावश्यकरणीयत्वात् परदेवतास्तुतिनमस्कारस्वरूपमङ्गलं कुर्वन् स्वकीयदेशप्रशस्तिं करोति—**परापरेति** ॥ गोकर्णमण्डनम् = गोकर्णक्षेत्रस्य भूषणम् = मणिम्, गोकर्णाः= सर्पाः, मण्डनं यस्येति वा गोकर्णमण्डनम्। संप्रति स्वकृतियुवत्या पण्डितोदारभट्टकण्ठलग्नतया निखिललोककालगोचरास्खलितव्याप्तिमाशास्ते—**विद्यासागरेति** ॥ अत्र ग्रन्थकर्ता सागरत्वेन, ग्रन्थप्रतिपाद्यो न्यायश्चन्द्रत्वेन, ग्रन्थश्चन्द्रिकात्वेन रूपितः, इति रूपकालङ्कारो द्रष्टव्यः। **आचन्द्रभास्करमिति** ॥ वैधर्म्यालङ्कारः।

शुद्धत्रय्यन्तधीवृत्तिव्यक्तात्मानन्दसाक्षिणम्।
उमार्धविग्रहं वन्दे चराचरगुरुं हरम् ॥

यदनुग्रहसंवुद्धबुद्धिपद्मा भवार्णवम्।
तरन्ति प्रतिपद्ये तमगस्त्यारण्यभास्करम् ॥

---

1. विद्यासागरोऽयं शिवभक्तो गोकर्णक्षेत्रवासी चेत्यनेनावगम्यते।

इति श्रीमत्परमहंसपरिव्राजकाचार्या भ या न न्द-
पूज्यपादशिष्येण भगवता आ न न्द पू र्ण मु नीन्द्रेण
वि द्या सा ग रापरनामधेयेन विरचितायां
**न्यायचन्द्रिकायां फलाख्यः**
**॥ तुरीयः परिच्छेदः ॥**

---

येनाखण्डि सुखण्डनस्य बहुशष्टीकाच्छलेनान्यदृक् ।
श्रीमद्भारतसागरप्रमथनेनाहारिचार्थामृतम् ॥

येन व्याकरणाटवी स्फुटतरं सम्प्रापिता लीलया ।
विद्याब्धिं प्रणतोऽस्मि पण्डितसभाचूडामणिं श्रेयसे ॥

यद्वक्त्रचन्द्रसंभूतवाक्पीयूषविशुद्धधीः ।
ब्रह्म संप्रतिपद्ये तं विमलारण्यभास्करम् ॥

आशान्तादुदयाचलात् समुदिता न्यायेन्दुसच्चन्द्रिका
लोकालोककुमुद्वती बुधजनश्रीकैरवप्रेयसी ।
प्रास्तावि प्रसभं मुनीश्वरकृता श्रीशङ्कराद्याश्रिता
तत्त्वार्थप्रतिपादने पटुतरा बुद्धेर्विशुद्ध्यै मया ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य गो वि न्दा न न्द-
पूज्यपादशिष्येण भगवता स्व रू पा न न्द मु नी न्द्रे ण विरचितायां
**न्यायचन्द्रिकाव्याख्यायां प्रकाशिकायां**
**॥ फलाख्यस्तुरीयः परिच्छेदः ॥**

---

# BIBLIOGRAPHY OF ADVAITA VEDĀNTA

## Author Index

AKHAṆḌĀNANDA MUNI

(Disciple of Anandagiri)

(End of 13th Cent. A. D.)

1. Tattvadīpana—a Com. on the Pañcapadikā-vivaraṇa of Prakāśātman.
2. Advaita Ratnakośa.

Akhaṇḍānanda was a disciple of Anandagiri. Anandagiri the pupil of Anubhūtisvarūpa and S'uddhānanda, flourished about 1250 A.D. Hence Akhaṇḍānanda can be safely supposed to have flourished in the end of 13th century A.D. The Tattvadīpana mentions Ratnācala as the birth place of Anandagiri. His disciple Bodhapṛthvīdhara salutes Ānandaśaila in the colophon. Akhaṇḍānanda calls him as the disciple of one Akhaṇḍānubhūti and it seems that Akhaṇḍānanda Muni was a pupil both of Ānandagiri and Akhaṇḍānubhūti. The Tattvadīpana in its turn has a commentary from the pen of the celebrated Dharmarājādhvarīndra the author of Vedāntaparibhāṣā.

---

AKHAṆḌĀNANDA YATI

(Middle of 17th cent. A.D., *i.e.*, 1650)

1. Ṛjuprakāśikā,

**Other works**

2. Tarkabhāṣāprakāśa-vyākhyā—a sub-commentary on Govardhana's commentary on Tarkabhāṣā of Keśava.
3. Nyāya-siddhānta-dīpa-vyākhyā.
4. Mahāviṣṇu-pūjā-paddhati (or Smṛti)
5. Mukti-sopāna.

Akhaṇḍānanda yati, the author of Ṛjuprakāśa says that he was a pupil of Svayamprakāśānanda. His parents were Kālahastyadhvarī and Yajñāmbā and he belongs to Nalaguṇṭu vaṁśa. His previous name was Raṅganātha. At the request of Inadi Jagadekācārya, he wrote Ṛjuprakāśa (*See* Introdn. verses of M. M. Anantakrishna Sastri's

Edition of Brāhmasūtra Śāṅkarabhāṣya with 9 commentaries) Akhaṇḍānanda yati wrote a commentary on Govardhana's commentary. on Tarka-bhāṣā of Keśava Miśra. Govardhana's date is 1560 A.D. Hence Akhaṇḍānanda yati might have flourished about 1650 A.D.

---

AKHILĀTMAN

(Pupil of Daśarathapriyapūjyapāda)

1. Advaita-ratnakośa-ṭippaṇī-pūraṇī. (Tattvavivecanī)

---

AGNIHOTRA BHAṬṬA

(Son of Dvādaśāhayajvan and Bhavānī. About 1625)

1. Advaita-ratnakośa-pūram
2. Tattvavivecanī

**Other work**

3. Tattva-cintāmaṇyāloka-sphūrti—a commentary on the Āloka of Jayadeva or Pakṣadhara Miśra (Nyāya work).

Agnihotra Bhaṭṭa or Sūri calls himself a pupil of Garuḍanṛsiṁhasūri, disciple of Jñānendra who in his turn was a disciple of Vāsudevendra. He names another preceptor called Kalahastiyajvan, father of Akhaṇḍānanda. It is doubtful if his father Dvādaśāhayajvan is the same as the author of Siddhānta-kaumudī-vyākhyā—Sumanoharā.

---

ACYUTAKṚṢNA TĪRTHA

1. Bhāmatī-bhāvadīpikā

---

ACYUTAKṚṢṆĀNANDA

(Disciple of Svaymprakāśānanda Sarasvatī and Advaitānanda Sarasvatī. About last quarter of 17th cent.)

1. Siddhantaleśasaṅgraha-vyākhyā (Kṛṣṇālaṅkāra)
2. Bhāṣya-ratnaprabhā-vyākhyā.
3. Taittirīyopaniṣad-bhāṣya-ṭīkā
4. Mānamālā.

ACYUTAMUNI

1. Advaita-nirṇaya.

---

ACYUTAŚARMAN

1. Mahāvakyārtha-mañjarī
2. Prārabdha-dhvānta-saṁhṛtiḥ
3. Vedāntāmṛta-cidratna-caṣaka-ṭīkā

---

ACYUTĀŚRAMA

Disciple of Paramānandāśrama or Cidānandāśrama. (Middle of 16th Cen. A.D.)

1. Vedānta-saṅgrahaḥ

**Other works**

2. Rāmārcana-candrikā.
3. Viśveśvarīya-paddhatiḥ.
4. Sannyāsa-dharma-saṅgraha.

Among others, the author quotes, Kālanirṇaya-dīpīkā, Viṣṇutattva, Svātmabodha (for quotations *c.f.* Ind. O. Cat. No. 3720. Kālanirṇaya-dīpikā of Rāmacandra was composed before 1400 A.D. (*See* Ind. Off. Cat. No. 1653). Acyutāśrama, therefore, lived towards the Middle of the 16th Cent. A.D.)

---

ADVAYĀNANDA SARASVATĪ

(Disciple of Visves'vara and Guru of Rāghavānanda)

1. Vedânta-sāra-saṅgrahaḥ.
2. Ātma-bodha-ṭīkā.

---

ADVAITĀNANDA

(Disciple of Bhūmānanda Sarasvatī and Rāmānanda Tīrtha)

1. Brahmavidyābharaṇam—a Com. on Brahmasūtrabhāṣya of Śaṅkarabhagavātpāda.
2. Adhyātma-candrikā.
3. Ātma-bodha-vyākhyā

From the Colophon इति श्रीमत्परमहंस..............निरतिशयौदार्यादिगुणरत्नखचितयतिकुलोत्तंसश्रीमद्रामानन्दसूरिमुखारविन्दनिर्गतशारीरकसूत्रभाष्यार्थस्वर्धुनिप्रवाहनिमज्जनसुखितस्य श्रीमदद्वैतानन्दस्य कृतौ it will be seen that the author admits his work to be an abridgement of a more elaborate scholium by his teacher Rāma Tīrtha.

---

## ANANTA KṚṢNA ŚĀSTRĪ

Mahāmahopādhyāya, N. S. Anantakṛṣṇa S'āstrigal. He was born in March 1886, at Nurani in Palghat Town, Kerala State. His father was Subrahmanya Vādhyār, son of Rāmaswāmi Vādhyār. For detailed information refer to Brahmādvaita.

**Works Original and edited**

1. Vivāha-samaya Mīmāṁsā.
2. Cattussūtrī of Brahma-Sūtra with Bhāṣya, Bhāmatī, Kalpataru, Parimala and exhaustive notes and introduction.
3. Abdhiyāna Nirṇaya.
4. Introduction to S'āstradīpikā.
5. Complete Brahma-sūtra-Bhāṣya with Bhāmatī, Kalpataru and Parimala and topical notes and enlarged introduction.
6. S'āstradīpikā with S'ambhu-bhaṭṭīya.
7. Mīmāṁsā-s'āstra-saṅgraha.
8. Advaita-siddhi with 3 commentaries and notes.
9. Advaita-cintā-kaustubha.
10. Karma-pradīpa with his own commentary named Prabhā.
11. Vedānta-paribhāṣā with commentary—.
12. Sanātana-dharma-pradīpa.
13. Advaita-dīpikā—.
14. Advaita-mārtāṇḍa.
15. Vedanta-rakṣāmaṇi—.
16. Brahma-sūtra-bhāṣya with nine commentaries, including his own Pradīpa—.
17. Advaita-siddhi with five commentaries.
18. Saugandhya-vimars'a and Caturgranthī—original works.
19. Bhagavat-gītā Bhāratīya-dars'anī (Bhagavat-gīta and all systems of India Philosophy).

20. Prahlāda-caritra.
21. Śata-bhūṣaṇī—a critical and comparative study of S'atandūṣaṇī.
22. Advaita-tattva-s'uddhi. Comprehensive study of Advaita, and Viśiṣṭādvaita. Just published in September, 1958.
23. Prabhākara-vijayaḥ of Nandīśvara, Ed. with Introd.
24. S'ārīraka-mīmāṁsā-bhāṣya-vivaraṇa, Ed. with Introd.

---

## ANANTA DEVA I

(Son of Āpadeva I)

1. Tattva-prakriyā.
2. Tattva-prakriyā-vyākhyā; Sampradāya-nirūpaṇam.
3. Siddhānta-tattvam.

Ananta Deva I was the son of Āpadeva I, and grandson of Ekanātha, who, according to Kāśīnātha, the author of Dharmasindhu, is the same as the great Mahārāṣṭra saint Ekanātha. Ananta Deva I is the father of Āpadeva II, who is the author of Mīmāṁsānyāyaprakāśa and Bālabodhinī, a com. on Vedāntasāra. He must not be confounded with his grandson, Ananta Deva II the author of Smṛtikaustubha and Bhaṭṭālaṅkāra, a Com. on his father's Mīmāṁsā-nyāyaprakāśa. The author of Tattvaprakriyā calls himself the pupil of Rām Tīrṭha who is also the Guru of Anantadeva, the author of Siddhāntatattva. *C. f.*

यच्छ्रीमद्रामतीर्थेभ्यः सम्प्रदायसमागतम् । श्रुतं सत्तर्कसचिवं विविच्य तदिहोच्यते ॥

(Introductory verse to Tattvaprakriyā)

इत्थं परिव्राजकतीर्थपादश्रीरामतीर्थानुसृतिप्रसादात् ।
सिद्धान्ततत्त्वं गतवाग्विवादं अनन्तदेवेन मुदा न्यरूपि ॥

Anantadeva also wrote a commentary on his own work Tattva-prakriyā wherein also he calls himself as the pupil of the same Rāma Tīrtha. So the author of these three works is the disciple of Rāma Tīrtha and should have lived in the end of the 16th Cent. A.D. That AnantaDeva I, father of Apadeva II, was undoubtedly also a Mīmāṁsaka is clear from the fact that Apadeva II, according to the edition of Prof. Edgerton, refers to the views of his father in his Nyāyaprakāśa (*Vide* अस्मत्तातचरणास्त्वेवमाहुः paragraph 143)

---

ANANTA BHAṬṬA

1. Advaita-candrikā.
2. Siddhānta-candrikā.

Nothing is known about this author. Probably, Ananta Bhaṭṭa, is the father of Bhaṭṭa Śaṅkara who was patronised by King Rāmasiṁha, son of Jayasiṁha.

---

ANANTARĀMA BHAGAVAT.

(Disciple of Kṛṣṇarāma-pūjyapāda)

1. Ātmajñānopadeśa-vivaraṇam.

---

ANUBHAVĀNANDA YATI

(Pupil of Kṛṣṇānandayati. 17th Cent. A.D.)

1. Advaita-ratnakośa-vyākhyā.

**Other Work**

2. Śāstra-dīpikā-vyākhyā : Prabhāmaṇḍalam (Mīmāṁsā)

Anubhavānanda Yati, is the pupil of Kṛṣṇānanda Yati, the author of the Advaita work Siddhāntasiddhāñjanam. The author had in addition, many other preceptors, such as Maheśvarānanda Tīrtha, Kaivalya Tīrtha, Suddhānanda Yati, etc. whom he mentions in the Introductory verses of his commentary on Advaita-ratnakośa of Nṛsiṁha. Besides, Anubhavānanda is the author of a commentary Prabhāmaṇḍala a com. on Śāstradīpikā.

---

ANUBHŪTISVARŪPA YATI

(Guru of Janārdana *alias* Ānandagiri. About 1300 A.D.)

1. Pramāṇaratna-mālā-vyākhyā (Nibandha)
2. Gauḍapādīya-bhāṣya-ṭippaṇam.
3. Gauḍapādīya-vivekaḥ.
4. Bhagavad-gītā-bhāṣya-ṭippaṇam.
5. Nyāya-dīpāvalī-vyākhyā-candrikā.

6. Nyāya-makaranda-saṅgraha.
7. Khaṇḍana-khāṇḍa-khādyaṭīkā : Śiśuhitaiṣiṇi.

Anubhutisvarūpa is famous as the author of Sārasvataprakriyā (Grammar) and as the Vidyāguru of Ānandagiri (Janārdana). At the end of his Sarasvataprakriyā and Nibandha, he invokes the favour of God Hayagrīva, a deity worshipped in South India only and as such it appears that he was a native of South India.

---

## ANNAM BHAṬṬA

(Son of Tirumalācārya of Rāghava Somayājī family. Middle of 17th century A.D.)

A 1. Brahmasūtravṛttiḥ : Mitākṣarā.
2. Bhedanirāsaḥ.
3. Tattvaviveka dīpana-vyākhyā.

**Other Works.**

B On Mīmāṁsā.
4. Subodhinī – a com. on the Tantra vārtika.
5. Rāṇakaphakkikā-vyākhyā, also known as Rāṇakojjivinī—a com. on Nyāyasudhā.
6. Rāṇakabhāvanākārika-vivaraṇa in 54 verses only.

C On Nāya Vaiśeṣika.
7. Tarkasaṅgraha, with his own com. called Dīpikā.
8. Siddhāñjanam—a com. on Jayadeva's Āloka.
9. Nyāya-pariśiṣṭa-prakāśa—a com. on Udayana's Nyāya-paris'iṣṭa is also attributed to him.
10. Tattvacintāmaṇi dīdhiti-vyākhya-subuddhimanoharā.

D On Vyākaraṇa :
11. Mitākṣarā—a com. on Pāṇini's Aṣṭādhyāyī
12. A com. on Kaiyaṭa's Mahābhāṣya pradipa : Uddyotana
13. Svara-viveka.

Annam Bhaṭṭa is well-known for his small primer on Nyāya-vais'eṣika, named Tarka-saṅgraha and its Dīpikā. He was the son of Tirumalācārya of Rāghava Somayājī family, who was a great scholar of Advaita system. The prevailing tradition in South India is that

Annam Bhaṭṭa was an Andhra of Chittoor District, who settled down in Benares in the Middle of the 17th century A. D. He refers in his Dīpikā to King Tribhuvana Tilaka.) He was indeed a versatile scholar of name and fame. He wrote several standard works on almost all the important branches of Śastraic learning. That he lived at Benares is clear from the well-known line which has now passed into a proverb काशीगमनमात्रेण नान्नंभट्टायते द्विजः which means that a man does not become a great scholar like Annam Bhaṭṭa simply by going to Benares.

---

ANNAYYA PAṆḌITA

(Probably 18th Century)

1. Vyāsatātparyanirṇayaḥ.

---

APPAYYA DĪKṢITA

(1520—1592 A. D. according to Aḍayapalam Inscription.)

There is hardly any important branch of Sanskrit literature which was neglected by Appayya Dīkṣita. There are very few scholars to whose credit we can ascribe the authorship of over hundred works. He was born at Aḍayapalam near Kāñcī, in the Kanyā month of Kali 4654 (*See*, T. S. Kuppuswami Sastri's Introduction to Gaṅgāvatraṇa, (Kāvyamālā No. 76 and Prof. P.P.S. Sastri's Life of Appayya Dīkṣita). He was the son of Raṅgarājādhvarin of Bhāradhvajagotra. Raṅgarājādhvarin is known to have written many works on Ådvaita Vedātna. He had two sons, the elder being Appayya Dīkṣita and the younger Āccān Dīkṣita, the paternal grandfather of Nīlakaṇṭha Dīkṣita. Appā-dīkṣita was the original name of our author and the honorific *ayya* was afterwards added to it in recognition of his greatness as a literary prodigy. For many years, our author lived at Vellore under the patronage of Cinna Bomma Bhūpāla, *See* grants dated S'aka 1488, 1471, (A D.1566, 1549) by whom he was honoured with a shower of gold. On the valuable presents made by that king to Appayya Dīkṣita, *See* Samarapuṅgava's Tīrthayātrāprabandha Campū (DCSM. XXI, 8826). Later on he was invited to the court of Penukoṇḍa by Emperor Veṅkaṭadeva of Vijayanagar (1586—1613 A.D.). In the last year of his life he visited the Pāṇḍya country at the invitation of Tirumala Naick to settle some sectarian disputes at Madura. He was the first scholar that placed the S'rīkaṇṭha school of Philosophy on a firm basis. For example, his commentary S'ivārkamaṇīdīpikā has a place equal to the Bhāṣya of S'aṅkara or Rāmānuja. He was the tutor in Vedānta to the famous Bhaṭṭoji Dīkṣita (*See* Tattvakaustubha of Bhaṭṭoji).

The opposition of Jagannātha Paṇḍita to Appayya Dīkṣita and Bhaṭṭoji Dīkṣita has become historical. Bhaṭṭoji was a pupil of S'eṣa Kṛṣṇa Dīkṣita, and a co-student of the latter's son Vis'ves'vara who was in addition, Jagannātha's master. Sesha Kṛṣṇa Dīkṣita has written a commentary called Prakriyāprakās'a on the grammatical work of Prakriyākaumudī. Bhaṭṭoji in his well known work named Manoramā seriously attacked the commentary of his teacher. Jagannātha was very much enraged at this ingratitude of a pupil to a preceptor and to the father of his own guru. He also disliked Appayya Dīkṣita for the support he rendered to his adversary (Bhoṭṭoji). He was once insulted in open assembly by Bhaṭṭoji. Henceforth he commenced his crusade against the two professors who had common cause with each other. Some of his uncompromising and abusive criticism of Appayya Dīkṣita will be met with in the Citramīmāṁsā Khaṇḍana and several other writings. But later on we find him reconciled to Appayya, for the latter is rumoured to have given him some spiritual advice when he found him (Jagannātha) stretched in careless repose on the banks of the Ganges. This and the fact that the popularly known Gaṅgālaharī of Jagannātha was composed on the very bank of the holy river lend support to the story that Appayya Dīkṣita spent a portion of his life at Benares.

Appayya is the reputed author of 104 works the range of which covers poetry, poetics, dialectives, grammar, philosophy etc. (*See* Nīlakaṇṭha's S'ivalīlārṇava I. 6.) With his eleven sons well read and alive at his death, he passed away with pleasure at Chidambaram in 1626, A. D. at the age of 72. It is said that he uttered the following verse on his death-bed:—

चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं
सुताश्च विनयोज्ज्वलाः सुकृतयश्च काश्चित् कृताः ।
वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा
न किंचिदहमर्थये शिवपदं दिदृक्षे परम् ॥

(References (1) Life of Appayya Dīkṣita—Introduction to Yādavābhyudaya, by A. V. Gopālacārya (2) Prof. P. P. S. Śāstri's life of Appayya Dīkṣita (3) Introduction to Siddhāntales'asaṅgraha, by S. Sūryanārāyaṇa S'āstri. (4) Introduction to Pūrvamīmāṁsā by V. A. Rāmasvāmi S'āstri)

A. Advaita Vedānta.

1. Advaitanirṇaya.
2. Nayamañjarī.
3. Nyāyarakṣāmaṇi—a com. on Brahmasūtra.
4. Vedāntakalpataruparimala.
5. Siddhāntales'asaṅgraha.
6. Das'akoṭiḥ.
7. Pañcagranthiḥ etc. etc.
8. Laghuvivaraṇa etc. etc.

B. Vis'iṣṭādvaita Vedānta. (Rāmānuja School)

1. Nayamayūkha-mālikā
2. A commentary on the above.

C. S'aiva Vis'iṣṭādvaita.

1. S'ivādvaita-nirṇaya.
2. S'ivārkamaṇi-dīpikā (a com. on S'rīkaṇṭha-Bhāṣya.)
3. Ratnatrayaparīkṣā and its commentary.
4. Maṇi-mālikā.

D. Dvaita Vedānta.

1. Nyāya-muktāvalī—a work explaining the teachings of Ānanda Tīrtha.
2. A commentary on the above.
3. Nyāyaratnamālā—a treatise on the Mādhva philosophy of Ānanda Tīrtha.

E. Mīmāṁsā.

1. Vidhirasāyana.
2. Commentary on the above, called Sukhopajīvinī.
3. Upakramaparākramam.
4. Vādanakṣatrāvali.
5. Citrapaṭa.

F. General Philosophy.

1. Caturmatasārasaṅgraha also called Nyāya-muktāvalī.

G. Vyākaraṇa.

1. Nakṣatra-vādāvali or Vādanakṣatrāvali.
2. Tiṅantas'eṣa Saṅgrahaḥ.
3. Prākṛta-candrikā, and its commentary.

H. Alaṅkāra :

1. Citramīmāṁsā.
2. Vṛtti-vārtika—a treatise on the three modes of signification.
3. Kuvalayānanda—a com. on Jayadeva's Candrāloka.

I. Polemics.

1. Madhvatantra-mukhamardana.
2. Madhvamata-khaṇḍanam.
3. Madhvamata-vidhvaṁsanam.
4. Rāmānujamata-khaṇḍanam.

J. Epic Literature.

1. Rāmāyaṇatātparyanirṇaya.
2. Rāmāyaṇasāra.
3. Rāmāyaṇasārasaṅgrahaḥ.
4. Mahābhāratatātparyanirṇaya.

K. Stotras and numerous allied literature.

N.B.—For a complete list of his works, *See* C. C. I. 22; II. 5, Introduction to S'ivārkamaṇidīpikā, of Appayya Dīkṣita—by Sri S. Sūryanārāyaṇa S'āstri (M. U. Publication).

Contemporaries of Appayya Dīkṣita—(1) Chinna Bomma Narasiṁha, sons of the King Kṛṣṇarāya of Vijayanagar and Veṅkaṭapati, son of Chinna Bomma. (2) Bhaṭṭoji, the well-known grammarian (3) Jagannātha Paṇḍita (4) Bālakavi, author of Ratnakatritaya (5) Khaṇḍa Deva, the famous Mīmāṁsaka who refers to Appayya in his Bhāṭṭakaustubha (6) Sārvabhauma, otherwise known as Uddaṇḍa, author of Mallikāmāruta, a drama. (7) Ratnakheṭa Dīkṣita, a poet, and philosopher and author of 18 dramas and 60 poems. (8) Samarapuṅgava Dīkṣita, author of Yātrāprabandha (9) Rājacūdāmaṇi Dīkṣita, son of Ratnakheṭa Dīkṣita, (10) Veṅkaṭādhvarin, the famous author of Vis'vaguṇādars'acampū (11) Tātācāryā, a great leader of Vis'iṣṭādvaita philosophy and author of several works on the subject. Several amusing stories are current, relating to the several passage at arms that transpired between them. It also appears that there is a life of Appayya Dīkṣita written by S'ivānanda Yogi, one of his own blood relations.

---

AMALĀNANDA

(Pupil of Anubhavānanda. Middle of 13th Cent. A. D.)

1. Kalpataru—A Com. on the Bhāmatī of Vācaspati Mis'ra.
2. S'āstradarpaṇam.
3. Pañcapādikādarpaṇa—a com. on the Pañcapādikā.

N. B. Amalānanda, surnamed Vyāsās'rama lived in the middle of 13th Cent. A.D. The works which have made him famous are the Kalpataru, a gloss on the Bhāmatī of Vācaspati Mis'ra and S'āstradarpaṇam, an independent work. The S'āstradarpaṇa is true to its name mirror wherein are faithfully reflected the tenets of Advaita Vedānta as embodied in the well-known Brahmasūtras. It is a masterly treatise consisting of learned lectures on each Adhikaraṇa expounding its meaning and purpose. Dr. F. H. Hall holds that it was written in the days of one Rāja Kṛṣṇa who had a brother called Mahādeva (Author Index p. 87). He was also the author of a commentary on the Pañcapādikā of Padmapāda, called Pañcapādikā-darpaṇa. His views have been referred to by Appayya Dīkṣita in his Siddhāntales'asaṅgraha and by Madhusūdana Sarasvatī in his Advaita Siddhi. It seems, he is not spoken of anywhere by the latter writers as having followers.

---

AMARES'VARA S'ĀSTRĪ

(19th Cent. A. D.)

1. Ajñānadhvānta-Bhāskara.
2. Advaita-Ratnaparkās'a.
3. Avidyā-pisācī-bhañjanam.
4. Jīvarāja-vijayaḥ.
5. Prauḍhambhāvaḥ.
6. Bimbadṛṣṭi-vicāraḥ.
7. Vāsanāpratīkāra-das'kam.

N.B.—In the Colophon to the Bimbadṛṣṭi, the author simply states that he belonged to the Kambhampāṭi family of the Bhāradhvājagotra. In the beginning of the work the author quotes Vācaspatimis'ra, the well known author of the Bhāmatī. Cf.

" नमः श्रीभामतीकृद्भ्यः ब्रह्मविद्भ्यो नमो नमः । "

Nothing more is known about him.

---

AMṚTĀNANDA MUNI.

(Pupil of Ānandagiri)

1. Tātparya-dīpikā.
2. Nyāya-dīpāvalī-vyākhyā, Nyāya-vivekaḥ.
3. Paramapadanirṇāyaka-prakaraṇam.
4. Brahmavidyābharaṇam.

## AYYAṆA SŪRI

(End of 18th Cent. A.D.)

The author in his introductory verses to the Vyāsatātparyanirṇaya says that he is the son of Veṅkaṭakavisārvabhauma and brother of Narahari, the author of the Sudantā-kalyāṇa etc. His father Veṅkaṭa-kavisārvabhauma was the son of Jogibhukta and appears to have lived about the middle of 18th century A.D.

Ayyaṇa Sūri son of Veṅkaṭakavi says that he was a master of all arts and Sciences and as indicative of his wide learning, he planned his Prapañcadarpaṇa (*See* Trivand. Cat. R. 2838). Ayyaṇa Sūri in the introductory verse to his Vyāsatātparyānirṇaya says that he was an excellent lutanist.

c. f. श्रीवेङ्कटपतेः सूनुर्नृहरेरनुजः कवेः ।
अय्यणो वैणिकः कुर्वे व्यासतात्पर्यनिर्णयम् ॥

1. Vyāsatātparyanirṇayaḥ.

N.B.—The author's Guru was one Veṅkaṭes'a Vidvanmaṇi belonging to Murikināḍu family.

---

## ALLĀLA SŪRI

(Son of Trivikramācārya and Nāgamāmbā.)

1. Bhāmatī-tilakam.

N.B.—The author in the introductory verses salutes Vyāsa, Vācapati Mīs'ra, Vyāsās'ramamuni, and Prajñānārāyaṇa.

---

## AVADHŪTAS'IVAYOGĪNDRA

1. Vākyaprakaraṇam.
2. Vedāntaprakrarṇaviṁs'ikā.

---

## AṢṬĀVAKRA

1. Jīvanmuktiprakaraṇam.

---

## ĀTMASVARŪPA BHAGAVAT

(Disciple of Narasiṁhasvarūpa Bhagavat).

1. Pañcapādikā-vyākhyā; Prabodhaparis'odhinī.
2. Padārtha-tattva-nirṇaya ṭīkā.

## ĀDITYAPURĪ

(Disciple of Haricaraṇapurī)

1. Vedānta-Samjñādīpikā.

---

## ĀDINĀRĀYAṆA ŚĀSTRĪ

(Son of Dharmarāja S'āstri. 19th Century A.D.)

1. Advaitāmṛta-sāgaram.
2. Caturvedamahāvākhyacintāmaṇi.
3. Ṣaṭtriṁs'at-advaita-tattva-mālikā.

N.B.—In the Colophons to the abovementioned 3 works in the verse

कल्याणाचलकोदण्डः कल्याणाचलमन्दिरः ।

कल्याणवेषधारीशः कल्याणं कुरुते सदा ॥

mention is made of *Velimala* and the temple in its vicinity and hence the author might have flourished near Padmanābhapuram, (*i. e.*, Trivandrum.)

---

## ĀNANDAGIRI also called ĀNANDAJÑĀNA

(1st quarter of 14th century A.D. (*i.e.*) 1320 A.D.)

Anandajñāna or Ānandagiri was a native of Chera country, the son of S'ūryanārāyaṇa Makhin. Ānandagiri, generally in his works bows to Viṣṇu (Puruṣottama) and in some places to his particular incarnation of S'rīkṛṣṇa. Mr. Tripāṭhī, in his introduction to Tarkasaṅgraha regarding Ānandagiri says that he is the same as Ānandajñāna and in his previous Ās'rama he was known as janārdana and wrote the Tattvāloka under the guidance of Anubhūti-svarūpa. Later Ānandagiri became the disciple of S'uddhānanda. From this it is evident that Anubhūtisvarūpa was his Vidyāguru and S'uddhānanda his Dikṣā guru. This S'uddhānanda, is not to be confused with Śuddhānanda, one of the teachers of Svayamprakās'a, the author of Advaita-makaranda-ṭīkā and other Advaita works, who flourished in 1650 A.D. Ānandagiri's date can be fixed as follows :—

Prajñānānanda's commentary on Tattvāloka of Janārdana alias Ānandagiri, is dated 1376 A.D. Peterson's Rep. III p. 208). Allowing some years for the real date of composition and some more for the original text of Tattvāloka the latest date for Ānandagiri may be fixed as 1325 A.D.

